॥ श्रीः ॥

# मन्महाभारतम् ।

## सटिप्पणम्

### भीष्मपर्व ६.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

ावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८२८ पराभवनामसंवत्सरे ।

श्रीः ।

# श्रीमन्महाभारतम् ।



## भीष्मपर्व ६ ।

## ( अथ जम्बूखण्डविनिर्माणपर्व ॥ १ ॥ )

### प्रथमोऽध्यायः ॥ १ ॥

कुरुक्षेत्रे कुरुपाण्डवसेनयोः परस्परसमागमः ॥ १ ॥ उभयपक्षीयैः परस्परं समयकरणम् ॥ २ ॥

श्रीवेदव्यासाय नमः ।

ायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
ीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १
जनमेजय उवाच ।
कथं युयुधिरे वीराः कुरुपाण्डवसोमकाः ।
पार्थिवाश्च महात्मानो नानादेशसमागताः ॥ १
वैशंपायन उवाच ।
यथा युयुधिरे वीराः कुरुपाण्डवसोमकाः ।
कुरुक्षेत्रे तपःक्षेत्रे शृणु त्वं पृथिवीपते ॥ २
तेऽवतीर्य कुरुक्षेत्रं पाण्डवाः सहसोमकाः ।
कौरवानभ्यवर्तन्त जिगीषन्तो महाबलाः ॥ ३
वेदाध्ययनसंपन्नाः सर्वे युद्धाभिनन्दिनः ।
आशंसन्तो जयं युद्धे बलेनाभिमुखा रणे ॥ ४
अभियाय च दुर्धर्षां धार्तराष्ट्रस्य वाहिनीम् ।
प्राङ्मुखाः पश्चिमे भागे न्यविशन्त ससैनिकाः ५
स्यमन्तपञ्चकाद्बाह्यं शिबिराणि सहस्रशः ।
कारयामास विधिवत्कुन्तीपुत्रो युधिष्ठिरः ॥ ६
शून्येव पृथिवी सर्वा बालवृद्धावशेषिता ।
निरश्वपुरुषेवासीद्रथकुञ्जरवर्जिता ॥ ७
यावत्तपति सूर्यो हि जम्बूद्वीपस्य मण्डलम् ।
तावदेव समावृत्तं बलं पार्थिवसत्तम ॥ ८
एकस्थाः सर्ववर्णास्ते मण्डलं बहुयोजनम् ।
पर्याक्रामन्त देशांश्च नदीः शैलान्वनानि च ॥९
तेषां युधिष्ठिरो राजा सर्वेषां पुरुषर्षभ ।
व्यादिदेश सवाहानां भक्ष्यभोज्यमनुत्तमम् ॥१०
संज्ञाश्च विविधास्तात तेषां चक्रे युधिष्ठिरः ।
एवंवादी वेदितव्यः पाण्डवेयोऽयमित्युत ॥ ११
अभिज्ञानानि सर्वेषां संज्ञाश्चाभरणानि च ।
योजयामास कौरव्यो युद्धकाल उपस्थिते ॥ १२
दृष्ट्वा ध्वजाग्रं पार्थस्य धार्तराष्ट्रो महामनाः ।
सह सर्वैर्महीपालैः प्रत्यव्यूहत पाण्डवम् ॥ १३
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
मध्ये नागसहस्रस्य भ्रातृभिः परिवारितः ॥ १४
दृष्ट्वा दुर्योधनं हृष्टाः पाञ्चाला युद्धनन्दिनः ।
दध्मुः प्रीता महाशङ्खान्भेरीर्जघ्नुः सहस्रशः ॥ १५
ततः प्रहृष्टां स्वां सेनामभिवीक्ष्याथ पाण्डवाः ।
बभूवुर्हृष्टमनसो वासुदेवश्च वीर्यवान् ॥ १६
स्वयोधान्हर्षयन्तौ च वासुदेवधनञ्जयौ ।
दध्मतुः पुरुषव्याघ्रौ दिव्यौ शङ्खौ रथे स्थितौ ॥१७
पाञ्चजन्यस्य शङ्खस्य देवदत्तस्य चोभयोः ।
श्रुत्वा तु निनदं योधाः शकृन्मूत्रं प्रसुस्रुवुः ॥ १८
यथा सिंहस्य नदतः स्वनं श्रुत्वेतरे मृगाः ।

अभियाय अभ्येत्य न्यविशन्त । पाण्डवीया इति शेषः ॥५॥ बाह्यं बहिः ॥ ६ ॥ शय्याश्च विविधास्तात—एवंवेदी वेदितव्यः इति झ. पाठः तत्पाठे एवमिति । एवंवेदी विद्वान् इति अन्यैः पाण्डवेयो ज्ञातव्य इत्येतदर्थमित्यर्थः ॥ ११ ॥

त्रसेयुर्निनदं श्रुत्वा तथाऽसीदत तद्बलम् ॥ १९
उदतिष्ठद्रजो भौमं न प्राज्ञायत किंचन ।
अस्तं गत इवादित्यः सैन्येन रजसा वृतः ॥ २०
ववर्ष तत्र पर्जन्यो मांसशोणितवृष्टिमान् ।
व्युक्षन्सर्वाणि सैन्यानि तदद्भुतमिवाभवत् ॥ २१
वायुस्ततः प्रादुरभून्नीचैः शर्करकर्षणः ।
विनिघ्नंस्तान्यनीकानि शतशोऽथ सहस्रशः ॥ २२
उभे सैन्ये च राजेन्द्र युद्धाय मुदिते भृशम् ।
कुरुक्षेत्रे स्थिते यत्ते सागरक्षुभितोपमे ॥ २३
तयोस्तु सेनयोरासीदद्भुतः स तु संगमः ।
युगान्ते समनुप्राप्ते द्वयोः सागरयोरिव ॥ २४
शून्याऽऽसीत्पृथिवी सर्वा वृद्धबालावशेषिता ।
निरश्वपुरुषेवासीद्रथकुञ्जरवर्जिता ।
तेन सेनासमूहेन समानीतेन कौरवैः ॥ २५
ततस्ते समयं चक्रुः कुरुपाण्डवसोमकाः ।
धर्मान्संस्थापयामासुर्युद्धानां भरतर्षभ ॥ २६
निवृत्ते विहिते युद्धे स्यात्प्रीतिर्नः परस्परम् ।
यथापरं यथायोगं न च स्यात्कस्यचित्पुनः ॥
वाचा युद्धे प्रवृत्तानां वाचैव प्रतियोधनम् ।
निष्क्रान्ताः पृतनामध्यान्न हन्तव्याः कदाचन
रथी च रथिना योध्यो गजेन गजधूर्गतः ।
अश्वेनाश्वी पदातिश्च पादातेनैव भारत ॥
यथायोगं यथाकामं यथोत्साहं यथाबलम् ।
समाभाष्य प्रहर्तव्यं न विश्वस्ते न विह्वले ॥
परेण सह संयुक्तः प्रमत्तो विमुखस्तथा ।
क्षीणशस्त्रो विवर्मा च न हन्तव्यः कदाचन ॥
न सूतेषु न धुर्येषु न च शस्त्रोपनायिषु ।
न भेरीशङ्खवादेषु प्रहर्तव्यं कथंचन ॥
एवं ते समयं कृत्वा कुरुपाण्डवसोमकाः ।
विस्मयं परमं जग्मुः प्रेक्षमाणाः परस्परम् ॥
निविश्य च महात्मानस्ततस्ते पुरुषर्षभाः ।
हृष्टरूपाः सुमनसो बभूवुः सहसैनिकाः ॥

॥ इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

श्रीव्यासेन धृतराष्ट्रंप्रति युद्धदर्शनाय चक्षुर्दानकथनम् ॥ १ ॥ धृतराष्ट्रेण युद्धश्रवणमात्रे प्रार्थिते व्यासेन सञ्जयं युद्धविषये सार्वज्ञदानपूर्वकं युद्धप्रकारकथननियोगः ॥ २ ॥ व्यासेन धृतराष्ट्रंप्रति दुर्निमित्तप्रादुर्भावकथनम् ॥ ३ ॥

वैशंपायन उवाच ।
ततः पूर्वापरे सैन्ये समीक्ष्य भगवानृषिः ।
सर्ववेदविदां श्रेष्ठो व्यासः सत्यवतीसुतः ॥ १
भविष्यति रणे घोरे भरतानां पितामहः ।
प्रत्यक्षदर्शी भगवान्भूतभव्यभविष्यवित् ॥ २
वैचित्रवीर्यं राजानं रहस्यमिदमब्रवीत् ।
शोचन्तमार्तं ध्यायन्तं पुत्राणामनयं तदा ॥ ३
व्यास उवाच ।
राजन्परीतकालास्ते पुत्राश्चान्ये च पार्थिवाः ।
ते हिंसन्तीव सङ्ग्रामे समासाद्येतरेतरम् ॥
तेषु कालपरीतेषु विनश्यत्स्वेव भारत ।
कालपर्यायमाज्ञाय मा स्म शोके मनः कृथाः ।
यदि चेच्छसि संग्रामं द्रष्टुमेनं विशांपते ।
चक्षुर्ददानि ते पुत्र युद्धमेतन्निशामय ॥
धृतराष्ट्र उवाच ।
न रोचये ज्ञातिवधं द्रष्टुं ब्रह्मर्षिसत्तम ।
युद्धमेतत्त्वशेषेण शृणुयां तव तेजसा ॥
वैशंपायन उवाच ।

---

असीदत अवसन्नमभूत् ॥ १९ ॥ सागरक्षुभितोपमे क्षुभितसागरोपमे ॥ २३ ॥ धर्मसंस्थापनमेवाह यथापरमिति । यथायोगं तुल्ययोर्योगस्यानतिक्रमणम्। यथा येन प्रकारेण अपरं अनुत्कृष्टं अन्याय्यमित्यर्थः। तथा न कस्यचित्तुल्ययोगातिक्रमः स्यादिति भावः ॥ २७ ॥ गजधूर्गतः गजस्कन्धगतः ॥ २
प्रथमोऽध्यायः ॥ १ ॥

भविष्यति भाविनि ॥ २ ॥ हिंसन्तीव नाशयिष्य ॥ ४ ॥ पर्यायं वैपरीत्यम् ॥ ५ ॥ निशामय पश्य ॥

[य]स्मिन्ननिच्छति द्रष्टुं संग्रामं श्रोतुमिच्छति ।
[व]राणामीश्वरो व्यासः संजयाय वरं ददौ ॥ ८
[व्]यास उवाच ।
[ए]ष ते संजयो राजन्युद्धमेतद्वदिष्यति ।
[ए]तस्य सर्वं संग्रामे न परोक्षं भविष्यति ॥ ९
[च]क्षुषा संजयो राजन्दिव्येनैव समन्वितः ।
[क]थयिष्यति ते युद्धं सर्वज्ञश्च भविष्यति ॥ १०
[प्र]काशं वाऽप्रकाशं वा दिवा वा यदि वा निशि ।
[म]नसा चिन्तितमपि सर्वं वेत्स्यति संजयः ॥ ११
[नै]नं शस्त्राणि भेत्स्यन्ति नैनं बाधिष्यते श्रमः ।
[ग]ावल्गणिरयं जीवन्युद्धादस्माद्विमोक्ष्यते ॥ १२
[अ]हं तु कीर्तिमेतेषां कुरूणां भरतर्षभ ।
[पा]ण्डवानां च सर्वेषां प्रथयिष्यामि मा शुचः ॥ १३
[दि]ष्टमेतन्नरव्याघ्र नाभिशोचितुमर्हसि ।
[न] चैव शक्यं संयन्तुं यतो धर्मस्ततो जयः ॥ १४
[वै]शंपायन उवाच ।
[ए]वमुक्त्वा स भगवान्कुरूणां प्रपितामहः ।
[पु]नरेव महाभागो धृतराष्ट्रमुवाच ह ॥ १५
[इ]ह युद्धे महाराज भविष्यति महान्क्षयः ।
[य]थेह च निमित्तानि भयदान्युपलक्षये ॥ १६
[श्]येना गृध्राश्च काकाश्च कङ्काश्च सहिता बकैः ।
[सं]पतन्ति ध्वजाग्रेषु समवायांश्च कुर्वते ॥ १७
[अ]भ्यग्रं च प्रपश्यन्ति युद्धमानन्दिनो द्विजाः ।
[क्र]व्यादा भक्षयिष्यन्ति मांसानि गजवाजिनां १८
कटाकटेति वाशन्तो भैरवा भयवेदिनः ।
कङ्काः क्रोशन्ति मध्याह्ने दक्षिणामभितो दिशं १९

उभे पूर्वापरे सन्ध्ये नित्यं पश्यामि भारत ।
उदयास्तमने सूर्यं कवन्धैः परिवारितम् ॥ २०
श्वेतलोहितपर्यन्ताः कृष्णग्रीवाः सविद्युतः ।
त्रिवर्णाः परिघाः सन्धौ भानुमावारयन्त्युत ॥ २१
ज्वलितार्केन्दुनक्षत्रं निर्विशेषदिनक्षपम् ।
अहोरात्रं मया दृष्टं तद्भयाय भविष्यति ॥ २२
आलक्षे प्रभया हीनां पौर्णमासीं च कार्तिकीम् ।
चन्द्रोऽभूदग्निवर्णश्च पद्मवर्णे नभस्तले ॥ २३
स्वप्स्यन्ति निहता वीरा भूमिमावृत्य पार्थिवाः ।
राजानो राजपुत्राश्च शूराः परिघबाहवः ॥ २४
अन्तरिक्षे वराहस्य वृषदंशस्य चोभयोः ।
प्रणादं युध्यतो रात्रौ रौद्रं नित्यं प्रलक्षये ॥ २५
देवताप्रतिमाश्चैव कम्पन्ति च हसन्ति च ।
वमन्ति रुधिरं चास्यैः स्विद्यन्ति प्रपतन्ति च ॥ २६
अनाहता दुन्दुभयः प्रणदन्ति विशांपते ।
अयुक्ताश्च प्रवर्तन्ते क्षत्रियाणां महारथाः ॥ २७
कोकिलाः शतपत्राश्च चाषा भासाः शुकास्तथा ।
सारसाश्च मयूराश्च वाचो मुञ्चन्ति दारुणाः ॥ २८
गृहीतशस्त्राः क्रोशन्ति चर्मिणो वाजिपृष्ठगाः ।
अरुणोदये प्रदृश्यन्ते शतशः शलभव्रजाः ॥ २९
उभे सन्ध्ये प्रकाशन्ते दिशो दाहसमन्विते ।
पर्जन्यः पांसुवर्षी च मांसवर्षी च भारत ॥ ३०
या चैषा विश्रुता राजंस्त्रैलोक्ये साधुसंमता ।
अरुन्धती तयाप्येष वसिष्ठः पृष्ठतः कृतः ॥ ३१
रोहिणीं पीडयन्नेष स्थितो राजञ्शनैश्चरः ।
व्यावृत्तं लक्ष्म सोमस्य भविष्यति महद्भयम् ॥ ३२

---

समवायान् संघान् ॥ १७ ॥ अभ्यग्रं समीपम् । क्रव्यादा मांसभक्षकाः ॥ १८ ॥ वाशन्तः शब्दं कुर्वन्तः ॥ १९ ॥ परिघाः परिवेषाः कृष्णग्रीवाः मध्ये कृष्णाः श्वेतलोहितपर्यन्ताश्च संधौ संध्यायाम् आवारयन्ति वेष्टयन्ति ॥ २१ ॥ निर्विशेषदिनक्षयं इति झ. पाठे निर्विशेषदिनक्षयं अहोरात्रम् । निश्चयेन विगतः शेषो यस्य तस्य दिनस्य तिथेः क्षयो यस्मिन् । सूर्योदयद्वयास्पर्शिनी क्षयतिथिर्यस्मिन् अहोरात्रे तन्मया दृष्टम् । तदेव विशिनष्टि ज्वलितेति । अर्केन्द्वोर्नक्षत्रममावास्यायामुभाभ्यामाक्रान्तं नक्षत्रं तदेव ज्वलितं पापग्रहाक्रान्तं यस्मिन् । दर्शे क्षयतिथिः तन्नक्षत्रे च पापग्रह इत्ययं महान् दुर्योग इत्यर्थः ॥ २२ ॥ पद्मवर्णे रक्तपद्मवर्णे ॥ २३ ॥ अयुक्ताः अश्वैरयोजिता अपि प्रवर्तन्ते चलन्ति । महान्तो रथाः महारथाः । मनोरथा इति क. पाठः ॥ २७ ॥ गृहीतशस्त्राः आत्तलोहाः लोहतुण्डा इति यावत् । शस्त्रमायुधलोहयोरित्यमरः । चर्मिणो भृङ्गरिटिसंज्ञाः कृष्णशलभविशेषाः ॥ २९ ॥ द्वितीयोऽध्यायः ॥ २ ॥

अनभ्रे च महाघोरस्तनितं श्रूयते भृशम् । वाहनानां च रुदतां निपतन्त्यश्रुबिन्दवः ॥ ३३

॥ इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ॥ ३ ॥

व्यासेन धृतराष्ट्रंप्रति दुर्निमित्तप्रादुर्भावकथनम् ॥ १ ॥ तथा जेष्यतां जयसूचकलिङ्गकथनम् ॥ २ ॥

व्यास उवाच ।
खरा गोषु प्रजायन्ते रमन्ते मातृभिः सुताः ।
अनार्तवं पुष्पफलं दर्शयन्ति वनद्रुमाः ॥ १
गर्भिण्योऽजातपुत्राश्च जनयन्ति विभीषणान् ।
क्रव्यादाः पक्षिभिश्चापि सहाश्नन्ति परस्परम् ॥ २
त्रिविषाणाश्चतुर्नेत्राः पञ्चपादा द्विमेहनाः ।
द्विशीर्षाश्च द्विपुच्छाश्च दंष्ट्रिणः पशवोऽशिवाः ॥ ३
जायन्ते विवृतास्याश्च व्याहरन्तोऽशिवा गिरः ।
त्रिपदाः शिखिनस्तार्क्ष्याश्चतुर्दंष्ट्रा विषाणिनः ॥ ४
तथैवान्याश्च दृश्यन्ते स्त्रियो वै ब्रह्मवादिनाम् ।
वैनतेयान्मयूरांश्च जनयन्ति पुरे तव ॥ ५
गोवत्सं वडवा सूते श्वा सृगालं महीपते ।
कुक्कुरान्करभाश्चैव शुकाश्चाशुभवादिनः ॥ ६
स्त्रियः काश्चित्प्रजायन्ते चतस्रः पञ्च कन्यकाः ।
जातमात्राश्च नृत्यन्ति गायन्ति च हसन्ति च ॥ ७
पृथग्जनस्य सर्वस्य क्षुद्रकाः प्रहसन्ति च ।
नृत्यन्ति परिगायन्ति वेदयन्तो महद्भयम् ॥ ८
प्रतिमाश्चालिखन्त्येताः सशस्त्राः कालचोदिताः ।
अन्योन्यमभिधावन्ति शिशवो दण्डपाणयः ॥ ९
अन्योन्यमभिमृद्नन्ति नगराणि युयुत्सवः ।
पद्मोत्पलानि वृक्षेषु जायन्ते कुमुदानि च ॥ १०
विष्वग्वाताश्च वान्त्युग्रा रजो नाप्युपशाम्यति ।
अभीक्ष्णं कम्पते भूमिरर्कं राहुरुपैति च ॥ ११
श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति ।
अभावं हि विशेषेण कुरूणां तत्र पश्यति ॥ १२
धूमकेतुर्महाघोरः पुष्यं चाक्रम्य तिष्ठति ।
सेनयोरशिवं घोरं करिष्यति महाग्रहः ॥ १३
मघास्वङ्गारको वक्रः श्रवणे च बृहस्पतिः ।
भगं नक्षत्रमाक्रम्य सूर्यपुत्रेण पीड्यते ॥ १४
शुक्रः प्रोष्ठपदे पूर्वे समारुह्य विरोचते ।
उत्तरे तु परिक्रम्य सहितः समुदीक्षते ॥ १५
श्यामो ग्रहः प्रज्वलितः सधूम इव पावकः ।
ऐन्द्रं तेजस्वि नक्षत्रं ज्येष्ठामाक्रम्य तिष्ठति ॥ १६
ध्रुवं प्रज्वलितो घोरमपसव्यं प्रवर्तते ।
रोहिणीं पीडयत्येवमुभौ च शशिभास्करौ ।
चित्रास्वात्यन्तरे चैव विष्ठितः परुषग्रहः ॥ १७
वक्रानुवक्रं कृत्वा च श्रवणं पावकप्रभः ।
ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः ॥ १८

---

वडवा अश्वा । श्वा शुनी । करभो मृगविशेषः ॥ ६ ॥ प्रजायन्ते जनयन्ति ॥ ७ ॥ पृथग्जनस्य नीचजनस्य संबन्धिनः क्षुद्रकाः व्यङ्गाः चण्डालादिषु जाताः काणकुब्जादय इत्यर्थः । क्षुद्रा व्यङ्गानटीत्यादिमेदिनी ॥ ८ ॥ नगराणि कृत्रिमाणि शिशव एवावमृद्नन्ति ॥ १० ॥ कार्तिक्याः परं हि संग्रामारम्भस्तत्र तुलास्थमर्कं राहुरुपैति ॥ ११ ॥ तदैव श्वेतो ग्रहः केतुश्चित्रामतिक्रामति स्वात्यादौ वर्तते । नित्यं समसप्तकस्थौ राहुकेतू इदानीमेकराशिगतौ महानिष्टसूचकाविति भावः ॥ १२ ॥ धूमकेतुरुपग्रहविशेषः स पुष्यं क्षत्रियनक्षत्रमाक्रम्य तिष्ठति । तथा वक्ष्यमाणरीत्या ज्येष्ठास्थेनापि केतुना पुष्यो विद्धस्तथा च स्वनक्षत्रे क्रूराक्रान्ते क्रूरविद्धे च सत्यवश्यं क्षत्रियाणां नाशो भवतीत्यर्थः । यथोक्तम् । कृत्तिकायां तथा पुष्ये रेवत्यां च पुनर्वसौ । वेधे सति क्रमाद्वेधो वर्णेषु ब्राह्मणादिष्विति नरपति विजये ॥ १३ ॥ भगं नक्षत्रं पूर्वाफल्गुनी । श्रुतिमते तूत्तराफल्गुनी ॥ १४ ॥ पूर्वेप्रोष्ठपदे पूर्वाभाद्रपदानक्षत्रं समारुह्य परिक्रम्य परिघाख्य उपग्रहस्तेन सहितः उत्तरे उत्तराभाद्रपदानक्षत्रं उदीक्षते आक्रान्तुमिच्छति ॥ १५ ॥ श्यामो द्वितीय उपग्रहः केतुसंज्ञः ऐन्द्रं ज्येष्ठां नक्षत्रमिति योज्यम् ॥ १६ ॥ परुषग्रहो राहुरेकनक्षत्रस्थौ शशिभास्करौ पीडयति । अपसव्यं प्रवर्तते सर्वदा वक्री सन् । सर्वतोभद्रचक्रे वेधेन स्वातीस्थः सन् रोहिणीनक्षत्रं च पीडयतीत्यर्थः ॥ १७ ॥ तत्रैव सर्वतोभद्रचक्रे मघास्थो लोहिताङ्गोऽङ्गारको वक्रानुवक्रं कृत्वा पुनःपुनर्वक्रीभूय ब्रह्म

सर्वसस्यपरिच्छन्ना पृथिवी सस्यमालिनी ।
पञ्चशीर्षा यवाश्चापि शतशीर्षाश्च शालयः ॥ १९
प्रधानाः सर्वलोकस्य यास्वायत्तमिदं जगत् ।
ता गावः प्रस्नुता वत्सैः शोणितं प्रक्षरन्त्युत ॥ २०
निश्चेरुरर्चिषश्चापात्खड्गाश्च ज्वलिता भृशम् ।
व्यक्तं पश्यन्ति शस्त्राणि संग्रामं समुपस्थितम् ॥२१
अग्निवर्णा यथा भासः शस्त्राणामुदकस्य च ।
कवचानां ध्वजानां च भविष्यति महाक्षयः ॥ २२
पृथिवी शोणितावर्ता ध्वजोडुपसमाकुला ।
कुरूणां वैशसे राजन्पाण्डवैः सह भारत ॥ २३
दिक्षु प्रज्वलितास्याश्च व्याहरन्ति मृगद्विजाः ।
अत्याहितं दर्शयन्तः क्षत्रियाणां महद्भयम् ॥ २४
एकपक्षाक्षिचरणाः शकुन्ताः खेचरा निशि ।
रौद्रं वदन्ति संरब्धाः शोणितं छर्दयन्ति च ॥२५
ग्रहौ ताम्रारुणनिभौ प्रज्वलन्ताविव स्थितौ ।
सप्तर्षीणामुदाराणां समवच्छाद्य वै प्रभाम् ॥ २६
संवत्सरस्थायिनौ च ग्रहौ प्रज्वलितावुभौ ।
विशाखयोः समीपस्थौ बृहस्पतिशनैश्चरौ ॥ २७
चन्द्रादित्यावुभौ ग्रस्तावेकाह्ना हि त्रयोदशीम् ।
अपर्वणि ग्रहं यातौ प्रजासंक्षयमिच्छतः ॥ २८
अशोभिता दिशः सर्वाः पांसुवर्षैः समन्ततः ।
उत्पातमेघा रौद्राश्च रात्रौ वर्षन्ति शोणितम् ॥२९
कृत्तिकां पीडयंस्तीक्ष्णैर्नक्षत्रं पृथिवीपते ।
अभीक्ष्णवाता वायन्ते धूमकेतुमवस्थिताः ॥ ३०
विषमं जनयन्त्येत आक्रन्दजननं महत् ।
त्रिषु पूर्वेषु सर्वेषु नक्षत्रेषु विशांपते ।
बुधः संपततेऽभीक्ष्णं जनयन्प्राणिनां भयम् ॥ ३१
चतुर्दशीं पञ्चदशीं भूतपूर्वां च षोडशीम् ।
इमां तु नाभिजानामि अमावास्यां त्रयोदशीम् ।
चन्द्रसूर्यावुभौ ग्रस्तावेकान्हा हि त्रयोदशीम् ॥३२
अपर्वणि ग्रहेणैतौ प्रजाः संक्षपयिष्यतः ।
मांसवर्षं पुनस्तीव्रमासीत्कृष्णचतुर्दशीम् ।
शोणितैर्वक्त्रसंपूर्णा अतृप्तास्तत्र राक्षसाः ॥ ३३
प्रतिस्रोतोवहा नद्यः सरितः शोणितोदकाः ।
फेनायमानाः कूपाश्च कूर्दन्ति वृषभा इव ॥ ३४
पतन्त्युल्काः सनिर्घाताः शक्राशनिसमप्रभाः ।
अद्य चैव निशां व्युष्टामनयं समवाप्स्यथ ॥ ३५
विनिःसृत्य महोल्काभिस्तिमिरं सर्वतो दिशम् ।
अन्योन्यमुपतिष्ठद्भिस्तत्र चोक्तं महर्षिभिः ।
भूमिपालसहस्राणां भूमिः पास्यति शोणितम् ॥३६
कैलासमन्दराभ्यां तु तथा हिमवतो विभो ।
सहस्रशो महाशब्दं शिखराणि पतन्ति च ॥ ३७
महाभूता भूमिकम्पे चत्वारः सागराः पृथक् ।
वेलामुद्वर्तयन्तीव क्षोभयन्तो वसुन्धराम् ॥ ३८

बृहस्पतिनाक्रान्तं राशिं नक्षत्रं श्रवणं समावृत्य सम्यक् पूर्णदृष्ट्या विद्धा तिष्ठति ॥ १८ ॥ परिच्छन्ना आच्छादिता । पञ्चशीर्षाणि शिम्बीसदृशानि येषां ते पञ्चशीर्षाः ॥१९॥ पूर्वं श्रवणस्थो बृहस्पतिर्भगनक्षत्रस्थः सूर्यपुत्र इत्युक्तं तावुभौ विशाखासमीपे तिर्यग्वेधेन शतपदे चक्रे विशाखानक्षत्रं विध्यत इत्यर्थः ॥२७॥ अपर्वणि पर्व दर्शाख्यं पञ्चदशेह्नि भवति एकतिथिवृद्धौ षोडशे वा एकतिथिक्षये चतुर्दशे वाह्नि भवति । तिथिद्वयक्षयस्तु लोकेऽत्यन्तमप्रसिद्ध इति अपर्वणीत्युक्तं । ग्रहं यातौ राहुणा ग्रहणं प्राप्तौ । एतदेव प्रजासंक्षयहेतुत्वेन शास्त्रे दृष्टमित्याह प्रजेति । अयं श्लोकोत्र दाक्षिणात्यकोशेषु नास्ति । झ. पुस्तक एवास्ति ॥ २८ ॥ चित्रास्वान्त्यतरस्थः परुषो ग्रहो रोहिणीं पीडयतीत्युक्तं तत्र चित्रांशे स्थित्वा रोहिणीं अष्टादशत्वेन सामुदायिकनक्षत्रं पीडयति । स्वात्यंशे स्थित्वा कृत्तिकां षोडशकत्वेन सांघातिकनक्षत्रं पीडयति । सर्वतोभद्रचक्रे तथा दर्शनात् । तदेतदाह कृत्तिकामित्यर्धेन । तीक्ष्णैः क्रूरैः कर्मभिरुपलक्षितो राहुरित्यर्थः। धूमकेतुं उत्पातविशेषमनुलक्ष्यावस्थिताः ॥ ३० ॥त्रिष्विति। त्रिषु सर्वेषु नक्षत्रनक्षत्रेषु विशांपते । गृध्रः संपतते शीर्षे जनयन्भयमुत्तमम् इति झ. पाठः ॥ ३१ ॥ ग्रस्तावेकमासीं त्रयोदशीम् इति झ. पाठः। तत्पक्षे चन्द्रादित्यावुभौ ग्रस्तावित्येतेन श्लोकेनोक्तमर्थं विशदयति द्वाभ्याम् । चतुर्दशीमिति । त्रयोदशीं त्रयोदशानामह्नां पूरणीं अमावास्यां भूतपूर्वां नाभिजानामि । अतिभूयसा कालेन अयं दुर्योग आगत इति भावः । एकमासीं एकस्मिन्नेव मासे भवाम् । पूर्वं त्रयोदश्यां रात्रौ पक्षसमाप्त्या सूर्यग्रहणमेवोक्तम् । इदानीं तु एकस्मिन्मासे चन्द्रः पूर्णमास्यां राहुणा ग्रहेण ग्रस्तः सूर्योऽमावास्यायाम् । यदा सूर्यो ग्रस्तस्तदा चन्द्रोपि ग्रस्त एव दर्शे तयोः संहतत्वात् ॥३२॥अपर्वणीति । लोकाप्रसिद्धपर्वणीति पूर्ववत् ज्ञेयम् ॥३३॥ कूपाः कूर्दन्ति क्रीडन्ति वातैः क्षुभ्यन्त इत्यर्थः ॥ ३४ ॥ अनयं अनीतिफलम् ॥ ३५ ॥ महाभूता वृद्धीभूताः ॥ ३८ ॥

वृक्षानुन्मथ्य वान्त्युग्रा वाताः शर्करकर्षिणः ।
आभग्नाः सुमहावातैरशनीभिः समाहताः ॥ ३९
वृक्षाः पतन्ति चैत्याश्च ग्रामेषु नगरेषु च ।
नीललोहितपीतश्च भवत्यग्निर्हुतो द्विजैः ॥ ४०
वामार्चिर्दुष्टगन्धश्च मुञ्चन्वै दारुणं स्वनम् ।
स्पर्शा गन्धा रसाश्चैव विपरीता महीपते ॥ ४१
धूमं ध्वजाः प्रमुञ्चन्ति कम्पमाना मुहुर्मुहुः ।
मुञ्चन्त्यङ्गारवर्षं च भेर्यश्च पटहास्तथा ॥ ४२
शिखराणां समृद्धानामुपरिष्टात्समन्ततः ।
वायसाश्च रुवन्त्युग्रं वामं मण्डलमाश्रिताः ॥ ४३
पक्कापक्केऽतिसुभृशं वावाश्यन्ते वयांसि च ।
निलीयन्ते ध्वजाग्रेषु क्षयाय पृथिवीक्षिताम् ॥ ४४
ध्यायन्तः प्रकिरन्तश्च व्याला वेपथुसंयुताः ।
दीनास्तुरंगमाः सर्वे वारणाः सलिलाश्रयाः ॥ ४५
'एवंविधं दुर्निमित्तं क्षयाय पृथिवीक्षिताम् ।
भौमं दिव्यं चान्तरिक्षं त्रिविधं जायतेऽनिशम्'४६
एतच्छ्रुत्वा भवानत्र प्राप्तकालं व्यवस्यताम् ।
यथा लोकः समुच्छेदं नायं गच्छेत भारत ॥ ४७
वैशंपायन उवाच ।
पितुर्वचो निशम्यैतद्धृतराष्ट्रोऽब्रवीदिदम् ।
दिष्टमेतत्पुरा मन्ये भविष्यति नरक्षयः ॥ ४८
राजानः क्षत्रधर्मेण यदि वध्यन्ति संयुगे ।
वीरलोकं समासाद्य सुखं प्राप्स्यन्ति केवलम् ॥ ४९
इह कीर्तिं परे लोके दीर्घकालं महत्सुखम् ।
प्राप्स्यन्ति पुरुषव्याघ्राः प्राणांस्त्यक्त्वा महाहवे ॥
वैशंपायन उवाच ।
एवं मुनिस्तथेत्युक्त्वा कवीन्द्रो राजसत्तम ।
धृतराष्ट्रेण पुत्रेण ध्यानमन्वगमत्परम् ॥ ५१
स मुहूर्तं तथा ध्यात्वा पुनरेवाब्रवीद्वचः ।
असंशयं पार्थिवेन्द्र कालः संक्षयते जगत् ॥ ५२
सृजते च पुनर्लोकान्नेह विद्यति शाश्वतम् ।
ज्ञातीनां वै कुरूणां च संबन्धिसुहृदां तथा ॥५३
धर्म्यं दर्शय पन्थानं समर्थो ह्यसि वारणे ।
क्षुद्रं ज्ञातिवधं प्राहुर्मा कुरुष्व ममाप्रियम् ॥ ५४
कालोऽयं पुत्ररूपेण तव जातो विशांपते ।
न वधः पूज्यते वेदे हितं नैव कथंचन ॥ ५५
हन्यात्स एनं यो हन्यात्कुलधर्मं स्विकां तनुम् ।
कालेनोत्पथगन्तासि शक्ये सति यथाऽऽपदि ५६
कुलस्यास्य विनाशाय तथैव च महीक्षिताम् ।
अनर्थो राज्यरूपेण तव जातो विशांपते ॥ ५७
लुप्तधर्मा परेणासि धर्मं दर्शय वै सुतान् ।
किं ते राज्येन दुर्धर्ष येन प्राप्तोऽसि किल्बिषम् ॥५८
यशो धर्मं च कीर्तिं च पालयन्स्वर्गमाप्स्यसि ।
लभन्तां पाण्डवा राज्यं शमं गच्छन्तु कौरवाः ॥५९
वैशंपायन उवाच ।
एवं ब्रुवति विप्रेन्द्रे धृतराष्ट्रोऽम्बिकासुतः ।
प्रशस्य वाक्यं वाक्यज्ञो वाक्यं चैवाब्रवीत्पुनः ६०
धृतराष्ट्र उवाच ।
यथा भवान्वेत्ति तथैव वेत्ता
भावाभावौ विदितौ मे यथार्थौ ।
स्वार्थे हि संमुह्यति तात लोको
मां चापि लोकात्मकमेव विद्धि ॥ ६१
प्रसादये त्वामतुलप्रभावं
त्वं नो गतिर्दर्शयिता च धीरः ।
न चापि ते वशगा मे सुताश्च
न चाधर्मं कर्तुमर्हा हि मे मतिः ॥ ६२
त्वं हि धर्मः पवित्रं च यशः कीर्तिर्धृतिः स्मृतिः ।
कुरूणां पाण्डवानां च मान्यश्चापि पितामहः ॥६३
व्यास उवाच ।
वैचित्रवीर्य नृपते यत्ते मनसि वर्तते ।

---

शिखराणां द्रुमाग्राणाम् ॥ ४३ ॥ पक्कापक्केति पक्षिरुतानुकरणम् । वावाश्यन्ते अतिशयेन शब्दं कुर्वन्ति ॥ ४४ ॥ प्रकिरन्तः शकृन्मूत्रमिति शेषः । व्यालाः दुष्टहस्तिनः । सलिलाश्रयाः अत्यन्तं प्रस्वेदयुक्ताः ॥ ४५ ॥ मुनिः एवं तथेत्युक्त्वेति संबन्धः । धृतराष्ट्रेण हेतुना । तदर्थमित्यर्थः । ध्यानं चिन्ताम् ॥ ५१ ॥ अयं दुर्योधनः ॥ ५५ ॥ सः धर्मः एनं धर्महन्तारं शक्येऽनापदि सत्यां किमर्थमापदीव उन्मार्गगामी भवसीत्यर्थः ॥ ५६ ॥ परेण अतिशयेन ॥ ५८॥ भावाभावौ स्थितिविनाशौ ॥ ६१ ॥ त्वं हि धर्मादौ हेतुरित्यर्थः ॥ ६३ ॥

अभिधत्स्व यथाकामं छेत्ताऽसि तव संशयम् ॥६४
धृतराष्ट्र उवाच ।
यानि लिङ्गानि संग्रामे भवन्ति विजयिष्यताम् ।
तानि सर्वाणि भगवञ्छ्रोतुमिच्छामि तत्त्वतः ॥६५
व्यास उवाच ।
प्रसन्नभाः पावक ऊर्ध्वरश्मिः
प्रदक्षिणावर्तशिखो विधूमः ।
पुण्या गन्धाश्चाहुतीनां प्रवान्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ ६६
गम्भीरघोषाश्च महास्वनाश्च
शङ्खा मृदङ्गाश्च नदन्ति यत्र ।
विशुद्धरश्मिस्तपनः शशी च
जयस्यैतद्भाविनो रूपमाहुः ॥ ६७
इष्टा वाचः प्रसृता वायसानां
संप्रस्थितानां च गमिष्यतां च ।
ये पृष्ठतस्ते त्वरयन्ति राज-
न्ये चाग्रतस्ते प्रतिषेधयन्ति ॥ ६८
कल्याणवाचः शकुना राजहंसाः
शुकाः क्रौञ्चाः शतपत्राश्च यत्र ।
प्रदक्षिणाश्चैव भवन्ति सङ्ख्ये
ध्रुवं जयस्तत्र वदन्ति विप्राः ॥ ६९
अलंकारैः कवचैः केतुभिश्च
मुखप्रणादैर्हेषितैर्वा हयानाम् ।
भ्राजिष्मती दुष्प्रतिवीक्षणीया
येषां चमूस्ते विजयन्ति शत्रून् ॥ ७०
हृष्टा वाचस्तथा सत्वं योधानां यत्र भारत ।
न म्लायन्ति स्रजश्चैव ते तरन्ति रणोदधिम् ॥ ७१
'प्रयाणे वायसो वामे दक्षिणे प्रविविक्षताम् ।
पश्चात्संसाधयत्यर्थं पुरस्तात्प्रतिषेधति ॥' ७२
शब्दरूपरसस्पर्शगन्धाश्चाविकृताः शुभाः ।
सदा हर्षश्च योधानां जयतामिह लक्षणम् ॥ ७३
अनुगा वायवो वान्ति तथाऽभ्राणि वयांसि च ।
अनुप्लवन्ति मेघाश्च तथैवेन्द्रधनूंषि च ॥ ७४
एतानि जयमानानां लक्षणानि विशांपते ।
भवन्ति विपरीतानि मुमूर्षूणां जनाधिप ॥ ७५
अल्पायां वा महत्यां वा सेनायामिति निश्चयः
हर्षो योधगणस्यैको जयलक्षणमुच्यते ॥ ७६
एको दीर्णो दारयति सेनां सुमहतीमपि ।
तां दीर्णामनुदीर्यन्ते योधाः शूरतरा अपि ॥ ७७
दुर्निवर्त्या तदा चैव प्रभग्ना महती चमूः ।
अपामिव महावेगा त्रस्ता मृगगणा इव ॥ ७८
नैव शक्या समाधातुं सन्निपाते महाचमूः ।
दीर्ण इत्येव दीर्यन्ते सुविद्वांसोऽपि भारत ॥ ७९
भीतान्भग्नांश्च संप्रेक्ष्य भयं भूयोऽभिवर्धते ।
प्रभग्ना सहसा राजन्दिशो विद्रवते चमूः ।
नैव स्थापयितुं शक्या शूरैरपि महाचमूः ॥ ८०
सत्कृत्य महतीं सेनां चतुरङ्गां महीपतिः ।
उपायपूर्वं मेधावी यतेत सततोत्थितः ॥ ८१
उपायविजयं श्रेष्ठमाहुर्भेदेन मध्यमम् ।
जघन्य एष विजयो यो युद्धेन विशांपते ॥ ८२
महान्दोषः सन्निपातस्ततस्याद्यः क्षय उच्यते ।
परस्परज्ञाः संहृष्टा व्यवधूताः सुनिश्चिताः ॥ ८३
अपि पञ्चाशतं शूरा मृद्नन्ति महतीं चमूम् ।
अपि वा पञ्च षट् सप्त विजयन्त्यनिवर्तिनः ॥ ८४
न वैनतेयो गरुडः प्रशंसति महाजनम् ।
दृष्ट्वा सुपर्णोऽपचितिं महत्या अपि भारत ॥ ८५
न बाहुल्येन सेनाया जयो भवति नित्यशः ।
अध्रुवो हि जयो नाम दैवं चात्र परायणम् ।
जयवन्तो हि संग्रामे कृतकृत्या भवन्ति हि ॥ ८६

॥ इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

---

रूपं गमकं चिह्नम् ॥ ६७ ॥ ये पृष्ठतो भाषमाणा वायसास्ते गन्तारं त्वरयन्ति सिद्धिसूचका इत्यर्थः । ये पुरतो भाषमाणास्ते गमनं निषेधन्तीत्यर्थः ॥ ६८ ॥ सन्निपातो योधानां संघर्षः । व्यवधूताः दारादिष्वनासक्ताः ॥ ८३ ॥ शूराणां सहायसंपत्तिर्नापेक्षितेत्यत्र दृष्टान्तमाह न वैनतेय इति । महत्या अपि सेनाया अपचितिं प्रतिकारं नाशं वा एकेनैवात्मना कर्तुं शक्यं दृष्ट्वा सुपर्णः शोभनपतत्रः गरुडो नामतः वैनतेयो विनतायाः पुत्रो महाजनं बहुजनसमूहं न प्रशंसति ॥ ८५ ॥ तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

व्यासे गते संजयेन धृतराष्ट्रंप्रति भूमिगुणानुवर्णनम् ॥ १ ॥

वैशंपायन उवाच ।
एवमुक्त्वा ययौ व्यासो धृतराष्ट्राय धीमते ।
धृतराष्ट्रोऽपि तच्छ्रुत्वा ध्यानमेवान्वपद्यत ॥ १
स मुहूर्तमिव ध्यात्वा विनिःश्वस्य मुहुर्मुहुः ।
संजयं संशितात्मानमपृच्छद्भरतर्षभ ॥ २
संजयेमे महीपालाः शूरा युद्धाभिनन्दिनः ।
अन्योन्यमभिनिघ्नन्ति शस्त्रैरुच्चावचैरिह ॥ ३
पार्थिवाः पृथिवीहेतोः समभित्यज्य जीवितम् ।
न वा शाम्यन्ति निघ्नन्तो वर्धयन्ति यमक्षयम् ॥ ४
भौममैश्वर्यमिच्छन्तो न मृष्यन्ते परस्परम् ।
मन्ये बहुगुणा भूमिस्तन्ममाचक्ष्व संजय ॥ ५
बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च ।
कोट्यश्च लोकवीराणां समेताः कुरुजाङ्गले ॥ ६
देशानां च परीमाणं नगराणां च संजय ।
श्रोतुमिच्छामि तत्त्वेन यत एते समागताः ॥ ७
दिव्यबुद्धिप्रदीपेन युक्तस्त्वं ज्ञानचक्षुषा ।
प्रभावात्तस्य विप्रर्षेर्व्यासस्यामिततेजसः ॥ ८
संजय उवाच ।
यथाप्रज्ञं महाप्राज्ञ भौमान्वक्ष्यामि ते गुणान् ।
शास्त्रचक्षुरवेक्षस्व नमस्ते भरतर्षभ ॥ ९
द्विविधानीह भूतानि चराणि स्थावराणि च ।
त्रसानां त्रिविधा योनिरण्डस्वेदजरायुजाः ॥ १०
त्रसानां खलु सर्वेषां श्रेष्ठा राजञ्जरायुजाः ।
जरायुजानां प्रवरा मानवाः पशवश्च ये ॥ १
नानारूपधरा राजंस्तेषां भेदाश्चतुर्दश ।
वेदोक्ताः पृथिवीपाल येषु यज्ञाः प्रतिष्ठिताः ॥१
ग्राम्याणां पुरुषाः श्रेष्ठाः सिंहाश्चारण्यवासिनाम्
सर्वेषामेव भूतानामन्योन्येनोपजीवनम् ॥ १
उद्भिज्जाः स्थावराः प्रोक्तास्तेषां पञ्चैव जातयः
वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः ॥ १
तेषां विंशतिरेकोना महाभूतेषु पञ्चसु ।
चतुर्विंशतिरुद्दिष्टा गायत्री लोकसंमता ॥ १
य एतां वेद गायत्रीं पुण्यां सर्वगुणान्विताम्
तत्त्वेन भरतश्रेष्ठ स लोके न प्रणश्यति ॥ १
अरण्यवासिनः सप्त सप्तैषां ग्रामवासिनः ।
सिंहा व्याघ्रा वराहाश्च महिषा वारणास्तथा ॥ १
ऋक्षाश्च वानराश्चैव सप्तारण्याः स्मृता नृप ।
गौरजाविमनुष्याश्च अश्वाश्वतरगर्दभाः ॥ १
एते ग्राम्याः समाख्याताः पशवः सप्त साधुभि
एते वै पशवो राजन्ग्राम्यारण्याश्चतुर्दश ॥ १
भूमौ च जायते सर्वं भूमौ सर्वं विनश्यति ।
भूमिः प्रतिष्ठा भूतानां भूमिरेव सनातनम् ॥ २
यस्य भूमिस्तस्य सर्वं जगत्स्थावरजङ्गमम् ।
तत्रातिगृद्धा राजानो विनिघ्नन्तीतरेतरम् ॥ २

॥ इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

संजयेन धृतराष्ट्रंप्रति भूतपञ्चकगुणवर्णनपूर्वकं संक्षेपेण जम्बूद्वीपवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
नदीनां पर्वतानां च नामधेयानि संजय ।
तथा जनपदानां च ये चान्ये भूमिमाश्रिताः ॥ १
प्रमाणं च प्रमाणज्ञ पृथिव्या मम सर्वतः ।
निखिलेन समाचक्ष्व काननानि च संजय ॥
संजय उवाच ।
पञ्चेमानि महाराज महाभूतानि संग्रहात् ।
जगतीस्थानि सर्वाणि समान्याहुर्मनीषिणः ॥

नवा नैव । यमक्षयं यमलोकम् ॥ ४ ॥ त्रसानां जंगमानां योनिरुत्पत्तिस्थानम् ॥ १० ॥ चतुर्थोऽध्यायः ॥ ४ ॥

भूमिरापस्तथा वायुरग्निराकाशमेव च ।
गुणोत्तराणि सर्वाणि तेषां भूमिः प्रधानतः ॥४
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
भूमेरेते गुणाः प्रोक्ता ऋषिभिस्तत्त्ववेदिभिः ॥ ५
चत्वारोऽप्सु गुणा राजन्गन्धस्तत्र न विद्यते ।
शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः ।
शब्दः स्पर्शश्च वायौ द्वौ अकाशे शब्द एव तु ॥६
एते पञ्च गुणा राजन्महाभूतेषु पञ्चसु ।
वर्तन्ते सर्वलोकेषु येषु भूताः प्रतिष्ठिताः ॥ ७
अन्योन्यं नाभिवर्तन्ते साम्यं भवति वै यदा ॥८
यदा तु विषमीभावमाविशन्ति परस्परम् ।
तदा देहैर्देहवन्तो व्यतिरोहन्ति नान्यथा ॥ ९
आनुपूर्व्या विनश्यन्ति जायन्ते चानुपूर्वशः ।
सर्वाण्यपरिमेयाणि तदेषां रूपमैश्वरम् ॥ १०
तत्रतत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः ।
तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते ॥ ११
अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत् ।
प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम् ॥१२
सुदर्शनं प्रवक्ष्यामि द्वीपं तु कुरुनन्दन ।
परिमण्डलो महाराज द्वीपोऽसौ चक्रसंस्थितः॥१३
नदीजालप्रतिच्छन्नः पर्वतैश्चाभ्रसन्निभैः ।
पुरैश्च विविधाकारै रम्यैर्जनपदैस्तथा ॥ १४
वृक्षैः पुष्पफलोपेतैः संपन्नधनधान्यवान् ।
लवणेन समुद्रेण समन्तात्परिवारितः ॥ १५
यथा हि पुरुषः पश्येदादर्शे मुखमात्मनः ।
एवं सुदर्शनद्वीपो दृश्यते चन्द्रमण्डले ॥ १६
द्विरंशस्तु ततः प्लक्षो द्विरंशः शाल्मलिर्महान् ।
द्विरंशः पिप्पलस्तस्य द्विरंशश्च कुशो महान् ।
सर्वौषधिसमापन्नः पर्वतैः परिवारितः ॥ १७
आपस्ततोऽन्या विज्ञेयाः शेषः संक्षेप उच्यते ।
ततोऽन्य उच्यते चायमेनं संक्षेपतः शृणु ॥ १८

॥ इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

संजयेन भारतादिनवखण्डानां तत्तत्सीमापर्वतानां मेरोश्च वर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
उक्तो द्वीपस्य संक्षेपो विधिवद्बुद्धिमंस्त्वया ।
तत्त्वज्ञश्चासि सर्वस्य विस्तारं ब्रूहि सञ्जय ॥ १
यावान्भूम्यवकाशोऽयं दृश्यते शशलक्षणे ।
तस्य प्रमाणं प्रब्रूहि ततो वक्ष्यसि पिप्पलम् ॥ २
वैशंपायन उवाच ।
एवं राज्ञा स पृष्टस्तु संजयो वाक्यमब्रवीत् ।
संजय उवाच ।
प्रागायता महाराज षडेते वर्षपर्वताः ।
अवगाढा ह्युभयतः समुद्रौ पूर्वपश्चिमौ ॥
हिमवान्हेमकूटश्च निषधश्च नगोत्तमः ।
नीलश्च वैदूर्यमयः श्वेतश्च शशिसन्निभः ॥
सर्वधातुविचित्रश्च शृङ्गवान्नाम पर्वतः ।
एते वै पर्वता राजन्सिद्धचारणसेविताः ॥ ५
एषामन्तरविष्कम्भा योजनानि सहस्रशः ।
तत्र पुण्या जनपदास्तानि वर्षाणि भारत ॥ ६
वसन्ति तेषु सत्वानि नानाजातीनि सर्वशः ।
इदं तु भारतं वर्षं ततो हैमवतं परम् ॥ ७

---

किमस्य प्रमाणं का वा आकृतिस्तवाभिमतेत्याशङ्क्याह सुदर्शनमिति । सुदर्शनो नाम जम्बूवृक्षविशेषस्तन्नामाङ्कितोऽयं द्वीपः सुदर्शनद्वीपः तं प्रमाणत आकृतितश्च प्रकर्षेण वक्ष्यामि । तुशब्दः पक्षान्तरव्यावृत्त्यर्थः । चक्रसंस्थितः चक्रवत् संस्थितं संस्थानमाकारो यस्य सः ॥ १३ ॥ नन्वेवंविधस्य कथमतिसूक्ष्मत्वमुच्यतेऽत आह यथा हीति ॥ १६ ॥ पञ्चमोऽध्यायः ॥५॥

एवं दक्षिणां दिशमारभ्य यावदुत्तरसमाप्ति षट्प्राक्पश्चिमायताः पर्वतास्तैश्च सप्तवर्षाणि । भवन्ति मध्येमध्ये वासयोग्यानि स्थानानि भवन्ति । तेषां स्थानानां वर्षाख्यानामन्तरमाह एषामिति । विष्कम्भो विस्तारः ॥ ६ ॥ वसन्त्येषु तानि वर्षाणीति ।

'ततः किंपुरुषावासं वर्षं हिमवतः परम् ।'
हेमकूटात्परं चैव हरिवर्षं प्रचक्षते ॥ ८
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ।
प्रागायतो महाभाग माल्यवान्नाम पर्वतः ॥ ९
ततः परं माल्यवतः पर्वतो गन्धमादनः ।
परिमण्डलस्तयोर्मध्ये मेरुः कनकपर्वतः ।
तरुणादित्यसंकाशो विधूम इव पावकः ॥ १०
योजनानां सहस्राणि षोडशाधः किल स्मृतः ।
ऊर्ध्वं च चतुरशीतिर्द्वात्रिंशन्मूर्ध्नि विस्तृतः ।
अधस्ताच्चतुरशीतिर्योजनानां महीपते ॥ ११
ऊर्ध्वमधश्च तिर्यक्च मेरुरावृत्य तिष्ठति ।
तस्य पार्श्वेष्वमी द्वीपाश्चत्वारः संस्थिता विभो॥१२
भद्राश्वः केतुमालश्च जम्बूद्वीपश्च भारत ।
उत्तराश्चैव कुरवः कृतपुण्यप्रतिश्रयाः ॥ १३
विहगः सुमुखो यस्तु सुपर्णस्यात्मजः किल ।
स वै विचिन्तयामास सौवर्णान्वीक्ष्य वायसान् १४
मेरुरुत्तममध्यानामधमानां च पक्षिणाम् ।
अविशेषकरो यस्मात्तस्मादेनं त्यजाम्यहम् ॥ १५
तमादित्योऽनुपर्येति सततं ज्योतिषां वरः ।
चन्द्रमाश्च सनक्षत्रो वायुश्चैव प्रदक्षिणः ॥ १६
सपर्वतो महाराज दिव्यपुष्पफलान्वितः ।
भवनैरावृतः सर्वैर्जाम्बूनदपरिष्कृतैः ॥ १७
तत्र देवगणा राजन्गन्धर्वासुरराक्षसाः ।
अप्सरोगणसंयुक्ताः शैले क्रीडन्ति सर्वदा ॥ १८
तत्र ब्रह्मा च रुद्रश्च शक्रश्चापि सुरेश्वरः ।
समेत्य विविधैर्यज्ञैर्यजन्तेऽनेकदक्षिणैः ॥ १९
तुम्बुरुर्नारदश्चैव विश्वावसुर्हहाहुहूः ।
अभिगम्यामरश्रेष्ठांस्तुष्टुवुर्विविधैः स्तवैः ॥ २०
सप्तर्षयो महात्मानः कश्यपश्च प्रजापतिः ।
तत्र गच्छन्ति भद्रं ते सदा पर्वणि पर्वणि ॥ २१
तस्यैव मूर्धन्युशनाः काव्यो दैत्यैर्महीपते ।
इमानि तस्य रत्नानि तस्येमे रत्नपर्वताः ॥ २२
तस्मात्कुबेरो भगवांश्चतुर्थं भागमश्नुते ।
ततः कलांशं वित्तस्य मनुष्येभ्यः प्रयच्छति ॥२३
पार्श्वे तस्योत्तरे दिव्यं सर्वर्तुकुसुमैश्चितम् ।
कर्णिकारवनं रम्यं शिलाजालसमुद्गतम् ॥ २४
तत्र साक्षात्पशुपतिर्दिव्यैर्भूतैः समावृतः ।
उमासहायो भगवान्रमते भूतभावनः ॥ २५
कर्णिकारमयीं मालां बिभ्रत्पादावलम्बिनीम् ।
त्रिभिर्नेत्रैः कृतोद्योतस्त्रिभिः सूर्यैरिवोदितैः ॥ २६
तमुग्रतपसः सिद्धाः सुव्रताः सत्यवादिनः ।
पश्यन्ति नहि दुर्वृत्तैः शक्यो द्रष्टुं महेश्वरः ॥२७
तस्य शैलस्य शिखरात्क्षीरधारा नरेश्वर
विश्वरूपाऽपरिमिता भीमनिर्घातनिःस्वना ॥ २८
पुण्या पुण्यतमैर्जुष्टा गङ्गा भागीरथी शुभा ।
प्लवन्तीव प्रवेगेन ह्रदे चन्द्रमसः शुभे ॥ २९
तया ह्युत्पादितः पुण्यः स ह्रदः सागरोपमः ।
तां धारयामास तदा दुर्धरां पर्वतैरपि ॥ ३०
शतं वर्षसहस्राणां शिरसैव महेश्वरः ।
मेरोस्तु पश्चिमे पार्श्वे केतुमालो महीपते ॥ ३१
जम्बूखण्डे तु तत्रैव महाजनपदो नृप
आयुर्दशसहस्राणि वर्षाणां तत्र भारत ॥ ३२
सुवर्णवर्णाश्च नराः स्त्रियश्चाप्सरसोपमाः ।
अनामया वीतशोका नित्यं मुदितमानसाः ॥ ३३

---

योगान्तरमाह वसन्तीति । हिमवतो दक्षिणे भारतं वर्षं उत्तरतो हैमवतं वर्षं द्वितीयम् । अस्यैव नामान्तरं किंपुरुषावासमिति ॥ ७ ॥ हेमकूटनिषधयोर्मध्ये हरिवर्षम् । निषधनीलयोर्मध्ये वर्षविभागमाह दक्षिणेनेति । दक्षिणेन दक्षिणतः समीप इत्यर्थः । एवमुत्तरेणेत्यादौ ज्ञेयम् ॥ ८ ॥ नीलनिषधयोर्मध्ये मेरुस्तस्य प्राक् माल्यवान् पूर्वसमुद्रावधिः । पश्चिमसमुद्रावधिर्गन्धमादन इत्यर्थः ॥ ९ ॥ तस्य पार्श्वेष्विति । पार्श्वेषु चतुर्दिक्षु । द्वीपा इव द्वीपाः नद्यन्तरत्वाद्वर्षाणि ॥ १२ ॥ भद्राश्वादिसाहचर्याज्जम्बूद्वीपशब्दोऽत्र भरतवर्षपरस्तस्य तत्सारत्वज्ञापनार्थः । तानेव स्तौति कृतपुण्यप्रतिश्रया इत्यादिना । कृता विहिताः पुण्यैः पुण्यवद्भिः प्रतिश्रया आश्रमा येषु ते ॥ १३ ॥ तं मेरुमादित्योऽनुपर्येति प्रदक्षिणीकरोति ॥ १६ ॥ काव्यः कविश्रेष्ठः शुक्रो रमत इति शेषः । तस्य काव्यस्य ॥ २२ ॥ तस्मात् काव्यात् । ततः कुबेरात् । कलांशं षोडशभागस्यापि लेशम् ॥ २३ ॥ क्षीरवत् श्वेता धारा यस्याः सा गङ्गा । विश्वरूपा विश्वो विष्णुस्तद्रूपा । तथाच स्मरन्ति—योसौ सर्वगतो विष्णुश्चित्स्वरूपी निरञ्जनः । स एव द्रवरूपेण गङ्गाम्भो नात्र संशय इति ॥ २८ ॥ तयैव प्रवेगेन मेरुप्राकारात् पतनजनितबलेन खनन्त्या स ह्रद

जायन्ते मानवास्तत्र निष्टप्तकनकप्रभाः ।
गन्धमादनशृङ्गेषु कुबेरः सह राक्षसैः ॥ ३४
संवृतोऽप्सरसां सङ्घैर्मोदते गुह्यकाधिपः ।
गन्धमादनपार्श्वे तु परे त्वपरगण्डिकाः ॥ ३५
एकादशसहस्राणि वर्षाणां परमायुषः ।
तत्र कृष्णा नरा राजंस्तेजोयुक्ता महाबलाः ।
स्त्रियश्चोत्पलवर्णाभाः सर्वाः सुप्रियदर्शनाः ॥ ३६
नीलात्परतरं श्वेतं श्वेताद्धैरण्यकं परम् ।
वर्षमैरावतं राजन्नानाजनपदावृतम् ॥ ३७
धनुःसंस्थे महाराज द्वे वर्षे दक्षिणोत्तरे ।
इलावृतं मध्यमं तु पञ्च दीर्घाणि चैव हि ॥ ३८
उत्तरोत्तरमेतेभ्यो वर्षमुद्रिच्यते गुणैः ।
आयुःप्रमाणमारोग्यं धर्मतः कामतोऽर्थतः ॥३९
समन्वितानि भूतानि तेषु वर्षेषु भारत ।
एवमेषा महाराज पर्वतैः पृथिवी चिता ॥ ४०
हेमकूटस्तु सुमहान्कैलासो नाम पर्वतः ।
यत्र वैश्रवणो राजन्गुह्यकैः सह मोदते ॥ ४१
'तत्र देवो महादेवो नित्यमास्ते सहोमया ।
शीते शिलातले रम्ये देवर्षिगणपूजितः ॥' ४२
अस्त्युत्तरेण कैलासं मैनाकं पर्वतं प्रति ।
हिरण्यशृङ्गः सुमहान्दिव्यो मणिमयो गिरिः ॥४३
तस्य पार्श्वे महद्दिव्यं शुभ्रं काञ्चनवालुकम् ।
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ॥४४
दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः ।
यूपा मणिमयास्तत्र चैत्याश्चापि हिरण्मयाः ॥४५
तत्रेष्ट्वा तु गतः सिद्धिं सहस्राक्षो महायशाः ।
स्रष्टा भूतपतिर्यत्र सर्वलोकान्सनातनान् ॥ ४६
उपास्यते तिग्मतेजा यत्र भूतैः समन्ततः ।
नरनारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चमः ॥४७
तत्र दिव्या त्रिपथगा प्रथमं तु प्रतिष्ठिता ।
ब्रह्मलोकादपक्रान्ता सप्तधा प्रतिपद्यते ॥ ४८
वस्त्वौकसारा नलिनी पावनी च सरस्वती ।
जम्बूनदी च सीता च गङ्गा सिंधुश्च सप्तमी ॥४९
अचिन्त्या दिव्यसंकाशा प्रभोरेषैव संविधिः ।
उपासते यत्र सत्रं सहस्रयुगपर्यये ॥ ५०
दृश्याऽदृश्या च भवति तत्र तत्र सरस्वती ।
एता दिव्याः सप्त गङ्गास्त्रिषु लोकेषु विश्रुताः ५१
रक्षांसि वै हिमवति हेमकूटे तु गुह्यकाः ।
सर्पा नागाश्च निषधे गोकर्णे च तपोवनम् ॥५२
देवासुराणां सर्वेषां श्वेतपर्वत उच्यते ।
गन्धर्वा निषधे नित्यं नीले ब्रह्मर्षयस्तथा ।
शृङ्गवांस्तु महाराज देवानां प्रतिसंचरः ॥ ५३
इत्येतानि महाराज सप्त वर्षाणि भागशः ।
भूतान्युपनिविष्टानि गतिमन्ति ध्रुवाणि च ॥५४
तेषामृद्धिर्बहुविधा दृश्यते दैवमानुषी ।
अशक्या परिसंख्यातुं श्रद्धेया तु बुभूषता ॥५५
यां तु पृच्छसि मां राजन्दिव्यामेतां शशाकृतिम् ।
पार्श्वे शशस्य द्वे वर्षे उक्ते ये दक्षिणोत्तरे ।
तु शाकद्वीपश्च काश्यपद्वीप एव च ॥५६

उत्पादित इति संबन्धः ॥ ३० ॥ अपरगण्डिकाः अन्ये गन्धमादनस्यैवावयवभूता बुद्बुदोपमाः क्षुद्रशैलाः । गण्डो भूषण ...ुदे इति मेदिनी । स्वार्थिकः कः ॥ ३५ ॥ उत्पलवर्णेन आभान्ति ताः उत्पलवर्णाभाः ॥ ३६ ॥ एवं हिमवतो दक्षिणे भरतवर्षं । तदुत्तरे हैमवतं वर्षं । हेमकूटादुत्तरे हरिवर्षं । निषधादुत्तरे नीलाच्च दक्षिणे मेरोः परित इलावृतमेकमेव चतुर्थं वर्षं । अत्रैव केचिद्भद्राश्वकेतुमालयोर्वर्षान्तरत्वं प्रकल्प्य नववर्षाणीत्याचक्षते । ततो नीलात्पर्वतात् उत्तरतः श्वेतं पञ्चमं वर्षं । श्वेतात्पर्वतादुत्तरतो हैरण्यकं वर्षं षष्ठम् । ततः शृङ्गवत्पर्वतात् ऐरावतं सप्तमं वर्षम् ॥ ३७ ॥ धनुःसंस्थे धनुराकारे । एवमाकारं दक्षिणे भरतवर्षं उत्तरे ऐरावतं च मध्ये पञ्चेति सप्त वर्षाणि ॥ ३८ ॥ हेमेति हेमकूटएव कैलासः तस्योत्तरे मैनाकः तस्योत्तरतो हिरण्यशृङ्गः एतयोरन्तराले बिन्दुसरोऽस्तीति श्लोकत्रयार्थः ॥ ४१ ॥ प्रभोरीश्वरस्य एष सप्तनद्यात्मकः संविधिः समीचीनं लोकोपकारार्थं विधानम् । एषैवेति संधिरार्षः ॥ ५० ॥ श्वेतपर्वतः स्थानमिति शेषः । गन्धर्वा वसन्तीति शेषः । प्रतिसंचरः व्यवहारस्थानम् ॥ ५३ ॥ इतीति । वर्षाणि तत्र उपनिविष्टानि गतिमन्ति जङ्गमानि ध्रुवाणि स्थावराणि च सर्वाणि भूतान्येव । सर्वं दृश्यं आश्रयाश्रितरूपं पाञ्चभौतिकमेवेत्यर्थः ॥ ५४ ॥ बुभूषता श्रेयःप्राप्तुमिच्छता श्रद्धेया ॥ ५५ ॥ षष्ठोऽध्यायः ॥ ६ ॥

ताम्रपर्णीशिरो राजञ्छ्रीमान्मलयपर्वतः । एतद्द्वितीयं द्वीपस्य दृश्यते शशसंस्थितम् ॥

॥ इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

मेरोरुत्तरभागस्थोत्तरकुरुवर्णनम् ॥ १ ॥ तथा मेरोः पूर्वभागस्थभद्राश्वखण्डवर्णनम् ॥ २ ॥

धृतराष्ट्र उवाच ।
मेरोरथोत्तरं पार्श्वं पूर्वं चाचक्ष्व संजय ।
निखिलेन महाबुद्धे माल्यवन्तं च पर्वतम् ॥ १
संजय उवाच ।
दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे ।
उत्तराः कुरवो राजन्पुण्याः सिद्धनिषेविताः ॥ २
तत्र वृक्षा मधुफला नित्यपुष्पफलोपगाः ।
पुष्पाणि च सुगन्धीनि रसवन्ति फलानि च ॥ ३
सर्वकामफलास्तत्र केचिद्वृक्षा जनाधिप ।
अपरे क्षीरिणो नाम वृक्षास्तत्र नराधिप ॥ ४
ये क्षरन्ति सदा क्षीरं षड्रसं चामृतोपमम् ।
वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ॥ ५
सर्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका ।
सर्वर्तुसुखसंस्पर्शा निष्पङ्का च जनाधिप ।
पुष्करिण्यः शुभास्तत्र सुखस्पर्शा मनोरमाः ॥ ६
देवलोकच्युताः सर्वे जायन्ते तत्र मानवाः ।
शुक्लाभिजनसंपन्नाः सर्वे सुप्रियदर्शनाः ॥ ७
मिथुनानि च जायन्ते स्त्रियश्चाप्सरसोपमाः ।
तेषां ते क्षीरिणां क्षीरं पिबन्त्यमृतसन्निभम् ॥ ८
मिथुनं जायते काले समं तच्च प्रवर्धते ।
तुल्यरूपगुणोपेतं समवेषं तथैव च ॥ ९
एवमेवानुरूपं च चक्रवाकसमं विभो ।
निरामयाश्च ते लोका नित्यं मुदितमानसाः ॥ १०
दशवर्षसहस्राणि दशवर्षशतानि च ।
जीवन्ति ते महाराज न चान्योन्यं जहत्युत ॥ ११
भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा महाबलाः ।
तान्निर्हरन्तीह मृतान्दरीषु प्रक्षिपन्ति च ॥ १२
उत्तराः कुरवो राजन्व्याख्यातास्ते समासतः ।
मेरोः पार्श्वमहं पूर्वं वक्ष्याम्यथ यथातथम् ॥ १३
तस्य मूर्धाभिषेकस्तु भद्राश्वस्य विशांपते ।
भद्रसालवनं यत्र कालाम्रश्च महाद्रुमः ॥ १४
कालाम्रस्तु महाराज नित्यपुष्पफलः शुभः ।
द्रुमश्च योजनोत्सेधः सिद्धचारणसेवितः ॥ १५
तत्र ते पुरुषाः श्वेतास्तेजोयुक्ता महाबलाः ।
स्त्रियः कुमुदवर्णाश्च सुन्दर्यः प्रियदर्शनाः ॥ १६
चन्द्रप्रभाश्चन्द्रवर्णाः पूर्णचन्द्रनिभाननाः ।
चन्द्रशीतलगात्र्यश्च नृत्तगीतविशारदाः ॥ १७
दशवर्षसहस्राणि तत्रायुर्भरतर्षभ ।
कालाम्ररसपीतास्ते नित्यं संस्थितयौवनाः ॥ १८
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ।
सुदर्शनो नाम महाञ्जम्बूवृक्षः सनातनः ॥ १९
सर्वकामफलः पुण्यः सिद्धचारणसेवितः ।
तस्य नाम्ना समाख्यातो जम्बूद्वीपः सनातनः ॥ २०
योजनानां सहस्रं च शतं च भरतर्षभ ।
उत्सेधो वृक्षराजस्य दिवस्पृङ्मनुजेश्वर ॥ २१
अरत्नीनां सहस्रं च शतानि दश पञ्च च ।
परिणाहस्तु वृक्षस्य फलानां रसभेदिनाम् ॥ २२
पतमानानि तान्युर्वीं कुर्वन्ति विपुलं स्वनम् ।
मुञ्चन्ति च रसं राजंस्तस्मिन्रजतसन्निभम् ॥ २३
तस्या जम्बाः फलरसो नदी भूत्वा जनाधिप ।
मेरुं प्रदक्षिणं कृत्वा संप्रयात्युत्तरान्कुरून् ॥ २४
तत्र तेषां मनःशान्तिर्न पिपासा जनाधिप ।
तस्मिन्फलरसे पीते न जरा बाधते च तान् ॥ २५
तत्र जाम्बूनदं नाम कनकं देवभूषणम् ।

मधुफलाः स्वादुफलाः ॥ ३ ॥ शुक्लाभिजनो विष्णुभक्तजनस्तेन संपन्नास्तत्सङ्गिनः ॥ ७ ॥ चक्रवाकौ सहचरौ पक्षिदम्पती ॥ १० ॥ मूर्धाभिषेको मूर्धाभिषिक्तम् । मुख्यमिति यावत् ॥ १४ ॥

इन्द्रगोपकसंकाशं जायते भास्वरं तु तत् ॥ २६
तरुणादित्यवर्णाश्च जायन्ते तत्र मानवाः ।
तथा माल्यवतः शृङ्गे दृश्यते हव्यवाट् सदा २७
नाम्ना संवर्तको नाम कालाग्निर्भरतर्षभ ।
तथा माल्यवतः शृङ्गे पूर्वपूर्वानुगण्डिका ॥ २८
योजनानां सहस्राणि पञ्चषण्माल्यवानथ ।
महारजतसंकाशा जायन्ते तत्र मानवाः ॥ २९
ब्रह्मलोकच्युताः सर्वे सर्वे सर्वेषु साधवः ।
तपस्तप्यन्ति ते तीव्रं भवन्ति ह्यूर्ध्वरेतसः ।
रक्षणार्थं तु भूतानां प्रविशन्ते दिवाकरम् ॥ ३०
षष्टिस्तानि सहस्राणि षष्टिरेव शतानि च ।
अरुणस्याग्रतो यान्ति परिवार्य दिवाकरम् ॥ ३१
षष्टिं वर्षसहस्राणि षष्टिमेव शतानि च
आदित्यतापतप्तास्ते विशन्ति शशिमण्डलम् ॥ ३२

॥ इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

मेरोरुत्तरभागस्थखण्डत्रयवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
वर्षाणां चैव नामानि पर्वतानां च संजय ।
आचक्ष्व मे यथातत्त्वं ये च पर्वतवासिनः ॥ १
संजय उवाच ।
दक्षिणेन तु श्वेतस्य नीलस्यैवोत्तरेण तु ।
वर्षं रमणकं नाम जायन्ते तत्र मानवाः ॥ २
शुक्लाभिजनसंपन्नाः सर्वे सुप्रियदर्शनाः ।
निःसपत्नाश्च ते सर्वे जायन्ते तत्र मानवाः ॥ ३
दशवर्षसहस्राणि शतानि दश पञ्च च ।
जीवन्ति ते महाराज नित्यं मुदितमानसाः ॥ ४
दक्षिणे शृङ्गिणश्चैव श्वेतस्याथोत्तरेण तु ।
वर्षं हिरण्मयं नाम यत्र हैरण्वती नदी ॥ ५
यत्र चायं महाराज पक्षिराट् पतगोत्तमः ।
यक्षानुगा महाराज धनिनः प्रियदर्शनाः ॥ ६
महाबलास्तत्र जना राजन्मुदितमानसाः ।
एकादशसहस्राणि वर्षाणां ते जनाधिप ॥ ७
आयुःप्रमाणं जीवन्ति शतानि दश पञ्च च ।
शृङ्गाणि वै शृङ्गवतस्त्रीण्येव मनुजाधिप ॥ ८
एकं मणिमयं तत्र तथैकं रौक्ममद्भुतम् ।
सर्वरत्नमयं चैकं भवनैरुपशोभितम् ।
तत्र स्वयंप्रभा देवी नित्यं वसति शाण्डिली ॥ ९
उत्तरेण तु शृङ्गस्य समुद्रान्ते जनाधिप ।
वर्षमैरावतं नाम तस्माच्छृङ्गवतः परम् ॥ १०
न तत्र सूर्यस्तपति न जीर्यन्ते च मानवाः ।
चन्द्रमाश्च सनक्षत्रो ज्योतिर्भूत इवावृतः ॥ ११
पद्मप्रभाः पद्मवर्णाः पद्मपत्रनिभेक्षणाः ।
पद्मपत्रसुगन्धाश्च जायन्ते तत्र मानवाः ॥ १२
अनिष्पन्दा इष्टगन्धा निराहारा जितेन्द्रियाः ।
देवलोकच्युताः सर्वे तथा विरजसो नृप ॥ १३
त्रयोदशसहस्राणि वर्षाणां ते जनाधिप ।
आयुःप्रमाणं जीवन्ति नरा भरतसत्तम ॥ १४
क्षीरोदस्य समुद्रस्य तथैवोत्तरतः प्रभुः ।
हरिर्वसति वैकुण्ठः शकटे कनकोज्ज्वले ॥ १५
अष्टचक्रं हि तद्यानं भूतयुक्तं मनोजवम् ।
अग्निवर्णं महातेजो जाम्बूनदविभूषितम् ॥ १६
स प्रभुः सर्वभूतानां विभुश्च भरतर्षभ ।
संक्षेपो विस्तरश्चैव कर्ता कारयिता तथा ॥ १७
पृथिव्यापस्तथाऽऽकाशं वायुस्तेजश्च पार्थिव ।

---

गण्डिका क्षुद्रपर्वतः ॥ २८ ॥ पञ्चषट् पञ्चाधिकाः षट् एकादशेत्यर्थः । महारजतं काञ्चनं तत्संकाशाः ॥ २९ ॥ ब्रह्मलोकेति । ये इतः कर्मणा ब्रह्मलोकं गतास्ते ततश्च्युताः सन्तो माल्यवति पर्वते जन्म लब्ध्वा भूतानां रक्षणार्थं तपस्तप्त्वा दिवाकरं प्रविशन्ते तत्समीपं प्राप्नुवन्ति ॥ ३० ॥ सप्तमोऽध्यायः ॥ ७ ॥

यत्पूर्वं श्वेतवर्षमित्युक्तं तस्यैव रमणकमिति संज्ञान्तरम् ॥ २ ॥ शृङ्गवतः षष्ठस्य वर्षपर्वतस्य ॥ ८ ॥ शृङ्गस्य शृङ्गवतः ॥ १० ॥ अनिष्पन्दा अस्वेदाः । देवतुल्या इत्यर्थः ॥ १३ ॥ अष्टमोऽध्यायः ॥ ८ ॥

स यज्ञः सर्वभूतानामास्यं तस्य हुताशनः ॥ १८
वैशंपायन उवाच ।
एवमुक्तः संजयेन धृतराष्ट्रो महामनाः ।
ध्यानमन्वगमद्राजा पुत्रान्प्रति जनाधिप ॥ १९
स विचिन्त्य महातेजाः पुनरेवाब्रवीद्वचः
असंशयं सूतपुत्र कालः संक्षिपते जगत् ॥ २०
सृजते च पुनः सर्वं नेह विद्यति शाश्वतम् ।
नरो नारायणश्चैव सर्वज्ञः सर्वभूतहृत् ॥ २१
देवा वैकुण्ठ इत्याहुर्वेदा विष्णुरिति प्रभुम् ॥२२

॥ इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

भारतवर्षस्थनदीपर्वतदेशानां विस्तरेण कथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
यदिदं भारतं वर्षं यत्रेदं मूर्च्छितं बलम् ।
यत्रातिमात्रलुब्धोऽयं पुत्रो दुर्योधनो मम ॥ १
यत्र गृद्धाः पाण्डुपुत्रा यत्र मे सज्जते मनः ।
एतन्मे तत्त्वमाचक्ष्व त्वं हि मे बुद्धिमान्मतः॥२
संजय उवाच ।
न तत्र पाण्डवा गृद्धाः शृणु राजन्वचो मम ।
गृद्धो दुर्योधनस्तत्र शकुनिश्चापि सौबलः ॥ ३
अपरे क्षत्रियाश्चैव नानाजनपदेश्वराः ।
ये गृद्धा भारते वर्षे न मृष्यन्ति परस्परम् ॥ ४
अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम् ।
प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च ॥ ५
पृथोस्तु राजन्वैन्यस्य तथेक्ष्वाकोर्महात्मनः ।
ययातेरम्बरीषस्य मान्धातुर्नहुषस्य च॥ ६
तथैव मुचुकुन्दस्य शिबेरौशीनरस्य च ।
ऋषभस्य तथैलस्य नृगस्य नृपतेस्तथा ॥ ७
कुशिकस्य च दुर्धर्ष गाधेश्चैव महात्मनः ।
सोमकस्य च दुर्धर्ष दिलीपस्य तथैव च ॥ ८
अन्येषां च महाराज क्षत्रियाणां बलीयसाम् ।
सर्वेषामेव राजेन्द्र प्रियं भारत भारतम् ॥ ९
तत्ते वर्षं प्रवक्ष्यामि यथायथमरिन्दम ।
शृणु मे गदतो राजन्यन्मां त्वं परिपृच्छसि ॥१०
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ ११
तेषां सहस्रशो राजन्पर्वतास्ते समीपतः ।
अविज्ञाताः सारवन्तो विपुलाश्चित्रसानवः ॥१२
अन्ये ततोऽपरिज्ञाता ह्रस्वा ह्रस्वोपजीविनः ।
आर्या म्लेच्छाश्च कौरव्य तैर्मिश्राः पुरुषा विभो॥
नदीं पिबन्ति विपुलां गङ्गां सिन्धुं सरस्वतीम् ।
गोदावरीं नर्मदां च बाहुदां च महानदीम्॥१४
शतद्रूं चन्द्रभागां च यमुनां च महानदीम् ।
दृषद्वतीं विपाशां च विपापां स्थूलवालुकाम् १५
नदीं वेत्रवतीं चैव कृष्णवेणीं च निम्नगाम् ।
इरावतीं वितस्तां च पयोष्णीं देविकामपि ॥१६
वेदस्मृतां वेदवतीं त्रिदिवामिक्षुलां कृमिम् ।
करीषिणीं चित्रवाहां चित्रसेनां च निम्नगाम्१७
गोमतीं धूतपापां च वन्दनां च महानदीम् ।
कौशिकीं त्रिदिवां कृत्यां निचितां लोहितारणीं१८
रहस्यां शतकुम्भां च सरयूं च तथैव च ।
चर्मण्वतीं वेत्रवतीं हस्तिसोमां दिशं तथा ॥ १९
शरावतीं पयोष्णीं च वेणां भीमरथीमपि ।
कावेरीं चुलुकां चापि वाणीं शतबलामपि॥ २०
नीवारामहितां चापि सुप्रयोगां जनाधिप ।
पवित्रां कुण्डलीं सिन्धुं राजनीं पुरमालिनीम्॥२१
पूर्वाभिरामां वीरां च भीमामोघवतीं तथा ।
पाशाशिनीं पापहरां महेन्द्रां पाटलावतीम्॥ २२
करीषिणीमसिक्नीं च कुशचीरां महानदीम् ।
मकरीं प्रवरां मेनां हेमां घृतवतीं तथा ॥ २३

गृद्धाः लोभयुक्ताः । एतत् एतस्य । मे मह्यम् । तत्त्वं याथार्थ्यम् ॥ २ ॥ प्रियमिति । कर्मभूमित्वादिन्द्रादीनामिदं प्रियं ॥५

पुरावतीमनुष्णां च शैब्यां कापीं च भारत ।
सदानीरामधृष्यां च कुशधारां महानदीम् ॥ २४
सदाकान्तां शिवां चैव तथा वीरवतीमपि ।
वस्त्रां सुवस्त्रां गौरीं च कम्पनां सहिरण्वतीम् ॥ २५
वरां वीरकरां चापि पञ्चमीं च महानदीम् ।
रथचित्रां ज्योतिरथां विश्वामित्रां कपिञ्जलाम् २६
उपेन्द्रां बहुलां चैव कुवीरामम्बुवाहिनीम् ।
विनदीं पिञ्जलां वेणां तुङ्गवेणां महानदीम् ॥ २७
विदिशां कृष्णवेणां च ताम्रां च कपिलामपि ।
खलुं सुवामां वेदाश्वां हरिश्रावां महापगाम् ॥ २८
शीघ्रां च पिच्छिलां चैव भारद्वाजीं च निम्नगाम् ।
कौशिकीं निम्नगां शोणां बाहुदामथ चन्द्रमाम् २९
दुर्गां चित्रशिलां चैव ब्रह्मवेध्यां बृहद्वतीम् ।
यवक्षामथ रोहीं च तथा जाम्बूनदीमपि ॥ ३०
सुनसां तमसां दासीं वसामन्यां वराणसीम् ।
नीलां धृतवतीं चैव पर्णाशां च महानदीम् ॥ ३१
मानवीं वृषभां चैव ब्रह्ममेध्यां बृहद्ध्वनीम् ।
एताश्चान्याश्च बहुधा महानद्यो जनाधिप ॥ ३२
सदानिरामयां कृष्णां मन्दगां मन्दवाहिनीम् ।
ब्राह्मणीं च महागौरीं दुर्गामपि च भारत ॥ ३३
चित्रोपलां चित्ररथां मञ्जुलां वाहिनीं तथा ।
मन्दाकिनीं वैतरणीं कोषां चापि महानदीम् ॥ ३४
शुक्तिमतीमनङ्गां च तथैव वृषसाह्वयाम् ।
लोहित्यां करतोयां च तथैव वृषकाह्वयाम् ॥ ३५
कुमारीमृषिकुल्यां च मारिषां च सरस्वतीम् ।
मन्दाकिनीं सुपुण्यां च सर्वां गङ्गां च भारत ॥ ३६
विश्वस्य मातरः सर्वाः सर्वाश्चैव महाफलाः ।
तथा नद्यस्त्वप्रकाशाः शतशोऽथ सहस्रशः ॥ ३७
इत्येताः सरितो राजन्समाख्याता यथास्मृति ।
अत ऊर्ध्वं जनपदान्निबोध गदतो मम ॥ ३८
तत्रेमे कुरुपाञ्चालाः शाल्वा माद्रेयजाङ्गलाः ।
शूरसेनाः पुलिन्दाश्च बोधा मालास्तथैव च ॥ ३९
मत्स्याः कुशल्याः सौशल्याः कुंतयः कांतिकोसलाः
चेदिमत्स्यकरूशाश्च भोजाः सिन्धुपुलिन्दकाः ४०
उत्तमाश्च दशार्णाश्च मेकलाश्चोत्कलैः सह ।
पञ्चालाः कोसलाश्चैव नैकपृष्ठा धुरन्धराः ॥ ४१
गोधा मद्रकलिङ्गाश्च काशयोऽपरकाशयः ।
जठराः कुकुराश्चैव सदशार्णाश्च भारत ॥ ४२
कुन्तयोऽवन्तयश्चैव तथैवापरकुन्तयः ।
गोमन्ता मन्दकाः सण्डा विदर्भा रूपवाहिकाः ४३
अश्मकाः पाण्डुराष्ट्राश्च गोपराष्ट्राः करीतयः ।
अधिराज्यकुशाद्यश्च मल्लराष्ट्रं च केवलम् ॥ ४४
वारवास्यायवाहाश्च चक्राश्चक्रातयः शकाः ।
विदेहा मगधाः स्वक्षा मलजा विजयास्तथा ॥ ४५
अङ्गा वङ्गाः कलिङ्गाश्च यकृल्लोमान एव च ।
मल्लाः सुदेष्णाः प्रह्लादा माहिकाः शशिकास्तथा ॥
बाह्लीका वाटधानाश्च आभीराः कालतोयकाः ।
अपरान्ताः परान्ताश्च पञ्चालाश्चर्ममण्डलाः ॥ ४७
अटवीशिखराश्चैव मेरुभूताश्च मारिष ।
उपावृत्तानुपावृत्ताः स्वराष्ट्राः केकयास्तथा ॥ ४८
कुन्दापरान्ता माहेयाः कक्षाः सामुद्रनिष्कुटाः
अन्ध्राश्च बहवो राजन्नन्तर्गिर्यास्तथैव च ॥ ४९
बहिर्गिर्याङ्गमलजा मगधा मानवर्जकाः ।
समन्तराः प्रावृषेया भार्गवाश्च जनाधिप ॥ ५०
पुण्ड्रा भर्गाः किराताश्च सुदृष्टा यामुनास्तथा ।
शका निषादा निषधास्तथैवानर्तनैर्ऋताः ॥ ५१
दुर्गालाः प्रतिमत्स्याश्च कुन्तलाः कोसलास्तथा ।
तीरग्रहाः शूरसेना ईजिकाः कन्यका गुणाः ॥ ५२
तिलभारा मसीराश्च मधुमन्तः सकुन्दकाः ।
काश्मीराः सिन्धुसौवीरा गान्धारा दर्शकास्तथा ॥
अभीसारा उलूताश्च शैवला बाह्लिकास्तथा ।
दार्वी च वानवा दर्वा वातजामरथोरगाः ॥ ५४
बहुवाद्याश्च कौरव्य सुदामानः सुमल्लिकाः ।
वध्राः करीषकाश्चापि कुलिन्दोपत्यकास्तथा ॥ ५५
वनायवो दशापार्श्वरोमाणः कुशबिन्दवः ।
कच्छा गोपालकक्षाश्च जाङ्गलाः कुरुवर्णकाः ॥ ५६
किराता बर्बराः सिद्धा वैदेहास्ताम्रलिप्तकाः ।
आण्ड्रा म्लेच्छाः सैसिरिध्राः पार्वतीयाश्च मारिष ॥

अथापरे जनपदा दक्षिणा भरतर्षभ
द्रविडाः केरलाः प्राच्या भूषिका वनवासिकाः५८
कर्णाटका महिषका विकल्पा मूषकास्तथा ।
झिल्लिकाः कुन्तलाश्चैव सौहृदानभकाननाः॥५९
कौकुट्टकास्तथा चोलाः कोङ्कणा मालवा नराः ।
समङ्गाः करकाश्चैव कुकुराङ्गारमारिषाः ॥ ६०
ध्वजिन्युत्सवसंकेतास्त्रिगर्ताः साल्वसेनयः ।
व्यूकाः कोकबकाः प्रोष्ठाः समवेगवशास्तथा ६१
तथैव विन्ध्यचुलिकाः पुलिन्दा वल्कलैः सह ।
मालवा बल्लवाश्चैव तथैवापरबल्लवाः ॥ ६२
कुलिन्दाः कालदाश्चैव कुण्डलाः करटास्तथा ।
मूषकास्तनबालाश्च सनीपा घटसृञ्जयाः ॥ ६३
अठिदाः पाशिवाटाश्च तनयाः सुनयास्तथा ।
ऋषिका विदभाः काकास्तङ्गणाः परतङ्गणाः ॥६४
उत्तराश्चापरे म्लेच्छाः क्रूरा भरतसत्तम ।
यवनाश्चीनकाम्भोजा दारुणा म्लेच्छजातयः॥६५
सकृद्ग्रहाः कुलत्थाश्च हूणाः पारसिकैः सह ।
तथैव रमणाश्चीनास्तथैव दशमालिकाः ॥ ६६
क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च
शूद्राभीराश्च दरदाः काश्मीराः पशुभिः सह ॥६७
खाशीराश्चान्तचाराश्च पह्लवा गिरिगह्वराः ।
आत्रेयाः सभरद्वाजास्तथैव स्तनपोषिकाः ॥ ६८
प्रोषकाश्च कलिङ्गाश्च किरातानां च जातयः ।
तोमरा हन्यमानाश्च तथैव करभञ्जकाः ॥ ६९
एते चान्ये जनपदाः प्राच्योदीच्यास्तथैव च ।
उद्देशमात्रेण मया देशाः संकीर्तिता विभो ॥ ७०
यथागुणबलं चापि त्रिवर्गस्य महाफलम् ।
दुह्याद्धेनुः कामधुक्च भूमिः सम्यगनुष्ठिता ॥ ७१
तस्यां गृध्यन्ति राजानः शूरा धर्मार्थकोविदाः ।
ते त्यजन्त्याहवे प्राणान्वसुगृद्धास्तरस्विनः ॥ ७२
देवमानुषकायानां कामं भूमिः परायणम् ।
अन्योन्यस्यावलुम्पन्ति सारमेया यथाऽऽमिषम् ॥
राजानो भरतश्रेष्ठ भोक्तुकामा वसुन्धराम् ।
न चापि तृप्तिः कामानां विद्यतेऽद्यापि कस्यचित् ॥
तस्मात्परिग्रहे भूमेर्यतन्ते कुरुपाण्डवाः ।
साम्ना भेदेन दानेन दण्डेनैव च भारत ॥ ७५
पिता भ्राता च पुत्राश्च खं द्यौश्च नरपुङ्गव ।
भूमिर्भवति भूतानां सम्यगच्छिद्रदर्शना ॥

॥ इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

चतुर्युगवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
भारतस्यास्य वर्षस्य तथा हैमवतस्य च ।
प्रमाणमायुषः सूत बलं चापि शुभाशुभम् ॥ १
अनागतमतिक्रान्तं वर्तमानं च संजय ।
आचक्ष्व मे विस्तरेण हरिवर्षं तथैव च ॥ २
संजय उवाच ।
चत्वारि भारते वर्षे युगानि भरतर्षभ ।
कृतं त्रेता द्वापरं च तिष्यं च कुरुवर्धन ॥ ३
पूर्वं कृतयुगं नाम ततस्त्रेतायुगं प्रभो ।
संक्षेपाद्द्वापरस्याथ ततस्तिष्यं प्रवर्तते ॥ ४
चत्वारि तु सहस्राणि वर्षाणां कुरुसत्तम ।
आयुःसंख्या कृतयुगे संख्याता राजसत्तम ॥ ५
तथा त्रीणि सहस्राणि त्रेतायां मनुजाधिप ।
द्वे सहस्रे द्वापरे तु भुवि तिष्ठन्ति सांप्रतम् ॥ ६

यथागुणबलमिति । यथागुणं सत्त्वादिगुणान् अनतिक्रम्य । तद्वत् यथाबलं शौर्यं चानतिक्रम्य । त्रिवर्गस्य धर्मार्थकामात्मकस्य महाफलं उत्कृष्टफलं हैरण्यगर्भपदप्राप्त्यन्तं सम्यगनुष्ठिता सम्यक् पालिता भूमिर्दुह्यात् पूरयेत् । धेनुरिव कामान् अन्यांश्च दुग्धे इति कामधुक् ॥ ७१ ॥ देवकायानां यज्ञेन मानुषकायानामन्नप्रसवेन भूमिः परायणं शरणम् ॥ ७३॥ अच्छिद्रं संपूर्णं दर्शनं यस्याः सा भूमिः ॥ ७६ ॥ नवमोऽध्यायः ॥ ९ ॥

तिष्यं कलियुगम् ॥ ३ ॥

न प्रमाणस्थितिर्ह्यस्ति तिष्येऽस्मिन्भरतर्षभ ।
गर्भस्थाश्च म्रियन्तेऽत्र तथा जाता म्रियन्ति च ॥ ७
महाबला महासत्वाः प्रज्ञागुणसमन्विताः ।
प्रजायन्ते च जाताश्च शतशोऽथ सहस्रशः ॥ ८
जाताः कृतयुगे राजन्धनिनः प्रियदर्शनाः ।
प्रजायन्ते च जाताश्च मुनयो वै तपोधनाः ॥ ९
महोत्साहा महात्मानो धार्मिकाः सत्यवादिनः ।
प्रियदर्शना वपुष्मन्तो महावीर्या धनुर्धराः ॥ १०
वरार्हा युधि जायन्ते क्षत्रियाः शूरसत्तमाः ।
त्रेतायां क्षत्रिया राजन्सर्वे वै चक्रवर्तिनः ॥ ११
सर्ववर्णाश्च जायन्ते सदा चैव च द्वापरे ।
महोत्साहा वीर्यवन्तः परस्परजयैषिणः ॥ १२
तेजसाल्पेन संयुक्ताः क्रोधनाः पुरुषा नृप ।
लुब्धा अनृतकाश्चैव तिष्ये जायन्ति भारत ॥ १३
ईर्ष्या मानस्तथा क्रोधो मायाऽसूया तथैव च ।
तिष्ये भवति भूतानां रागो लोभश्च भारत ॥ १४
संक्षेपो वर्तते राजन्द्वापरेऽस्मिन्नराधिप ।
गुणोत्तरं हैमवतं हरिवर्षं ततः परम् ॥ १५

॥ इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि दशमोऽध्यायः ॥ १० ॥

॥ समाप्तं च जम्बूखण्डविनिर्माणपर्व ॥

# (अथ भूमिपर्व ॥ २ ॥)

## एकादशोऽध्यायः ॥ ११ ॥

शाकद्वीपवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
जम्बूखण्डस्त्वया प्रोक्तो यथावदिह सञ्जय ।
विष्कम्भमस्य प्रब्रूहि परिमाणं तु तत्त्वतः ॥ १
समुद्रस्य प्रमाणं च सम्यगच्छिद्रदर्शनम् ।
शाकद्वीपं च मे ब्रूहि कुशद्वीपं च सञ्जय ॥ २
शाल्मलिं चैव तत्त्वेन क्रौञ्चद्वीपं तथैव च ।
ब्रूहि गावल्गणे सर्वं राहोः सोमार्कयोस्तथा ॥ ३
सञ्जय उवाच ।
राजन्सुबहवो द्वीपा यैरिदं सन्ततं जगत् ।
सप्त द्वीपान्प्रवक्ष्यामि चन्द्रादित्यौ ग्रहं तथा ॥ ४
अष्टादश सहस्राणि योजनानि विशांपते ।
षट् शतानि च पूर्णानि विष्कम्भो जम्बुपर्वतः ५
लावणस्य समुद्रस्य विष्कम्भो द्विगुणः स्मृतः ।
नानाजनपदाकीर्णो मणिविद्रुमचित्रितः ॥ ६
नैकधातुविचित्रैश्च पर्वतैरुपशोभितः ।
सिद्धचारणसंकीर्णः सागरः परिमण्डलः ॥ ७
शाकद्वीपं च वक्ष्यामि यथावदिह पार्थिव ।
शृणु मे त्वं यथान्यायं ब्रुवतः कुरुनन्दन ॥ ८
जम्बूद्वीपप्रमाणेन द्विगुणः स नराधिप ।
विष्कम्भेण महाराज सागरोऽपि विभागशः ॥ ९
क्षीरोदो भरतश्रेष्ठ येन संपरिवारितः ।
तत्र पुण्या जनपदास्तत्र न म्रियते जनः ।

---

प्रजायन्ते प्रजां जनयन्ति ॥ ८ ॥ वपुष्मन्तः प्रशस्तदेहाः ॥ १० ॥ सर्वे वर्णाः परस्परजयैषिणो जायन्त इति संबन्धः ॥ १२ ॥ ईर्ष्या परोत्कर्षासहिष्णुत्वम् । मानः स्वस्मिन्पूज्यताबुद्धिः । क्रोधोऽभिज्वलनम् । माया कपटम् । असूया परगुणेषु दोषाविष्करणम् । रागो विषयेषु प्रीतिः । लोभस्तल्लिप्सा ॥ १४ ॥ संक्षेपो गुणानामिति शेषः ॥ १५ ॥ दशमोऽध्यायः ॥ १० ॥

ग्रहं राहुम् ॥ ४ ॥ पर्वताकृतित्वाज्जम्बुपर्वत इत्युच्यते ॥ ५ ॥ क्षेत्रफलतः पञ्चसहस्रायामत्वाज्जम्बूद्वीपस्य तदुभयतः पञ्चपञ्चभिः सहस्रैः समुद्रस्य विष्कम्भो विस्तारः तेन समुद्रस्य द्वीपस्य पञ्चदशसहस्रयोजनो व्यासः । द्विगुणः दशसहस्रयोजनः परिमण्डलश्चेदुभयतः समुद्रवेष्टनेन सह चत्वारिंशत्सहस्रः । एवं तृतीयोऽशीतिसहस्रः । चतुर्थः षष्टिसहस्राधिकं लक्षम् । पञ्चमो लक्षत्रयं विंशतिसहस्राणि । षष्ठो लक्षषट्कं चत्वारिंशत्सहस्राणि । सप्तमो द्वादशलक्षाण्यशीतिसहस्राणि । एतेषां संकलने

शरातुरास्तथैवान्ये दन्तिनो विद्रुता दिशः ॥ १६
यथाग्निरिन्धनं प्राप्य ज्वलेद्दीप्तार्चिरुल्बणम् ।
तथा जज्वाल पुत्रस्ते पाण्डुसेनां विनिर्दहन् ॥ १७
तं भारतमहामात्रं पाण्डवानां महारथः ।
जेतुं नोत्सहते कश्चिन्नाभ्युद्यातुं कथंचन ॥ १८
ऋते महेन्द्रतनयाच्छ्वेताश्वात्कृष्णसारथेः ।
स हि तं समरे राजन्निर्जित्य विजयोऽर्जुनः ॥ १९
भीष्ममेवाभिदुद्राव सर्वसैन्यस्य पश्यतः ।
विजितस्तव पुत्रोऽपि भीष्मबाहुव्यपाश्रयः ॥ २०
पुनःपुनः समाश्वस्य प्रायुध्यत मदोत्कटः ।
अर्जुनस्तु रणे राजन्योधयन्सव्यराजत ॥ २१
शिखण्डी तु रणे राजन्विव्याधैव पितामहम् ।
शरैरशनिसंस्पर्शैस्तथा सर्पविषोपमैः ॥ २२
न च स ते रुजं चक्रुः पितुस्तव जनेश्वर ।
स्मयमानस्तु गाङ्गेयस्तान्बाणाञ्जगृहे तदा ॥ २३
उष्णार्तो हि नरो यद्वज्जलधाराः प्रतीच्छति ।
तथा जग्राह गाङ्गेयः शरधाराः शिखण्डिनः ॥ २४
तं क्षत्रिया महाराज ददृशुर्घोरमाहवे ।
भीष्मं दहन्तं सैन्यानि पाण्डवानां महात्मनां २५
ततोऽब्रवीत्तव सुतः सर्वसैन्यानि मारिष ।
अभिद्रवत संग्रामे फल्गुनं सर्वतो रणे ॥ २६
भीष्मो वः समरे सर्वान्पालयिष्यति धर्मवित् ।
तद्भयं सुमहत्त्यक्त्वा पाण्डवान्प्रति युध्यत ॥ २७
एष तालेन महता भीष्मस्तिष्ठति पालयन् ।
सर्वेषां धार्तराष्ट्राणां समरे शर्म वर्म च ॥ २८
देवा अपि समुद्युक्ता नालं भीष्मं समासितुम् ।
किमु पार्था महात्मानं मर्त्यभूता महाबलाः ॥ २९
तस्माद्द्रवत मा योधाः फल्गुनं प्राप्य संयुगे ।
अहमद्य रणे यत्तो योधयिष्यामि पाण्डवम् ॥ ३०
सहितः सर्वतो यत्तैर्भवद्भिर्वसुधाधिपैः ।
तच्छ्रुत्वा तु वचो राजंस्तव पुत्रस्य धन्विनः ३१
अर्जुनं प्रति संयत्ता बलवन्तो महाबलाः ।
ते विदेहाः कलिङ्गाश्च दासेरकगणाश्च ह ॥ ३२
अभिपेतुर्निषादाश्च सौवीराश्च महारणे ।
बाह्लीका दरदाश्चैव प्रतीच्योदीच्यमालवाः ॥ ३३
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ।
साल्वाः शकास्त्रिगर्ताश्च अम्बष्ठाः केकयैः सह ३४
अभिपेतू रणे पार्थं पतङ्गा इव पावकम् ।
स तान्सर्वान्सहानीकान्महाराज महारथान् ॥ ३५
दिव्यान्यस्त्राणि संचिन्त्य प्रसंधाय धनञ्जयः ।
स तैरस्त्रैर्महावेगैर्ददाह सुमहाबलः ॥ ३६
शरप्रतापैर्बीभत्सुः पतङ्गानिव पावकः ।
तस्य बाणसहस्राणि सृजतो दृढधन्विनः ॥ ३७
दीप्यमानमिवाकाशे गाण्डीवं समदृश्यत ।
ते शरार्ता महाराज विप्रकीर्णमहाध्वजाः ॥ ३८
नाभ्यवर्तन्त राजानः सहिता वानरध्वजम् ।
सध्वजा रथिनः पेतुर्हयारोहा हयैः सह ॥ ३९
सगजाश्च गजारोहाः किरीटिशरताडिताः ।
ततोऽर्जुनभुजोत्सृष्टैरावृताऽऽसीद्वसुंधरा ॥ ४०
विद्रुतं दिक्षु सर्वासु शरैर्बलमदृश्यत ।
अथ पार्थो महाराज द्रावयित्वा वरूथिनीम् ४१
दुःशासनाय सुबहून्प्रेषयामास सायकान् ।
ते तु भित्त्वा तव सुतं दुःशासनमयोमुखाः ॥ ४२
धरणीं विविशुः सर्वे वल्मीकमिव पन्नगाः ।
हयांश्चास्य ततो जघ्ने सारथिं च न्यपातयत् ॥ ४३
विविंशतिं च विंशत्या विरथीकृतवान्प्रभुः ।
आजघान भृशं चैव पञ्चभिर्नतपर्वभिः ॥ ४४
कृपं विकर्णं शल्यं च विद्ध्वा बहुभिरायसैः ।
चकार विरथांश्चैव कौन्तेयः श्वेतवाहनः ॥ ४५
एवं ते विरथाः सर्वे कृपः शल्यश्च मारिष ।
दुःशासनो विकर्णश्च तथैव च विविंशतिः ॥ ४६
संप्राद्रवन्त समरे निर्जिताः सव्यसाचिना ।
पूर्वाह्णे भरतश्रेष्ठ पराजित्य महारथान् ॥ ४७
प्रजज्वाल रणे पार्थो विधूम इव पावकः ।
तथैव शरवर्षेण भास्करो रश्मिवानिव ॥ ४८
अन्यानपि महाराज तापयामास पार्थिवान् ।

भारतमहामात्रं भरतवंशश्रेष्ठम् ॥ १८ ॥ शर्म सुखहेतुत्वात् । वर्म रक्षाहेतुत्वात् ॥ २८ ॥ समासितुं उपसर्पितुं नाशयितुं वा । मर्त्यभूताः मर्त्यस्वरूपाः ॥ २९ ॥ तस्माद्द्रवत हे योधाः इति क. पाठः ॥ ३० ॥

पराङ्मुखीकृत्य तथा शरवर्षैर्महारथान् ॥ ४९
प्रावर्तयत संग्रामे शोणितोदां महानदीम् ।
मध्येन कुरुसैन्यानां पाण्डवानां च भारत ॥ ५०
तस्मिन्नतिमहाभीमे राजन्वीरवरक्षये ।
भीष्मं प्रति पराक्रान्ताः पाण्डवाः सह सृञ्जयैः ५१
ते पराक्रान्तमालोक्य युधि राजन्पितामहम् ।
न न्यवर्तन्त ते पुत्रा ब्रह्मलोकपुरस्कृताः ॥ ५२
इच्छन्तो निधनं युद्धे स्वर्गलोकपरायणाः ।
पाण्डवानभ्यवर्तन्त तावका युद्धदुर्मदाः ॥ ५३
पाण्डवाश्च महाराज स्मरन्तो विविधान्बहून् ।
क्लेशान्कृतान्सपुत्रेण त्वया पूर्वं नराधिप ॥ ५४
भयं त्यक्त्वा रणे शूराः स्वर्गलोकपुरस्कृताः ।
तावकांस्तव पुत्रांश्च योधयन्ति स्म हृष्टवत् ॥ ५५
गजाश्च रथसङ्घाश्च बहुधा रथिभिर्हताः ।
रथाश्च निहता नागैर्हयाश्चैव पदातिभिः ॥ ५६
अन्तरा च्छिद्यमानानि शरीराणि शिरांसि च ।
निपेतुर्दिक्षु सर्वासु गजाश्वरथयोधिनाम् ॥ ५७
छन्नमायोधनं राजन्कुण्डलाङ्गदधारिभिः ।
पतितैः पात्यमानैश्च राजपुत्रैर्महारथैः ॥ ५८
रथनेमिनिकृत्तैश्च गजैश्चैवावपोथितैः ।
पादाताश्चाप्यधावन्त साश्वाश्च हययोधिनः ॥ ५९
गजाश्च रथयोधाश्च परिपेतुः समन्ततः ।
विकीर्णाश्च रथा भूमौ भग्नचक्रयुगध्वजाः ॥ ६०
तद्गजाश्वरथौघानां रुधिरेण समुक्षितम् ।
छन्नमायोधनं रेजे रक्ताभ्रमिव शारदम् ॥ ६१
श्वानः काकाश्च गृध्राश्च वृका गोमायुभिः सह ।
प्रणेदुर्भक्ष्यमासाद्य विकृताश्च मृगद्विजाः ॥ ६२
ववुर्बहुविधाश्चैव दिक्षु सर्वासु मारुताः ।
दृश्यमानेषु रक्षःसु भूतेषु च नदत्सु च ॥ ६३
काञ्चनानि च दामानि पताकाश्च महाधनाः ।
धूयमाना व्यदृश्यन्त सहसा मारुतेरिताः ॥ ६४
श्वेतच्छत्रसहस्राणि सध्वजाश्च महारथाः ।
विकीर्णाः समदृश्यन्त शतशोऽथ सहस्रशः ॥ ६५
सपताकाश्च मातङ्गा दिशो जग्मुः शरातुराः ।
क्षत्रियाश्च मनुष्येन्द्र गदाशक्तिधनुर्धराः ॥ ६६
समन्ततश्च दृश्यन्ते पतिता धरणीतले ।
'इषुभिस्ताड्यमानाश्च नाराचैश्च सहस्रशः ।
पेतुरार्तस्वरं कृत्वा तत्रतत्र महागजाः ॥ ६७
सेनापतिस्तु समरे प्राह सेनां महारथः ।
अभ्यद्रवत गाङ्गेयं सैनिकाः किं कृतेन वः ॥ ६८
सेनापतिवचः श्रुत्वा सोमकाः सह सृञ्जयैः ।
अभ्यद्रवन्त गाङ्गेयं शस्त्रवृष्ट्या समन्ततः ॥' ६९
ततो भीष्मो महाराज दिव्यमस्त्रमुदीरयन् ।
अभ्यधावत कौन्तेयं मिषतां सर्वधन्विनाम् ॥ ७०
तं शिखण्डी रणे यान्तमभ्यद्रवत दंशितः ।
ततः समाहरद्भीष्मस्तदस्त्रं पावकोपमम् ॥ ७१
एतस्मिन्नेव काले तु कौन्तेयः श्वेतवाहनः ।
निजघ्ने तावकं सैन्यं मोहयित्वा पितामहम् ॥ ७२

॥ इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि दशमदिवसयुद्धे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

## अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

भीष्मपराक्रमवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
असंव्यूढेष्वनीकेषु भूयिष्ठमनुवर्तिषु ।
ब्रह्मलोकपराः सर्वे समपद्यन्त भारत ॥ १
न ह्यनीकमनीकेषु समसज्जत संकुले ।
रथा न रथिभिः सार्धं पादाता न पदातिभिः २
अश्वा नाश्वैरयुध्यन्त गजा न गजयोधिभिः ।
उन्मत्तवन्महाराज युध्यन्ते तत्र भारत ॥ ३
महान्व्यतिकरो रौद्रः सेनयोः समपद्यत ।

भूतेषु प्रेतेषु ॥ ६३ ॥ महाधनाः बहुमूल्याः ॥ ६४ ॥
सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

अनिवर्तिषु इति झ. पाठः ॥ १ ॥ व्यतिकरः क्षोभः ॥ ४ ॥

नरनागगणेष्वेवं विकीर्णेषु च सर्वशः ॥ ४
क्षये तस्मिन्महारौद्रे निर्विशेषमजायत ।
ततः शल्यः कृपश्चैव चित्रसेनश्च भारत ॥ ५
दुःशासनो विकर्णश्च रथानास्थाय भास्वरान् ।
पाण्डवानां रणे शूरा ध्वजिनीं समकम्पयन् ॥ ६
सा वध्यमाना समरे पाण्डुसेना महात्मभिः ।
त्रातारं नाध्यगच्छद्वै मज्जमानेव नौर्जले ॥ ७
यथा हि शैशिरः कालो गवां मर्माणि कृन्तति ।
तथा पाण्डुसुतानां वै भीष्मो मर्माणि कृन्तति ॥ ८
तथैव तव सैन्यस्य पार्थेन च महात्मना ।
नवमेघप्रतीकाशाः पातिता बहुधा गजाः ॥ ९
मृद्यमानाश्च दृश्यन्ते पार्थेन नरयूथपाः ।
इषुभिस्ताड्यमानाश्च नाराचैश्च सहस्रशः ॥ १०
[illegible]स्वरं घोरं कृत्वा तत्र महागजाः ।
आनद्धाभरणैः कायैर्निहतानां महात्मनाम् ॥ ११
छन्नमायोधनं रेजे शिरोभिश्च सकुण्डलैः ।
तस्मिन्नेव महाराज महावीरवरक्षये ॥ १२
भीष्मे च युधि विक्रान्ते पाण्डवे च धनञ्जये ।
ते पराक्रान्तमालोक्य राजन्युधि पितामहम् ॥ १३
अभ्यवर्तन्त ते पुत्राः सर्वे सैन्यपुरस्कृताः ।
इच्छन्तो निधनं युद्धे स्वर्गं कृत्वा परायणम् ॥ १४
पाण्डवानभ्यवर्तन्त तस्मिन्वीरवरक्षये ।
पाण्डवापि महाराज स्मरन्तो विविधान्बहून् ॥ १५
क्लेशान्कृतान्सपुत्रेण त्वया पूर्वं नराधिप ।
भयं त्यक्त्वा रणे शूरा ब्रह्मलोकाय तत्पराः ॥ १६
तावकांस्तव पुत्रांश्च योधयन्ति प्रहृष्टवत् ।
सेनापतिस्तु समरे प्राह सेनां महारथः ॥ १७
अभिद्रवत गाङ्गेयं सोमकाः सृञ्जयैः सह ।
सेनापतिवचः श्रुत्वा सोमकाः सृञ्जयाश्च ते ॥ १८
अभ्यद्रवन्त गाङ्गेयं शरवृष्ट्या समाहताः ।
वध्यमानस्ततो राजन्पिता शान्तनवस्तव ॥ १९
अमर्षवशमापन्नो योधयामास सृञ्जयान् ।
तस्य कीर्तिमतस्तात पुरा रामेण धीमता ॥ २०
संप्रदत्ताऽस्त्रशिक्षा वै परानीकविनाशनी ।
स तां विद्यामधिष्ठाय कुर्वन्परबलक्षयम् ॥ २१
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः ।
भीष्मो दशसहस्राणि जघान परवीरहा ॥ २२
तस्मिंस्तु दशमे प्राप्ते दिवसे भरतर्षभ ।
एको भीष्मो हि मत्स्येषु पाञ्चालेषु च संयुगे ॥ २३
गजाश्वममितं हत्वा हत्वा सप्त महारथान् ।
हत्वा पञ्चसहस्राणि रथानां प्रपितामहः ॥ २४
नराणां च महायुद्धे सहस्राणि चतुर्दश ।
दन्तिनां च सहस्राणि हयानामयुतं पुनः ॥ २५
शिक्षाबलेन न्यहनत्पिता तव विशांपते ।
ततः सर्वमहीपानां क्षपयित्वा वरूथिनीम् ॥ २६
विराटस्य प्रियो भ्राता शतानीको निपातितः ।
शतानीकं च समरे हत्वा भीष्मः प्रतापवान् ॥ २७
सहस्राणि महाराज राज्ञां भल्लैरपातयत् ।
उद्विग्नाः समरे योधा विक्रोशन्ति धनञ्जयम् ॥ २८
ये च केचन पार्थानामभियाता धनञ्जयम् ।
राजानो भीष्ममासाद्य गतास्ते यमसादनम् ॥ २९
किरन्दश दिशो भीष्मः शरजालैः समन्ततः ।
अतीत्य सेनां पार्थानामवतस्थे चमूमुखे ॥ ३०
स कृत्वा सुमहत्कर्म तस्मिन्वै दशमेऽहनि ।
सेनयोरन्तरे तिष्ठन्प्रगृहीतशरासनः ॥ ३१
न चैनं पार्थिवाः केचिच्छक्ता राजन्निरीक्षितुम् ।
मध्यं प्राप्तं यथा ग्रीष्मे तपन्तं भास्करं दिवि ॥ ३२
यथा दैत्यचमूं शक्रस्तापयामास संयुगे ।
तथा भीष्मः पाण्डवेयांस्तापयामास भारत ॥ ३३
तथा चैनं पराक्रान्तमालोक्य मधुसूदनः ।
उवाच देवकीपुत्रः प्रीयमाणो धनञ्जयम् ॥ ३४
एष शान्तनवो भीष्मः सेनयोरन्तरे स्थितः ।
सन्निहत्य बलादेनं विजयस्ते भविष्यति ॥ ३५
बलात्संस्तम्भयस्वैनं यत्रैषा भिद्यते चमूः ।
न हि भीष्मशरानन्यः सोढुमुत्सहते विभो ॥ ३६
ततस्तस्मिन्क्षणे राजंश्चोदितो वानरध्वजः ।
सध्वजं सरथं साश्वं भीष्ममन्तर्दधे शरैः ॥ ३७
स चापि कुरुमुख्यानामृषभः पाण्डवेरितान् ।
शरव्रातैः शरव्रातान्बहुधा विदुधाव तान् ॥ ३८

ततः पाञ्चालराजश्च धृष्टकेतुश्च वीर्यवान् ।
पाण्डवो भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ३९
यमौ च चेकितानश्च केकयाः पञ्च चैव ह ।
सात्यकिश्च महाबाहुः सौभद्रोऽथ घटोत्कचः ४०
द्रौपदेयाः शिखण्डी च कुन्तिभोजश्च वीर्यवान् ।
विराटश्च महाराज पाण्डवेया महाबलाः ॥ ४१
एते चान्ये च बहवः पीडिता भीष्मसायकैः ।
समुद्धृताः फल्गुनेन निमग्नाः शोकसागरे ॥ ४२
ततः शिखण्डी वेगेन प्रगृह्य परमायुधम् ।
भीष्ममेवाभिदुद्राव रक्ष्यमाणः किरीटिना ॥ ४३
ततोऽस्यानुचरान्हत्वा सर्वान्रणविभागवित् ।
भीष्ममेवाभिदुद्राव बीभत्सुरपराजितः ॥ ४४
सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः ।
विराटो द्रुपदश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ४५
दुद्रुवुर्भीष्ममेवाजौ रक्षिता दृढधन्वना ।
अभिमन्युश्च समरे द्रौपद्याः पञ्च चात्मजाः ॥ ४६
ददृशुः समरे भीष्मं समुद्यतमहायुधम् ।
ते सर्वे दृढधन्वानः संयुगेष्वपलायिनः ॥ ४७
बहुधा भीष्ममानर्च्छुर्मार्गणैः क्षतमार्गणैः ।
विधूय तान्बाणगणान्ये मुक्ताः पार्थिवोत्तमैः ४८
पाण्डवानामदीनात्मा व्यगाहत वरूथिनीम् ।
चक्रे शरविघातं च क्रीडन्निव पितामहः ॥ ४९
नाभिसंधत्त पाञ्चाल्ये स्मयमानो मुहुर्मुहुः ।
स्त्रीत्वं तस्यानुसंस्मृत्य भीष्मो बाणाञ्शिखण्डिने॥
जघान द्रुपदानीके रथान्सप्त महारथः ।
ततः किलकिलाशब्दः क्षणेन समभूत्तदा ॥ ५१
मत्स्यपाञ्चालचेदीनां तमेकमभिधावताम् ।
ते नराश्वरथव्रातैर्मार्गणैश्च परंतप ॥ ५२
तमेकं छादयामासुर्मेघा इव दिवाकरम् ।
भीष्मं भागीरथीपुत्रं प्रतपन्तं रणे रिपून् ॥ ५३
ततस्तस्य च तेषां च युद्धे देवासुरोपमे ।
किरीटी भीष्ममानर्च्छ पुरस्कृत्य शिखण्डिनम् ५४

॥ इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि दशमदिवसयुद्धे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

## एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

भीष्मनिपातः ॥ १ ॥

सञ्जय उवाच ।
एवं ते पाण्डवाः सर्वे पुरस्कृत्य शिखण्डिनम् ।
विव्यधुः समरे भीष्मं परिवार्य समन्ततः ॥ १
शतघ्नीभिः सुघोराभिः परिघैश्च परश्वधैः ।
मुद्गरैर्मुसलैः प्रासैः क्षेपणीयैश्च सर्वशः ॥ २
शरैः कनकपुङ्खैश्च शक्तितोमरकम्पनैः ।
नाराचैर्वत्सदन्तैश्च भुशुण्डीभिश्च सर्वशः ॥ ३
अताडयन्रणे भीष्मं सहिताः सर्वसृञ्जयाः ।
स विशीर्णतनुत्राणः पीडितो बहुभिस्तदा ॥ ४
न विव्यथे तदा भीष्मो भिद्यमानेषु मर्मसु ।
संदीप्तशरचापाग्निरस्त्रप्रसृतमारुतः ॥ ५
नेमिनिर्ह्रादसंतापो महास्त्रोदयपावकः ।
चित्रचापमहाज्वालो वीरक्षयमहेन्धनः ॥ ६
युगान्ताग्निसमप्रख्यः परेषां समपद्यत ।
निवृत्य रथसङ्घानामन्तरेण विनिःसृतः ॥ ७
दृश्यते स्म नरेन्द्राणां पुनर्मध्यगतश्चरन् ।
ततः पाञ्चालराजं च धृष्टकेतुमतीत्य च ॥ ८
पाण्डवानीकिनीमध्यमाससाद विशांपते ।
ततः सात्यकिभीमौ च पाण्डवं च धनञ्जयम् ॥ ९
द्रुपदं च विराटं च धृष्टद्युम्नं च पार्षतम् ।
भीमघोषैर्महावेगैर्मर्मावरणभेदिभिः ॥ १०
षडेतान्निशितैर्भीष्मः प्रविव्याधोत्तमैः शरैः ।
तस्य ते निशितान्बाणात्सन्निवार्य महारथाः ॥ ११
दशभिर्दशभिर्भीष्ममर्दयामासुरोजसा ।

अदीनात्मा अक्षीणस्वभावः ॥ ४९ ॥ अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

मर्मावरणं वर्म देहचर्म वा ॥ १० ॥

शिखण्डी तु महाबाणान्यान्मुमोच महारथः १२
न चक्रुस्ते रुजं तस्य स्वर्णपुङ्खाः शिलाशिताः ।
ततः किरीटी संरब्धो भीष्ममेवाभ्यधावत ॥१३
शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत्।
भीष्मस्य धनुषश्छेदं नामृष्यन्त महारथाः ॥ १४
द्रोणश्च कृतवर्मा च सैन्धवश्च जयद्रथः ।
भूरिश्रवाः शलः शल्यो भगदत्तस्तथैव च ॥ १५
सप्तैते परमक्रुद्धाः किरीटिनमभिद्रुताः ।
तत्र शस्त्राणि दिव्यानि दर्शयन्तो महारथाः ॥ १६
अभिपेतुर्भृशं क्रुद्धाश्छादयन्तश्च पाण्डवम् ।
तेषामापततां शब्दः शुश्रुवे फल्गुनं प्रति ॥ १७
उद्धूतानां यथा शब्दः समुद्राणां युगक्षये ।
घ्नत त्वरत गृह्णीत विध्यध्वमवकर्तत ॥ १८
इत्यासीत्तुमुलः शब्दः फल्गुनस्य रथं प्रति ।
तं शब्दं तुमुलं श्रुत्वा पाण्डवानां महारथाः ॥ १९
अभ्यधावन्परीप्सन्तः फल्गुनं भरतर्षभ ।
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ २०
विराटद्रुपदौ चोभौ राक्षसश्च घटोत्कचः ।
अभिमन्युश्च संक्रुद्धः सप्तैते क्रोधमूर्च्छिताः ॥ २१
समभ्यधावंस्त्वरिताश्चित्रकार्मुकधारिणः ।
तेषां समभवद्युद्धं तुमुलं रोमहर्षणम् ॥ २२
संग्रामे भरतश्रेष्ठ देवानां दानवैरिव ।
शिखण्डी तु रणे श्रेष्ठो रक्ष्यमाणः किरीटिना ॥२३
अविध्यद्दशभिर्भीष्मं छिन्नधन्वानमाहवे ।
सारथिं दशभिश्चास्य ध्वजं चैकेन चिच्छिदे ॥ २४
सोऽन्यत्कार्मुकमादाय गाङ्गेयो वेगवत्तरम् ।
तदप्यस्य शितैर्बाणैस्त्रिभिश्चिच्छेद फल्गुनः ॥ २५
एवं स पाण्डवः क्रुद्ध आत्तमात्तं पुनः पुनः ।
धनुश्चिच्छेद भीष्मस्य सव्यसाची परंतपः ॥ २६
स च्छिन्नधन्वा संक्रुद्धः सृक्किणी परिसंलिहन् ।
शक्तिं जग्राह तरसा गिरीणामपि दारणीम् ॥ २७
तां च चिक्षेप संक्रुद्धः फल्गुनस्य रथं प्रति ।
तामापतन्तीं संप्रेक्ष्य ज्वलन्तीमशनीमिव ॥ २८
समादत्त शितान्भल्लान्पञ्च पाण्डवनन्दनः ।
तस्य चिच्छेद तां शक्तिं पञ्चधा पञ्चभिः शरैः ॥२९
संक्रुद्धो भरतश्रेष्ठ भीष्मबाहुप्रवेरिताम् ।
सा पपात तथा छिन्ना संक्रुद्धेन किरीटिना ॥ ३०
मेघवृन्दपरिभ्रष्टा विच्छिन्नेव शतह्रदा ।
छिन्नां तां शक्तिमालोक्य भीष्मः क्रोधसमन्वितः ॥
अचिन्तयद्रणे वीरो बुद्ध्या परपुरंजयः ।
शक्तोऽहं धनुषैकेन निहन्तुं सर्वपाण्डवान् ॥ ३२
यद्येषां न भवेद्गोप्ता विष्वक्सेनो महाबलः ।
'अजय्यश्चैव सर्वेषां लोकानामिति मे मतिः ।'
कारणद्वयमास्थाय नाहं योत्स्यामि पाण्डवान् ॥३३
अवध्यत्वाच्च पाण्डूनां स्त्रीभावाच्च शिखण्डिनः ।
पित्रा तुष्टेन मे पूर्वं यदा कालीमुदावहम् ॥ ३४
स्वच्छन्दमरणं दत्तमवध्यत्वं रणे तथा ।
तस्मान्मृत्युमहं मन्ये प्राप्तकालमिवात्मनः ॥ ३५
एवं ज्ञात्वा व्यवसितं भीष्मस्यामिततेजसः ।
ऋषयो वसवश्चैव वियत्स्था भीष्ममब्रुवन् ॥ ३६
यत्ते व्यवसितं तात तदस्माकमपि प्रियम् ।
तत्कुरुष्व महाराज युद्धे बुद्धिं निवर्तय ॥ ३७
अस्य वाक्यस्य निधने प्रादुरासीच्छिवोऽनिलः ।
अनुलोमः सुगन्धी च पृषतैश्च समन्वितः ॥ ३८
देवदुन्दुभयश्चैव संप्रणेदुर्महास्वनाः ।
पपात पुष्पवृष्टिश्च भीष्मस्योपरि मारिष ॥ ३९
न च ताः शुश्रुवे कश्चित्तेषां संवदतां गिरः ।
ऋते भीष्मं महाबाहुं मां चापि मुनितेजसा ॥४०
संभ्रमश्च महानासीत्त्रिदशानां विशांपते ।
पतिष्यति रथाद्भीष्मे सर्वलोकप्रिये तदा ॥ ४१
इति देवगणानां च वाक्यं श्रुत्वा महातपाः ।
ततः शान्तनवो भीष्मो बीभत्सुं नाभ्यवर्तत ४२
भिद्यमानः शितैर्बाणैः सर्वावरणभेदिभिः ।
शिखण्डी तु महाराज भरतानां पितामहम् ॥४३
आजघानोरसि क्रुद्धो नवभिर्निशितैः शरैः ।
स तेनाभिहतः सङ्ख्ये भीष्मः कुरुपितामहः ॥४४
नाकम्पत महाराज क्षितिकम्पे यथाऽचलः ।
ततः प्रहस्य बीभत्सुर्व्याक्षिपन्गाण्डिवं धनुः ॥४५

आत्तमात्तं गृहीतं गृहीतम् ॥२६॥ व्यवसितं निश्चितम् ॥३७॥ निधने समाप्तौ ॥ ३८ ॥ मुनितेजसा व्यासप्रभावेन ॥ ४० ॥

गाङ्गेयं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
पुनःपुनः शतैरेनं त्वरमाणो धनञ्जयः ॥ ४६
सर्वगात्रेषु संक्रुद्धस्तथा मर्मस्वताडयत् ।
एवमन्यैरपि भृशं विद्ध्यमानः सहस्रशः ॥ ४७
तानप्याशु शरैर्भीष्मः प्रविव्याध महारथः ।
तैश्च मुक्ताञ्छरान्भीष्मो युधि सत्यपराक्रमः ॥४८
निवारयामास शरैः समं सन्नतपर्वभिः ।
शिखण्डी तु रणे बाणान्यान्मुमोच महारथः ॥४९
न चक्रुस्ते रुजं तस्य रुक्मपुङ्खाः शिलासिताः ।
ततः किरीटी संक्रुद्धो भीष्ममेवाभ्यवर्तत ॥ ५०
शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ।
अथैनं नवभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे ॥ ५१
सारथिं विशिखैश्चास्य दशभिः समकम्पयत् ।
सोऽन्यत्कार्मुकमादाय गाङ्गेयो बलवत्तरम् ॥ ५२
तदप्यस्य शितैर्भल्लैस्त्रिधा त्रिभिरघातयत् ।
निमेषार्धेन कौन्तेय आत्तमात्तं महारणे ॥ ५३
एवमस्य धनूंष्याजौ चिच्छेद सुबहून्यथ ।
ततः शान्तनवो भीष्मो बीभत्सुं नात्यवर्तत ॥५४
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
सोऽतिविद्धो महेष्वासो दुःशासनमभाषत ॥५५
एष पार्थो रणे क्रुद्धः पाण्डवानां महारथः ।
शरैरनेकसाहस्रैर्मामेवाभ्यपतद्रणे ॥ ५६
न चैष समरे शक्यो जेतुं वज्रभृता अपि ।
न चापि सहिता वीरा देवदानवराक्षसाः ॥५७
मां चापि शक्ता निर्जेतुं किमु मर्त्या महारथाः।
'ऋतेऽर्जुनं सुसंक्रुद्धमेतत्सत्यं ब्रवीमि ते ॥' ५८
एवं तयोः संवदतोः फल्गुनो निशितैः शरैः ।
शिखण्डिनं पुरस्कृत्य भीष्मं विव्याध संयुगे ५९
ततो दुःशासनं भीष्मः स्मयमान इवाब्रवीत् ।
अर्दितो निशितैर्बाणैर्भृशं गाण्डीवधन्वना ॥६०
वज्राशनिसमस्पर्शाः सुपुङ्खाः सुप्रतेजनाः ।
सुमुक्ता अव्यवच्छिन्ना नेमे बाणाःशिखण्डिनः६१
निकृन्तमाना मर्माणि दृढावरणभेदिनः ।
मुसला इव मे घ्नन्ति नेमे बाणाः शिखण्डिनः॥६२
वज्रदण्डसमस्पर्शा वज्रवेगदुरासदाः ।
मम प्राणानारुजन्ति नेमे बाणाः शिखण्डिनः ६३
नाशयन्तीव मे प्राणान्यमदूता इवागताः ।
गदापरिघसंस्पर्शा नेमे बाणाः शिखण्डिनः॥६४
भुजगा इव संक्रुद्धा लेलिहाना विषोल्बणाः
समाविशन्ति मर्माणि नेमे बाणाः शिखण्डिनः६५
अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः।
कृन्तन्ति मम गात्राणि माघमासे गवा इव॥६६
सर्वे ह्यपि न मे दुःखं कुर्युरन्ये नराधिपाः ।
वीरं गाण्डीवधन्वानमृते जिष्णुं कपिध्वजम् ॥६७
इति ब्रुवञ्छान्तनवो दिधक्षुरिव पाण्डवम् ।
शक्तिं भीष्मः स पार्थाय ततश्चिक्षेप भारत॥६८
तामस्य विशिखैश्छित्त्वा त्रिधा त्रिभिरपातयत् ।
पश्यतां कुरुवीराणां सर्वेषां तत्र भारत ॥ ६९
चर्माथादत्त गाङ्गेयो जातरूपपरिष्कृतम् ।
खड्गं चान्यतरप्रेप्सुर्मृत्योरग्रे जयाय वा ॥ ७०
तस्य तच्छतधा चर्म व्यधमत्सायकैस्तथा ।
रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ ७१
ततो युधिष्ठिरो राजा स्वान्यनीकान्यचोदयत् ।
अभिद्रवत गाङ्गेयं मा वोऽस्तु भयमण्वपि ॥७२
अथ ते तोमरैः प्रासैर्बाणौघैश्च समन्ततः ।
पट्टिशैश्च सुनिस्त्रिंशैर्नाराचैश्च तथा शितैः ॥ ७३
वत्सदन्तैश्च भल्लैश्च तमेकमभिदुद्रुवुः ।
सिंहनादस्ततो घोरः पाण्डवानामभूत्तदा ॥ ७४
तथैव तव पुत्राश्च नेदुर्भीष्मजयैषिणः ।
तमेकमभ्यरक्षन्त सिंहनादांश्च चक्रिरे ॥ ७५
तत्रासीत्तुमुलं युद्धं तावकानां परैः सह ।
दशमेऽहनि राजेन्द्र भीष्मार्जुनसमागमे ॥ ७६
आसीद्धोर इवावर्तो मुहूर्तमुदधेरिव ।
सैन्यानां युध्यमानानां निघ्नतामितरेतरम् ॥ ७७

अव्यवच्छिन्नाः संतताः ॥ ६१ ॥ माघमा कर्कटी प्रोक्ता तदपत्यं तु सेगवा । यथा माघमां कर्कटीं मातरं सेगवास्तदपत्यानि कृन्तन्ति उदरस्थान्यपत्यानि पृष्ठं विदार्य बहिर्निर्गच्छन्ति तद्वदित्यर्थः । तेन प्राणापहारिवेदनाजनकत्वं बाणानां नेदं शिखण्डिबाणेषु संभवति। तेषां मदङ्गे पुष्पतुल्यत्वात् ॥ ६६॥ अग्रे तेषाम् । मृत्योरिति चतुर्थ्यर्थे षष्ठी । मृत्यवे इत्यर्थः ॥ ७० ॥

असौम्यरूपा पृथिवी शोणिताक्ताऽभवत्तदा ।
समं च विषमं चैव न प्राज्ञायत किंचन ॥ ७८
योधानामयुतं हत्वा तस्मिन्स दशमेऽहनि ।
अतिष्ठदाहवे भीष्मो भिद्यमानेषु मर्मसु ॥ ७९
ततः सेनामुखे तस्मिन्स्थितः पार्थो धनुर्धरः ।
मध्येन कुरुसैन्यानां द्रावयामास वाहिनीम् ॥ ८०
'तत्राद्भुतमपश्याम पाण्डवानां पराक्रमम् ।
द्रावयामासुरिषुभिः सर्वान्भीष्मपदानुगान् ॥' ८१
वयं श्वेतहयाद्भीताः कुन्तीपुत्राद्धनञ्जयात् ।
पीड्यमानाः शितैः शस्त्रैः प्राद्रवाम रणे तदा ॥ ८२
'पाण्डवैः पञ्चभिः सार्धं सात्यकेन च धन्विना ।
धृष्टद्युम्नमुखैः सर्वैः पाञ्चालैश्च समन्ततः ॥ ८३
भिद्यमानाः शरैस्तीक्ष्णैः सर्वे कार्ष्णिपुरोगमैः ।
द्रोणद्रौणिकृपैः सार्धं सर्वे शल्यशलादयः ।
तावकाः समरे राजञ्जहुर्भीष्मं महामृधे ॥' ८४
सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ८५
साल्वाश्रयास्त्रिगर्ताश्च अम्बष्ठाः केकयैः सह ।
द्वादशैते जनपदाः शरार्ता व्रणपीडिताः ।
संग्रामे प्रजहुर्भीष्मं युध्यमानाः किरीटिना ॥ ८६
ततस्तमेकं बहवः परिवार्य समन्ततः ।
परिकाल्य कुरून्सर्वाञ्शरवर्षैरवाकिरन् ॥ ८७
निपातयत गृह्णीत युध्यध्वमवकृन्तत ।
इत्यासीत्तुमुलः शब्दो राजन्भीष्मरथं प्रति ॥ ८८
निहत्य समरे राजञ्शतशोऽथ सहस्रशः ।
न तस्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम् ॥ ८९
एवंभूतस्तव पिता शरैर्विशकलीकृतः ।
शिताग्रैः फल्गुनेनाजौ प्राक्शिराः प्रापतद्रथात् ॥
किंचिच्छेषे दिनकरे पुत्राणां तव पश्यताम् ।
हाहेति दिवि देवानां पार्थिवानां च भारत ॥ ९१
पतमाने रथाद्भीष्मे बभूव सुमहास्वनः ।
संपतन्तमभिप्रेक्ष्य महात्मानं पितामहम् ॥ ९२
सह भीष्मेण सर्वेषां प्रापतन्हृदयानि नः ।
स पपात महाबाहुर्वसुधामनुनादयन् ॥ ९३
इन्द्रध्वज इवोत्सृष्टः केतुः सर्वधनुष्मताम् ।
धरणीं न स पस्पर्श शरसङ्घैः समावृतः ॥ ९४
शरतल्पे महेष्वासं शयानं पुरुषर्षभम् ।
रथात्प्रपतितं चैनं दिव्यो भावः समाविशत् ॥ ९५
अभ्यवर्षच्च पर्जन्यः प्राकम्पत च मेदिनी ।
पतन्स ददृशे चापि दक्षिणेन दिवाकरम् ॥ ९६
संज्ञां चोपालभद्वीरः कालं संचिन्त्य भारत ।
अन्तरिक्षे च शुश्राव दिव्या वाचः समन्ततः ॥ ९७
कथं महात्मा गाङ्गेयः सर्वशस्त्रभृतां वरः ।
कालकर्ता नरव्याघ्रः संप्राप्ते दक्षिणायने ॥ ९८
स्थितोऽसीति च गाङ्गेयस्तच्छ्रुत्वा वाक्यमब्रवीत् ।
धारयिष्याम्यहं प्राणान्पतितोऽपि महीतले ॥ ९९
उत्तरायणमन्विच्छन्सुगतिप्रतिकाङ्क्षया ।
तस्य तन्मतमाज्ञाय गङ्गा हिमवतः सुता ॥ १००
महर्षीन्हंसरूपेण प्रेषयामास तत्र वै ।
ततस्तं प्रति ते हंसास्त्वरिता मानसौकसः ॥ १०१
आजग्मुः सहिता द्रष्टुं भीष्मं कुरुपितामहम् ।
यत्र शेते नरश्रेष्ठः शरतल्पे पितामहः ॥ १०२
ते तु भीष्मं समासाद्य ऋषयो हंसरूपिणः ।
अपश्यञ्छरतल्पस्थं भीष्मं कुरुकुलोद्वहम् ॥ १०३
ते तं दृष्ट्वा महात्मानं कृत्वा चापि प्रदक्षिणम् ।
गाङ्गेयं भरतश्रेष्ठं दक्षिणेन च भास्करम् ॥ १०४
इतरेतरमामन्त्र्य प्राहुस्तत्र मनीषिणः ।
भीष्मः कथं महात्मा सन्संस्थाता दक्षिणायने ॥
इत्युक्त्वा प्रस्थिता हंसा दक्षिणामभितो दिशम् ।
संप्रेक्ष्य वै महाबुद्धिश्चिन्तयित्वा च भारत ॥ १०६
तानब्रवीच्छान्तनवो नाहं गन्ता कथंचन ।
दक्षिणावर्त आदित्ये एतन्मे मनसि स्थितम् ॥ १०७
गमिष्यामि स्वकं स्थानमासीद्यन्मे पुरातनम् ।
उदगायन आदित्ये हंसाः सत्यं ब्रवीमि वः ॥ १०८
धारयिष्याम्यहं प्राणानुत्तरायणकाङ्क्षया ।
प्राणानां च समुत्सर्गे ऐश्वर्यं नियतं मम ॥ १०९

---

प्राणपीडिता इति क. घ. पाठः ॥ ८६ ॥ कालं मृत्युम् ॥ ९७ ॥ दक्षिणेन दक्षिणमार्गस्थं भास्करं च दृष्ट्वेत्यन्वयः ॥ १०४ ॥ संस्थाता मरिष्यति ॥ १०५ ॥ ऐश्वर्यं स्वसामर्थ्यं स्वच्छन्दमृत्युत्वात् ॥ १०९ ॥ एकोनविंशाधिकशततमोऽध्यायः ॥ ११९ ॥

तस्मात्प्राणान्धारयिष्ये मुमूर्षुरुदगायने ।
यश्च दत्तो वरो मह्यं पित्रा तेन महात्मना ॥ ११०
छन्दतस्ते भवेन्मृत्युरिति तत्सत्यमस्तु मे ।
धारयिष्ये ततः प्राणानुत्सर्गे नियते सति ॥१११
इत्युक्त्वा तांस्तदा हंसान्स शेते शरतल्पगः ।
एवं कुरूणां पतिते शृङ्गे भीष्मे महौजसि ॥११२
पाण्डवाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे ।
तस्मिन्हते महासत्वे भरतानां पितामहे ॥ ११३
न किंचित्प्रत्यपद्यन्त पुत्रास्ते भरतर्षभ ।
संमोहश्चैव तुमुलः कुरूणामभवत्तदा ॥ ११४
कृपदुर्योधनमुखा निःश्वस्य रुरुदुस्ततः ।
विषादाच्च चिरं कालमतिष्ठन्विगतेन्द्रियाः ॥११५
दध्युश्चैव महाराज न युद्धे दधिरे मनः ।
ऊरुग्राहगृहीताश्च नाभ्यधावन्त पाण्डवान् ११६
अवध्ये शन्तनोः पुत्रे हते भीष्मे महौजसि ।
'दुःखार्तास्ते ततो राजन्कुरूणां पतयोऽभवन् ।'
अभावः सहसा राजन्कुरुराजस्य तर्कितः ॥११७
हतप्रवीरास्तु वयं निकृत्ताश्च शितैः शरैः ।
कर्तव्यं नाभिजानीमो निर्जिताः सव्यसाचिना ॥
पाण्डवाश्च जयं लब्ध्वा परत्र च परां गतिम् ।
सर्वे दध्मुर्महाशङ्खाञ्शूराः परिघबाहवः ॥ ११९
सोमकाश्च सपाञ्चालाः प्राहृष्यन्त जनेश्वर ।
ततस्तूर्यसहस्रेषु नदत्सु स महाबलः ॥ १२०
आस्फोटयामास भृशं भीमसेनो ननाद च ।
सेनयोरुभयोश्चापि गाङ्गेये निहते विभौ ॥ १२१
संन्यस्य वीराः शस्त्राणि प्राध्यायन्त समन्ततः ।
प्राक्रोशन्प्राद्रवंश्चान्ये जग्मुर्मोहं तथाऽपरे ॥१२२
क्षत्रं चान्येऽभ्यनिन्दन्त भीष्मं चान्येऽभ्यपूजयन् ।
ऋषयः पितरश्चैव प्रशशंसुर्महाव्रतम् ॥ १२३
भरतानां च ये पूर्वे ते चैनं प्रशशंसिरे ।
महोपनिषदं चैव योगमास्थाय वीर्यवान् ॥१२४
जपञ्शान्तनवो धीमान्कालाकाङ्क्षी स्थितोऽभवत्

॥ इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि दशमदिवसयुद्धे एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

## विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

कुरुपाण्डवैरन्यै राजभिश्च भीष्माभिवादनम् ॥ १ ॥ अर्जुनेन भीष्माय बाणमयोपधानसमर्पणम् ॥ २ ॥

धृतराष्ट्र उवाच ।
कथमासंस्तदा योधा हीना भीष्मेण सञ्जय ।
बलिना देवकल्पेन कौमारब्रह्मचारिणा ॥ १
तदैव निहतान्मन्ये कुरूनन्यांश्च पाण्डवैः ।
न प्राहरद्यदा भीष्मो घृणित्वाद्द्रुपदात्मजम् ॥ २
ततो दुःखतरं मन्ये किमन्यत्प्रभविष्यति ।
अद्यैव निहतं श्रुत्वा पितरं मम दुर्मतेः ॥ ३
अश्मसारमयं नूनं हृदयं मम सञ्जय ।
श्रुत्वा विनिहतं भीष्मं शतधा यन्न दीर्यते ॥ ४
यदन्यन्निहतेनाजौ भीष्मेण जयमिच्छता ।
चेष्टितं कुरुसिंहेन तन्मे कथय सुव्रत ॥ ५
पुनःपुनर्न मृष्यामि हतं देवव्रतं रणे ।
न हतो जामदग्न्येन दिव्यैरस्त्रैश्च यः पुरा ॥ ६
स हतो द्रौपदेयेन पाञ्चाल्येन शिखण्डिना ।
सञ्जय उवाच ।
सायाह्ने न्यपतद्भूमौ धार्तराष्ट्रान्विषादयन् ॥ ७
पाञ्चालान्हर्षयंश्चैव भीष्मः कुरुपितामहः ।
स शेते शरतल्पस्थो मेदिनीमस्पृशंस्तदा ॥ ८
भीष्मो रथात्प्रपतितः संछिन्नो बहुभिः शरैः ।
हाहेति तुमुलः शब्दो भूतानां समपद्यत ॥ ९
सीमावृक्षे निपतिते कुरूणां समितिंजये ।
सेनयोरुभयो राजन्क्षत्रियान्भयमाविशत् ॥ १०
भीष्मं शान्तनवं दृष्ट्वा विशीर्णकवचध्वजम् ।
कुरवः पर्यवर्तन्त पाण्डवाश्च विशांपते ॥ ११
खं तमःसंवृतमभूदासीद्भानुर्गतप्रभः ।
ररास पृथिवी चैव भीष्मे शान्तनवे हते ॥ १२
अयं ब्रह्मविदां श्रेष्ठो गतिर्ब्रह्मविदां सदा ।

---
पर्यवर्तन्त परिवृत्तवन्तः ॥ ११ ॥

इत्यभाषन्त भूतानि शयानं पुरुषर्षभम् ॥ १३
अयं पितरमाज्ञाय कामार्तं शन्तनुं पुरा ।
ऊर्ध्वरेतसमात्मानं चकार पुरुषर्षभः ॥ १४
इति स्म शरतल्पस्थं भरतानां पितामहम् ।
ऋषयस्त्वभ्यभाषन्त सहिताः सिद्धचारणैः ॥ १५
हते शान्तनवे भीष्मे भरतानां पितामहे ।
न किंचित्प्रत्यपद्यन्त पुत्रास्तव हि मारिष ॥ १६
विषण्णवदनाश्चासन्हतश्रीकाश्च भारत ।
अतिष्ठन्व्रीडिताश्चैव ह्रिया युक्ता ह्यधोमुखाः ॥ १७
पाण्डवाश्च जयं लब्ध्वा संग्रामशिरसि स्थिताः ।
सर्वे दध्मुर्महाशङ्खान्हेमजालपरिष्कृतान् ॥ १८
हर्षात्तूर्यसहस्रेषु वाद्यमानेषु चानघ ।
अपश्याम महाराज भीमसेनं महाबलम् ॥ १९
विक्रीडमानं कौन्तेयं हर्षेण महता युतम् ।
निहत्य तरसा शत्रुं महाबलसमन्वितम् ॥ २०
संमोहश्चापि तुमुलः कुरूणामभवत्ततः ।
कर्णदुर्योधनौ चापि निःश्वसेतां मुहुर्मुहुः ॥ २१
तथा निपातिते भीष्मे कौरवाणां पितामहे ।
हाहाभूतमभूत्सर्वं निर्मर्यादमवर्तत ॥ २२
दृष्ट्वा च पतितं भीष्मं पुत्रो दुःशासनस्तव ।
उत्तमं जवमास्थाय द्रोणानीकमुपाद्रवत् ॥ २३
भ्रात्रा प्रस्थापितो वीरः स्वेनानीकेन दंशितः ।
प्रययौ पुरुषव्याघ्रः स्वसैन्यमभिहर्षयन् ॥ २४
तमायान्तमभिप्रेक्ष्य कुरवः पर्यवारयन् ।
दुःशासनं महाराज किमयं वक्ष्यतीति च ॥ २५
ततो द्रोणाय निहतं भीष्ममाचष्ट कौरवः ।
द्रोणस्तदाऽप्रियं श्रुत्वा मुमोह भरतर्षभ ॥ २६
स संज्ञामुपलभ्याशु भारद्वाजः प्रतापवान् ।
निवारयामास तदा स्वान्यनीकानि मारिष ॥ २७
विनिवृत्तान्कुरून्दृष्ट्वा पाण्डवापि स्वसैनिकान् ।
रथैः शीघ्राश्वसंयुक्तैः समन्तात्पर्यवारयन् ॥ २८
निवृत्तेषु च सैन्येषु पारम्पर्येण सर्वशः ।
निर्मुक्तकवचाः सर्वे भीष्ममीयुर्नराधिपाः ॥ २९
व्युपरम्य ततो युद्धाद्योधाः शतसहस्रशः ।
उपतस्थुर्महात्मानं प्रजापतिमिवामराः ॥ ३०
ते तु भीष्मं समासाद्य शयानं भरतर्षभम् ।
अभिवाद्यावतिष्ठन्त पाण्डवाः कुरुभिः सह ॥ ३१
अथ पाण्डून्कुरूंश्चैव प्रणिपत्याग्रतः स्थितान् ।
अभ्यभाषत धर्मात्मा भीष्मः शान्तनवस्तदा ३२
स्वागतं वो महाभागाः स्वागतं वो महारथाः ।
तुष्यामि दर्शनाच्चाहं युष्माकममरोपमाः ॥ ३३
अभिनन्द्य स तानेवं शिरसा लम्बताऽब्रवीत् ।
'परपार्श्वे तव सुतान्स्थितानुद्वीक्ष्य भारत ।'
शिरो मे लम्बतेऽत्यर्थमुपधानं प्रदीयताम् ॥ ३४
ततो नृपाः समाजह्रुस्तनूनि च मृदूनि च ।
उपधानानि मुख्यानि नैच्छत्तानि पितामहः ३५
अथाब्रवीन्नरव्याघ्रः प्रहसन्निव तान्नृपान् ।
नैतानि वीरशय्यासु युक्तरूपाणि पार्थिवाः ॥ ३६
ततो वीक्ष्य नरश्रेष्ठमभ्यभाषत पाण्डवम् ।
धनञ्जयं दीर्घबाहुं सर्वलोकमहारथम् ॥ ३७
धनञ्जय महाबाहो शिरो मे तात लम्बते ।
दीयतामुपधानं वै यद्युक्तमिह मन्यसे ॥ ३८
सञ्जय उवाच ।
समारोप्य महच्चापमभिवाद्य पितामहम् ।
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ३९
आज्ञापय कुरुश्रेष्ठ सर्वशस्त्रभृतां वर ।
प्रेष्योऽहं तव दुर्धर्ष क्रियतां किं पितामह ॥ ४०
तमब्रवीच्छान्तनवः शिरो मे तात लम्बते ।
'दीयतामुपधानं मे यद्युक्तमिह मन्यसे ।'
उपधानं कुरुश्रेष्ठ उपधेहि ममार्जुन ॥ ४१
वीरशय्यानुरूपं वै शीघ्रं वीर प्रयच्छ मे ।
त्वं हि पार्थ समर्थो वै श्रेष्ठः सर्वधनुष्मताम् ४२
क्षत्रधर्मस्य वेत्ता च बुद्धिसत्त्वगुणान्वितः ।
फल्गुनोऽपि तथेत्युक्त्वा व्यवसायं परंजयः ४३
गृह्यानुमन्त्र्य गाण्डीवं शरान्सन्नतपर्वणः ।
अनुमान्य महात्मानं भरतानां महारथम् ॥ ४४

व्रीडिताः व्रीडावन्तः । व्रीडा चान्यतः । ह्रीश्चाकार्यकरणात् ॥ १७ ॥ पारम्पर्येण क्रमेण ॥ २९ ॥ उपधानं उपबर्हम् ॥ ३४ ॥ इह वीरशय्यायाम् ॥ ३८ ॥ व्यवसायमुचितोद्योगम् ॥ ४३ ॥

त्रिभिस्तीक्ष्णैर्महावेगैरुदगृह्णाच्छिरः शरैः ।
अभिप्राये तु विदिते धर्मात्मा सव्यसाचिना ४५
अतुष्यद्भरतश्रेष्ठो भीष्मो धर्मार्थतत्त्ववित् ।
उपधानेन दत्तेन प्रत्यनन्दद्धनञ्जयम् ॥ ४६
प्राह सर्वान्समुद्वीक्ष्य भरतान्भारतं प्रति ।
कुन्तीपुत्रं युधां श्रेष्ठं सुहृदां प्रीतिवर्धनम् ॥ ४७
शयनस्यानुरूपं मे पाण्डवोपहितं त्वया ।
यद्यन्यथा प्रपद्येथाः शपेयं त्वामहं पुरा ॥ ४८
एवमेव महाबाहो धर्मेषु परितिष्ठता ।
स्वप्तव्यं क्षत्रियेणाजौ शरतल्पगतेन वै ॥ ४९
एवमुक्त्वा तु बीभत्सुं सर्वांस्तानब्रवीद्वचः ।
राज्ञश्च राजपुत्रांश्च पाण्डवैरभिसंवृतान् ॥ ५०
पश्यध्वमुपधानं मे पाण्डवेनाभिसन्धितम् ।
शयेयमस्यां शय्यायां यावदावर्तनं रवेः ॥ ५१
ये तदा धारयिष्यन्ति ते च प्रेक्ष्यन्ति मां नृपाः ।
दिशं वैश्रवणाक्रान्तां यदा गन्ता दिवाकरः ॥५२
नूनं सप्ताश्वयुक्तेन रथेनोत्तमतेजसा ।
रक्ष्येऽहं वै मम प्राणान्सुहृदः सुप्रियानिव ॥ ५३
परिखाः खन्यतामत्र ममावसदने नृपाः ।
उपासिष्ये विवस्वन्तमेवं शरशताचितः ।
उपारमध्वं संग्रामाद्वैरमुत्सृज्य पार्थिवाः ॥ ५४
सञ्जय उवाच ।
उपातिष्ठन्नथो वैद्याः शल्योद्धरणकोविदाः ।
सर्वोपकरणैर्युक्ताः कुशलैः साधुशिक्षिताः ॥ ५५
तान्दृष्ट्वा जाह्नवीपुत्रः प्रोवाच तनयं तव ।
दत्तदेया विसृज्यन्तां पूजयित्वा चिकित्सकाः ५६
एवंगते मयेदानीं वैद्यैः कार्यमिहास्ति किम् ।
क्षत्रधर्मे प्रशस्तां हि प्राप्तोऽस्मि परमां गतिम् ५७
नैष धर्मो महीपालाः शरतल्पगतस्य मे ।
एभिरेव शरैश्चाहं दग्धव्योऽग्नौ नराधिपाः ॥ ५८
तच्छ्रुत्वा वचनं तस्य पुत्रो दुर्योधनस्तव ।
वैद्यान्विसर्जयामास पूजयित्वा यथार्हतः ॥ ५९
ततस्ते विरथं जग्मुर्नानाजनपदेश्वराः ।
स्थितिं धर्मे परां दृष्ट्वा भीष्मस्यामिततेजसः॥ ६०
उपधानं ततो दत्त्वा पितुस्ते मनुजेश्वराः ।
सहिताः पाण्डवाः सर्वे कुरवश्च महारथाः ॥ ६१
उपगम्य महात्मानं शयानं शयने शुभे ॥ ६२
तेऽभिवाद्य ततो भीष्मं कृत्वा च त्रिःप्रदक्षिणम् ।
विधाय रक्षां भीष्मस्य सर्व एव समन्ततः ॥ ६३
वीराः स्वशिबिराण्येव ध्यायन्तः परमातुराः ।
निवेशायाभ्युपागच्छन्सायाह्ने रुधिरोक्षिताः॥ ६४
निविष्टान्पाण्डवांश्चैव प्रीयमाणान्महारथान् ।
भीष्मस्य पतनं दृष्ट्वा उपगम्य महाबलः ॥ ६५
उवाच माधवः काले धर्मपुत्रं युधिष्ठिरम् ।
दिष्ट्या जयसि कौरव्य दिष्ट्या भीष्मो निपातितः ॥
अवध्यो मानुषैरेव सत्यसन्धो महारथः ।
अथवा दैवतैः सार्धं सर्वशास्त्रस्य पारगः ॥ ६७
त्वां तु चक्षुर्हणं प्राप्य दग्धो घोरेण चक्षुषा ।
सञ्जय उवाच ।
एवमुक्तो धर्मराजः प्रत्युवाच जनार्दनम् ॥ ६८
तव प्रसादाद्विजयः क्रोधात्तव पराजयः ।
त्वं हि नः शरणं कृष्ण भक्तानामभयंकरः ॥ ६९
अनाश्चर्यो जयस्तेषां येषां त्वमसि केशव ।
रक्षिता समरे नित्यं नित्यं चापि हिते रतः ॥ ७०
सर्वथा त्वां समासाद्य नाश्चर्यमिति मे मतिः ।
सञ्जय उवाच ।
एवमुक्तः प्रत्युवाच स्मयमानो जनार्दनः ।
त्वय्येवैतद्युक्तरूपं वचनं पार्थिवोत्तम ॥ ७१

॥ इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि दशमदिवसे विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

अन्वगृह्णात् अवतष्टम्भे ॥ ४५ ॥ उपहितं उपधानीयं दत्तम् ॥ ४८ ॥ विमोक्ष्येऽहं तदा प्राणान् इति झ. पाठः ॥ ५३ ॥ ममावसदने मन्निवासस्थाने ॥ ५४ ॥ चक्षुषा हन्तीति तथा तम् । दृष्टिमात्रेण हननक्षमम् ॥ ६८ ॥ विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

## एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

तृषार्तेन भीष्मेण पानीययाचनम् ॥ १ ॥ राजभिः कलशेनानीते जले भीष्मेण तन्निन्दनपूर्वकमर्जुनंप्रति याचनम् ॥ २ ॥ अर्जुनेन पर्जन्यास्त्रेण भूमिंभित्त्वोत्थापितसलिलधारया भीष्मस्य तृष्णाशमनम् ॥ ३ ॥ भीष्मेण दुर्योधनंप्रति अर्जुनप्रशंसनपूर्वकं पाण्डवैः सह शमोपदेशः ॥ ४ ॥

सञ्जय उवाच ।
व्युष्टायां तु महाराज शर्वर्यां सर्वपार्थिवाः ।
पाण्डवा धार्तराष्ट्राश्च उपातिष्ठन्पितामहम् ॥ १
तं वीरशयने वीरं शयानं कुरुसत्तम ।
अभिवाद्योपतस्थुर्वै क्षत्रियाः क्षत्रियर्षभम् ॥ २
कन्याश्चन्दनचूर्णैश्च लाजैर्माल्यैश्च सर्वशः ।
अवाकिरञ्छान्तनवं तत्र गत्वा सहस्रशः ॥ ३
स्त्रियो वृद्धास्तथा बालाः प्रेक्षकाश्च पृथग्जनाः ।
समभ्ययुः शान्तनवं भूतानीव तमोनुदम् ॥ ४
तूर्याणि शतसङ्ख्यानि तथैव नटनर्तकाः ।
शिल्पिनश्च तथाऽऽजग्मुः कुरुवृद्धं पितामहम् ॥ ५
उपागम्य च राजेन्द्र सन्नाहान्विप्रमुच्य ते ।
आयुधानि च निक्षिप्य सहिताः कुरुपाण्डवाः ॥ ६
अन्वासन्त दुराधर्षं देवव्रतमरिंदमम् ।
अन्योन्यं प्रीतिमन्तस्ते यथापूर्वं यथावयः ॥ ७
सा पार्थिवशताकीर्णा समितिर्भीष्मशोभिता ।
शुशुभे भारती दीप्ता दिवीवादित्यमण्डलम् ॥ ८
विबभौ च नृपाणां सा गङ्गासुतमुपासताम् ।
देवानामिव देवेशं पितामहमुपासताम् ॥ ९
भीष्मस्तु वेदनां धैर्यान्निगृह्य भरतर्षभ ।
अभितप्तः शरैश्चैव नातिहृष्टमनाऽब्रवीत् ॥ १०
शराभितप्तकायो हि शस्त्रसंपातमूर्च्छितः ।
पानीयमिति संप्रेक्ष्य राज्ञस्तान्प्रत्यभाषत ॥ ११
ततस्ते क्षत्रिया राजन्नुपाजह्रुः समन्ततः ।
भक्ष्यानुच्चावचात्राजन्वारिकुम्भांश्च शीतलान् १२
उपानीतं तु पानीयं दृष्ट्वा शान्तनवोऽब्रवीत् ।
न मेऽद्य सेवितुं योग्या भोगाः केवलमानुषाः ॥ १३
अपक्रान्तो मनुष्येभ्यः शरशय्यां गतो ह्यहम् ।
प्रतीक्षमाणस्तिष्ठामि निवृत्तिं शशिसूर्ययोः ॥ १४
‘सञ्जय उवाच ।
एवमुक्त्वा तदोवाच भीष्मः शरशतैश्चितः ।
पयः पास्यामि गोपाला गोमयं न तु गोमयम् ।
गोमयेनाग्निवर्णेन गोमयं न तु गोमयम् ॥’ १५
एवमुक्त्वा शान्तनवो निन्दन्वाक्येन पार्थिवान् ।
अर्जुनं द्रष्टुमिच्छामीत्यभ्यभाषत भारत ॥ १६
अथोपेत्य महाबाहुरभिवाद्य पितामहम् ।
अतिष्ठत्प्राञ्जलिः प्रह्वः किं करोमीति चाब्रवीत् १७
तं दृष्ट्वा पाण्डवं राजन्नभिवाद्याग्रतः स्थितम् ।
अभ्यभाषत धर्मात्मा भीष्मः प्रीतो धनंजयम् १८
दह्यतीव शरीरं मे संवृतस्य तवेषुभिः ।
मर्माणि परिदूयन्ते मुखं च परिशुष्यति ॥ १९
वेदनार्तशरीरस्य प्रयच्छापो ममार्जुन ।
त्वं हि शक्तो महेष्वास दातुमापो यथाविधि २०
सञ्जय उवाच ।
अर्जुनस्तु तथेत्युक्त्वा रथमारुह्य वीर्यवान् ।
अधिज्यं बलवत्कृत्वा गाण्डीवं व्याक्षिपद्धनुः २१
तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः ।
वित्रेसुः सर्वभूतानि सर्वे श्रुत्वा च पार्थिवाः २२
ततः प्रदक्षिणं कृत्वा रथेन रथिनां वरः ।
शयानं भरतश्रेष्ठं सर्वशस्त्रभृतां वरम् ॥ २३
संधाय च शरं दीप्तमभिमन्त्र्य स पाण्डवः ।
पर्जन्यास्त्रेण संयोज्य सर्वलोकस्य पश्यतः ॥ २४
अविध्यत्पृथिवीं पार्थः पार्श्वे भीष्मस्य दक्षिणे ।
उत्पपात ततो धारा वारिणो विमला शुभा २५
शीतस्यामृतकल्पस्य दिव्यगन्धरसस्य च ।
अतर्पयत्ततः पार्थः शीतया जलधारया ॥ २६
भीष्मं कुरूणामृषभं दिव्यं दिव्यपराक्रमम् ।
कर्मणा तेन पार्थस्य शक्रस्येव विकुर्वतः ॥ २७
विस्मयं परमं जग्मुस्ततस्ते वसुधाधिपाः ।
तत्कर्म प्रेक्ष्य बीभत्सोरतिमानुषविक्रमम् ॥ २८

पृथग्जनाः प्राकृता जनाः । भूतानि प्राणिनो गन्धर्वादीनि वा। तमोनुदं सूर्यम् ॥४॥ परिदूयन्ते परितप्यन्ते ॥१९॥ विकुर्वतो

संप्रावेपन्त कुरवो गावः शीतार्दिता इव ।
विस्मयाच्चोत्तरीयाणि व्याविध्यन्सर्वतो नृपाः २९
शङ्खदुन्दुभिनिर्घोषस्तुमुलः सर्वतोऽभवत् ।
तृप्तः शान्तनवश्चापि राजन्बीभत्सुमब्रवीत् ॥ ३०
सर्वपार्थिववीराणां सन्निधौ पूजयन्निव ।
नैतच्चित्रं महाबाहो त्वयि कौरवनन्दन ॥ ३१
कथितो नारदेनासि पूर्वर्षिरमितद्युते ।
वासुदेवसहायस्त्वं महत्कर्म करिष्यसि ॥ ३२
यन्नोत्सहति देवेन्द्रः सह देवैरपि ध्रुवम् ।
विदुस्त्वां निधनं पार्थ सर्वक्षत्रस्य तद्विदः ॥३३
धनुर्धराणामेकस्त्वं पृथिव्यां प्रवरो नृषु ॥ ३४
मनुष्या जगति श्रेष्ठाः पक्षिणां पतगेश्वरः ।
सरितां सागरः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ॥ ३५
आदित्यस्तेजसां श्रेष्ठो गिरीणां हिमवान्वरः ।
जातीनां ब्राह्मणः श्रेष्ठः श्रेष्ठस्त्वमसि धन्विनां ३६
न वै श्रुतं धार्तराष्ट्रेण वाक्यं
मयोच्यमानं विदुरेण चैव ।
द्रोणेन रामेण जनार्दनेन
मुहुर्मुहुः सञ्जयेनापि चोक्तम् ॥ ३७
परीतबुद्धिर्हि विसंज्ञकल्पो
दुर्योधनो न च तच्छ्रद्दधाति ।
स शेष्यते वै निहतश्चिराय
शास्त्रातिगो भीमबलाभिभूतः ॥ ३८

सञ्जय उवाच ।

एतच्छ्रुत्वा तद्वचः कौरवेन्द्रो
दुर्योधनो दीनमना बभूव ।
तमब्रवीच्छान्तनवोऽभिवीक्ष्य
निबोध राजन्भव वीतमन्युः ॥ ३९
दृष्टं दुर्योधनैतत्ते यथा पार्थेन धीमता ।
जलस्य धारा जनिता शीतस्यामृतगन्धिनः॥४०
एतस्य कर्ता लोकेऽस्मिन्नान्यः कश्चन विद्यते ।
आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम् ॥ ४१
ऐन्द्रं पाशुपतं ब्राह्मं पारमेष्ठ्यं प्रजापतेः ।
धातुस्त्वष्टुश्च सवितुर्वैवस्वतमथापि वा ॥ ४२
सर्वस्मिन्मानुषे लोके वेत्त्येको हि धनञ्जयः ।
कृष्णो वा देवकीपुत्रो नान्यो वेदेह कश्चन ॥४३
अशक्यः पाण्डवस्तात युद्धे जेतुं कथंचन ।
अमानुषाणि कर्माणि यस्यैतानि महात्मनः ॥४४
तेन सत्त्ववता सङ्ख्ये शूरेणाहवशोभिना ।
जिष्णुना समरे राजन्संधिर्भवतु मा चिरम् ॥४५
यावत्कृष्णो महाबाहुः स्वाधीनः कुरुसत्तम ।
तावत्पार्थेन शूरेण संधिस्ते तात युज्यताम् ॥४६
यावन्न ते चमूः सर्वाः शरैः सन्नतपर्वभिः ।
नाशयत्यर्जुनस्तावत्संधिस्ते तात युज्यताम् ॥४७
यावत्तिष्ठन्ति समरे हतशेषाः सहोदराः ।
नृपाश्च बहवो राजंस्तावत्संधिः प्रयुज्यताम् ॥४८
न निर्दहति ते यावत्क्रोधदीप्तेक्षणश्चमूम् ।
युधिष्ठिरो रणे तावत्संधिस्ते तात युज्यताम् ४९
नकुलः सहदेवश्च भीमसेनश्च पाण्डवः ।
यावच्चमूं महाराज नाशयन्ति न सर्वशः ॥ ५०
तावत्ते पाण्डवैर्वीरैः सौहार्दं मम रोचते ।
युद्धं मदन्तमेवास्तु तात संशाम्य पाण्डवैः ॥५१
एतत्ते रोचतां वाक्यं यदुक्तोऽसि मयाऽनघ ।
एतत्क्षममहं मन्ये तव चैव कुलस्य च ॥ ५२
त्यक्त्वा मन्युं व्युपशाम्यस्व पार्थैः
पर्याप्तमेतद्यत्कृतं फल्गुनेन ।
भीष्मस्यान्तादस्तु वः सौहृदं च
जीवन्तु शेषाः साधु राजन्प्रसीद ॥ ५३
राज्यस्यार्धं दीयतां पाण्डवाना-
मिन्द्रप्रस्थं धर्मराजोऽभियातु ।
मा मित्रध्रुक्पार्थिवानां जघन्यः
पापां कीर्तिं प्राप्स्यसे कौरवेन्द्र ॥ ५४
ममावसानाच्छान्तिरस्तु प्रजानां
संगच्छन्तां पाण्डवाः प्रीतिमन्तः ।
पिता पुत्रं मातुलं भागिनेयो
भ्राता चैव भ्रातरं प्रैतु राजन् ॥ ५५

विशेषेण कुर्वतः ॥ २७ ॥ व्याविध्यन्भ्रामितवन्तः ॥ २९ ॥ निधनं निधनहेतुः । तद्विदो देवरहस्यज्ञाः ॥३३॥ जगति भूलोके ॥ ३५ ॥ क्षेममिति पाठे हितं ॥ ५२ ॥ फल्गुनेन यत्कृतं एतदेतावदेव पर्याप्तमस्तु । चशब्दादेतावतां भ्रातॄणामन्तादपीति

न चेदेवं प्राप्तकालं वचो मे
　मोहाविष्टः प्रतिपत्स्यस्यबुद्ध्या ।
तप्स्यस्यन्ते एतदन्ताः स्थ सर्वे
　सत्यामेतां भारतीमीरयामि ॥ ५६
सञ्जय उवाच ।
एतद्वाक्यं सौहृदादापगेयो
　मध्ये राज्ञां भारतं श्रावयित्वा ।
तूष्णीमासीच्छल्यसंतप्तमर्मा
　योज्यात्मानं वेदनां संनियम्य ॥ ५७
धर्मार्थसहितं वाक्यं श्रुत्वा हितमनामयम् ।
नारोचयत पुत्रस्ते मुमूर्षुरिव भेषजम् ॥ ५८

॥ इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

## द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

अपगतेषु राजसु कर्णेन रहसि भीष्ममेत्य तदभिवादनम् ॥ १ ॥ भीष्मेण कर्णं प्रति तस्य कुन्तीसुतत्वोक्त्या पाण्डवैः सह संगमचोदना ॥ २ ॥ कर्णेन सयुक्तिकं पाण्डवैः संगमस्य दुष्करत्वमभिधाय भीष्मक्षमापनपूर्वकं स्वावासगमनम् ॥ ३ ॥

सञ्जय उवाच ।
ततस्ते पार्थिवाः सर्वे जग्मुः स्वानालयान्पुनः ।
तूष्णींभूते महाराज भीष्मे शन्तनुनन्दने ॥ १
श्रुत्वा तु निहतं भीष्मं राधेयः पुरुषर्षभः ।
ईषदागतसंत्रासस्त्वरयोपजगाम ह ॥ २
स ददर्श महात्मानं शरतल्पगतं तदा ।
जन्मशय्यागतं वीरं कार्तिकेयमिव प्रभुम् ॥ ३
निमीलिताक्षं तं वीरं साश्रुकण्ठस्तदा वृषा ।
अभ्येत्य पादयोस्तस्य निपपात महाद्युतिः ॥ ४
राधेयोऽहं कुरुश्रेष्ठ नित्यमक्षिगतस्तव ।
द्वेष्योऽत्यन्तमनागाः सन्निति चैनमुवाच ह ॥५
तच्छ्रुत्वा कुरुवृद्धो हि शनैः संवृतलोचनः ।
रहितं धिष्ण्यमालोक्य समुत्सार्य च रक्षिणः॥ ६
पितेव पुत्रं गाङ्गेयः परिरभ्यैकपाणिना ।
शनैरुद्वीक्ष्य सस्नेहमिदं वचनमब्रवीत् ॥ ७
न विप्रियं ममैवेह यत्स्पर्धेथा मया सह ।
यदि मां नाधिगच्छेथा न ते श्रेयो ध्रुवं भवेत्॥८
कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता ।
सूर्यजस्त्वं महाबाहो विदितो नारदान्मया ॥ ९
कृष्णद्वैपायनाच्चैव तेजसा च न संशयः ।
न च द्वेषोस्ति मे तात त्वयि सत्यं ब्रवीमि ते ॥ १०
तेजोवधनिमित्तं तु परुषं त्वांहमब्रुवम् ।
अकस्मात्पाण्डवान्हि त्वं द्विषसीति मतिर्मम ॥११
येनासि बहुशो राज्ञा चोदितः सूतनन्दन ।
जातोऽसि धर्मलोपेन ततस्ते बुद्धिरीदृशी ॥ १२
नीचाश्रयान्मत्सरेण द्वेषिणी गुणिनामपि ।
तेनासि बहुशो रूक्षं श्रावितः कुरुसंसदि ॥ १३
जानामि समरे वीर्यं शत्रुभिर्दुःसहं भुवि ।
ब्रह्मण्यतां च शौर्यं च दाने च परमां स्थितिम् १४
न त्वया सदृशः कश्चित्पुरुषेष्वमरोपम ।
कुलभेदभयाच्चाहं सदा परुषमुक्तवान् ॥ १५
इष्वस्त्रे भारसंधाने लाघवेऽस्त्रबले तथा ।
सदृशः फल्गुनेनासि कृष्णेन च महात्मना ॥ १६
कर्ण काशिपुरं गत्वा त्वयैकेन धनुष्मता ।
कन्यार्थे कुरुराजस्य राजानो मृदिता युधि ॥ १७
तथा च बलवान्राजा जरासन्धो दुरासदः ।
समरे समरश्लाघिन्न त्वया सदृशोऽभवत् ॥ १८
ब्रह्मण्यः सत्त्वयोधी च तेजसा च बलेन च ।
देवगर्भसमः सङ्ख्ये मनुष्यैरधिको युधि ॥ १९
व्यपनीतोऽद्य मन्युर्मे यस्त्वां प्रति पुरा कृतः ।

---

॥ ५३ ॥ योज्य योगधारणायुक्तं कृत्वा ॥ ५७ ॥ धर्मार्थेति श्लोकः झ. पुस्तक एवास्ति ॥ ५८ ॥ एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

जन्मशय्यागतं जन्मकाले शरशय्यागतम् । शरजन्मत्वात् ॥ ३ ॥ येनासीति सार्धश्लोकः झ. पुस्तक एवास्ति ॥ १२ ॥ पुरुषेषु मानुषेषु ॥ १५ ॥ त्वया सदृशो नाभवत् त्वया जित इत्यर्थः । इयं कथा राजधर्मे । अनेन नागायुतबलत्वं कर्णस्य सूचितम् ॥ १८ ॥ युधि संप्रहारे ॥ १९ ॥

दैवं पुरुषकारेण न शक्यमतिवर्तितुम् ॥ २०
सोदर्याः पाण्डवा वीरा भ्रातरस्तेऽरिसूदन ।
संगच्छ तैर्महाबाहो मम चेदिच्छसि प्रियम् ॥ २१
मया भवतु निर्वृत्तं वैरमादित्यनन्दन ।
पृथिव्यां सर्वराजानो भवन्त्वद्य निरामयाः ॥ २२
कर्ण उवाच ।
जानाम्येव महाबाहो सर्वमेतन्न संशयः ।
यथा वदसि मे भीष्म कौन्तेयोऽहं न सूतजः ॥२३
अवकीर्णस्त्वहं कुन्त्या सूतेन च विवर्धितः ।
भुक्त्वा दुर्योधनैश्वर्यं न मिथ्या कर्तुमुत्सहे ॥ २४
वसुदेवसुतो यद्वत्पाण्डवाय दृढव्रतः ।
वसु चैव शरीरं च पुत्रदारं तथा यशः ॥ २५
सर्वं दुर्योधनस्यार्थे त्यक्तं मे भूरिदक्षिण ।
मा चैतद्व्याधिमरणं क्षत्रं स्यादिति कौरव ॥ २६
कोपिताः पाण्डवा नित्यं मयाऽश्रित्य सुयोधनम् ।
अवश्यभावी ह्यर्थोऽयं यो न शक्यो निवर्तितुम्२७
दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् ।
पृथिवीक्षयशंसीनि निमित्तानि पितामह ॥ २८
भवद्भिरुपलब्धानि कथितानि च संसदि ।
पाण्डवा वासुदेवश्च विदिता मम सर्वशः ॥ २९
अजेयाः पुरुषैरन्यैरिति तांश्चोत्सहामहे ।
विजयिष्ये रणे पाण्डूनिति मे निश्चितं मनः ॥ ३०
न च शक्यमवस्रष्टुं वैरमेतत्सुदारुणम् ।
धनंजयेन योत्स्येऽहं स्वधर्मप्रीतमानसः ॥ ३१
अनुजानीष्व मां तात युद्धाय कृतनिश्चयम् ।
अनुज्ञातस्त्वया वीर युध्येयमिति मे मतिः ॥ ३२
दुरुक्तं विप्रतीपं वा रभसाच्चापलात्तथा ।
यन्मयेह कृतं किंचित्तन्मे त्वं क्षन्तुमर्हसि ॥ ३३
भीष्म उवाच ।
न चेच्छक्यमवस्रष्टुं वैरमेतत्सुदारुणम् ।
अनुजानामि कर्ण त्वां युध्यस्व स्वर्गकाम्यया ॥३४
निर्मन्युर्गतसंरम्भः कृतकर्मा रणे स ह ।
यथाशक्ति यथोत्साहं सतां वृत्तेषु वृत्तवान् ॥ ३५
अहं त्वामनुजानामि यदिच्छसि तदाप्नुहि ।
क्षत्रधर्मजिताँल्लोकानवाप्स्यसि धनंजयात् ॥ ३६
युध्यस्व निरहंकारो बलवीर्यव्यपाश्रयः ।
धर्म्याद्धि युद्धादधिकं क्षत्रियस्य न विद्यते ॥ ३७
प्रशमे हि कृतो यत्नः सुमहान्सुचिरं मया ।
न चैव शकितः कर्तुं यतो धर्मस्ततो जयः ॥ ३८
सञ्जय उवाच ।
इत्युक्तवति गाङ्गेये अभिवाद्योपमन्त्र्य च ।
राधेयो रथमारुह्य प्रायात्तव सुतं प्रति ॥ ३९
'वैशंपायन उवाच ।
इत्येतद्बहुवृत्तान्तं भीष्मपर्वाखिलं मया ।
शृण्वते ते महाराज प्रोक्तं पापहरं शुभम् ॥ ४०
यः श्रावयेत्सदा राजन्ब्राह्मणान्वेदपारगान् ।
श्रद्धावन्तश्च ये चापि श्रोष्यन्ति मनुजा भुवि ॥४१
विधूय सर्वपापानि विहायान्ते कलेवरम् ।
प्रयान्ति तत्पदं विष्णोर्यत्प्राप्य न निवर्तते ॥ ४२
तस्मात्सर्वप्रयत्नेन भारतं भरतर्षभ ।
शृणुयात्सिद्धिमन्विच्छन्निह वामुत्र मानवः ॥ ४३
भोजनं भोजयेद्विप्रान्गन्धमाल्यैरलङ्कृतान् ।
भीष्मपर्वणि राजेन्द्र दद्यात्पानीयमुत्तमम् ॥' ४४

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि भीष्मवधपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः १२२

समाप्तं भीष्मवधपर्व भीष्मपर्व च ।

अस्यानन्तरं द्रोणपर्व भविष्यति ।
तस्यायमाद्यः श्लोकः

तमप्रतिमसत्त्वौजोबलवीर्यपराक्रमम् ।
हतं देवव्रतं श्रुत्वा पाञ्चाल्येन शिखण्डिना ॥ १

निर्वृत्तं समाप्तम् ॥ २२ ॥ अवकीर्णस्त्यक्तः ॥ २४ ॥ निवर्तितुं निवर्तयितुम् ॥ २८ ॥ पाण्डूनर्जुनं विहाय चतुरः । अर्जुनेन योत्स्ये अन्यान्विजेष्ये इति भावः ॥ ३० ॥ विप्रतीपं विरुद्धम् ॥ ३३ ॥ द्वाविंशाधिकशततमोऽध्यायः ॥ १२२ ॥

इदं भीष्मपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८२९ सन १९०७.

# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

THE SOUTH INDIAN TEXTS,

With footnotes and Readings.

## DRONAPARVA VII.

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam.

*PRINTED AT THE*

*Javaji Dadaji's "Nirnaya-sagar" Press.*

**BOMBAY.**

1907.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## द्रोणपर्व ७.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८२९ प्लवंगनामसंवत्सरे ।

द्रोणपर्व.



श्रीः ।

# श्रीमन्महाभारतम् ।



## द्रोणपर्व ७ ।

## ( अथ द्रोणाभिषेकपर्व ॥ १ ॥ )

### प्रथमोऽध्यायः ॥ १ ॥

धृतराष्ट्रेण सञ्जयंप्रति भीष्मपातानन्तरीयकदुर्योधनादिवृत्तान्तप्रश्नः ॥ १ ॥ सञ्जयेन योधानां शरणत्वेन कर्णाह्वाने कथिते धृतराष्ट्रस्य कर्णवृत्तान्तप्रश्नः ॥ २ ॥

श्रीवेदव्यासाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १
जनमेजय उवाच ।
तमप्रतिमसत्त्वौजोबलवीर्यपराक्रमम् ।
हतं देवव्रतं श्रुत्वा पाञ्चाल्येन शिखण्डिना ॥१
धृतराष्ट्रस्ततो राजा शोकव्याकुललोचनः ।
किमचेष्टत विप्रर्षे हते पितरि वीर्यवान् ॥ २
यस्य पुत्रो हि भगवान्भीष्मद्रोणमुखै रथैः ।
पराजित्य महेष्वासान्पाण्डवान्राज्यमिच्छति ॥३
तस्मिन्हते तु भगवन्केतौ सर्वधनुष्मताम् ।
यदचेष्टत कौरव्यस्तन्मे ब्रूहि तपोधन ॥ ४
वैशंपायन उवाच ।
निहतं पितरं श्रुत्वा धृतराष्ट्रो जनाधिपः ।
लेभे न शान्तिं कौरव्यश्चिन्ताशोकपरायणः ॥५
तस्य चिन्तयतो दुःखमनिशं पार्थिवस्य तत् ।
विशुद्धात्मा पुनर्गावल्गणिस्तदा ॥ ६
ासप्रसादाद्विज्ञाय सर्वं वृत्तान्तमुत्तमम् ।
ाकानां च सर्वेषां सेनयोरुभयोस्तदा ॥ ७
शिबिरात्सञ्जयं प्राप्तं निशि नागाह्वयं पुरम् ।
आम्बिकेयो महाराज धृतराष्ट्रोऽन्वपृच्छत ॥ ८
श्रुत्वा भीष्मस्य निधनमप्रहृष्टमना भृशम् ।
पुत्राणां जयमाकाङ्क्षन्विललापातुरो यथा ॥ ९
धृतराष्ट्र उवाच ।
संशोच्य तु महात्मानं भीष्मं भीमपराक्रमम् ।
किमकार्षुः परं तात कुरवः कालचोदिताः ॥ १०
तस्मिन्विनिहते शूरे दुराधर्षे महात्मनि ।
किं नु स्वित्कुरवोऽकार्षुर्निमग्नाः शोकसागरे ॥ ११
तदुदीर्णं महत्सैन्यं त्रैलोक्यस्यापि सञ्जय ।
भयमुत्पादयेत्तीव्रं पाण्डवानां महात्मनाम् ॥१२
को हि दौर्योधने सैन्ये पुमानासीन्महारथः ।
यं प्राप्य समरे वीरा न त्रस्यन्ति महाभये ॥१३
देवव्रते तु निहते कुरूणामृषभे तदा ।
किमकार्षुर्नृपतयस्तन्ममाचक्ष्व सञ्जय ॥ १४
सञ्जय उवाच ।
शृणु राजन्नेकमना वचनं ब्रुवतो मम ।
यत्ते पुत्रास्तदाकार्षुर्हते देवव्रते मृधे ॥ १५
निहते तु तदा भीष्मे राजन्सत्यपराक्रमे ।

ाल धैर्यं महत्यपि दुःखकारणे वैकल्यराहित्यम् । ओजो ाप्तं बलम् । बलं शरीरदार्ढ्यम् । वीर्यमुत्साहादिहेतुः । पराक्रमः पराभिभवसामर्थ्यम् ॥ १ ॥ चिन्ता ध्येयविषये मनोवृत्तिप्रवाहः ॥ ५ ॥ दुःखं दुःखहेतुम् ॥ ६ ॥ शिबिरात्तद्गतः कुरुक्षेत्रात् ॥ ८ ॥

तावकाः पाण्डवेयाश्च प्राध्यायन्त पृथक्पृथक् १६
विस्मिताश्च प्रहृष्टाश्च क्षत्रधर्मं निशाम्य ते ।
स्वधर्मं निन्दमानास्ते प्रणिपत्य महात्मने ॥ १७
शयनं कल्पयामासुर्भीष्मायामितकर्मणे ।
सोपधानं नरव्याघ्र शरैः सन्नतपर्वभिः ॥ १८
विधाय रक्षां भीष्माय समाभाष्य परस्परम् ।
अनुमान्य च गाङ्गेयं कृत्वा चापि प्रदक्षिणम् १९
क्रोधसंरक्तनयनाः समवेत्य परस्परम् ।
पुनर्युद्धाय निर्जग्मुः क्षत्रियाः कालचोदिताः २०
ततस्तूर्यनिनादैश्च भेरीणां निनदेन च ।
तावकानामनीकानि परेषां च विनिर्ययुः ॥ २१
व्यावृत्तेऽर्यम्णि राजेन्द्र पतिते जाह्नवीसुते ।
अमर्षवशमापन्नाः कालोपहतचेतसः ॥ २२
अनादृत्य वचः पथ्यं गाङ्गेयस्य महात्मनः ।
निर्ययुर्भरतश्रेष्ठाः शस्त्राण्यादाय सत्वराः ॥ २३
मोहात्तव सपुत्रस्य वधाच्छान्तनवस्य च ।
कौरवा मृत्युनाऽऽहूताः सहिताः सर्वराजभिः २४
अजावय इवागोपा वने श्वापदसंकुले ।
'कर्णकर्णेति चाक्रन्दञ्छेषा भारत पार्थिवाः ।'
भृशमुद्विग्नमनसो हीना देवव्रतेन ते ॥ २५
पतिते भरतश्रेष्ठे बभूव कुरुवाहिनी ।
द्यौरिवापेतनक्षत्रा हीनं खमिव वायुना ॥ २६
विपन्नसस्येव मही वाक्चैवासंस्कृता यथा ।
आसुरीव यथा सेना निगृहीते नृपे बलौ ॥ २७
विधवेव वरारोहा शुष्कतोयेव निम्नगा ।
वृकैरिव वने रुद्धा पृषती हतयूथपा ॥ २८
शरभाऽऽहतसिंहेव महती गिरिकन्दरा ।
सा सेना भरतश्रेष्ठे पतिते जाह्नवीसुते ॥ २९
विष्वग्वाताहतिक्षुब्धा नौरिवासीन्महार्णवे ।
बलिभिः पाण्डवैर्वीरैर्लब्धलक्षैर्भृशार्दिता ॥ ३०
सा तदासीद्भृशं सेना व्याकुलाश्वरथद्विपा ।

विपन्नभूयिष्ठनरा कृपणा ध्वस्तमानसा ॥ ३
तस्यां त्रस्ता नृपतयः सैनिकाश्च पृथग्विधाः ।
पाताल इव मज्जन्तो हीना देवव्रतेन ते ॥
कर्णस्य कुरवोऽस्मार्षुः स हि देवव्रतोपमः ।
सर्वशस्त्रभृतां श्रेष्ठं रोचमानमिवातिथिम् ॥
बन्धुमापद्गतस्येव तमेवोपागमन्मनः ।
चुक्रुशुः कर्णकर्णेति तत्र भारत पार्थिवाः ॥
राधेयं हितमस्माकं सूतपुत्रं तनुत्यजम् ।
स हि नायुध्यत तदा दशाहानि महायशाः
सामात्यबन्धुः कर्णो वै तमानयत माचिरम् ।
भीष्मेण हि महाबाहुः सर्वक्षत्रस्य पश्यतः ॥
रथेषु गण्यमानेषु बलविक्रमशालिषु ।
सङ्ख्यातोऽर्धरथः कर्णो द्विगुणः सन्नरर्षभः ॥
रथातिरथसङ्ख्यायां योऽग्रणीः शूरसंमतः ।
सासुरानपि देवेशान्रणे यो योद्धुमुत्सहेत् ॥
स तु तेनैव कोपेन राजन्गाङ्गेयमुक्तवान् ।
त्वयि जीवति कौरव्य नाहं योत्स्ये कदाचन
त्वया तु पाण्डवेयेषु निहतेषु महामृधे ।
दुर्योधनमनुज्ञाप्य वनं यास्यामि कौरव ॥
हते वा त्वयि पार्थैस्तु युधि स्वर्गमुपेयुषि ।
हन्तास्म्येकरथेनैव कृत्स्नान्यान्मन्यसे रथान्
एवमुक्त्वा महाबाहुर्दशाहान्येक एव सः ।
नायुध्यत ततः कर्णः पुत्रस्य तव संमते ॥
भीष्मः समरविक्रान्तः पाण्डवेयस्य भारत ।
जघान समरे योधानसंख्येयपराक्रमः ॥
तस्मिंस्तु निहते शूरे सत्यसन्धे महौजसि ।
त्वत्सुताः कर्णमस्मार्षुस्तर्तुकामा इव प्लवम् ॥
तावकास्तव पुत्राश्च सहिताः सर्वराजभिः ।
हा कर्ण इति चाक्रन्दन्कालोऽयमिति चाब्रुवन्
एवं ते स्म हि राधेयं सूतपुत्रं तनुत्यजम् ।
चुक्रुशुः सहिता योधास्तत्रतत्र महाबलाः ॥

प्राध्यायन्त पृथक्पृथक् । एके पराजयं प्राप्ताः स्म इति अन्ये जयं प्राप्ता स्म इति च ध्यानं कृतवन्तः ॥ १६ ॥ अर्यम्णि सूर्ये व्यावृत्ते अपराह्णावलम्बिनि ॥ २२ ॥ मोहाज्ज्याशारूपात् ॥ २४ ॥ पृषती चित्रमृगी ॥ २८ ॥ विष्वग्वातोऽनेकदिग्वातः ॥ ३० ॥ तस्यां सेनायाम् ॥ ३ रोचमानं विद्यातपोभ्यामिति शेषः ॥ ३३ ॥ आक्रन्दन्ना वन्तः । कालोऽयं त्वत्पराक्रमस्येति शेषः ॥ ४५ ॥

मदग्न्याभ्यनुज्ञातमस्त्रे दुर्वारपौरुषम् ।
मन्नो मनः कर्ण बन्धुमात्ययिकेष्विव ॥ ४७
हे शक्तो रणे राजंस्त्रातुमस्मान्महाभयात् ।
शानिव गोविन्दः सततं सुमहाभयात् ॥ ४८
पायन उवाच ।
ा तु सञ्जयं कर्णं कीर्तयन्तं पुनःपुनः ।
शीविषवदुच्छ्वस्य धृतराष्ट्रोऽब्रवीदिदम् ॥ ४९
राष्ट्र उवाच ।
द्वैकर्तनं कर्णमगमद्वो मनस्तदा ।
न्यरक्षत्स राधेयः सूतपुत्रस्तनुत्यजः ॥ ५०
अपि तन्न मृषाकार्षीत्कच्चित्सत्यपराक्रमः ।
संभ्रान्तानां तदार्तानां त्रस्तानां त्राणमिच्छतां ५१
अपि तत्पूरयांचक्रे धनुर्धरवरो युधि ।
यत्तद्विनिहते भीष्मे कौरवाणामपाकृतम् ॥ ५२
तत्खण्डं पूरयन्कर्णः परेषामादधद्भयम् ।
स हि वै पुरुषव्याघ्रो लोके सञ्जय कथ्यते ॥५३
आर्तानां बान्धवानां च क्रन्दतां च विशेषतः ।
परित्यज्य रणे प्राणांस्तत्त्राणार्थं च शर्म च ।
कृतवान्मम पुत्राणां जयाशां सफलामपि ॥ ५४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ॥ २ ॥

कर्णेन पाण्डवोच्छेदनपूर्वकं दुर्योधनाय राज्यदानं प्रतिज्ञाय युद्धायाभियानम् ॥ १ ॥

जनमेजय उवाच ।
हतं भीष्ममथाधिरथिर्विदित्वा
भिन्नां नावं वारिधावत्यगाधे ।
सोदर्यवद्व्यसनात्सूतपुत्रः
संतारयिष्यंस्तव पुत्रस्य सेनाम् ॥ १
श्रुत्वा तु कर्णः पुरुषेन्द्रमच्युतं
निपातितं शान्तनवं महारथम् ।
अथोपयायात्सहसारिकर्षणो
धनुर्धराणां प्रवरस्तदा नृप ॥ २
हते तु भीष्मे रथसत्तमे परै-
र्निमज्जतीं नावमिवार्णवे कुरून् ।
पितेव पुत्रांस्त्वरितोऽभ्ययात्ततः
संतारयिष्यंस्तव पुत्रस्य सेनाम् ॥ ३
संमृज्य दिव्यं धनुराततज्यं
स रामदत्तं रिपुसङ्घहन्ता ।
बाणांश्च कालानलवायुकल्पा-
नुल्लालयन्वाक्यमिदं बभाषे ।
कर्ण उवाच ।
यस्मिन्धृतिर्बुद्धिपराक्रमौजः
सत्यं स्मृतिर्वीरगुणाश्च सर्वे ।
अस्त्राणि दिव्यान्यथ संनतिर्ह्रीः
प्रिया च वागनसूया च भीष्मे ॥ ४
सदा कृतज्ञे द्विजशत्रुघातके
सनातनं चन्द्रमसीव लक्ष्मीः ।
स चेत्प्रशान्तः परवीरहन्ता
मन्ये हतानेव च सर्ववीरान् ॥ ५
नेह ध्रुवं किंचन जातु विद्यते
लोके ह्यस्मिन्कर्मणोऽनित्ययोगात् ।
सूर्योदये को हि विमुक्तसंशयो
भावं कुर्वीतार्यमहाव्रते हते ॥ ६

---

रामदग्न्येन अभ्यनुज्ञातं शिक्षितम् । नः अस्मत्संबन्धिनाम् ॥ ४७॥ तत् अस्मदीयानां चिन्तितम् ॥ ५१ ॥ भीष्मे विनिहते सति तत् तदा यदपाकृतं न्यूनं तत्पूरयांचक्रे अपीत्यन्वयः ॥ ५२ ॥ खण्डं रिक्तम् ॥ ५३ ॥ प्रथमोऽध्यायः ॥ १ ॥

विदित्वा चारमुखात् । उपययावादित्यपकृष्यते ॥ १ ॥ अच्युतं अस्खलितव्रतादिम् ॥ २ ॥ महाव्रते दृढब्रह्मचर्ये हते सति श्वःसूर्योदयो भविष्यतीति कस्य निश्चयः स्यात् । मृत्युजयिनोऽपि मृत्युश्चेत्काऽस्माकं जीविताशेत्यर्थः ॥ ६ ॥

वसुप्रभावे वसुवीर्यसंभवे
गते वसूनेव वसुंधराधिपे ।
वसूनि पुत्रांश्च वसुंधरां तथा
कुरूंश्च शोचध्वमिमां च वाहिनीम् ॥ ७

सञ्जय उवाच ।

महाप्रभावे वरदे निपातिते
लोकेश्वरे शास्तरि चामितौजसि ।
पराजितेषु भरतेषु दुर्मनाः
कर्णो भृशं न्यश्वसदश्रु वर्तयन् ॥
इदं च राधेयवचो निशम्य
सुताश्च राजंस्तव सैनिकाश्च ह ।
परस्परं चुक्रुशुरार्तिजं मुहु-
स्तदाश्रु नेत्रैर्मुमुचुश्च शब्दवत् ॥ ९
प्रवर्तमाने तु पुनर्महाहवे
विगाह्यमानासु चमूषु पार्थिवैः ।
अथाब्रवीद्धर्षकरं तदा वचो
रथर्षभान्सर्वमहारथर्षभः ॥ १०
जगत्यनित्ये सततं प्रधावति
प्रचिन्तयन्नस्थिरमद्य लक्षये ।
भवत्सु तिष्ठत्स्विह पातितो मृधे
गिरिप्रकाशः कुरुपुङ्गवः कथम् ॥ ११
निपातिते शान्तनवे महारथे
दिवाकरे भूतलमास्थिते यथा ।
न पार्थिवाः सोढुमलं धनंजयं
गिरिप्रवोढारमिवानिलं द्रुमाः ॥ १२
हतप्रधानं त्विदमार्तरूपं
परैर्हतोत्साहमनाथमद्य वै ।
मया कुरूणां परिपाल्यमाहवे
बलं यथा तेन महात्मना तथा ॥ १३
समाहितं चात्मनि भारमीदृशं
जगत्तथाऽनित्यमिदं च लक्षये ।
निपातितं चाहवशौण्डमाहवे
कथं नु कुर्यामहमीदृशे भयम् ॥ १४

अहं तु तान्कुरुवृषभानजिह्मगैः
प्रवेशयन्यमसदनं चरन्रणे ।
यशः परं जगति विभाव्य वर्तिता
परैर्हतो भुवि शयिताथवा पुनः ॥ १५
युधिष्ठिरो धृतिमतिसत्यसत्त्ववान्
वृकोदरो गजशततुल्यविक्रमः ।
तथार्जुनस्त्रिदशवरात्मजो युवा
न तद्बलं सुजयमिहामरैरपि ॥ १६
यमौ रणे यत्र यमोपमौ बले
ससात्यकिर्यत्र च देवकीसुतः ।
न तद्बलं कापुरुषोऽभ्युपेयिवा-
न्निवर्तते मृत्युमुखादिवासुभृत् ॥ १७
तपोऽभ्युदीर्णं तपसैव बाध्यते
बलं बलेनैव तथा मनस्विभिः ।
मनश्च मे शत्रुनिवारणे ध्रुवं
स्वरक्षणे चाचलवद्व्यवस्थितम् ॥ १८
एवं चैषां बाधमानः प्रभावं
गत्वैवाहं ताञ्जयाम्यद्य सूत ।
मित्रद्रोहो मर्षणीयो न मेऽयं
भग्ने सैन्ये यः समेयात्स मित्रम् ॥ १९
कर्तास्म्येतत्सत्पुरुषार्यकर्म
त्यक्त्वा प्राणाननुयास्यामि भीष्मम् ।
सर्वान्सङ्ख्ये शत्रुसङ्घान्हनिष्ये
हतस्तैर्वा वीरलोकं प्रपत्स्ये ॥ २०
संप्राक्रुष्टे रुदितस्त्रीकुमारे
पराहते पौरुषे धार्तराष्ट्रे ।
मया कृत्यमिति जानामि सूत
तस्माद्राज्ञस्त्वद्य शत्रून्विजेष्ये ॥ २१
कुरून्रक्षन्पाण्डुपुत्राञ्जिघांस-
स्त्यक्त्वा प्राणान्घोररूपे रणेऽस्मिन् ।
सर्वान्सङ्ख्ये शत्रुसङ्घान्निहत्य
दास्याम्यहं धार्तराष्ट्राय राज्यम् ॥ २२

---

प्रधावति मृत्यवे स्थिरं न किमपीति लक्षये ॥ ११ ॥ विभाव्य प्रकाश्य । वर्तिता स्थाता ॥ १५ ॥ नाहं कापुरुष इत्याह—तप इति ॥ १८ ॥ सत्पुरुषाणां योग्यमार्यकर्म श्रेष्ठकार्यम् ॥ २० ॥

निबध्यतां मे कवचं विचित्रं
हैमं शुभ्रं मणिरत्नावभासि ।
शिरस्त्राणं चार्कसमानभासं
धनुः शरांश्चाग्निविषाहिकल्पान् ॥ २३
उपासङ्गान्षोडश योजयन्तु
धनूंषि दिव्यानि तथाऽऽहरन्तु ।
असींश्च शक्तीश्च गदाश्च गुर्वीः
शङ्खं च जाम्बूनदचित्रनालम् ॥ २४
इमां रौक्मीं नागकक्ष्यां विचित्रां
ध्वजं जैत्रं दिव्यमिन्दीवराङ्कम् ।
श्लक्ष्णैर्वस्त्रैर्विप्रमृज्यानयन्तु
चित्रां मालां चारुबद्धां सलाजाम् ॥ २५
अश्वानग्र्यान्पाण्डुराभ्रप्रकाशान्
पुष्टान्स्नातान्मन्त्रपूताभिरद्भिः ।
तप्तैर्भाण्डैः काञ्चनैरभ्युपेतान्
शीघ्राञ्शीघ्रं सूतपुत्रानयस्व ॥ २६
रथं चाग्र्यं हेममालावनद्धं
रत्नैश्चित्रं सूर्यचन्द्रप्रकाशैः ।
द्रव्यैर्युक्तं संप्रहारोपपन्नै-
र्वाहैर्युक्तं तूर्णमावर्तयस्व ॥ २७
चित्राणि चापानि च वेगवन्ति
ज्याश्चोत्तमाः संनहनोपपन्नाः ।
तूणांश्च पूर्णान्महतः शराणा-
मासाद्य गात्रावरणानि चैव ॥ २८
प्रायात्रिकं चानयताशु सर्वं
पूर्णं कान्त्या वीरकांस्यं च हैमम् ।
आनीय मालामवबध्य चाङ्गे
प्रवादयन्त्वाशु जयाय भेरीः ॥ २९
प्रयाहि सूताशु यतः किरीटी
वृकोदरो धर्मसुतो यमौ च ।
तान्वा हनिष्यामि समेत्य सङ्ख्ये
भीष्मो यथैष्यामि हतो द्विषद्भिः ॥ ३०
यस्मिन्राजा सत्यधृतिर्युधिष्ठिरः
समास्थितो भीमसेनार्जुनौ च ।
वासुदेवः सात्यकिः सृंजयाश्च
मन्ये बलं तदजय्यं महीपैः ॥ ३१
तं चेन्मृत्युः सर्वहरोऽभिरक्षे-
त्सदाऽप्रमत्तः समरे किरीटिनम् ।
तथापि हन्तास्मि समेत्य सङ्ख्ये
यास्यामि वा भीष्ममुखो यमाय ॥ ३२
न त्वेवाहं न गमिष्यामि तेषां
मध्ये शूराणां तत्र चाहं ब्रवीमि ।
मित्रद्रुहो दुर्बलभक्तयो ये
पापात्मानो न ममैते सहायाः ॥ ३३
सञ्जय उवाच ।
समृद्धिमन्तं रथमुत्तमं दृढं
सकूबरं हेमपरिष्कृतं शुभम् ।
पताकिनं वातजवैर्हयोत्तमै-
र्युक्तं समास्थाय ययौ जयाय ॥ ३४
संपूज्यमानः कुरुभिर्महात्मा
रथर्षभो देवगणैर्यथेन्द्रः ।
ययौ तदायोधनमुग्रधन्वा
यत्रावसानं भरतर्षभस्य ॥ ३५
वरूथिना महता सध्वजेन
सुवर्णमुक्तामणिरत्नमालिना ।
सदश्वयुक्तेन रथेन कर्णो
मेघस्वनेनार्क इवामितौजाः ॥ ३६
हुताशनाभः स हुताशनप्रभे
शुभः शुभे वै स्वरथे धनुर्धरः ।
स्थितो रराजाधिरथिर्महारथः
स्वयं विमाने सुरराडिवास्थितः ॥ ३७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

उपासङ्गाञ्शरपूर्णांस्तूणान् ॥ २४ ॥ नागकक्ष्यां शृङ्खलाम् । जैत्रं जयख्यापकम् । इन्दीवराङ्कं कमलचिह्नम् ॥ २५ ॥ तप्तै-रारोपितवर्णकैर्भाण्डैरलङ्कारैः ॥ २६ ॥ संप्रहारोपपन्नैर्युद्धोचितैः। आवर्तयस्व आनय ॥ २७ ॥ गात्रावरणानि कवचानि ॥ २८॥ प्रायात्रिकं प्रयात्रा युद्धार्थं प्रयाणं तत्रार्हम् ॥ २९ ॥ यमाय यमं द्रष्टुम् ॥ ३२ ॥ द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

कर्णेन भीष्ममेत्य युद्धानुज्ञायाचनम् ॥ १ ॥

सञ्जय उवाच ।
शरतल्पे महात्मानं शयानममितौजसम् ।
महावातसमूहेन समुद्रमिव शोषितम् ॥ १
दृष्ट्वा पितामहं भीष्मं सर्वक्षत्रान्तकं गुरुम् ।
दिव्यैरस्त्रैर्महेष्वासं पातितं सव्यसाचिना ।
जयाशा तव पुत्राणां संभग्ना शर्म वर्म च ॥ २
अपाराणामिव द्वीपमगाधे गाधमिच्छताम् ।
स्रोतसा यामुनेनेव शरौघेण परिप्लुतम् ॥ ३
महान्तमिव मैनाकमहार्यं भुवि पातितम् ।
नभश्च्युतमिवादित्यं शक्रस्येवामृतं हृतम् ॥ ४
शतक्रतुमिवाचिन्त्यं पुरा वृत्रेण निर्जितम् ।
मोहनं सर्वसैन्यस्य युधि भीष्मं निपातितम् ॥ ५
ककुदं सर्वसैन्यानां लक्ष्म सर्वधनुष्मताम् ।
धनंजयशरव्याप्तं पितरं ते महाव्रतम् ॥ ६
तं वीरशयने वीरं शयानं पुरुषर्षभम् ।
भीष्ममाधिरथिर्दृष्ट्वा भरतानां पितामहम् ॥ ७
अस्कन्द्य स रथात्तूर्णं शोकमोहपरिप्लुतः ।
'पद्भ्यामेव जगामार्तो बाष्पव्याकुललोचनः' ।
अभिवाद्याञ्जलिं बद्ध्वा वन्दमानोऽभ्यभाषत ॥ ८
कर्णोऽहमस्मि भद्रं ते वद मामभि भारत ।
पुण्यया क्षेमया वाचा चक्षुषा चावलोकय ॥ ९
न नूनं सुकृतस्येह फलं कश्चित्समश्नुते ।
यत्र धर्मपरो वृद्धः शेते भुवि भवानिह ॥ १०
कोशसञ्चयने मन्त्रे व्यूहे प्रहरणेषु च ।
नाहमन्यं प्रपश्यामि कुरूणां कुरुपुङ्गव ॥ ११
बुद्ध्या विशुद्धया युक्तो यः कुरूंस्तारयेद्भयात् ।
योधांस्त्वमप्लवे हित्वा पितृलोकं गमिष्यसि ॥ १२
अद्यप्रभृति संक्रुद्धा व्याघ्रा इव मृगक्षयम् ।
पाण्डवा भरतश्रेष्ठ करिष्यन्ति कुरुक्षयम् ॥ १३
अद्य गाण्डीवघोषेण वीर्यज्ञाः सव्यसाचिनः ।
कुरवः संत्रसिष्यन्ति वज्रघोषादिवासुराः ॥ १४
अद्य गाण्डीवमुक्तानामशनीनामिव स्वनः ।
त्रासयिष्यति बाणानां कुरूनन्यांश्च पार्थिवान् १५
समिद्धोऽग्निर्यथा वीर महाज्वालो द्रुमान्दहेत् ।
धार्तराष्ट्रान्प्रधक्ष्यन्ति तथा बाणाः किरीटिनः १६
येन येन प्रसरतो वाय्वग्नी सहितौ वने ।
तेन तेन प्रदहतो भूरिगुल्मतृणद्रुमान् ॥ १७
यादृशोऽग्निः समुद्भूतस्तादृक्पार्थो न संशयः ।
यथा वायुर्नरव्याघ्र तथा कृष्णो न संशयः ॥ १८
नदतः पाञ्चजन्यस्य रसतो गाण्डिवस्य च
श्रुत्वा सर्वाणि सैन्यानि त्रासं यास्यन्ति भारत १९
कपिध्वजस्योत्पततो रथस्यामित्रकर्शिनः ।
शब्दं सोढुं न शक्ष्यन्ति त्वामृते वीर पार्थिवाः ॥
को ह्यर्जुनं योधयितुं त्वदन्यः पार्थिवोऽर्हति ।
यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः २१
अमानुषैश्च संग्रामं त्र्यम्बकेण महात्मना ॥ २२
तस्माच्चैव वरं प्राप्तो दुष्प्रापश्चाकृतात्मभिः ।
कोऽन्यः शक्तो रणे जेतुं पूर्वं यो न जितस्त्वया ॥
जितो येन रणे रामो भवता वीर्यशालिना ।
क्षत्रियान्तकरो घोरो देवदानवदर्पहा ।
'सोप्यद्याभिहतः शेते शरैः प्रोतः शिखण्डिना ॥'

तमद्याहं पाण्डवं युद्धशौण्ड-
ममृष्यमाणो भवता चानुशिष्टः ।
आशीविषं दृष्टिहरं सुघोरं
शूरं शक्ष्याम्यस्त्रबलान्निहन्तुम् ॥ २५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

ककुदं श्रेष्ठम् ॥ ६ ॥ रसतः शब्दं कुर्वतः ॥ १९ ॥ | अमानुषैर्निवातकवचादिभिः ॥ २२ ॥ तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

भीष्मानुज्ञातस्य कर्णस्य युद्धायाऽऽगमनम् ॥ १ ॥

सञ्जय उवाच ।
तस्य लालप्यमानस्य कुरुवृद्धः पितामहः ।
देशकालोचितं वाक्यमब्रवीत्प्रीतमानसः ॥ १
भीष्म उवाच ।
समुद्र इव सिन्धूनां ज्योतिषामिव भास्करः ।
सत्यस्य च यथा सन्तो बीजानामिव चोर्वरा ॥ २
पर्जन्य इव भूतानां प्रतिष्ठा सुहृदां भवान् ।
बान्धवास्त्वाऽनुजीवन्तु स्वादुवृक्षमिवाण्डजाः ३
मानहा भव शत्रूणां मित्राणां नन्दिवर्धनः ।
कौरवाणां भव गतिर्यथा विष्णुर्दिवौकसाम् ॥ ४
स्वबाहुबलवीर्येण धार्तराष्ट्रप्रियैषिणा ।
कर्ण राजपुरं गत्वा काम्भोजा निर्जितास्त्वया ॥ ५
गिरिव्रजगताश्चापि नग्नजित्प्रमुखा नृपाः ।
अम्बष्ठाश्च विदेहाश्च गान्धाराश्च जितास्त्वया ६
हिमवद्दुर्गनिलयाः किराता रणकर्कशाः ।
दुर्योधनस्य वशगास्त्वया कर्ण पुरा कृताः ॥ ७
उत्कला मेकलाः पौण्ड्राः कलिङ्गान्ध्राश्च संयुगे ।
निषादाश्च त्रिगर्ताश्च बाह्लीकाश्च जितास्त्वया ८
तत्रतत्र च संग्रामे दुर्योधनहितैषिणा ।
बहवश्च जिताः कर्ण त्वया वीरा महौजसा ॥ ९
यथा दुर्योधनस्तात सज्ञातिकुलबान्धवः ।
तथा त्वमपि सर्वेषां कौरवाणां गतिर्भव ॥ १०
शिवेनाभिवदामि त्वां गच्छ युध्यस्व शत्रुभिः ।
अनुशास्य कुरून्सर्वान्धत्स्व दुर्योधने जयम् ॥ ११
भवान्पौत्रसमोऽस्माकं यथा दुर्योधनस्तथा ।
तवापि धर्मतः सर्वे यथा तस्य वयं तथा ॥ १२
यौनात्संबन्धकाल्लोके विशिष्टं सङ्गतं सताम् ।
सद्भिः संगममिच्छन्ति तस्मात्प्राज्ञाः परैरपि १३
स सत्यसंगरो भूत्वा ममेदमिति निश्चितः ।
कुरूणां पालय बलं यथा दुर्योधनस्तथा ॥ १४
'यथा च कुरवो युद्धे योधयन्ति स्म पाण्डवान् ।
तथा कर्ण त्वया कार्यं दुर्योधनहितैषिणा ॥' १५
निशम्य वचनं तस्य चरणावभिवाद्य च ।
ययौ वैकर्तनः कर्णस्तूर्णमायोधनं प्रति ॥ १६
सोऽभिवीक्ष्य नरौघाणां स्थानमप्रतिमं महत् ।
व्यूढप्रहरणोरस्कं सैन्यं तत्समबृंहयत् ॥ १७
हृषिताः कुरवः सर्वे दुर्योधनपुरोगमाः ।
उपागतं महाबाहुं सर्वानीकपुरःसरम् ॥ १८
कर्णं दृष्ट्वा महात्मानं युद्धाय समुपस्थितम् ।
क्ष्वेडितास्फोटितरवैः सिंहनादरवैरपि ।
धनुःशब्दैश्च विविधैः कुरवः समपूजयन् ॥ १९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

दुर्योधनपृष्टेन कर्णेन तंप्रति द्रोणस्य सैनापत्यकरणविधानम् ॥ १ ॥

सञ्जय उवाच ।
रथस्थं पुरुषव्याघ्रं दृष्ट्वा कर्णमवस्थितम् ।
हृष्टो दुर्योधनो राजन्निदं वचनमब्रवीत् ॥ १
सनाथमिव मन्येऽहं भवता पालितं बलम् ।
अत्र किं नु समर्थं यद्धितं तत्संप्रधार्यताम् ॥ २
कर्ण उवाच ।
नः पुरुषव्याघ्र त्वं हि प्राज्ञतमो नृषु ।
यथा चार्थपतिः कृत्यं पश्यते न तथेतरः ॥ ३
ते स्म सर्वे तव वचः श्रोतुकामा नरेश्वर ।
नान्याय्यं हि भवान्वाक्यं ब्रूयादिति मतिर्मम ॥ ४

अर्थपतिः प्रधानस्वामी ॥ ३ ॥

दुर्योधन उवाच ।
भीष्मः सेनाप्रणेताऽऽसीद्वयसा विक्रमेण च ।
श्रुतेन चोपसंपन्नः सर्वैर्योधगणैस्तथा ॥ ५
तेनातियशसा कर्ण घ्नता शत्रुगणान्मम ।
सुयुद्धेन दशाहानि पालिताः स्मो महात्मना ॥ ६
तस्मिन्नसुकरं कर्म कृतवत्यास्थिते दिवम्
कं नु सेनाप्रणेतारं मन्यसे तदनन्तरम् ॥ ७
न विना नायकं सेना मुहूर्तमपि तिष्ठति ।
'आहवेषु विशेषेण भ्रष्टनेत्रेष्विवाञ्जनम् ।'
आहवेष्वाहवश्रेष्ठ नेतृहीनेव नौर्जले ॥ ८
यथा ह्यकर्णधारा नौ रथश्चासारथिर्यथा ।
द्रवेद्यथेष्टं तद्वत्स्यादृते सेनापतिं बलम् ॥ ९
अदेशिको यथा सार्थः सर्वः कृच्छ्रं समृच्छति ।
अनायका तथा सेना सर्वान्दोषान्समर्च्छति ॥ १०
स भवान्वीक्ष्य सर्वेषु मामकेषु महात्मसु ।
पश्य सेनापतिं युक्तमनु शान्तनवादिह ॥ ११
यं हि सेनाप्रणेतारं भवान्वक्ष्यति संयुगे ।
तं वयं सहिताः सर्वे करिष्यामो न संशयः ॥ १२

कर्ण उवाच ।
सर्व एव महात्मान इमे पुरुषसत्तमाः ।
सेनापतित्वमर्हन्ति नात्र कार्या विचारणा ॥ १३
कुलसंहननज्ञानैर्बलविक्रमबुद्धिभिः '
युक्ताः श्रुतज्ञा धीमन्त आहवेष्वनिवर्तिनः ॥ १४
युगपन्न तु ते शक्याः कर्तुं सर्वे पुरःसराः ।
एक एव तु कर्तव्यो यस्मिन्वैशेषिका गुणाः ॥ १५
अन्योन्यस्पर्धिनां ह्येषां यद्येकं त्वं करिष्यसि ।
शेषा विमनसो व्यक्तं न योत्स्यन्ति हितास्तव ॥ १६
अयं च सर्वयोधानामाचार्यः स्थविरो गुरुः ।
युक्तः सेनापतिः कर्तुं द्रोणः शस्त्रभृतां वरः ॥ १७
को हि तिष्ठति दुर्धर्षे द्रोणे शस्त्रभृतां वरे
सेनापतिः स्यादन्योऽस्माच्छुक्राङ्गिरसदर्शनात् ॥ १८
न च सोऽप्यस्ति ते योधः सर्वराजसु भारत ।
द्रोणं यः समरे यान्तमनुयास्यति संयुगे ॥ १९
एष सेनाप्रणेतॄणामेष शस्त्रभृतामपि ।
एष बुद्धिमतां चैव श्रेष्ठो राजन्गुरुस्तव ॥ २०
एवं दुर्योधनाचार्यमाशु सेनापतिं कुरु ।
जिगीषन्तो सुरान्सङ्ख्ये कार्तिकेयमिवामराः ॥ २१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ॥ ६ ॥

दुर्योधनेन द्रोणंप्रति सैनापत्यस्वीकारप्रार्थना ॥ १ ॥

सञ्जय उवाच ।
कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा ।
सेनामध्यगतं द्रोणमिदं वचनमब्रवीत् ॥ १
दुर्योधन उवाच ।
वर्णश्रैष्ठ्यात्कुलोत्पत्त्या श्रुतेन वयसा धिया ।
वीर्याद्दाक्ष्यादधृष्यत्वादर्थज्ञानान्नयाज्जयात् ॥ २
तपसा च कृतज्ञत्वाद्वृद्धः सर्वगुणैरपि ।
युक्तो भवत्समो गोप्ता राज्ञामन्यो न विद्यते ॥ ३
स भवान्पातु नः सर्वान्देवानिव शतक्रतुः ।
भवन्नेत्राः पराञ्जेतुमिच्छामो द्विजसत्तम ॥ ४
रुद्राणामिव कापालिर्वसूनामिव पावकः ।
कुबेर इव यक्षाणां मरुतामिव वासवः ॥ ५
वसिष्ठ इव विप्राणां तेजसामिव भास्करः ।
पितॄणामिव धर्मेन्द्रो यादसामिव चाम्बुराट् ॥ ६
नक्षत्राणामिव शशी दितिजानामिवोशनाः ।
'सर्वेषामिव लोकानां विश्वस्य च यथा क्षयः ।'

---

नेता कर्णधारः ॥ ८ ॥ अदेशिकोऽग्रेसररहितः ॥ १० ॥ संहननं शरीरम् ॥ १४ ॥ शुक्राङ्गिरसदर्शनाच्छुक्रबृहस्पतितुल्यात् ॥ १८ ॥ पञ्चमोऽध्यायः ॥ ५ ॥

भवान्नेत्रं नेता येषां ते ॥ ४ ॥ धर्मेन्द्रो यमः । अम्बुराट् वरुणः ॥ ६ ॥

विश्वोत्पत्तिस्थितिलये श्रेष्ठो नारायणः प्रभुः ।
एवं सेनाप्रणेतृणां मम सेनापतिर्भव ॥ ८
अक्षौहिण्यो दशैका च वशगाः सन्तु तेऽनघ ।
ताभिः शत्रून्प्रतिव्यूह्य जहीन्द्रो दानवानिव ॥ ९
प्रयातु नो भवानग्रे देवानामिव पावकिः ।
अनुयास्यामहे त्वाऽऽजौ सौरभेया इवर्षभम् ॥ १०
उग्रधन्वा महेष्वासो दिव्यं विष्फारयन्धनुः ।
दृष्ट्वा भवन्तं संग्रामे नार्जुनः प्रहरिष्यति ॥ ११
ध्रुवं युधिष्ठिरं सङ्ख्ये सानुबन्धं सबान्धवम् ।
जेष्यामि पुरुषव्याघ्र भवान्सेनापतिर्यदि ॥ १२
सञ्जय उवाच ।
एवमुक्ते ततो द्रोणं जयेत्यूचुर्नराधिपाः ।
सिंहनादेन महता हर्षयन्तस्तवात्मजम् ॥ १३
सैनिकाश्च मुदा युक्ता वर्धयन्ति द्विजोत्तमम् ।
दुर्योधनं पुरस्कृत्य प्रार्थयन्तो महद्यशः ।
दुर्योधनं ततो राजन्द्रोणो वचनमब्रवीत् ॥ १४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

दुर्योधनेन द्रोणस्य सैनापत्येऽभिषेचनम् ॥ १ ॥ द्रोणयुद्धवर्णनम् ॥ २ ॥

द्रोण उवाच ।
वेदं षडङ्गं वेदाहमर्थविद्यां च मानवीम् ।
त्रैयम्बकमथेष्वस्त्रं शस्त्राणि विविधानि च ॥ १
ये चाप्युक्ता मयि गुणा भवद्भिर्जयकाङ्क्षिभिः ।
चिकीर्षुस्तानहं सर्वान्योधयिष्यामि पाण्डवान् ॥ २
पार्षतं तु रणे राजन्न हनिष्ये कथंचन ।
स हि सृष्टो वधार्थाय ममैव पुरुषर्षभः ॥ ३
योधयिष्यामि सैन्यानि नाशयन्सर्वसोमकान् ।
न च मां पाण्डवा युद्धे योधयिष्यन्ति हर्षिताः ॥ ४
सञ्जय उवाच ।
स एवमभ्यनुज्ञातश्चक्रे सेनापतिं ततः ।
द्रोणं तव सुतो राजन्विधिदृष्टेन कर्मणा ॥ ५
अथाभिषिषिचुर्द्रोणं दुर्योधनमुखा नृपाः ।
'स्वस्तिवादरवैश्चान्यैः श्लक्ष्णैश्चान्यैर्मनोरमैः ।'
सैनापत्ये यथा स्कन्दं पुरा शक्रमुखाः सुराः ॥ ६
ततो वादित्रघोषेण शङ्खानां च महास्वनैः ।
प्रादुरासीत्कृते द्रोणे हर्षः सेनापतौ तदा ॥ ७
ततः पुण्याहघोषेण साशीर्वादस्वनेन च ।
संस्तवैर्गीतशब्दैश्च सूतमागधबन्दिनाम् ॥ ८
जयशब्दैर्द्विजाग्र्याणां सुभगानर्तितैस्तथा ।
सत्कृत्य विधिना द्रोणं मेनिरे पाण्डवाञ्जितान् ॥ ९
सञ्जय उवाच ।
सैनापत्यं तु संप्राप्य भारद्वाजो महारथः ।
युयुत्सुर्व्यूह्य सैन्यानि प्रायात्तव सुतैः सह ॥ १०
सैन्धवश्च कलिङ्गश्च विकर्णश्च तवात्मजः ।
दक्षिणं पार्श्वमास्थाय समतिष्ठन्त दंशिताः ॥ ११
प्रपक्षः शकुनिस्तेषां प्रवरैर्हयसादिभिः ।
ययौ गान्धारकैः सार्धं विमलप्रासयोधिभिः ॥ १२
कृपश्च कृतवर्मा च चित्रसेनो विविंशतिः ।
दुःशासनमुखा यत्ताः सव्यं पक्षमपालयन् ॥ १३
तेषां प्रपक्षाः काम्भोजाः सुदक्षिणपुरस्सराः ।
ययुरश्वैर्महावेगैः शकाश्च यवनैः सह ॥ १४
मद्रास्त्रिगर्ताः साम्बष्ठाः प्रतीच्योदीच्यमालवाः ।
शिबयः शूरसेनाश्च शूद्राश्च मलदैः सह ॥ १५
सौवीराः कितवाः प्राच्या दाक्षिणात्याश्च सर्वशः ।
तवात्मजं पुरस्कृत्य सूतपुत्रस्य पृष्ठतः ॥ १६
हर्षयन्तः स्वसैन्यानि ययुस्तव सुतैः सह ।
प्रवरः सर्वयोधानां बलेषु बलमादधत् ॥ १७
ययौ वैकर्तनः कर्णः प्रमुखे सर्वधन्विनाम् ।
तस्य दीप्तो महाकायः स्वान्यनीकानि हर्षयन् ॥ १८
हस्तिकक्ष्यो महाकेतुर्बभौ सूर्यसमद्युतिः ।
न भीष्मव्यसनं कश्चिद्दृष्ट्वा कर्णममन्यत ॥ १९

पावकिः स्कन्दः ॥ १० ॥ षष्ठोऽध्यायः ॥ ६ ॥

सुभगानर्तितैः सौभाग्यवतीनृत्तैः ॥ ९ ॥

विशोकाश्चाभवन्सर्वे राजानः कुरुभिः सह ।
हृष्टाश्च बहवो योधास्तत्राजल्पन्त वेगतः ॥ २०
न हि कर्णं रणे दृष्ट्वा युधि स्थास्यन्ति पाण्डवाः ।
कर्णो हि समरे शक्तो जेतुं देवान्सवासवान् ॥ २१
किमु पाण्डुसुतान्युद्धे हीनवीर्यपराक्रमान् ।
भीष्मेण तु रणे पार्थाः पालिता बाहुशालिना २२
तांस्तु कर्णः शरैस्तीक्ष्णैर्नाशयिष्यति संयुगे ।
एवं ब्रुवन्तस्तेऽन्योन्यं हृष्टरूपा विशांपते ॥ २३
राधेयं पूजयन्तश्च प्रशंसन्तश्च निर्ययुः ।
अस्माकं शकटव्यूहो द्रोणेन विहितोऽभवत् ॥ २४
परेषां क्रौञ्च एवासीद्व्यूहो राजन्महात्मनाम् ।
प्रीयमाणेन विहितो धर्मराजेन भारत ॥ २५
व्यूहप्रमुखतस्तेषां तस्थतुः पुरुषर्षभौ ।
वानरध्वजमुच्छ्रित्य विष्वक्सेनधनंजयौ ॥ २६
ककुदं सर्वसैन्यानां धाम सर्वधनुष्मताम् ।
आदित्यपथगः केतुः पार्थस्यामिततेजसः ॥ २७
दीपयामास तत्सैन्यं पाण्डवस्य महात्मनः ।
यथा प्रज्वलितः सूर्यो युगान्ते वै वसुंधराम् ॥ २८
दीप्यन्दृश्येत हि तथा केतुः सर्वत्र धीमतः ।
योधानामर्जुनः श्रेष्ठो गाण्डीवं धनुषां वरम् ॥ २९
वासुदेवश्च भूतानां चक्राणां च सुदर्शनम् ।
चत्वार्येतानि तेजांसि वहञ्श्वेतहयो रथः ॥ ३०
परेषामग्रतस्तस्थौ कालचक्रमिवोद्यतम् ।
एवं तौ सुमहात्मानौ बलसेनाग्रगावुभौ ॥ ३१
तावकानां मुखे कर्णः परेषां च धनंजयः ।
ततो जयाभिसंरब्धौ परस्परवधैषिणौ ॥ ३२
अवेक्षेतां तदान्योन्यं समरे कर्णपाण्डवौ ।
ततः प्रयाते सहसा भारद्वाजे महारथे ॥ ३३
सिंहनादेन घोरेण वसुधा समकम्पत ।
ततस्तुमुलमाकाशमावृणोत्सदिवाकरम् ॥ ३४
वातोद्धूतं रजस्तीव्रं कौशेयनिकरोपमम् ।
ववर्ष द्यौरनभ्राऽपि मांसास्थिरुधिराण्युत ॥ ३५
गृध्राः श्येना बकाः कङ्का वायसाश्च सहस्रशः ।
उपर्युपरि सेनां ते तदा पर्यपतन्नृप ॥ ३६

आदित्यपथगः आकाशगः ॥ २७ ॥

गोमायवश्च प्राक्रोशन्भयदान्दारुणान्रवान् ।
अकार्षुरपसव्यं च बहुशः पृतनां तव ॥ ३७
चिखादिषन्तो मांसानि पिपासन्तश्च शोणितम् ।
अपतद्दीप्यमाना च सनिर्घाता सकम्पना ॥ ३८
उल्का ज्वलन्ती सङ्ग्रामे पुच्छेनावृत्य सर्वशः ।
परिवेषो महांश्चापि सविद्युत्स्तनयित्नुमान् ॥ ३९
भास्करस्याभवद्राजन्प्रयाते वाहिनीपतौ ।
एते चान्ये च बहवः प्रादुरासन्सुदारुणाः ।
उत्पाता युधि वीराणां जीवितक्षयकारिणः ॥ ४०
ततः प्रववृते युद्धं परस्परवधैषिणाम् ।
कुरुपाण्डवसैन्यानां शब्देनापूरयज्जगत् ॥ ४१
ते त्वन्योन्यं सुसंरब्धाः पाण्डवाः कौरवैः सह ।
अभ्यघ्नन्निशितैः शस्त्रैर्जयगृद्धाः प्रहारिणः ॥ ४२
स पाण्डवानां महतीं महेष्वासो महाद्युतिः ।
वेगेनाभ्यद्रवत्सेनां किरञ्शरशतैः शितैः ॥ ४३
द्रोणमभ्युद्यतं दृष्ट्वा पाण्डवाः सहसृञ्जयैः ।
प्रत्यगृह्णंस्तदा राजञ्छरवर्षैः पृथक्पृथक् ॥ ४४
विक्षोभ्यमाणा द्रोणेन भिद्यमाना महाचमूः ।
व्यशीर्यत सपाञ्चाला वातेनेव बलाहकाः ॥ ४५
बहूनीह विकुर्वाणो दिव्यान्यस्त्राणि संयुगे ।
अपीडयत्क्षणेनैव द्रोणः पाण्डवसृञ्जयान् ॥ ४६
ते वध्यमाना द्रोणेन वासवेनेव दानवाः ।
पाञ्चालाः समकम्पन्त धृष्टद्युम्नपुरोगमाः ॥ ४७
ततो दिव्यास्त्रविच्छूरो याज्ञसेनिर्महारथः ।
अभिनच्छरवर्षेण द्रोणानीकमनेकधा ॥ ४८
द्रोणस्य शरवर्षाणि शरवर्षेण पार्षतः ।
सन्निवार्य ततः सर्वान्कुरूनप्यवधीद्बली ॥ ४९
संयम्य तु ततो द्रोणः समवस्थाप्य चाहवे ।
स्वमनीकं महेष्वासः पार्षतं समुपाद्रवत् ॥ ५०
स बाणवर्षं सुमहदसृजत्पार्षतं प्रति ।
मघवान्समभिक्रुद्धः सहसा दानवानिव ॥ ५१
ते कम्प्यमाना द्रोणेन बाणैः पाण्डवसृञ्जयाः ।
पुनःपुनरभज्यन्त सिंहेनेवेतरे मृगाः ॥ ५२
तथा पर्यपतद्द्रोणः पाण्डवानां बले बली ।
अलातचक्रवद्राजंस्तदद्भुतमिवाभवत् ॥ ५३

खचरनगरकल्पं कल्पितं शास्त्रदृष्ट्या
चलदनिलपताकं ह्लादनं वल्गिताश्वम् ।
स्फटिकविमलकेतुं त्रासनं शात्रवाणां
रथवरमधिरूढः संजहारारिसेनाम् ॥ ५४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

सञ्जयेन धृतराष्ट्रं प्रति द्रोणपराक्रमवर्णनपूर्वकं तन्निधनकथनम् ॥ १ ॥

सञ्जय उवाच ।
तथा द्रोणमभिघ्नन्तं साश्वसूतरथद्विपान् ।
व्यथिताः पाण्डवा दृष्ट्वा न चैनं पर्यवारयन् ॥ १
ततो युधिष्ठिरो राजा धृष्टद्युम्नधनञ्जयौ ।
अब्रवीत्सर्वतो यत्तैः कुम्भयोनिर्निवार्यताम् ॥ २
तत्रैनमर्जुनश्चैव धृष्टद्युम्नश्च पार्षतः ।
'ये चान्ये पार्थिवा राजन्पाण्डवस्यानुसैनिकाः ।
प्रत्यगृह्णंस्ततस्तत्र समागच्छन्महारथाः ॥
केकया भीमसेनश्च सौभद्रोऽथ घटोत्कचः
युधिष्ठिरो यमौ मात्स्यो द्रुपदश्चात्मजैः सह ॥ ४
द्रौपदेयाश्च संहृष्टा धृष्टकेतुः ससात्यकिः ।
चेकितानश्च संक्रुद्धो युयुत्सुश्च महारथः ॥ ५
ये चान्ये पार्थिवा राजन्पाण्डवस्यानुयायिनः ।
कुलवीर्यानुरूपाणि चक्रुः कर्माण्यनेकशः ॥ ६
संभिद्यमानां तां दृष्ट्वा पाण्डवैर्वाहिनीं रणे ।
व्यावृत्य चक्षुषी कोपाद्भारद्वाजोऽन्ववैक्षत ॥ ७
स तीव्रं कोपमास्थाय रथे समरदुर्जयः ।
व्यधमत्पाण्डवानीकं महाभ्राणीव मारुतः ॥ ८
रथानश्वान्नरान्नागानभिधावन्नितस्ततः ।
चचारोन्मत्तवद्द्रोणो वृद्धोऽपि तरुणो यथा ॥ ९
तस्य शोणितदिग्धाङ्गाः शोणास्ते वातरंहसः ।
आजानेया हया राजन्नविश्रान्ताः सुखं ययुः १०
तमन्तकमिव क्रुद्धमापतन्तं यतव्रतम् ।
दृष्ट्वा संप्राद्रवन्योधाः पाण्डवस्य ततस्ततः ॥ ११
तेषां प्राद्रवतां भीमः पुनरावर्ततामपि ॥
पश्यतां तिष्ठतां चासीच्छब्दः परमदारुणः ॥१२
शूराणां हर्षजननो भीरूणां भयवर्धनः ।
द्यावापृथिव्योर्विवरं पूरयामास सर्वतः ॥ १३
ततः पुनरपि द्रोणो नाम विश्रावयन्युधि ।
अकरोद्रौद्रमात्मानं किरञ्छरशतैः परान् ॥ १४
स तथा तेष्वनीकेषु पाण्डुपुत्रस्य मारिष ।
कालवन्न्यचरद्द्रोणो युवेव स्थविरो बली ॥ १५
उत्कृत्य च शिरांस्युग्रो बाहूनपि सुभूषणान् ।
कृत्वा शून्यान्रथोपस्थानुदक्रोशन्महारवान् ॥१६
तस्य हर्षप्रणादेन बाणवर्षेण च प्रभो
प्राकम्पन्त रणे योधा गावः शीतार्दिता इव ॥ १७
द्रोणस्य रथघोषेण मौर्वीनिष्पेषणेन च ।
धनुःशब्देन चाकाशे शब्दः समभवन्महान् ॥१८
अथास्य धनुषो बाणा निस्सरन्तः सहस्रशः ।
व्याप्य सर्वा दिशः पेतुर्नागाश्वरथपत्तिषु ॥ १९
तं कार्मुकमहावेगमस्त्रज्वलितपावकम् ।
द्रोणमासादयांचक्रुः पाञ्चालाः पाण्डवैः सह॥२०
सनागरथपत्त्यश्वान्प्राहिणोद्यमसादनम् ।
अचिरादकरोद्द्रोणो महीं शोणितकर्दमाम् ॥ २१
तन्वता परमास्त्राणि शरान्सततमस्यता ।
द्रोणेन विहितं दिक्षु शरजालमदृश्यत ॥ २२
पदातिषु रथाश्वेषु वारणेषु च सर्वशः ।
तस्य विद्युदिवाभ्रेषु चरन्केतुरदृश्यत ॥ २३
सकेकयानां प्रवरांश्च पञ्च
पाञ्चालराजं च शरैः प्रमथ्य ।
युधिष्ठिरानीकमदीनसत्त्वो
द्रोणोऽभ्ययात्कार्मुकबाणपाणिः ॥ २४

ह्लादनं योद्धुरानन्दजननम् ॥५४॥ सप्तमोऽध्यायः ॥ ७ ॥

भीमः शब्द इति संबन्धः ॥ १२ ॥ अष्टमोऽध्यायः ॥ ८॥

तं भीमसेनश्च धनंजयश्च
शिनेश्च नप्ता द्रुपदात्मजश्च ।
शैब्यात्मजः काशिपतिः शिबिश्च
दृष्ट्वा नदन्तो व्यकिरञ्छरौघैः ॥ २५
'तेषां शरा द्रोणशरैर्निकृत्ता
भूमावदृश्यन्त विवर्तमानाः ।
श्रेणीकृताः संयति मोघवेगा
द्वीपे नदीनामिव काशरोहाः ॥' २६
ते द्रोणबाणासनविप्रमुक्ताः
पतत्रिणः काञ्चनचित्रपुङ्खाः ।
भित्त्वा शरीराणि गजाश्वयूनां
जग्मुर्महीं शोणितदिग्धवाजाः ॥ २७
सा योधसङ्घैश्च रथैश्च भूमिः
शरैर्विभिन्नैर्गजवाजिभिश्च ।
प्रच्छाद्यमाना पतितैर्बभूव
समावृता द्यौरिव कालमेघैः ॥ २८
शैनेयभीमार्जुनवाहिनीशं
सौभद्रपाञ्चालसकाशिराजम् ।
अन्यांश्च वीरान्समरे ममर्द
द्रोणः सुतानां तव भूतिकामः ॥ २९
एतानि चान्यानि च कौरवेन्द्र
कर्माणि कृत्वा समरे महात्मा ।
प्रताप्य लोकानिव कालसूर्यो
द्रोणो गतः स्वर्गमितो हि राजन् ॥ ३०
एवं रुक्मरथः शूरो हत्वा शतसहस्रशः ।
पाण्डवानां रणे योधान्पार्षतेन निपातितः ॥ ३१
अक्षौहिणीमभ्यधिकां शूराणामनिवर्तिनाम् ।
निहत्य पश्चाद्धृतिमानगच्छत्परमां गतिम् ॥ ३२
पाण्डवैः सहपाञ्चालैरशिवैः क्रूरकर्मभिः ।
हतो रुक्मरथो राजन्कृत्वा कर्म सुदुष्करम् ॥ ३३
ततो निनादो भूतानामाकाशे समजायत ।
सैन्यानां च ततो राजन्नाचार्ये निहते युधि ॥ ३४
द्यां धरां खं दिशो वापि प्रदिशश्चानुनादयन् ।
अहो धिगिति भूतानां शब्दः समभवद्भृशम् ३५
देवताः पितरश्चैव पूर्वे ये चास्य बान्धवाः ।
ददृशुर्निहतं तत्र भारद्वाजं महारथम् ॥ ३६
पाण्डवास्तु जयं लब्ध्वा सिंहनादान्प्रचक्रिरे ।
सिंहनादेन महता समकम्पत मेदिनी ॥ ३७
'विचित्रजाम्बूनदभूषितध्वजं
महारथं रुक्मरथं निपातितम् ।
निशम्य कश्चिद्धि न हर्षमेयिवा-
नृते मृधे द्रुपदसुतान्ससृञ्जयान् ॥' ३८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

द्रोणमरणश्राविणो धृतराष्ट्रस्य तद्गुणानुवर्णनपूर्वकं शोचनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
किं कुर्वाणं रणे द्रोणं जघ्नुः पाण्डवसृञ्जयाः ।
तथा निपुणमस्त्रेषु सर्वशस्त्रभृतामपि ॥ १
रथः पर्यपतद्वाऽस्य धनुर्वाऽशीर्यतास्यतः ।
प्रमत्तो वाऽभवद्द्रोणो यथा मृत्युमुपेयिवान् ॥ २
कथं नु पार्षतस्तात शत्रुभिर्दुष्प्रधर्षणम् ।
किरन्तमिषुसङ्घातान्रुक्मपुङ्खाननेकशः ॥ ३
क्षिप्रहस्तं द्विजश्रेष्ठं कृतिनं चित्रयोधिनम् ।
दूरेषुपातिनं दान्तमस्त्रयुद्धेषु पारगम् ॥ ४
पाञ्चालपुत्रो न्यवधीद्दिव्यास्त्रधरमच्युतम् ।
कुर्वाणं दारुणं कर्म रणे यत्तं महारथम् ॥ ५
व्यक्तं हि दैवं बलवत्पौरुषादिति मे मतिः ।
यद्द्रोणो निहतः शूरः पार्षतेन महात्मना ॥ ६
अस्त्रं चतुर्विधं वीरे यस्मिन्नासीत्प्रतिष्ठितम् ।
तमिष्वस्त्रधराचार्यं द्रोणं शंससि मे हतम् ॥ ७

अस्यतः शरानिति शेषः ॥ २ ॥

श्रुत्वा हतं रुक्मरथं वैयाघ्रपरिवारणम्।
जातरूपपरिष्कारं नाद्य शोकमपानुदे ॥ ८
न नूनं परदुःखेन म्रियते कोऽपि सञ्जय।
यत्र द्रोणमहं श्रुत्वा हतं जीवामि मन्दधीः।
दैवमेव परं मन्ये नन्वनर्थं हि पौरुषम् ॥ ९
अश्मसारमयं नूनं हृदयं सुदृढं मम।
यच्छ्रुत्वा निहतं द्रोणं शतधा न विदीर्यते ॥१०
ब्राह्मे दैवे तथेष्वस्त्रे यमुपासन्गुणार्थिनः।
ब्राह्मणा राजपुत्राश्च स कथं मृत्युना हृतः ॥ ११
शोषणं सागरस्येव मेरोरिव विसर्पणम्।
पतनं भास्करस्येव न मृष्ये द्रोणपातनम् ॥ १२
दुष्टानां प्रतिषेद्धासीद्धार्मिकाणां च रक्षिता।
योऽहासीत्कृपणस्यार्थे प्राणानपि परंतपः ॥ १३
मन्दानां मम पुत्राणां जयाशा यस्य विक्रमे।
बृहस्पत्युशनस्तुल्यो बुद्ध्या स निहतः कथम् १४
'गुणानां सर्वयोधानां स्थितिरासीन्महाद्युतिः।
यं मृत्युर्वशगस्तिष्ठेत्स कथं मृत्युना हतः ॥' १५
ते च शोणा बृहन्तोऽश्वाश्छन्ना जालैर्हिरण्मयैः।
रथे वातजवा युक्ताः सर्वशस्त्रातिगा रणे ॥ १६
बलिनो हेषिणो दान्ताः सैन्धवाः साधुवाहिनः।
दृढाः संग्राममध्येषु कच्चिदासन्न विह्वलाः ॥ १७
करिणां बृंहतां युद्धे शङ्खदुन्दुभिनिःस्वनैः।
ज्याक्षेपशरवर्षाणां शस्त्राणां च सहिष्णवः ॥ १८
आशंसन्तः पराञ्जेतुं जितश्वासा जितव्यथाः।
हयाः पराजिताः शीघ्रा भारद्वाजरथोद्वहाः ॥ १९
ते स्म रुक्मरथे युक्ता नरवीरसमास्थिताः।
कथं नाभ्यतरंस्तात पाण्डवानामनीकिनीम् ॥२०
जातरूपपरिष्कारमास्थाय रथमुत्तमम्।
भारद्वाजः किमकरोद्युधि सत्यपराक्रमः ॥ २१
विद्यां यस्योपजीवन्ति सर्वलोकधनुर्धराः।
स सत्यसन्धो बलवान्द्रोणः किमकरोद्युधि ॥ २२
दिवि शक्रमिव श्रेष्ठं महामात्रं धनुर्भृताम्।
के नु तं रौद्रकर्माणं युद्धे प्रत्युद्ययू रथाः ॥ २३
ननु रुक्मरथं दृष्ट्वा प्राद्रवन्ति स्म पाण्डवाः।
दिव्यमस्त्रं विकुर्वाणं रणे तस्मिन्महाबलम् ॥ २४
उताहो सर्वसैन्येन धर्मराजः सहानुजः।
पाञ्चालप्रग्रहो द्रोणं सर्वतः समवारयत् ॥ २५
नूनमावारयत्पार्थो रथिनोऽन्यानजिह्मगैः।
ततो द्रोणं समहरत्पार्षतः पापकर्मकृत् ॥ २६
नह्यहं परिपश्यामि वधे कंचन शुष्मिणः।
धृष्टद्युम्नादृते रौद्रात्पाल्यमानात्किरीटिना ॥ २७
'उताहो सर्वसैन्येन धर्मराजः सहानुजः।
उत्सृज्य सर्वसैन्यानि द्रोणं तमभिदुद्रुवे ॥' २८
तैर्वृतः सर्वतः क्षुद्रैः पाञ्चालापशदैस्ततः।
केकयैश्चेदिकारूशैर्मत्स्यैरन्यैश्च भूमिपैः ॥ २९
व्याकुलीकृतमाचार्यं पिपीलैरुरगं यथा।
कर्मण्यसुकरे सक्तं जघानेति मतिर्मम ॥ ३०
योऽधीत्य चतुरो वेदान्साङ्गानाख्यानपञ्चमान्।
ब्राह्मणानां प्रतिष्ठासीत्स्रोतसामिव सागरः ॥३१
क्षत्रं च ब्रह्म चैवेह योऽभ्यतिष्ठत्परंतपः।
'दृप्तानां प्रतिषेद्धा च चक्षुरासीदचक्षुषाम् ॥ ३२
अमर्षी चावलिप्तेषु धार्मिकेषु च धार्मिकः।'
स कथं ब्राह्मणो वृद्धः शस्त्रेण वधमाप्तवान् ॥ ३३
अमर्षिणा मर्षितवान्क्लिश्यमानान्सदा मया।
अनर्हमाणान्कौन्तेयान्कर्मणस्तस्य तत्फलम् ॥ ३४
यस्य कर्मानुजीवन्ति लोके सर्वधनुर्भृतः।
स सत्यसन्धः सुकृती श्रीकामैर्निहतः कथम् ॥ ३५
दिवि शक्र इव श्रेष्ठो महासत्त्वो महाबलः।
स कथं निहतः पार्थैः क्षुद्रमत्स्यैर्यथा तिमिः ॥३६
क्षिप्रहस्तश्च बलवान्दृढधन्वारिमर्दनः।
न यस्य विजयाकाङ्क्षी विषयं प्राप्य जीवति ॥ ३७
यं द्वौ न जहतः शब्दौ जीवमानं कदाचन।
ब्राह्मश्च वेदकामानां ज्याघोषश्च धनुष्मताम् ॥ ३८
अदीनं पुरुषव्याघ्रं ह्रीमन्तमपराजितम्।
तमिष्वासवराचार्यं द्रोणं जघ्नुः कथं रथाः ॥ ३९
'नाहं मन्ये हतं द्रोणं स हि लोकमयोत्स्यत।

बलिनस्तेजस्विनः ॥ १७ ॥ महामात्रं प्रधानम् ॥ २३ ॥ पाञ्चालप्रग्रहः पाञ्चालः प्रग्रहो बन्धरज्जुर्यस्य ॥ २५ ॥ शुष्मिणस्तेजस्विनः ॥ २७ ॥ अपशदोऽधमः ॥ २९ ॥ आख्यानं पुराणभारतादि ॥ ३१ ॥ नवमोऽध्यायः ॥ ९ ॥

को हि शक्तो रणे जेतुमनाधृष्ययशोबलम् ॥ ४०
ब्रह्मकल्पो भवेद्ब्राह्मे क्षात्रे नारायणोपमः ।
ब्रह्मक्षत्रे च यस्यास्तां वशे स्थाणोरिवाखिले ॥ ४१
सर्वान्हि मामकान्वीरान्सहाश्वरथकुञ्जरान् ।
युधिष्ठिरस्य तपसा हतान्मन्यामहे कुरून् ॥' ४२
कथं सञ्जय दुर्धर्षमनाधृष्ययशोबलम् ।
पश्यतां पुरुषेन्द्राणां समरे पार्षतोऽवधीत् ॥ ४३
के पुरस्तादयुध्यन्त रक्षन्तो द्रोणमन्तिकात् ।
के नु पश्चादवर्तन्त गच्छतो दुर्गमां गतिम् ॥ ४४
केऽरक्षन्दक्षिणं चक्रं सव्यं के च महात्मनः ।
पुरस्तात्के च वीरस्य युध्यमानस्य संयुगे ॥ ४५
के च तस्मिंस्तनूस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन् ।
द्रोणस्य समरे वीराः केऽकुर्वन्त परां धृतिम् ॥ ४६
कच्चिन्नैनं भयान्मन्दाः क्षत्रिया व्यजहन्रणे ।
रक्षितारस्ततः शून्ये कच्चित्तैर्न हतः परैः ॥ ४७
न स पृष्ठमरेस्त्रासाद्रणे शौर्यात्प्रदर्शयेत् ।
परामप्यापदं प्राप्य स कथं निहतः परैः ॥ ४८
एतदार्येण कर्तव्यं कृच्छ्रास्वापत्सु सञ्जय ।
पराक्रमेद्यथा शक्त्या तच्च तस्मिन्प्रतिष्ठितम् ।
'यो यथाशक्ति युद्ध्येत द्विषद्भिः स्वांश्च पालयन्४९
कच्चिन्नैनं भयात्क्षुद्राः पार्थेभ्यः प्रददू रणे ।
गोमृभिस्तैः समुत्सृष्टः कच्चिन्नैष परैर्हतः ॥ ५०
धृष्टद्युम्नं प्रपश्यामि निघ्नन्तमिव ब्राह्मणम् ।
वार्यमाणं रणे तात द्रौणिनाऽमिततेजसा ॥' ५१
मुह्यते मे मनस्तात कथा तावन्निवार्यताम् ।
भूयस्तु लब्धसंज्ञस्त्वां परिपृच्छामि सञ्जय ॥ ५२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

द्रोणमरणश्रवणेन मूर्छितस्य धृतराष्ट्रस्य परिचारिकाभिर्जलसेचनादिना समुद्बोधनम् ॥ १ ॥ धृतराष्ट्रेण सञ्जयंप्रति युद्धकथनचोदना ॥ २ ॥

वैशंपायन उवाच ।
एवं पृष्ट्वा सूतपुत्रं हृच्छोकेनार्दितो भृशम् ।
जये निराशः पुत्राणां धृतराष्ट्रोऽपतत्क्षितौ ॥ १
तं विसंज्ञं निपतितं सिषिचुः परिचारिकाः ।
जलेनात्यर्थशीतेन जीवन्त्यः पुण्यगन्धिना ॥ २
पतितं चैनमालोक्य समस्ता भरतस्त्रियः ।
परिवव्रुर्महाराजमस्पृशंश्चैव पाणिभिः ॥ ३
उत्थाप्य चैनं शनकै राजानं पृथिवीतलात् ।
आसनं प्रापयामासुर्बाष्पकण्ठ्यो वराननाः ॥ ४
आसनं प्राप्य राजा तु मूर्च्छयाऽभिपरिप्लुतः ।
निश्चेष्टोऽतिष्ठत तदा वीज्यमानः समन्ततः ॥ ५
स लब्ध्वा शनकैः संज्ञां वेपमानो महीपतिः ।
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ॥ ६
धृतराष्ट्र उवाच ।
यः स उद्यन्निवादित्यो ज्योतिषा प्रणुदंस्तमः ।
अजातशत्रुमायान्तं कस्तं द्रोणादवारयत् ॥ ७
प्रभिन्नमिव मातङ्गं यथा क्रुद्धं तरस्विनम् ।
प्रसन्नवदनं दृष्ट्वा प्रतिद्विरदगामिनम् ॥ ८
वासितासङ्गमे यद्वदजय्यं प्रतियूथपैः ।
निजघान रणे वीरान्वीरः पुरुषसत्तमः ॥ ९
यो ह्येको हि महावीर्यो निर्दहेद्घोरचक्षुषा ।
कृत्स्नं दुर्योधनबलं धृतिमान्सत्यसङ्गरः ॥ १०
चक्षुर्हणं जये सक्तमिष्वासधरमच्युतम् ।
दान्तं बहुमतं लोके के शूराः पर्यवारयन् ॥ ११
के दुष्प्रधर्षं राजानमिष्वासधरमच्युतम् ।
समासेदुर्नरव्याघ्रं कौन्तेयं तत्र मामकाः ॥ १२
तरसैवाभिपद्याथ यो वै द्रोणमुपाद्रवत् ।
यः करोति महत्कर्म शत्रूणां वै महाबलः ॥ १३
महाकायो महोत्साहो नागायुतसमो बले ।
तं भीमसेनमायान्तं के शूराः पर्यवारयन् ॥ १४

सः प्रसिद्धः । तमजातशत्रुं आयान्तं दृष्ट्वा द्रोणात्कः अवारयदित्यन्वयः ॥ ७ ॥

यदायाज्जलदप्रख्यो रथः परमवीर्यवान् ।
पर्जन्य इव बीभत्सुस्तुमुलामशनीं सृजन् ॥ १५
विसृजञ्छरजालानि वर्षाणि मघवानिव ।
अवस्फूर्जन्दिशः सर्वास्तलनेमिस्वनेन च ॥ १६
चापविद्युत्प्रभो घोरो रथगुल्मवलाहकः ।
सनेमिघोषस्तनितः शरशब्दातिबन्धुरः ॥ १७
रोषनिर्जितजीमूतो मनोभिप्रायशीघ्रगः ।
मर्मातिगो बाणधरस्तुमुलः शोणितोदकैः ॥ १८
संप्लावयन्दिशः सर्वा मानवैरास्तरन्महीम् ।
भीमनिःस्वनितो रौद्रो दुर्योधनपुरोगमान् ॥१९
युद्धेऽभ्यपिश्चद्विजयो गार्ध्रपत्रैः शिलाशितैः ।
गाण्डीवं धारयन्धीमान्कीदृशं वो मनस्तदा ॥२०
इषुसंबाधमाकाशं कुर्वन्कपिवरध्वजः ।
यदायात्कथमासीत्तु तदा पार्थं समीक्षताम् ॥ २१
कच्चिद्गाण्डीवशब्देन न प्रणश्यति वै बलम् ।
यद्वः सभैरवं कुर्वन्नर्जुनो भृशमन्वयात् ॥ २२
कच्चिन्नापानुदत्प्राणानिषुभिर्वो धनंजयः ।
वातो वेगादिवाविध्यन्मेघाञ्शरगणैर्नृपान् ॥२३
को हि गाण्डीवधन्वानं रणे सोढुं नरोऽर्हति ।
यमुपश्रुत्य सेनाग्रे जनः सर्वो विदीर्यते ॥ २४
यत्सेनाः समकम्पन्त यद्वीरानस्पृशद्भयम् ।
के तत्र नाजहुर्द्रोणं के क्षुद्राः प्राद्रवन्भयात् ॥ २५
के वा तत्र तनूस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन् ।
अमानुषाणां जेतारं युद्धेष्वपि धनंजयम् ॥ २६
न च वेगं सिताश्वस्य विसहिष्यन्ति मामकाः ।
गाण्डीवस्य च निर्घोषं प्रावृड्जलदनिःस्वनम् ॥२७
विष्वक्सेनो यस्य यन्ता यस्य योद्धा धनञ्जयः ।
अशक्यः स रथो जेतुं मन्ये देवासुरैरपि ॥ २८
सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः ।
मेधावी निपुणो धीमान्युधि सत्यपराक्रमः ॥ २९
आरावं विपुलं कुर्वन्व्यथयन्सर्वसैनिकान् ।
यदायान्नकुलो द्रोणं के शूराः पर्यवारयन् ॥ ३०
आशीविष इव क्रुद्धः सहदेवो यदाऽभ्ययात् ।
कदनं करिष्यञ्शत्रूणां तेजसा दुर्जयो युधि ॥ ३१
आर्यव्रतममोघेषुं ह्रीमन्तमपराजितम् ।
सहदेवं तमायान्तं के शूराः पर्यवारयन् ॥ ३२
यस्तु सौवीरराजस्य प्रमथ्य महतीं चमूम् ।
आदत्त महिषीं भोजां काम्यां सर्वाङ्गशोभनाम् ३३
सत्यं धृतिश्च शौर्यं च ब्रह्मचर्यं च केवलम् ।
सर्वाणि युयुधानेऽस्मिन्नित्यानि पुरुषर्षभे ॥ ३४
बलिनं सत्यकर्माणमदीनमपराजितम् ।
वासुदेवसमं युद्धे वासुदेवादनन्तरम् ॥ ३५
धनञ्जयोपदेशेन श्रेष्ठमिष्वस्त्रकर्मणि ।
पार्थेन सममस्त्रेषु कस्तं द्रोणादवारयत् ॥ ३६
वृष्णीनां प्रवरं वीरं शूरं सर्वधनुष्मताम् ।
रामेण सममस्त्रेषु यशसा विक्रमेण च ॥ ३७
सत्यं धृतिर्मतिः शौर्यं ब्राह्मं चास्त्रमनुत्तमम् ।
सात्वते तानि सर्वाणि त्रैलोक्यमिव केशवे ॥३८
तमेवंगुणसंपन्नं दुर्वारमपि दैवतैः ।
समासाद्य महेष्वासं के शूराः पर्यवारयन् ॥ ३९
पाञ्चालेषूत्तमं वीरमुत्तमाभिजनप्रियम् ।
नित्यमुत्तमकर्माणमुत्तमौजसमाहवे ॥ ४०
युक्तं धनञ्जयहिते ममानर्थार्थमुत्थितम् ।
यमवैश्रवणादित्यमहेन्द्रवरुणोपमम् ॥ ४१
महारथं समाख्यातं द्रोणायोद्यतमाहवे ।
त्यजन्तं तुमुले प्राणान्के शूराः समवारयन् ॥४२
एकोपसृत्य चेदिभ्यः पाण्डवान्यः समाश्रितः ।
धृष्टकेतुं समायान्तं द्रोणं कस्तं न्यवारयत् ॥४३
योऽवधीत्केतुमान्वीरो राजपुत्रं दुरासदम् ।
अपरान्तगिरिद्वारे द्रोणात्कस्तं न्यवारयत् ॥ ४४
स्त्रीपुंसयोर्नरव्याघ्रो यः स वेद गुणागुणान् ।
शिखण्डिनं याज्ञसेनिमम्लानमनसं युधि ॥ ४५
देवव्रतस्य समरे हेतुं मृत्योर्महात्मनः ।
द्रोणायाभिमुखं यान्तं के शूराः पर्यवारयन् ॥४६
यस्मिन्नभ्यधिका वीरे गुणाः सर्वे धनञ्जयात् ।
स्मिन्नस्त्राणि सत्यं च ब्रह्मचर्यं च सर्वदा ॥४७

यदा अयात् यदा च दुर्योधनपुरोगमान्गार्ध्रपत्रैरभ्यषिञ्चत्तदा वो मनः कीदृशमभूदिति षष्ठेनान्वयः ॥ १५ ॥ युयुधाने सात्यकौ ॥ ३४ ॥ सात्वते सात्यकौ ॥ ३८ ॥

वासुदेवसमं वीर्ये धनञ्जयसमं बले ।
तेजसाऽऽदित्यसदृशं बृहस्पतिसमं मतौ ॥ ४८
अभिमन्युं महात्मानं व्यात्ताननमिवान्तकम् ।
द्रोणायाभिमुखं यान्तं के शूराः समवारयन्॥४९
तरुणस्तरुणप्रज्ञः सौभद्रः परवीरहा ।
यदाभ्यधावद्वै द्रोणं तदाऽऽसीद्वो मनः कथं ५०
द्रौपदेया नरव्याघ्राः समुद्रमिव सिन्धवः ।
यद्द्रोणमाद्रवन्सङ्ख्ये के शूरास्तान्व्यवारयन् ॥ ५१
एते द्वादश वर्षाणि क्रीडामुत्सृज्य बालकाः ।
अस्त्रार्थमवसन्भीष्मे बिभ्रतो व्रतमुत्तमम् ॥ ५२
क्षत्रञ्जयः क्षत्रदेवः क्षत्रवर्मा च मानदः ।
धृष्टद्युम्नात्मजा वीराः के तान्द्रोणादवारयन् ५३
शताद्विशिष्टं यं युद्धे सममन्यन्त वृष्णयः ।
चेकितानं महेष्वासं कस्तं द्रोणादवारयत् ॥ ५४
वार्धक्षेमिः कलिङ्गानां यः कन्यामाहरद्युधि ।
अनाधृष्टिरदीनात्मा कस्तं द्रोणादवारयत् ॥ ५५
भ्रातरः पञ्च कैकेया धार्मिकाः सत्यविक्रमाः ।
इन्द्रगोपकसंकाशा रक्तवर्मायुधध्वजाः ॥ ५६
मातृष्वसुः सुता वीराः पाण्डवानां जयार्थिनः ।
तान्द्रोणं हन्तुमायातान्के वीराः पर्यवारयन् ५७
यं योधयन्तो राजानो नाजयन्वारणावते ।
षण्मासानपि संरब्धा जिघांसन्तो युधां पतिं ५८
धनुष्मतां वरं शूरं सत्यसन्धं महाबलम् ।
द्रोणात्कस्तं नरव्याघ्रं युयुत्सुं पर्यवारयत् ॥ ५९
यः पुत्रं काशिराजस्य वाराणस्यां महारथम् ।
समरे स्त्रीषु गृध्यन्तं भल्लेनापाहरद्रथात् ॥ ६०
धृष्टद्युम्नं महेष्वासं पार्थानां मन्त्रधारिणम् ।
युक्तं दुर्योधनानर्थे सृष्टं द्रोणवधाय च ॥ ६१
निर्दहन्तं रणे योधान्दारयन्तं च सर्वतः ।
द्रोणाभिमुखमायान्तं के शूराः पर्यवारयन् ॥६२
उत्सङ्ग इव संवृद्धं द्रुपदस्यास्त्रवित्तमम् ।
शैखण्डिनं शस्त्रगुप्तं के च द्रोणादवारयन् ॥ ६३
य इमां पृथिवीं कृत्स्नां चर्मवत्समवेष्टयत् ।
महता रथघोषेण मुख्यारिघ्नो महारथः ॥ ६४
दशाश्वमेधानाजह्रे स्वन्नपानाप्तदक्षिणान् ।
निरर्गलान्सर्वमेधान्पुत्रवत्पालयन्प्रजाः ॥ ६५
विसृष्टा दक्षिणा यस्य गङ्गाजलमवारयत् ।
गङ्गास्रोतसि यावत्यः सिकता अप्यशेषतः ।
तावतीर्गा ददौ वीर उशीनरसुतोऽध्वरे ॥ ६६
न पूर्वे नापरे चक्रुरिदं केचन मानवाः ।
इतीदं चुक्रुशुर्देवाः कृते कर्मणि दुष्करे ॥ ६७
पश्यामस्त्रिषु लोकेषु न तं संस्थास्नुचारिषु ।
जातं चापि जनिष्यन्तं द्वितीयं चापि सांप्रतम्॥६८
अन्यमौशीनराच्छैब्याद्धुरो वोढारमित्युत ।
गतिं यस्य न यास्यन्ति मानुषा लोकवासिनः ॥६९
तस्य नप्तारमायान्तं शैब्यं कः समवारयत् ।
द्रोणायाभिमुखं यत्तं व्यात्ताननमिवान्तकम्॥ ७०
विराटस्य रथानीकं मत्स्यस्यामित्रघातिनः ।
प्रेप्सन्तं समरे द्रोणं के वीराः पर्यवारयन्॥ ७१
सद्यो वृकोदराज्जातो महाबलपराक्रमः ।
मायावी राक्षसो वीरो यस्मान्मम महद्भयम्॥ ७२
पार्थानां जयकामं तं पुत्राणां मम कण्टकम् ।
घटोत्कचं महात्मानं कस्तं द्रोणादवारयत् ॥ ७३
एते चान्ये च बहवो येषामर्थाय सञ्जय ।
त्यक्तारः संयुगे प्राणान्किं तेषामजितं युधि ॥ ७४
येषां च पुरुषव्याघ्रः शार्ङ्गधन्वा व्यपाश्रयः ।
हितार्थी चापि पार्थानां कथं तेषां पराजयः ॥ ७५
लोकानां गुरुरत्यर्थं लोकनाथः सनातनः ।
नारायणो रणे नाथो दिव्यो दिव्यात्मकः प्रभुः ७६
यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः ।
तान्यहं कीर्तयिष्यामि भक्त्या स्थैर्यार्थमात्मनः ७७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि दशमोऽध्यायः ॥ १० ॥

---

स्थास्नुचारिषु स्थावरजङ्गमात्मकेषु । स्वमित्यस्य व्यवहितेन पश्याम इत्यनेन संबन्धः ॥ ६८ ॥ दशमोऽध्यायः ॥ १०

## एकादशोऽध्यायः ॥ ११ ॥

धृतराष्ट्रेण प्रसङ्गाद्भक्त्युद्रेकेण श्रीकृष्णचरित्रानुकीर्तनम् ॥ १ ॥ धृतराष्ट्रेण बहुधा विचिन्त्य सञ्जयंप्रति युद्धकथनचोदना ॥ २ ॥

धृतराष्ट्र उवाच ।
शृणु दिव्यानि कर्माणि वासुदेवस्य सञ्जय ।
कृतवान्यानि गोविन्दो यथा नान्यः पुमान्कचित् १
संवर्धता गोपकुले बालेनैव महात्मना ।
विख्यापितं बलं बाह्वोस्त्रिषु लोकेषु सञ्जय ॥ २
पूतनां शकटं हत्वा केशिनं चैव वाजिनम् ।
ऋषभं धेनुकं चैव अरिष्टं च महाबलम् ॥ ३
दावान्मुक्त्वा महाबाहुर्धृत्वा गोवर्धनं गिरिम् ।
चाणूरं मुष्टिकं चैव रङ्गमध्ये निहत्य च ॥ ४
प्रलम्बं नरकं जम्भं पीठं चापि महासुरम् ।
मुरुं चान्तकसंकाशमवधीत्पुष्करेक्षणः ॥ ५
तथा कंसो महातेजा जरासन्धेन पालितः ।
विक्रमेणैव कृष्णेन सगणः पातितो रणे ॥ ६
सुनामा रणविक्रान्तः समग्राक्षौहिणीपतिः ।
भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्यवान् ॥ ७
बलदेवद्वितीयेन कृष्णेनामित्रघातिना ।
तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ॥ ८
दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः ।
आराधितः सदारेण स चास्मै प्रददौ वरान् ॥ ९
तथा गान्धारराजस्य सुतां वीरः स्वयंवरे ।
निर्जित्य पृथिवीपालानावहत्पुष्करेक्षणः ॥ १०
अमृष्यमाणा राजानो यस्य जात्या हया इव ।
रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः ॥ ११
जरासन्धं महाबाहुमुपायेन जनार्दनः ।
परेण घातयामास समग्राक्षौहिणीपतिम् ॥ १२
चेदिराजं च विक्रान्तं राजसेनापतिं बली ।
अर्घे विवदमानं च जघान पशुवत्तदा ॥ १३
सौभं दैत्यपुरं स्वस्थं शाल्वगुप्तं दुरासदम् ।
समुद्रकुक्षौ विक्रम्य पातयामास माधवः ॥ १४
अङ्गान्वङ्गान्कलिङ्गांश्च मागधान्काशिकोसलान् ।
वात्स्यगार्ग्यकरूषांश्च पौण्ड्रांश्चाप्यजयद्रणे ॥ १५
आवन्त्यान्दाक्षिणात्यांश्च पार्वतीयान्दशेरकान् ।
काश्मीरकानौरसिकान्पिशाचांश्च समुद्गलान् ॥ १६
काम्भोजान्वाटधानांश्च चोलान्पाण्ड्यांश्च सञ्जय ।
त्रिगर्तान्मालवांश्चैव दरदांश्च सुदुर्जयान् ॥ १७
नानादिग्भ्यश्च संप्राप्तान्खशांश्चैव शकांस्तथा ।
जितवान्पुण्डरीकाक्षो यवनं च सहानुगम् ॥ १८
प्रविश्य मकरावासं यादोगणनिषेवितम् ।
जिगाय वरुणं सङ्ख्ये सलिलान्तर्गतं पुरा ॥ १९
युधि पञ्चजनं हत्वा दैत्यं पातालवासिनम् ।
पाञ्चजन्यं हृषीकेशो दिव्यं शङ्खमवाप्तवान् ॥ २०
खाण्डवे पार्थसहितस्तोषयित्वा हुताशनम् ।
आग्नेयमस्त्रं दुर्धर्षं चक्रं लेभे महाबलः ॥ २१
वैनतेयं समारुह्य त्रासयित्वाऽमरावतीम्
महेन्द्रभवनाद्वीरः पारिजातमुपानयत् ॥ २२
तच्च मर्षितवाञ्शक्रो जानंस्तस्य पराक्रमम्
राज्ञां चाप्यजितं कंचित्कृष्णेनेह न शुश्रुम ॥ २३
यच्च तन्महदाश्चर्यं सभायां मम सञ्जय ।
कृतवान्पुण्डरीकाक्षः कस्तदन्य इहार्हति ॥ २४
यच्च भक्त्या प्रसन्नोऽहमद्राक्षं कृष्णमीश्वरम्
तन्मे सुविदितं सर्वं प्रत्यक्षमिव चागमम् ॥ २५
नान्तो विक्रमयुक्तस्य बुद्ध्या युक्तस्य वा पुनः ।
कर्मणां शक्यते गन्तुं हृषीकेशस्य सञ्जय ॥ २६
तथा गदश्च साम्बश्च प्रद्युम्नोऽथ विदूरथः ।
अगावहोऽनिरुद्धश्च चारुदेष्णः ससारणः ॥ २७
उल्मुको निशठश्चैव झिल्ली बभ्रुश्च वीर्यवान् ।
पृथुश्च विपृथुश्चैव शमीकोऽथारिमेजयः ॥ २८
एतेऽन्ये बलवन्तश्च वृष्णिवीराः प्रहारिणः ।
कथंचित्पाण्डवानीकं श्रयेयुः समरे स्थिताः ॥ २९
आहूता वृष्णिवीरेण केशवेन महात्मना ।

विक्रमेणैव अत्र धिना ॥ ६ ॥ परेण भीमेम ॥ १२ ॥ एकादशोऽध्यायः ॥ ११ ॥

ततः संशयितं सर्वं भवेदिति मतिर्मम ॥ ३०
नागायुतबलो वीरः कैलासशिखरोपमः ।
वनमाली हली रामस्तत्र यत्र जनार्दनः ॥ ३१
यमाहुः सर्वपितरं वासुदेवं द्विजातयः ।
अपि वा ह्येष पाण्डूनां योत्स्यतेऽर्थाय सञ्जय ॥ ३२
स यदा तात संनह्येत्पाण्डवार्थाय सञ्जय ।
न तदा प्रतिसंयोद्धा भविता तत्र कश्चन ॥ ३३
यदि स्म कुरवः सर्वे जयेयुर्नाम पाण्डवान् ।
वार्ष्णेयोऽर्थाय तेषां वै गृह्णीयाच्छस्त्रमुत्तमम् ॥ ३४
ततः सर्वान्नरव्याघ्रो हत्वा नरपतीन्रणे ।
कौरवांश्च महाबाहुः कुन्त्यै दद्यात्स मेदिनीम् ॥ ३५
यस्य यन्ता हृषीकेशो योद्धा यस्य धनञ्जयः ।
रथस्य तस्य कः सङ्ख्ये प्रत्यनीको भवेद्रथः ॥ ३६
न केनचिदुपायेन कुरूणां दृश्यते जयः ।
तस्मान्मे सर्वमाचक्ष्व यथा युद्धमवर्तत ॥ ३७
अर्जुनः केशवस्यात्मा कृष्णोऽप्यात्मा किरीटिनः ।
अर्जुने विजयो नित्यं कृष्णे कीर्तिश्च शाश्वती ॥ ३८
सर्वेष्वपि च लोकेषु बीभत्सुरपराजितः ।
प्राधान्येनैव भूयिष्ठममेयाः केशवे गुणाः ॥ ३९
मोहाद्दुर्योधनः कृष्णं यो न वेत्तीह केशवम् ।
मोहितो दैवयोगेन मृत्युपाशपुरस्कृतः ॥ ४०
न वेद कृष्णं दाशार्हमर्जुनं चैव पाण्डवम् ।
महात्मानौ नरनारायणावुभौ ॥ ४१
एकात्मानौ द्विधाभूतौ दृश्येते मानवैर्भुवि ।
मनसापि हि दुर्धर्षौ सेनामेतां यशस्विनौ ॥ ४२
नाशयेतामिहेच्छन्तौ मानुषत्वाच्च नेच्छतः ।
युगस्येव विपर्यासो लोकानामिव मोहनम् ॥ ४३
भीष्मस्य च वधस्तात द्रोणस्य च महात्मनः ।
न ह्येव ब्रह्मचर्येण न वेदाध्ययनेन च ॥ ४४
न क्रियाभिर्न चास्त्रेण मृत्योः कश्चिन्निवार्यते ।
लोकसंभावितौ वीरौ कृतास्त्रौ युद्धदुर्मदौ ॥ ४५
भीष्मद्रोणौ हतौ श्रुत्वा किंनु जीवामि सञ्जय ।
यां तां श्रियमसूयामः पुरा दृष्ट्वा युधिष्ठिरे ॥ ४६
अद्य तामनुजानीमो भीष्मद्रोणवधेन ह ।
मत्कृते चाप्यनुप्राप्तः कुरूणामेष संक्षयः ॥ ४७
पक्वानां हि वधे सूत वज्रायन्ते तृणान्युत ।
अनन्तमिदमैश्वर्यं लोके प्राप्तो युधिष्ठिरः ॥ ४८
यस्य कोपान्महात्मानौ भीष्मद्रोणौ निपातितौ ।
प्राप्तः प्रकृतितो धर्मो न धर्मो मामकान्प्रति ॥ ४९
क्रूरः सर्वविनाशाय कालोऽसौ नातिवर्तते ।
अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः ।
अन्यथैव प्रपद्यन्ते दैवादिति मतिर्मम ॥ ५०
तस्मादपरिहार्येऽर्थे संप्राप्ते कृच्छ्र उत्तमे ।
अपारणीये दुश्चिन्त्ये यथाभूतं प्रचक्ष्व मे ॥ ५१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

द्रोणचोदितेन दुर्योधनेन युधिष्ठिरस्य जीवग्राहं ग्रहणवरणम् ॥ १ ॥ द्रोणेन अर्जुनासन्निधाने तद्ग्रहणे प्रतिज्ञाते दुर्योधनेन तदुद्घोषणम् ॥ २ ॥

सञ्जय उवाच ।
'शुश्रूषस्व स्थिरो भूत्वा शंसतो मम भारत ।'
हन्त ते कथयिष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
यथा सत्यपरो द्रोणः सादितः पाण्डुसृञ्जयैः ॥ १
सेनापतित्वं संप्राप्य भारद्वाजो महारथः ।
मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत् ॥ २
यत्कौरवाणामृषभादापगेयादनन्तरम् ।
सैनापत्येन त्वया राजन्नद्य सत्कृतवानहम् ॥ ३
सदृशं कर्मणस्तस्य फलं प्राप्नुहि भारत ।
करोमि कामं कं तेऽद्य प्रवृणीष्व यमिच्छसि ॥ ४
सञ्जय उवाच ।
ततो दुर्योधनो राजा कर्णदुःशासनादिभिः ।
संमन्त्र्योवाच दुर्धर्षमाचार्यं जयतां वरम् ॥ ५
ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम् ।

गृहीत्वा रथिनां श्रेष्ठं मत्समीपमिहानय ॥ ६
'इच्छेयं वै महात्मानं धर्मात्मानं युधिष्ठिरम् ।
भ्रातृणां पश्यतामेव जीवग्राहेण मे द्विज ॥ ७
गृहीत्वा रथिनां श्रेष्ठं मत्सकाशमिहानय ।
प्रीणाम्यनेन कार्येण ससुहृज्जनबान्धवः ॥ ८
सञ्जय उवाच ।
ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः ।
सेनां प्रहर्षयन्सर्वामिदं वचनमब्रवीत् ॥ ९
धन्यः कुन्तीसुतो राजन्यस्य ग्रहणमिच्छसि ।
न वधं तस्य दुर्धर्ष वरमद्य प्रयाचसे ॥ १०
किमर्थं च नरव्याघ्र न वधं तस्य काङ्क्षसे ।
नाशंससि क्रियामेतां मत्तो दुर्योधन ध्रुवम् ॥११
आहोस्विद्धर्मराजस्य द्वेष्टा कश्चिन्न विद्यते ।
यदीच्छसि त्वं जीवन्तं कुलं रक्षसि चात्मनः १२
अथवा भरतश्रेष्ठ निर्जित्य युधि पाण्डवान् ।
राज्यांशं प्रति दत्त्वा च सौभ्रात्रं कर्तुमिच्छसि १३
धन्यः कुन्तीसुतो राजा सुजातं चास्य धीमतः ।
अजातशत्रुता सत्या तस्य यत्स्निह्यते भवान् ॥१४
सञ्जय उवाच ।
द्रोणेन चैवमुक्तस्य तव पुत्रस्य भारत ।
सहसा निःसृतो भावो योऽस्य नित्यं हृदि स्थितः १५
नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि ।
तस्मात्तव सुतो राजन्प्रहृष्टो वाक्यमब्रवीत् ॥ १६
वधे कुन्तीसुतस्याजौ नाचार्य विजयो मम ।
हते युधिष्ठिरे पार्था हन्युः सर्वान्हि नो ध्रुवम् ॥१७
नैव शक्या रणे सर्वे निहन्तुममरैरपि ॥ १८
'यदि सर्वे हनिष्यन्ते पाण्डवाः ससुता मृधे ।
ततः कृत्स्नं वशे कृत्वा निःशेषं नृपमण्डलम् ।
ससागरवनां स्फीतां विजित्य वसुधामिमाम् १९
विष्णुर्दास्यति कृष्णायै कुन्त्यै वा पुरुषोत्तमः ।'
यद्येष चैषां शेषः स्यात्स एवास्मान्न शेषयेत् ॥२०
सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते ।
'तस्मिञ्जीवति चायाते ह्युपायैर्बहुभिः कृतैः ।'
पुनर्यास्यन्त्यरण्याय पाण्डवास्तमनुव्रताः ॥ २१
सोऽयं मम जयो व्यक्तं दीर्घकालं भविष्यति ।
अतो न वधमिच्छामि धर्मराजस्य कर्हिचित् ॥२२
सञ्जय उवाच ।
तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽर्थतत्त्ववित् ।
तं वरं सान्तरं तस्मै ददौ संचिन्त्य बुद्धिमान् २३
द्रोण उवाच ।
न चेद्युधिष्ठिरं वीरः पालयेदर्जुनो युधि ।
मन्यस्व पाण्डवश्रेष्ठमानीतं वशमात्मनः ॥ २४
न हि शक्यो रणे पार्थः सेन्द्रैर्देवासुरैरपि ।
प्रत्युद्यातुमतस्तात न तस्माद्धर्षयाम्यहम् ॥ २५
असंशयं स मे शिष्यो मत्पूर्वश्चास्त्रकर्मणि ।
तरुणः सुकृती युक्त एकायनगतश्च सः ॥ २६
अस्त्राणीन्द्राच्च रुद्राच्च भूयांसि समवाप्तवान् ।
अमर्षितश्च ते राजंस्ततो नामर्षयाम्यहम् ॥ २७
स चापक्रम्यतां युद्धाद्येनोपायेन शक्यते ।
अपनीते ततः पार्थे धर्मराजो जितस्त्वया ॥२८
ग्रहणे हि जयस्तस्य न वधे पुरुषर्षभ ।
'ग्रहणं हि वधात्तस्य धर्मराजस्य मन्यसे ।'
अनेनैवाभ्युपायेन ग्रहणं समुपैष्यसि ॥ २९
अहं गृहीत्वा राजानं सत्यधर्मपरायणम् ।
आनयिष्यामि ते राजन्वशमद्य न संशयः ॥३०
यदि स्थास्यति संग्रामे मुहूर्तमपि मेऽग्रतः ।
अपनीते नरव्याघ्रे कुन्तीपुत्रे धनञ्जये ॥ ३१
फल्गुनस्य समीपे तु न हि शक्यो युधिष्ठिरः ।
ग्रहीतुं समरे राजन्सेन्द्रैरपि सुरासुरैः ॥ ३२
सञ्जय उवाच ।
'एवमुक्ते तदा तस्मिन्युद्धे देवासुरोपमे ।'
सान्तरं तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे ।
गृहीतं तममन्यन्त तव पुत्राः सुबालिशाः ॥ ३३
ततो दुर्योधनेनापि ग्रहणं पाण्डवस्य तत् ।

---

एतां वधरूपां क्रियां मत्तो नाशंससि न संभावयसि ॥ ११॥ तदिच्छसि त्वं इति क. ख. पाठः ॥ १२ ॥ सुजातं शोभनं जन्म ॥ १४ ॥ व्यक्तं नियतम् ॥ २२ ॥ मत्पूर्वः अहं पूर्वो गुरुर्यस्य । एकायनगतः जयमरणान्यतरनिश्चयवान् ॥ २६ ॥

'स्कन्धावारेषु सर्वेषु यथास्थानेषु मारिष।'
सैन्यस्थानेषु सर्वेषु सुघोषितमरिंदम ॥ ३४
पाण्डवेयेषु सापेक्षं द्रोणं जानाति ते सुतः।
ततः प्रतिज्ञास्थैर्यार्थं स मन्त्रो बहुलीकृतः ॥ ३५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

अर्जुनेन द्रोणप्रतिज्ञाभीतस्य युधिष्ठिरस्य समाश्वासनम् ॥ १ ॥ युद्धारम्भो द्रोणपराक्रमश्च ॥ २ ॥

सञ्जय उवाच
सान्तरे तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे।
ततस्ते सैनिकाः श्रुत्वा तं युधिष्ठिरनिग्रहम्।
सिंहनादरवांश्चक्रुर्बाहुशब्दांश्च कृत्स्नशः ॥ १
तच्च सर्वं यथान्यायं धर्मराजेन भारत।
आप्तैश्चारैः परिज्ञातं भारद्वाजचिकीर्षितम् ॥ २
ततः सर्वान्समानाय्य भ्रातॄनन्यांश्च सर्वशः।
अब्रवीद्धर्मराजस्तु धनञ्जयमिदं वचः ॥ ३
श्रुतं ते पुरुषव्याघ्र द्रोणस्याद्य चिकीर्षितम्।
यथा तन्न भवेत्सत्यं तथा नीतिर्विधीयताम् ॥ ४
सान्तरं हि प्रतिज्ञातं द्रोणेनामित्रघातिना।
तच्चान्तरममोघेषौ त्वयि तेन समाहितम् ॥ ५
तत्त्वमद्य महाबाहो युध्यस्व मदनन्तरम्।
यथा दुर्योधनः कामं नेमं द्रोणादवाप्नुयात् ॥ ६
अर्जुन उवाच
यथा मे न वधः कार्य आचार्यस्य कथंचन।
तथा तव परित्यागो न मे राजंश्चिकीर्षितः ॥ ७
अप्येवं पाण्डव प्राणानुत्सृजेयमहं युधि।
प्रतियाताऽहमाचार्यं त्वां न जह्यां कथंचन ॥ ८
त्वां निगृह्याहवे राजन्धार्तराष्ट्रो यमिच्छति।
न स तं जीवलोकेऽस्मिन्कामं प्राप्ता कथंचन ॥ ९
प्रपतेद्द्यौः सनक्षत्रा पृथिवी शकली भवेत्।
न त्वां द्रोणो निगृह्णीयाज्जीवमाने मयि ध्रुवम् ॥ १०
यदि तस्य रणे साह्यं कुरुते वज्रभृत्स्वयम्।
विष्णुर्वा सहितो देवैर्न त्वां प्राप्स्यत्यसौ मृधे ॥ ११
मयि जीवति राजेन्द्र न भयं कर्तुमर्हसि।
द्रोणादस्त्रभृतां श्रेष्ठात्सर्वशस्त्रभृतामपि ॥ १२
अन्यच्च ब्रूयां राजेन्द्र प्रतिज्ञां मम निश्चलाम् ॥ १३
न स्मराम्यनृतं तावन्न स्मरामि पराजयम्।
न स्मरामि प्रतिश्रुत्य विस्मृत्य मनसाऽकृतम् ॥ १४
सञ्जय उवाच।
ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चानकैः सह।
प्रावाद्यन्त महाराज पाण्डवानां निवेशने ॥ १५
सिंहनादश्च संजज्ञे पाण्डवानां महात्मनाम्।
धनुर्ज्यातलशब्दश्च गगनस्पृक्सुभैरवः ॥ १६
श्रुत्वा शङ्खस्य निर्घोषं पाण्डवस्य महौजसः।
त्वदीयेष्वप्यनीकेषु वादित्राण्यभिजघ्निरे ॥ १७
ततो व्यूढान्यनीकानि तव तेषां च भारत।
शनैरुपेयुरन्योन्यं योत्स्यमानानि संयुगे ॥ १८
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम्।
पाण्डवानां कुरूणां च द्रोणपाञ्चाल्ययोरपि ॥ १९
यतमानाः प्रयत्नेन द्रोणानीकविशातने।
न शेकुः सृञ्जया युद्धे तद्धि द्रोणेन पालितम् ॥ २०
तथैव तव पुत्रस्य रथोदाराः प्रहारिणः।
न शेकुः पाण्डवीं सेनां पाल्यमानां किरीटिना २१
आस्तां ते स्तिमिते सेने रक्ष्यमाणे परस्परम्।
संप्रसुप्ते यथा नक्तं वनराज्यौ सुपुष्पिते ॥ २२
ततो रुक्मरथो राजन्नर्केणेव विराजता।
वरूथिना विनिष्पत्य व्यचरत्पृतनामुखे ॥ २३
तमुद्यन्तं रथेनैकमाशुकारिणमाहवे।
अनेकमिव संत्रासान्मेनिरे पाण्डुसृञ्जयाः ॥ २४
तेन मुक्ताः शरा घोरा विचेरुः सर्वतोदिशम्।

---

बहुलीकृतः प्रतिज्ञां न त्यजेदिति बहुषु प्रकाशितः ॥ ३५ द्वादशोऽध्यायः ॥ १२ ॥

संप्रसुप्ते कृतपत्रसंकोचे ॥ २२ ॥ वरूथिना रथेन ॥ २३ ॥ त्रयोदशोऽध्यायः ॥ १३ ॥

त्रासयन्तो महाराज पाण्डवेयस्य वाहिनीम् ॥ २५
मध्यंदिनमनुप्राप्तो गभस्तिशतसंवृतः ।
यथा दृश्येत घर्मांशुस्तथा द्रोणोऽप्यदृश्यत ॥ २६
न चैनं पाण्डवेयानां कश्चिच्छक्नोति भारत ।
[illegible] समरे क्रुद्धं महेन्द्रमिव दानवाः ॥ २७
मोहयित्वा ततः सैन्यं भारद्वाजः प्रतापवान् ।
धृष्टद्युम्नबलं तूर्णं व्यधमन्निशितैः शरैः ॥ २८
स दिशः सर्वतो रुद्ध्वा संवृत्य खमजिह्मगैः ।
पार्षतो यत्र तत्रैनामभिनत्पाण्डुवाहिनीम् ॥ २९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि एकादशदिवसयुद्धे त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

द्रोणयुद्धं द्वैरथयुद्धमभिमन्युपराक्रमश्च ॥ १ ॥

सञ्जय उवाच ।
ततः स पाण्डवानीके जनयन्सुमहद्भयम् ।
व्यचरत्पृतनां द्रोणो दहन्कक्षमिवानलः ॥ १
निर्दहन्तमनीकानि साक्षादग्निमिवोत्थितम्
दृष्ट्वा रुक्मरथं क्रुद्धं समकम्पन्त सृञ्जयाः ॥ २
सततं कृष्यतः सङ्ख्ये धनुषोऽस्याशुकारिणः ।
ज्याघोषः शुश्रुवेऽत्यर्थं विस्फूर्जितमिवाशनेः ॥ ३
रथिनः सादिनश्चैव नागानश्वान्पदातिनः ।
रौद्रा हस्तवता मुक्ताः संमृद्नन्ति स्म सायकाः ॥ ४
नानद्यमानः पर्जन्यः प्रवृद्धः शुचिसंक्षये
अश्मवर्षमिवावर्षत्परेषामावहद्भयम् ॥ ५
विचरन्स दिशः सर्वाः सेनां संक्षोभयन्प्रभुः ।
वर्धयामास सन्त्रासं शात्रवाणाममानुषम् ॥ ६
तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम् ।
भ्राजमानं रथे तस्मिन्दृश्यते स्म महाभयम् ॥ ७
स वीरः सत्यवान्प्राज्ञो धर्मनित्यः सदा पुनः ।
युगान्तकालवद्घोरां रौद्रां प्रावर्तयन्नदीम् ॥ ८
अमर्षवेगप्रभवां क्रव्यादगणसङ्कुलाम् ।
बलौघैः सर्वतः पूर्णां ध्वजवृक्षापहारिणीम् ॥ ९
शोणितोदां रथावर्तां हस्त्यश्वकृतरोधसम् ।
कवचोडुपसंयुक्तां मांसपङ्कसमाकुलाम् ॥ १०
मेदोमज्जास्थिसिकतामुष्णीषचयफेनिलाम् ।
संग्रामजलदापूर्णां प्रासमत्स्यसमाकुलाम् ॥ ११
नरनागाश्वकलिलां शरवेगौघवाहिनीम् ।
शरीरदारुसङ्घाटां रथकच्छपसंकुलाम् ॥ १२
उत्तमाङ्गैः पङ्कजिनीं निस्त्रिंशझषसंकुलाम् ।
रथनागह्रदोपेतां नानाभरणभूषिताम् ॥ १३
महारथशतावर्तां भूमिरेणूर्मिमालिनीम् ।
महावीर्यवतां सङ्ख्ये सुतरां भीरुदुस्तराम् ॥ १४
शरीरशतसंबाधां गृध्रकङ्कनिषेविताम् ।
महारथसहस्राणि नयन्तीं यमसादनम् ॥ १५
शूलव्यालसमाकीर्णां प्राणिवाजिनिषेविताम् ।
छिन्नक्षत्रमहाहंसां मुकुटाण्डजसेविताम् ॥ १६
चक्रकूर्मां गदानक्रां शरक्षुद्रझषाकुलाम्
बकगृध्रसृगालानां घोरसङ्घैर्निषेविताम् ॥ १७
निहतान्प्राणिनः सङ्ख्ये द्रोणेन बलिना रणे ।
वहन्तीं पितृलोकाय शतशो राजसत्तम ॥ १८
शरीरशतसंबाधां केशशैवलशाद्वलाम् ।
नदीं प्रावर्तयद्राजन्भीरूणां भयवर्धिनीम् ॥ १९
तर्जयन्तमनीकानि तानि तानि महारथम् ।
सर्वतोऽभ्यद्रवन्द्रोणं युधिष्ठिरपुरोगमाः ॥ २०
तानभिद्रवतः शूरांस्तावका दृढविक्रमाः ।
सर्वतः प्रत्यगृह्णन्त तदभूद्रोमहर्षणम् ॥ २१
शतमायस्तु शकुनिः सहदेवं समाद्रवत् ।
सनियन्तृध्वजरथं विव्याध निशितैः शरैः ॥ २२
तस्य माद्रीसुतः केतुं धनुः सूतं हयानपि ।

शुचिसंक्षये ग्रीष्मान्ते ॥ ५ ॥

प्राणिन एव वाजिनः पक्षिणः ॥ १६ ॥

नातिक्रुद्धः शरैश्छित्त्वा षष्ठ्या विव्याध सौबलम्।
'भित्त्वा च शरवर्षेण शकुनिं प्रत्यवारयत् ॥'२३
गदां गृहीत्वा शकुनिः प्रचस्कन्द रथोत्तमात्।
स तस्य गदया राजन्रथात्सूतमपातयत् ॥ २४
ततस्तौ विरथौ राजन्गदाहस्तौ महाबलौ।
चिक्रीडतू रणे शूरौ सशृङ्गाविव पर्वतौ ॥ २५
द्रोणः पाञ्चालदायादं विव्याध निशितैः शरैः।
तयोस्तत्र महाराज बाणवर्षैः प्रकाशितम्।
खद्योतैरिव चाकाशं प्रदोषे पुरुषर्षभ ॥ २६
विविंशतिं भीमसेनो विंशत्या निशितैः शरैः।
विद्ध्वा नाकम्पयद्वीरस्तदद्भुतमिवाभवत् ॥ २७
विविंशतिस्तु सहसा व्यश्वकेतुशरासनम्।
भीमं चक्रे महाराज ततः सैन्यान्यपूजयन् ॥२८
स तन्न ममृषे वीरः शत्रोर्विक्रममाहवे
ततोऽस्य गदया दान्तान्हयान्सर्वानपातयत् ॥२९
हताश्वात्स रथाद्राजन्गृह्य चर्म महाबलः।
अभ्ययाद्भीमसेनं तु मत्तो मत्तमिव द्विपम् ॥३०
शल्यस्तु नकुलं वीरः स्वस्रीयं प्रियमात्मनः।
विव्याध प्रहसन्बाणैर्लालयन्कोपयन्निव ॥ ३१
तस्याश्वानातपत्रं च ध्वजं सूतमथो धनुः।
निपात्य नकुलः सङ्ख्ये शङ्खं दध्मौ प्रतापवान् ३२
धृष्टकेतुः कृपेणास्ताञ्छित्त्वा बहुविधाञ्छरान्।
कृपं विव्याध सप्तत्या ध्वजं चास्य त्रिभिः शरैः ३३
तं कृपः शरवर्षेण महता समवारयत्।
विव्याध च रणे विप्रो धृष्टकेतुममर्षणम् ॥ ३४
सात्यकिः कृतवर्माणं नाराचेन स्तनान्तरे।
विद्ध्वा विव्याध सप्तत्या पुनरन्यैः स्मयन्निव ॥ ३५
तं भोजः सप्तसप्तत्या विद्ध्वाऽऽशु निशितैः शरैः।
नाकम्पयत शैनेयं शीघ्रो वायुरिवाचलम् ॥ ३६
सेनापतिः सुशर्माणं भृशं मर्मस्वताडयत्।
स चापि तं तोमरेण जत्रुदेशेऽभ्यताडयत् ॥३७
वैकर्तनं तु समरे विराटः प्रत्यवारयत्।
सह मत्स्यैर्महावीर्यैस्तदद्भुतमिवाभवत् ॥ ३८
तत्पौरुषमभूत्तत्र सूतपुत्रस्य दारुणम्।
यत्सैन्यं वारयामास शरैः सन्नतपर्वभिः ॥ ३९
द्रुपदस्तु स्वयं राजा भगदत्तेन सङ्गतः।
तयोर्युद्धं महाराज चित्ररूपमिवाभवत् ॥ ४०
भगदत्तस्तु राजानं द्रुपदं नतपर्वभिः।
सनियन्तृध्वजरथं विव्याध पुरुषर्षभः ॥ ४१
द्रुपदस्तु ततः क्रुद्धो भगदत्तं महारथम्।
आजघानोरसि क्षिप्रं शरेणानतपर्वणा ॥ ४२
युद्धं योधवरौ लोके सौमदत्तिशिखण्डिनौ।
भूतानां त्रासजननं चक्रातेऽस्त्रविशारदौ ॥ ४३
भूरिश्रवा रणे राजन्याज्ञसेनिं महारथम्
महता सायकौघेन च्छादयामास वीर्यवान् ॥ ४४
शिखण्डी तु ततः क्रुद्धः सौमदत्तिं विशांपते।
नवत्या सायकानां तु कम्पयामास भारत ॥ ४५
राक्षसौ रौद्रकर्माणौ हैडिम्बालम्बुसावुभौ।
चक्रातेऽत्यद्भुतं युद्धं परस्परजयैषिणौ ॥ ४६
मायाशतसृजौ दृप्तौ मायाभिरितरेतरम्।
अन्तर्हितौ चेरतुस्तौ भृशं विस्मयकारिणौ ॥ ४७
चेकितानोऽनुविन्देन युयुधे चातिभैरवम्।
यथा देवासुरे युद्धे बलशक्रौ महाबलौ ॥ ४८
लक्ष्मणः क्षत्रदेवेन विमर्दमकरोद्भृशम्।
यथा विष्णुः पुरा राजन्हिरण्याक्षेण संयुगे ॥ ४९
ततः प्रचलिताश्वेन विधिवत्कल्पितेन च।
रथेनाभ्यपतद्राजन्सौभद्रं पौरवो नदन् ॥ ५०
ततोऽभ्ययात्स त्वरितो युद्धाकाङ्क्षी महाबलः।
तेन चक्रे महद्युद्धमभिमन्युररिन्दमः ॥ ५१
पौरवस्त्वथ सौभद्रं शरव्रातैरवाकिरत्।
तस्यार्जुनिर्ध्वजं छत्रं धनुश्चोर्व्यामपातयत् ॥ ५२
सौभद्रः पौरवं त्वन्यैर्विद्ध्वा सप्तभिराशुगैः।
पञ्चभिस्तस्य विव्याध हयान्सूतं च सायकैः ॥५३
ततः प्रहर्षयन्सेनां सिंहवद्विनदन्मुहुः
समादत्तार्जुनिस्तूर्णं पौरवान्तकरं शरम् ॥ ५४
तं तु सन्धितमाज्ञाय सायकं घोरदर्शनम्।
द्वाभ्यां शराभ्यां हार्दिक्यश्चिच्छेद सशरं धनुः ॥
तदुत्सृज्य धनुश्छिन्नं सौभद्रः परवीरहा।
उद्ववर्ह सितं खङ्गमाददानः शरावरम् ॥ ५६

उद्ववर्ह उच्चकर्ष। शरावरं चर्म ॥ ५६ ॥

स तेनानेकतारेण चर्मणा कृतहस्तवत् ।
भ्रान्तासिना चरन्मार्गान्दर्शयन्वीर्यमात्मनः ५७
भ्रामितं पुनरुद्भ्रान्तमाधूतं पुनरुत्थितम् ।
चर्मनिस्त्रिंशयो राजन्निर्विशेषमदृश्यत ॥ ५८
स पौरवरथस्येषामाप्लुत्य सहसा नदन् ।
पौरवं रथमास्थाय केशपक्षे परामृशत् ॥ ५९
जघानास्य पदा सूतमसिना पातयद्ध्वजम् ।
विक्षोभ्यांभोनिधिं तार्क्ष्यस्तं नागमिव चाक्षिपत्॥
तमागलितकेशान्तं ददृशुः सर्वपार्थिवाः ।
उक्षाणमिव सिंहेन पात्यमानमचेतसम् ॥ ६१
तमार्जुनिवशं प्राप्तं कृष्यमाणमनाथवत् ।
पौरवं पातितं दृष्ट्वा नामृष्यत जयद्रथः ॥ ६२
स बर्हिबर्हावततं किङ्किणीशतजालवत् ।
चर्म चादाय खड्गं च नदन्पर्यपतद्रथात् ॥ ६३
ततः सैन्धवमालोक्य कार्ष्णिरुत्सृज्य पौरवम् ।
उत्पपात रथात्तूर्णं श्येनवन्निपपात च ॥ ६४
प्रासपट्टिशनिस्त्रिंशाञ्छत्रुभिः संप्रचोदितान् ।
चिच्छेद चासिना कार्ष्णिश्चर्मणा संरुरोध च॥ ६५
स दर्शयित्वा सैन्यानां स्वबाहुबलमात्मनः ।
तमुद्यम्य महाखड्गं चर्म चाथ पुनर्बली ॥ ६६
वृद्धक्षत्रस्य दायादं पितुरत्यन्तवैरिणम् ।
ससाराभिमुखः शूरः शार्दूल इव कुञ्जरम् ॥ ६७
तौ परस्परमासाद्य खड्गदन्तनखायुधौ ।
हृष्टवत्संप्रजह्राते व्याघ्रकेसरिणाविव ॥ ६८
संपातेष्वभिघातेषु निपातेष्वसिचर्मणोः ।
न तयोरन्तरं कश्चिद्ददर्श नरसिंहयोः ॥ ६९
अवक्षेपोऽसिनिर्ह्रादः शस्त्रान्तरनिदर्शनम् ।
बाह्यान्तरनिपातश्च निर्विशेषमदृश्यत ॥ ७०
बाह्यमाभ्यन्तरं चैव चरन्तौ मार्गमुत्तमम् ।
ददृशाते महात्मानौ सपक्षाविव पर्वतौ ॥ ७१
ततो विक्षिपतः खड्गं सौभद्रस्य यशस्विनः ।
शरावरणपक्षान्ते प्रजहार जयद्रथः ॥ ७२
रुक्मपत्रान्तरे सक्तस्तस्मिंश्चर्मणि भास्वरे ।
सिन्धुराजबलोद्धूतः सोऽभज्यत महानसिः ॥ ७३
भग्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट् ।
अदृश्यत निमेषेण स्वरथं पुनरास्थितः ॥ ७४
तं कार्ष्णिं समरान्मुक्तमास्थितं रथमुत्तमम् ।
सहिताः सर्वराजानः परिवव्रुः समन्ततः ॥ ७५
ततश्चर्म च खड्गं च समुत्क्षिप्य महाबलः ।
ननादार्जुनदायादः प्रेक्षमाणो जयद्रथम् ॥ ७६
सिन्धुराजं परित्यज्य सौभद्रः परवीरहा ।
तापयामास तत्सैन्यं भुवनं भास्करो यथा ॥७७
तस्य सर्वायसीं शक्तिं शल्यः कनकभूषणाम् ।
चिक्षेप समरे घोरां दीप्तामग्निशिखामिव ॥ ७८
तामवप्लुत्य जग्राह विकोशं चाकरोदसिम् ।
वैनतेयो यथा कार्ष्णिः पतन्तमुरगोत्तमम् ॥ ७९
तस्य लाघवमाज्ञाय सत्वं चामिततेजसः ।
सहिताः सर्वराजानः सिंहनादमथानदन् ॥ ८०
ततस्तामेव शल्यस्य सौभद्रः परवीरहा ।
मुमोच भुजवीर्येण वैदूर्यविकृतां शिताम् ॥ ८१
सा तस्य रथमासाद्य निर्मुक्तभुजगोपमा ।
जघान सूतं शल्यस्य रथाच्चैनमपातयत् ॥ ८२
ततो विराटद्रुपदौ धृष्टकेतुर्युधिष्ठिरः ।
सात्यकिः केकया भीमो धृष्टद्युम्नशिखण्डिनौ ८३
यमौ च द्रौपदेयाश्च साधुसाध्विति चुक्रुशुः ।
बाणशब्दाश्च विविधाः सिंहनादाश्च पुष्कलाः८४
प्रादुरासन्हर्षयन्तः सौभद्रमपलायिनम् ।
तन्नामृष्यन्त पुत्रास्ते शत्रोर्विजयलक्षणम् ॥ ८५
अथैनं सहसा सर्वे समन्तान्निशितैः शरैः ।
अभ्याकिरन्महाराज जलदा इव पर्वतम् ॥ ८६
तेषां च प्रियमन्विच्छन्सूतस्य च पराभवम् ।
आर्तायनिरमित्रघ्नः क्रुद्धः सौभद्रमभ्ययात् ॥८७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि एकादशदिवसयुद्धे चतुर्दशोऽध्यायः ॥ १४ ॥

पराभवं प्रेक्ष्येति शेषः ॥ ८७ ॥ चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

भीमेन गदायुद्धे शल्यपराजयः ॥ १ ॥

धृतराष्ट्र उवाच ।
बहूनि सुविचित्राणि द्वन्द्वयुद्धानि सञ्जय ।
त्वयोक्तानि निशम्याहं स्पृहयामि सचक्षुताम् १
'न हि देवासुरं युद्धमीदृग्भूतं भवेदिति ।
चिन्तयामि च युद्धानि श्रुत्वा घोराणि सञ्जय' २
आश्चर्यभूतं लोकेषु कथयिष्यन्ति मानवाः ।
कुरूणां पाण्डवानां च युद्धं देवासुरोपमम् ॥ ३
न हि मे तृप्तिरस्तीह शृण्वतो युद्धमुत्तमम् ।
तस्मादार्तायनेर्युद्धं सौभद्रस्य च शंस मे ॥ ४
सञ्जय उवाच ।
सादितं प्रेक्ष्य यन्तारं शल्यः सर्वायसीं गदाम् ।
समुत्क्षिप्य नदन्क्रुद्धः प्रचस्कन्द रथोत्तमात् ५
तं दीप्तमिव कालाग्निं दण्डहस्तमिवान्तकम् ।
जवेनाभ्यपतद्भीमः प्रगृह्य महतीं गदाम् ॥ ६
सौभद्रोऽप्यशनिप्रख्यां प्रगृह्य महतीं गदाम् ।
एह्येहीत्यब्रवीच्छल्यं यत्नाद्भीमेन वारितः ॥ ७
वारयित्वा तु सौभद्रं भीमसेनः प्रतापवान् ।
शल्यमासाद्य समरे तस्थौ गिरिरिवाचलः ॥ ८
तथैव मद्रराजोऽपि भीमं दृष्ट्वा महाबलम् ।
ससाराभिमुखस्तूर्णं शार्दूल इव कुञ्जरम् ॥ ९
'तं दीप्तमिव कालाग्निं पाशहस्तमिवान्तकम् ।
जवनाभ्यपतद्भीमः प्रगृह्य महतीं गदाम् ॥' १०
ततस्तूर्यनिनादाश्च शङ्खानां च सहस्रशः ।
सिंहनादाश्च संजज्ञुर्भेरीणां च महास्वनाः ॥ ११
पश्यतां शतशो ह्यासीदन्योन्यमभिधावताम् ।
पाण्डवानां कुरूणां च साधुसाध्विति निःस्वनः ॥
न हि मद्राधिपादन्यः सर्वराजसु भारत ।
सोढुमुत्सहते वेगं भीमसेनस्य संयुगे ॥ १३
तथा मद्राधिपस्यापि गदावेगं महात्मनः ।
सोढुमुत्सहते लोके युधि कोऽन्यो वृकोदरात् १४
पट्टैर्जाम्बूनदैर्बद्धा बभूव जनहर्षणी ।
प्रजज्वाल तदा विद्धा भीमेन महती गदा ॥ १५
'साग्निदीप्ता महारौद्रा गदा सा शुशुभे तदा ॥'
तथैव चरतो मार्गान्मण्डलानि च सर्वशः ।
महाविद्युत्प्रतीकाशा शल्यस्य शुशुभे गदा ॥ १७
तौ वृषाविव नर्दन्तौ मण्डलानि विचेरतुः ।
आवर्तितगदाशृङ्गावुभौ शल्यवृकोदरौ ॥ १८
'क्रोधताम्रेक्षणौ वीरौ शत्रुसङ्घविमर्दनौ ।
महामात्रौ महोत्साहौ गदायुद्धविशारदौ ॥' १९
मण्डलावर्तमार्गेषु गदाविहरणेषु च ।
निर्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः ॥ २०
ताडिता भीमसेनेन शल्यस्य महती गदा ।
साग्निज्वाला महारौद्रा तदा तूर्णमशीर्यत ॥ २१
तथैव भीमसेनस्य द्विषताऽभिहता गदा ।
वर्षाप्रदोषे खद्योतैर्वृतो वृक्ष इवाबभौ ॥ २२
गदा क्षिप्ता तु समरे मद्रराजेन भारत ।
व्योम दीपयमाना सा ससृजे पावकं मुहुः ॥ २३
तथैव भीमसेनेन द्विषते प्रेषिता गदा ।
तापयामास तत्सैन्यं महोल्का पतती यथा ॥ २४
ते गदे गदिनां श्रेष्ठे समासाद्य परस्परम् ।
श्वसन्त्यौ नागकन्ये व ससृजाते विभावसुम् २५
नखैरिव महाव्याघ्रौ दन्तैरिव महागजौ ।
तौ विचेरतुरासाद्य गदाग्र्याभ्यां परस्परम् ॥ २६
ततो गदाग्राभिहतौ क्षणेन रुधिरोक्षितौ
ददृशाते महात्मानौ किंशुकाविव पुष्पितौ ॥ २७
शुश्रुवे दिक्षु सर्वासु तयोः पुरुषसिंहयोः ।
गदाभिघातसंह्रादः शक्राशनिरवोपमः ॥ २८
गदया मद्रराजेन सव्यदक्षिणमाहतः ।
नाकम्पत तदा भीमो भिद्यमान इवाचलः ॥ २९
तथा भीमगदावेगैस्ताड्यमानो महाबलः ।
धैर्यान्मद्राधिपस्तस्थौ वज्रैर्गिरिरिवाहतः ॥ ३०
आपेततुर्महावेगौ समुच्छ्रितगदावुभौ ।
पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः ॥ ३१

व इवार्थे ॥ २५ ॥

अथाप्लुत्य पदान्यष्टौ सन्निपत्य गजाविव ।
सहसा लोहदण्डाभ्यामन्योन्यमभिजघ्नतुः ॥ ३२
तौ परस्परवेगाच्च गदाभ्यां च भृशाहतौ ।
युगपत्पेततुर्वीरौ क्षिताविन्द्रध्वजाविव ॥ ३३
ततो विह्वलमानं तं निःश्वसन्तं पुनःपुनः ।
शल्यमभ्यपतत्तूर्णं कृतवर्मा महारथः ॥ ३४
दृष्ट्वा चैनं महाराज गदयाऽभिनिपीडितम् ।
विचेष्टन्तं यथा नागं मूर्च्छयाऽभिपरिप्लुतम् ॥ ३५
ततः स्वरथमारोप्य मद्राणामधिपं रणे ।
अपोवाह रणात्तूर्णं कृतवर्मा महारथः ॥ ३६
क्षीबवद्विह्वलो वीरो निमेषात्पुनरुत्थितः ।
भीमोऽपि सुमहाबाहुर्गदापाणिरदृश्यत ॥ ३७
ततो मद्राधिपं दृष्ट्वा तव पुत्राः पराङ्मुखम् ।
सनागपत्त्यश्वरथाः समकम्पन्त मारिष ॥ ३८
ते पाण्डवैरर्द्यमानास्तावका जितकाशिभिः ।
भीता दिशोऽन्वपद्यन्त वातनुन्ना घना इव ॥ ३९
निर्जित्य धार्तराष्ट्रांस्तु पाण्डवेया महारथाः ।
व्यरोचन्त रणे राजन्दीप्यमाना इवाग्नयः ॥ ४०
'अथ मड्डुकभेरिमहामुरजाः
पणवानकदुन्दुभिनिर्झरिभिः ।
विनदन्ति भृशं सहशङ्खरवै-
र्विविधैश्च नरोत्तम सिंहरवैः ॥' ४१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि एकादशदिवसयुद्धे पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

द्रोणेन युधिष्ठिरग्रहणोद्यमे अर्जुनेन तद्भङ्गः ॥ १ ॥

सञ्जय उवाच ।
तद्बलं सुमहद्दीर्णं त्वदीयं प्रेक्ष्य वीर्यवान् ।
दधारैको रणे पाण्डून्वृषसेनोऽस्त्रमायया ॥ १
शरा दश दिशो मुक्ता वृषसेनेन संयुगे ।
विचेरुस्ते विनिर्भिद्य नरवाजिरथद्विपान् ॥ २
तस्य दीप्ता महाबाणा विनिश्चेरुः सहस्रशः ।
भानोरिव महाराज घर्मकाले मरीचयः ॥ ३
तेनार्दिता महाराज रथिनः सादिनस्तथा ।
निपेतुरुर्व्यां सहसा वातभग्ना इव द्रुमाः ॥ ४
हयौघांश्च रथौघांश्च गजौघांश्च महारथः ।
अपातयद्रणे राजञ्शतशोऽथ सहस्रशः ॥ ५
दृष्ट्वा तमेकं समरे विचरन्तमभीतवत् ।
सहिताः सर्वराजानः परिवव्रुः समन्ततः ॥ ६
नाकुलिस्तु शतानीको वृषसेनं समभ्ययात् ।
विव्याध चैनं दशभिर्नाराचैर्मर्मभेदिभिः ॥ ७
तस्य कर्णात्मजश्चापं छित्त्वा केतुमपातयत् ।
तं भ्रातरं परीप्सन्तो द्रौपदेयाः समभ्ययुः ॥ ८
कर्णात्मजं शरव्रातैरदृश्यं चक्रुरञ्जसा ।
तान्नदन्तोऽभ्यधावन्त द्रोणपुत्रमुखा रथाः ॥ ९
छादयन्तो महाराज द्रौपदेयान्महारथान् ।
शरैर्नानाविधैस्तूर्णं पर्वताञ्जलदा इव ॥ १०
तान्पाण्डवाः प्रत्यगृह्णंस्त्वरिताः पुत्रगृद्धिनः ।
पाञ्चालाः केकया मत्स्याः सृञ्जयाश्चोद्यतायुधाः ॥
तद्युद्धमभवद्घोरं सुमहद्रोमहर्षणम् ।
त्वदीयैः पाण्डुपुत्राणां देवानामिव दानवैः ॥ १२
एवं युयुधिरे वीराः संरब्धाः कुरुपाण्डवाः ।
परस्परमुदीक्षन्तः परस्परकृतागसः ॥ १३
तेषां ददृशिरे कोपाद्वपूंष्यमिततेजसाम् ।
युयुत्सूनामिवाकाशे पतत्रिवरभोगिनाम् ॥ १४
भीमकर्णकृपद्रोणद्रौणिपार्षतसात्यकैः ।
बभासे स रणोद्देशः कालसूर्यैरिवोदितैः ॥ १५
'प्रजानां संक्षये घोरे यथा सूर्योदयो भवेत् ।
शूराणामुदयस्तद्वदासीत्पुरुषसत्तम ॥' १६
तदासीत्तुमुलं युद्धं निघ्नतामितरेतरम् ।

क्षीबवन्मत्तवत् ॥ ३७ ॥ पञ्चदशोऽध्यायः ॥ १५ ॥

अस्त्रमायया अस्त्रकौशलेन ॥ १ ॥ पतत्रिवरभोगिनामिव पतत्रिवरो गरुडः । भोगिनः सर्पाः ॥ १४ ॥

महाबलानां बलिभिर्दानवानां यथा सुरैः ॥ १७
ततो युधिष्ठिरानीकमुद्धूतार्णवनिःस्वनम् ।
त्वदीयमवधीत्सैन्यं संप्रद्रुतमहारथम् ॥ १८
तत्प्रभग्नं बलं दृष्ट्वा शत्रुभिर्भृशमर्दितम् ।
अलं द्रुतेन वः शूरा इति द्रोणोऽभ्यभाषत ॥ १९
'भारद्वाजममर्षश्च विक्रमश्च समाविशत् ।
समुद्धृत्य निषङ्गाच्च धनुर्ज्यामवमृज्य च ।
महाशरधनुष्पाणिर्यन्तारमिदमब्रवीत् ॥ २०
सारथे याहि यत्रैष पाण्डरेण विराजता ।
ध्रियमाणेन च्छत्रेण राजा तिष्ठति धर्मराट् ॥ २१
तदेतद्दीर्यते सैन्यं धार्तराष्ट्रमनेकधा ।
एतत्संस्तम्भयिष्यामि प्रतिवार्य युधिष्ठिरम् ॥ २२
न हि माममिवर्षन्तं संयुगे तात पाण्डवाः ।
मात्स्यपाञ्चालराजानः सर्वे च सहसोमकाः ॥ २३
अर्जुनो मत्प्रसादाद्धि महास्त्राणि समाप्तवान् ।
न मामुत्सहते तात न भीमो न च सात्यकिः ॥ २४
मत्प्रसादाद्धि बीभत्सुः परमेष्वासतां गतः ।
ममैवास्त्रं विजानाति धृष्टद्युम्नोऽपि पार्षतः ॥ २५
नायं संरक्षितुं कालः प्राणांस्तात जयैषिणा ।
याहि स्वर्गं पुरस्कृत्य यशसे च जयाय च ॥ २६
सञ्जय उवाच ।
एवं संचोदितो यन्ता द्रोणमभ्यवहत्ततः ॥ २७
तदाऽश्वहृदयेनाश्वानभिमन्त्र्याशु हर्षयन् ।
रथेन सवरूथेन भास्वरेण विराजता ॥ २८
तं करूशाश्च मात्स्याश्च चेदयश्च ससात्वताः ।
पाण्डवाश्च सपाञ्चालाः सहिताः पर्यवारयन् ॥' २९
ततः शोणहयः क्रुद्धश्चतुर्दन्त इव द्विपः ।
प्रविश्य पाण्डवानीकं युधिष्ठिरमुपाद्रवत् ॥ ३०
तमाविध्यच्छितैर्बाणैः कङ्कपत्रैर्युधिष्ठिरः ।
तस्य द्रोणो धनुश्छित्वा तं द्रुतं समुपाद्रवत् ॥ ३१
चक्ररक्षः कुमारस्तु पाञ्चालानां यशस्करः ।
दधार द्रोणमायान्तं वेलेव सरितां पतिम् ॥ ३२
द्रोणं निवारितं दृष्ट्वा कुमारेण द्विजर्षभम् ।
सिंहनादरवो ह्यासीत्साधुसाध्विति भाषितम् ॥ ३३
कुमारस्तु ततो द्रोणं सायकेन महाहवे ।
विव्याधोरसि संक्रुद्धः सिंहवच्च नदन्मुहुः ॥ ३४
संवार्य च रणे द्रोणं कुमारस्तु महाबलः ।
शरैरनेकसाहस्रैः कृतहस्तो जितश्रमः ॥ ३५
तं शूरमार्यव्रतिनं मन्त्रास्त्रेषु कृतश्रमम् ।
चक्ररक्षं परामृद्नात्कुमारं द्विजपुङ्गवः ॥ ३६
स मध्यं प्राप्य सैन्यानां सर्वाः प्रविचरन्दिशः ।
तव सैन्यस्य गोप्तासीद्भारद्वाजो द्विजर्षभः ॥ ३७
शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् ।
नकुलं पञ्चभिर्विद्ध्वा सहदेवं च सप्तभिः ॥ ३८
युधिष्ठिरं द्वादशभिर्द्रौपदेयांस्त्रिभिस्त्रिभिः ।
सात्यकिं पञ्चभिर्विद्ध्वा मत्स्यं च दशभिः शरैः ॥ ३९
व्यक्षोभयद्रणे योधान्यथामुख्यमभिद्रवन् ।
अभ्यवर्तत संप्रेप्सुः कुन्तीपुत्रं युधिष्ठिरम् ॥ ४०
युगंधरस्ततो राजन्भारद्वाजं महारथम् ।
वारयामास संक्रुद्धं वातोद्धतमिवार्णवम् ॥ ४१
युधिष्ठिरं स विद्ध्वा तु शरैः सन्नतपर्वभिः ।
युगंधरं तु भल्लेन रथनीडादपातयत् ॥ ४२
'तं विजित्य महातेजा भारद्वाजो महामनाः ।
अभ्यवर्तत संप्रेप्सुः कुन्तीपुत्रं युधिष्ठिरम् ॥' ४३
ततो विराटद्रुपदौ केकयाः सात्यकिः शिबिः ।
व्याघ्रदत्तश्च पाञ्चल्यः सिंहसेनश्च वीर्यवान् ॥ ४४
एते चान्ये च बहवः परीप्सन्तो युधिष्ठिरम् ।
आवव्रुस्तस्य पन्थानं किरन्तः सायकान्बहून् ॥ ४५
व्याघ्रदत्तस्तु पाञ्चाल्यो द्रोणं विव्याध मार्गणैः ।
पञ्चाशता शितै राजंस्तत उच्चुक्रुशुर्जनाः ॥ ४६
त्वरितं सिंहसेनस्तु द्रोणं विद्ध्वा महारथम् ।
प्राहसत्सहसा हृष्टस्त्रासयन्वै महारथान् ॥ ४७
ततो विष्फार्य नयने धनुर्ज्यामवमृज्य च ।
तलशब्दं महत्कृत्वा द्रोणस्तं समुपाद्रवत् ॥ ४८
ततस्तु सिंहसेनस्य शिरः कायात्सकुण्डलम् ।
व्याघ्रदत्तस्य चाक्रम्य भल्लाभ्यामाहरद्बली ॥ ४९
तान्प्रमृज्य शरव्रातैः पाण्डवानां महारथान् ।

द्रुतेन पलायितेन ॥ १९ ॥

युधिष्ठिररथाभ्याशे तस्थौ मृत्युरिवान्तकः ॥ ५०
ततोऽभवन्महाशब्दो राजन्यौधिष्ठिरे बले ।
हतो राजेति योधानां समीपस्थे यतव्रते ॥ ५१
अब्रुवन्सैनिकास्तत्र दृष्ट्वा द्रोणस्य विक्रमम् ।
अद्य राजा धार्तराष्ट्रः कृतार्थो वै भविष्यति ॥ ५२
अस्मिन्मुहूर्ते द्रोणस्तु पाण्डवं गृह्य हर्षितः ।
आगमिष्यति नो नूनं धार्तराष्ट्रस्य संयुगे ॥ ५३
एवं संजल्पतां तेषां तावकानां महारथः ।
आयाज्जवेन कौन्तेयो रथघोषेण नादयन् ॥ ५४
शोणितोदां रथावर्तां कृत्वा विशसने नदीम् ।
शूरास्थिचयसंकीर्णां प्रेतकूलापहारिणीम् ॥ ५५
तां शरौघमहाफेनां प्रासमत्स्यसमाकुलाम् ।
नदीमुत्तीर्य वेगेन कुरून्विद्राव्य पाण्डवः ॥ ५६
ततः किरीटी सहसा द्रोणानीकमुपाद्रवत् ।
छादयन्निषुजालेन महता मोहयन्निव ॥ ५७
शीघ्रमभ्यस्यतो बाणान्संदधानस्य चानिशम् ।
नान्तरं ददृशे कश्चित्कौन्तेयस्य यशस्विनः ॥ ५८
न दिशो नान्तरिक्षं च न द्यौर्नैव च मेदिनी ।
अदृश्यन्त महाराज बाणभूता इवाभवन् ॥ ५९
नादृश्यत तदा राजंस्तत्र किंचन संयुगे ।
बाणान्धकारे महति कृते गाण्डीवधन्वना ॥ ६०
सूर्ये चास्तमनुप्राप्ते तमसा चाभिसंवृते ।
नाज्ञायत तदा शत्रुर्न सुहृन्न च कश्चन ॥ ६१
ततोऽवहारं चक्रुस्ते द्रोणदुर्योधनादयः ।
तान्विदित्वा पुनस्त्रस्ता न युद्धमनसः परान् ॥ ६२
स्वान्यनीकानि बीभत्सुः शनकैरवहारयत् ।
ततोऽभितुष्टुवुः पार्थं प्रहृष्टाः पाण्डुसृञ्जयाः ॥ ६३
पाञ्चालाश्च मनोज्ञाभिर्वाग्भिः सूर्यमिवर्षयः ।
एवं स्वशिबिरं प्रायाज्जित्वा शत्रून्धनञ्जयः ॥ ६४
पृष्ठतः सर्वसैन्यानां मुदितो वै सकेशवः ॥ ६५
मसारगल्वर्कसुवर्णरूप-
वैज्रप्रवालस्फटिकैश्च मुख्यैः ।
चित्रे रथे पाण्डुसुतो बभासे
नक्षत्रचित्रे वियतीव चन्द्रः ॥ ६६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि एकादशदिवसयुद्धे षोडशोऽध्यायः ॥ १६ ॥

॥ समाप्तं च द्रोणाभिषेकपर्व ॥

# ( अथ संशप्तकवधपर्व ॥ २ ॥ )

## सप्तदशोऽध्यायः ॥ १७ ॥

संशप्तकैराहूतस्यार्जुनस्य युधिष्ठिररक्षणे सत्यजितं नियोज्य तान्प्रति युद्धाय गमनम् ॥ १

सञ्जय उवाच ।
ते सेने शिबिरं गत्वा न्यविशेतां विशांपते ।
यथाभागं यथान्यायं यथागुल्मं च सर्वशः ॥ १
कृत्वाऽवहारं सैन्यानां द्रोणः परमदुर्मनाः ।
दुर्योधनमभिप्रेक्ष्य सव्रीडमिदमब्रवीत् ॥ २
उक्तमेतन्मया पूर्वं न तिष्ठति धनञ्जये ।
शक्यो ग्रहीतुं संग्रामे देवैरपि युधिष्ठिरः ॥ ३
इति तद्वः प्रयततां कृतं पार्थेन संयुगे ।
मा विशङ्कीर्वचो मह्यमजेयौ कृष्णपाण्डवौ ॥ ४
अपनीते तु योगेन केनचिच्छ्वेतवाहने ।
तत एष्यति ते राजन्वशमेष युधिष्ठिरः ॥ ५
कश्चिदाहूय तं सङ्ख्ये देशमन्यं प्रकर्षतु ।
तमजित्वा न कौन्तेयो निवर्तेत कथंचन ॥ ६
एतस्मिन्नन्तरे शून्ये धर्मराजमहं नृप ।
ग्रहीष्यामि चमूं भित्त्वा धृष्टद्युम्नस्य पश्यतः ॥ ७
अर्जुनेन परित्यक्तो न चेत्रासात्पलायते ।

विशसने युद्धे ॥ ५५ ॥ मसारः इन्द्रनीलः । गल्वर्कः पद्मरागः ॥ ६६ ॥ षोडशोऽध्यायः ॥ १६ ॥

योगेन उपायेन ॥ ५ ॥

महाबलानां बलिभिर्दानवानां यथा सुरैः ॥ १७
ततो युधिष्ठिरानीकमुद्धूतार्णवनिःस्वनम् ।
त्वदीयमवधीत्सैन्यं संप्रद्रुतमहारथम् ॥ १८
तत्प्रभग्नं बलं दृष्ट्वा शत्रुभिर्भृशमर्दितम् ।
अलं द्रुतेन वः शूरा इति द्रोणोऽभ्यभाषत ॥ १९
'भारद्वाजममर्षश्च विक्रमश्च समाविशत् ।
समुद्धृत्य निषङ्गाच्च धनुर्ज्यामवमृज्य च ।
महाशरधनुष्पाणिर्यन्तारमिदमब्रवीत् ॥ २०
सारथे याहि यत्रैष पाण्डरेण विराजता ।
ध्रियमाणेन च्छत्रेण राजा तिष्ठति धर्मराट् ॥ २१
तदेतद्दीर्यते सैन्यं धार्तराष्ट्रमनेकधा ।
एतत्संस्तम्भयिष्यामि प्रतिवार्य युधिष्ठिरम् ॥ २२
न हि मामभिवर्षन्तं संयुगे तात पाण्डवाः ।
मात्स्यपाञ्चालराजानः सर्वे च सहसोमकाः ॥ २३
अर्जुनो मत्प्रसादाद्धि महास्त्राणि समाप्तवान् ।
न मामुत्सहते तात न भीमो न च सात्यकिः ॥ २४
मत्प्रसादाद्धि बीभत्सुः परमेष्वासतां गतः ।
ममैवास्त्रं विजानाति धृष्टद्युम्नोऽपि पार्षतः ॥ २५
नायं संरक्षितुं कालः प्राणांस्तात जयैषिणा ।
याहि स्वर्गं पुरस्कृत्य यशसे च जयाय च ॥ २६
सञ्जय उवाच ।
एवं संचोदितो यन्ता द्रोणमभ्यवहत्ततः ॥ २७
तदाऽश्वहृदयेनाश्वानभिमन्त्र्याशु हर्षयन् ।
रथेन सवरूथेन भास्वरेण विराजता ॥ २८
तं करूशाश्च मात्स्याश्च चेदयश्च ससात्वताः ।
पाण्डवाश्च सपाञ्चालाः सहिताः पर्यवारयन् ॥' २९
ततः शोणहयः क्रुद्धश्चतुर्दन्त इव द्विपः ।
प्रविश्य पाण्डवानीकं युधिष्ठिरमुपाद्रवत् ॥ ३०
तमाविध्यच्छितैर्बाणैः कङ्कपत्रैर्युधिष्ठिरः ।
तस्य द्रोणो धनुश्छित्वा तं द्रुतं समुपाद्रवत् ॥ ३१
चक्ररक्षः कुमारस्तु पाञ्चालानां यशस्करः ।
दधार द्रोणमायान्तं वेलेव सरितां पतिम् ॥ ३२
द्रोणं निवारितं दृष्ट्वा कुमारेण द्विजर्षभम् ।

द्रुतेन पलायितेन ॥ १९ ॥

सिंहनादरवो ह्यासीत्साधुसाध्विति भाषितम् ॥ ३३
कुमारस्तु ततो द्रोणं सायकेन महाहवे ।
विव्याधोरसि संक्रुद्धः सिंहवच्च नदन्मुहुः ॥ ३४
संवार्य च रणे द्रोणं कुमारस्तु महाबलः ।
शरैरनेकसाहस्रैः कृतहस्तो जितश्रमः ॥ ३५
तं शूरमार्यव्रतिनं मन्त्रास्त्रेषु कृतश्रमम् ।
चक्ररक्षं परामृद्नात्कुमारं द्विजपुङ्गवः ॥ ३६
स मध्यं प्राप्य सैन्यानां सर्वाः प्रविचरन्दिशः ।
तव सैन्यस्य गोप्तासीद्भारद्वाजो द्विजर्षभः ॥ ३७
शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् ।
नकुलं पञ्चभिर्विद्ध्वा सहदेवं च सप्तभिः ॥ ३८
युधिष्ठिरं द्वादशभिर्द्रौपदेयांस्त्रिभिस्त्रिभिः ।
सात्यकिं पञ्चभिर्विद्ध्वा मत्स्यं च दशभिः शरैः ॥ ३९
व्यक्षोभयद्रणे योधान्यथामुख्यमभिद्रवन् ।
अभ्यवर्तत संप्रेप्सुः कुन्तीपुत्रं युधिष्ठिरम् ॥ ४०
युगंधरस्ततो राजन्भारद्वाजं महारथम् ।
वारयामास संक्रुद्धं वातोद्धूतमिवार्णवम् ॥ ४१
युधिष्ठिरं स विद्ध्वा तु शरैः सन्नतपर्वभिः ।
युगंधरं तु भल्लेन रथनीडादपातयत् ॥ ४२
'तं विजित्य महातेजा भारद्वाजो महामनाः ।
अभ्यवर्तत संप्रेप्सुः कुन्तीपुत्रं युधिष्ठिरम् ॥' ४३
ततो विराटद्रुपदौ केकयाः सात्यकिः शिबिः ।
व्याघ्रदत्तश्च पाञ्चल्यः सिंहसेनश्च वीर्यवान् ॥ ४४
एते चान्ये च बहवः परीप्सन्तो युधिष्ठिरम् ।
आवव्रुस्तस्य पन्थानं किरन्तः सायकान्बहून् ॥ ४५
व्याघ्रदत्तस्तु पाञ्चाल्यो द्रोणं विव्याध मार्गणैः ।
पञ्चाशता शितै राजंस्तत उच्चुक्रुशुर्जनाः ॥ ४६
त्वरितं सिंहसेनस्तु द्रोणं विद्ध्वा महारथम् ।
प्राहसत्सहसा हृष्टस्त्रासयन्वै महारथान् ॥ ४७
ततो विष्फार्य नयने धनुर्ज्यामवमृज्य च ।
तलशब्दं महत्कृत्वा द्रोणस्तं समुपाद्रवत् ॥ ४८
ततस्तु सिंहसेनस्य शिरः कायात्सकुण्डलम् ।
व्याघ्रदत्तस्य चाक्रम्य भल्लाभ्यामाहरद्बली ॥ ४९
तान्प्रमृज्य शरव्रातैः पाण्डवानां महारथान् ।

युधिष्ठिरस्थाभ्याशे तस्थौ मृत्युरिवान्तकः ॥ ५०
ततोऽभवन्महाशब्दो राजन्यौधिष्ठिरे बले ।
हतो राजेति योधानां समीपस्थे यतव्रते ॥ ५१
अब्रुवन्सैनिकास्तत्र दृष्ट्वा द्रोणस्य विक्रमम् ।
अद्य राजा धार्तराष्ट्रः कृतार्थो वै भविष्यति ॥ ५२
अस्मिन्मुहूर्ते द्रोणस्तु पाण्डवं गृह्य हर्षितः ।
आगमिष्यति नो नूनं धार्तराष्ट्रस्य संयुगे ॥ ५३
एवं संजल्पतां तेषां तावकानां महारथः ।
आयाज्जवेन कौन्तेयो रथघोषेण नादयन् ॥ ५४
शोणितोदां रथावर्तां कृत्वा विशसने नदीम् ।
शूरास्थिचयसंकीर्णां प्रेतकूलापहारिणीम् ॥ ५५
तां शरौघमहाफेनां प्रासमत्स्यसमाकुलाम् ।
नदीमुत्तीर्य वेगेन कुरून्विद्राव्य पाण्डवः ॥ ५६
ततः किरीटी सहसा द्रोणानीकमुपाद्रवत् ।
छादयन्निषुजालेन महता मोहयन्निव ॥ ५७
शीघ्रमभ्यस्यतो बाणान्संदधानस्य चानिशम् ।
नान्तरं ददृशे कश्चित्कौन्तेयस्य यशस्विनः ॥ ५८
न दिशो नान्तरिक्षं च न द्यौर्नैव च मेदिनी ।
अदृश्यन्त महाराज बाणभूता इवाभवन् ॥ ५९
नादृश्यत तदा राजंस्तत्र किंचन संयुगे ।
बाणान्धकारे महति कृते गाण्डीवधन्वना ॥ ६०
सूर्ये चास्तमनुप्राप्ते तमसा चाभिसंवृते ।
नाज्ञायत तदा शत्रुर्न सुहृन्न च कश्चन ॥ ६१
ततोऽवहारं चक्रुस्ते द्रोणदुर्योधनादयः ।
तान्विदित्वा पुनस्त्रस्ता न युद्धमनसः परान् ॥ ६२
स्वान्यनीकानि बीभत्सुः शनकैरवहारयत् ।
ततोऽभितुष्टुवुः पार्थं प्रहृष्टाः पाण्डुसृञ्जयाः ॥ ६३
पाञ्चालाश्च मनोज्ञाभिर्वाग्भिः सूर्यमिवर्षयः ।
एवं स्वशिबिरं प्रायाज्जित्वा शत्रून्धनञ्जयः ॥ ६४
पृष्ठतः सर्वसैन्यानां मुदितो वै सकेशवः ॥ ६५
मसारगल्वर्कसुवर्णरूप्य-
वज्रप्रवालस्फटिकैश्च मुख्यैः ।
चित्रे रथे पाण्डुसुतो बभासे
नक्षत्रचित्रे वियतीव चन्द्रः ॥ ६६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि एकादशदिवसयुद्धे षोडशोऽध्यायः ॥ १६ ॥

॥ समाप्तं च द्रोणाभिषेकपर्व ॥

# ( अथ संशप्तकवधपर्व ॥ २ ॥ )

## सप्तदशोऽध्यायः ॥ १७ ॥

संशप्तकैराहूतस्यार्जुनस्य युधिष्ठिररक्षणे सत्यजितं नियोज्य तान्प्रति युद्धाय गमनम् ॥ १ ॥

सञ्जय उवाच ।
ते सेने शिबिरं गत्वा न्यविशेतां विशांपते ।
यथाभागं यथान्यायं यथागुल्मं च सर्वशः ॥ १
कृत्वाऽवहारं सैन्यानां द्रोणः परमदुर्मनाः ।
दुर्योधनमभिप्रेक्ष्य सव्रीडमिदमब्रवीत् ॥ २
उक्तमेतन्मया पूर्वं न तिष्ठति धनञ्जये ।
शक्यो ग्रहीतुं संग्रामे देवैरपि युधिष्ठिरः ॥ ३
इति तद्वः प्रयततां कृतं पार्थेन संयुगे ।
मा विशङ्कीर्वचो मह्यमजेयौ कृष्णपाण्डवौ ॥ ४
अपनीते तु योगेन केनचिच्छ्वेतवाहने ।
तत एष्यति ते राजन्वशमेष युधिष्ठिरः ॥ ५
कश्चिदाहूय तं सङ्ख्ये देशमन्यं प्रकर्षतु ।
तमजित्वा न कौन्तेयो निवर्तेत कथंचन ॥ ६
एतस्मिन्नन्तरे शून्ये धर्मराजमहं नृप ।
ग्रहीष्यामि चमूं भित्त्वा धृष्टद्युम्नस्य पश्यतः ॥ ७
अर्जुनेन परित्यक्तो न चेत्त्रासात्पलायते ।

विशसने युद्धे ॥ ५५ ॥ मसारः इन्द्रनीलः । गल्वर्कः पद्मरागः ॥ ६६ ॥ षोडशोऽध्यायः ॥ १६ ॥

योगेन उपायेन ॥ ५ ॥

मामुपायान्तमालोक्य गृहीतं विद्धि पाण्डवम् ॥८
एवं तेऽहं महाराज धर्मपुत्रं युधिष्ठिरम् ।
समानेष्यामि सगणं वशमद्य न संशयः ॥ ९
यदि तिष्ठति संग्रामे मुहूर्तमपि पाण्डवः ।
अथापयाति संग्रामाद्विजयात्तद्विशिष्यते ॥ १०
सञ्जय उवाच ।
द्रोणस्य तद्वचः श्रुत्वा त्रिगर्ताधिपतिस्तदा ।
भ्रातृभिः सहितो राजन्निदं वचनमब्रवीत् ॥ ११
वयं विनिकृता राजन्सदा गाण्डीवधन्वना ।
अनागःस्वपि चागस्तत्कृतमस्मासु तेन वै ॥ १२
ते वयं स्मरमाणास्तान्विनिकारान्पृथग्विधान् ।
क्रोधाग्निना दह्यमाना ह्यशेमहि सदा निशि ॥१३
स नो दिष्ट्याऽस्त्रसंपन्नश्चक्षुर्विषयमागतः ।
कर्तारः स वयं कर्म यच्चिकीर्षाम हृद्गतम् ॥ १४
भवतश्च प्रियं यत्स्यादस्माकं च यशस्करम् ।
वयमेनं हनिष्यामो निकृष्यायोधनाद्बहिः ॥ १५
अद्यास्त्वनर्जुना भूमिरत्रिगर्ताऽथवा पुनः ।
सत्यं ते प्रतिजानीमो नैतन्मिथ्या भविष्यति ॥ १६
एवं सत्यरथश्चोक्त्वा सत्यवर्मा च भारत ।
सत्यव्रतश्च सत्येषुः सत्यकर्मा तथैव च ॥ १७
सहिता भ्रातरः पञ्च रथानामयुतेन च ।
न्यवर्तन्त महाराज कृत्वा शपथमाहवे ॥ १८
मालवास्तुण्डिकेराश्च रथानामयुतैस्त्रिभिः ।
सुशर्मा च नरव्याघ्रस्त्रिगर्तः प्रस्थलाधिपः ॥ १९
मावेल्लकैर्ललित्थैश्च सहितो मद्रकैरपि ।
रथानामयुतेनैव सोऽगमद्भ्रातृभिः सह ॥ २०
नानाजनपदेभ्यश्च रथानामयुतं पुनः ।
समुत्थितं विशिष्टानां शपथार्थमुपागमत् ॥ २१
ततो ज्वलनमानर्च्य हुत्वा सर्वे पृथक्पृथक् ।
जगृहुः कुशचीराणि चित्राणि कवचानि च ॥२२
ते च बद्धतनुत्राणा घृताक्ताः कुशचीरिणः ।
मौर्वीमेखलिनो वीराः सहस्रशतदक्षिणाः ॥ २३

यज्वानः पुत्रिणो लोक्याः कृतकृत्यास्तनुत्यजः ।
योक्ष्यमाणास्तदाऽऽत्मानं यशसा विजयेन च २४
ब्रह्मचर्यश्रुतिमुखैः क्रतुभिश्चाप्तदक्षिणैः ।
प्राप्याँल्लोकान्सुयुद्धेन क्षिप्रमेव यियासवः ॥ २५
ब्राह्मणांस्तर्पयित्वा च निष्कान्दत्वा पृथक्पृथक् ।
गाश्च वासांसि च पुनः समाभाष्य परस्परम् ॥ २६
'द्विजमुख्यैः समुदितैः कृतस्वस्त्ययनाशिषः ।
मुदिताश्च प्रहृष्टाश्च जलं संस्पृश्य निर्मलम् ॥' २७
प्रज्वाल्य कृष्णवर्त्मानमुपागम्य रणव्रतम् ।
तस्मिन्नग्नौ तदा चक्रुः प्रतिज्ञां दृढनिश्चयाः ॥ २८
शृण्वतां सर्वभूतानामुच्चैर्वाचो बभाषिरे ।
सर्वे धनञ्जयवधे प्रतिज्ञां चापि चक्रिरे ॥ २९
ये वै लोकाश्चाव्रतिनां ये चैव ब्रह्मघातिनाम् ।
मद्यपस्य च ये लोका गुरुदाररतस्य च ॥ ३०
ब्रह्मस्वहारिणश्चैव राजपिण्डापहारिणः ।
शरणागतं च त्यजतो याचमानं तथा घ्नतः ॥ ३१
अगारदाहिनां चैव ये च गां निघ्नतामपि ।
अपकारिणां च ये लोका ये च ब्रह्मद्विषामपि ॥ ३२
स्वभार्यामृतुकालेषु मोहाद्वै नाभिगच्छताम् ।
श्राद्धमैथुनिकानां च ये चाप्यात्मापहारिनाः ।
न्यासापहारिणां ये च श्रुतं नाशयतां च ॥' ४३
क्लीबेन युध्यमानानां ये च नीचानुसारिणाबिः ।
नास्तिकानां च ये लोका येऽग्निमातृपितृत्यज ॥ ४४
तानाप्नुयामहे लोकान्ये च पापकृतामपि । म् ।
यद्यहत्वा वयं युद्धे निवर्तेम धनञ्जयम् ।
तेन चाभ्यर्दितास्त्रासाद्भवेमहि पराङ्मुखाः ॥ ३६
यदि त्वसुकरं लोके कर्म कुर्याम संयुगे ।
इष्टाँल्लोकान्प्राप्नुयामो वयमद्य न संशयः ॥ ३७
एवमुक्त्वा तदा राजंस्तेऽभ्यवर्तन्त संयुगे ।
आह्वयन्तोऽर्जुनं वीराः पितृजुष्टां दिशं प्रति ॥३८
आहूतस्तैर्नरव्याघ्रैः पार्थः परपुरञ्जयः ।
धर्मराजमिदं वाक्यमपदान्तरमब्रवीत् ॥ ३९

---

लोक्याः पुण्यलोकार्हाः ॥ २४ ॥ ब्रह्मचर्यं वेदव्रताचरणम् । श्रुतिर्वेदाध्ययनं ते एव मुखं प्रधानं येषु तैः । कर्मभिरिति शेषः ॥ २५ ॥ आत्मापहारिणां स्वजातिगोपकानाम् ॥ ३३ ॥ श्रुतं प्रतिज्ञातम् ॥ ३४ ॥ अपदान्तरमव्यवहितम् ॥ ३९ ॥ सप्तदशोऽध्यायः ॥ १७ ॥

आहूतो न निवर्तेयमिति मे व्रतमाहितम् ।
संशप्तकाश्च मां राजन्नाह्वयन्ति महामृधे ॥ ४०
एष च भ्रातृभिः सार्धं सुशर्माऽऽह्वयते रणे ।
वधाय सगणस्यास्य मामनुज्ञातुमर्हसि ॥ ४१
नैतच्छक्नोमि संसोढुमाह्वानं पुरुषर्षभ ।
सत्यं ते प्रतिजानामि हतान्विद्धि परान्युधि ॥४२
युधिष्ठिर उवाच ।
श्रुतं ते तत्त्वतस्तात यद्द्रोणस्य चिकीर्षितम् ।
यथा तदनृतं तस्य भवेत्तत्त्वं समाचर ॥ ४३
द्रोणो हि बलवाञ्शूरः कृतास्त्रश्च जितश्रमः ।
प्रतिज्ञातं च तेनैतद्ग्रहणं मे महारथ ॥ ४४
अर्जुन उवाच ।
अयं वै सत्यजिद्राजन्नद्य त्वां रक्षिता युधि ।
ध्रियमाणे च पाञ्चाल्ये नाचार्यः काममाप्स्यति ॥
हते तु पुरुषव्याघ्रे रणे सत्यजिति प्रभो ।
सर्वैरपि समेतैर्वा न स्थातव्यं कथंचन ॥ ४६
सञ्जय उवाच ।
अनुज्ञातस्ततो राज्ञा परिष्वक्तश्च फल्गुनः ।
प्रेम्णा दृष्टश्च बहुधा ह्याशिषश्चास्य योजिताः ४७
विहायैनं ततः पार्थस्त्रिगर्तान्प्रत्ययाद्बली ।
क्षुधितः क्षुद्विघातार्थं सिंहो मृगगणानिव ॥ ४८
ततो दौर्योधनं सैन्यं मुदा परमया युतम् ।
ऋतेऽर्जुनं भृशं क्रुद्धं धर्मराजस्य निग्रहे ॥ ४९
ततोऽन्योन्येन ते सैन्ये समाजग्मतुरोजसा ।
गङ्गासरय्वौ वेगेन प्रावृषीवोल्बणोदके ॥ ५०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

अर्जुनस्य संशप्तकैः सह युद्धम् ॥ १ ॥

सञ्जय उवाच ।
ततः संशप्तका राजन्समे देशे व्यवस्थिताः ।
व्यूढानीकै रथैरेव चन्द्रार्धाख्यैर्मुदा युताः ॥ १
ते किरीटिनमायान्तं दृष्ट्वा हर्षेण मारिष ।
'अतीव संप्रहृष्टास्ते ह्युपलक्ष्य धनञ्जयम् ।'
उदक्रोशन्नरव्याघ्राः शब्देन महता तदा ॥ २
स दिशः प्रदिशः सर्वा नभश्चैव समावृणोत् ।
आवृतत्वाच्च लोकस्य नासीत्तत्र प्रतिस्वनः ॥ ३
सोऽतीव संप्रहृष्टांस्तानुपलभ्य धनञ्जयः ।
किंचिदभ्युत्स्मयन्कृष्णमिदं वचनमब्रवीत् ॥ ४
देवकीपुत्र पश्येमान्मुमूर्षूनद्य संयुगे ।
भ्रातृंस्त्रैगर्तकानेतान्रोदितव्ये प्रहर्षितान् ॥ ५
अथवा हर्षकालोऽयं त्रैगर्तानामसंशयम् ।
कुनरैर्दुरवापान्हि लोकान्प्राप्स्यन्ति संयुगे ।
'मया हता हि संग्रामे लोकान्प्राप्स्यन्ति पुष्कलान्'
एवमुक्त्वा महाबाहुर्हृषीकेशं ततोऽर्जुनः ।
आससाद रणे व्यूढां त्रिगर्तानामनीकिनीम् ॥ ७
स देवदत्तमादाय शङ्खं हेमपरिष्कृतम् ।
दध्मौ वेगेन महता घोषेणापूरयन्दिशः ॥ ८
तेन शब्देन वित्रस्ता संशप्तकवरूथिनी ।
विचेष्टाऽवस्थिता सङ्ख्ये ह्यश्मसारमयी यथा ॥ ९
'सा सेना भरतश्रेष्ठ निश्चेष्टा शुशुभे तदा ।
चित्रे पटे यथा न्यस्ता कुशलैः शिल्पिभिर्नरैः १०
स्वनेन तेन सैन्यानां दिवमावृण्वता तदा ।
सस्वना पृथिवी सर्वा तथैव च महोदधिः ।
स्वनेन तेन सैन्यानां कर्णास्तु बधिरीकृताः ॥' ११
वाहास्तेषां विवृत्ताक्षाः स्तब्धकर्णशिरोधराः ।
विष्टब्धचरणा मूत्रं रुधिरं च प्रसुस्रुवुः
'ततो व्युपारमच्छब्दः प्रहृष्टास्ते ततोऽभवन् ॥'१२
उपलभ्य ततः संज्ञामवस्थाप्य च वाहिनीम् ।
युगपत्पाण्डुपुत्राय चिक्षिपुः कङ्कपत्रिणः ॥ १३

---

व्यूह्यानीकं रथैरेव चन्द्राकारं मुदा युताः इति झ. पाठः

॥ १ ॥ अष्टादशोऽध्यायः ॥ १८ ॥

तानर्जुनः सहस्राणि दशपञ्चभिराशुगैः ।
अनागतानेव शरैश्चिच्छेदाशु पराक्रमी ॥ १४
ततोऽर्जुनं शितैर्बाणैर्दशभिर्दशभिः पुनः ।
प्राविध्यन्त ततः पार्थस्तानविध्यत्त्रिभिस्त्रिभिः १५
एकैकस्तु ततः पार्थं राजन्विव्याध पञ्चभिः ।
स च तान्प्रतिविव्याध द्वाभ्यां द्वाभ्यां पराक्रमी ॥
भूय एव तु संक्रुद्धास्त्वर्जुनं सहकेशवम् ।
आपूरयञ्शरैस्तीक्ष्णैस्तटाकमिव वृष्टिभिः ॥ १७
ततः शरसहस्राणि प्रापतन्नर्जुनं प्रति ।
भ्रमराणामिव व्राताः फुल्लं द्रुमगणं वने ॥ १८
ततः सुबाहुस्त्रिंशद्भिरद्रिसारमयैः शरैः ।
अविध्यदिषुभिर्गाढं किरीटे सव्यसाचिनम् ॥ १९
तैः किरीटी किरीटस्थैर्हेमपुङ्खैरजिह्मगैः ।
शातकुम्भमयापीडो बभौ यूप इवोच्छ्रितः ॥ २०
हस्तावापं सुबाहोस्तु भल्लेन युधि पाण्डवः ।
चिच्छेद तं चैव पुनः शरवर्षैरवाकिरत् ॥ २१
ततः सुशर्मा दशभिः सुरथस्तु किरीटिनम् ।
सुधर्मा सुधनुश्चैव सुबाहुश्च समार्पयत् ॥ २२
तांस्तु सर्वान्पृथग्बाणैर्वानरप्रवरध्वजः ।
प्रत्यविध्यद्ध्वजांश्चैषां भल्लैश्चिच्छेद सायकान् ॥ २३
सुधन्वनो धनुश्छित्त्वा हयांश्चास्यावधीच्छरैः ।
अथास्य सशिरस्त्राणं शिरः कायादपातयत् ॥ २४
'जहार पार्थः सैन्येषु सहस्रे द्वे च योधिनाम् ।'
तस्मिन्निपतिते वीरे त्रस्तास्तस्य पदानुगाः ॥ २५
'भूयिष्ठं प्रतिरुद्धा ये हतैर्योधैर्यशस्विनः
व्यद्रवन्त भयाद्भीता यत्र दौर्योधनं बलम् ॥ २६
ततो जघान संक्रुद्धो वासविस्तां महाचमूम् ।
शरजालैरविच्छिन्नैस्तमः सूर्य इवांशुभिः ॥ २७
ततो भग्ने बले तस्मिन्विप्रलीने समन्ततः ।
सव्यसाचिनि संक्रुद्धे त्रैगर्तान्भयमाविशत् ॥ २८
ते वध्यमानाः पार्थेन शरैः सन्नतपर्वभिः ।
अमुह्यंस्तत्रतत्रैव त्रस्ता मृगगणा इव ॥ २९
ततस्त्रिगर्तराट् क्रुद्धस्तानुवाच महारथान् ।
अलं द्रुतेन वः शूरा न भयं कर्तुमर्हथ ॥ ३०
शप्त्वाऽथ शपथान्घोरान्सर्वसैन्यस्य पश्यतः ।
गत्वा दौर्योधनं सैन्यं किं वै वक्ष्यथ मुख्यशः ३१
नावहास्याः कथं लोके कर्मणाऽनेन संयुगे ।
भवेम सहिताः सर्वे निवर्तध्वं यथाबलम् ॥ ३२
एवमुक्तास्तु ते राजन्नुदक्रोशन्मुहुर्मुहुः ।
शङ्खांश्च दध्मिरे वीरा हर्षयन्तः परस्परम् ॥ ३३
ततस्ते संन्यवर्तन्त संशप्तकगणाः पुनः ।
नारायणाश्च गोपाला मृत्युं कृत्वाऽनिवर्तनम् ३४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

अर्जुनस्य संशप्तकैः सह युद्धम् ॥ १ ॥

सञ्जय उवाच ।
दृष्ट्वा तु संनिवृत्तांस्तान्संशप्तकगणान्पुनः ।
वासुदेवं महात्मानमर्जुनः समभाषत ॥ १
चोदयाश्वान्हृषीकेश संशप्तकगणान्प्रति ।
नैते हास्यन्ति संग्रामं जीवन्त इति मे मतिः ॥ २
पश्य मेऽस्त्रबलं घोरं बाह्वोरिष्वसनस्य च ।
अद्यैतान्पातयिष्यामि क्रुद्धो रुद्रः पशूनिव ॥ ३
सञ्जय उवाच ।
ततः कृष्णः स्मितं कृत्वा प्रतिनन्द्य शिवेन तम् ।
प्रावेशयत दुर्धर्षो यत्रयत्रैच्छदर्जुनः ॥ ४
स रथो भ्राजतेऽत्यर्थमुह्यमानो रणे तदा ।
उह्यमानमिवाकाशे विमानं पाण्डुरैर्हयैः ॥ ५
मण्डलानि ततश्चक्रे गतप्रत्यागतानि च ।
यथा शक्ररथो राजन्युद्धे देवासुरे पुरा ॥ ६
अथ नारायणाः क्रुद्धा विविधायुधपाणयः ।
छादयन्तः शरव्रातैः परिवव्रुर्धनञ्जयम् ॥ ७
अदृश्यं च मुहूर्तेन चक्रुस्ते भरतर्षभ ।
कृष्णेन सहितं युद्धे कुन्तीपुत्रं धनञ्जयम् ॥ ८

क्रुद्धस्तु फल्गुनः सङ्ख्ये द्विगुणीकृतविक्रमः ।
गाण्डीवं धनुरामृज्य तूर्णं जग्राह संयुगे ॥ ९
बद्ध्वा च भ्रुकुटिं वक्त्रे क्रोधस्य प्रतिलक्षणम् ।
देवदत्तं महाशङ्खं पूरयामास पाण्डवः ॥ १०
अथास्त्रमरिसङ्घघ्नं त्वाष्ट्रमभ्यस्यदर्जुनः ।
ततो रूपसहस्राणि प्रादुरासन्पृथक्पृथक् ॥ ११
अर्जुनप्रतिरूपैस्तैर्नानारूपैर्विमोहिताः ।
अन्योन्येनार्जुनं मत्वा स्वमात्मानं च जघ्निरे १२
अयमर्जुनोऽयं गोविन्द इमौ पाण्डवयादवौ ।
इति ब्रुवाणाः संमूढा जघ्नुरन्योन्यमाहवे ॥ १३
'अन्योन्यं समरे जघ्नुस्तावका भरतर्षभ ।'
मोहिताः परमास्त्रेण क्षयं जग्मुः परस्परम् ॥ १४
'रुधिरोक्षितगात्रास्ते प्रेक्षमाणाः परस्परम् ।'
अशोभन्त रणे योधाः पुष्पिता इव किंशुकाः १५
'रुधिरोत्पीडनास्ते तु रुधिरेण समुक्षिताः ।
चन्दनस्य रसेनेव व्यभ्राजन्त रणाजिरे ॥ १६
ततः प्रसह्य बीभत्सुर्व्याक्षिपद्गाण्डिवं धनुः ।
न्यहनत्तांञ्छरैस्तीक्ष्णैस्तमः सूर्य इवांशुभिः ॥१७
हतावशिष्टास्ते भूयः परिवार्य धनञ्जयम् ।
साश्वध्वजरथं चक्रुरदृश्यं शरवृष्टिभिः ॥' १८
ततः शरसहस्राणि तैर्विमुक्तानि भस्मसात् ।
कृत्वा तदस्त्रं तान्वीराननयद्यमसादनम् ॥ १९
अथ प्रहस्य बीभत्सुर्ललित्थान्मालवानपि ।
मावेल्लकांस्त्रिगर्तांश्च यौधेयांश्चार्दयच्छरैः ॥ २०
ते हन्यमाना वीरेण क्षत्रियाः कालचोदिताः ।
व्यसृजञ्छरजालानि पार्थे नानाविधानि च २१
न ध्वजो नार्जुनस्तत्र न रथो न च केशवः ।
प्रत्यदृश्यत घोरेण शरवर्षेण संवृतः ॥ २२
ततस्ते लब्धलक्षत्वादन्योन्यमभिचुक्रुशुः ।
हतौ कृष्णाविति प्रीत्या वासांस्यादुधुवुस्तदा २३
भेरीमृदङ्गशङ्खांश्च दध्मुर्वीराः सहस्रशः
सिंहनादरवांश्चोग्रांश्चक्रिरे तत्र मारिष ॥ २४
ततः प्रसिष्विदे कृष्णः खिन्नश्चार्जुनमब्रवीत् ।
क्वासि पार्थ न पश्यामि कच्चिज्जीवसि शत्रुहन् २५
तस्य तद्भाषितं श्रुत्वा त्वरमाणो धनंजयः ।
वायव्यास्त्रेण तैरस्तां शरवृष्टिमपाहरत् ॥ २६
ततः संशप्तकव्रातान्साश्वद्विपरथायुधान् ।
उवाह भगवान्वायुः शुष्कपर्णचयानिव ॥ २७
उह्यमानास्तु ते राजन्बह्वशोभन्त वायुना ।
प्रडीनाः पक्षिणः काले वृक्षेभ्य इव मारिष ॥ २८
तांस्तथा व्याकुलीकृत्य त्वरमाणो धनञ्जयः ।
जघान निशितैर्बाणैः सहस्राणि शतानि च ॥ २९
शिरांसि भल्लैरहरद्बाहूनपि च सायुधान् ।
हस्तिहस्तोपमांश्चोरूञ्शरैरुर्व्यामपातयत् ॥ ३०
पृष्ठच्छिन्नान्विचरणान्विमस्तकदृगङ्गुलीन् ।
नानाङ्गावयवैर्हीनांश्चकारारीन्धनंजयः ॥ ३१
गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान् ।
शरैर्विशकलीकुर्वंश्चक्रे व्यश्वरथद्विपान् ॥ ३२
मुण्डतालवनानीव तत्रतत्र चकाशिरे ।
छिन्ना रथध्वजव्राताः केचित्तत्र क्वचित्क्वचित् ॥३३
सोत्तरायुधिनो नागाः सपताकाङ्कुशध्वजाः ।
पेतुः शक्राशनिहता द्रुमवन्त इवाचलाः ॥ ३४
चामरापीडकवचाः स्रस्तांत्रनयनास्तथा ।
सारोहास्तुरगाः पेतुः पार्थबाणहताः क्षितौ ॥३५
विप्रविद्धासिनाराचाश्छिन्नवर्मर्ष्टिशक्तयः ।
पत्तयश्छिन्नवर्माणः कृपणाः शेरते हताः ॥ ३६
तैर्हतैर्हन्यमानैश्च पतद्भिः पतितैरपि ।
भ्रमद्भिर्निष्टनद्भिश्च क्रूरमायोधनं बभौ ॥ ३७
रजश्च सुमहज्जातं शान्तं रुधिरवृष्टिभिः ।
मही चाप्यभवद्दुर्गा कबन्धशतसंकुला ॥ ३८
तद्बभौ रौद्रबीभत्सं बीभत्सोर्यानमाहवे ।
आक्रीडमिव रुद्रस्य घ्नतः कालात्यये पशून् ॥ ३९
ते वध्यमानाः पार्थेन व्याकुलाश्वरथद्विपाः ।
तमेवाभिमुखाः क्षीणाः शक्रस्यातिथितां गताः ॥४०
सा भूमीर्भरतश्रेष्ठ निहतैस्तैर्महारथैः ।
आस्तीर्णा संबभौ सर्वा प्रेतीभूतैः समन्ततः ॥४१

सोत्तरायुधिनः उपरिगतैर्योधैः सहिताः ॥ ३४ ॥

एकोनविंशोऽध्यायः ॥ १९ ॥

एतस्मिन्नन्तरे चैव प्रमत्ते सव्यसाचिनि ।
व्यूढानीकस्ततो द्रोणो युधिष्ठिरमुपाद्रवत् ॥ ४२
तं प्रत्यगृह्णंस्त्वरिता व्यूढानीकाः प्रहारिणः ।
युधिष्ठिरं परीप्सन्तस्तदासीत्तुमुलं महत् ॥ ४३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ॥ २० ॥

संकुलयुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच
परिणाम्य निशां तां तु भारद्वाजो महारथः ।
उक्त्वा सुबहु राजेन्द्र वचनं वै सुयोधनम् ॥ १
विधाय गोप्तॄन्पार्थस्य संशप्तकगणैः सह ।
निष्क्रान्ते च तदा पार्थे संशप्तकवधं प्रति ॥ २
व्यूढानीकस्ततो द्रोणः पाण्डवानां महाचमूम् ।
अभ्ययाद्भरतश्रेष्ठ धर्मराजजिघृक्षया ॥ ३
व्यूढां दृष्ट्वा सुपर्णं न भारद्वाजस्य तां चमूम् ।
व्यूहेन मण्डलार्धेन प्रत्यव्यूहद्युधिष्ठिरः ॥ ४
मुखं त्वासीत्सुपर्णस्य भारद्वाजो महारथः ।
शिरो दुर्योधनो राजा सोदर्यैः सानुगैर्वृतः ॥ ५
चक्षुषी कृतवर्माऽऽसीद्गौतमश्चास्यतां वरः ॥ ६
भूतशर्मा क्षेमशर्मा करकाक्षश्च वीर्यवान्
कलिङ्गाः सिंहलाः प्राच्याः शूरा भीरा दशेरकाः ७
शका यवनकाम्भोजास्तथा हंसपथाश्च ये ।
ग्रीवायां शूरसेनाश्च दरदा मद्रकेकयाः ।
गजाश्वरथपत्त्योघास्तस्थुः परमदंशिताः ॥ ८
भूरिश्रवास्तथा शल्यः सोमदत्तश्च बाह्लिकः ।
अक्षौहिण्या वृता वीरा दक्षिणं पार्श्वमास्थिताः ॥९
विन्दानुविन्दावावन्त्यौ काम्भोजश्च सुदक्षिणः ।
वामं पार्श्वं समाश्रित्य द्रोणपुत्राग्रतः स्थिताः १०
पृष्ठे कलिङ्गाः साम्बष्ठा मागधाः पौण्ड्रमद्रकाः ।
गान्धाराः शकुनाः प्राच्याः पार्वतीया वसातयः ॥
पुच्छे वैकर्तनः कर्णः सपुत्रज्ञातिबान्धवः ।
महत्या सेनया तस्थौ नानाजनपदोत्थया ॥ १२
जयद्रथो भीमरथः संपातिर्ऋषभो जयः ।
भूमिंजयो वृषक्राथो नैषधश्च महाबलः ॥ १३
वृता बलेन महता ब्रह्मलोकपरिष्कृताः ।
व्यूहस्योरसि ते राजन्स्थिता युद्धविशारदाः ॥१४
द्रोणेन विहितो व्यूहः पदात्यश्वरथद्विपैः
वातोद्धूतार्णवाकारः प्रनृत्त इव लक्ष्यते ॥ १५
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः
सविद्युत्स्तनिता मेघाः सर्वदिग्भ्य इवोष्णगे ॥१६
तस्य प्राग्ज्योतिषो मध्ये विधिवत्कल्पितं गजम् ।
आस्थितः शुशुभे राजन्नंशुमानुदये यथा ॥ १७
माल्यदामवता राजञ्श्वेतच्छत्रेण धार्यता ।
कृत्तिकायोगयुक्तेन पौर्णमास्यामिवेन्दुना ॥ १८
नीलाञ्जनचयप्रख्यो मदान्धो द्विरदो बभौ ।
अतिवृष्टो महामेघैर्यथा स्यात्पर्वतो महान् ॥ १९
नानानृपतिभिर्वीरैर्विविधायुधभूषणैः ।
समन्वितः पार्वतीयैः शक्रो देवगणैरिव ॥ २०
ततो युधिष्ठिरः प्रेक्ष्य व्यूहं तमतिमानुषम् ।
अजय्यमरिभिः सङ्ख्ये पार्षतं वाक्यमब्रवीत् ॥२१
ब्राह्मणस्य वशं नाहमियामद्य यथा प्रभो ।
पारावतसवर्णाश्व तथा नीतिर्विधीयताम् ॥ २२
धृष्टद्युम्न उवाच ।
द्रोणस्य यतमानस्य वशं नैष्यसि सुव्रत ।
अहमावारयिष्यामि द्रोणमद्य सहानुगम् ॥ २३
मयि जीवति कौरव्य नोद्वेगं कर्तुमर्हसि ।
न हि शक्तो रणे द्रोणो विजेतुं मां कथंचन ॥ २४
सञ्जय उवाच ।
एवमुक्त्वा किरन्बाणान्द्रुपदस्य सुतो बली ।
पारावतसवर्णाश्वः स्वयं द्रोणमुपाद्रवत् ॥ २५

उष्णगे घर्मात्यये ॥ १६ ॥ पौर्णमास्यां कृत्तिकायोगयुक्तेन इन्दुना । शारदपूर्णचन्द्रेणेत्यर्थः ॥ १८ ॥

अनिष्टदर्शनं दृष्ट्वा धृष्टद्युम्नमवस्थितम् ।
क्षणेनैवाभवद्द्रोणो नातिहृष्टमना इव ॥ २६
'स हि जातो महाराज द्रोणस्य निधनं प्रति ॥२७
मर्त्यधर्मतया तस्माद्भारद्वाजो व्यमुह्यत ।
नाशकत्तत्र तत्किंचिदनीकं प्रतिवीक्षितुम् ॥ २८
ततः किरन्निषूंस्तीक्ष्णान्द्रुपदस्य वरूथिनीम् ।
भारद्वाजो ययौ तूर्णं पार्षतं वर्जयन्युधि ।
द्रुपदस्य महत्सैन्यं दारयामास ब्राह्मणः ॥' २९
तं तु संप्रेक्ष्य पुत्रस्ते दुर्मुखः शत्रुकर्षणः ।
प्रियं चिकीर्षुर्द्रोणस्य धृष्टद्युम्नमवारयत् ॥ ३०
स संप्रहारस्तुमुलः सुघोरः समपद्यत ।
पार्षतस्य च शूरस्य दुर्मुखस्य च भारत ॥ ३१
पार्षतः शरजालेन क्षिप्रं प्रच्छाद्य दुर्मुखम् ।
भारद्वाजं शरौघेण महता समवारयत् ॥ ३२
द्रोणमावारितं दृष्ट्वा भृशायस्तस्तवात्मजः ।
नानालिङ्गैः शरव्रातैः पार्षतं सममोहयत् ॥ ३३
तयोर्विषक्तयोः सङ्ख्ये पाञ्चाल्यकुरुमुख्ययोः ।
द्रोणो यौधिष्ठिरं सैन्यं बहुधा व्यधमच्छरैः ॥ ३४
अनिलेन यथाऽभ्राणि विच्छिन्नानि समन्ततः ।
तथा पार्थस्य सैन्यानि विच्छिन्नानि क्वचित्क्वचित् ॥
मुहूर्तमिव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्निर्मर्यादमवर्तत ॥ ३६
'नैव खं न दिशो भूमिर्बभासे न च भास्करः ।'
नैव स्वे न परे राजन्नाज्ञायन्त परस्परम् ।
अनुमानेन संज्ञाभिर्युद्धं तत्समवर्तत ॥ ३७
चूडामणिषु निष्केषु भूषणेष्वपि वर्मसु ।
तेषामादित्यवर्णाभा रश्मयः प्रचकाशिरे ॥ ३८
तत्प्रकीर्णपताकानां रथवारणवाजिनाम् ।
बलाकाशबलाभ्राभं ददृशे रूपमाहवे ॥ ३९
नरानेव नरा जघ्नुरुदग्राश्च हया हयान् ।
रथांश्च रथिनो जघ्नुर्वारणा वरवारणान् ॥ ४०
समुच्छ्रितपताकानां गजानां परमद्विपैः ।
क्षणेन तुमुलो घोरः संग्रामः समपद्यत ॥ ४१

तेषां संसक्तगात्राणां कर्षतामितरेतरम् ।
दन्तसङ्घातसङ्घर्षात्सधूमोऽग्निरजायत ॥ ४२
विप्रकीर्णपताकास्ते विषाणजनिताग्नयः ।
बभूवुः खं समासाद्य सविद्युत इवाम्बुदाः ॥ ४३
विक्षिपद्भिर्नदद्भिश्च निपतद्भिश्च वारणैः ।
संबभूव मही कीर्णा मेघैर्द्यौरिव वार्षिकी ॥ ४४
तेषामाहन्यमानानां बाणतोमरऋष्टिभिः ।
वारणानां रवो जज्ञे मेघानामिव संप्लवे ॥ ४५
तोमराभिहताः केचिद्बाणैश्च परमद्विपाः ।
वित्रेसुः सर्वनागानां शब्दमेवापरेऽसृजन् ॥ ४६
विषाणाभिहताश्चापि केचित्तत्र गजा गजैः ।
चक्रुरार्तस्वनं घोरमुत्पातजलदा इव ॥ ४७
प्रतीपाः क्रियमाणाश्च वारणा वरवारणैः ।
उन्मथ्य पुनराजग्मुः प्रेरिताः परमाङ्कुशैः ॥ ४८
महामात्रैर्महामात्रास्ताडिताः शरतोमरैः ।
गजेभ्यः पृथिवीं जग्मुर्मुक्तप्रहरणाङ्कुशाः ॥ ४९
निर्मनुष्याश्च मातङ्गा विनदन्तस्ततस्ततः ।
छिन्नाभ्राणीव संपेतुः संप्रविश्य परस्परम् ॥ ५०
हतान्परिवहन्तश्च पतितान्पतितायुधान् ।
दिशो जग्मुर्महानागाः केचिदेकचरा इव ॥ ५१
ताडितास्ताड्यमानाश्च तोमरर्ष्टिपरश्वधैः ।
पेतुरार्तस्वनं कृत्वा तदा विशसने गजाः ॥ ५२
तेषां शैलोपमैः कायैर्निपतद्भिः समन्ततः ।
आहता सहसा भूमिश्चकम्पे च ननाद च ॥ ५३
सादितैः सगजारोहैः सपताकैः समन्ततः ।
मातङ्गैः शुशुभे भूमिर्विकीर्णैरिव पर्वतैः ॥ ५४
गजस्थाश्च महामात्रा निर्भिन्नहृदया रणे ।
रथिभिः पातिता भल्लैर्विकीर्णाङ्कुशतोमराः ॥ ५५
क्रौञ्चवद्विनदन्तोऽन्ये नाराचाभिहता गजाः ।
परान्स्वांश्चापि मृद्नन्तः परिपेतुर्दिशो दश ॥ ५६
गजाश्वरथयोधानां शरीरौघसमावृता ।
बभूव पृथिवी राजन्मांसशोणितकर्दमा ॥ ५७
प्रमथ्य च विषाणाग्रैः समुत्क्षिप्ताश्च वारणैः ।

अनिष्टदर्शनं स्वमृत्युहेतुत्वात् ॥ २६ ॥ भृशायस्तोऽतिप्रयत्नवान् ॥ ३३ ॥ एकचराः द्विपान्तरदर्शनासहाः ॥ ५१ ॥

सचक्राश्च विचक्राश्च रथैरेव महारथाः ॥ ५८
रथाश्च रथिभिर्हीना निर्मनुष्याश्च वाजिनः ।
हतारोहाश्च मातङ्गा दिशो जग्मुर्भयातुराः ॥ ५९
जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा ।
इत्यासीत्तुमुलं युद्धं न प्राज्ञायत किंचन ॥ ६०
आगुल्फेभ्योऽवसीदन्ते नरा लोहितकर्दमैः ।
दीप्यमानैः परिक्षिप्ता दावैरिव महाद्रुमाः ॥ ६१
शोणितैः सिच्यमानानि वस्त्राणि कवचानि च ।
छत्राणि च पताकाश्च सर्वं रक्तमदृश्यत ॥ ६२
हयौघाश्च रथौघाश्च नरौघाश्च निपातिताः ।
संक्षुण्णाः पुनरावृत्य बहुधा रथनेमिभिः ॥ ६३
सगजौघमहावेगः परासुनरशैवलः ।
रथौघतुमुलावर्तः प्रबभौ सैन्यसागरः ॥ ६४
तं वाहनमहानौभिर्योधा जयधनैषिणः ।
अवगाह्याथ मज्जन्तो नैव मोहं प्रचक्रिरे ॥ ६५
शरवर्षाभिवृष्टेषु योधेष्वञ्चितलक्ष्मसु ।
न तेष्वचित्ततां लेभे कश्चिदाहतलक्षणः ॥ ६६
वर्तमाने तथा युद्धे घोररूपे भयंकरे ।
मोहयित्वा परान्द्रोणो युधिष्ठिरमुपाद्रवत् ॥ ६७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ॥ २१ ॥

युधिष्ठिरं जिघृक्षतो द्रोणस्य सत्यजिता निरोधः ॥ १ ॥ द्रोणेन सत्यजिति निहते भयाद्युधिष्ठिरस्यापयानम् ॥ २ ॥ पुनर्युधिष्ठिरं जिघृक्षुणा द्रोणेन पाञ्चाल्यादीनां हननम् ॥ ३ ॥

सञ्जय उवाच ।
ततो युधिष्ठिरो द्रोणं दृष्ट्वान्तिकमुपागतम् ।
महता शरवर्षेण प्रत्यगृह्णादभीतवत् ॥ १
ततो हलहलाशब्द आसीद्यौधिष्ठिरे बले ।
जिघृक्षति महासिंहे गजानामिव यूथपम् ॥ २
दृष्ट्वा द्रोणं ततः शूरः सत्यजित्सत्यविक्रमः ।
युधिष्ठिरमभिप्रेप्सुराचार्यं समुपाद्रवत् ॥
तत आचार्यपाञ्चाल्यौ युयुधाते महाबलौ ।
विक्षोभयन्तौ तत्सैन्यमिन्द्रवैरोचनाविव ॥ ४
ततो द्रोणं महेष्वासः सत्यजित्सत्यविक्रमः ।
अविध्यन्निशिताग्रेण परमास्त्रं विदर्शयन् ॥ ५
तथास्य सारथेः पञ्च शरान्सर्पविषोपमान् ।
अमुञ्चदन्तकप्रख्यान्संमुमोहास्य सारथिः ॥ ६
अथास्य सहसाऽविध्यद्धयान्दशभिराशुगैः ।
दशभिर्दशभिः क्रुद्ध उभौ च पार्ष्णिसारथी ॥ ७
मण्डलं तु समावृत्य विचरन्पृतनामुखे ।
ध्वजं चिच्छेद च क्रुद्धो द्रोणस्यामित्रकर्षणः ॥ ८
द्रोणस्तु तत्समालोक्य चरितं तस्य संयुगे ।
मनसा चिन्तयामास प्राप्तकालमरिन्दमः ॥ ९
ततः सत्यजितं तीक्ष्णैर्दशभिर्मर्मभेदिभिः ।
अविध्यच्छीघ्रमाचार्यश्छित्त्वाऽस्य सशरं धनुः १०
स शीघ्रतरमादाय धनुरन्यत्प्रतापवान् ।
द्रोणमभ्यहनद्राजंस्त्रिंशता कङ्कपत्रिभिः ॥ ११
दृष्ट्वा सत्यजिता द्रोणं ग्रस्यमानमिवाहवे
वृकः शरशतैस्तीक्ष्णैः पाञ्चाल्यो द्रोणमार्दयत् १२
संछाद्यमानं समरे द्रोणं दृष्ट्वा महारथम् ।
चुक्रुशुः पाण्डवा राजन्वस्त्राणि दुधुवुश्च ह ॥ १३
वृकस्तु परमक्रुद्धो द्रोणं षष्ट्या स्तनान्तरे ।
विव्याध बलवान्राजंस्तदद्भुतमिवाभवत् ॥ १४
द्रोणस्तु शरवर्षेण च्छाद्यमानो महारथः ।
वेगं चक्रे महावेगः क्रोधादुद्वृत्य चक्षुषी ॥ १५
ततः सत्यजितश्चापं छित्त्वा द्रोणो वृकस्य च ।
षड्भिः ससूतं सहयं शरैर्द्रोणोऽवधीद्वृकम् ॥ १६
अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरम् ।
साश्वं ससूतं विशिखैर्द्रोणं विव्याध सध्वजम् ॥ १७
स तन्न ममृषे द्रोणः पाञ्चाल्येनार्दितो मृधे ।
ततस्तस्य विनाशाय सत्वरं व्यसृजच्छरान् ॥ १८

---

अचित्ततां मोहम् ॥ ६६ ॥ विंशोऽध्यायः ॥ २० ॥

हयान्ध्वजं धनुर्मुष्टिमुभौ च पार्ष्णिसारथी।
अवाकिरत्ततो द्रोणः शरवर्षैः सहस्रशः॥ १९
तथा संछिद्यमानेषु कार्मुकेषु पुनःपुनः।
पाञ्चाल्यः परमास्त्रज्ञः शोणाश्वं समयोधयत्॥ २०
स सत्यजितमालोक्य तथोदीर्णं महाहवे।
अर्धचन्द्रेण चिच्छेद शिरस्तस्य महात्मनः॥ २१
तस्मिन्हते महामात्रे पाञ्चालानां महारथे।
अपायाज्जवनैरश्वैर्द्रोणात्त्रस्तो युधिष्ठिरः॥ २२
पाञ्चालाः केकया मात्स्याश्चेदिकारूशकोसलाः
युधिष्ठिरमभीप्सन्तो दृष्ट्वा द्रोणमुपाद्रवन्॥ २३
ततो युधिष्ठिरं प्रेप्सुराचार्यः शत्रुपूगहा
व्यधमत्तान्यनीकानि तूलराशिमिवानलः॥ २४
निर्दहन्तमनीकानि तानि तानि पुनःपुनः।
द्रोणं मत्स्यादवरजः शतानीकोऽभ्यवर्तत॥ २५
सूर्यरश्मिप्रतीकाशैः कर्मारपरिमार्जितैः।
षड्भिः ससूतं सहयं द्रोणं विद्ध्वाऽनदद्भृशम्॥ २६
क्रूराय कर्मणे युक्तश्चिकीर्षुः कर्म दुष्करम्।
अवाकिरच्छरशतैर्भारद्वाजं महारथम्॥ २७
तस्य नानदतो द्रोणः शिरः कायात्सकुण्डलम्।
क्षुरेणापाहरत्तूर्णं ततो मत्स्याः प्रदुद्रुवुः॥ २८
मत्स्याञ्जित्वाऽजयच्चेदीन्करूशान्केकयानपि।
पाञ्चालान्सृञ्जयान्पाण्डून्भारद्वाजः पुनःपुनः॥ २९
तं दहन्तमनीकानि क्रुद्धमग्निं यथा वनम्।
दृष्ट्वा रुक्मरथं वीरं समकम्पन्त सृञ्जयाः॥ ३०
उभाभ्यां संदधानस्य धनुरस्याशुकारिणः।
ज्याघोषो निघ्नतोऽमित्रान्दिक्षु सर्वासु शुश्रुवे॥ ३१
नागानश्वान्पदातींश्च रथिनो गजसादिनः।
रौद्रा हस्तवता मुक्ताः प्रमथ्नन्ति स्म सायकाः॥ ३२
नानद्यमानः पर्जन्यो मिश्रवातो हिमात्यये।
अश्मवर्षमिवावर्षन्परेषां भयमादधत्॥ ३३
सर्वा दिशः समचरत्सैन्यं विक्षोभयन्निव।
बली शूरो महेष्वासो मित्राणामभयंकरः॥ ३४
तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम्।
दिक्षु सर्वासु पश्यामो द्रोणस्यामिततेजसः॥ ३५
शोभमानां ध्वजे चास्य वेदीमद्राक्ष्म भारत।
हिमवच्छिखराकारं चरतः संयुगे भृशम्॥ ३६
द्रोणस्तु पाण्डवानीके चकार कदनं महत्।
यथा दैत्यगणे विष्णुः सुरासुरनमस्कृतः॥ ३७
स शूरः सत्यवाक्प्राज्ञो बलवान्सत्यविक्रमः।
महानुभावः कल्पान्ते रौद्रां भीरुविभीषणाम्॥ ३८
कवचोर्मिध्वजावर्तां मर्त्यकूलापहारिणीम्।
गजवाजिमहाग्राहामसिमीनां दुरासदाम्॥ ३९
वीरास्थिशर्करां रौद्रां भेरीमुरजकच्छपाम्
चर्मवर्मप्लवां घोरां केशशैवलशाद्वलाम्॥ ४०
शरौघिणीं धनुःस्रोतां बाहुपन्नगसंकुलाम्।
रणभूमिवहां तीव्रां कुरुसृञ्जयवाहिनीम्॥ ४१
मनुष्यशीर्षपाषाणां शक्तिमीनां गदोडुपाम्।
उष्णीषफेनवसनां विकीर्णान्त्रसरीसृपाम्॥ ४२
वीरापहारिणीमुग्रां मांसशोणितकर्दमाम्।
हस्तिग्राहां केतुवृक्षां क्षत्रियाणां निमज्जनीम्॥ ४३
क्रूरां शरीरसंघाटां सादिनक्रां दुरत्ययाम्।
द्रोणः प्रावर्तयत्तत्र नदीमन्तकगामिनीम्॥ ४४
क्रव्यादगणसंजुष्टां श्वशृगालगणायुताम्
निषेवितां महारौद्रैः पिशिताशैः समन्ततः॥ ४५
तं दहन्तमनीकानि रथोदारं कृतान्तवत्।
सर्वतोऽभ्यद्रवन्द्रोणं कुन्तीपुत्रपुरोगमाः॥ ४६
ते द्रोणं सहिताः शूराः सर्वतः प्रत्यवारयन्।
गभस्तिभिरिवादित्यं तपन्तं भुवनं यथा॥ ४७
तं तु शूरं महेष्वासं तावकाऽभ्युद्यतायुधाः।
राजानो राजपुत्राश्च समन्तात्पर्यवारयन्॥ ४८
शिखण्डी तु ततो द्रोणं पञ्चभिर्नतपर्वभिः।
क्षत्रवर्मा च विंशत्या वसुदानश्च पञ्चभिः॥ ४९
उत्तमौजास्त्रिभिर्बाणैः क्षत्रदेवश्च सप्तभिः
सात्यकिश्च शतेनाजौ युधामन्युस्तथाऽष्टभिः॥ ५०
युधिष्ठिरो द्वादशभिर्द्रोणं विव्याध सायकैः
धृष्टद्युम्नश्च दशभिश्चेकितानस्त्रिभिः शरैः॥ ५१
ततो द्रोणः सत्यसन्धः प्रभिन्न इव कुञ्जरः।
अभ्यतीत्य रथानीकं दृढसेनमपातयत्॥ ५२

ततो राजानमासाद्य प्रहरन्तमभीतवत् ।
अविध्यन्नवभिः क्षेमं स हतः प्रापतद्रथात् ॥ ५३
स मध्यं प्राप्य सैन्यानां सर्वाः प्रविचरन्दिशः
त्राता ह्यभवदन्येषां न त्रातव्यः कथंचन ॥ ५४
शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् ।
वसुदानं च भल्लेन प्रैषयद्यमसादनम् ॥ ५५
अशीत्या क्षत्रवर्माणं षड्विंशत्या सुदक्षिणम् ।
क्षत्रदेवं तु भल्लेन रथनीडादपातयत् ॥ ५६
युधामन्युं चतुःषष्ट्या त्रिंशता चैव सात्यकिम् ।
विद्ध्वा रुक्मरथस्तूर्णं युधिष्ठिरमुपाद्रवत् ॥ ५७
ततो युधिष्ठिरः क्षिप्रं गुरुतो राजसत्तमः ।
अपायाज्जवनैरश्वैः पाञ्चाल्यो द्रोणमभ्ययात् ॥५८
तं द्रोणः सधनुष्कं तु साश्वयन्तारमाक्षिणोत् ।
स हतः प्रापतद्भूमौ रथाज्ज्योतिरिवाम्बरात्
'हत्वा तं विबभौ द्रोणः कुरुभिः परिवारितः ५९
वार्धक्षेमिस्तु वार्ष्णेयो द्रोणं विद्ध्वा शरोत्तमैः ।
नवभिश्च महीपालः पुनर्विव्याध पञ्चभिः ॥ ६०
स सात्यकिश्चतुष्षष्ट्या राजन्विव्याध सायकैः ।
सुचित्रो दशभिर्बाणैर्द्रोणं विद्ध्वाऽनदद्बली ॥ ६१
तं द्रोणः समरे राजञ्शरवर्षैरवाकिरत्
अपातयत्ततो द्रोणः सुचित्रं सहसारथिम् ॥ ६२
साश्वं च समरे राजन्हतो वै प्रापतत्क्षितौ
पात्यमानो महाराज बभौ ज्योतिरिवाम्बरात् ॥'
तस्मिन्हते राजपुत्रे पाञ्चालानां यशस्करे ।
हत द्रोणं हत द्रोणमित्यासीन्निःस्वनो महान् ॥६४
तांस्तथा भृशसंरब्धान्पाञ्चालान्मत्स्यकेकयान् ।
सृञ्जयान्पाण्डवांश्चैव द्रोणो व्यक्षोभयद्बली ॥६५
सात्यकिं चेकितानं च धृष्टद्युम्नशिखण्डिनौ ।
वार्धक्षेमिं चैत्रसेनिं सेनाबिन्दुं सुवर्चसम् ॥ ६६
एतांश्चान्यांश्च सुबहून्नानाजनपदेश्वरान् ।
सर्वान्द्रोणोऽजयद्युद्धे कुरुभिः परिवारितः ॥ ६७
तावकाश्च महाराज जयं लब्ध्वा महाहवे ।
पाण्डवेयान्रणे जघ्नुर्द्रवमाणान्समन्ततः ॥ ६८
ते दानवा इवेन्द्रेण वध्यमाना महात्मना ।
पाञ्चालाः केकया मात्स्याः समकम्पन्त भारत ६९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

द्रोणपराक्रमहृष्टेन दुर्योधनेन कर्णं संबोध्य भीमसेनाद्यवज्ञाने कृते कर्णेन भीमादीनां प्रशंसनपूर्वकमनवज्ञेयत्वकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
भारद्वाजेन भग्नेषु पाण्डवेषु महामृधे ।
पाञ्चालेषु च सर्वेषु कश्चिदन्योऽभ्यवर्तत ॥ १
आर्यां युद्धे मतिं कृत्वा क्षत्रियाणां यशस्करीम् ।
असेवितां कापुरुषैः सेवितां पुरुषर्षभैः ॥ २
स हि वीरोन्नतः शूरो यो भग्नेषु निवर्तते ।
अहो नासीत्पुमान्कश्चिद्दृष्ट्वा द्रोणं व्यवस्थितम् ॥३
जृम्भमाणमिव व्याघ्रं प्रभिन्नमिव कुञ्जरम् ।
त्यजन्तमाहवे प्राणान्सन्नद्धं चित्रयोधिनम् ॥ ४
महेष्वासं नरव्याघ्रं द्विषतां भयवर्धनम् ।
कृतज्ञं सत्यनिरतं दुर्योधनहितैषिणम् ॥ ५
भारद्वाजं तथाऽनीके दृष्ट्वा शूरमवस्थितम् ।
के शूराः संन्यवर्तन्त तन्ममाचक्ष्व सञ्जय ॥ ६
सञ्जय उवाच ।
तान्दृष्ट्वा चलितान्सङ्ख्ये प्रणुन्नान्द्रोणसायकैः ।
पाञ्चालान्पाण्डवान्मात्स्यान्सृञ्जयांश्चेदिकेकयान्
द्रोणचापविमुक्तेन शरौघेणाशु हारिणा ।
सिन्धोरिव महौघेन ह्रियमाणान्यथा प्लवान् ॥८

उभयत्र विद्ध्वेति शेषः ॥ ५५ ॥ पाञ्चाल्यो नाम्ना ॥ ५८ ॥
एकविंशोऽध्यायः ॥ २१ ॥

अभ्यवर्तत किम् ॥ १ ॥

कौरवाः सिंहनादेन नानावाद्यस्वनेन च ।
रथद्विपनरांश्चैव सर्वतः समवारयन् ॥ ९
तान्पश्यन्सैन्यमध्यस्थो राजा स्वजनसंवृतः ।
दुर्योधनोऽब्रवीत्कर्णं प्रहृष्टः प्रहसन्निव ॥ १०
दुर्योधन उवाच ।
पश्य राधेय पाञ्चालान्प्रणुन्नान्द्रोणसायकैः ।
सिंहेनेव मृगान्वन्यांस्त्रासितान्दृढधन्वना ॥ ११
नैते जातु पुनर्युद्धमीहेयुरिति मे मतिः ।
यथा तु भग्ना द्रोणेन वातेनेव महाद्रुमाः ॥ १२
अर्द्यमानाः शरैरेते रुक्मपुङ्खैर्महात्मना ।
पथा नैकेन गच्छन्ति घूर्णमानास्ततस्ततः ॥ १३
सन्निरुद्धाश्च कौरव्यैर्द्रोणेन च महात्मना ।
एतेऽन्ये मण्डलीभूताः पावकेनेव कुञ्जराः ॥ १४
भ्रमरैरिव चाविष्टा द्रोणस्य निशितैः शरैः
अन्योन्यं समलीयन्त पलायनपरायणाः ॥ १५
एष भीमो महाक्रोधी हीनः पाण्डवसृञ्जयैः ।
मदीयैरावृतो योधैः कर्ण नन्दयतीव माम् ॥१६
व्यक्तं द्रोणमयं लोकमद्य पश्यति दुर्मतिः ।
निराशो जीवितान्नूनमद्य राज्याच्च पाण्डवः ॥१७
कर्ण उवाच ।
नैष जातु महाबाहुर्जीवन्नाहवमुत्सृजेत् ।
न चेमान्पुरुषव्याघ्र सिंहनादान्सहिष्यति ॥ १८
न चापि पाण्डवा युद्धे भज्येरन्निति मे मतिः ।
शूराश्च बलवन्तश्च कृतास्त्रा युद्धदुर्मदाः ॥ १९
विषाग्निद्यूतसंक्लेशान्वनवासं च पाण्डवाः ।
स्मरमाणा न हास्यन्ति संग्राममिति मे मतिः २०
निवृत्तो हि महाबाहुरमितौजा वृकोदरः ।
वरान्वरान्हि कौन्तेयो रथोदारान्हनिष्यति ॥२१
असिना धनुषा शक्त्या हयैर्नागैर्नरै रथैः ।
आयसेन च दण्डेन व्रातान्व्रातान्हनिष्यति ॥ २२
तमनमनुवर्तन्ते सात्यकिप्रमुखा रथाः
पाञ्चालाः केकया मात्स्याः पाण्डवाश्च विशेषतः ॥
शूराश्च बलवन्तश्च विक्रान्ताश्च महारथाः ।
विनिघ्नन्तश्च भीमेन संरब्धेनाभिचोदिताः ॥ २४
ते द्रोणमभिवर्तन्ते सर्वतः कुरुपुङ्गवाः ।
वृकोदरं परीप्सन्तः सूर्यमभ्रगणा इव ॥ २५
‘समरेषु तु निर्दिष्टाः पाण्डवाः कृष्णबान्धवाः ।
पाञ्चालाः केकया मात्स्याः पाण्डवेयाश्च सर्वशः ॥
शूराश्च बलवन्तश्च विक्रान्ताश्च महारथाः ।
ह्रीमन्तः शत्रुमरणे निपुणाः पुण्यलक्षणाः ॥ २७
बहवः पार्थिवा राजंस्तेषां वशगता रणे ।
मावमंस्थाः पाण्डवांस्त्वं नारायणपुरोगमान् ॥ २८
एकायनगता ह्येते पीडयेयुर्यतव्रतम् ।
अरक्षमाणं शलभा यथा दीपं मुमूर्षवः ॥ २९
असंशयं कृतास्त्राश्च पर्याप्ताश्चापि वारणे ।
अतिभारमहं मन्ये भारद्वाजे समाहितम् ॥ ३०
ते शीघ्रमनुगच्छामो यत्र द्रोणो व्यवस्थितः
कोका इव महानागं मा वै हन्युर्यतव्रतम् ॥ ३१
सञ्जय उवाच ।
राधेयस्य वचः श्रुत्वा राजा दुर्योधनस्ततः
भ्रातृभिः सहितो राजन्प्रायाद्द्रोणरथं प्रति ॥ ३२
तत्रारावो महानासीदेकं द्रोणं जिघांसताम् ।
पाण्डवानां निवृत्तानां नानावर्णैर्हयोत्तमैः ॥ ३३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

रथानामश्वध्वजवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
सर्वेषामेव मे ब्रूहि रथचिह्नानि सञ्जय ।
ये द्रोणमभ्यवर्तन्त क्रुद्धा भीमपुरोगमाः ।
‘तान्यहं श्रोतुमिच्छामि विस्तरेण पृथक्पृथक् ॥ १

कोको वृकः ॥ ३१ ॥ द्वाविंशोऽध्यायः ॥ २१ ॥

रथचिह्नानि हयान् ध्वजांश्चेत्यर्थः ॥ १ ॥

दूयते मे मनस्तात द्रोणं प्रति परन्तपम् ।
श्रुत्वा भीष्मस्य निधनं तद्वदेतद्भविष्यति ॥' २
सञ्जय उवाच ।
ऋक्षवर्णैर्हयैर्दृष्ट्वा व्यायच्छन्तं वृकोदरम् ।
रजताश्वस्ततः शूरः शैनेयः संन्यवर्तत ॥ ३
सारङ्गाश्वो युधामन्युः स्वयं प्रत्वरयन्हयान् ।
पर्यवर्तत दुर्धर्षः क्रुद्धो द्रोणरथं प्रति ॥ ४
पारावतसवर्णैस्तु हेमभाण्डैर्महाजवैः ।
पाञ्चालराजस्य सुतो धृष्टद्युम्नो न्यवर्तत ॥ ५
पितरं तु परिप्रेप्सुः क्षत्रधर्मा यतव्रतः ।
सिद्धिं चास्य परां काङ्क्षञ्शोणाश्वः संन्यवर्तत ॥ ६
पद्मपत्रनिभांश्चाश्वान्मल्लिकाक्षान्स्वलङ्कृतान् ।
शैखण्डिः क्षत्रदेवस्तु स्वयं प्रत्वरयन्ययौ ॥ ७
दर्शनीयास्तु काम्भोजाः शुकपत्रपरिच्छदाः ।
वहन्तो नकुलं शीघ्रं तावकानभिदुद्रुवुः ॥ ८
कृष्णास्तु मेघसंकाशा अवहन्नुत्तमौजसम्
दुर्धर्षायाभिसंधाय क्रुद्धं युद्धाय भारत ॥
तथा तित्तिरिकल्माषा हया वातसमा जवे ।
अवहंस्तुमुले युद्धे सहदेवमुदायुधम् ॥ १०
दन्तवर्णास्तु राजानं कालवाला युधिष्ठिरम् ।
भीमवेगा नरव्याघ्रमवहन्वातरंहसः ॥ ११
हेमोत्तमप्रतिच्छन्नैर्हयैर्वातसमैर्जवे ।
अभ्यवर्तन्त सैन्यानि सर्वाण्येव युधिष्ठिरम् ॥ १२
राज्ञस्त्वनन्तरो राजा पाञ्चाल्यो द्रुपदोऽभवत् ।
जातरूपमयच्छत्रः सर्वैस्तैरभिरक्षितः ॥ १३
ललामैर्हरिभिर्युक्तः सर्वशब्दक्षमैर्युधि ।
राज्ञां मध्ये महेष्वासः शान्तभीरभ्यवर्तत ॥ १४
तं विराटोऽन्वयाच्छीघ्रं सह सर्वैर्महारथैः ।
केकयाश्च शिखण्डी च धृष्टकेतुस्तथैव च ।
स्वैः स्वैः सैन्यैः परिवृता मात्स्यराजानमन्वयुः १५
तं तु पाटलिपुष्पाणां समवर्णा हयोत्तमाः ।
वहमाना व्यराजन्त मात्स्यस्यामित्रघातिनः ॥ १६
हरिद्रासमवर्णास्तु जवना हेममालिनः ।
पुत्रं विराटराजस्य सत्वरं समुदावहन् ॥ १७
इन्द्रगोपकवर्णैश्च भ्रातरः पञ्च केकयाः ।
जातरूपसमाभासाः सर्वे लोहितकध्वजाः ॥ १८
ते हेममालिनः शूराः सर्वे युद्धविशारदाः ।
वर्षन्त इव जीमूताः प्रत्यदृश्यन्त दंशिताः ॥ १९
आमपात्रनिकाशास्तु पाञ्चाल्यममितौजसम् ।
दत्तास्तुम्बुरुणा दिव्याः शिखण्डिनमुदावहन् २०
तथा द्वादशसाहस्राः पाञ्चालानां महारथाः ।
तेषां तु षट्सहस्राणि ये शिखण्डिनमन्वयुः ॥ २१
पुत्रं तु शिशुपालस्य नरसिंहस्य मारिष ।
आक्रीडन्तो वहन्ति स्म सारङ्गशबला हयाः ॥ २२
धृष्टकेतुस्तु चेदीनामृषभोऽतिबलोदितः ।
काम्भोजैः शबलैरश्वैरभ्यवर्तत दुर्जयः ॥ २३
बृहत्क्षत्रं तु कैकेयं सुकुमारं हयोत्तमाः
पलालधूमसंकाशाः सैन्धवाः शीघ्रमावहन् ॥ २४
मल्लिकाक्षाः पद्मवर्णा बाह्लिजाताः स्वलङ्कृताः ।
शूरं शिखण्डिनः पुत्रमृक्षदेवमुदावहन् ॥ २५
रुक्मभाण्डप्रतिच्छन्नाः कौशेयसदृशा हयाः ।
क्षमावन्तोऽवहन्सङ्ख्ये सेनाबिन्दुमरिन्दमम् ॥ २६
युवानमवहन्युद्धे क्रौञ्चवर्णा हयोत्तमाः ।
काश्यस्याभिभुवः पुत्रं सुकुमारं महारथम् ॥ २७
श्वेतास्तु प्रतिविन्ध्यन्तं कृष्णग्रीवा मनोजवाः ।
यन्तुः प्रेष्यकरा राजन्राजपुत्रमुदावहन् ॥ २८
सुतसोमं तु योधाग्र्यं भीमपुत्रं महाबलम् ।
माषपुष्पसवर्णास्तमवहन्वाजिनो रणे ॥ २९

---

व्यायच्छन्तं निवर्तमानम् ॥ ३ ॥ सितनीलारुणो वर्णः सारङ्गसदृशश्च सः ॥ ४ ॥ पारावतकपोताभः सितनीलसमन्वयात् ॥ ५ ॥ शोणः कोकनदच्छविः ॥ ६ ॥ मल्लिकाक्षान्निर्मलेक्षणान् ॥ ७ ॥ महाललाटजघनस्कन्धवक्षोजवा हयाः । दीर्घग्रीवायता ह्रस्वमुष्काः काम्भोजकाः स्मृताः । शुकपत्रपरिच्छदाः शुकपत्राभरोमाणः ॥ ८ ॥ दन्तवर्णाः गजदन्तगौराः ॥ ११ ॥ श्वेतं ललाटमध्यस्थं तारारूपं हयस्य यत् । ललामं चापि तत्प्राहुर्ललामोऽश्वस्तदन्वितः । सकेसराणि रोमाणि सुवर्णाभानि यस्य तु । हरिः स वर्णतोऽश्वस्तु पीतकौशेयसन्निभः ॥ १४ ॥ पाटलिपुष्पाणां समवर्णाः श्वेतरक्ताः ॥ १६ ॥ विराटराजस्य पुत्रं उत्तरम् ॥ १७ ॥ आमपात्रनिकाशाः मलिनश्वेताः ॥ २० ॥ क्षमावन्तो विनीताः ॥ २६ ॥ प्रेष्यकराः इच्छानुविधायिनः ॥ २८ ॥

सहस्रसोमप्रतिमो बभूव
पुरे कुरूणामुदयेन्दुनाम्नि ।
तस्मिञ्जातः सोमसंक्रन्दमध्ये
यस्मात्तस्मात्सुतसोमोऽभवत्सः ॥ ३०
तु शतानीकं शालपुष्पनिभा हयाः ।
आदित्यतरुणप्रख्याः श्लाघनीयमुदावहन् ॥ ३१
काञ्चनापिहितैर्योक्त्रैर्मयूरग्रीवसन्निभाः ।
द्रौपदेयं नरव्याघ्रं श्रुतकर्माणमाहवे ॥ ३२
श्रुतकीर्तिं श्रुतनिधिं द्रौपदेयं हयोत्तमाः ।
ऊहुः पार्थसमं युद्धे चाषपत्रनिभा हयाः ॥ ३३
यमाहुरध्यर्धगुणं कृष्णात्पार्थाच्च संयुगे ।
अभिमन्युं पिशङ्गास्तं कुमारमवहन्रणे ॥ ३४
एकस्तु धार्तराष्ट्रेभ्यः पाण्डवान्यः समाश्रितः ।
तं बृहन्तो महाकाया युयुत्सुमवहन्रणे ।
'ये तु पुष्करसारस्य तुल्यवर्णा हयोत्तमाः ॥'३५
पलालकाण्डवर्णास्तु वार्धक्षेमिं तरस्विनम् ।
ऊहुः सुतुमुले युद्धे हया हृष्टाः स्वलङ्कृताः ॥ ३६
कुमारं शितिपादास्तु रुक्मचित्रैरुरश्छदैः ।
सौचित्तिमवहन्युद्धे यन्तुः प्रेष्यकरा हयाः ॥ ३७
रुक्मपीठावकीर्णास्तु कौशेयसदृशा हयाः ।
सुवर्णमालिनः क्षान्ताः श्रेणिमन्तमुदावहन् ॥ ३८
रुक्ममालाधराः शूरा हेमपृष्ठाः स्वलङ्कृताः ।
काशिराजं नरश्रेष्ठं श्लाघनीयमुदावहन् ॥ ३९
अस्त्राणां च धनुर्वेदे ब्राह्मे वेदे च पारगम् ।
तं सत्यधृतिमायान्तमरुणाः समुपावहन् ॥ ४०
यः स पाञ्चालसेनानीर्द्रोणमंशमकल्पयत् ।
पारावतसवर्णास्तं धृष्टद्युम्नमुदावहन् ॥ ४१
तमन्वयात्सत्यधृतिः सौचित्तिर्युद्धदुर्मदः ।
श्रेणिमान्वसुदानश्च पुत्रः काश्यस्य चाभिभूः ॥ ४२
युक्तैः परमकाम्भोजैर्जवनैर्हेममालिभिः ।
भीषयन्तो द्विषत्सैन्यं यमवैश्रवणोपमाः ॥ ४३
प्रभद्रकास्तु काम्भोजाः षट्सहस्राण्युदायुधाः ।
नानावर्णैर्हयैः श्रेष्ठैर्हेमवर्णरथध्वजाः ॥ ४४
शरव्रातैर्विधुन्वन्तः शत्रून्विततकार्मुकाः ।
समानमृत्यवो भूत्वा धृष्टद्युम्नं समन्वयुः ॥ ४५
बभ्रुकौशेयवर्णास्तु सुवर्णवरमालिनः ।
ऊहुरम्लानमनसश्चेकितानं हयोत्तमाः ॥ ४६
इन्द्रायुधसवर्णैस्तु कुन्तिभोजो हयोत्तमैः ।
आयात्सदश्वैः पुरुजिन्मातुलः सव्यसाचिनः ॥ ४७
अन्तरिक्षसवर्णास्तु तारकाचित्रिता इव
राजानं रोचमानं ते हयाः सङ्ख्ये समावहन् ॥ ४८
कर्बुराः शितिपादास्तु स्वर्णजालपरिच्छदाः ।
जारासन्धिं हयाः श्रेष्ठाः सहदेवमुदावहन् ॥ ४९
ये तु पुष्करनालस्य समवर्णा हयोत्तमाः ।
जवे श्येनसमाश्चित्राः सुदामानमुदावहन् ॥ ५०
शशलोहितवर्णास्तु पाण्डुरोद्गतराजयः ।
पाञ्चाल्यं गोपतेः पुत्रं सिंहसेनमुदावहन् ॥ ५१
पाञ्चालानां नरव्याघ्रो यः ख्यातो जनमेजयः ।
तस्य सर्षपपुष्पाणां तुल्यवर्णा हयोत्तमाः ॥ ५२
माषवर्णाश्च जवना बृहन्तो हेममालिनः ।
दधिपृष्ठाश्चित्रमुखाः पाञ्चाल्यमवहन्द्रुतम् ॥ ५३
शूराश्च भद्रकाश्चैव शरकाण्डनिभा हयाः ।
पद्मकिञ्जल्कवर्णाभा दण्डधारमुदावहन् ॥ ५४
रासभारुणवर्णाभाः पृष्ठतो मूषिकप्रभाः ।
वल्गन्त इव संयत्ता व्याघ्रदत्तमुदावहन् ॥ ५५
हरयः कालकाश्चित्राश्चित्रमाल्यविभूषिताः ।
सुधन्वानं नरव्याघ्रं पाञ्चाल्यं समुदावहन् ॥ ५६
इन्द्राशनिसमस्पर्शा इन्द्रगोपकसन्निभाः ।

---

सहस्रसोमप्रतिमः सोमसहस्रसमः सौम्यतम इत्यर्थः । तस्मिन् उदयेन्दुनाम्नि उदयेन्दुपर्याये पुरे शक्रप्रस्थ एव सोमसंक्रन्दः सोमाभिषवणं तस्य मध्ये । तमधिकृत्य तत्फेनेनेत्यर्थस्तस्माद्धेतोः ॥ ३० ॥ शालपुष्पनिभाः रक्तपीताः ॥ ३१ ॥ योक्त्रैराबन्धैः । मयूरग्रीवो मरकतविशेषः ॥ ३२ ॥ पिशङ्गाः कपिलाः ॥ ३४ ॥ पलालकाण्डो निष्फलव्रीहिदण्डस्तद्वर्णाः ॥ ३६ ॥ रुक्मपीठेन रुक्मवर्णेन पीठेन पृष्ठेनावकीर्णा व्याप्ताः ॥ ३८ ॥ अरुणा अव्यक्तरागाः ॥ ४० ॥ धृष्टद्युम्नस्य पुनर्वचनं द्रोणहन्तृत्वदृढीकरणार्थम् ॥ ४१ ॥ बभ्रुकौशेयवर्णाः पिङ्गगौराः ॥ ४६ ॥ इन्द्रायुधसवर्णैस्त्रिवर्णैः ॥ ४७ ॥ अन्तरिक्षसवर्णा नीलाः ॥ ४८ ॥ कर्बुराश्चित्राः ॥ ४९ ॥ माषवर्णाः मलिनश्यामाः ॥ ५३ ॥ भद्रकाः शोभनशिरसः । शरकाण्डनिभाः सितगौराः ॥ ५४ ॥ रासभारुणवर्णाभा अरुणमलिनाः । मूषिकप्रभाः मलिनश्वेताः ॥ ५५ ॥ कालकाः कृष्णमस्तकाः ॥ ५६ ॥

काये चित्रान्तराश्चित्राश्चित्रायुधमुदावहन् ॥ ५७
बिभ्रतो हेममालास्तु चक्रवाकोदरा हयाः ।
कोसलाधिपतेः पुत्रं सुक्षत्रं वाजिनोऽवहन् ॥ ५८
शबलास्तु बृहन्तोऽश्वा दान्ता जाम्बूनदस्रजः ।
युद्धे सत्यधृतिं क्षेमिमवहन्प्रांशवः शुभाः ॥ ५९
एकवर्णेन सर्वेण ध्वजेन कवचेन च ।
अश्वैश्च धनुषा चैव शुक्लैः शुक्लो न्यवर्तत ॥ ६०
समुद्रसेनपुत्रं तु सामुद्रा रुद्रतेजसम्
अश्वाः शशाङ्कसदृशाश्चन्द्रसेनमुदावहन् ॥ ६१
नीलोत्पलसवर्णास्तु तपनीयविभूषिताः ।
शैब्यं चित्ररथं सङ्ख्ये चित्रमाल्याऽवहन्हयाः ॥ ६२
कलायपुष्पवर्णास्तु श्वेतलोहितराजयः ।
रथसेनं हयश्रेष्ठाः समूहुर्युद्धदुर्मदम् ॥ ६३
यं तु सर्वमनुष्येभ्यः प्राहुः शूरतरं नृपम् ।
तं पटच्चरहन्तारं शुकवर्णाऽवहन्हयाः ॥ ६४
चित्रायुधं चित्रमाल्यं चित्रवर्मायुधध्वजम् ।
ऊहुः किंशुकपुष्पाणां समवर्णा हयोत्तमाः ॥ ६५
एकवर्णेन सर्वेण ध्वजेन कवचेन च ।
धनुषा रथवाहैश्च नीलैर्नीलोऽभ्यवर्तत ॥ ६६
नानारूपै रत्नचिह्नैर्वरूथरथकार्मुकैः ।
वाजिध्वजपताकाभिश्चित्रैश्चित्रोऽभ्यवर्तत ॥ ६७
ये तु पुष्करवर्णस्य तुल्यवर्णा हयोत्तमाः ।
ते रोचमानस्य सुतं हेमवर्णमुदावहन् ॥ ६८
योधाश्च भद्रकाराश्च शरदण्डानुदण्डयः ।
श्वेताण्डाः कुक्कुटाण्डाभा दण्डकेतुं हयाऽवहन् ॥ ६९
केशवेन हते सङ्ख्ये पितर्यथ नराधिपे ।
भिन्ने कपाटे पाण्ड्यानां विद्रुतेषु च बन्धुषु ॥ ७०
भीष्मादवाप्य चास्त्राणि द्रोणाद्रामात्कृपात्तथा ।
अस्त्रैः समत्वं संप्राप्य रुक्मिकर्णार्जुनाच्युतैः ॥ ७१
इयेष द्वारकां हन्तुं कृत्स्नां जेतुं च मेदिनीम् ।
निवारितस्ततः प्राज्ञैः सुहृद्भिर्हितकाम्यया ॥ ७२
वैरानुबन्धमुत्सृज्य स्वराज्यमनुशास्ति यः ।
स सागरध्वजः पाण्ड्यश्चन्द्ररश्मिनिभैर्हयैः ॥ ७३
वैडूर्यजालसंछन्नैर्वीर्यद्रविणमाश्रितः ।
दिव्यं विस्फारयंश्चापं द्रोणमभ्यद्रवद्बली ॥ ७४
आरकूटकवर्णाश्च हयाः पाण्ड्यानुयायिनाम् ।
अवहन्रथमुख्यानामयुतानि चतुर्दश ॥ ७५
नानावर्णेन रूपेण नानाकृतिमुखा हयाः
रथचक्रध्वजं वीरं घटोत्कचमुदावहन् ॥ ७६
भारतानां समेतानामुत्सृज्यैको मतानि यः ।
गतो युधिष्ठिरं भक्त्या त्यक्त्वा सर्वमभीप्सितम् ७७
लोहिताक्षं महाबाहुं युयुत्सुं मकरध्वजम् ।
महासत्वा महाकायाः सौवर्णस्यन्दने स्थितम् ७८
सुवर्णवर्णा धर्मज्ञमनीकस्थं युधिष्ठिरम् ।
राजश्रेष्ठं हयश्रेष्ठाः सर्वतः पृष्ठतोऽन्वयुः ॥ ७९
वर्णैरुच्चावचैरन्यैः सदश्वानां प्रभद्रकाः ।
संन्यवर्तन्त युद्धाय बहवो देवरूपिणः ॥ ८०
ते यत्ता भीमसेनेन सहिताः काञ्चनध्वजाः ।
प्रत्यदृश्यन्त राजेन्द्र सेन्द्रा इव दिवौकसः ॥ ८१
अत्यरोचत तान्सर्वान्धृष्टद्युम्नः समागतान् ।
सर्वाण्यति च सैन्यानि भारद्वाजो व्यरोचत ॥ ८२
अतीव शुशुभे तस्य ध्वजः कृष्णाजिनोत्तरः ।
कमण्डलुर्महाराज जातरूपमयः शुभः ॥ ८३
ध्वजं तु भीमसेनस्य वैडूर्यमणिलोचनम् ।
भ्राजमानं महासिंहं राजन्तं दृष्टवानहम् ॥ ८४
ध्वजं तु कुरुराजस्य पाण्डवस्य महौजसः ।
दृष्टवानस्मि सौवर्णं सोमं ग्रहगणान्वितम् ॥ ८५
मृदङ्गौ चात्र विपुलौ दिव्यौ नन्दोपनन्दकौ ।
यन्त्रेणाहन्यमानौ च सुस्वनौ हर्षवर्धनौ ॥ ८६
शरभं पृष्ठसौवर्णं नकुलस्य महाध्वजम् ।

---

चित्रान्तरा विचित्रावकाशाः । चित्रा अद्भुतदर्शनाः ॥ ५७ ॥ चक्रवाकोदरा ईषच्छ्वेताः ॥ ५८ ॥ कलायपुष्पवर्णाः मिश्रश्यामाः ॥ ६३ ॥ पटच्चराणामसुरविशेषाणां हन्तारं समुद्राधिपम् ॥ ६४ ॥ योधा युद्धक्षमाः । भद्रकाराः शोभनक्रियाः । शरदण्डः शरप्रकाण्ड इव अनुदण्डिः पृष्ठवंशो येषाम् । सितगौरपृष्ठा इत्यर्थः ॥ ६९ ॥ कपाटे नगरविशेषे ॥ ७० ॥ आटरूषकवर्णाभाः इति झ. पाठः । तत्र आटरूषकस्य वासकस्य कुसुमं तद्वर्णसदृशवर्णा इत्यर्थः ॥ ७५ ॥ हया अवहन् इति पूर्वस्मादनुकृष्यते ॥ ७८ ॥ सुवर्णवर्णा इति पूर्वोत्तरान्वयि ॥ ७९ ॥ नन्दोपनन्दकौ नाम्ना ॥ ८६ ॥ त्रयोविंशोऽध्यायः ॥ २३ ॥

अपश्याम रथेत्युग्रं भीषयाणमवस्थितम् ॥ ८७
हंसस्तु राजतः श्रीमान्ध्वजे घण्टापताकवान् ।
सहदेवस्य दुर्धर्षो द्विषतां शोकवर्धनः ॥ ८८
पञ्चानां द्रौपदेयानां प्रतिमाध्वजभूषणम् ।
धर्ममारुतशक्राणामश्विनोश्च महात्मनोः ॥ ८९
अभिमन्योः कुमारस्य शार्ङ्गपक्षी हिरण्मयः ।
रथे ध्वजवरो राजंस्तप्तचामीकरोज्ज्वलः ॥ ९०
घटोत्कचस्य राजेन्द्र ध्वजे गृध्रो व्यरोचत ।
अश्वाश्च कामगास्तस्य रावणस्य पुरा यथा ॥ ९१
माहेन्द्रं च धनुर्दिव्यं धर्मराजे युधिष्ठिरे ।
वायव्यं भीमसेनस्य धनुर्दिव्यमभून्नृप ॥ ९२
त्रैलोक्यरक्षणार्थाय ब्रह्मणा सृष्टमायुधम्
तद्दिव्यमजरं चैव फाल्गुनार्थाय वै धनुः ॥ ९३
वैष्णवं नकुलायाथ सहदेवाय चाश्विजम् ।
घटोत्कचाय पौलस्त्यं धनुर्दिव्यं भयानकम् ॥ ९४
रौद्रमाग्नेयकौबेरं याम्यं गिरिशमेव च ।
पञ्चानां द्रौपदेयानां धनूरत्नानि भारत ॥ ९५
रौद्रं धनुर्वरं श्रेष्ठं लेभे यद्रोहिणीसुतः ।
तत्तुष्टः प्रददौ रामः सौभद्राय महात्मने ॥ ९६
एते चान्ये च बहवो ध्वजा हेमविभूषिताः ।
तत्रादृश्यन्त शूराणां द्विषतां शोकवर्धनाः ॥ ९७
तदभूद्ध्वजसंबाधमकापुरुषसेवितम् ।
द्रोणानीकं महाराज पटे चित्रमिवार्पितम् ॥ ९८
शुश्रुवुर्नामगोत्राणि वीराणां संयुगे तदा ।
द्रोणमाद्रवतां राजन्स्वयंवर इवाहवे ॥ ९९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशोऽध्यायः ॥ २४ ॥

धृतराष्ट्रेण पुत्रान्प्रति शोचनपूर्वकं सञ्जयंप्रति युद्धकथनचोदना ॥ १ ॥

धृतराष्ट्र उवाच ।
व्यथयेयुरिमे सेनां देवानामपि सञ्जय ।
आहवे ये न्यवर्तन्त वृकोदरमुखा नृपाः ॥ १
संप्रयुक्तः किलैवायं दिष्टैर्भवति पूरुषः ।
तस्मिन्नेव च सर्वार्थाः प्रदृश्यन्ते पृथग्विधाः ॥ २
दीर्घं विप्रोषितः कालमरण्ये जटिलोऽजिनी ।
अज्ञातश्चैव लोकस्य विजहार युधिष्ठिरः ॥ ३
स एव महतीं सेनां समावर्तयदाहवे ।
किमन्यद्दैवसंयोगान्मम पुत्राभवाय च ॥ ४
युक्त एव हि भाग्येन ध्रुवमुत्पद्यते नरः ।
स तथाऽऽकृष्यते तेन न यथा स्वयमिच्छति ॥ ५
द्यूतव्यसनमासाद्य क्लेशितो हि युधिष्ठिरः ।
स पुनर्भागधेयेन सहायानुपलब्धवान् ॥ ६
अर्धं मे केकया लब्धाः काशिकाः कोसलाश्च ये ।
चेदीनां चार्धमपरे मामेव समुपाश्रिताः ॥ ७
पृथिवी भूयसी तात मम पार्थस्य नो तथा ।
इति मामब्रवीत्सूत मन्दो दुर्योधनः पुरा ॥ ८
तस्य सेनासमूहस्य मध्ये द्रोणः सुरक्षितः ।
निहतः पार्षतेनाजौ किमन्यद्भागधेयतः ॥ ९
मध्ये राज्ञां महाबाहुं सदा युद्धाभिनन्दिनम् ।
सर्वास्त्रपारगं द्रोणं कथं मृत्युरुपेयिवान् ॥ १०
समनुप्राप्तकृच्छ्रोऽहं मोहं परममागतः ।
भीष्मद्रोणौ हतौ श्रुत्वा नाहं जीवितुमुत्सहे ॥ ११
यन्मां क्षत्ताऽब्रवीत्तात प्रपश्यन्पुत्रगृद्धिनम् ।
दुर्योधनेन तत्सर्वं प्राप्तं सूत मया सह ॥ १२
नृशंसं तु परं तात त्यक्त्वा दुर्योधनं यदि ।
पुत्रशेषं चिकीर्षेयं कृत्स्नं न मरणं व्रजेत् ॥ १३
यो हि धर्मं परित्यज्य भवत्यर्थपरो नरः ।
सोऽस्माच्च हीयते लोकात्क्षुद्रभावं च गच्छति ॥ १४
अद्य चाप्यस्य राष्ट्रस्य कृतोच्छेदस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ १५
कथं स्यादवशेषो हि धुर्ययोरभ्यतीतयोः ।
यौ नित्यमुपजीवामः क्षमिणौ पुरुषर्षभौ ॥ १६

संप्रयुक्तः संबद्धः । भवति उत्पद्यते । तस्मिन् दिष्ट एव ॥ २ ॥

व्यक्तमेव च मे शंस यथा युद्धमवर्तत ।
केऽयुध्यन्के व्यपाकुर्वन्के क्षुद्राः प्राद्रवन्भयात् १७
धनञ्जयं च मे शंस यद्यच्चक्रे रथर्षभः ।
तस्माद्भयं नो भूयिष्ठं भ्रातृव्याच्च वृकोदरात् ॥ १८
यथाऽऽसीच्च निवृत्तेषु पाण्डवेयेषु सञ्जय ।
मम सैन्यावशेषस्य सन्निपातः सुदारुणः ॥ १९
कथं च वो मनस्तात निवृत्तेष्वभवत्तदा ।
मामकानां च ये शूराः के कांस्तत्र न्यवारयन् ॥ २०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

द्वन्द्वयुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
महद्भैरवमासीन्नः सन्निवृत्तेषु पाण्डुषु ।
दृष्ट्वा द्रोणं छाद्यमानं तैर्भास्करमिवाम्बुदैः ॥ १
तैश्चोद्धूतं रजस्तीव्रमवचक्रे चमूं तव ।
ततो हतममंस्याम द्रोणं दृष्टिपथे हते ॥ २
तांस्तु शूरान्महेष्वासान्क्रूरं कर्म चिकीर्षतः ।
दृष्ट्वा दुर्योधनस्तूर्णं स्वसैन्यं समचूचुदत् ॥ ३
यथाशक्ति यथोत्साहं यथासत्वं नराधिपाः ।
वारयध्वं यथायोगं पाण्डवानामनीकिनीम् ॥ ४
ततो दुर्मर्षणो भीममभ्यगच्छत्सुतस्तव ।
आराद्दृष्ट्वा किरन्बाणैरिच्छन्द्रोणस्य जीवितम् ॥ ५
तं बाणैरवतस्तार क्रुद्धो मृत्युरिवाहवे ।
तं च भीमोऽतुदद्बाणैस्तदाऽऽसीत्तुमुलं महत् ॥ ६
त ईश्वरसमादिष्टाः प्राज्ञाः शूराः प्रहारिणः ।
राज्यं मृत्युभयं त्यक्त्वा प्रत्यतिष्ठन्परान्युधि ॥ ७
कृतवर्मा शिनेः पौत्रं द्रोणं प्रेप्सुं विशांपते ।
पर्यवारयदायान्तं शूरं समरशोभिनम् ॥ ८
तं शैनेयः शरव्रातैः क्रुद्धः क्रुद्धमवारयत् ।
कृतवर्मा च शैनेयं मत्तो मत्तमिव द्विपम् ॥ ९
सैन्धवः क्षत्रवर्माणमायान्तं निशितैः शरैः ।
उग्रधन्वा महेष्वासं यत्तो द्रोणादवारयत् ॥ १०
क्षत्रवर्मा सिन्धुपतेश्छित्त्वा केतनकार्मुके ।
नाराचैर्दशभिः क्रुद्धः सर्वमर्मस्वताडयत् ॥ ११
अथान्यद्धनुरादाय सैन्धवः कृतहस्तवत् ।
विव्याध क्षत्रवर्माणं रणे सर्वायसैः शरैः ॥ १२
युयुत्सुं पाण्डवार्थाय यतमानं महारथम् ।
सुबाहुर्भारतं शूरं यत्तो द्रोणादवारयत् ॥ १३
सुबाहोः सधनुर्बाणावस्यतः परिघोपमौ ।
युयुत्सुः शितपीताभ्यां क्षुराभ्यामच्छिनद्भुजौ १४
राजानं पाण्डवश्रेष्ठं धर्मात्मानं युधिष्ठिरम् ।
वेलेव सागरं क्षुब्धं मद्रराट् समवारयत् ॥ १५
तं धर्मराजो बहुभिर्मर्मभिद्भिरवाकिरत् ।
मद्रेशस्तं चतुःषष्ट्या शरैर्विद्ध्वाऽनदद्भृशम् ॥ १६
तस्य नानदतः केतुमुच्चकर्त च कार्मुकम् ।
क्षुराभ्यां पाण्डवो ज्येष्ठस्तत उच्चुक्रुशुर्जनाः ॥ १७
तथैव राजा बाह्लीको राजानं द्रुपदं शरैः ।
आद्रवन्तं सहानीकः सहानीकं न्यवारयत् ॥ १८
तद्युद्धमभवद्घोरं वृद्धयोः सहसेनयोः ।
यथा महायूथपयोर्द्विपयोः संप्रभिन्नयोः ॥ १९
विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्च्छताम् ।
सहसैन्यौ सहानीकं यथेन्द्राग्नी पुरा बलिम् ॥ २०
तदुत्पिञ्जलकं युद्धमासीद्देवासुरोपमम् ।
मत्स्यानां केकयैः सार्धमभीताश्वरथद्विपम् ॥ २१
नाकुलिं तु शतानीकं भूतकर्मा सभापतिः ।
अस्यन्तमिषुजालानि यान्तं द्रोणादवारयत् ॥ २२
ततो नकुलदायादस्त्रिभिर्भल्लैः सुसंशितैः ।

भ्रातृव्यादमित्रात् ॥ १८ ॥ चतुर्विंशोऽध्यायः ॥ २४ ॥
भीरोर्भावो भैरवं भयमिति यावत् ॥ १ ॥ दृष्टिपथे गते इति ङ. पाठः ॥ २ ॥ बाह्यं मृत्युभयं इति क. ङ. पाठः ॥ ७ ॥
उत्पिञ्जलकमत्यन्ताकुलम् । तदद्भुततमं युद्धं इति क. ङ. पाठः ॥ २१ ॥ भूतकर्मा सभापतिरिति द्विनामा ॥ २२ ॥

चक्रे विबाहुशिरसं भूतकर्माणमाहवे ॥ २३
सुतसोमं तु विक्रान्तमायान्तं तं शरौघिणम् ।
द्रोणायाभिमुखं वीरं साल्वो बाणैरवारयत् ॥२४
स तु भीमरथः साल्वमाशुगैरायसैः शितैः ।
षड्भिः साश्वनियन्तारमनयद्यमसादनम् ॥ २५
श्रुतकीर्तिं समायान्तं मयूरसदृशैर्हयैः ।
चित्रसेनो महाराज तव पौत्रं न्यवारयत् ॥ २६
तमार्जुनिः शरैश्चक्रे पितृव्यं जर्झरच्छविम् ।
शरैश्च द्रौपदीपुत्रं चित्रसेनः समावृणोत् ॥ २७
किरन्तं शरजालानि प्रभिन्नमिव कुञ्जरम् ।
श्रुतकर्माणमायान्तं दौश्शासनिरवारयत् ॥ २८
तौ पौत्रौ तव दुर्धर्षौ परस्परवधैषिणौ ।
पितृणामर्थसिद्ध्यर्थं चक्रतुर्युद्धमुत्तमम् ॥ २९
तिष्ठन्तमग्रे तं दृष्ट्वा प्रतिविन्ध्यं महाहवे ।
द्रौणिर्मानं पितुः कुर्वन्मार्गणैः समवारयत् ॥ ३०
तं क्रुद्धं प्रतिविव्याध प्रतिविन्ध्यः शितैः शरैः ।
सिंहलाङ्गूललक्ष्माणं पितुरर्थे व्यवस्थितम् ॥ ३१
प्रवपन्निव बीजानि बीजकाले कृषीवलः ।
द्रौणायनिर्द्रौपदेयं शरवर्षैरवाकिरत् ॥ ३२
यस्तु शूरतमो राजन्नुभयोः सेनयोर्मतः ।
तं पटच्चरहन्तारं लक्ष्मणः समवारयत् ॥ ३३
स लक्ष्मणस्येष्वसनं छित्त्वा लक्ष्म च भारत ।
लक्ष्मणे शरजालानि विसृजन्बह्वशोभत ॥ ३४
ततोऽभिमन्युः कर्माणि कुर्वन्तं चित्रयोधिनम् ।
आर्जुनिः कृतिनं शूरं लक्ष्मणं समयोधयत् ॥ ३५
स संप्रहारस्तुमुलस्तयोरासीन्महात्मनोः ।
श्रोतृणामीक्षितृणां च भृशं प्रीतिविवर्धनः ॥ ३६
विकर्णस्तु महाप्राज्ञो याज्ञसेनिं शिखण्डिनम् ।
पर्यवारयदायान्तं युवानं समरे युवा ॥ ३७
ततस्तमिषुजालेन याज्ञसेनिः समावृणोत् ।
विधूय तद्बाणजालं बभौ तव सुतो बली ॥ ३८
अङ्गदोऽभिमुखं वीरमुत्तमौजसमाहवे ।
द्रोणायाभिमुखं यान्तं शरौघेण न्यवारयत् ॥ ३९
स संप्रहारस्तुमुलस्तयोः पुरुषसिंहयोः ।
सैनिकानां च सर्वेषां तयोश्च प्रीतिवर्धनः ॥४०
दुर्मुखस्तु महेष्वासो वीरं पुरुजितं बली ।
द्रोणायाभिमुखं यान्तं वत्सदन्तैरवारयत् ॥ ४१
स दुर्मुखं भ्रुवोर्मध्ये नाराचेनाभ्यताडयत् ।
तस्य तद्वि बभौ वक्त्रं सनालमिव पङ्कजम् ॥ ४२
कर्णस्तु केकयान्भ्रातॄन्पञ्च लोहितकध्वजान् ।
द्रोणायाभिमुखं याताञ्शरवर्षैरवारयत् ॥ ४३
ते चैनं भृशसंतप्ताः शरवर्षैरवाकिरन्
स च तांश्छादयामास शरजालैः पुनः पुनः ॥४४
नैव कर्णो न ते पञ्च ददृशुर्बाणसंवृताः ।
साश्वसूतध्वजरथाः परस्परशराचिताः ॥ ४५
पुत्रास्ते दुर्जयश्चैव जयश्च विजयश्च ह ।
नीलकाश्यजयत्सेनांस्त्रयस्त्रीन्प्रत्यवारयन् ॥ ४६
तद्युद्धमभवद्घोरमीक्षितृप्रीतिवर्धनम् ।
सिंहव्याघ्रतरक्षूणां यथर्क्षमहिषर्षभैः ॥ ४७
क्षेमधूर्तिबृहन्तौ तु भ्रातरौ सात्वतं युधि ।
द्रोणायाभिमुखं यान्तं शरैस्तीक्ष्णैस्ततक्षतुः ॥ ४८
तयोस्तस्य च तद्युद्धमत्यद्भुतमिवाभवत् ।
सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ४९
राजानं तु तथाम्बष्ठमेकं युद्धाभिनन्दिनम् ।
चेदिराजः शरानस्यन्क्रुद्धो द्रोणादवारयत् ॥ ५०
ततोऽम्बष्ठोऽस्थिभेदिन्या निरभिद्यच्छलाकया ।
स त्यक्त्वा सशरं चापं रथाद्भूमिमुपागमत् ॥ ५१
वार्धक्षेमिं तु वार्ष्णेयं कृपः शारद्वतः शरैः ।
अक्षुद्रः क्षुद्रकैर्बाणैः क्रुद्धरूपमवारयत् ॥ ५२
युध्यन्तौ कृपवार्ष्णेयौ येऽपश्यंश्चित्रयोधिनौ ।
ते युद्धासक्तमनसो नान्यां बुबुधिरे क्रियाम् ॥५३
सौमदत्तिस्तु राजानं मणिमन्तमतन्द्रितम् ।
पयवारयदायान्तं यशो द्रोणस्य वर्धयन् ॥ ५४
स सौमदत्तेस्त्वरितश्चित्रेष्वसनकेतने ।
पुनः पताकां सूतं च च्छत्रं चापातयद्रथात् ॥ ५५
अथाप्लुत्य रथात्तूर्णं यूपकेतुरमित्रहा ।
साश्वसूतध्वजरथं तं चकर्त वरासिना ॥ ५६

भीमरथो राजभ्राता ॥ २५ ॥ ददृशुः ददृशिरे ॥ ४५ ॥ शलाकया शङ्कुना ॥ ५१ ॥

रथं च स्वं समास्थाय धनुरादाय चापरम् ।
स्वयं यच्छन्हयान्राजन्व्यधमत्पाण्डवीं चमूम् ॥५७
पाण्ड्यमिन्द्रमिवायान्तमसुरान्प्रति दुर्जयम् ।
समर्थः सायकौघेन वृषसेनो न्यवारयत् ॥ ५८
'अथाजगाम हैडिम्बो महामायो महाबलः ।
पितॄणां हितमन्विच्छन्दहन्कौरववाहिनीम् ॥'५९
गदापरिघनिस्त्रिंशपट्टसायोघनोपलैः ।
कडङ्गरैर्भुशुण्डीभिः प्रासैस्तोमरसायकैः ॥ ६०
मुसलैर्मुद्गरैश्चक्रैर्भिण्डिपालपरश्वधैः ।
पांसुवाताग्निसलिलैर्भस्मलोष्ठतृणद्रुमैः ॥ ६१
आतुदन्प्ररुजन्भञ्जन्निघ्नन्विद्रावयन्क्षिपन् ।
सेनां विभीषयन्नायाद्द्रोणप्रेप्सुर्घटोत्कचः ॥ ६२
तं तु नानाप्रहरणैर्नानायुद्धविशेषणैः ।
राक्षसं राक्षसः क्रुद्धः समाजघ्ने ह्यलम्बुसः ॥ ६३
तयोस्तदभवद्युद्धं रक्षोग्रामणिमुख्ययोः ।
तादृग्यादृक्पुरावृत्तं शम्बरामरराजयोः ॥ ६४
एवं द्वन्द्वशतान्यासन्रथवारणवाजिनाम् ।
पदातीनां च भद्रं ते तव तेषां च संकुले ॥ ६५
नैतादृशो दृष्टपूर्वः संग्रामो नैव च श्रुतः ।
द्रोणस्याभावभावे तु प्रसक्तानां परस्परम् ॥ ६६
इदं घोरमिदं चित्रमिदं रौद्रमिति प्रभो ।
तत्र युद्धान्यदृश्यन्त प्रततानि बहूनि च ॥ ६७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

भगदत्तपराक्रमवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
तेष्वेवं सन्निवृत्तेषु प्रत्युद्यातेषु भागशः ।
कथं युयुधिरे पार्था मामकाश्च तरस्विनः ॥ १
किमर्जुनश्चाप्यकरोत्संशप्तकबलं प्रति ।
संशप्तका वा पार्थस्य किमकुर्वत सञ्जय ॥ २
सञ्जय उवाच ।
तथा तेषु निवृत्तेषु प्रत्युद्यातेषु भागशः ।
स्वयमभ्यद्रवद्भीमं नागानीकेन ते सुतः ॥ ३
स नाग इव नागेन गोवृषेणेव गोवृषः ।
समाहूतः स्वयं राज्ञा नागानीकमुपाद्रवत् ॥ ४
स युद्धकुशलः पार्थो बाहुवीर्येण चान्वितः ।
अभिनत्कुञ्जरानीकमचिरेणैव मारिष ॥ ५
ते गजा गिरिसंकाशाः क्षरन्तः सर्वतो मदम् ।
भीमसेनस्य नाराचैर्विमुखा विमदीकृताः ॥ ६
विधमेदभ्रजालानि यथा वायुः समुद्धतः ।
व्यधमत्तान्यनीकानि तथैव पवनात्मजः ॥ ७
स तेषु विसृजन्बाणान्भीमो नागेष्वशोभत ।
भुवनेष्विव सर्वेषु गभस्तीनुदितो रविः ॥ ८
ते भीमबाणाभिहताः संस्यूता विबभुर्गजाः ।
गभस्तिभिरिवार्कस्य व्योम्नि नानाबलाहकाः ॥ ९
तथा गजानां कदनं कुर्वाणमनिलात्मजम् ।
क्रुद्धो दुर्योधनोऽभ्येत्य प्रत्यविध्यच्छितैः शरैः ॥ १०
ततः क्षणेन क्षितिपं क्षतजप्रतिमेक्षणः ।
क्षयं निनीषुर्निशितैर्भीमो विव्याध पत्रिभिः ॥ ११
स शराचितसर्वाङ्गः क्रुद्धो विव्याध पाण्डवम् ।
नाराचैरर्करश्म्याभैर्भीमसेनं स्मयन्निव ॥ १२
तस्य नागं मणिमयं रत्नचित्रध्वजे स्थितम् ।
भल्लाभ्यां कार्मुकं चैव क्षिप्रं चिच्छेद पाण्डवः ॥ १३
दुर्योधनं पीड्यमानं दृष्ट्वा भीमेन मारिष ।
चुक्षोभयिषुरभ्यागादङ्गो मातङ्गमास्थितः ॥ १४
तमापतन्तं नागेन्द्रमम्बुदप्रतिमस्वनम् ।
कुम्भान्तरे भीमसेनो नाराचैरार्दयद्भृशम् ॥ १५
तस्य कायं विनिर्भिद्य न्यमज्जद्धरणीतले ।
ततः पपात द्विरदो वज्राहत इवाचलः ॥ १६

---

अयोघना लगुडाः । कडङ्गरैर्दण्डैः ॥ ६० ॥ आतुदन् व्यथयन् । प्ररुजन्विध्यन् । भञ्जन् आमर्दयन् । निघ्नन् मारयन् । विद्रावयन्पलाययन् । क्षिपन्प्रेरयन् ॥ ६२ ॥ अभावभावे मारणे रक्षणे च ॥ ६६ ॥ पञ्चविंशोऽध्यायः ॥ २५ ॥

तस्यावर्जितनागस्य म्लेच्छस्याधः पतिष्यतः ।
शिरश्चिच्छेद भल्लेन क्षिप्रकारी वृकोदरः ॥ १७
तस्मिन्निपतिते वीरे संप्राद्रवत सा चमूः ।
संभ्रान्ताश्वद्विपरथा पदातीनवमृद्नती ॥ १८
तेष्वनीकेषु भग्नेषु विद्रवत्सु समन्ततः ।
प्राग्ज्योतिषस्ततो भीमं कुञ्जरेण समाद्रवत् ॥१९
येन नागेन मघवानजयद्दैत्यदानवान् ।
तदन्वयेन नागेन भीमसेनमुपाद्रवत् ॥ २०
स नागप्रवरो भीमं सहसा समुपाद्रवत् ।
श्रवणाभ्यामथो द्वाभ्यां संहतेन करेण च ॥ २१
व्यावृत्तनयनः क्रुद्धः प्रमथन्निव पाण्डवम् ।
वृकोदररथं साश्वमविशेषमचूर्णयत् ॥ २२
पद्भ्यां भीमोऽप्यथो धावंस्तस्य गात्रेष्वलीयत ।
जानन्नञ्जलिकावेधं नापाक्रामत पाण्डवः ॥ २३
गात्राभ्यन्तरगो भूत्वा करेणाताडयन्मुहुः ।
लालयामास तं नागं वधाकाङ्क्षिणमव्ययम् ॥२४
कुलालचक्रवन्नागस्तदा तूर्णमथाभ्रमत् ।
नागायुतबलः श्रीमान्कालयानो वृकोदरम् ॥ २५
भीमोऽपि निष्क्रम्य ततः सुप्रतीकाग्रतोऽभवत् ।
भीमं करेणावनम्य जानुभ्यामभ्यताडयत् ॥ २६
ग्रीवायां वेष्टयित्वैनं स गजो हन्तुमैहत ।
करवेष्टं भीमसेनो भ्रमं दत्त्वा व्यमोचयत् ॥ २७
पुनर्गात्राणि नागस्य प्रविवेश वृकोदरः ।
यावत्प्रतिगजायातं स्वबले प्रत्यवैक्षत ।
भीमोपि नागगात्रेभ्यो विनिःसृत्यापयाज्जवात् २८
ततः सर्वस्य सैन्यस्य नादः समभवन्महान् ।
अहो धिङ्निहतो भीमः कुञ्जरेणेति मारिष ॥ २९
तेन नागेन संत्रस्ता पाण्डवानामनीकिनी ।
सहसाऽभ्यद्रवद्राजन्यत्र तस्थौ वृकोदरः ॥ ३०
ततो युधिष्ठिरो राजा हतं मत्वा वृकोदरम् ।
भगदत्तं सपाञ्चाल्यः सर्वतः समवारयत् ॥ ३१
तं रथं रथिनां श्रेष्ठाः परिवार्य परंतपाः ।
अवाकिरञ्शरैस्तीक्ष्णैः शतशोऽथ सहस्रशः ॥३२
स विघातं पृषत्कानामङ्कुशेन समाहरन् ।
क्षणेन पाण्डुपाञ्चालान्व्यधमत्पर्वतेश्वरः ॥ ३३
तदद्भुतमपश्याम भगदत्तस्य संयुगे ।
तथा वृद्धस्य चरितं कुञ्जरेण विशांपते ॥ ३४
ततो राजा दशार्णानां प्राग्ज्योतिषमुपाद्रवत् ।
तिर्यग्यातेन नागेन समदेनाशुगामिना ॥ ३५
तयोर्युद्धं समभवन्नागयोर्भीमरूपयोः ।
सपक्षयोः पर्वतयोर्यथा सद्रुमयोः पुरा ॥ ३६
प्राग्ज्योतिषपतेर्नागः सन्निवृत्त्यापसृत्य च ।
पार्श्वे दशार्णाधिपतेर्भित्त्वा नागमपातयत् ॥ ३७
तोमरैः सूर्यरश्म्याभैर्भगदत्तोऽथ सप्तभिः ।
जघान द्विरदस्थं तं शत्रुं प्रचलितासनम् ॥ ३८
व्यवच्छिद्य तु राजानं भगदत्तं युधिष्ठिरः ।
रथानीकेन महता सर्वतः पर्यवारयत् ॥ ३९
स कुञ्जरस्थो रथिभिः शुशुभे सर्वतो वृतः ।
पर्वते वनमध्यस्थो ज्वलन्निव हुताशनः ॥ ४०
मण्डलं सर्वतः श्लिष्टं रथिनामुग्रधन्विनाम् ।
किरतां शरवर्षाणि स नागः पर्यवर्तत ॥ ४१
ततः प्राग्ज्योतिषो राजा परिगृह्य महागजम् ।
प्रेषयामास सहसा युयुधानरथं प्रति ॥ ४२
'आपतन्तं च संप्रेक्ष्य नागं सात्वतपुङ्गवः ।
अविध्यत्पञ्चभिर्बाणैः शितैराशीविषोपमैः ॥' ४३
शिनेः पौत्रस्य तु रथं परिगृह्य महाद्विपः ।
अभिचिक्षेप वेगेन युयुधानस्त्वपाक्रमत् ॥ ४४
बृहतः सैन्धवानश्वान्समुत्थाप्याथ सारथिः ।
तस्थौ सात्यकिमासाद्य संप्लुतस्तं रथं प्रति ॥ ४५
स तु लब्ध्वान्तरं नागस्त्वरितो रथमण्डलात् ।
निष्पतन्सततं सर्वान्परिचिक्षेप पार्थिवान् ॥ ४६
ते त्वाशुगतिना तेन त्रास्यमाना नरर्षभाः ।
तमेकं द्विरदं सङ्ख्ये मेनिरे शतशो द्विपान् ॥४७
ते गजस्थेन काल्यन्ते भगदत्तेन पार्थिवाः ।
ऐरावतस्थेन यथा देवराजेन दानवाः ॥ ४८
तेषां प्रद्रवतां भीमः पाञ्चालानामितस्ततः ।

आवर्जितः पतनप्रवणो नागो यस्य ॥ १७ ॥ संहतेन संकुचितेन ॥ २१ ॥ तिर्यग्यातेन पार्श्वतोगामिना ॥ ३५ ॥ व्यवच्छिद्य विद्ध्वा ॥ ३९ ॥ पर्यवर्तत भ्रान्तवान् ॥ ४१ ॥ समुत्थाप्य स्थिरीकृत्य ॥ ४५ ॥

गजवाजिकृतः शब्दः सुमहान्समजायत ॥ ४९
भगदत्तेन समरे काल्यमानेषु पाण्डुषु ।
प्राग्ज्योतिषमभिक्रुद्धः पुनर्भीमः समभ्ययात् ॥५०
तस्याभिद्रवतो वाहान्हस्तमुक्तेन वारिणा ।
सिक्त्वा व्यत्रासयन्नागस्ते पार्थमहरंस्ततः ॥ ५१
ततस्तमभ्ययात्तूर्णं रुचिपर्वा कृतीसुतः ।
समग्रञ्छरवर्षेण रथस्थोऽन्तकसन्निभः ॥ ५२
ततः स रुचिपर्वाणं शरेणानतपर्वणा ।
सुपर्वा पर्वतपतिर्निन्ये वैवस्वतक्षयम् ॥ ५३
तस्मिन्निपतिते वीरे सौभद्रो द्रौपदीसुतः ।
चेकितानो धृष्टकेतुर्युयुत्सुश्चार्दयन्द्विपम् ॥ ५४
त एनं शरधाराभिर्धाराभिरिव तोयदाः ।
सिषिचुर्भैरवान्नादान्विनदन्तो जिघांसवः ॥५५
ततः पार्ष्ण्यङ्कुशाङ्गुष्ठैः कृतिना चोदितो द्विपः ।
प्रसारितकरः प्रायात्स्तब्धकर्णेक्षणो द्रुतम् ॥ ५६
सोऽधिष्ठाय पदा वाहान्युयुत्सोः सूतमारुजत् ।
युयुत्सुस्तु रथाद्राजन्नपाक्रामत्त्वरान्वितः ॥ ५७
ततः पाण्डवयोधास्ते नागराजं शरैर्द्रुतम् ।
सिषिचुर्भैरवान्नादान्विनदन्तो जिघांसवः ॥ ५८
पुत्रस्तु तव संभ्रान्तः सौभद्रस्याप्लुतो रथम् ।
स कुञ्जरस्थो विसृजन्निषूनरिषु पार्थिवः ।
बभौ रश्मीनिवादित्यो भुवनेषु समुत्सृजन् ॥५९
तमार्जुनिर्द्वादशभिर्युयुत्सुर्दशभिः शरैः ।
त्रिभिस्त्रिभिर्द्रौपदेया धृष्टकेतुश्च विव्यधुः ॥ ६०
'चेकितानः चतुःषष्ट्या सोत्तरायुधिकं पुनः ।
प्रत्यविध्यत्ततः सर्वान्भगदत्तस्त्रिभिस्त्रिभिः॥' ६१
सोऽतियत्नार्पितैर्बाणैराचितो द्विरदो बभौ ।
संस्यूत इव सूर्यस्य रश्मिभिर्जलदो महान् ॥ ६२
नियन्तुः शिल्पयत्नाभ्यां प्रेरितोऽरिशरार्दितः ।
परिचिक्षेप तान्नागः स रिपून्सव्यदक्षिणम् ॥ ६३
गोपाल इव दण्डेन यथा पशुगणान्वने ।
संकालयति तां सेनां भगदत्तस्तथा मुहुः ॥ ६४
क्षिप्रं श्येनाभिपन्नानां वायसानामिव स्वनः ।
बभूव पाण्डवेयानां भृशं विद्रवतां स्वनः ॥ ६५
स नागराजः प्रवराङ्कुशाहतः
पुरा सपक्षोऽद्रिवरो यथा नृप ।
भयं तदा रिपुषु समादधद्भृशं
वणिग्जनानां क्षुभितो यथाऽर्णवः ॥ ६६
ततो ध्वनिर्द्विरदरथाश्वपार्थिवै-
र्भयाद्रवद्भिर्जनितोऽतिभैरवः ।
क्षितिं वियद् द्यां विदिशो दिशस्तथा
समावृणोत्पार्थिवसंयुगे ततः ॥ ६७
स तेन नागप्रवरेण पार्थिवो
भृशं जगाहे द्विषतामनीकिनीम् ।
पुरा सुगुप्तां विबुधैरिवाहवे
विरोचनो देववरूथिनीमिव ॥ ६८
भृशं ववौ ज्वलनसखो वियद्रजः
समावृणोन्मुहुरपि चैव सैनिकान् ।
तमेकनागं गणशो यथा गजान्
समन्ततो द्रुतमथ मेनिरे जनाः ॥ ६९

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

अर्जुनेन संशप्तकानां हननम् ॥ १ ॥

सञ्जय उवाच ।
यन्मां पार्थस्य संग्रामे कर्माणि परिपृच्छसि ।
तच्छृणुष्व महाबाहो पार्थो यदकरोद्रणे ॥ १
रजो दृष्ट्वा समुद्भूतं श्रुत्वा च गजनिःस्वनम् ।
भगदत्ते विकुर्वाणे कौन्तेयः कृष्णमब्रवीत् ॥ २
यथा प्राग्ज्योतिषो राजा गजेन मधुसूदन ।

सुपर्वा पार्वतीसुतः इति क. ङ. पाठः ॥ ५२ ॥ सुपर्वा शोभनाङ्गसंधिः ॥ ५३ ॥ वियदाकाशम् । द्यां स्वर्गम् ॥ ६७ ॥

षड्विंशोऽध्यायः ॥ २६ ॥
विकुर्वाणे विविधाः क्रियाः कुर्वाणे ॥ २ ॥

त्वरमाणोऽभिनिष्क्रान्तो ध्रुवं तस्यैष निःस्वनः ॥३
इन्द्रादनवरः सङ्ख्ये गजयानविशारदः
प्रथमो गजयोधानां पृथिव्यामिति मे मतिः ॥४
स चापि द्विरदश्रेष्ठः सदाऽप्रतिगजो युधि ।
सर्वशस्त्रातिगः सङ्ख्ये कृतकर्मा जितक्लमः ॥ ५
सहः शस्त्रनिपातानामग्निस्पर्शस्य चानघ ।
स पाण्डवबलं सर्वमद्यैको नाशयिष्यति ॥ ६
'सिंहनादं महत्कृत्वा धनुर्बाणरवैः सह ।
विद्राव्यमाणं संपश्य हतभूयिष्ठनायकम् ।
दृष्ट्वा विनद्य सहसा मम सेनां प्रमृद्गति ॥' ७
न चावाभ्यामृतेऽन्योऽस्ति शक्तस्तं प्रतिबाधितुम्।
त्वरमाणस्ततो याहि यतः प्राग्ज्योतिषाधिपः ॥८
दृप्तं सङ्ख्ये द्विपबलाद्वयसा चापि विस्मितम् ।
अद्यैनं प्रेषयिष्यामि बलहन्तुः प्रियातिथिम् ॥ ९
वचनादथ कृष्णस्तु प्रययौ सव्यसाचिनः ।
दीर्यते भगदत्तेन यत्र पाण्डववाहिनी ॥ १०
तं प्रयान्तं ततः पश्चादाह्वयन्तो महारथाः ।
संशप्तकाः समारोहन्सहस्राणि चतुर्दश ॥ ११
दशैव तु सहस्राणि त्रिगर्तानां महारथाः ।
चत्वारि च सहस्राणि वासुदेवस्य चानुगाः ॥ १२
दीर्यमाणां चमूं दृष्ट्वा भगदत्तेन मारिष ।
आहूयमानस्य च तैरभवद्धृदयं द्विधा ॥ १३
किंनु श्रेयस्करं कर्म भवेदद्येत्यचिन्तयत् ।
इह वा विनिवर्तेयं गच्छेयं वा युधिष्ठिरम् ॥ १४
तस्य बुद्ध्या विचार्यैवमर्जुनस्य कुरूद्वह ।
अभवद्भूयसी बुद्धिः संशप्तकवधे स्थिरा ॥ १५
स सन्निवृत्तः सहसा कपिप्रवरकेतनः ।
एको रथसहस्राणि निहन्तुं वासवी रणे ॥ १६
सा हि दुर्योधनस्यासीन्मतिः कर्णस्य चोभयोः ।
अर्जुनस्य वधोपाये या वै द्वैधमकल्पयत् ॥ १७
स तु दोलायमानोऽभूद्द्वैधीभावेन पाण्डवः ।
वधेन तु नराग्र्याणामकरोत्तां मृषा तदा ॥ १८
ततः शतसहस्राणि शराणां नतपर्वणाम् ।
असृजन्नर्जुने राजन्संशप्तकमहारथाः ॥ १९
नैव कुन्तीसुतः पार्थो नैव कृष्णो जनार्दनः ।
न हया न रथो राजन्दृश्यन्ते स्म शरैश्चिताः ॥२०
तदा मोहमनुप्राप्तः सिष्विदे हि जनार्दनः ।
ततस्तान्प्रायशः पार्थो ब्रह्मास्त्रेण निजघ्निवान् ॥२१
शतशः पाणयश्छिन्नाः सेषुज्यातलकार्मुकाः ।
केतवो वाजिनः सूता रथिनश्चापतन्क्षितौ ॥ २२
द्रुमाचलाग्राम्बुधरैः समकायाः सुकल्पिताः ।
हतारोहाः क्षितौ पेतुर्द्विपाः पार्थशराहताः ॥२३
विप्रविद्धकुथा नागाश्छिन्नभाण्डाः परासवः ।
सारोहास्तु रणे पेतुर्मथिता मार्गणैर्भृशम् ॥ २४
सर्ष्टिप्रासासिनखराः समुद्गरपरश्वधाः ।
विच्छिन्ना बाहवः पेतुर्नृणां भल्लैः किरीटिना ॥ २५
बालादित्याम्बुजेन्दूनां तुल्यरूपाणि मारिष ।
संच्छिन्नान्यर्जुनशरैः शिरांस्युर्वी प्रपेदिरे ॥ २६
जज्वालालङ्कृता सेना पत्रिभिः प्राणिभोजनैः ।
नानारूपैस्तदाऽमित्रान्क्रुद्धे निघ्नति फल्गुने ॥ २७
क्षोभयन्तं तदा सेनां द्विरदं नलिनीमिव ।
धनंजयं भूतगणाः साधुसाध्वित्यपूजयन् ॥ २८
दृष्ट्वा तत्कर्म पार्थस्य वासवस्येव माधवः ।
विस्मयं परमं गत्वा प्राञ्जलिस्तमुवाच ह ॥ २९
कर्मैतत्पार्थ शक्रेण यमेन धनदेन च ।
दुष्करं समरे यत्ते कृतमद्येति मे मतिः ॥ ३०
युगपच्चैव संग्रामे शतशोऽथ सहस्रशः ।
पतिता एव मे दृष्टाः संशप्तकमहारथाः ॥ ३१
संशप्तकांस्ततो हत्वा भूयिष्ठा ये व्यवस्थिताः ।
भगदत्ताय याहीति कृष्णं पार्थोऽभ्यनोदयत् ॥ ३२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे सप्तविंशोऽध्यायः ॥ २७ ॥

सहः सोढा । पचाद्यच् ॥ ६ ॥ विस्मितं रूढाहङ्कारम् ॥ ९ ॥ समारोहन्संवृतवन्तः ॥ ११ ॥ सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

भगदत्तार्जुनसमागमः ॥ १ ॥

सञ्जय उवाच ।
यियासतस्ततः कृष्णः पार्थस्याश्वान्मनोजवान् ।
संप्रैषीद्धेमसंछन्नान्द्रोणानीकाय संत्वरन् ॥ १
तं प्रयान्तं कुरुश्रेष्ठं स्वांस्त्रातुं द्रोणतापितान् ।
सुशर्मा भ्रातृभिः सार्धं युद्धार्थी पृष्ठतोऽन्वयात् २
ततः श्वेतहयः कृष्णमब्रवीदजितंजयः ।
एष मां भ्रातृभिः सार्धं सुशर्माऽऽह्वयतेऽच्युत ॥३
दीर्यते चोत्तरेणैव तत्सैन्यं मधुसूदन ।
द्वैधीभूतं मनो मेऽद्य कृतं संशप्तकैरिदम् ॥ ४
किंनु संशप्तकान्हन्मि स्वान्रक्षाम्यहितार्दितान् ।
इति मे त्वं मतं वेत्सि तत्र किं सुकृतं भवेत् ॥ ५
एवमुक्तस्तु दाशार्हः स्यन्दनं प्रत्यवर्तयत् ।
येन त्रिगर्ताधिपतिः पाण्डवं समुपाह्वयत् ॥ ६
ततोऽर्जुनः सुशर्माणं विद्ध्वा सप्तभिराशुगैः ।
ध्वजं धनुश्चास्य तथा क्षुराभ्यां समकृन्तत ॥ ७
त्रिगर्ताधिपतेश्चापि भ्रातरं षड्भिराशुगैः ।
साश्वं ससूतं त्वरितः पार्थः प्रैषीद्यमक्षयम् ॥ ८
ततो भुजगसंकाशां सुशर्मा शक्तिमायसीम् ।
चिक्षेपार्जुनमादिश्य वासुदेवाय तोमरम् ॥ ९
शक्तिं त्रिभिः शरैश्छित्त्वा तोमरं त्रिभिरर्जुनः ।
सुशर्माणं शरव्रातैर्मोहयित्वा न्यवर्तयत् ॥ १०
तं वासवमिवायान्तं भूरिवर्षं शरौघिणम् ।
राजंस्तावकसैन्यानां नोग्रं कश्चिदवारयत् ॥ ११
ततो धनञ्जयो बाणैः सर्वानेव महारथान् ।
आयाद्विनिघ्नन्कौरव्यान्दहन्कक्षमिवानलः ॥१२
तस्य वेगमसह्यं तं कुन्तीपुत्रस्य धीमतः ।
नाशक्नुवंस्ते संसोढुं स्पर्शमग्नेरिव प्रजाः ॥ १३
संवेष्टयन्ननीकानि शरवर्षेण पाण्डवः ।
सुपर्ण इव नागेन्द्रं प्रायात्प्राग्ज्योतिषं प्रति ॥१४
यत्तदानामयज्जिष्णुर्भरतानामपापिनाम् ।
धनुः क्षेमकरं सङ्ख्ये द्विषतामश्रुवर्धनम् ॥ १५
तदेव तव पुत्रस्य राजन्दुर्द्यूतदेविनः ।
कृते क्षत्रविनाशाय धनुरायच्छदर्जुनः ॥ १६
तथा विक्षोभ्यमाणा सा पार्थेन तव वाहिनी ।
व्यशीर्यत महाराज नौरिवासाद्य पर्वतम् ॥ १७
ततो दशसहस्राणि न्यवर्तन्त धनुष्मताम् ।
मतिं कृत्वा रणे क्रूरां वीरा जयपराजये ॥ १८
व्यपेतहृदयत्रासा आवव्रुस्तं महारथाः ।
आर्च्छत्पार्थो गुरुं भारं सर्वभारसहो युधि ॥१९
यथा नलवनं क्रुद्धः प्रभिन्नः षष्टिहायनः ।
मृद्नीयात्तद्वदायस्तः पार्थोऽमृद्नाच्चमूं तव ॥ २०
तस्मिन्प्रमथिते सैन्ये भगदत्तो नराधिपः ।
तेन नागेन सहसा धनञ्जयमुपाद्रवत् ॥ २१
तं रथेन नरव्याघ्रः प्रत्यगृह्णाद्धनंजयः ।
स सन्निपातस्तुमुलो बभूव नरनागयोः ॥ २२
कल्पिताभ्यां यथाशास्त्रं रथेन च गजेन च ।
संग्रामे चेरतुर्वीरौ भगदत्तधनञ्जयौ ॥ २३
ततो जीमूतसंकाशान्नागादिन्द्र इव प्रभुः ।
अभ्यवर्षच्छरौघेण भगदत्तो धनंजयम् ॥ २४
स चापि शरवर्षं तं शरवर्षेण वासविः ।
अप्राप्तमेव चिच्छेद भगदत्तस्य वीर्यवान् ॥ २५
ततः प्राग्ज्योतिषो राजा शरवर्षे निवारिते ।
संरक्तनयनो रोषात्पार्थं पुनरवाकिरत् ॥ २६
स तथा शरवर्षेण पार्थं समभिहत्य वै ।
चोदयामास तं नागं वधायाच्युतपार्थयोः ॥२७
तमापतन्तं द्विरदं दृष्ट्वा क्रुद्धमिवान्तकम् ।
चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्दनः ॥ २८
संप्राप्तमपि नेयेष परावृत्तं महाद्विपम् ।
सारोहं मृत्युसात्कर्तुं स्मरन्धर्मं धनञ्जयः ॥ २९

---

आयच्छद्गृहीतवान् । यदेवार्जुनस्य धनुर्भरतानां क्षेमकरमासीत्तदेव त्वत्पुत्रनिमित्तं क्षत्रक्षयकरमभवदिति वाक्यार्थः ॥ १६ ॥ अष्टाविंशोऽध्यायः ॥ २८ ॥

स तु नागो द्विपरथान्हयांश्चामृद्य मारिष । प्राहिणोन्मृत्युलोकाय ततः क्रुद्धो धनञ्जयः ॥३०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

अर्जुनेन सगजस्य भगदत्तस्य वधः ॥ १ ॥

धृतराष्ट्र उवाच ।
तथा क्रुद्धः किमकरोद्भगदत्तस्य पाण्डवः ।
प्राग्ज्योतिषो वा पार्थस्य तन्मे शंस यथातथम् ॥१
सञ्जय उवाच ।
प्राग्ज्योतिषेण संसक्तावुभौ दाशार्हपाण्डवौ ।
मृत्युदंष्ट्रान्तिकं प्राप्तौ सर्वभूतानि मेनिरे ॥ २
तथा तु शरवर्षाणि पातयत्यनिशं प्रभो ।
गजस्कन्धान्महाराज कृष्णयोः स्यन्दनस्थयोः ॥ ३
अथ कार्ष्णायसैर्बाणैः पूर्णकार्मुकनिःसृतैः ।
अविध्यद्देवकीपुत्रं हेमपुङ्खैः शिलाशितैः ॥ ४
अग्निस्पर्शसमास्तीक्ष्णा भगदत्तेन चोदिताः ।
निर्भिद्य देवकीपुत्रं क्षितिं जग्मुः सुवाससः ॥ ५
तस्य पार्थो धनुश्छित्त्वा परिवारं निहत्य च ।
लालयन्निव राजानं भगदत्तमयोधयत् ॥ ६
सोऽर्करश्मिनिभांस्तीक्ष्णांस्तोमरान्वै चतुर्दश ।
अप्रेषयत्सव्यसाची द्विधैकैकमथाच्छिनत् ॥ ७
ततो नागस्य तद्वर्म व्यधमत्पाकशासनिः ।
शरजालेन महता तद्व्यशीर्यत भूतले ॥ ८
शीर्णवर्मा स तु गजः शरैः सुभृशमर्दितः ।
बभौ धारानिपाताक्तो व्यभ्रः पर्वतराडिव ॥ ९
ततः प्राग्ज्योतिषः शक्तिं हेमदण्डामयस्मयीम् ।
व्यसृजद्वासुदेवाय द्विधा तामर्जुनोऽच्छिनत् ॥१०
ततश्छत्रं ध्वजं चैव छित्त्वा राज्ञोऽर्जुनः शरैः ।
विव्याध दशभिस्तूर्णमुत्स्मयन्पर्वतेश्वरम् ॥ ११
सोऽतिविद्धोऽर्जुनशरैः सुपुङ्खैः कङ्कपत्रिभिः ।
भगदत्तस्ततः क्रुद्धः पाण्डवस्य जनाधिपः ॥ १२
व्यसृजत्तोमरान्मूर्ध्नि श्वेताश्वस्योन्ननाद च ।
तैरर्जुनस्य समरे किरीटं परिवर्तितम् ॥ १३
परिवृत्तं किरीटं तद्यमयन्नेव पाण्डवः ।
सुदृष्टः क्रियतां लोक इति राजानमब्रवीत् ॥ १४
एवमुक्तस्तु संक्रुद्धः शरवर्षेण पाण्डवम् ।
अभ्यवर्षत्स गोविन्दं धनुरादाय भास्वरम् ॥१५
तस्य पार्थो धनुश्छित्त्वा तूणीरान्सन्निकृत्य च ।
त्वरमाणो द्विसप्तत्या सर्वमर्मस्वताडयत् ॥ १६
विद्धस्ततोऽतिव्यथितो वैष्णवास्त्रमुदीरयन् ।
अभिमन्त्र्याङ्कुशं क्रुद्धो व्यसृजत्पाण्डवोरसि ॥१७
विसृष्टं भगदत्तेन तदस्त्रं सर्वघाति वै ।
उरसा प्रतिजग्राह पार्थं संछाद्य केशवः ॥ १८
वैजयन्त्यभवन्माला तदस्त्रं केशवोरसि ।
पद्मकोशविचित्रा सा सर्वर्तुकुसुमोत्करा ॥ १९
ज्वलनार्केन्दुवर्णाभा पावकोज्ज्वलपल्लवा ।
तया पद्मपलाशिन्या वातकम्पितपत्रया ॥ २०
शुशुभेऽभ्यधिकं शौरिरतसीपुष्पसन्निभः ।
ततोऽर्जुनः क्लान्तमनाः केशवं प्रत्यभाषत ॥ २१
अयुध्यमानस्तुरगान्संयन्तास्मि जनार्दन ।
इत्युक्त्वा पुण्डरीकाक्ष प्रतिज्ञां स्वां न रक्षसि ॥२२
यद्यहं व्यसनी वा स्यामशक्तो वा निवारणे ।
ततस्त्वयैवं कार्यं स्यान्न तु कार्यं मयि स्थिते ॥ २३
सबाणः सधनुश्चाहं ससुरासुरमानुषान् ।
शक्तो लोकानिमाञ्जेतुं तच्चापि विदितं तव ॥२४
ततोऽर्जुनं वासुदेवः प्रत्युवाचार्थवद्वचः ।
शृणु गुह्यमिदं पार्थ पुरावृत्तं यथाऽनघ ॥ २५
'येयं भूतधरा देवी सर्वभूतधरा धरा ।
सकामा लोककर्तारं नारायणमुपस्थिता ॥ २६
स संगत्य तया सार्धं प्रीतस्तस्या वरं ददौ ।
सा वव्रे विष्णुसदृशं पुत्रमस्त्रं च वैष्णवम् ॥ २७

बभूव च सुतस्तस्या नरको नाम विश्रुतः ।
अस्त्रं च वैष्णवं तस्मै ददौ नारायणः स्वयम् ॥२८
तदेवं नरकस्यासीदस्त्रं सर्वाहितान्तकम् ।
तस्मात्प्राग्ज्योतिषं प्राप्तं सर्वशस्त्रविघातनम् ॥ २९
नास्यावध्योऽस्ति लोकेऽस्मिन्मदन्यः कश्चिदर्जुन ।
तस्मान्मया कृतं ह्येतन्मा भूत्ते बुद्धिरन्यथा ॥ ३०
सञ्जय उवाच ।
अनुनीय तु दाशार्हः पाण्डवं त्वरितोऽब्रवीत् ।
जहि प्राग्ज्योतिषं क्षिप्रं वाक्यशेषं च मे शृणु ॥' ३१
चतुर्मूर्तिरहं शश्वल्लोकत्राणार्थमुद्यतः ।
आत्मानं प्रविभज्येह लोकानां हितमादधे ॥ ३२
एका मूर्तिस्तपश्चर्यां कुरुते मे भुवि स्थिता ।
अपरा पश्यति जगत्कुर्वाणं साध्वसाधुनी ॥ ३३
अपरा कुरुते कर्म मानुषं लोकमाश्रिता ।
शेते चतुर्थी त्वपरा निद्रां वर्षसहस्रिकीम् ॥ ३४
याऽसौ वर्षसहस्रान्ते मूर्तिरुत्तिष्ठते मम ।
वरार्हेभ्यो वराञ्श्रेष्ठांस्तस्मिन्काले ददाति सा ॥३५
तं तु कालमनुप्राप्तं विदित्वा पृथिवी तदा ।
अयाचत वरं यन्मां नरकार्थाय तच्छृणु ॥ ३६
देवानां दानवानां च अवध्यस्तनयोऽस्तु मे ।
उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि ॥ ३७
एवं वरमहं श्रुत्वा जगत्यास्तनये तदा ।
अमोघमस्त्रं प्रायच्छं वैष्णवं परमं पुरा ॥ ३८
अवोचं चैतदस्त्रं वै ह्यमोघं भवतु क्षमे ।
नरकस्याभिरक्षार्थं नैनं कश्चिद्वधिष्यति ॥ ३९
अनेनास्त्रेण ते गुप्तः सुतः परबलार्दनः ।
भविष्यति दुराधर्षः सर्वलोकेषु सर्वदा ॥ ४०
तथेत्युक्त्वा गता देवी कृतकामा मनस्विनी ।
स चाप्यासीद्दुराधर्षो नरकः शत्रुतापनः ॥ ४१
तस्मात्प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकम् ।
नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष ॥४२
तन्मया त्वत्कृते चैतदन्यथैवोपनिर्मितम् ।
वियुक्तं परमास्त्रेण जहि पार्थ महासुरम् ॥ ४३
'अवध्योऽयं महास्त्रेण भगदत्तः सुरासुरैः ।'
वैरिणं जहि दुर्धर्षं भगदत्तं सुरद्विषम् ।
यथाऽहं जघ्निवान्पूर्वं हितार्थं नरकं तथा ॥ ४४
सञ्जय उवाच ।
एवमुक्तस्तदा पार्थः केशवेन महात्मना ।
भगदत्तं शितैर्बाणैः सहसा समवाकिरत् ॥ ४५
ततः पार्थो महाबाहुरसंभ्रान्तो महामनाः ।
कुम्भयोरन्तरे नागं नाराचेन समार्पयत् ॥ ४६
स समासाद्य तं नागं बाणो वज्र इवाचलम् ।
अभ्यगात्सह पुङ्खेन वल्मीकमिव पन्नगः ॥ ४७
स करी भगदत्तेन प्रेर्यमाणो
न करोति वचस्तस्य दरिद्रस्येव योषिता ॥ ४८
स तु विष्टभ्य गात्राणि दन्ताभ्यामवनिं ययौ ।
नदन्नार्तस्वनं प्राणानुत्ससर्ज महाद्विपः ॥ ४९
ततो गाण्डीवधन्वानमभ्यभाषत केशवः ।
अयं महत्तरः पार्थ पलितेन समावृतः ॥ ५०
वलीसंछन्ननयनः शूरः परमदुर्जयः ।
अक्ष्णोरुन्मीलनार्थाय बद्धपट्टो ह्यसौ नृपः ॥ ५१
देववाक्यात्प्रचिच्छेद शरेण भृशमर्जुनः ।
छिन्नमात्रेंऽशुके तस्मिन्रुद्धनेत्रो बभूव सः ॥ ५२
तमोमयं जगन्मेने भगदत्तः प्रतापवान् ।
ततश्चन्द्रार्धबिम्बेन बाणेन नतपर्वणा ॥ ५३
बिभेद हृदयं राज्ञो भगदत्तस्य पाण्डवः ।
स भिन्नहृदयो राजा भगदत्तः किरीटिना ॥५४
शरासनं शरांश्चैव गतासुः प्रमुमोच ह ।
शिरसस्तस्य विभ्रष्टं पपात च वरांशुकम् ।
नालताडनविभ्रष्टं पलाशं नलिनादिव ॥ ५५
स हेममाली तपनीयभाण्डा-
त्पपात नागाद्गिरिसन्निकाशात् ।
मारुतवेगभग्नो
महीधराग्रादिव कर्णिकारः ॥ ५६

एका मूर्तिर्बदरिकाश्रमे नारायणरूपा । अपरा परमात्मरूपा ॥ ३३ ॥ अपरा रामकृष्णादिरूपा । अपरा जलशायिनी ॥३४॥

योषिता भागुरिमते टाप् ॥ ४८ ॥ एकोनत्रिंशोऽध्यायः ॥ २९

निहत्य तं नरपतिमिन्द्रविक्रमं
सखायमिन्द्रस्य तदैन्द्रिराहवे ।
ततोऽपरांस्तव जयकाङ्क्षिणो नरान्
बभञ्ज वायुर्बलवान्द्रुमानिव ॥ ५७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

अर्जुनयुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
प्रियमिन्द्रस्य सततं सखायममितौजसम् ।
हत्वा प्राग्ज्योतिषं पार्थः प्रदक्षिणमवर्तत ॥ १
ततो गान्धारराजस्य सुतौ परपुरंजयौ ।
अर्देतामर्जुनं सङ्ख्ये भ्रातरौ वृषकाचलौ ॥ २
तौ समेत्यार्जुनं वीरौ पुरः पश्चाच्च धन्विनौ ।
अविध्येतां महावेगैर्निशितैराशुगैर्भृशम् ॥ ३
वृषकस्य हयान्सूतं धनुश्छत्रं रथं ध्वजम् ।
तिलशो व्यधमत्पार्थः सौबलस्य शितैः शरैः ॥ ४
ततोऽर्जुनः शरव्रातैर्नानाप्रहरणैरपि ।
गान्धारानाकुलांश्चक्रे सौबलप्रमुखान्पुनः ॥ ५
ततः पञ्चशतान्वीरान्गान्धारानुद्यतायुधान् ।
प्राहिणोन्मृत्युलोकाय क्रुद्धो बाणैर्धनञ्जयः ॥ ६
हताश्वात्तु रथात्तूर्णमवतीर्य महाभुजः ।
आरुरोह रथं भ्रातुरन्यच्च धनुराददे ॥ ७
तावेकरथमारूढौ भ्रातरौ वृषकाचलौ ।
शरवर्षेण बीभत्सुमविध्येतां मुहुर्मुहुः ॥ ८
स्यालौ तव महात्मानौ राजानौ वृषकाचलौ ।
भृशं विजघ्नतुः पार्थमिन्द्रं वृत्रबलाविव ॥ ९
लब्धलक्षौ तु गान्धारावहतां पाण्डवं पुनः ।
नैदाघवार्षिकौ मासौ लोकं घर्मांशुभिर्यथा ॥ १०
तौ रथस्थौ नरव्याघ्रौ राजानौ वृषकाचलौ ।
संश्लिष्टाङ्गौ स्थितौ राजञ्जघानैकेषुणार्जुनः ॥ ११
तौ रथात्सिंहसंकाशौ लोहिताक्षौ महाभुजौ ।
राजन्संपेततुर्वीरौ सोदर्यावेकलक्षणौ ॥ १२
तयोर्भूमिं गतौ देहौ रथाद्बन्धुजनप्रियौ ।
यशो दश दिशः पुण्यं गमयित्वा व्यवस्थितौ ॥ १३
दृष्ट्वा विनिहतौ सङ्ख्ये मातुलावपलायिनौ ।
भृशं मुमुचुरश्रूणि पुत्रास्तव विशांपते ॥ १४
निहतौ भ्रातरौ दृष्ट्वा मायाशतविशारदः ।
कृष्णौ संमोहन्मायां विदधे शकुनिस्ततः ॥ १५
लगुडायोगुडाश्मानः शतघ्न्यश्च सशक्तयः ।
गदापरिघनिस्त्रिंशशूलमुद्गरपट्टसाः ॥ १६
सकम्पनर्ष्टिनखरा मुसलानि परश्वधाः ।
क्षुराः क्षुरप्रनालीका वत्सदन्तास्थिसन्धयः ॥ १७
चक्राणि विशिखाः प्रासा विविधान्यायुधानि च ।
प्रपेतुः शतशो दिग्भ्यः प्रदिग्भ्यश्चार्जुनं प्रति ॥ १८
खरोष्ट्रमहिषाः सिंहा व्याघ्राः सृमरचित्रकाः ।
ऋक्षाः सालावृका गृध्राः कपयश्च सरीसृपाः ॥ १९
विविधानि च रक्षांसि क्षुधितान्यर्जुनं प्रति ।
संक्रुद्धान्यभ्यधावन्त विविधानि वयांसि च ॥ २०
ततो दिव्यास्त्रविच्छूरः कुन्तीपुत्रो धनञ्जयः ।
विसृजन्निषुजालानि सहसा तान्यताडयत् ॥ २१
ते हन्यमानाः शूरेण प्रवरैः सायकैर्दृढैः ।
विरुवन्तो महारावान्विनेशुः सर्वतो हताः ॥ २२
ततस्तमः प्रादुरभूदर्जुनस्य रथं प्रति ।
तस्माच्च तमसो वाचः क्रूराः पार्थमभर्त्सयन् ॥ २३
तत्तमो भैरवं घोरं भयकर्तृ महाहवे ।

---

वर्षशब्दोऽयमृतुवचनः । निदाघर्तुसंबन्धिनावित्यर्थः । घर्मांशुभिस्तीक्ष्णकिरणैः । लोकं घर्मोम्बुभिर्यथा इति क. ङ. पाठः ॥ १० ॥ कम्पनयष्ट्यः । क्षुरा क्षुराकृतिफलकाः । क्षुरप्रास्तूप्रमध्यफलकाः । नालीका नलिकया क्षेप्याः । वत्सदन्ता गोपोतकदन्ताकारफलकाः । अस्थिसंधयोऽस्थिमयफलकाः ॥ १७ ॥ विशिखाः फणित्राकारफलकाः ॥ १८ ॥ सृमरा गवयाः । चित्रको व्याघ्रभेदः । सालावृकाः श्वानः ॥ १९ ॥

उत्तमास्त्रेण महता ज्यौतिषेणार्जुनोऽब्रवीत् ॥२४
हते तस्मिञ्जलौघास्तु प्रादुरासन्भयानकाः ।
अम्भसस्तस्य नाशार्थमादित्यास्त्रमथार्जुनः ।
प्रायुङ्क्ताम्भस्ततस्तेन प्रायशोऽस्त्रेण शोषितम् ॥२५
एवं बहुविधा मायाः सौबलस्य कृताः कृताः ।
जघानास्त्रबलेनाशु प्रहसन्नर्जुनोऽब्रवीत् ॥ २६
'दुर्द्यूतदेविन्गान्धारे नाक्षान्क्षिपति गाण्डिवम् ।
ज्वलितान्निशितांस्तीक्ष्णाञ्शरान्क्षिपति गाण्डिवं'
तदा हतासु मायासु त्रस्तोऽर्जुनशराहतः ।
अपायाज्जवनैरश्वैः शकुनिः प्राकृतो यथा ॥ २८
ततोऽर्जुनोऽस्त्रविच्छैघ्र्यं दर्शयन्नात्मनोऽरिषु ।
अभ्यवर्षच्छरौघेण कौरवाणामनीकिनीम् ॥ २९
सा हन्यमाना पार्थेन तव पुत्रस्य वाहिनी ।
द्वैधीभूता महाराज गङ्गेवासाद्य पर्वतम् ॥ ३०
द्रोणमेवान्वपद्यन्त केचित्तत्र नरर्षभाः ।
केचिद्दुर्योधनं राजन्नर्द्यमानाः किरीटिना ॥ ३१
नापश्याम ततस्त्वेनं सैन्ये वै रजसावृते ।
गाण्डीवस्य च निर्घोषः श्रुतो दक्षिणतो मया॥३२
शङ्खदुन्दुभिनिर्घोषं वादित्राणां च निःस्वनम् ।
गाण्डीवस्य तु निर्घोषो व्यतिक्रम्यास्पृशद्दिवम्३३
ततः पुनर्दक्षिणतः संग्रामश्चित्रयोधिनाम् ।
सुयुद्धं चार्जुनस्यासीदहं तु द्रोणमन्वियाम् ॥३४
यौधिष्ठिराण्यनीकानि प्रहरन्ति ततस्ततः ।
नानाविधान्यनीकानि पुत्राणां तव भारत ।
अर्जुनो व्यधमत्काले दिवीवाभ्राणि मारुतः॥३५
तं वासवमिवायान्तं भूरिवर्षं शरौघिणम् ।
महेष्वासा नरव्याघ्रा नोग्रं केचिदवारयन् ॥ ३६
ते हन्यमानाः पार्थेन त्वदीया व्यथिता भृशम् ।
स्वानेव बहवो जघ्नुर्विद्रवन्तस्ततस्ततः ॥ ३७
तेऽर्जुनेन शरा मुक्ताः कङ्कपत्रास्तनुच्छिदः ।
शलभा इव संपेतुः संवृण्वाना दिशो दश ॥ ३८
तुरगं रथिनं नागं पदातिमपि मारिष ।
विनिर्भिद्य क्षितिं जग्मुर्वल्मीकमिव पन्नगाः ॥३९
न च द्वितीयं व्यसृजत्कुञ्जराश्वनरेषु सः ।
पृथगेकशरारुग्णा निपेतुस्ते गतासवः ॥ ४०
हतैर्मनुष्यैर्द्विरदैश्च सर्वतः
शराभिसृष्टैश्च हयैर्निपातितैः ।
तदाऽश्वगोमायुबलाभिनादितं
विचित्रमायोधशिरो बभूव तत् ॥ ४१
पिता सुतं त्यजति सुहृद्वरं सुहृत्
तथैव पुत्रः पितरं शरातुरः ।
स्वरक्षणे कृतमतयस्तदा जना-
स्त्यजन्ति वाहानपि पार्थपीडिताः॥ ४२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

अश्वत्थाम्ना नीलस्य वधः ॥ १ ॥

धृतराष्ट्र उवाच ।
तेष्वनीकेषु भग्नेषु पाण्डुपुत्रेण सञ्जय ।
चलितानां द्रुतानां च कथमासीन्मनांसि वः ॥१
आनीकानां प्रभग्नानामवस्थानमपश्यताम् ।
दुष्करं प्रतिसंधानं तन्ममाचक्ष्व सञ्जय ॥ २
सञ्जय उवाच ।
तथापि तव पुत्रस्य प्रियकामा विशांपते ।
यशः प्रवीरा लोकेषु रक्षन्तो द्रोणमन्वयुः ॥ ३
समुद्यतेषु चास्त्रेषु संप्राप्ते च युधिष्ठिरे ।
अकुर्वन्नार्यकर्माणि भैरवे सत्यभीतवत् ॥ ४

एनमर्जुनम् ॥ ३२ ॥ शराभिसृष्टैर्बाणाभिहतैः । आयोधशिरो रणाङ्गणम् ॥ ४१ ॥ त्रिंशोऽध्यायः ॥ ३० ॥

अन्तरं भीमसेनस्य प्रापतन्नमितौजसः ।
सात्यकेश्चैव वीरस्य धृष्टद्युम्नस्य वा विभो ॥ ५
द्रोणं द्रोणमिति क्रूराः पाञ्चालाः समचोदयन् ।
मा द्रोणमिति पुत्रास्ते कुरून्सर्वानचोदयन् ॥ ६
द्रोणं द्रोणमिति ह्येके मा द्रोणमिति चापरे ।
कुरूणां पाण्डवानां च द्रोणद्यूतमवर्तत ॥ ७
यंयं प्रमथते द्रोणः पाञ्चालानां रथव्रजम् ।
तत्रतत्र तु पाञ्चाल्यो धृष्टद्युम्नोऽभ्यवर्तत ॥ ८
तेषां भाग्यविपर्यासैः संग्रामे भैरवे सति ।
वीराः समासदन्वीरान्कुर्वन्तो भैरवं रवम् ॥ ९
अकम्पनीयाः शत्रूणां बभूवुस्तत्र पाण्डवाः ।
अकम्पयन्ननीकानि स्मरन्तः क्लेशमात्मनः ॥ १०
ते त्वमर्षवशं प्राप्ता ह्रीमन्तः सत्वचोदिताः ।
त्यक्त्वा प्राणान्यवर्तन्त घ्नन्तो द्रोणं महाहवे ॥ ११
अयसामिव संपातः शिलानामिव चाभवत् ।
दीव्यतां तुमुले युद्धे प्राणैरमिततेजसाम् ॥ १२
नानुस्मरन्ति संग्राममपि वृद्धास्तथाविधम् ।
ये पूर्वदेवैर्देवानामपश्यन्युद्धमद्भुतम् ॥ १३
प्राकम्पतेव पृथिवी तस्मिन्वीरावसादने ।
निवर्तता बलौघेन महता भारपीडिता ॥ १४
घूर्णतोऽपि बलौघस्य दिवं स्तब्ध्वेव निःस्वनः ।
अजातशत्रोस्तत्सैन्यमाविवेश सुभैरवः ॥ १५
समासाद्य तु पाण्डूनामनीकानि सहस्रशः ।
द्रोणेन चरता सङ्ख्ये प्रभग्नानि शितैः शरैः ॥ १६
तेषु प्रमथ्यमानेषु द्रोणेनाद्भुतकर्मणा ।
पर्यवारयदासाद्य द्रोणं सेनापतिः स्वयम् ॥ १७
तदद्भुतमभूद्युद्धं द्रोणपाञ्चालयोस्तथा ।
नैव तस्योपमा काचिदिति मे निश्चिता मतिः ॥ १८
ततो नीलोऽनलप्रख्यो ददाह कुरुवाहिनीम् ।
शरस्फुलिङ्गश्चापार्चिर्दहन्कक्षमिवानलः ॥ १९
तं दहन्तमनीकानि द्रोणपुत्रः प्रतापवान् ।
पूर्वाभिभाषी सुश्लक्ष्णं स्मयमानोऽभ्यभाषत ॥ २०
नील किं बहुभिर्दग्धैस्तव योधैः शरार्चिषा ।
मयैकेन हि युध्यस्व क्रुद्धः प्रहर चाशु माम् ॥ २१
तं पद्मनिकराकारं पद्मपत्रनिभेक्षणम् ।
व्याकोशपद्माभमुखो नीलो विव्याध सायकैः ॥ २२
तेनापि विद्धः सहसा द्रौणिर्भल्लैः शितैस्त्रिभिः ।
धनुर्ध्वजं च च्छत्रं च द्विषतः संन्यकृन्तत ॥ २३
स प्लुतः स्यन्दनात्तस्मान्नीलश्चर्मवरासिभृत् ।
द्रौणायनेः शिरः कायाद्धर्तुमैच्छत्पतत्रिवत् ॥ २४
तस्योद्यतासेः सुनसं शिरः कायात्सकुण्डलम् ।
भल्लेनापाहरद्द्रौणिः स्मयमान इवानघ ॥ २५
संपूर्णचन्द्राभमुखः पद्मपत्रनिभेक्षणः ।
प्रांशुरुत्पलपत्राभो निहतो न्यपतद्भुवि ॥ २६
ततः प्रविव्यथे सेना पाण्डवी भृशमाकुला ।
आचार्यपुत्रेण हते नीले ज्वलिततेजसि ॥ २७
अचिन्तयंश्च ते सर्वे पाण्डवानां महारथाः ।
कथं नो वासविस्त्रायाच्छत्रुभ्य इति मारिष ॥ २८
दक्षिणेन तु सेनायाः कुरुते कदनं बली ।
संशप्तकावशेषस्य नारायणबलस्य च ॥ २९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

संकुलयुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
प्रतिघातं तु सैन्यस्य नामृष्यत वृकोदरः ।
सोऽभ्याहनद्गुरुं षष्ट्या कर्णं च दशभिः शरैः ॥ १
तस्य द्रोणः शितैर्बाणैस्तीक्ष्णधारैरजिह्मगैः ।

अन्तरं छिद्रम् । प्रापतन्गतवन्तः ॥ ५ ॥ पाण्डवान्याम इत्येव मा द्रोणमिति चापरे इति क. पाठः ॥ ७ ॥ समासदन्प्रतिगतवन्तः ॥ ९ ॥ न्यवर्तन्त भयेभ्यो निवृत्ताः । सत्वचोदिताः इति क. घ. ङ. पाठ. ॥ ११ ॥ एकत्रिंशोऽध्यायः ॥ ३१ ॥

जीवितान्तमभिप्रेप्सुर्मर्मण्याशु जघान ह ॥ २
आनन्तर्यमभिप्रेप्सुः षड्विंशत्या समार्पयत् ।
कर्णो द्वादशभिर्बाणैरश्वत्थामा च सप्तभिः ॥ ३
षड्भिर्दुर्योधनो राजा तत एनमथाकिरत् ।
भीमसेनोऽपि तान्सर्वान्प्रत्यविध्यन्महाबलः ॥ ४
द्रोणं पञ्चाशतेषूणां कर्णं च दशभिः शरैः ।
दुर्योधनं द्वादशभिर्द्रौणिमष्टाभिराशुगैः ॥ ५
आरावं तुमुलं कुर्वन्नभ्यवर्तत तान्रणे ।
तस्मिन्संत्यजति प्राणान्मृत्युसाधारणीकृते ॥ ६
अजातशत्रुस्तान्योधान्भीमं त्रातेत्यचोदयत् ।
ते ययुर्भीमसेनस्य समीपममितौजसः ॥ ७
युयुधानप्रभृतयो माद्रीपुत्रौ च पाण्डवौ ।
ते समेत्य सुसंरब्धाः सहिताः पुरुषर्षभाः ॥ ८
महेष्वासवरैर्गुप्ता द्रोणानीकं बिभित्सवः ।
समापेतुर्महावीर्या भीमप्रभृतयो रथाः ॥ ९
तान्प्रत्यगृह्णादव्यग्रो द्रोणोऽपि रथिनां वरः ।
महारथानतिबलान्वीरान्समरयोधिनः ॥ १०
बाह्यं मृत्युभयं कृत्वा तावकान्पाण्डवा ययुः ।
सादिनः सादिनोऽभ्यघ्नंस्तथैव रथिनो रथान् ११
असिशक्त्यृष्टिसंघातैर्युद्धमासीत्परश्वधैः ।
प्रकृष्टमसियुद्धं च बभूव कटुकोदयम् ॥ १२
कुञ्जराणां च संपाते युद्धमासीत्सुदारुणम् ।
अपतत्कुञ्जरादन्यो हयादन्यस्त्ववाक्शिराः ॥ १३
नरो बाणविनिर्भिन्नो रथादन्यश्च मारिष ।
तत्रान्यस्य च संमर्दे पतितस्य विवर्मणः ॥ १४
शिरः प्रध्वंसयामास वक्षस्याक्रम्य कुञ्जरः ।
अपरांश्चापरेऽमृद्नन्वारणाः पतितान्नरान् ॥ १५
विषाणैश्चावनिं गत्वा व्यभिन्दन्रथिनो बहून् ।
नरान्त्रैः केचिदपरे विषाणालग्नसंश्रयैः ॥ १६
बभ्रमुः समरे नागा मृद्नन्तः शतशो नरान् ।
कार्ष्णायसतनुत्राणान्नराश्वरथकुञ्जरान् ॥ १७
पतितान्पोथयांचक्रुर्द्विपाः स्थूलनलानिव
गृध्रपत्राधिवासांसि शयनानि नराधिपाः ॥ १८
ह्रीमन्तः कालसंपर्कात्सुदुःखान्यनुशेरते ।
हन्ति स्मात्र पिता पुत्रं रथेनाभ्येत्य संयुगे ॥ १९
पुत्रश्च पितरं मोहान्निर्मर्यादमवर्तत ।
रथो भग्नो ध्वजश्छिन्नश्छत्रमुर्व्यां निपातितम् ॥ २०
युगार्धं च्छिन्नमादाय प्रदुद्राव तथा हयः ।
सासिर्बाहुर्निपतितः शिरश्छिन्नं सकुण्डलम् ॥ २१
गजेनाक्षिप्य बलिना रथः संचूर्णितः क्षितौ ।
रथिना ताडितो नागो नाराचेनापतत्क्षितौ ॥ २२
सारोहश्चापतद्वाजी गजेनाभ्याहतो भृशम् ।
निर्मर्यादं महद्युद्धमवर्तत सुदारुणम् ॥ २३
हा तात हा पुत्र सखे क्वासि तिष्ठ क्व धावसि ।
प्रहराहर जह्येनं स्मितक्ष्वेडितगर्जितैः ।
इत्येवमुच्चैरत्यर्थं श्रूयन्ते विविधा गिरः ॥ २४
नरस्याश्वस्य नागस्य समसज्जत शोणितम् ।
उपाशाम्यद्रजो भौमं भीरून्कश्मलमाविशत् ॥ २५
चक्रेण चक्रमासाद्य वीरो वीरस्य संयुगे ।
अतीतेषुपथे काले जहार गदया शिरः ॥ २६
आसीत्केशपरामर्शो मुष्टियुद्धं च दारुणम् ।
नखैर्दन्तैश्च शूराणामद्वीपे द्वीपमिच्छताम् ॥ २७
तत्राच्छिद्यत शूरस्य सखड्गो बाहुरुद्यतः ।
सधनुश्चापरस्यापि सशरः साङ्कुशस्तथा ॥ २८
आक्रोशदन्यमन्योऽत्र तथाऽन्यो विमुखोऽद्रवत् ।
अन्यः प्राप्तस्य चान्यस्य शिरः कायादपाहरत् २९
सशब्दमद्रवच्चान्यः शब्दादन्योऽत्रसद्भृशम् ।
स्वानन्योऽथ परानन्यो जघान निशितैः शरैः ३०
गिरिशृङ्गोपमश्चात्र नाराचेन निपातितः ।
मातङ्गो न्यपतद्भूमौ नदीरोध इवोष्णगे ॥ ३१
तथैव रथिनं नागः क्षरन्गिरिरिवारुजन् ।
अभ्यतिष्ठत्पदा भूमौ सहाश्वं सहसारथिम् ॥ ३२

---

मृत्युसाधारणीकृते मरणतुल्यावस्थां गमिते ॥ ६ ॥ कटुकस्य परुषस्योदयो यत्र ॥ १२ ॥ अवनिं गत्वा अभिहत्य । विषाणालग्नसंश्रयैः दन्तलग्नैकदेशैः ॥ १६ ॥ गृध्रपक्षाधिवा-[illegible] गृध्रपक्षास्तरणानि ॥ १८ ॥ समसज्जत घनतामगमत् ॥ २५ ॥ अतीतः इषुपथः शरावकाशो यत्र ॥ २६ ॥ द्वीपमाश्रयम् ॥ २७ ॥ आक्रोशत् आहूतवान् ॥ २९ ॥ क्षरन्मदमिति शेषः । रथिनं तथैव सहसारथिं अर्थाद्रथं च पदा आरुजन् भूमौ अभ्यतिष्ठदित्यन्वयः ॥ ३२ ॥

शूरान्प्रहरतो दृष्ट्वा कृतास्त्रान्रुधिरोक्षितान् ।
बहूनप्याविशन्मोहो भीरून्हृदयदुर्बलान् ॥ ३३
सर्वमाविग्नमभवन्न प्राज्ञायत किंचन ।
सैन्येन रजसा ध्वस्तं निर्मर्यादमवर्तत ॥ ३४
ततः सेनापतिः शीघ्रमयं काल इति ब्रुवन् ।
नित्याभित्वरितानेव त्वरयामास पाण्डवान् ॥३५
कुर्वन्तः शासनं तस्य पाण्डवा बाहुशालिनः ।
सरो हंसा इवापेतुर्घ्नन्तो द्रोणरथं प्रति ॥ ३६
गृह्णीताद्रवतान्योन्यं विभीता विनिकृन्तत ।
इत्यासीत्तुमुलः शब्दो दुर्धर्षस्य रथं प्रति ॥ ३७
ततो द्रोणः कृपः कर्णो द्रौणी राजा जयद्रथः ।
विन्दानुविन्दावावन्त्यौ शल्यश्चैतान्न्यवारयन् ३८
ते त्वार्यधर्मसंरब्धा दुर्निवारा दुरासदाः ।
शरार्ता न जहुर्द्रोणं पाञ्चालाः पाण्डवैः सह ॥३९
ततो द्रोणोऽतिसंक्रुद्धो विसृजञ्शतशः शरान् ।
चेदिपाञ्चालपाण्डूनामकरोत्कदनं महत् ॥ ४०
तस्य ज्यातलनिर्घोषः शुश्रुवे दिक्षु मारिष ।
वज्रसंह्रादसंकाशस्त्रासयन्मानवान्बहून् ॥ ४१
एतस्मिन्नन्तरे जिष्णुर्जित्वा संशप्तकान्बहून् ।
अभ्ययात्तत्र यत्रासौ द्रोणः पाण्डून्प्रमर्दति ॥४२
ताञ्शरौघान्महावर्ताञ्शोणितोदान्महाह्रदान् ।
तीर्णः संशप्तकान्हत्वा प्रत्यदृश्यत फल्गुनः ॥४३
तस्य कीर्तिमतो लक्ष्म सूर्यप्रतिमतेजसः ।
दीप्यमानमपश्याम तेजसा वानरध्वजम् ॥ ४४
संशप्तकसमुद्रं तमुच्छोष्यास्त्रगभस्तिभिः ।
स पाण्डवयुगान्तार्कः कुरूनप्यभ्यतीतपत् ॥ ४५
प्रददाह कुरून्सर्वानर्जुनः शस्त्रतेजसा ।
युगान्ते सर्वभूतानि धूमकेतुरिवोत्थितः ॥ ४६
तेन बाणसहस्रौघैर्गजाश्वरथयोधिनः ।
ताड्यमानाः क्षितिं जग्मुर्मुक्तकेशाः शरार्दिताः ४७
केचिदार्तस्वनं चक्रुर्विनेशुरपरे पुनः ।
पार्थबाणहताः केचिन्निपेतुर्विगतासवः ॥ ४८
तेषामुत्पतितान्कांश्चित्पतितांश्च पराङ्मुखान् ।
न जघानार्जुनो योधान्योधव्रतमनुस्मरन् ॥ ४९
ते विकीर्णरथाश्चित्राः प्रायशश्च पराङ्मुखाः ।
कुरवः कर्णकर्णेति हाहेति च विचुक्रुशुः ॥ ५०
तमाधिरथिराक्रन्दं विज्ञाय शरणैषिणाम् ।
मा भैष्टेति प्रतिश्रुत्य ययावभिमुखोऽर्जुनम् ॥५१
स भारतरथश्रेष्ठः सर्वभारतहर्षणः ।
प्रादुश्चक्रे तदाग्नेयमस्त्रमस्त्रविदां वरः ॥ ५२
तस्य दीप्तशरौघस्य दीप्तचापधरस्य च ।
'वारुणेन तदस्त्रेण विधूयाथ धनञ्जयः ।'
शरौघाञ्शरजालेन विदुधाव धनञ्जयः ॥ ५३
तथैवाधिरथिस्तस्य बाणाञ्ज्वलिततेजसः
अस्त्रमस्त्रेण संवार्य प्राणदद्विसृजञ्शरान् ॥ ५४
धृष्टद्युम्नश्च भीमश्च सात्यकिश्च महारथः ।
विव्यधुः कर्णमासाद्य त्रिभिस्त्रिभिरजिह्मगैः ॥५५
अर्जुनास्त्रं तु राधेयः संवार्य शरवृष्टिभिः ।
तेषां त्रयाणां चापानि चिच्छेद विशिखैस्त्रिभिः ५६
ते निकृत्तायुधाः शूरा निर्विषा भुजगा इव ।
रथशक्तीः समुत्क्षिप्य भृशं सिंहा इवानदन् ॥५७
ता भुजाग्रैर्महावेगा निसृष्टा भुजगोपमाः ।
दीप्यमाना महाशक्त्यो जग्मुराधिरथिं प्रति ॥५८
ता निकृत्य शरव्रातैस्त्रिभिस्त्रिभिरजिह्मगैः
ननाद बलवान्कर्णः पार्थाय विसृजञ्शरान् ॥५९
अर्जुनश्चापि राधेयं विद्ध्वा सप्तभिराशुगैः ।
कर्णादवरजं बाणैर्जघान निशितैः शरैः ॥ ६०
ततः शत्रुंजयं हत्वा पार्थः षड्भिरजिह्मगैः ।
जहार सद्यो भल्लेन विपाटस्य शिरो रथात् ॥६१
पश्यतां धार्तराष्ट्राणामेकेनैव किरीटिना ।
प्रमुखे सूतपुत्रस्य सोदर्या निहतास्त्रयः ॥ ६२
ततो भीमः समुत्पत्य स्वरथाद्वैनतेयवत् ।
वरासिना कर्णपक्षाञ्जघान दश पञ्च च ॥ ६३
पुनस्तु रथमास्थाय धनुरादाय चापरम् ।
विव्याध दशभिः कर्णं सूतमश्वांश्च पञ्चभिः ॥६४

---

विभीता अभीताः । दुर्धर्षस्य द्रोणस्य ॥ ३७ ॥ आर्यधर्मेण संरब्धाः सोद्यमाः ॥ ३९ ॥ विदुधाव खण्डितवान् ॥ ५३ ॥

विपाटस्य शिर इति क. पाठः ॥ ६१ ॥

धृष्टद्युम्नोऽप्यसिवरं चर्म चादाय भास्वरम् ।
जघान चन्द्रवर्माणं बृहत्क्षत्रं च नैषधम् ॥ ६५
ततः स्वरथमास्थाय पाञ्चाल्योऽन्यच्च कार्मुकम् ।
आदाय कर्णं विव्याध त्रिसप्तत्या नदन्रणे ॥ ६६
शैनेयोऽप्यन्यदादाय धनुरिन्दुसमद्युतिः ।
सूतपुत्रं चतुःषष्ट्या विद्धा सिंह इवानदत् ॥ ६७
भल्लाभ्यां साधु मुक्ताभ्यां छित्त्वा कर्णस्य कार्मुकम्
पुनः कर्णं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ६८
ततो दुर्योधनो द्रोणो राजा चैव जयद्रथः ।
निमज्जमानं राधेयमुज्जह्रुः सात्यकार्णवात् ॥ ६९
पत्त्यश्वरथमातङ्गास्त्वदीयाः शतशोऽपरे ।
कर्णमेवाभ्यधावन्त त्रास्यमानाः प्रहारिणः ॥७०
धृष्टद्युम्नश्च भीमश्च सौभद्रोऽर्जुन एव च ।
नकुलः सहदेवश्च सात्यकिं जुगुपू रणे ॥ ७१
एवमेष महारौद्रः क्षयार्थं सर्वधन्विनाम् ।
तावकानां परेषां च त्यक्त्वा प्राणानभूद्रणः॥७२
पदातिरथनागाश्वा गजाश्वरथपत्तिभिः ।
रथिनो नागपत्त्यश्वैरथ पत्तीरथ द्विपैः ॥ ७३
अश्वैरश्वा गजैर्नागा रथिनो रथिभिः सह ।
संयुक्ताः समदृश्यन्त पत्तयश्चापि पत्तिभिः ॥ ७४
एवं सुकलिलं युद्धमासीत्क्रव्यादहर्षणम् ।
महद्भिस्तैरभीतानां यमराष्ट्रविवर्धनम् ॥ ७५
ततो हता नररथवाजिकुञ्जरै-
रनेकशो द्विपरथपत्तिवाजिनः ।
गजैर्गजा रथिभिरुदायुधा रथा
हयैर्हयाः पत्तिगणैश्च पत्तयः ॥ ७६
रथैर्द्विपा द्विरदवरैर्महाहया
हयैर्नरा वररथिभिश्च वाजिनः ।
निरस्तजिह्वादशनेक्षणाः क्षितौ
क्षयं गताः प्रमथितवर्मभूषणाः ॥ ७७
तथा परैर्बहुकरणैर्वरायुधै-
र्हता गताः प्रतिभयदर्शनाः क्षितिम् ।
विपोथिता हयगजपादताडिता
भृशाकुला रथमुखनेमिभिः क्षताः ॥ ७८
प्रमोदने श्वापदपक्षिरक्षसां
जनक्षये वर्तति तत्र दारुणे ।
महाबलास्ते कुपिताः परस्परं
निषूदयन्तः प्रविचेरुरोजसा ॥ ७९
ततो बले भृशलुलिते परस्परं
निरीक्षमाणे रुधिरौघसंप्लुते ।
दिवाकरेऽस्तंगिरिमास्थिते शनै-
रुभे प्रयाते शिबिराय भारत ॥ ८०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि द्वादशदिवसयुद्धावहारे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ समाप्तं च संशप्तकवधपर्व ॥

---

# ( अथाभिमन्युवधपर्व ॥ ३ ॥ )

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

युधिष्ठिरस्याग्रहणात् दुर्मनायमानं दुर्योधनं प्रति द्रोणेन कस्यचिन्महारथस्य हननप्रतिज्ञा ॥ १ ॥ सञ्जयेन धृतराष्ट्रं प्रति संक्षेपतोऽभिमन्युवधकथनम् ॥ २ ॥

सञ्जय उवाच ।
पूर्वमस्मासु भग्नेषु फल्गुनेनामितौजसा ।
द्रोणे च मोघसंकल्पे रक्षिते च युधिष्ठिरे ॥ १
सर्वे विध्वस्तकवचास्तावका युधि निर्जिताः ।
रजस्वला भृशोद्विग्ना वीक्षमाणा दिशो दश ॥ २
अवहारं ततः कृत्वा भारद्वाजस्य संमते ।

---

प्राणांस्त्यक्त्वा युध्यतामिति शेषः ॥ ७२ ॥ अभीतानामभिमुखागतानां भयहीनानां वा ॥ ७५ ॥ बहुकरणैरनेकप्रक्रियैः । रथमुखानां रथमुख्यानां नेमिभिश्चक्रान्तैः ॥ ७८ ॥

द्वात्रिंशोऽध्यायः ॥ ३२ ॥
रजस्वला धूलिव्याप्ताः ॥ २ ॥

लब्धलक्षैः शरैर्भिन्ना भृशावहसिता रणे ॥ ३
श्लाघमानेषु भूतेषु फल्गुनस्यामितान्गुणान् ।
केशवस्य च सौहार्दे कीर्त्यमानेऽर्जुनं प्रति ॥ ४
अभिशस्ता इवाभूवन्ध्यानमूकत्वमास्थिताः ।
ततः प्रभातसमये द्रोणं दुर्योधनोऽब्रवीत् ॥ ५
प्रणयादभिमानाच्च द्विषद्वृद्ध्या च दुर्मनाः ।
शृण्वतां सर्वयोधानां संरब्धो वाक्यकोविदः ॥ ६
नूनं वयं वध्यपक्षे भवतो द्विजसत्तम ।
तथाहि नाग्रहीः प्राप्तं समीपेऽद्य युधिष्ठिरम् ॥ ७
इच्छतस्ते न मुच्येत चक्षुःप्राप्तो रणे रिपुः ।
जिघृक्षतो रक्ष्यमाणः सामरैरपि पाण्डवैः ॥ ८
वरं दत्त्वा मम प्रीतः पश्चाद्विकृतवानसि ।
आशाभङ्गं न कुर्वन्ति भक्तस्यार्याः कथंचन ॥ ९
सञ्जय उवाच ।
ततोऽप्रीतस्तथोक्तः सन्भारद्वाजोऽब्रवीन्नृपम् ।
नार्हसे मां तथा ज्ञातुं घटमानं तव प्रिये ॥ १०
ससुरासुरगन्धर्वाः सयक्षोरगराक्षसाः ।
नालं लोका रणे जेतुं पाल्यमानं किरीटिना ॥ ११
विश्वसृग्यत्र गोविन्दः पृतनानीस्तथाऽर्जुनः ।
तत्र कस्य बलं क्रामेदन्यत्र त्र्यम्बकात्प्रभोः ॥ १२
सत्यं तात ब्रवीम्यद्य नैतज्जात्वन्यथा भवेत् ।
अद्यैकं प्रवरं कंचित्पातयिष्ये महारथम् ॥ १३
चक्रव्यूहं विधास्यामि योऽभेद्यस्त्रिदशैरपि ।
योगेन केनचिद्राजन्नर्जुनस्त्वपनीयताम् ॥ १४
न ह्यज्ञातमसाध्यं वा तस्य सङ्ख्येऽस्ति किंचन ।
तेन ह्युपात्तं सकलं सर्वज्ञानमितस्ततः ॥ १५
द्रोणेन व्याहृते त्वेवं संशप्तकगणाः पुनः ।
आह्वयन्नर्जुनं सङ्ख्ये दक्षिणामभितो दिशम् ॥ १६
ततोऽर्जुनस्याथ परैः सार्धं समभवद्रणः ।
तादृशो यादृशो नान्यः श्रुतो दृष्टोपि वा क्वचित् ॥ १७
तत्र द्रोणेन विहितो व्यूहो राजन्व्यरोचत ।
चरन्मध्यंदिने सूर्यः प्रतपन्निव दुर्दृशः ॥ १८

तं चाभिमन्युर्वचनात्पितुर्ज्येष्ठस्य भारत ।
बिभेद दुर्भिदं सङ्ख्ये चक्रव्यूहमनेकधा ॥ १९
स कृत्वा दुष्करं कर्म हत्वा वीरान्सहस्रशः ।
राजपुत्रशतं हत्वा कौसल्यं च बृहद्बलम् ॥ २०
महारथं शल्यपुत्रं पौत्रं ते लक्ष्मणं तथा ।
षट्सु वीरेषु संसक्तो दौःशासनिवशं गतः ।
सौभद्रः पृथिवीपाल जहौ प्राणान्परंतप ॥ २१
वयं परमसंहृष्टाः पाण्डवाः शोककर्शिताः ।
सौभद्रे निहते राजन्नवहारमकुर्महि ॥ २२
'जनमेजय उवाच ।
समरोद्युक्तकर्माणः कर्मभिर्व्यञ्जितश्रमाः ।
सकृष्णाः पाण्डवाः पञ्च देवैरपि दुरासदाः ॥ २३
शश्वत्कर्मान्वयैर्बुद्ध्या प्रकृत्या यशसा श्रिया ।
न भूतो भविता वापि कृष्णस्य सदृशः पुमान् ॥ २४
सत्यधर्मतपोदानैर्द्विजपूजादिभिर्गुणैः ।
सदेहस्त्रिदिवं प्राप्तो राजा किल युधिष्ठिरः ॥ २५
युगान्ते चान्तकश्चैव जामदग्न्यश्च कीर्तिमान् ।
रणस्थो भीमसेनश्च कथ्यन्ते सदृशास्त्रयः ॥ २६
प्रतिज्ञाकर्मदक्षस्य रणे गाण्डीवधन्वनः ।
उपमां नाधिगच्छामि पार्थस्य सदृशीं क्षितौ ॥ २७
गुरुवात्सल्यमत्यन्तं नैभृत्यं विनयो दमः ।
नकुले स्वाभिरूप्यं च शौर्यं च नियतानि षट् ॥ २८
श्रुतमाधुर्यगाम्भीर्यसत्त्वरूपपराक्रमैः ।
सदृशो देवयोर्वीरः सहदेवः किलाश्विनोः ॥ २९
ये च कृष्णे गुणाः स्फीताः पाण्डवेषु च ये गुणाः ।
अभिमन्यौ किलैकस्था दृश्यन्ते ते गुणाः शुभाः ॥ ३०
युधिष्ठिरस्य शौर्येण कृष्णस्य चरितेन च ।
कर्मणा भीमसेनस्य सदृशं भीमकर्मणः ॥ ३१
धनञ्जयस्य रूपेण विक्रमेण शुभेन च ।
विनये सहदेवस्य सदृशं नकुलस्य च ॥ ३२
अभिमन्युं द्विजश्रेष्ठ सौभद्रमपराजितम् ।
श्रोतुमिच्छामि कार्त्स्न्येन कथमायोधने हतः ॥ ३३

विकृतवानन्यथा कृतवान् ॥ ९ ॥ कलाभिः सहितं सकलम् । इतोऽस्मत्तः । ततोऽन्यतः ॥ १५ ॥ षट्सु द्रोणद्रौणिकृपकर्ण-भोजशल्येषु ॥ २१ ॥ नैभृत्यं कृतकर्तव्याप्रकाशनम् ॥ २८ ॥

वैशंपायन उवाच ।
अभिमन्युं हतं श्रुत्वा धृतराष्ट्रो जनाधिपः ।
विस्तरेण महाराज पर्यपृच्छत्स सञ्जयम् ॥ ३४
धृतराष्ट्र उवाच ।
पुत्रं पुरुषसिंहस्य सञ्जयाप्राप्तयौवनम् ।
रणे विनिहतं श्रुत्वा भृशं मे दीर्यते मनः ॥ ३५
दारुणः क्षत्रधर्मोऽयं विहितो धर्मकर्तृभिः ।
यत्र राज्येप्सवः शूरा बाले शस्त्रमपातयन् ॥ ३६
बालमत्यन्तसुखिनं विचरन्तमभीतवत् ।
कृतास्त्रा बहवो जघ्नुर्ब्रूहि गावल्गणे कथम् ॥ ३७
बिभित्सता रथानीकं सौभद्रेणामितौजसा ।
विक्रीडितं यथा सङ्ख्ये तन्ममाचक्ष्व सञ्जय ॥ ३८
सञ्जय उवाच
यन्मां पृच्छसि राजेन्द्र सौभद्रस्य निपातनम् ।
तत्ते कार्त्स्न्येन वक्ष्यामि शृणु राजन्समाहितः ॥ ३९
विक्रीडितं कुमारेण यथानीकं बिभित्सता ।
आरुग्णाश्च यथा वीरा दुःसाध्याश्चापि विप्लवे ॥ ४०
दावाग्न्यभिपरीतानां भूरिगुल्मतृणद्रुमे ।
वनौकसामिवारण्ये त्वदीयानामभूद्भयम् ॥ ४१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

द्रोणेन पद्मव्यूहरचना ॥ १ ॥

सञ्जय उवाच ।
स्थिरो भव महाराज शोकं धारय दुर्धरम् ।
महान्तं बन्धुनाशं ते कथयिष्यामि तच्छृणु ॥ १
पद्मव्यूहो महाराज आचार्येणाभिकल्पितः ।
तत्र पद्मोपमाः सर्वे राजानो विनिवेशिताः ॥ २
कुमारा राजलोकस्य निक्षिप्ताः केसरोपमाः ।
कर्णिकास्थो महाराज तस्य दुर्योधनोऽभवत् ॥ ३
कृताभिसमयाः सर्वे सुवर्णविकृतध्वजाः ।
रक्ताम्बरधराः सर्वे सर्वे रक्तविभूषणाः ॥ ४
सर्वे रक्तपताकाश्च सर्वे वै हेममालिनः ।
गुरुदिग्धाङ्गाः स्रग्विणः सूक्ष्मवाससः ॥ ५
सहिताः पर्यधावन्त कार्ष्णिं प्रतियुयुत्सवः ।
तेषां दशसहस्राणि बभूवुर्दृढधन्विनाम् ॥
पौत्रं तव पुरस्कृत्य लक्ष्मणं प्रियदर्शनम् ।
अन्योन्यसमदुःखास्ते अन्योन्यसमसाहसाः ॥ ७
अन्योन्यं स्पर्धमानाश्च अन्योन्यस्य हिते रताः ।
दुर्योधनस्तु राजेन्द्र सैन्यमध्ये व्यवस्थितः ॥ ८
कर्णदुःशासनकृपैर्वृतो राजा महारथैः ।
देवराजोपमः श्रीमाञ्श्वेतच्छत्राभिसंवृतः ॥ ९
चामरव्यजनाक्षेपैरुदयन्निव भास्करः ।
प्रमुखे तस्य सैन्यस्य द्रोणोऽवस्थित नायकः ॥ १०
सिन्धुराजस्तथाऽतिष्ठच्छ्रीमान्मेरुरिवाचलः
सिन्धुराजस्य पार्श्वस्था अश्वत्थामपुरोगमाः ॥ ११
सुतास्तव महाराज त्रिंशत्त्रिदशसन्निभाः
गान्धारराजः कितवः शल्यो भूरिश्रवास्तथा ॥ १२
पार्श्वतः सिन्धुराजस्य व्यराजन्त महारथाः ।
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
तावकानां परेषां च मृत्युं कृत्वा निवर्तनम् ॥ १३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

धर्मकर्तृभिर्मन्वादिभिः ॥ ३६ ॥ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ चक्रव्यूह इति झ॰ पाठः ॥ २ ॥ प्रमुखेऽग्रे । सैन्यस्य नायको द्रोणः । अवस्थितेतिच्छन्दोनुरोधाद्विसर्गलोपः ॥ १० ॥ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

युधिष्ठिरेणाभिमन्युंप्रति पद्मव्यूहभेदनचोदना ॥ १ ॥

सञ्जय उवाच ।
तदनीकमनाधृष्यं भारद्वाजेन रक्षितम्
पार्थाः समभ्यवर्तन्त भीमसेनपुरोगमाः ॥ १
सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः ।
कुन्तिभोजश्च विक्रान्तो द्रुपदश्च महारथः ॥ २
आर्जुनिः क्षत्रधर्मा च बृहत्क्षत्रश्च वीर्यवान् ।
चेदिपो धृष्टकेतुश्च माद्रीपुत्रौ घटोत्कचः ॥
युधामन्युश्च विक्रान्तः शिखण्डी चापराजितः ।
उत्तमौजाश्च दुर्धर्षो विराटश्च महारथः ॥ ४
द्रौपदेयाश्च संरब्धाः शैशुपालिश्च वीर्यवान् ।
केकयाश्च महावीर्याः सृञ्जयाश्च सहस्रशः ॥ ५
एते चान्ये च सगणाः कृतास्त्रा युद्धदुर्मदाः ।
समभ्यधावन्सहसा भारद्वाजं युयुत्सवः ॥ ६
समीपे वर्तमानांस्तान्भारद्वाजोऽतिवीर्यवान् ।
असंभ्रान्तः शरौघेण महता समवारयत् ॥ ७
महौघः सलिलस्येव गिरिमासाद्य दुर्भिदम् ।
द्रोणं ते नाभ्यवर्तन्त वेलामिव जलाशयाः ॥८
पीड्यमानाः शरै राजन्द्रोणचापविनिःसृतैः ।
न शेकुः प्रमुखे स्थातुं भारद्वाजस्य पाण्डवाः ॥९
तदद्भुतमपश्याम द्रोणस्य भुजयोर्बलम् ।
यदेनं नाभ्यवर्तन्त पाञ्चालाः सृञ्जयैः सह ॥ १
तमायान्तमभिक्रुद्धं द्रोणं दृष्ट्वा युधिष्ठिरः
बहुधा चिन्तयामास द्रोणस्य प्रतिवारणम् ॥ ११
अशक्यं तु तमन्येन द्रोणं मत्वा युधिष्ठिरः ।
अविषह्यं गुरुं भारं सौभद्रे समवासृजत् ॥ १२
वासुदेवादनवरं फल्गुनाच्चामितौजसम् ।
अब्रवीत्परवीरघ्नमभिमन्युमिदं वचः ॥ १३
युधिष्ठिर उवाच ।
एत्य नो नार्जुनो गर्हेद्यथा तात तथा कुरु ।
द्रोणानीकस्य न वयं विद्मो भेदं कथंचन ॥ १४
त्वं वाऽर्जुनो वा कृष्णो वा भिन्द्यात्प्रद्युम्न एव वा ।
द्रोणानीकं महाबाहो पञ्चमो नोपपद्यते ॥ १५
अभिमन्यो वरं तात याचे त्वां दातुमर्हसि ।
पितॄणां मातुलानां च सैन्यानां चैव सर्वशः ॥ १६
धनञ्जयो हि नस्तात गर्हयेदेत्य संयुगात् ।
क्षिप्रमस्त्रं समादाय द्रोणानीकं विशातय ॥ १७
अभिमन्युरुवाच ।
द्रोणस्य दृढमत्युग्रमनीकप्रवरं युधि
पितॄणां जयमाकाङ्क्षन्नवगाहेऽविलम्बितम् ॥ १८
उपदिष्टो हि मे पित्रा योगोऽनीकविशातने ।
नोत्सहे हि विनिर्गन्तुमहं कस्यांचिदापदि ॥ १९
युधिष्ठिर उवाच ।
भिन्ध्यनीकं युधांश्रेष्ठ द्वारं संजनयस्व नः ।
वयं त्वाऽनुगमिष्यामो येन त्वं तात यास्यसि ॥२०
धनञ्जयसमं युद्धे त्वां वयं तात संयुगे ।
प्रणिधायानुयास्यामो रक्षन्तः सर्वतोमुखाः ॥ २१
भीम उवाच ।
अहं त्वाऽनुगमिष्यामि धृष्टद्युम्नोऽथ सात्यकिः ।
पाञ्चलाः केकया मात्स्यास्तथा सर्वे प्रभद्रकाः ॥२२
सकृद्भिन्नं त्वया व्यूहं तत्र तत्र पुनः पुनः ।
वयं प्रध्वंसयिष्यामो निघ्नमाना वरान्वरान् ॥ २३
अभिमन्युरुवाच ।
अहमेतत्प्रवेक्ष्यामि द्रोणानीकं दुरासदम् ।
पतङ्ग इव संक्रुद्धो ज्वलितं जातवेदसम् ॥ २४
तत्कर्माद्य करिष्यामि हितं यद्वंशयोर्द्वयोः ।
मातुलस्य च यत्प्रीतिं करिष्यति पितुश्च मे ॥ २५
शिशुनैकेन संग्रामे काल्यमानानि सङ्घशः ।
द्रक्ष्यन्ति सर्वभूतानि द्विषत्सैन्यानि वै मया ॥ २६
नाहं पार्थेन जातः स्यां न च जातः सुभद्रया ।
यदि मे संयुगे कश्चिज्जीवितो नाद्य मुच्यते ॥ २७
यदि चैकरथेनाहं समग्रं क्षत्रमण्डलम् ।
न करोम्यष्टधा युद्धे न भवाम्यर्जुनात्मजः ॥ २८

मातुलानां सात्यकिप्रभृतीनाम् ॥१६॥ योग उपायो युक्तिर्वा ॥१९॥ प्रणिधाय प्रविश्य ॥ २१ ॥ पञ्चत्रिंशोऽध्यायः ॥३५॥

युधिष्ठिर उवाच ।
एवं ते भाषमाणस्य बलं सौभद्र वर्धताम् ।
यत्समुत्सहसे भेत्तुं द्रोणानीकं दुरासदम् ॥ २९
रक्षितं पुरुषव्याघ्रैर्महेष्वासैर्महाबलैः ।
साध्यरुद्रमरुत्तुल्यैर्वस्वग्न्यादित्यविक्रमैः ॥ ३०
सञ्जय उवाच ।
तस्य तद्वचनं श्रुत्वा स यन्तारमचोदयत् ॥ ३१
सुमित्राश्वान्रणे क्षिप्रं द्रोणानीकाय चोदय ॥ ३२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः ॥ ३६ ॥

अभिमन्युयुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
सौभद्रस्तद्वचः श्रुत्वा धर्मराजस्य धीमतः ।
अचोदयत यन्तारं द्रोणानीकाय भारत ॥ १
तेन संचोद्यमानस्तु याहियाहीति सारथिः ।
प्रत्युवाच ततो राजन्नभिमन्युमिदं वचः ॥ २
अतिभारोऽयमायुष्मन्नाहितस्त्वयि पाण्डवैः ।
संप्रधार्य क्षणं बुद्ध्या ततस्त्वं योद्धुमर्हसि ॥ ३
आचार्यो हि कृती द्रोणः परमास्त्रे कृतश्रमः ।
त्वं तु बालः स बलवान्संग्रामाणामकोविदः ॥ ४
ततोऽभिमन्युः प्रहसन्सारथिं वाक्यमब्रवीत् ।
सारथे कोन्वयं द्रोणः समग्रं क्षत्रमेव वा ॥ ५
'व्यवसायो हि मे योद्धुं रणोत्सवसमुद्यतः ।'
ऐरावतगतं शक्रं सहामरगणैरहम् ॥ ६
अथवा रुद्रमीशानं सर्वभूतगणार्चितम् ।
योधयेयं रणमुखे न मे क्षत्रेऽद्य विस्मयः ॥ ७
'यच्चैतत्पश्यसे सूत सयोधाश्वरथद्विपम्
तन्ममाद्य द्विषत्सैन्यं कलामर्हति षोडशीम् ॥ ८
अपि विश्वजितं विष्णुं मातुलं प्राप्य सूतज ।
पितरं चार्जुनं युद्धे न भीर्मामुपयास्यति ॥ ९
'सञ्जय उवाच ।
एवमप्युच्यमानः स सारथिस्तं पुनः पुनः ।
वीर ते तेन मा युद्धमिति सौभद्रमब्रवीत् ॥' १०
अभिमन्युश्च तां वाचं कदर्थीकृत्य सारथेः ।
याहीत्येवाब्रवीदेनं द्रोणानीकाय माचिरम् ॥ ११
ततः संनोदयामास हयानाशु त्रिहायनान् ।
नातिहृष्टमनाः सूतो हेमभाण्डपरिच्छदान् ॥ १२
ते प्रेषिताः सुमित्रेण द्रोणानीकाय वाजिनः ।
द्रोणमभ्यद्रवन्राजन्महावेगा महाबलाः ॥ १३
तमुदीक्ष्य तथायान्तं सर्वे द्रोणपुरोगमाः ।
अभ्यवर्तन्त कौरव्याः पाण्डवाश्च तमन्वयुः ॥ १४
सकर्णिकारप्रवरोच्छ्रितध्वजः
सुवर्णवर्माऽऽर्जुनिरर्जुनाद्वरः ।
युयुत्सया द्रोणमुखान्महारथान्
समासदत्सिंहशिशुर्यथा द्विपान् ॥ १५
ते विंशतिपदे यत्ताः संप्रहारं प्रचक्रिरे ।
आसीद्गाङ्ग इवावर्तो मुहूर्तमुदधाविव ॥ १६
शूराणां युध्यमानानां निघ्नतामितरेतरम् ।
संग्रामस्तुमुलो राजन्प्रावर्तत सुदारुणः ॥ १७
प्रवर्तमाने संग्रामे तस्मिन्नतिभयंकरे ।
द्रोणस्य मिषतो व्यूहं भित्त्वा व्यचरदार्जुनिः ॥ १८
'तदभेद्यमनाधृष्यं द्रोणानीकं सुदुर्जयम् ।
भित्त्वार्जुनिरसंभ्रान्तो विवेशाचिन्त्यविक्रमः' १९
तं प्रविष्टं विनिघ्नन्तं शत्रुसङ्घान्महाबलम् ।
हस्त्यश्वरथपत्त्यौघाः परिवव्रुरुदायुधाः ॥ २०
नानावादित्रनिनदैः क्ष्वेडितोत्क्रुष्टगर्जितैः ।
हुङ्कारैः सिंहनादैश्च तिष्ठ तिष्ठेति निःस्वनैः ॥ २१

---

विंशतिरिति व्यूहपर्यायः । तदुक्तं । विंशत्यङ्गतया व्यूहो विंशतिर्व्यपदिश्यते इति । विंशतेः पदे रक्षणे । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः । तं विशन्तं ततो यत्ता इति क. पाठः । ते विशन्तं मुदा युक्ता इति घ. ङ. पाठः ॥ १६ ॥ क्ष्वेडितं ध्वनिविशेषः । उत्क्रुष्टमाह्वानम् । गर्जितं हन्यन्तां हन्यन्तामिति वचः ॥ २१ ॥

घोरैर्हलहलाशब्दैर्मागास्तिष्ठेहि मामिति ।
असावहममित्रेति प्रवदन्तो मुहुर्मुहुः ॥ २२
बृंहितैः शिञ्जितैर्हासैः करनेमिस्वनैरपि ।
सन्नादयन्तो वसुधामभिदुद्रुवुरार्जुनिम् ॥ २३
तेषामापततां वीरः शीघ्रयोधी महाबलः ।
क्षिप्रास्त्रो न्यवधीद्राजन्मर्मज्ञो मर्मभेदिभिः ॥२४
ते हन्यमाना विवशा नानालिङ्गैः शितैः शरैः ।
अभिपेतुः सुबहुशः शलभा इव पावकम् ॥ २५
ततस्तेषां शरीरैश्च शरीरावयवैश्च सः ।
संतस्तार क्षितिं क्षिप्रं कुशैर्वेदिमिवाध्वरे ॥ २६
बद्धगोधाङ्गुलित्राणान्सशरासनसायकान् ।
सासिचर्माङ्कुशाभीषून्सतोमरपरश्वथान् ॥ २७
सगदायोगुडप्रासान्सर्ष्टितोमरपट्टसान् ।
सभिण्डिपालपरिघान्सशक्तिवरकम्पनान् ॥ २८
सप्रतोदमहाशङ्खान्सकुन्तान्सकचग्रहान् ।
समुद्गरक्षेपणीयान्सपाशपरिघोपलान् ॥ २९
सकेयूराङ्गदान्बाहून्हृद्यगन्धानुलेपनान् ।
संचिच्छेदार्जुनिर्वृत्तांस्त्वदीयानां सहस्रशः ॥३०
तैः स्फुरद्भिर्महाराज शुशुभे भूः सुलोहितैः ।
पञ्चास्यैः पन्नगैश्छिन्नैर्गरुडेनेव मारिष ॥ ३१
सुनासाननकेशान्तैरव्रणैश्चारुकुण्डलैः ।
संदष्टौष्ठपुटैः क्रोधात्क्षरद्भिः शोणितं बहु ॥ ३२
सचारुमुकुटोष्णीषैर्मणिरत्नविभूषितैः ।
विनालनलिनाकारैर्दिवाकरशशिप्रभैः ॥ ३३
हितप्रियंवदैः काले बहुभिः पुण्यगन्धिभिः ।
द्विषच्छिरोभिः पृथिवीं स वै तस्तार फाल्गुनिः ३४
गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान् ।
वीषामुखान्वित्रिवेणून्न्यस्तदण्डकबन्धुरान् ॥ ३५
विजङ्घाकूबरांस्तत्र विनेमीश्च व्यरानपि ।
विचक्रोपस्करोपस्थान्भग्नोपकरणानपि ॥ ३६
'समास्थितान्योधवरैर्दान्ताश्वान्साधुसारथीन् ।
विपताकाध्वजच्छत्रान्वितूणीरायुधानपि ॥ ३७
प्रपातितोपस्तरणान्हतयोधान्सहस्रशः ।
शरैर्विशकलीकुर्वन्दिक्षु सर्वास्वदृश्यत ॥ ३८
पुनर्द्विपान्द्विपारोहान्वैजयन्त्यङ्कुशध्वजान् ।
तूणान्वर्माण्यथो कक्ष्या ग्रैवेयांश्च सकम्बलान् ३९
घण्टाः शुण्डाविषाणाग्राञ्छत्रमालाः पदानुगान् ।
शरैर्निशितधाराग्रैः शात्रवाणामशातयत् ॥ ४०
वनायुजान्पार्वतीयान्काम्भोजानथ बाह्लिकान् ।
स्थिरवालधिकर्णाक्षाञ्जवनान्साधुवाहिनः ॥ ४१
आरूढाञ्शिक्षितैर्योधैः शक्त्यृष्टिप्रासयोधिभिः ।
विध्वस्तचामरमुखान्विप्रविद्धप्रकीर्णकान् ॥ ४२
निरस्तजिह्वानयनान्निष्कीर्णान्त्रयकृद्धनान् ।
हतारोहांश्छिन्नघण्टान्क्रव्यादगणमोदकान् ॥४३
निकृत्तचर्मकवचाञ्शकृन्मूत्रासृगाप्लुतान् ।
निपातयन्नश्ववरांस्तावकान्स व्यरोचत ।
एको विष्णुरिवाचिन्त्यं कृत्वा कर्म सुदुष्करम्॥४४
तथा निर्मथितं तेन चतुरङ्गबलं महत् ।
यथाऽसुरबलं घोरं त्र्यम्बकेन महौजसा ॥ ४५
कृत्वा कर्म रणेऽसह्यं परैरार्जुनिराहवे ।
अभिनच्च पदात्योघांस्त्वदीयानेव सर्वशः ॥ ४६
एवमेकेन तां सेनां सौभद्रेण शितैः शरैः ।
भृशं विप्रहतां दृष्ट्वा स्कन्देनेवासुरीं चमूम् ॥४७
त्वदीयास्तव पुत्राश्च वीक्षमाणा दिशो दश ।
संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना रोमहर्षिणः॥ ४८
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ।
गोत्रनामभिरन्योन्यं क्रन्दन्तो जीवितैषिणः॥४९
हतान्पुत्रान्पितॄन्भ्रातॄन्बन्धून्संबन्धिनस्तथा ।
प्रातिष्ठन्त समुत्सृज्य त्वरयन्तो हयद्विपान् ॥५०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

कचग्रहोऽङ्कुशः ॥ २९ ॥ उपस्थो रथक्रोडः ॥ ३६ ॥ यकृत्कालखण्डम् ॥ ४३ ॥ त्र्यङ्गं तव बलं महत् इति झ. पाठः ॥४५॥ षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

अभिमन्युपराक्रमवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
तां प्रभग्नां चमूं दृष्ट्वा सौभद्रेणामितौजसा ।
दुर्योधनो भृशं क्रुद्धः स्वयं सौभद्रमभ्ययात् ॥ १
ततो राजानमावृत्तं सौभद्रं प्रति संयुगे ।
दृष्ट्वा द्रोणोऽब्रवीद्योधान्परीप्सध्वं नराधिपम् ॥ २
पुराऽभिमन्युर्लक्ष्यं नः पश्यतां हन्ति वीर्यवान् ।
तमाद्रवत माभैष्ट क्षिप्रं रक्षत कौरवम् ॥ ३
सञ्जय उवाच ।
'एवमुक्तास्ततस्तेन भारद्वाजेन धीमता ।'
कृतज्ञानबलोत्सेधाः सुहृदो जितकाशिनः ।
त्रास्यमाना भयाद्वीरं परिवव्रुस्तवात्मजम् ॥ ४
द्रोणो द्रौणिः कृपः कर्णः कृतवर्मा च सौबलः ।
बृहद्बलो मद्रराजो भूरिर्भूरिश्रवाः शलः ॥ ५
पौरवो वृषसेनश्च विसृजन्तः शिताञ्शरान् ।
सौभद्रं शरवर्षेण महता समवाकिरन् ॥ ६
संमोहयित्वा तमथ दुर्योधनममोचयन् ।
आस्याद्ग्रासमिवाक्षिप्तं ममृषे नार्जुनात्मजः ॥ ७
ताञ्शरौघेण महता साश्वसूतान्महारथान् ।
विमुखीकृत्य सौभद्रः सिंहनादमथानदत् ॥ ८
तस्य नादं ततः श्रुत्वा सिंहस्येवामिषैषिणः ।
नामृष्यन्त सुसंरब्धाः पुनर्द्रोणमुखा रथाः ॥ ९
त एनं कोष्ठकीकृत्य रथवंशेन मारिष ।
व्यसृजन्निषुजालानि नानालिङ्गानि सङ्घशः ॥ १०
तान्यन्तरिक्षे चिच्छेद पौत्रस्ते निशितैः शरैः ।
तांश्चैव प्रतिविव्याध तदद्भुतमिवाभवत् ॥ ११
'ततो रथपदात्योघाः कुञ्जराः सादिनश्च ह ।'
कोपितास्तेन शूरेण शरैराशीविषोपमैः ।
परिवव्रुर्जिघांसन्तः सौभद्रमपराजितम् ॥ १२
समुद्रमिव पर्यस्तं त्वदीयं तं बलार्णवम् ।
दधारैकोऽर्जुनिर्बाणैर्वेलेवोद्वृत्तमर्णवम् ॥ १३
शूराणां युध्यमानानां निघ्नतामितरेतरम् ।
अभिमन्योः परेषां च नासीत्कश्चित्पराङ्मुखः ॥ १४
तस्मिंस्तु घोरे संग्रामे वर्तमाने भयंकरे ।
दुःसहो नवभिर्बाणैरभिमन्युमविध्यत ॥ १५
दुःशासनो द्वादशभिः कृपः शारद्वतस्त्रिभिः
द्रोणस्तु सप्तदशभिः शरैराशीविषोपमैः ॥ १६
विविंशतिस्तु सप्तत्या कृतवर्मा च सप्तभिः ।
बृहद्बलस्तथाऽष्टाभिरश्वत्थामा च सप्तभिः ॥ १७
भूरिश्रवास्त्रिभिर्बाणैर्मद्रेशः षड्भिराशुगैः ।
द्वाभ्यां शराभ्यां शकुनिस्त्रिभिर्दुर्योधनो नृपः ॥ १८
स तु तान्प्रतिविव्याध त्रिभिस्त्रिभिरजिह्मगैः ।
नृत्यन्निव महाराज चापहस्तः प्रतापवान् ॥ १९
ततोऽभिमन्युः संक्रुद्धस्त्रास्यमानस्तवात्मजैः ।
विदर्शयन्वै सुमहच्छिक्षौरसकृतं बलम् ॥ २०
गरुडानिलरंहोभिर्यन्तुर्वाक्यकरैर्हयैः ।
अभ्यद्रवत तं कार्ष्णिमश्मकेन्द्रः कृतत्वरः ॥ २१
अश्वाश्वाश्मकमादाय त्वरमाणाऽभ्यहारयन् ।
विव्याध दशभिर्बाणैस्तिष्ठतिष्ठेति चाब्रवीत् ॥ २२
तस्याभिमन्युर्दशभिर्हयान्सूतं ध्वजं शरैः ।
बाहू धनुः शिरश्चोर्व्यां स्मयमानोऽभ्यपातयत् २३
ततस्तस्मिन्हते वीरे सौभद्रेणाश्मकेश्वरे ।
संचचाल बलं सर्वं पलायनपरायणम् ॥ २४
ततः कर्णः कृपो द्रोणो द्रौणिर्गान्धारराट् शलः ।
शल्यो भूरिश्रवाः क्राथः सोमदत्तो विविंशतिः ।
वृषसेनः सुषेणश्च कुण्डभेदी प्रतर्दनः ॥ २५
बृन्दारको ललित्थश्च प्रबाहुर्दीर्घलोचनः
दुर्योधनश्च संक्रुद्धः शरवर्षैरवाकिरन् ॥ २६
सोऽतिविद्धो महेष्वासैरभिमन्युरजिह्मगैः ।
शरमादत्त कर्णाय वर्मकायावभेदिनम् ॥ २७
तस्य भित्त्वा तनुत्राणं देहं निर्भिद्य चाशुगः ।

त्रास्यमानाः पालयिष्यन्तः ॥ ४ ॥ पर्यस्तं उत्क्रान्तमर्यादम् ॥ १३ ॥ शिक्षौरसकृतं अभ्यासकृतं निसर्गभवं च ॥ २० ॥

सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

प्रविशद्धरणीं वेगाद्वल्मीकमिव पन्नगः ॥ २८
स तेनातिप्रहारेण व्यथितो विह्वलन्निव ।
संचचाल रणे कर्णः क्षितिकम्पे यथाऽचलः ॥२९
तथान्यैर्निशितैर्बाणैः सुषेणं दीर्घलोचनम् ।
कुण्डभेदिं च संक्रुद्धस्त्रिभिस्त्रीनवधीद्बली ॥ ३०
कर्णस्तं पञ्चविंशत्या नाराचानां समार्पयत् ।
अश्वत्थामा च विंशत्या कृतवर्मा च सप्तभिः ॥३१
स शराचितसर्वाङ्गः क्रुद्धः शक्रात्मजात्मजः ।
विचरन्ददृशे सैन्ये पाशहस्त इवान्तकः ॥ ३२
शल्यं च शरवर्षेण समीपस्थमवाकिरत् ।
उदक्रोशन्महाबाहुस्तव सैन्यानि भीषयन् ॥ ३३
ततः स विद्धोऽस्त्रविदा मर्मभिद्भिरजिह्मगैः ।
शल्यो राजन्रथोपस्थे निषसाद मुमोह च ॥ ३४
तं हि दृष्ट्वा तथा विद्धं सौभद्रेण यशस्विना ।
संप्राद्रवच्चमूः सर्वा भारद्वाजस्य पश्यतः ॥ ३५
संप्रेक्ष्य तं महाबाहुं रुक्मपुङ्खैः समावृतम् ।
त्वदीयाः प्रपलायन्ते मृगाः सिंहार्दिता इव ॥ ३६
'सौभद्रशरनिर्भग्नाः समरेऽमरविक्रमाः
एवं शल्यो विमृदितस्तव पौत्रेण भारत ॥' ३७
स तु रणयशसाऽभिपूज्यमानः
पितृसुरचारणसिद्धयक्षसङ्घैः ।
अवनितलगतैश्च भूतसङ्घै-
रतिविबभौ हुतभुग्यथाऽऽज्यसिक्तः ॥ ३८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

अभिमन्युपराक्रमवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
तथा प्रमथमानं तं महेष्वासानजिह्मगैः ।
आर्जुनिं मामकाः सङ्ख्ये के त्वेनं समवारयन् ॥ १
सञ्जय उवाच ।
शृणु राजन्कुमारस्य रणे विक्रीडितं महत् ।
बिभित्सतो रथानीकं भारद्वाजेन रक्षितम् ॥ २
मद्रेशं सादितं दृष्ट्वा सौभद्रेणाशुगै रणे ।
शल्यादवरजः क्रुद्धः किरन्बाणान्समभ्ययात् ॥ ३
स विद्ध्वा दशभिर्बाणैः साश्वयन्तारमार्जुनिम् ।
उदक्रोशन्महाशब्दं तिष्ठतिष्ठेति चाब्रवीत् ॥ ४
तस्यार्जुनिः शिरोग्रीवं पाणिपादं धनुर्हयान् ।
छत्रं ध्वजं नियन्तारं त्रिवेणुं चाप्युपस्करम् ॥ ५
चक्रं युगं च तूणीरं ह्यनुकर्षं च सायकैः ।
पताकां चक्रगोप्तारौ सर्वोपकरणानि च ॥ ६
लघुहस्तः प्रचिच्छेद ददृशे तं न कश्चन ।
स पपात क्षितौ क्षीणः प्रविद्धाभरणाम्बरः ॥ ७
वायुनेव महाचैत्यः संमूलं चित्रवेदिकः ।
अनुगास्तस्य वित्रस्ताः प्राद्रवन्सर्वतो दिशः ॥ ८
आर्जुनेः कर्म तद्दृष्ट्वा संप्रणेदुः समन्ततः ।
नादेन सर्वभूतानि साधुसाध्विति भारत ॥ ९
शल्यभ्रातर्यथारुग्णे बहुशस्तस्य सैनिकाः ।
कुलाधिवासनामानि श्रावयन्तोऽर्जुनात्मजम् १०
अभ्यधावन्त संक्रुद्धा विविधायुधपाणयः ।
रथैरश्वैर्गजैश्चान्ये पद्भिश्चान्ये बलोत्कटाः ॥ ११
बाणशब्देन महता रथनेमिस्वनेन च ।
हुंकारैः क्ष्वेडितोत्क्रुष्टैः सिंहनादैः सगर्जितैः ॥१२
ज्यातलत्रस्वनैरन्ये गर्जन्तोऽर्जुननन्दनम् ।
ब्रुवन्तश्च न नो जीवन्मोक्ष्यसे जीवितादिति ॥१३
तांस्तथा ब्रुवतो दृष्ट्वा सौभद्रः प्रहसन्निव ।
यो योऽस्मै प्राहरत्पूर्वं तं तं विव्याध पत्रिभिः ॥ १४
संदर्शयिष्यन्नस्त्राणि विचित्राणि लघूनि च ।
आर्जुनिः समरे शूरो मृदुपूर्वमयुध्यत ॥ १५
वासुदेवादुपात्तं यदस्त्रं यच्च धनंजयात् ।
अदर्शयत तत्कार्ष्णिः कृष्णाभ्यामविशेषवत् ॥१६

तल्पं इतिपाठे रथगतशय्याम् ॥ ५ ॥ अधिवासो निवासः ॥ १० ॥ अविशेषवत्तुल्यमित्यर्थः ॥ १६ ॥

दूरमस्य गुरुं भारं साध्वसं च पुनः पुनः ।
संदधद्विसृजंश्चेषून्निर्विशेषमदृश्यत ॥ १७
चापमण्डलमेवास्य विस्फुरद्दिक्ष्वदृश्यत ।
सुदीप्तस्य शरत्काले सवितुर्मण्डलं यथा ॥ १८
ज्याशब्दः शुश्रुवे तस्य तलशब्दश्च दारुणः ।
महाशनिमुचः काले पयोदस्येव निःस्वनः ॥ १९
ह्रीमानमर्षी सौभद्रो मानकृत्प्रियदर्शनः ।
संमिमानयिषुर्वीरानिष्वस्त्रैश्चाप्ययुध्यत ॥ २०
मृदुर्भूत्वा महाराज दारुणः समपद्यत ।
वर्षाभ्यतीतो भगवाञ्शरदीव दिवाकरः ॥ २१
शरान्विचित्रान्सुबहून्रुक्मपुङ्खाञ्शिलाशितान् ।
मुमोच शतशः क्रुद्धो गभस्तीनिव भास्करः ॥ २२
क्षुरप्रैर्वत्सदन्तैश्च विपाठैश्च महायशाः ।
नाराचैरर्धचन्द्राभैर्भल्लैरञ्जलिकैरपि ॥ २३
अवाकिरद्रथानीकं भारद्वाजस्य पश्यतः ।
ततस्तत्सैन्यमभवद्विमुखं शरपीडितम् ॥ २४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

दुश्शासनाभिमन्युसमागमः ॥ १ ॥

धृतराष्ट्र उवाच ।
द्वैधीभवति मे चित्तं शुचा तुष्ट्या च सञ्जय ।
मम पुत्रस्य यत्सैन्यं सौभद्रः समवारयत् ॥ १
विस्तरेणैव मे शंस सर्वं गावल्गणे पुनः ।
विक्रीडितं कुमारस्य स्कन्दस्येवासुरैः सह ॥ २
सञ्जय उवाच ।
हन्त ते संप्रवक्ष्यामि विमर्दमतिदारुणम् ।
एकस्य च बहूनां च यथासीत्तुमुलो रणः ॥ ३
अभिमन्युः कृतोत्साहः कृतोत्साहानरिन्दमान् ।
रथस्थो रथिनः सर्वांस्तावकानभ्यवर्षयत् ॥ ४
द्रोणं कर्णं कृपं शल्यं द्रौणिं भोजं बृहद्बलम् ।
दुर्योधनं सौमदत्तिं शकुनिं च महाबलम् ॥ ५
नानानृपान्नृपसुतान्सैन्यानि विविधानि च ।
अलातचक्रवत्सर्वांश्चरन्बाणैः समार्पयत् ॥ ६
निघ्नन्नमित्रान्सौभद्रः परमास्त्रैः प्रतापवान् ।
अदर्शयत तेजस्वी दिक्षु सर्वासु भारत ॥ ७
तद्दृष्ट्वा चरितं तस्य सौभद्रस्यामितौजसः ।
समकम्पन्त सैन्यानि त्वदीयानि सहस्रशः ॥ ८
अथाब्रवीन्महाप्राज्ञो भारद्वाजः प्रतापवान् ।
हर्षेणोत्फुल्लनयनः कृपमाभाष्य सत्वरम् ॥
घटयन्निव मर्माणि पुत्रस्य तव भारत ।
अभिमन्युं रणे दृष्ट्वा तदा रणविशारदम् ॥ १०
द्रोण उवाच ।
एष गच्छति सौभद्रः पार्थानां प्रथितो युवा ।
नन्दयन्सुहृदः सर्वान्राजानं च युधिष्ठिरम् ॥ ११
नकुलं सहदेवं च भीमसेनं च पाण्डवम् ।
बन्धून्संबन्धिनश्चान्यान्मध्यस्थान्सुहृदस्तथा ॥१२
नास्य युद्धे समं मन्ये कंचिदन्यं धनुर्धरम् ।
इच्छन्हन्यादिमां सेनां किमर्थमपि नेच्छति ॥ १३
सञ्जय उवाच ।
द्रोणस्य प्रीतिसंयुक्तं श्रुत्वा वाक्यं तवात्मजः ।
आर्जुनिं प्रति संक्रुद्धो द्रोणं दृष्ट्वा स्मयन्निव ॥ १४
अथ दुर्योधनः कर्णमब्रवीद्बाह्लिकं नृपः ।
दुःशासनं मद्रराजं तांस्तथाऽन्यान्महारथान् ॥१५
सर्वमूर्धाभिषिक्तानामाचार्यो ब्रह्मवित्तमः ।
अर्जुनस्य सुतं मूढं नायं हन्तुमिहेच्छति ॥ १६
न ह्यस्य समरे युध्येदन्तकोऽप्याततायिनः ।
किमङ्ग पुनरेवान्यो मर्त्यः सत्यं ब्रवीमि वः ॥ १७
अर्जुनस्य सुतं त्वेष शिष्यत्वादभिरक्षति ।
शिष्याः पुत्राश्च दयितास्तदपत्यं च धर्मिणाम् १८

अस्य निरस्य ॥ १७ ॥ अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

अङ्गेत्यसूयायाम् ॥ १७ ॥ धर्मिणामिति सोल्लुण्ठम् ॥ १८ ॥

आत्मसंभावितो मूढस्तं प्रमथ्नीत माचिरम् ॥ १९
एवमुक्तास्तु ते राज्ञा सात्वतीपुत्रमभ्ययुः
संरब्धास्ते जिघांसन्तो भारद्वाजस्य पश्यतः ॥ २०
दुःशासनस्तु तच्छ्रुत्वा दुर्योधनवचस्तदा ।
अब्रवीत्कुरुशार्दूल दुर्योधनमिदं वचः ॥ २१
अहमेनं हनिष्यामि महाराज ब्रवीमि ते ।
मिषतां पाण्डुपुत्राणां पाञ्चालानां च पश्यताम् २२
ग्रसिष्याम्यद्य सौभद्रं यथा राहुर्दिवाकरम्
उत्क्रुश्य चाब्रवीद्वाक्यं कुरुराजमिदं पुनः ॥ २३
श्रुत्वा कृष्णौ मया ग्रस्तं सौभद्रमतिमानिनौ ।
गमिष्यतः प्रेतलोकं जीवलोकान्न संशयः ॥ २४
तौ च श्रुत्वा मृतौ व्यक्तं पाण्डोः क्षेत्रोद्भवाः सुताः।
एकाह्ना ससुहृद्वर्गाः क्लैब्याद्धास्यन्ति जीवितम् २५
तस्मादस्मिन्हते शत्रौ हताः सर्वेऽहितास्तव ।
शिवेन मां ध्याहि राजन्नेष हन्मि रिपूंस्तव ॥२६
सञ्जय उवाच ।
एवमुक्त्वाऽनदद्राजन्पुत्रो दुःशासनस्तव ।
सौभद्रमभ्ययात्क्रुद्धः शरवर्षैरवाकिरन् ॥ २७
तमतिक्रुद्धमायान्तं तव पुत्रमरिंदमः ।
अभिमन्युः शरैस्तीक्ष्णैः षड्विंशत्या समार्पयत् ॥२८
दुःशासनस्तु संक्रुद्धः प्रभिन्न इव कुञ्जरः ।
अयोधयत सौभद्रमभिमन्युश्च तं रणे ॥ २९
तौ मण्डलानि चित्राणि रथाभ्यां सव्यदक्षिणम् ।
चरमाणावयुध्येतां रथशिक्षाविशारदौ ॥ ३०
अथ पणवमृदङ्गदुन्दुभीनां
क्रकचमहानकभेरिझर्झराणाम् ।
निनदमतिभृशं नराः प्रचक्रु-
र्लवणजलोद्भवसिंहनादमिश्रम् ॥ ३१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## चत्वारिंशोऽध्यायः ॥ ४० ॥

अभिमन्युना कर्णदुःशासनपराजयः ॥ १ ॥

सञ्जय उवाच
'ततः समभवद्युद्धं तयोः पुरुषसिंहयोः ।
तस्मिन्काले महाबाहुः सौभद्रः परवीरहा ॥ १
सशरं कार्मुकं छित्त्वा लाघवेन व्यपातयत् ।
दुःशासनं शरैस्तीक्ष्णैः संततक्ष समन्ततः ॥' २
शरविक्षतगात्रं तु प्रत्यमित्रमवस्थितम् ।
अभिमन्युः स्मयन्धीमान्दुःशासनमथाब्रवीत् ॥ ३
दिष्ट्या पश्यामि संग्रामे मानिनं शूरमागतम् ।
निष्ठुरं त्यक्तधर्माणमाक्रोशनपरायणम् ॥ ४
यत्सभायां त्वया राज्ञो धृतराष्ट्रस्य शृण्वतः ।
कोपितः परुषैर्वाक्यैर्धर्मराजो युधिष्ठिरः ॥ ५
जयोन्मत्तेन भीमश्च बह्वबद्धं प्रभाषितः ।
अक्षकूटं समाश्रित्य सौबलस्यात्मनो बलम् ॥ ६
तत्त्वयेदमनुप्राप्तं तस्य कोपान्महात्मनः ।
परवित्तापहारस्य क्रोधस्याप्रशमस्य च ॥ ७
लोभस्य ज्ञाननाशस्य द्रोहस्यात्याहितस्य च ।
पितॄणां मम राज्यस्य हरणस्योग्रधन्विनाम् ॥ ८
तत्त्वयेदमनुप्राप्तं प्रकोपाद्वै महात्मनाम् ।
स तस्योग्रमधर्मस्य फलं प्राप्नुहि दुर्मते ॥ ९
शासिताऽस्म्यद्य ते बाणैः सर्वसैन्यस्य पश्यतः ।
अद्याहमनृणस्तस्य कोपस्य भविता रणे ॥ १०
अमर्षितायाः कृष्णायाः काङ्क्षितस्य च मे पितुः।
अद्य कौरव्य भीमस्य भवितास्म्यनृणो युधि ।
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे रणं ॥११
सञ्जय उवाच ।
एवमुक्त्वा महाबाहुर्बाणं दुःशासनान्तकम्

आत्मसंभावितः अहमेवेति संभावनामारूढः ॥ १९ ॥ लवणजलोद्भवः शङ्खः ॥ ३१ ॥ एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

जीवानपेक्षकर्मणः । साहसस्येतियावत् ॥ ८ ॥
चत्वारिंशोऽध्यायः ॥ ४० ॥

संदधे परवीरघ्नः कालाग्न्यनिलवर्चसम् ॥ १२
तस्योरस्तूर्णमासाद्य जत्रुदेशे विभिद्य तम् ।
जगाम सह पुङ्खेन वल्मीकमिव पन्नगः ।
अथैनं पञ्चविंशत्या पुनरेव समार्पयत् ॥ १३
शरैरग्निसमस्पर्शैराकर्णसमचोदितैः ।
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
दुःशासनो महाराज कश्मलं चाविशन्महत् ॥१४
सारथिस्त्वरमाणस्तु दुःशासनमचेतनम् ।
रणमध्यादपोवाह सौभद्रशरपीडितम् ॥ १५
पाण्डवा द्रौपदेयाश्च विराटश्च समीक्ष्य तम् ।
पाञ्चालाः केकयाश्चैव सिंहनादमथानदन् ॥ १६
वादित्राणि च सर्वाणि नानालिङ्गानि सर्वशः ।
प्रावादयन्त संहृष्टाः पाण्डूनां तत्र सैनिकाः ॥१७
अपश्यन्स्मयमानाश्च सौभद्रस्य विचेष्टितम् ।
अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं पराजितम् ॥ १८
धर्ममारुतशक्राणामश्विनोः प्रतिमास्तथा ।
धारयन्तो ध्वजाग्रेषु द्रौपदेया महारथाः ॥ १९
सात्यकिश्चेकितानश्च धृष्टद्युम्नशिखण्डिनौ ।
केकया धृष्टकेतुश्च मात्स्याः पाञ्चालसृञ्जयाः ॥२०
पाण्डवाश्च मुदा युक्ता युधिष्ठिरपुरोगमाः ।
अभ्यद्रवन्त त्वरिता द्रोणानीकं बिभित्सवः ॥२१
ततोऽभवन्महायुद्धं त्वदीयानां परैः सह
जयमाकाङ्क्षमाणानां शूराणामनिवर्तिनाम् ॥ २२
तथा तु वर्तमाने वै संग्रामेऽतिभयंकरे ।
दुर्योधनो महाराज राधेयमिदमब्रवीत् ॥ २३
पश्य दुःशासनं वीरमभिमन्युवशंगतम् ।
प्रतपन्तमिवादित्यं निघ्नन्तं शात्रवान्रणे ॥ २४
अथ चैते सुसंरब्धाः सिंहा इव बलोत्कटाः ।
सौभद्रमुद्यतास्त्रातुमभ्यधावन्त पाण्डवाः ॥ २५
सञ्जय उवाच ।
ततः कर्णः शरैस्तीक्ष्णैरभिमन्युं दुरासदम् ।
अभ्यवर्षत संक्रुद्धः पुत्रस्य हितकृत्तव ॥ २६
तस्य चानुचरांस्तीक्ष्णैर्विव्याध परमेषुभिः
अवज्ञापूर्वकं शूरः सौभद्रस्य रणाजिरे ॥ २७
अभिमन्युस्तु राधेयं त्रिसप्तत्या शिलीमुखैः ।
अविध्यत्त्वरितो राजन्द्रोणं प्रेप्सुर्महामनाः ॥ २८
तं तथा नाशकत्कश्चिद्द्रोणाद्वारयितुं रथी ।
आरुजन्तं रथव्रातान्वज्रहस्तात्मजात्मजम् ॥ २९
ततः कर्णो जयप्रेप्सुर्मानी सर्वधनुष्मताम्
सौभद्रं शतशोऽविध्यदुत्तमास्त्राणि दर्शयन् ॥३०
सोऽस्त्रैरस्त्रविदां श्रेष्ठो रामशिष्यः प्रतापवान् ।
समरे शत्रुदुर्धर्षमभिमन्युमपीडयत् ॥ ३१
स तथा पीड्यमानस्तु राधेयेनास्त्रवृष्टिभिः ।
समरेऽमरसंकाशः सौभद्रो न व्यशीर्यत ॥ ३२
ततः शिलाशितैस्तीक्ष्णैर्भल्लैरानतपर्वभिः ।
छित्त्वा धनूंषि शूराणामार्जुनिः कर्णमार्दयत् ॥३३
धनुर्मण्डलनिर्मुक्तैः शरैराशीविषोपमैः ।
सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ॥ ३४
कर्णोऽपि चास्य चिक्षेप बाणान्सन्नतपर्वणः ।
असंभ्रान्तश्च तान्सर्वानगृह्णात्फल्गुनात्मजः ॥३५
ततो मुहूर्तात्कर्णस्य बाणेनैकेन वीर्यवान्
सध्वजं कार्मुकं वीरश्छित्त्वा भूमावपातयत् ॥ ३६
ततः कृच्छ्रगतं कर्णं दृष्ट्वा कर्णादनन्तरः ।
सौभद्रमभ्ययात्तूर्णं दृढमुद्यम्य कार्मुकम् ॥ ३७
तत उच्चुक्रुशुः पार्थास्तेषां चानुचरा जनाः ।
वादित्राणि च संजघ्नुः सौभद्रं चापि तुष्टुवुः ॥३८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे चत्वारिंशोऽध्यायः ॥ ४० ॥

## एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

अभिमन्युपराक्रमवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
सोऽभ्यगच्छद्धनुष्पाणिर्ज्यां विकर्षन्पुनः पुनः ।
तयोर्महात्मनोस्तूर्णं रथोऽन्तरमवापतत् ॥ १
सोऽविध्यद्दशभिर्बाणैरभिमन्युं दुरासदम् ।

सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ॥ २
पितृपैतामहं कर्म कुर्वाणमतिमानुषम् ।
दृष्ट्वार्दितं शरैः कार्ष्णिं त्वदीया हृषिताऽभवन् ॥ ३
तस्याभिमन्युरायम्य स्मयन्नेकेन पत्रिणा ।
शिरः प्रच्यावयामास तद्रथात्प्रापतद्भुवि ॥ ४
कर्णिकारमिवाधूतं वातेनापतितं नगात्
'कर्णानुजं च संप्रेक्ष्य तावका व्यथिताऽभवन् ।'
भ्रातरं निहतं दृष्ट्वा कर्णश्चासीत्पराङ्मुखः ॥ ५
विमुखीकृत्य कर्णं तु सौभद्रः कङ्कपत्रिभिः ।
अन्यानपि महेष्वासांस्तूर्णमेवाभिदुद्रुवे ॥ ६
ततस्तद्विततं सैन्यं हस्त्यश्वरथपत्तिमत् ।
क्रुद्धोऽभिमन्युरभिनत्तिग्मतेजा महारथः ॥ ७
कर्णस्तु बहुभिर्बाणैरर्द्यमानोऽभिमन्युना ।
अपायाज्जवनैरश्वैस्ततोऽनीकमभिद्रवत् ॥ ८
'तिष्ठ कर्ण महेष्वास कृप दुर्योधनेति च ।
द्रोणस्य क्रोशतो राजंस्तदनीकमभज्यत ॥' ९
शलभैरिव चाकाशं धाराभिरिव पर्वतः ।
अभिमन्योः शरैश्छन्नं न प्राज्ञायत किंचन ॥ १०
तावकानां तु योधानां वध्यतां निशितैः शरैः ।
अन्यत्र सैन्धवाद्राजन्न स्म कश्चिदतिष्ठत ॥ ११
सौभद्रस्तु ततः शङ्खं प्रध्माय पुरुषर्षभः ।
शीघ्रमभ्यपतत्सेनां भारतीं भरतर्षभ ॥ १२
स कक्षेऽग्निरिवोत्सृष्टो निर्दहंस्तरसा रिपून् ।
मध्ये भारतसैन्यानामार्जुनिः पर्यवर्तत ॥ १३
रथनागाश्वमनुजानर्दयन्निशितैः शरैः ।
संप्रविश्याकरोद्भूमिं कबन्धगणसंकुलाम् ॥ १४
सौभद्रचापप्रभवैर्निकृत्ताः परमेषुभिः ।
स्वानेवाभिमुखान्घ्नन्तः प्राद्रवञ्जीवितार्थिनः १५
ते घोरा रौद्रकर्माणो विपाठा बहवः शिताः ।
निघ्नन्तो रथनागाश्वाञ्जग्मुराशु वसुंधराम् ॥ १६
सायुधाः साङ्गुलित्राणाः सगदाः साङ्गदा रणे ।
दृश्यन्ते बाहवश्छिन्ना हेमाभरणभूषिताः ॥ १७
शराश्चापानि खड्गाश्च शरीराणि शिरांसि च ।
सकुण्डलानि स्रग्वीणि भूमावासन्सहस्रशः ॥१८
सोपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
अक्षैर्विमथितैश्चक्रैर्बहुधा पतितैर्युगैः ॥ १९
शक्तिचापासिभिश्चैव पतितैश्च महाध्वजैः ।
चर्मचापशरैश्चैव व्यवकीर्णैः समन्ततः ॥ २०
निहतैः क्षत्रियैरश्वैर्वारणैश्च विशांपते ।
अगम्यरूपा पृथिवी क्षणेनासीत्सुदारुणा ॥ २१
वध्यतां राजपुत्राणां क्रन्दतामितरेतरम् ।
प्रादुरासीन्महाशब्दो भीरूणां भयवर्धनः ॥ २२
स शब्दो भरतश्रेष्ठ दिशः सर्वा व्यनादयत् ।
सौभद्रश्चाद्रवत्सेनां घ्नन्वराश्वरथद्विपान् ॥ २३
कक्षमग्निरिवोत्सृष्टो निर्दहंस्तरसा रिपून् ।
मध्ये भारतसैन्यानामार्जुनिः प्रत्यदृश्यत ॥ २४
विचरन्तं दिशः सर्वाः प्रदिशश्चापि भारत ।
तं तदा नानुपश्यामः सैन्ये च रजसाऽऽवृते ॥ २५
आददानं गजाश्वानां नृणां चायूंषि भारत ।
क्षणेन भूयः पश्यामः सूर्यं मध्यंदिने यथा ॥ २६
अभिमन्युं महाराज प्रतपन्तं द्विषद्गणान् ।
स वासवसमः सङ्ख्ये वासवस्यात्मजात्मजः ॥ २७
अभिमन्युर्महाराज सैन्यमध्ये व्यरोचत ।
'यथा पुरा वह्निसुतः सुरसैन्येषु वीर्यवान् ॥' २८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

सञ्जयेन धृतराष्ट्रं प्रति अभिमन्युमनुगतानां जयद्रथेन निरोधकथनम् ॥ १ ॥ तथा जयद्रथस्य रुद्रात् पाण्डवनिरोधरूपवरलाभकथनम् ॥ २ ॥

धृतराष्ट्र उवाच ।
बालमत्यन्तसुखिनं स्वबाहुबलदर्पितम् ।
युद्धेष्वकुशलं वीरं कुलपुत्रं तनुत्यजम् ॥ १
गाहमानमनीकानि सदश्वैश्च त्रिहायनैः ।

अपि यौधिष्ठिरात्सैन्यात्कश्चिदन्वपतद्बली ॥ २
सञ्जय उवाच ।
युधिष्ठिरो भीमसेनः शिखण्डी सात्यकिर्यमौ ।
धृष्टद्युम्नो विराटश्च द्रुपदश्च सकेकयः ॥ ३
धृष्टकेतुश्च संरब्धो मात्स्याश्चाभ्यपतन्रणे ।
तेनैव तु पथा यान्तः पितरो मातुलैः सह ॥ ४
अभ्यद्रवन्परीप्सन्तो व्यूढानीकाः प्रहारिणः ।
तान्दृष्ट्वा द्रवतः शूरांस्त्वदीया विमुखाऽभवन् ॥ ५
ततस्तद्विमुखं दृष्ट्वा तव सूनोर्महद्बलम् ।
जामाता तव तेजस्वी संस्तम्भयिषुराद्रवत् ॥ ६
सैन्धवस्य महाराज पुत्रो राजा जयद्रथः ।
स पुत्रगृद्धिनः पार्थान्सहसैन्यानवारयत् ॥ ७
उग्रधन्वा महेष्वासो दिव्यमस्त्रमुदीरयन् ।
वार्धक्षत्रिरुपासेधत्प्रवणादिव कुञ्जरः ॥ ८
धृतराष्ट्र उवाच ।
कतिभारमहं मन्ये सैन्धवे सञ्जयाहितम् ।
यदेकः पाण्डवान्क्रुद्धान्पुत्रप्रेप्सूनवारयत् ॥ ९
अत्यद्भुतमहं मन्ये बलं शौर्यं च सैन्धवे ।
तस्य प्रब्रूहि मे वीर्यं कर्म चाग्र्यं महात्मनः ॥ १०
किं जप्तं हुतमिष्टं वा किं सुतप्तमथो तपः ।
'दमो वा ब्रह्मचर्यं वा सूत यच्चास्य सत्तम ॥ ११
देवं कतममाराध्य विष्णुमीशानमब्जजम् ।
सिन्धुराट् तनये सक्तान्क्रुद्धान्पार्थानवारयत् ॥ १२
नैवं कृतं महत्कर्म भीष्मेणाज्ञासिषं तथा ।'
सिन्धुराजो हि येनैकः पाण्डवान्समवारयत् ॥ १३
सञ्जय उवाच ।
द्रौपदीहरणे यत्तद्भीमसेनेन निर्जितः ।
मानात्स तप्तवान्राजा वरार्थी सुमहत्तपः ॥ १४
इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः सन्निवर्त्य सः ।
क्षुत्पिपासातपसहः कृशो धमनिसन्ततः ॥ १५
देवमाराधयच्छर्वं गृणन्ब्रह्म सनातनम् ।
भक्तानुकम्पी भगवांस्तस्य चक्रे ततो दयाम् ॥ १६
स्वप्नान्तेऽप्यथ चैवाह हरः सिन्धुपतेः सुतम् ।
वरं वृणीष्व प्रीतोऽस्मि जयद्रथ किमिच्छसि ॥ १७
एवमुक्तस्तु शर्वेण सिन्धुराजो जयद्रथः ।
उवाच प्रणतो रुद्रं प्राञ्जलिर्नियतात्मवान् ॥ १८
पाण्डवेयानहं सङ्ख्ये भीमवीर्यपराक्रमान् ।
वारयेयं रथेनैकः समस्तानिति भारत ॥ १९
एवमुक्तस्तु देवेशो जयद्रथमथाब्रवीत् ।
ददामि ते वरं सौम्य विना पार्थं धनञ्जयम् ।
वारयिष्यसि संग्रामे चतुरः पाण्डुनन्दनान् ॥ २०
'एकाहमिति राजेन्द्र तत्रैवान्तरधीयत ।'
एवमस्त्विति देवेशमुक्त्वाबुद्ध्यत पार्थिवः ॥ २१
स तेन वरदानेन दिव्येनास्त्रबलेन च ।
एकः संवारयामास पाण्डवानामनीकिनीम् ॥ २२
तस्य ज्यातलघोषेण क्षत्रियान्भयमाविशत् ।
परांस्तु तव सैन्यस्य हर्षः परमकोऽभवत् ॥ २३
दृष्ट्वा तु क्षत्रिया भारं सैन्धवे सर्वमाहितम् ।
उत्क्रुश्याभ्यद्रवन्राजन्येन यौधिष्ठिरं बलम् ॥ २४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

जयद्रथेन रुद्रवरात् व्यूहपथं पिधाय पाण्डवादिनिरोधः ॥ १ ॥

सञ्जय उवाच ।
यन्मां पृच्छसि राजेन्द्र सिन्धुराजस्य विक्रमम् ।
शृणु तत्सर्वमाख्यास्ये यथा पाण्डूनयोधयत् ॥ १
तमूहुर्वाजिनो वश्याः सैन्धवाः साधुवाहिनः ।
विकुर्वाणा बृहन्तोऽश्वाः श्वसनोपमरंहसः ॥ २
गन्धर्वनगराकारं विधिवत्कल्पितं रथम् ।
तस्याभ्यशोभयत्केतुर्वाराहो राजतो महान् ॥ ३
श्वेतच्छत्रपताकाभिश्चामरव्यजनेन च ।

प्रवणान्निम्नप्रदेशं प्राप्य ॥ ८ ॥ बलं सामर्थ्यम् । शौर्यमुत्साहः । वीर्यं प्रभावम् ॥ १० ॥ द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

स बभौ राजलिङ्गैस्तैस्तारापतिरिवाम्बरे ॥ ४
मुक्तावज्रमणिस्वर्णैर्भूषितं तदयस्मयम् ।
वरूथं विबभौ तस्य ज्योतिर्भिः खमिवावृतम् ॥५
स विष्फार्य महच्चापं किरन्निषुगणान्बहून् ।
तत्खण्डं पूरयामास यदार्जुनिरदारयत् ॥ ६
स सात्यकिं त्रिभिर्बाणैरष्टभिश्च वृकोदरम् ।
धृष्टद्युम्नं तथा षष्ट्या विराटं दशभिः शरैः ॥ ७
द्रुपदं पञ्चभिस्तीक्ष्णैः सप्तभिश्च शिखण्डिनम् ।
केकयान्पञ्चविंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ८
युधिष्ठिरं तु सप्तत्या ततः शेषानपानुदत् ।
इषुजालेन महता तदद्भुतमिवाभवत् ॥ ९
अथास्य शितपीतेन भल्लेनादिश्य कार्मुकम् ।
चिच्छेद प्रहसन्राजा धर्मपुत्रः प्रतापवान् ॥ १०
अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्मुकम् ।
विव्याध दशभिः पार्थं तांश्चैवान्यांस्त्रिभिस्त्रिभिः ॥
तत्तस्य लाघवं ज्ञात्वा भीमो भल्लैस्त्रिभिस्त्रिभिः ।
धनुर्ध्वजं च च्छत्रं च क्षितौ क्षिप्रमपातयत् ॥ १२
सोऽन्यदादाय बलवान्सज्जं कृत्वा च कार्मुकम् ।
भीमस्यापातयत्केतुं धनुरश्वांश्च मारिष ॥ १३
रथोत्तमात् ।
सात्यकेराप्लुतो यानं गिर्यग्रमिव केसरी ॥ १४
ततस्त्वदीयाः संहृष्टाः साधुसाध्विति वादिनः ।
सिन्धुराजस्य तत्कर्म प्रेक्ष्याश्रद्धेयमद्भुतम् ॥ १५
संक्रुद्धान्पाण्डवानेको यद्दधारास्त्रतेजसा ।
तत्तस्य कर्म भूतानि सर्वाण्येवाभ्यपूजयन् ॥ १६
सौभद्रेण हतैः पूर्वं सोत्तरायोधिभिर्द्विपैः ।
पाण्डूनां दर्शितः पन्थाः सैन्धवेन निवारितः १७
यतमानास्तु ते वीरा मात्स्यपाञ्चालकेकयाः ।
पाण्डवाश्चान्वपद्यन्त प्रतिशेकुर्न सैन्धवम् ॥ १८
यो यो हि यतते भेत्तुं द्रोणानीकं तवाहितः ।
तंतमेव वरं प्राप्य सैन्धवः प्रत्यवारयत् ॥ १९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

अभिमन्युपराक्रमवर्णनम् ॥ १ ॥

सञ्जय उवाच
सैन्धवेन निरुद्धेषु जयगृद्धिषु पाण्डुषु ।
सुघोरमभवद्युद्धं त्वदीयानां परैः सह ॥ १
प्रविश्याथार्जुनिः सेनां सत्यसन्धो दुरासदः ।
व्यक्षोभयत तेजस्वी मकरः सागरं यथा ॥ २
तं तथा शरवर्षेण छादयन्तमरिंदमम् ।
यथा प्रधानाः सौभद्रमभ्ययुः कुरुसत्तमाः ॥ ३
तेषां तस्य च संमर्दो दारुणः समपद्यत ।
सृजतां शरवर्षाणि प्रसक्तममितौजसाम् ॥ ४
रथव्रजेन संरुद्धस्तैरमित्रैस्तथाऽऽर्जुनिः ।
वृषसेनस्य यन्तारं हत्वा चिच्छेद कार्मुकम् ॥ ५
तं च विव्याध बलवांस्तस्य चाश्वानजिह्मगैः ।
वातायमानैस्तैरश्वैर्विसंज्ञोऽपहृतो रणात् ॥ ६
तेनान्तरेणाभिमन्योर्यन्तापासारयद्रथम् ।
रथव्रजास्ततो हृष्टाः साधुसाध्विति चुक्रुशुः ॥ ७
तं सिंहमिव संक्रुद्धं प्रमथ्नन्तं शरैररीन् ।
आरादायान्तमभ्येत्य वसातीयोऽभ्ययाद्द्रुतम् ॥८
सोऽभिमन्युं शरैः षष्ट्या रुक्मपुङ्खैरवाकिरत् ।
अब्रवीच्च न मे जीवञ्जीवतो युधि मोक्ष्यसे ॥ ९
तमयस्मयवर्माणमिषुणा दूरपातिना ।
विव्याध हृदि सौभद्रः स पपात व्यसुः क्षितौ ॥१०
वसातीयं हतं दृष्ट्वा क्रुद्धाः क्षत्रियपुङ्गवाः ।
परिवव्रुस्तदा राजंस्तव पौत्रं जिघांसवः ॥ ११
विष्फारयन्तश्चापानि नानारूपाण्यनेकशः ।

वरूथं रथवेष्टनम् ॥ ५ ॥ आदिश्य एष च्छिनद्मीत्युद्दिश्य ॥ १० ॥ त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

तद्युद्धमभवद्रौद्रं सौभद्रस्यारिभिः सह ॥ १२
तेषां शरान्सेष्वसनाञ्शरीराणि शिरांसि च ।
सकुण्डलानि स्रग्वीणि क्रुद्धश्चिच्छेद फाल्गुनिः १३
सखड्गाः साङ्गुलित्राणाः सपट्टसपरश्वधाः ।
अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः ॥ १४
स्रग्भिराभरणैर्वस्त्रैः पतितैर्विविधैर्ध्वजैः ।
वर्मभिश्चर्मभिर्हारैर्मुकुटैश्छत्रचामरैः ॥ १५
उपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
अक्षैर्विमथितैश्चक्रैर्भग्नैश्च बहुधा युगैः ॥ १६
अनुकर्षैः पताकाभिस्तथा सारथिवाजिभिः
रथैश्च भग्नैर्नागैश्च हतैः कीर्णाभवन्मही ॥ १७
निहतैः क्षत्रियैः शूरैर्नानाजनपदेश्वरैः ।
जयगृद्धैर्वृता भूमिर्दारुणा समपद्यत ॥ १८
दिशो विचरतस्तस्य सर्वाश्च प्रदिशस्तथा ।
रणेऽभिमन्योः क्रुद्धस्य रूपमन्तरधीयत ॥ १९
काञ्चनं यद्यदस्यासीद्वर्म चाभरणानि च ।
धनुषश्च शराणां च तदपश्याम केवलम् ॥ २०
तं तदा नाशकत्कश्चिच्चक्षुर्भ्यामभिवीक्षितुम् ।
आददानं शरैर्योधान्मध्ये सूर्यमिव स्थितम् ॥ २१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

अभिमन्योः पराक्रमः तेन दुर्योधनपराजयः ॥ १ ॥

सञ्जय उवाच ।
आददानस्तु शूराणामायूंष्यभवदार्जुनिः ।
अन्तकः सर्वभूतानां प्राणान्काल इवागते ॥ १
स शक्र इव विक्रान्तः शक्रसूनोः सुतो बली ।
अभिमन्युस्तदानीकं लोडयन्समदृश्यत ॥ २
प्रविश्यैव तु राजेन्द्र क्षत्रियेन्द्रान्तकोपमः ।
सत्यश्रवसमादत्त व्याघ्रो मृगमिवोल्बणः ॥ ३
सत्यश्रवसि चाक्षिप्ते त्वरमाणा महारथाः ।
प्रगृह्य विपुलं शस्त्रमभिमन्युमुपाद्रवन् ॥ ४
अहंपूर्वमहंपूर्वमिति क्षत्रियपुङ्गवाः ।
स्पर्धमानाः समाजग्मुर्जिघांसन्तोऽर्जुनात्मजम् ५
क्षत्रियाणामनीकानि प्रद्रुतान्यभिधावताम् ।
जग्राह तिमिरासाद्य क्षुद्रमत्स्यानिवार्णवे ॥ ६
ये केचन गतास्तस्य समीपमपलायिनः ।
न ते प्रतिन्यवर्तन्त समुद्रादिव सिन्धवः ॥ ७
महाग्रहगृहीतेव वातवेगभयार्दिता ।
समकम्पत सा सेना विभ्रष्टा नौरिवार्णवे ॥ ८
अथ रुक्मरथो नाम मद्रेश्वरसुतो बली ।
त्रस्तामाश्वासयन्सेनामत्रस्तो वाक्यमब्रवीत् ॥ ९
अलं त्रासेन वः शूरा नैष कश्चिन्मयि स्थिते ।
अहमेनं ग्रहीष्यामि जीवग्राहं न संशयः ॥ १०
एवमुक्त्वा तु सौभद्रमभिदुद्राव वीर्यवान् ।
सुकल्पितेनोह्यमानः स्यन्दनेन विराजता ॥ ११
सोऽभिमन्युं त्रिभिर्बाणैर्विद्ध्वा वक्षस्यथानदत् ।
त्रिभिश्च दक्षिणे बाहौ सव्ये च निशितैस्त्रिभिः १२
स तस्येष्वसनं छित्त्वा फाल्गुनिः सव्यदक्षिणौ ।
भुजौ शिरश्च स्वक्षिभ्रु क्षितौ क्षिप्रमपातयत् ॥ १३
दृष्ट्वा रुक्मरथं रुग्णं पुत्रं शल्यस्य मानिनम् ।
जीवग्राहं जिघृक्षन्तं सौभद्रेण यशस्विना ॥ १४
संग्रामदुर्मदा राजन्राजपुत्राः प्रहारिणः ।
वयस्याः शल्यपुत्रस्य सुवर्णविकृतध्वजाः ॥ १५
तालमात्राणि चापानि विकर्षन्तो महाबलाः ।
आर्जुनिं शरवर्षेण समन्तात्पर्यवारयन् ॥ १६
शूरैः शिक्षाबलोपेतैस्तरुणैरत्यमर्षणैः ।
दृष्ट्वैकं समरे शूरं सौभद्रमपराजितम् ॥ १७
छाद्यमानं शरव्रातैर्हृष्टो दुर्योधनोऽभवत् ।
वैवस्वतस्य भवनं गतं ह्येनममन्यत ॥ १८
सुवर्णपुङ्खैरिषुभिर्नानालिङ्गैः सुतेजनैः

अदृश्यमार्जुनिं चक्रुर्निमेषात्ते नृपात्मजाः ॥ १९
समूताश्वध्वजं तस्य स्यन्दनं तं च मारिष ।
आचितं समपश्याम श्वाविधं शललैरिव ॥ २०
स गाढविद्धः क्रुद्धश्च तोत्रैर्गज इवार्दितः ।
गान्धर्वमस्त्रमायच्छद्रथमायां च भारत ॥ २१
अर्जुनेन तपस्तप्त्वा गन्धर्वेभ्यो यदाहृतम् ।
तुम्बुरुप्रमुखेभ्यो वै तेनामोहयताहितान् ॥ २२
एकधा शतधा राजन्दृश्यते स सहस्रधा ।
अलातचक्रवत्सङ्ख्ये क्षिप्रमस्त्राणि दर्शयन् ॥ २३
रथचर्यास्त्रमायाभिर्मोहयित्वा परंतपः ।
बिभेद शतधा राजञ्शरीराणि महीक्षिताम् ॥२४
प्राणाः प्राणभृतां सङ्ख्ये प्रेषिता निशितैः शरैः ।
राजन्प्रापुरमुं लोकं शरीराण्यवनिं ययुः ॥ २५
धनूंष्यश्वान्नियन्तॄंश्च ध्वजान्बाहूंश्च साङ्गदान् ।
शिरांसि च शितैर्बाणैस्तेषां चिच्छेद फाल्गुनिः २६
चूतारामो यथा भग्नः पञ्चवर्षः फलोपगः ।
राजपुत्रशतं तद्वत्सौभद्रेण निपातितम् ॥ २७
क्रुद्धाशीविषसंकाशान्सुकुमारान्सुखोचितान् ।
एकेन निहतान्दृष्ट्वा भीतो दुर्योधनोऽभवत् ॥२८
रथिनः कुञ्जरानश्वान्पदातींश्चावमर्दितान् ।
दृष्ट्वा दुर्योधनः क्षिप्रमुपायात्तममर्षितः ॥ २९
तयोः क्षणमिवापूर्वः संग्रामः समपद्यत ।
अथाभवत्ते विमुखः पुत्रः शरशताहतः ॥ ३०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

अभिमन्युना दुर्योधनसूनोर्लक्ष्मणस्य वधः ॥ १ ॥

धृतराष्ट्र उवाच ।
यथा वदसि मे सूत एकस्य बहुभिः सह ।
संग्रामं तुमुलं घोरं जयं चैव महात्मनः ॥ १
अश्रद्धेयमिवाश्चर्यं सौभद्रस्याथ विक्रमम् ।
किंतु नात्यद्भुतं तेषां येषां धर्मो व्यपाश्रयः ॥ २
दुर्योधने च विमुखे राजपुत्रशते हते ।
सौभद्रे प्रतिपत्तिं कां प्रत्यपद्यन्त मामकाः ॥ ३
सञ्जय उवाच ।
संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना रोमहर्षणाः ।
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ॥ ४
हतान्भ्रातॄन्पितॄन्पुत्रान्सुहृत्संबन्धिबान्धवान् ।
उत्सृज्योत्सृज्य संजग्मुस्त्वरयन्तो हयद्विपान् ॥५
तान्प्रभग्नांस्तथा दृष्ट्वा द्रोणो द्रौणिर्बृहद्बलः ।
कृपो दुर्योधनः कर्णः कृतवर्माथ सौबलः ॥ ६
अभ्यधावन्सुसंक्रुद्धाः सौभद्रमपराजितम् ।
ते तु पौत्रेण ते राजन्प्रायशो विमुखीकृताः ।
'सौभद्रेण महाराज शक्रप्रतिमतेजसा ॥' ७
एकस्तु सुखसंवृद्धो बाल्याद्दर्पाच्च निर्भयः ।
इष्वस्त्रविन्महातेजा लक्ष्मणोऽर्जुनिमभ्ययात् ॥ ८
तमन्वगेवास्य पिता पुत्रगृद्धी न्यवर्तत ।
अनुदुर्योधनं चान्ये न्यवर्तन्त महारथाः ॥ ९
तं तेऽभिषिषिचुर्बाणैर्मेघा गिरिमिवाम्बुभिः ।
स तु तान्प्रममाथैको विष्वग्वातो यथाम्बुदान् १०
पौत्रं तव च दुर्धर्षं लक्ष्मणं प्रियदर्शनम् ।
पितुः समीपे तिष्ठन्तं शूरमुद्यतकार्मुकम् ॥ ११
अत्यन्तसुखसंवृद्धं धनेश्वरसुतोपमम् ।
आससाद रणे कार्ष्णिर्मत्तो मत्तमिव द्विपम् ।
'सिंहशावो वने शश्वत्पुण्डरीकशिशुं यथा ॥' १२
लक्ष्मणेन तु संगम्य सौभद्रः परवीरहा ।
शरैः सुनिशितैस्तीक्ष्णैर्बाह्वोरुरसि चार्पयत् ॥ १३
संक्रुद्धो वै महाराज दण्डाहत इवोरगः ।
पौत्रस्तव महाराज तव पौत्रमभाषत ॥ १४

आयच्छत्प्रयुक्तवान् । रथमायां दुर्लक्ष्यां रथशिक्षाम् ॥ २१ ॥ फलोपगः फलोन्मुखः ॥ २७ ॥

पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

प्रतिपत्तिं प्रतिविधानम् ॥ ३ ॥ विष्वग्वातोऽशेषदिग्वातः ॥ १० ॥

सुदृष्टः क्रियतां लोको ह्यमुं लोकं गमिष्यसि ।
पश्यतां बान्धवानां त्वां नयामि यमसादनम् ॥१५
एवमुक्त्वा ततो भल्लं सौभद्रः परवीरहा ।
उद्बबर्ह महाबाहुर्निर्मुक्तोरगसन्निभम् ॥ १६
स तस्य भुजनिर्मुक्तो लक्ष्मणस्य सुदर्शनम् ।
सुनसं सुभ्रु केशान्तं शिरोऽहार्षीत्सकुण्डलम् १७
'पौत्रस्तु तव दुर्धर्ष लक्ष्मणं प्रियदर्शनम् ।
पितुः समीपे तिष्ठन्तं प्राहिणोद्यमसादनम् ॥१८
अत्यन्तसुखसंवृद्धं धनेश्वरसुतोपमम् ।'
लक्ष्मणं निहतं दृष्ट्वा हाहेत्युच्चुक्रुशुर्जनाः ॥ १९
ततो दुर्योधनः क्रुद्धः प्रिये पुत्रे निपातिते ।
हतैनमिति चुक्रोश क्षत्रियान्क्षत्रियर्षभः ॥ २०
ततो द्रोणः कृपः कर्णो द्रोणपुत्रो बृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥२१
तांस्तु विद्ध्वा शितैर्बाणैर्विमुखीकृत्य चार्जुनिः ।
वेगेनाभ्यपतत्क्रुद्धः सैन्धवस्य महद्बलम् ॥ २२
आवव्रुस्तस्य पन्थानं गजानीकेन दंशिताः ।
कलिङ्गाश्च निषादाश्च क्राथपुत्रश्च वीर्यवान् ।
तत्प्रसक्तमिवात्यर्थं युद्धमासीद्विशांपते ॥ २३
ततस्तत्कुञ्जरानीकं व्यधमद्धृष्टमार्जुनिः ।
यथा वायुर्नित्यगतिर्जलदाञ्शतशोऽम्बरे ॥ २४
ततः क्रुद्धाः शरव्रातै राजानः समवारयन् ।
अथेतरे सन्निवृत्ताः पुनर्द्रोणमुखा रथाः ।
परमास्त्राणि धुन्वानाः सौभद्रमभिदुद्रुवुः ॥ २५
तान्निवार्यार्जुनिर्बाणैः क्राथपुत्रमयोधयत् ।
शरौघेणाप्रमेयेण त्वरमाणो जिघांसया ॥ २६
सधनुर्बाणकेयूरौ बाहू समुकुटं शिरः ।
सच्छत्रध्वजयन्तारं रथं चाश्वान्न्यपातयत् ॥ २७
कुलशीलश्रुतिबलैः कीर्त्या चास्त्रबलेन च ।
युक्ते तस्मिन्हते वीराः प्रायशो विमुखाऽभवन् ॥२८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

अभिमन्युपराक्रमवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
तथा प्रविष्टं तरुणं सौभद्रमपराजितम् ।
कुलानुरूपं कुर्वाणं संग्रामेष्वपराजितम् ॥ १
आजानेयैः सुबलिभिर्यान्तमश्वैस्त्रिहायनैः ।
प्लवमानमिवाकाशे के शूराः समवारयन् ॥ २
सञ्जय उवाच ।
अभिमन्युः प्रविश्यैतांस्तावकान्निशितैः शरैः ।
अकरोत्पार्थिवान्सर्वान्विमुखान्पाण्डुनन्दनः ॥ ३
तं तु द्रोणः कृपः कर्णो द्रौणिश्च सबृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ ४
दृष्ट्वा तु सैन्धवे भारमतिमात्रं समाहितम् ।
सैन्यं तव महाराज युधिष्ठिरमुपाद्रवत् ॥ ५
सौभद्रमितरे वीरमभ्यवर्षञ्शराम्बुभिः ।
तालमात्राणि चापानि विकर्षन्तो महाबलाः ॥६
तांस्तु सर्वान्महेष्वासान्सर्वविद्यासु निष्ठितान् ।
व्यष्टम्भयद्रणे बाणैः सौभद्रः परवीरहा ॥ ७
द्रोणं पञ्चाशताविध्यद्विंशत्या च बृहद्बलम् ।
अशीत्या कृतवर्माणं कृपं षष्ट्या शिलीमुखैः ॥८
रुक्मपुङ्खैर्महावेगैराकर्णसमचोदितैः ।
अविध्यद्दशभिर्बाणैरश्वत्थामानमार्जुनिः ॥ ९
कर्णं च कर्णिना कर्णे पीतेन च शितेन च ।
फाल्गुनिर्द्विषतां मध्ये विव्याध परमेषुणा ॥ १०
पातयित्वा कृपस्याश्वांस्तथोभौ पार्ष्णिसारथी ।
अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ ११
ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम् ।
पुत्राणां तव वीराणां पश्यतामवधीद्बली ॥ १२

केशान्तं केशैर्मनोहरम् । अन्तः प्रान्तेऽन्तिके मध्ये स्वरूपे च मनोहरे इत्यभिधानात् ॥ १७ ॥ धृष्टं प्रगल्भम् ॥ २३ ॥

षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

तं द्रौणिः पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
वरंवरममित्राणामारुजन्तमभीतवत् ॥ १३
स तु बाणैः शितैस्तूर्णं प्रत्यविध्यत मारिष ।
पश्यतां धार्तराष्ट्राणामश्वत्थामानमार्जुनिः ॥ १४
षष्ट्या शराणां तं द्रौणिस्तिग्मधारैः सुतेजनैः ।
उग्रैर्नाकम्पयद्विद्ध्वा मैनाकमिव पर्वतम् ॥ १५
स तु द्रौणिं त्रिसप्तत्या हेमपुङ्खैरजिह्मगैः ।
प्रत्यविध्यन्महातेजा बलवानपकारिणम् ॥ १६
तस्मिन्द्रोणो बाणशतं पुत्रगृद्धी न्यपातयत् ।
अश्वत्थामा तथाऽष्टौ च परीप्सन्पितरं रणे ॥ १७
कर्णो द्वाविंशतिं भल्लान्कृतवर्मा च विंशतिम् ।
बृहद्बलस्तु पञ्चाशत्कृपः शारद्वतो दश ॥ १८
तांस्तु प्रत्यवधीत्सर्वान्दशभिर्दशभिः शरैः ।
तैरर्द्यमानः सौभद्रः सर्वतो निशितैः शरैः ॥ १९
तं कोसलानामधिपः कर्णिनाऽताडयद्धृदि ।
स तस्याश्वान्ध्वजं चापं सूतं चापातयत्क्षितौ ॥ २०
अथ कोसलराजस्तु विरथः खड्गचर्मधृत् ।
इयेष फाल्गुनेः कायाच्छिरो हर्तुं सकुण्डलम् ॥ २१
स कोसलानामधिपं राजपुत्रं बृहद्बलम् ।
हृदि विव्याध बाणेन स भिन्नहृदयोऽपतत् ॥ २२
बभञ्ज च सहस्राणि दश राज्ञां महात्मनाम् ।
सृजतामशिवा वाचः खड्गकार्मुकधारिणाम् ॥ २३
तथा बृहद्बलं हत्वा सौभद्रो व्यचरद्रणे ।
व्यष्टम्भयन्महेष्वासो योधांस्तव शराम्बुभिः ॥ २४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

द्रोणादिभिः षड्भिरभिमन्योर्विरथीकरणम् ॥ १ ॥

सञ्जय उवाच ।
स कर्णं कर्णिना कर्णे पुनर्विव्याध फाल्गुनिः ।
शरैः पञ्चाशता चैनमविध्यत्कोपयन्भृशम् ॥ १
प्रतिविव्याध राधेयस्तावद्भिरथ तं पुनः ।
शरैराचितसर्वाङ्गो बह्वशोभत भारत ॥ २
कर्णं चाप्यकरोत्क्रुद्धो रुधिरोत्पीडवाहिनम् ।
कर्णोऽपि विबभौ शूरः शरैश्छिन्नोऽसृगाप्लुतः ।
'संध्यानुगतपर्यन्तः शरदीव दिवाकरः ॥' ३
तावुभौ शरचित्राङ्गौ रुधिरेण समुक्षितौ ।
बभूवतुर्महात्मानौ पुष्पिताविव किंशुकौ ॥ ४
अथ कर्णस्य सचिवान्षट् शूरांश्चित्रयोधिनः ।
साश्वसूतध्वजरथान्सौभद्रो निजघान ह ॥ ५
तथेतरान्महेष्वासान्दशभिर्दशभिः शरैः ।
प्रत्यविध्यदसंभ्रान्तस्तदद्भुतमिवाभवत् ॥ ६
मागधस्य तथा पुत्रं हत्वा षड्भिरजिह्मगैः ।
साश्वं ससूतं तरुणमश्वकेतुमपातयत् ॥ ७
मार्तिकावतकं भोजं ततः कुञ्जरकेतनम् ।
क्षुरप्रेण समुन्मथ्य ननाद विसृजञ्शरान् ॥ ८
तस्य दौःशासनिर्विद्ध्वा चतुर्भिश्चतुरो हयान् ।
सूतमेकेन विव्याध दशभिश्चार्जुनात्मजम् ॥ ९
ततो दौःशासनिं कार्ष्णिर्विद्ध्वा सप्तभिराशुगैः ।
संरम्भाद्रक्तनयनो वाक्यमुच्चैरथाब्रवीत् ॥ १०
पिता तवाहवं त्यक्त्वा गतः कापुरुषो यथा ।
दिष्ट्या त्वमपि जानीषे योद्धुं न त्वद्य मोक्ष्यसे ॥ ११
एतावदुक्त्वा वचनं कर्मारपरिमार्जितम् ।
नाराचं विससर्जास्मै तं द्रौणिस्त्रिभिराच्छिनत् ॥ १२
तस्यार्जुनिर्ध्वजं छित्त्वा शल्यं त्रिभिरताडयत् ।
तं शल्यो नवभिर्बाणैर्गार्ध्रपत्रैरताडयत् ॥ १३
हृद्यसंभ्रान्तवद्राजंस्तदद्भुतमिवाभवत् ।
तस्यार्जुनिर्ध्वजं छित्त्वा हत्वोभौ पार्ष्णिसारथी १४
तं विव्याधायसैः षड्भिः सोपाक्रामद्रथान्तरम् ।
शत्रुंजयं चन्द्रकेतुं मेघवेगं सुवर्चसम् ॥ १५
सूर्यभासं च पञ्चैतान्हत्वा विव्याध सौबलम् ।
तं सौबलस्त्रिभिर्विद्ध्वा दुर्योधनमथाब्रवीत् ॥ १६
सर्व एनं विमथ्नीमः पुरैकैकं हिनस्ति नः ।
अथाब्रवीत्पुनर्द्रोणं कर्णो वैकर्तनो रणे ॥ १७

पुरा सर्वान्प्रमथ्नाति ब्रूह्यस्य वधमाशु नः ।
ततो द्रोणो महेष्वासः सर्वांस्तान्प्रत्यभाषत ॥ १८
अस्ति वाऽस्यान्तरं किंचित्कुमारस्याथ पश्यत ।
अन्वस्य पितरं चाद्य चरतः सर्वतो दिशम् ॥ १९
शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत ।
धनुर्मण्डलमेवास्य रथमार्गेषु दृश्यते ॥ २०
संदधानस्य विशिखाञ्शीघ्रं चैव विमुञ्चतः ।
आरुजन्नपि मे प्राणान्मोहयन्नपि सायकैः ॥ २१
प्रहर्षयति मां भूयः सौभद्रः परवारहा ।
अतिमानं दधात्येष सौभद्रो विचरन्रणे ॥ २२
अन्तरं यस्य संरब्धा न पश्यन्ति महारथाः ।
अस्यतो लघुहस्तस्य दिशः सर्वा महेषुभिः ।
न विशेषं प्रपश्यामि रणे गाण्डीवधन्वनः ॥ २३
सञ्जय उवाच ।
अथ कर्णः पुनर्द्रोणमाहार्जुनिशराहतः ।
स्थातव्यमिति तिष्ठामि पीड्यमानोऽभिमन्युना २४
तेजस्विनः कुमारस्य शराः परमदारुणाः ।
क्षिण्वन्ति हृदयं मेऽद्य घोराः पावकतेजसः ॥ २५
तमाचार्योऽब्रवीत्कर्णं शनकैः प्रहसन्निव ।
अभेद्यमस्य कवचं युवा चाशुपराक्रमः ॥ २६
उपदिष्टा मया चास्य पितुः कवचधारणा ।
तामेष निखिलां वेत्ति ध्रुवं परपुरंजयः ॥ २७
शक्यं त्वस्य धनुश्छेत्तुं ज्यां च बाणैः समाहितैः ।
अभीषूंश्च हयांश्चैव तथोभौ पार्ष्णिसारथी ॥ २८
एतत्कुरु महेष्वास राधेय यदि शक्यते ।
अथैनं विमुखीकृत्य पश्चात्प्रहरणं कुरु ॥ २९
सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः ।
विरथं विधनुष्कं च कुरुष्वैनं यदीच्छसि
'पुरःस्थितेन केनापि दुःशको जेतुमार्जुनिः ॥' ३०
सञ्जय उवाच
तदाचार्यवचः श्रुत्वा कर्णो वैकर्तनस्त्वरन् ।
अस्यतो लघुहस्तस्य पृष्ठतो धनुराच्छिनत् ॥ ३१
अश्वानस्यावधीद्द्रोणो गौतमः पार्ष्णिसारथी ।
शेषास्तु च्छिन्नधन्वानं शरवर्षैरवाकिरन् ॥ ३२
त्वरमाणास्त्वराकाले विरथं षण्महारथाः ।
शरवर्षैरकरुणा बालमेकमवाकिरन् ॥ ३३
स च्छिन्नधन्वा विरथः स्वधर्ममनुपालयन् ।
खड्गचर्मधरः श्रीमानुत्पपात विहायसा ॥ ३४
मार्गैः सकौशिकाद्यैश्च लाघवेन बलेन च ।
आर्जुनिर्व्यचरद्व्योम्नि भृशं वै पक्षिराडिव ॥ ३५
मय्येव निपतत्येष सासिरित्यूर्ध्वदृष्टयः ।
विव्यधुस्तं महेष्वासं समरे छिद्रदर्शिनः ॥ ३६
तस्य द्रोणोऽच्छिनन्मुष्टौ खड्गं मणिमयत्सरुम् ।
क्षुरप्रेण महातेजास्त्वरमाणः सपत्नजित् ॥ ३७
राधेयो निशितैर्बाणैर्व्यधमच्चर्म चोत्तमम् ॥ ३८
व्यसिचर्मेषुपूर्णाङ्गः सोऽन्तरिक्षात्पुनः क्षितिम् ।
आस्थितश्चक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यधावत ॥ ३९
स चक्ररेणूज्ज्वलशोभिताङ्गो
बभावतीवोज्ज्वलचक्रपाणिः ।
रणेऽभिमन्युः क्षणमास रौद्रः
स वासुदेवानुकृतिं प्रकुर्वन् ॥ ४०
स्रुतरुधिरकृतैकरागवक्त्रो
भ्रुकुटिपुटाकुलितोऽतिसिंहनादः ।
प्रभुरमितबलो रणेऽभिमन्यु-
र्नृपवरमध्यगतो भृशं व्यराजत् ॥ ४१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

अभिमन्युवधः ॥ १ ॥

सञ्जय उवाच ।
विष्णोः स्वसुर्नन्दकरः स विष्ण्वायुधभूषणः ।
रराजातिरथः सङ्ख्ये जनार्दन इवापरः ॥ १
मारुतोद्धूतकेशान्तमुद्यतारिवरायुधम् ।

वधं वधोपायम् ॥ १८ ॥ अण्वप्यस्यान्तरं ह्यद्य इति झ. पाठः ॥१९॥ कौशिकं सर्वतोभद्रम् ॥ ३५ ॥ अष्टचत्वारिंशोध्यायः ॥

वपुः समीक्ष्य पृथ्वीशा दुःसमीक्ष्यं सुरैरपि ॥ २
'यदि पाणितलादेतच्चक्रं मुञ्चेत फाल्गुनिः ।
वरदानान्मातुलस्य विष्णोश्चक्रमिवापतेत् ॥' ३
तच्चक्रं भृशमुद्विग्नाः संचिच्छिदुरनेकधा ।
महारथस्ततः कार्ष्णिः स जग्राह महागदाम् ॥ ४
विधनुःस्यन्दनासिस्तैर्विचक्रश्चारिभिः कृतः ।
अभिमन्युर्गदापाणिरश्वत्थामानमार्दयत् ॥ ५
स गदामुद्यतां दृष्ट्वा ज्वलन्तीमशनीमिव ।
अपाक्रामद्रथोपस्थाद्विक्रमांस्त्रीन्नरर्षभः ॥ ६
तस्याश्वान्गदया हत्वा तथोभौ पार्ष्णिसारथी ।
शराचिताङ्गः सौभद्रः श्वाविद्वत्समदृश्यत ॥ ७
ततः सुबलदायादं कालिकेयमपोथयत् ।
जघान चास्यानुचरान्गान्धारान्सप्तसप्ततिम् ॥ ८
पुनश्चैव वसातीयाञ्जघान रथिनो दश ।
केकयानां रथान्सप्त हत्वा च दश कुञ्जरान् ।
दौःशासनिरथं साश्वं गदया समपोथयत् ॥ ९
ततो दौःशासनिः क्रुद्धो गदामुद्यम्य मारिष ।
अभिदुद्राव सौभद्रं तिष्ठतिष्ठेति चाब्रवीत् ॥ १०
तावुद्यतगदौ वीरावन्योन्यवधकाङ्क्षिणौ ।
भ्रातृव्यौ संप्रजह्राते पुरेव त्र्यम्बकान्धकौ ॥ ११
तावन्योन्यं गदाग्राभ्यामाहत्य पतितौ क्षितौ ।
इन्द्रध्वजाविवोत्सृष्टौ रणमध्ये परंतपौ ॥ १२
दौःशासनिरथोत्थाय कुरूणां कीर्तिवर्धनः
उत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् ॥ १३
गदावेगेन महता व्यायामेन च मोहितः ।
विचेता न्यपतद्भूमौ सौभद्रः परवीरहा ॥ १४
एवं विनिहतो राजन्नेको बहुभिराहवे ।
क्षोभयित्वा चमूं सर्वां नलिनीमिव कुञ्जरः॥१५
अशोभत हतो वीरो व्याधैर्वनगजो यथा ।
तं तथा पतितं शूरं तावकाः पर्यवारयन् ॥ १६
दावं दग्ध्वा यथा शान्तं पावकं शिशिरात्यये ।
विमृद्य नगशृङ्गाणि सन्निवृत्तमिवानिलम् ॥ १७
अस्तं गतमिवादित्यं तप्त्वा भारत वाहिनीम् ।
उपप्लुतं यथा सोमं संशुष्कमिव सागरम् ॥ १८
पूर्णचन्द्राभवदनं काकपक्षवृताक्षिकम् ।
तं भूमौ पतितं दृष्ट्वा तावकास्ते महारथाः ।
मुदा परमया युक्ताश्चुक्रुशुः सिंहवन्मुहुः ॥ १९
आसीत्परमको हर्षस्तावकानां विशांपते
इतरेषां तु वीराणां नेत्रेभ्यः प्रापतज्जलम् ॥ २०
अन्तरिक्षे च भूतानि प्राक्रोशन्त विशांपते ।
दृष्ट्वा निपतितं वीरं च्युतं चन्द्रमिवाम्बरात् ॥२१
द्रोणकर्णमुखैः षड्भिर्धार्तराष्ट्रैर्महारथैः
एकोऽयं निहतः शेते नैष धर्मो मतो हि नः ॥२२
तस्मिन्विनिहते वीरे बह्वशोभत मेदिनी ।
द्यौर्यथा पूर्णचन्द्रेण नक्षत्रगणमालिनी ॥ २३
रुक्मपुङ्खैश्च संपूर्णा रुधिरौघपरिप्लुता ।
उत्तमाङ्गैश्च शूराणां भ्राजमानैः सकुण्डलैः॥ २४
विचित्रैश्च परिस्तोमैः पताकाभिश्च संवृता
चामरैश्च कुथाभिश्च प्रविद्धैश्चाम्बरोत्तमैः ॥ २५
रथाश्वनरनागानामलङ्कारैश्च सुप्रभैः ।
ः सुनिशितैः पीतैर्निर्मुक्तैर्भुजगैरिव ॥ २६
चापैश्च विविधैश्छिन्नैः शक्त्यृष्टिप्रासकम्पनैः ।
विविधैश्चायुधैश्चान्यैः संवृता भूरशोभत ॥ २७
'निष्टनद्भिरतीवान्यैरुद्वहद्भुधिरस्रवैः ।
नरैः पतद्भिः पतितैरवनी स्वधिकं बभौ ॥ २८
वाजिभिश्चापि निर्जीवैः श्वसद्भिः शोणितोक्षितैः
सारोहैर्विषमा भूमिः सौभद्रेण निपातितैः ॥ २९
साङ्कुशैः समहामात्रैः सवर्मायुधकेतुभिः ।
पर्वतैरिव विध्वस्तैर्विशिखैर्मथितैर्गजैः ॥ ३०
पृथिव्यामनुकीर्णैश्च अश्वसारथियोधिभिः ।
ह्रदैरिव प्रक्षुभितैर्हतनागै रथोत्तमैः ॥ ३१
पदातिसङ्घैश्च हतैर्विविधायुधभूषणैः ।
भीरूणां त्रासजननी घोररूपाऽभवन्मही ॥ ३२
तं दृष्ट्वा पतितं भूमौ चन्द्रार्कसदृशद्युतिम्

उपप्लुतं राहुग्रस्तम् ॥ १८ ॥ काकपक्षावृताक्षिकं इति झ. पाठः ॥ १९ ॥ विशाखोन्मथितैर्गजैः इति क. पाठः ॥ ३० ॥ व्यश्वसारथियोधिभिः इति क. पाठः ॥ ३१ ॥ एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

तावकानां परा प्रीतिः पाण्डूनां चाभवद्व्यथा॥३३
अभिमन्यौ हते राजञ्शिशुकेऽप्राप्तयौवने ।
संप्राद्रवच्चमूः सर्वा धर्मराजस्य पश्यतः ॥ ३४
दीर्यमाणं बलं दृष्ट्वा सौभद्रे विनिपातिते ।
अजातशत्रुस्तान्वीरानिदं वचनमब्रवीत् ॥ ३५
स्वर्गमेष गतः शूरो यो हतो न पराङ्मुखः ।
संस्तम्भयत माभैष्ट विजेष्यामो रणे रिपून् ॥३६
इत्येवं स महातेजा दुःखितेभ्यो महाद्युतिः ।
धर्मराजो युधां श्रेष्ठो ब्रुवन्दुःखमपानुदत् ॥ ३७
युद्धे ह्याशीविषाकारान्राजपुत्रान्रणे रिपून् ।
पूर्वं निहत्य संग्रामे पश्चादार्जुनिरभ्ययात् ॥ ३८
हत्वा दशसहस्राणि कौसल्यं च महारथम् ।
कृष्णार्जुनसमः कार्ष्णिः शक्रलोकं गतो ध्रुवम् ३९
रथाश्वनरमातङ्गान्विनिहत्य सहस्रशः ।
अवितृप्तः स संग्रामादशोच्यः पुण्यकर्मकृत् ।
गतः पुण्यकृतां लोकाञ्शाश्वतान्पुण्यनिर्जितान् ॥

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धे एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

## पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

युद्धभूमिवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
वयं तु प्रवरं हत्वा तेषां तैः शरपीडिताः ।
निवेशायाभ्युपायामः सायाह्ने रुधिरोक्षिताः ॥१
निरीक्षमाणास्तु वयं परे चायोधनं शनैः ।
अपयाता महाराज ग्लानिं प्राप्ता विचेतसः ॥२
ततो निशाया दिवसस्य चाशिवः
शिवारुतैः संधिरवर्तताद्भुतः ।
कुशेशयापीडनिभे दिवाकरे
विलम्बमानेऽस्तमुपेत्य पर्वतम् ॥ ३
वरासिशक्त्यृष्टिवरूथचर्मणां
विभूषणानां च समाक्षिपन्प्रभाः ।
दिवं च भूमिं च समानयन्निव
प्रियां तनुं भानुरुपैति पावकम् ॥ ४
महाभ्रकूटाचलशृङ्गसन्निभै-
र्गजैरनेकैरिव वज्रपातितैः ।
सवैजयन्त्यङ्कुशवर्मयन्तृभि-
र्निपातितैर्नष्टगतिश्चिता क्षितिः ॥ ५
हतेश्वरैश्चूर्णितचक्रकूबरै-
र्हताश्वसूतैर्विपताककेतुभिः ।
महारथैर्भूः शुशुभे विचूर्णितैः
पुरैरिवामित्रहतैर्नराधिप ॥ ६
रथाश्ववृन्दैः सहसादिभिर्हतैः
प्रविद्धभाण्डाभरणैः पृथग्विधैः ।
निरस्तजिह्वादशनान्त्रलोचनै-
र्धरा बभौ घोरविरूपदर्शना ॥ ७
प्रविद्धवर्माभरणाम्बरायुधा
विपन्नहस्त्यश्वरथानुगा नराः ।
महार्हशय्यास्तरणोचितास्तदा
क्षितावनाथा इव शेरते हताः ॥
अतीव हृष्टाः श्वशृगालवायसा
बकाः सुपर्णाश्च वृकास्तरक्षवः ।
वयांस्यसृक्पान्यथ रक्षसां गणाः
पिशाचसङ्घाश्च सुदारुणा रणे ॥ ९
त्वचो विनिर्भिद्य पिबन्वसामसृक्
तथैव मज्जाः पिशितानि चाश्नुवन् ।
वपां विलुम्पन्ति हसन्ति गान्ति च
प्रकर्षमाणाः कुणपान्यनेकशः ॥ १०
शरीरसङ्घाटवहा ह्यसृग्जला
रथोडुपा कुञ्जरशैलसंकटा ।

---

समाक्षिपन्संहरन् । समानयन्नेकतां नयन् । पावकीम् इति क. ङ. पाठः ॥ ४ ॥ निष्टनतीव गौश्चिता इति ङ. पाठः ॥ ५ ॥

पत्त्युपस्करैरितिपाठे पत्तयः पादरक्षाः । उपस्करा उपकरणानि ॥ ६ ॥

मनुष्यशीर्षोपलमांसकर्दमा
प्रविद्धनानाविधशस्त्रमालिनी ॥ ११
भयावहा वैतरणीव दुस्तरा
प्रवर्तिता योधवरैस्तदा नदी ।
उवाह मध्येन रणाजिरे भृशं
भयावहा दीनमृतप्रवाहिनी ॥ १२
पिबन्ति च स्नान्ति च यत्र दुर्दृशाः
पिशाचसङ्घास्तु नदन्ति भैरवाः ।
सुनन्दिताः प्राणभृतां क्षयंकराः
समानभक्षाः श्वसृगालपक्षिणः ॥ १३
तथा तदायोधनमुग्रदर्शनं
निशामुखे पितृपतिराष्ट्रवर्धनम् ।
निरीक्षमाणाः शनकैर्जहुर्नराः
समुत्थिता नृत्तकबन्धसंकुलम् ॥ १४
अपेतविध्वस्तमहार्हभूषणं
निपातितं शक्रसमं महाबलम् ।
रणेऽभिमन्युं ददृशुस्तदा जना
व्यपोढहव्यं सदसीव पावकम् ॥ १५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रयोदशदिवसयुद्धावहारे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

## एकपञ्चाशोऽध्यायः ॥ ५१ ॥

युधिष्ठिरस्याभिमन्युमनुशोच्य विलापः ॥ १ ॥

सञ्जय उवाच ।
हते तस्मिन्महावीर्ये सौभद्रे रथयूथपे ।
विमुक्तरथसन्नाहाः सर्वे निक्षिप्तकार्मुकाः ॥ १
उपोपविष्टा राजानं परिवार्य युधिष्ठिरम् ।
तदेव युद्धं ध्यायन्तः सौभद्रगतमानसाः ॥ २
ततो युधिष्ठिरो राजा विललाप सुदुःखितः ।
अभिमन्यौ हते वीरे भ्रातुः पुत्रे महारथे ॥ ३
'युधिष्ठिर उवाच ।
एष जित्वा कृपं शल्यं राजानं च सुयोधनम् ।
द्रोणं द्रौणिं महेष्वासं तथैवान्यान्महारथान् ॥ ४
द्रोणानीकमसंबाधं मम प्रियचिकीर्षया ।
'हत्वा शत्रुगणान्वीरानेष शेते महारथः ॥ ५
कृतास्त्रान्युद्धकुशलान्महेष्वासान्महाबलान् ।
कुलशीलगुणैर्युक्ताञ्छूरान्विख्यातपौरुषान् ॥ ६
द्रोणेन विहितं व्यूहमभेद्यममरैरपि ।
अदृष्टपूर्वमस्माभिः पद्मं चक्रायुधप्रियः ॥' ७
भित्त्वा मध्यं प्रविष्टोऽसौ गोमध्यमिव केसरी ।
'विक्रीडितं रणे तेन निघ्नता वै परान्वरान् ॥'८
यस्य शूरा महेष्वासाः प्रत्यनीकगता रणे ।
प्रभग्ना विनिवर्तन्ते कृतास्त्रा युद्धदुर्मदाः ॥ ९
अत्यन्तशत्रुरस्माकं येन दुःशासनः शरैः ।
क्षिप्रं ह्यभिमुखः सङ्ख्ये विसंज्ञो विमुखीकृतः॥१०
स तीर्त्वा दुस्तरं वीरो द्रोणानीकमहार्णवम् ।
प्राप्य दौःशासनिं कार्ष्णिः प्राप्तो वैवस्वतक्षयम्११
कथं द्रक्ष्यामि कौन्तेयं सौभद्रे निहतेऽर्जुनम् ।
सुभद्रां वा महाभागां प्रियं पुत्रमपश्यतीम् ॥१२
'हतवत्सां यथा धेनुं तद्दर्शनकृतोन्मुखीम् ।'
किंस्विद्वक्ष्याम्यपेतार्थमक्लिष्टमसमञ्जसम् ।
तावुभौ प्रतिवक्ष्यामि हृषीकेशधनंजयौ ॥ १३
अहमेव सुभद्रायाः केशवार्जुनयोरपि ।
प्रियकामो जयाकाङ्क्षी कृतवानिदमप्रियम् ॥१४
न लुब्धो बुध्यते दोषाँल्लोभान्मोहात्प्रवर्तते ।
मधुलिप्सुर्हि नापश्यं प्रपातमहमीदृशम् ॥ १५
यो हि भोज्ये पुरस्कार्यो यानेषु शयनेषु च ।
भूषणेषु च सोऽस्माभिर्बालो युधि पुरस्कृतः॥१६

सदसि प्राग्वंशे ॥ १५ ॥ पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

असंबाधं अप्रतीघातम् ॥५॥ असमञ्जसमयुक्तरूपम् ॥१३॥

कथं हि बालस्तरुणो युद्धानामविशारदः ।
सदश्व इव संबाधे विषमे क्षेममर्हति ॥ १७
नो चेद्धि वयमप्येनं महीमनुशयीमहि ।
बीभत्सोः कोपदीप्तस्य दग्धाः कृपणचक्षुषा ॥ १८
अलुब्धो मतिमान्ह्रीमान्क्षमावान्रूपवान्बली ।
वपुष्मान्मानकृद्वीरः प्रियः सत्यपराक्रमः ॥ १९
यस्य श्लाघन्ति विबुधाः कर्माण्यूर्जितकर्मणः ।
निवातकवचाञ्जघ्ने कालकेयांश्च वीर्यवान् ॥ २०
महेन्द्रशत्रवो येन हिरण्यपुरवासिनः ।
अक्ष्णोर्निमेषमात्रेण पौलोमाः सगणा हताः ॥२१
परेभ्योऽप्यभयार्थिभ्यो यो ददात्यभयं विभुः ।
तस्यास्माभिर्न शकितस्त्रातुमप्यात्मजो बली ॥२२
भयं तु सुमहत्प्राप्तं धार्तराष्ट्रान्महाबलान् ।
पार्थः पुत्रवधात्क्रुद्धः कौरवाञ्शोषयिष्यति ॥ २३
क्षुद्रः क्षुद्रसहायश्च स्वपक्षक्षयकारकः ।
व्यक्तं दुर्योधनो दृष्ट्वा शोचन्हास्यति जीवितं २४
न मे जयः प्रीतिकरो न राज्यं
न चामरत्वं न सुरैः सलोकता ।
इमं समीक्ष्याप्रतिवीर्यपौरुषं
निपातितं देववरात्मजात्मजम् ॥ २५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

युधिष्ठिरांश्वासनाय व्यासेन तंप्रति अकम्पनोपाख्यानकथनोपक्रमः ॥ १ ॥

सञ्जय उवाच ।
एवं विलपमाने तु कुन्तीपुत्रे युधिष्ठिरे ।
कृष्णद्वैपायनस्तत्र आजगाम महानृषिः ॥ १
अथ दृष्ट्वा महात्मानं पाण्डुपुत्रो युधिष्ठिरः ।
युक्तासनो दीनमनाः पूजां चक्रे महात्मनः ॥ २
अर्चयित्वा यथान्यायमुपविष्टं युधिष्ठिरः ।
अब्रवीच्छोकसंतप्तो भ्रातुः पुत्रवधेन च ॥ ३
अधर्मयुक्तैर्बहुभिः परिवार्य महारथैः ।
युध्यमानो महेष्वासैः सौभद्रो निहतो रणे ॥ ४
बालश्च बालबुद्धिश्च वीरश्च परवीरहा ।
अनुपायेन संग्रामे युध्यमानो विनाशितः ॥ ५
मया प्रोक्तः स संग्रामे द्वारं संजनयस्व नः ।
प्रविष्टेऽभ्यन्तरे तस्मिन्सैन्धवेन निवारिताः ॥ ६
ननु नाम समं युद्धमेष्टव्यं युद्धजीविभिः ।
इदं चैवासमं युद्धमीदृशं यत्कृतं परैः ॥ ७
तेनास्मि भृशसंतप्तः शोकबाष्पसमाकुलः ।
शर्म नैवाधिगच्छामि चिन्तयानः पुनः पुनः ॥८
सञ्जय उवाच ।
तं तथा विलपन्तं वै शोकव्याकुलमानसम् ।
उवाच सान्त्वयन्व्यासो युधिष्ठिरमिदं वचः ॥९
व्यास उवाच ।
युधिष्ठिर महाप्राज्ञ सर्वशास्त्रविशारद ।
व्यसनेषु न मुह्यन्ति त्वादृशा भरतर्षभ ॥ १०
स्वर्गमेष गतः शूरः शत्रून्हत्वा बहून्रणे ।
अबालसदृशं कर्म कृत्वा वै पुरुषोत्तमः ॥ ११
अनतिक्रमणीयो वै विधिरेष युधिष्ठिर ।
देवदानवगन्धर्वान्मृत्युर्हरति भारत ॥ १२
युधिष्ठिर उवाच ।
इमे वै पृथिवीपालाः शेरते पृथिवीतले ।
निहताः पृतनामध्ये मृतसंज्ञा महाबलाः ॥ १३
नागायुतबलाश्चान्ये वायुवेगबलास्तथा ।
त एते निहताः सङ्ख्ये तुल्यरूपा नरैर्नराः ॥ १४
नैषां पश्यामि हन्तारं प्राणिनां संयुगे क्वचित् ।
विक्रमेणोपसंपन्नास्तपोबलसमन्विताः ॥ १५

संबाधे गहने ॥ १७ ॥ एनं अभिमन्युं अनुचेन्न महीं शयीमहि तदा क्रोधदीप्तस्य बीभत्सोः कृपणेनावसन्नेन चक्षुषा दग्धा भवेमहीत्यन्वयः ॥ १८ ॥ वपुष्मांस्तेजस्वी ॥ १९ ॥ एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

द्वारं संजनयस्वेति मया उक्त इति संबन्धः । निवारिताः तमनुप्रविशन्त इति शेषः ॥ ६ ॥

जेतव्यमिति चान्योन्यं येषां नित्यं हृदि स्थितम् ।
अथ चेमे हताः प्राज्ञाः शेरते विगतायुषः ॥ १६
मृता इति च शब्दोयं वर्तते च ततोऽर्थवत् ।
इमे मृता महीपालाः प्रायशो भीमविक्रमाः ॥ १७
निश्चेष्टा निरभीमानाः शूराः शत्रुवशंगताः ।
राजपुत्राश्च संरब्धा वैश्वानरमुखं गताः ॥ १८
अत्र मे संशयः प्राप्तः कुतः संज्ञा मृता इति ।
कस्य मृत्युः कुतो मृत्युः केन मृत्युरिमाः प्रजाः ।
हरत्यमरसंकाश तन्मे ब्रूहि पितामह ॥ १९
सञ्जय उवाच ।
तं तथा परिपृच्छन्तं कुन्तीपुत्रं युधिष्ठिरम् ।
आश्वासनमिदं वाक्यमुवाच भगवानृषिः ॥ २०
व्यास उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अकम्पनस्य कथितं नारदेन पुरा नृप ॥ २१
स चापि राजा राजेन्द्र पुत्रव्यसनमुत्तमम् ।
अप्रसह्यतमं लोके प्राप्तवानिति नः श्रुतम् ॥ २२
तदहं संप्रवक्ष्यामि मृत्योः प्रभवमुत्तमम् ।
ततस्त्वं मोक्ष्यसे दुःखात्स्नेहबन्धनसंश्रयात् ॥ २३
समस्तपापराशिघ्नं शृणु कीर्तयतो मम ।
धन्यमाख्यानमायुष्यं शोकघ्नं पुष्टिवर्धनम् ॥ २४
पवित्रमरिसङ्घघ्नं मङ्गलानां च मङ्गलम् ।
यथैव वेदाध्ययनमुपाख्यानमिदं तथा ॥ २५
श्रवणीयं महाराज प्रातर्नित्यं नृपोत्तमैः ।
पुत्रानायुष्मतो राज्यमीहमानैः श्रियं तथा ॥ २६
पुरा कृतयुगे तात आसीद्राजा ह्यकम्पनः ।
स शत्रुवशमापन्नो मध्ये संग्राममूर्धनि ।
'योधयामास बलवान्बद्धश्चासीदकम्पनः ॥' २७
तस्य पुत्रो हरिर्नाम नारायणसमो बले ।
श्रीमान्कृतास्त्रो मेधावी युधि शक्रोपमो बली ॥ २८
'स दृष्ट्वा पितरं युद्धे तदवस्थं महाद्युतिः ।
अचिन्तयित्वा मरणं शत्रुमध्यं ततोऽविशत् ॥ २९
स शत्रुभिः परिवृतो बहुधा रणमूर्धनि ।
योधयामास तान्सर्वान्सर्वास्त्रकुशलो बली ॥ ३०
वर्षन्बाणसहस्राणि शत्रुष्वमितविक्रमः ।
पदातिरथनागाश्वान्प्रममाथ महाबलः ॥ ३१
स शरैराचितश्चक्रैर्गदाभिर्मुसलैरपि ।
मृद्नन्रथसहस्राणि पदातीन्वाजिवारणान् ॥ ३२
परानीकं विभिद्याजौ मोक्षयित्वा च तं नृपम् ।
पुनरेवाकरोद्युद्धं शत्रुमध्यगतो बली ॥ ३३
ततस्ते रथिनः सर्वे समेत्य पुनराहवे ।
जघ्नुस्तं परिवार्यैकं तोमरैरिव कुञ्जरम् ॥' ३४
स कर्म दुष्करं कृत्वा संग्रामे शत्रुतापनः
शत्रुभिर्निहतः सङ्ख्ये पृतानायां युधिष्ठिर ॥ ३५
द्विषद्भिर्निहतं दृष्ट्वा प्रियं पुत्रमकम्पनः ।
अमर्षजनितक्रोध आहवात्सहसाऽऽगतः ॥ ३६
स राजा प्रेतकृत्यानि तस्य कृत्वा शुचान्वितः ।
शोचन्नहनि रात्रौ च नालभत्सुखमात्मनः ॥ ३७
तस्य शोकं विदित्वा तु पुत्रव्यसनसंभवम् ।
आजगामाथ देवर्षिर्नारदोऽस्य समीपतः ॥ ३८
स तु राजा महाभागो दृष्ट्वा देवर्षिसत्तमम् ।
पूजयित्वा यथान्यायं कथामकथयत्तदा ॥ ३९
तस्य सर्वं समाचष्ट यथावृत्तं युधिष्ठिर ।
शत्रुभिर्विजयं सङ्ख्ये पुत्रस्य च वधं तथा ॥ ४०
अकम्पन उवाच ।
मम पुत्रो महावीर्य इन्द्रविष्णुसमद्युतिः ।
शत्रुभिर्बहुभिः सङ्ख्ये पराक्रम्य हतो बली ॥ ४१
शृणु मे प्राणिनां चापि मृत्युः प्रभवते किल ।
क एष मृत्युर्भगवन्किंवीर्यबलपौरुषः ।
एतदिच्छामि तत्त्वेन श्रोतुं मतिमतां वर ॥ ४२
व्यास उवाच ।
तस्य तद्वचनं श्रुत्वा नारदो वरदः प्रभुः ।
आख्यानमिदमाचष्ट पुत्रशोकापहं महत् ॥ ४३
नारद उवाच ।
शृणु राजन्महाबाहो आख्यानं बहुविस्तरम् ।
यथावृत्तं श्रुतं चैव मयाऽपि वसुधाधिप ॥ ४४
प्रजाः सृष्ट्वा तदा ब्रह्मा आदिसर्गे पितामहः ।
असंहृतं महातेजा दृष्ट्वा जगदिदं प्रभुः ॥ ४५

कस्य मृत्युः क इति शेषः ॥ १९ ॥

तस्य चिन्ता समुत्पन्ना संहारं प्रति पार्थिव।
चिन्तयन्न ह्यसौ वेद संहारं वसुधाधिप ॥ ४६
तस्य रोषान्महाराज मुखेभ्योऽग्निरजायत ।
तेन सर्वा दिशो व्याप्ताः सान्तर्देशा दिधक्षता ४७
ततो दिवं भुवं चैव ज्वालामालासमाकुलम् ।
चराचरं जगत्सर्वं ददाह भगवान्प्रभुः ॥ ४८
ततो हतानि भूतानि चराणि स्थावराणि च ।
महता क्रोधवेगेन त्रासयन्निव वीर्यवान् ॥ ४९
ततो रुद्रो जटी स्थाणुर्निशाचरपतिर्हरः ।
जगाम शरणं देवं ब्रह्माणं परमेष्ठिनम् ॥ ५०
तस्मिन्नापतिते स्थाणौ प्रजानां हितकाम्यया ।
अब्रवीत्परमो देवो ज्वलन्निव महामुनिः ॥ ५१
किं कर्म कामं कामार्ह कामाज्जातोऽसि पुत्रक।
करिष्यामि प्रियं सर्वं ब्रूहि स्थाणो यदिच्छसि॥५२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

ब्रह्मरुद्रसंवादः ॥ १ ॥ ब्रह्मणा प्रजासंहाराय मृत्युदेवीसर्जनम् ॥ २ ॥

स्थाणुरुवाच
नासर्गनिमित्तं हि कृतो यत्नस्त्वया विभो ।
युगे सृष्टाश्च वृद्धाश्च भूतग्रामाः पृथग्विधाः॥ १
सञ्जय ेह पुनः क्रोधात्प्रजा नश्यन्ति सर्वशः ।
एवं वि ा मम कारुण्यं प्रसीद भगवन्प्रभो ॥
च ।
अथ द्दृ ा च मे काम एतदेवं भवेदिति ।
युक्तासन ा हितकामं तु ततो मां मन्युराविशत्॥२
अर्चयित्वा तदा देवी भारार्ता समचूचुदत् ।
अब्रवीच्छो महादेव भारेणाभिहता सती ॥ ४
अधर्मयुन्नैनाधिगच्छामि बुद्ध्या बहु विचारयन् ।
युध्य समप्रमेयस्य ततो मां मन्युराविशत् ॥ ५
बाल उवाच ।
अ ारार्थं प्रसीदस्व मा रुषो वसुधाधिप ।
मा प्रजाः स्थावराश्चैव जङ्गमाश्च व्यनीनशः ॥ ६
तव प्रसादाद्भगवन्निदं वर्तेत्त्रिधा जगत् ।
अनागतमतीतं च यच्च संप्रति वर्तते ॥ ७
भगवन्क्रोधसंदीप्तः क्रोधादग्निमवासृजत् ।
स दहत्यश्मकूटानि द्रुमांश्च सरितस्तथा ॥ ८
पल्वलानि च सर्वाणि सर्वे चैव तृणोलपाः
स्थावरं जङ्गमं चैव निःशेषं कुरुते जगत् ॥
तदेतद्भस्मसाद्भूतं जगत्स्थावरजङ्गमम् ।
प्रसीद भगवन्स त्वं रोषो न स्याद्वरो मम॥ १०
सर्वे हि सृष्टा नश्यन्ति तव देव कथंचन ।
तस्मान्निवर्ततां तेजस्त्वय्येवेदं प्रलीयताम् ॥ ११
उपायमन्यं संपश्य प्रजानां हितकाम्यया .
यथेमे प्राणिनः सर्वे निवर्तेरंस्तथा कुरु ॥ १२
अभावं नेह गच्छेयुरुत्सन्नजननाः प्रजाः ।
भवता हि नियुक्तोऽहं प्रजानां पालने विभो।
दया ते न समुत्पन्ना प्रजासु विबुधेश्वर ॥ १३
मा विनश्येज्जगन्नाथ जगत्स्थावरजङ्गमम् ।
प्रसादाभिमुखं देवं तस्मादेवं ब्रवीम्यहम् ॥ १४
नारद उवाच ।
श्रुत्वा हि वचनं देवः प्रजानां हितकारणे ।
तेजः संधारयामास पुनरेवान्तरात्मनि ॥ १५
ततोऽग्निमुपसंहृत्य भगवाँल्लोकसत्कृतः
प्रवृत्तं च निवृत्तं च कल्पयामास वै प्रभुः॥ १६
उपसंहरतस्तस्य तमग्निं रोषजं तथा ।
प्रादुर्बभूव विश्वेभ्यो गोभ्यो नारी महात्मनः॥१७

खेभ्य इति पाठे श्रोत्रादिच्छिद्रेभ्यः ॥ ४७ ॥ द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

कारुण्यं जातमिति शेषः ॥ २ ॥ अप्रमेयस्यानन्तस्य जगत इति शेषः । अहिंस्यस्येतिवार्थः ॥ ५ ॥ संहारार्थं मारुषः रोषं माकार्षीः किंतु प्रसीदस्व ॥ ६ ॥ तव रोषो न स्यादिति मम मह्यं वरोऽस्त्विवति योजना ॥ १० ॥ उत्सन्नजननाः प्रक्षीणसंतानाः ॥ १३ ॥ प्रवृत्तं कर्म सृष्टिहेतुम् । निवृत्तं कर्म मोक्षहेतुम् ॥ १६ ॥ गोभ्य इन्द्रियच्छिद्रेभ्यः ॥ १७ ॥

कृष्णरक्ता तथा पिङ्गा रक्तजिह्वास्यलोचना ।
कुण्डलाभ्यां च राजेन्द्र तप्ताभ्यां तप्तभूषणा ॥१८
सा निःसृत्य तथा खेभ्यो दक्षिणां दिशमाश्रिता ।
स्मयमाना च साऽवेक्ष्य देवौ विश्वेश्वरावुभौ ॥ १९
'तां तु तत्र तदा देवीं ब्रह्मा लोकपितामहः ।
उक्तवान्मधुरं वाक्यं सान्त्वयित्वा पुनः पुनः'
मृत्यो इति महीपाल जहि चेमाः प्रजा इति ॥ २०
त्वं हि संहारबुद्ध्याऽथ प्रादुर्भूता रुषो मम ।
तस्मात्संहर सर्वास्त्वं प्रजाः सजडपण्डिताः ॥२१
अविशेषेण चैव त्वं प्रजाः संहर भामिनि ।
मम त्वं हि नियोगेन ततः श्रेयो ह्यवाप्स्यसि ॥ २२
नारद उवाच ।
एवमुक्ता तु सा तेन मृत्युः कमललोचना ।
प्ररुदद्भृशसंविग्ना प्रापतन्नश्रुबिन्दवः ॥ २३
पाणिभ्यां प्रतिजग्राह तान्यश्रूणि पितामहः ।
सर्वभूतहितार्थाय तां चाप्यनुनयत्तदा ॥ २४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

नारदेन मृत्युब्रह्मसंवादकथनेन अकम्पनस्य शोकपरिहरणम् ॥ १ ॥ व्यासेनाकम्पनोपाख्यानकथनात् युधिष्ठिरस्य शोकापनोदनम् ॥ २ ॥

नारद उवाच ।
विनीय दुःखमबला आत्मन्येव प्रजापतिम् ।
उवाच प्राञ्जलिर्भूत्वा लतेवावर्जिता पुनः ॥ १
मृत्युरुवाच ।
त्वया सृष्टा कथं नारी ईदृशी वदतां वर ।
क्रूरं कर्माहितं कुर्यां मृढेव परिजानती ॥ २
बिभेम्यहमधर्माद्धि प्रसीद भगवन्प्रभो ।
प्रियान्पुत्रान्वयस्यांश्च भ्रातॄन्मातॄः पितॄन्पतीन् ॥३
अपध्यास्यन्ति ये देव मृतांस्तेभ्यो बिभेम्यहम् ।
कृपणानां हि रुदतां ये पतन्त्यश्रुबिन्दवः ॥ ४
तेभ्योऽहं भगवन्भीता शरणं त्वाऽहमागता ।
यमस्य भवनं देव गच्छेयं न सुरोत्तम ॥ ५
कायेन विनयोपेता मूर्ध्नोदग्रनखेन च ।
एतदिच्छाम्यहं कामं त्वत्तो लोकपितामह ॥ ६
इच्छेयं त्वत्प्रसादाद्धि तपस्तप्तुं प्रजेश्वर ।
प्रदिशेमं वरं देव त्वं मह्यं भगवन्प्रभो ॥ ७
त्वया ह्युक्ता गमिष्यामि धेनुकाश्रममुत्तमम् ।
तत्र तप्स्ये तपस्तीव्रं तवैवाराधने रता ॥ ८
न हि शक्ष्यामि देवेश प्राणान्प्राणभृतां प्रियान् ।
हर्तुं विलपमानानामधर्मादभिरक्ष माम् ॥ ९
ब्रह्मोवाच ।
मृत्यो संकल्पिताऽसि त्वं प्रजासंहारहेतुना ।
गच्छ संहर सर्वास्त्वं प्रजा मा ते विचारणा ॥१०
भविता त्वेतदेवं हि नैतज्जात्वन्यथा भवेत् ।
भव त्वनिन्दिता लोके कुरुष्व वचनं मम ॥ ११
नारद उवाच
एवमुक्ता भगवता प्राञ्जलिश्चाप्यवाङ्मुखी ।
संहारे नाकरोद्बुद्धिं प्रजानां हितकाम्यया ॥ १२
तूष्णीमासीत्तदा देवः प्रजानामीश्वरेश्वरः ।
प्रसादं चागमत्क्षिप्रमात्मनैव प्रजापतिः ॥ १३
स्मयमानश्च देवेशो लोकान्सर्वानवेक्ष्य च ।
लोकास्त्वासन्यथापूर्वं दृष्टास्तेनापमन्युना ॥ १४
निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते ।
सा कन्याऽपि जगामाऽथ समीपात्तस्य धीमतः ॥१५
अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा ।
त्वरमाणा च राजेन्द्र मृत्युर्धेनुकमभ्यगात् ॥१६

देवौ ब्रह्मरुद्रौ ॥ १९ ॥ मरणं मृतप्राणवियोगस्तमन्यस्येच्छतीति मृत्युरित्यर्थः । इति आहेति शेषः ॥ २० ॥ रुषो रोषात् ॥ २१ ॥ त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

उदग्रनखेन अञ्जलिना । विनयोपेता शरणागतास्मीत्यर्थः ॥ ६ ॥ अपमन्युना गतामर्षेणेत्यर्थः ॥ १४ ॥ अप्रतिश्रुत्यानङ्गीकृत्य ॥ १६ ॥

सा तत्र परमं तीव्रं चचार व्रतमुत्तमम् ।
सा तदा ह्येकपादेन तस्थौ पद्मानि षोडश ॥ १७
पञ्च चाब्दानि कारुण्यात्प्रजानां तु हितैषिणी ।
इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः सन्निवर्त्य सा ॥
ततस्त्वेकेन पादेन पुनरन्यानि सप्त वै ।
तस्थौ पद्मानि षट् चैव सप्त चैकं च पार्थिव ॥ १९
ततः पद्मायुतं तात मृगैः सह चचार सा ।
पुनर्गत्वा ततो नन्दां पुण्यां शीतामलोदकाम् २०
अप्सु वर्षसहस्राणि सप्त चैकं च साऽनयत् ।
धारयित्वा तु नियमं नन्दायां वीतकल्मषा ॥ २१
सा पूर्वं कौशिकीं पुण्यां जगाम नियमैधिता ।
तत्र वायुजलाहारा चचार नियमं पुनः ॥ २२
सप्तगङ्गासु सा पुण्या कन्या वेतसकेषु च ।
तपोविशेषैर्बहुभिः कर्षयद्देहमात्मनः ॥ २३
ततो गत्वा तु सा गङ्गां महामेरुं च केवलम् ।
तस्थौ चाश्मेव निश्चेष्टा प्राणायामपरायणा ॥ २४
पुनर्हिमवतो मूर्ध्नि यत्र देवाः पुराऽयजन् ।
तत्राङ्गुष्ठेन सा तस्थौ निखर्वं परमा शुभा ॥ २५
पुष्करेष्वथ गोकर्णे नैमिषे मलये तथा ।
अकर्शयत्स्वकं देहं नियमैर्मानसप्रियैः ॥ २६
अनन्यदेवता नित्यं दृढभक्ता पितामहे ।
तस्थौ पितामहं चैव तोषयामास धर्मतः ॥ २७
ततस्तामब्रवीत्प्रीतो लोकानां प्रभवोऽव्ययः ।
सौम्येन मनसा राजन्प्रीतः प्रीतमनास्तदा ॥ २८
मृत्यो किमिदमत्यन्तं तपांसि चरसीति ह ।
ततोऽब्रवीत्पुनर्मृत्युर्भगवन्तं पितामहम् ॥ २९
नाऽहं हन्यां प्रजा देव स्वस्थाश्चाक्रोशतीस्तथा ।
एतदिच्छामि सर्वेश त्वत्तो वरमहं प्रभो ॥ ३०
अधर्मभयभीताऽस्मि ततोऽहं तप आस्थिता ।
भीतायास्तु महाभाग प्रयच्छाभयमव्यय ॥ ३१
आर्ता चानागसी नारी याचामि भव मे गतिः ।
तामब्रवीत्ततो देवो भूतभव्यभविष्यवित् ॥ ३२
अधर्मो नास्ति ते मृत्यो संहरन्त्या इमाः प्रजाः ।
मया चोक्तं मृषा भद्रे भविता न कथंचन ॥ ३३
तस्मात्संहर कल्याणि प्रजाः सर्वाश्चतुर्विधाः ।
धर्मः सनातनश्च त्वां सर्वथा पावयिष्यति ॥ ३४
लोकपालो यमश्चैव सहाया व्याधयश्च ते ।
अहं च विबुधाश्चैव पुनर्दास्याम ते वरम् ॥ ३५
यथा त्वमेनसा मुक्ता विरजाः ख्यातिमेष्यसि ।
नारद उवाच ।
सैवमुक्ता महाराज कृताञ्जलिरिदं विभुम् ॥ ३६
पुनरेवाब्रवीद्वाक्यं प्रसाद्य शिरसा तदा ।
यद्येवमेतत्कर्तव्यं धर्मतो नास्त्यतो भयम् ॥ ३७
तवाज्ञा मूर्ध्नि मे न्यस्ता यत्ते वक्ष्यामि तच्छृणु ।
लोभः क्रोधोऽभ्यसूयेर्ष्या द्रोहो मोहश्च देहिनां ३८
अह्रीश्चान्योन्यपरुषा देहं भिन्द्युः पृथग्विधाः ।
ब्रह्मोवाच ।
तथा भविष्यते मृत्यो साधु संहर भोः प्रजाः ।
अधर्मस्ते न भविता नापध्यास्याम्यहं शुभे ॥ ३९
यान्यश्रुबिन्दूनि करे ममासं-
स्ते व्याधयः प्राणिनामात्मजाताः ।
ते मारयिष्यन्ति नरान्गतासू-
न्नाधर्मस्ते भविता मा स्म भैषीः ॥ ४०
नाधर्मस्ते भविता प्राणिनां वै
त्वं वै धर्मस्त्वं हि धर्मस्य चेशा ।
धर्म्या भूत्वा धर्मनित्या धरित्री
तस्मात्प्राणान्सर्वथेमान्नियच्छ ॥ ४१
'प्राप्ता तथा नो भविता कदाचि-
देवं मयाद्यैव नियोज्यसे त्वम् ।'
सर्वेषां वै प्राणिनां कामरोषौ
संत्यज्य त्वं संहरस्वेह जीवान् ।
येषां धर्मास्ते भविष्यन्त्यनन्ता
मिथ्यावृत्तं मारयिष्यत्यधर्मः ॥ ४२
तेनात्मानं पावयस्वात्मना त्वं
पापेऽऽत्मानं मज्जयिष्यन्त्यसत्यात् ।
तस्मात्कामं रोषमप्यागतं त्वं
संत्यज्यान्तः संहरस्वेति जीवान् ॥ ४३

---

पद्मं शतं कोट्यो वर्षाणि तानि षोडश पञ्च च ॥ १७ ॥

अन्योन्यपरुषा वागिति शेषः ॥ ३९ ॥

नारद उवाच ।
सा वै भीता मृत्युसंज्ञोपदेशा-
च्छापाद्भीता बाढमित्यब्रवीत्तम् ।
सा च प्राणं प्राणिनामन्तकाले
कामक्रोधौ त्यज्य हरत्यसक्ता ॥ ४४
मृत्युस्त्वेषां व्याधयस्तत्प्रसूता
व्याधी रोगो रुज्यते येन जन्तुः ।
सर्वेषां च प्राणिनां प्रायणान्ते
तस्माच्छोकं माकृथा निष्फलं त्वम् ॥ ४५
सर्वे देवाः प्राणिभिः प्रायणान्ते
गत्वा वृत्ताः सन्निवृत्तास्तथैव ।
एवं सर्वे प्राणिनस्तत्र गत्वा
वृत्ता देवा मर्त्यवद्राजसिंह ॥ ४६
वायुर्भीमो भीमनादो महौजा
भेत्ता देहान्प्राणिनां सर्वगोऽसौ ।
नो वा वृत्तिं नैव वृत्तिं कदाचि-
त्प्राप्नोत्युग्रोऽनन्ततेजोविशिष्टः ॥ ४७
सर्वे देवा मर्त्यसंज्ञाविशिष्टा-
स्तस्मात्पुत्रं माशुचो राजसिंह ।
स्वर्गं प्राप्तो मोदते ते तनूजो
नित्यं रम्यान्वीरलोकानवाप्य ॥ ४८
त्यक्त्वा दुःखं संगतः पुण्यकृद्भि-
रेषा मृत्युर्देवदिष्टा प्रजानाम् ।
प्राप्ते काले संहरन्ती यथाव-
त्स्वयं कृता प्राणहरा प्रजानाम् ॥ ४९
आत्मानं वै प्राणिनो घ्नन्ति सर्वे
नैतान्मृत्युर्दण्डपाणिर्हिनस्ति
तस्मान्मृतान्नानुशोचन्ति धारा
मृत्युं ज्ञात्वा निश्चयं ब्रह्मसृष्टम् ।
इत्थं सृष्टिं देवक्लृप्तां विदित्वा
पुत्रान्नष्टाच्छोकमाशु त्यजस्व ॥ ५०
द्वैपायन उवाच ।
एतच्छ्रुत्वार्थवद्वाक्यं नारदेन प्रकाशितम् ।
उवाचाकम्पनो राजा सखायं नारदं तथा ॥५१
व्यपेतशोकः प्रीतोऽस्मि भगवन्नृषिसत्तम ।
श्रुत्वेतिहासं त्वत्तस्तु कृतार्थोऽस्म्यभिवादये ॥५२
तथोक्तो नारदस्तेन राज्ञा देवर्षिसत्तमः ।
जगाम नन्दनं शीघ्रमशोकवनमात्मनः ॥ ५३
पुण्यं यशस्यं स्वर्ग्यं च धन्यमायुष्यमेव च ।
अस्येतिहासस्य सदा श्रवणं श्रावणं तथा ॥ ५४
एतदर्थपदं श्रुत्वा तदा राजा युधिष्ठिर ।
क्षत्रधर्मं च विज्ञाय शूराणां च परां गतिम् ।
संप्राप्तोऽसौ महावीर्यः स्वर्गलोकं महारथः ॥५५
अभिमन्युः परान्हत्वा प्रमुखे सर्वधन्विनाम् ।
युध्यमानो महेष्वासो हतः सोऽभिमुखो रणे ॥५६
असिना गदया शक्त्या धनुषा च महारथः ।
विरजाः सोमसूनुः स पुनस्तत्र प्रलीयते ॥ ५७
तस्मात्परां धृतिं कृत्वा भ्रातृभिः सह पाण्डव ।
अप्रमत्तः सुसन्नद्धः शीघ्रं योद्धुमुपाक्रम ॥ ५८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

**व्यासेन युधिष्ठिरं प्रति षोडशराजकीयाख्यानकथनप्रारम्भः ॥ १ ॥ नारदेन सृञ्जयंप्रति मरुत्तराजचरितकथनम् ॥ २ ॥**

सञ्जय उवाच ।
श्रुत्वा मृत्युसमुत्पत्तिं कर्माण्यनुपमानि च ।

प्रायणान्ते आयुष्यकर्मणोऽवसाने ॥ ४५ ॥ सर्वे इति । देवा इन्द्रियाणि । प्राणिभिः जीवैः सह । गत्वा तत्रैव परलोके । वृत्ता वृत्तवन्तः । पुनर्भूत्वा सन्निवृत्ता भवन्ति । मर्त्यभावार्था एव देवा इन्द्रादयः मर्त्यवदेव गत्वा वृत्ता भवन्ति नतु निवृत्ता भवन्ति मर्त्यभावाय । कर्मदेवा एव निवर्तन्ते नत्वाजानदेवास्तेषां क्रमसु-क्तियोग्यत्वादिति भावः ॥ ४६ ॥ सर्वेदेवा इति ।मर्त्यत्वं मरणधर्मत्वं ब्रह्मादीनामपि स्वाभाविकमस्त्यतोऽनर्थकः शोक इत्यर्थः ॥ ४८ ॥ स्वयमेव स्वस्य मृत्युः अथापि जनानां प्राणहरा मृत्युर्जनादन्येति कल्पना कृता अनभिज्ञैरिति शेषः ॥ ४९ ॥ नष्टात् जातमिति शेषः ॥ ५० ॥ चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

धर्मराजः पुनर्वाक्यं प्रसाद्यैनमथाब्रवीत् ॥ १
युधिष्ठिर उवाच ।
गुरवः पुण्यकर्माणः शक्रप्रतिमविक्रमाः ।
पूर्वं राजर्षयो ब्रह्मन्कियन्तो मृत्युना हताः ॥ २
भूय एव तु मां तथ्यैर्वचोभिरभिबृंहय ।
राजर्षीणां पुराणानां समाश्वासय कर्मभिः ॥ ३
कियन्त्यो दक्षिणा दत्ताः काश्च दत्ता महात्मभिः ।
राजर्षिभिः पुण्यकृद्भिस्तद्भवान्प्रब्रवीतु मे ॥ ४
'व्यास उवाच ।
अन्येपि यज्वनां लोका अन्ये चापि तपस्विनाम् ।
क्षमावतां च त्रींल्लोकाञ्शूरा गच्छन्ति भारत ॥५
क्षत्रियस्य तु संग्रामे शत्रून्हत्वा हतस्य वा ।
फलमत्यन्तमित्याहुर्धर्मशास्त्रविदो जनाः ॥ ६
वेदविद्याव्रतस्नाता यज्वानः पुत्रिणश्च ये ।
तेभ्यः परार्थ्या यज्वानो यज्वभ्यश्च तनुत्यजः ॥७
स वीरो यज्वनो नित्यं क्षत्रियानार्जुनिर्गतः ।
लोकान्पुण्यतमानिष्टानिति विद्धि विशांपते ॥८
सर्वेषां नृपसिंहानां शृणु यज्ञान्नृपोत्तम ।
तानतिक्रम्य गच्छन्ति स्वर्गकामास्तनुत्यजः ॥९
युधिष्ठिर उवाच ।
सर्वेषां यज्वनां यज्ञं श्रोतुमिच्छामि सुव्रत ।
दक्षिणाश्चानुरूपेभ्यो दत्ता राजर्षिसत्तमैः ॥'१०
व्यास उवाच ।
शैब्यस्य नृपतेः पुत्रः सृञ्जयो नाम नामतः ।
सखायौ तस्य चैवोभौ ऋषी पर्वतनारदौ ॥ ११
तौ कदाचिद्गृहं तस्य प्रविष्टौ तद्दिदृक्षया ।
विधिवच्चार्चितौ तेन प्रीतौ तत्रोषतुः सुखम् ॥१२
तं कदाचित्सुखासीनं ताभ्यां सह शुचिस्मिता ।
दुहिताऽभ्यागमत्कन्या सृञ्जयं वरवर्णिनी ॥ १३
तयाऽभिवादितः कन्यामभ्यनन्दद्यथाविधि ।
तत्सलिङ्गाभिराशीर्भिरिष्टाभिरभितः स्थिताम् १४
तां निरीक्ष्याब्रवीद्वाक्यं पर्वतः प्रहसन्निव ।
कस्येयं चञ्चलापाङ्गी सर्वलक्षणसंमता ॥ १५
उषा स्विद्भाः स्विदर्कस्य ज्वलनस्य शिखापि वा ।
श्रीर्ह्रीः कीर्तिर्धृतिः पुष्टिः सिद्धिश्चन्द्रमसः प्रभा १६
सञ्जय उवाच
एवं ब्रुवाणं देवर्षिं नृपतिः सृञ्जयोऽब्रवीत् ।
ममेयं भगवन्कन्या वर्या वरमभीप्सति ॥ १७
नारदस्त्वब्रवीदेनं देहि मह्यमिमां नृप ।
भार्यार्थं सुमहच्छ्रेयः प्राप्तुं चेदिच्छसे नृप ॥ १८
ददानीत्येव संहृष्टः सृञ्जयः प्राह नारदम् ।
व्यास उवाच ।
'एवमुक्ते नृपतिना क्रोधपर्याकुलेक्षणः ।'
पर्वतस्तु सुसंक्रुद्धो नारदं वाक्यमब्रवीत् ॥ १९
पूर्वं ममैव मनसा विद्धि भार्या वृतामृषे ।
यस्माद्पाचरस्तस्मात्स्वर्गमार्गं न गच्छसि ॥ २०
एवमुक्तो नारदस्तं प्रत्युवाचोत्तरं वचः ।
मनोवाग्बुद्धिसंभाषा सत्यं तोयमथाग्नयः ॥ २१
पाणिग्रहणमन्त्राश्च प्रथितं दारलक्षणम् ।
न त्वेषां निश्चिता निष्ठा त्वया सा मनसा स्मृता २२
'एवं विद्वांस्तु मां यस्मादनुव्याहृतवानसि ।'
तस्मात्त्वमपि न स्वर्गं गमिष्यसि मया विना ।
अन्योन्यमेवं शप्त्वा वै तस्थतुस्तत्र तौ तदा ॥ २३
अथ सोऽपि नृपो विप्रान्पानाच्छादनभोजनैः ।
पुत्रकामः परं शक्त्या यत्नाच्चोपाचरच्छुचिः ॥२४
तस्य प्रसन्ना विप्रेन्द्राः कदाचित्पुत्रदर्शिनः ।
तपःस्वाध्यायनिरता वेदवेदाङ्गपारगाः ॥ २५
सहिता नारदं प्राहुर्देह्यस्मै पुत्रमीप्सितम् ।
तथेत्युक्त्वा द्विजैरुक्तः सृञ्जयं नारदोऽब्रवीत् २६
तुभ्यं प्रसन्ना राजर्षे पुत्रमीप्सन्ति ब्राह्मणाः ।
वरं वृणीष्व भद्रं ते यादृशं पुत्रमीप्सितम् ॥ २७
तथोक्तः प्राञ्जली राजा पुत्रं वव्रे गुणान्वितम्
यशस्विनं कीर्तिमन्तं तेजस्विनमरिंदमम् ॥ २८

तत्सलिङ्गाभिस्तस्यानुरूपाभिः । अभितः पार्श्वतः ॥ १४ ॥ नत्वेषा निश्चिता निष्ठा मैत्री सप्तपदी सतां इति ङ. पाठः । निष्ठा सप्तपदी सतां इति घ. पाठः । सप्तपदी स्मृता इति झ. पाठः ॥२२॥ शप्त्वावै तत्र वत्सरमूषतुः इति क. पाठः ॥ २३॥ पुत्रमीप्सवः इति घ. ङ. झ. पाठः ॥ २५ ॥ द्विजैरुक्तो नारदस्तथेत्युक्त्वा सृञ्जयमब्रवीदित्यन्वयः ॥ २६ ॥

यस्य मूत्रं पुरीषं च क्लेदः स्वेदश्च काञ्चनम् ।
'सर्वं भवेत्प्रसादाद्वै तादृशं तनयं वृणे ॥ २९
व्यास उवाच ।
तथा भविष्यतीत्युक्ते जज्ञे तस्येप्सितः सुतः ।
काञ्चनस्याकरः श्रीमान्प्रसादाद्वै सुकाङ्क्षितः॥३०
रुदितस्य च नेत्राभ्यामपतत्तस्य नेत्रजम् ।
मूत्रं पुरीषं स्वेदश्च सर्वं भवति काञ्चनम् ।'
सुवर्णष्ठीविरित्येव तस्य नामाभवत्कृतम् ॥ ३१
तस्मिन्वरप्रदानेन वर्धयत्यमितं धनम् ।
कारयामास नृपतिः सौवर्णं सर्वमीप्सितम् ॥३२
गृहप्राकारदुर्गाणि ब्राह्मणावसथान्यपि ।
शय्यासनानि यानानि स्थालीपिठरभाजनम्॥३३
तस्य राज्ञोऽपि यद्वेश्म बाह्याश्चोपस्कराश्च ये ।
सर्वं तत्काञ्चनमयं कालेन परिवर्धितम् ॥ ३४
अथ दस्युगणाः श्रुत्वा दृष्ट्वा चैनं तथाविधम् ।
संभूय तस्य नृपतेः समारब्धाश्चिकीर्षितुम् ॥ ३५
केचित्तत्राब्रुवन्राज्ञः पुत्रं गृह्णीम वै स्वयम्
सोऽस्याकरः काञ्चनस्य तस्य यत्नं चरामहे ॥ ३६
ततस्ते दस्यवो लुब्धाः प्रविश्य नृपतेर्गृहम् ।
राजपुत्रं तथाऽऽजह्रुः सुवर्णष्ठीविनं बलात् ॥ ३७
गृह्यैनमनुपायज्ञा नीत्वाऽरण्यमचेतसः ।
हत्वा विशस्य चापश्यँल्लुब्धा वसु न किंचन ॥ ३८
तस्य प्राणैर्विमुक्तस्य नष्टं तत्काञ्चनं वरम् ।
दस्यवश्च तदाऽन्योन्यं जघ्नुर्मूर्खा विचेतसः ॥ ३९
हत्वा परस्परं नष्टाः कुमारं चाद्भुतं भुवि ।
असंभाव्यं गता घोरं नरकं दुष्टकारिणः ॥ ४०
तं दृष्ट्वा निहतं पुत्रं वरदत्तं महातपाः ।
विललाप सुदुःखार्तो बहुधा करुणं नृपः ॥ ४१
विलपन्तं निशम्याथ पुत्रशोकहतं नृपम् ।
प्रत्यदृश्यत देवर्षिर्नारदस्तस्य सन्निधौ ॥ ४२
उवाच चैनं दुःखार्तं विलपन्तमचेतसम् ।
सृञ्जयं नारदो यद्यत्तन्निबोध युधिष्ठिर ॥ ४३
नारद उवाच ।
'त्यज शोकं महाराज वैक्लव्यं त्यज बुद्धिमन् ।
न मृतः शोचतो जीवेन्मुह्यतो वा नराधिप ॥ ४४
त्यज शोकं नृपश्रेष्ठ न शोचन्ति भवद्विधाः ।
वीरो भवान्महाराज ज्ञानवृद्धोऽसि मे मतः ।'
कामानामवितृप्तस्त्वं सृञ्जयेह मरिष्यसि ॥ ४५
यस्य चैते वयं गेहे उषिता ब्रह्मवादिनः ।
आविक्षितं मरुत्तं च मृतं सृञ्जय शुश्रुम ॥ ४६
संवर्तो याजयामास स्पर्धया वै बृहस्पतेः ।
यस्मै राजर्षये प्रादाद्धनं स भगवान्प्रभुः ।
हैमं हिमवतः पादं यियक्षोर्विविधैः सवैः ॥ ४७
यस्य सेन्द्रामरगणा बृहस्पतिपुरोगमाः ।
देवा विश्वसृजः सर्वे यजनान्ते समासते ।
यज्ञवाटस्य सौवर्णाः सर्वे चासन्परिच्छदाः ॥ ४८
यस्य सर्वं तदा ह्यन्नं मनोभिप्रायगं शुचि ।
कामतो बुभुजुर्विप्राः सर्वे चान्नार्थिनो द्विजाः ।
पयो दधि घृतं क्षौद्रं भक्ष्यं भोज्यं च शोभनम्॥४९
यस्य यज्ञेषु सर्वेषु वासांस्याभरणानि च ।
ईप्सितान्युपतिष्ठन्ते प्रहृष्टान्वेदपारगान् ॥ ५०
मरुतः परिवेष्टारो मरुत्तस्याभवन्गृहे ।
आविक्षितस्य राजर्षेर्विश्वेदेवाः सभासदः ॥ ५१
यस्य वीर्यवतो राज्ञः सुवृष्ट्या सस्यसम्पदः .
हविर्भिस्तर्पिता येन सम्यक्क्लृप्तैर्दिवौकसः ॥ ५२
ऋषीणां च पितॄणां च देवानां सुखजीविनाम् ।
ब्रह्मचर्यश्रुतिमुखैः सर्वैर्दानैश्च सर्वदा ॥ ५३
शयनासनपानानि स्वर्णराशीश्च दुस्त्यजाः ।
तत्सर्वममितं वित्तं दत्तं विप्रेभ्य इच्छया ॥ ५४
सोनुध्यातस्तु शक्रेण प्रजाः कृत्वा निरामयाः ।
श्रद्दधानो जिताँल्लोकान्गतः पुण्यदुहोऽक्षयान् ॥
सप्रजः सनृपामात्यः सदारापत्यबान्धवः ।
यौवनेन सहस्राब्दं मरुत्तो राज्यमन्वशात् ॥ ५६
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।

क्लेदः श्लेष्मादिः ॥ २९ ॥ सुवर्णष्ठीविरित्यनेन गण्डूषादिकमपि काञ्चनं भवतीति सूचितम् ॥ ३१ ॥ चिकीर्षितुमपकारं कर्तुम् । कॄ हिंसायामित्यस्य रूपम् ॥३५॥ सवैः यज्ञैः ॥४७॥ चतुर्भद्रतरः धर्मज्ञानवैराग्यैश्वर्याणि चत्वारि भद्राणि। धर्मार्थकामबलानीत्यन्ये

पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ५७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

नारदेन सृञ्जयंप्रति सुहोत्रचरित्रकीर्तनम् ॥ १ ॥

नारद उवाच ।
सुहोत्रं नाम राजानं मृतं सृञ्जय शुश्रुम ।
एकवीरमशक्यं तममरैरभिवीक्षितुम् ॥ १
यः प्राप्य राज्यं धर्मेण ऋत्विग्ब्रह्मपुरोहितान् ।
संमान्य चात्मनः श्रेयः पृष्ट्वा तेषां मते स्थितः ॥ २
प्रजानां पालनं धर्मो दानमिज्या द्विषज्जयः ।
एतत्सुहोत्रो विज्ञाय धर्म्यमैच्छद्धनागमम् ॥ ३
धर्मेणाराधयन्देवान्बाणैः शत्रूञ्जयंस्तथा ।
सर्वाण्यपि च भूतानि स्वगुणैरन्वरञ्जयत् ॥ ४
यो भुक्त्वेमां वसुमतीं म्लेच्छाटविकवर्जिताम् ।
यस्मै ववर्ष पर्जन्यो हिरण्यं परिवत्सरान् ॥ ५
हैरण्यास्तत्र वाहिन्यः स्वैरिण्यो व्यवहन्पुरा ।
ग्राहान्कर्कटकांश्चैव मत्स्यांश्च विविधान्बहून् ॥ ६
कामान्वर्षति पर्जन्यो रूप्याणि विविधानि च ।
सौवर्णान्यप्रमेयाणि वाप्यश्च क्रोशसंमिताः ॥ ७
सहस्रं वामनान्कुब्जान्नक्रान्मकरकच्छपान् ।
सौवर्णान्विहितान्दृष्ट्वा ततोऽस्मयत वै तदा ॥ ८
तत्सुवर्णमपर्यन्तं राजर्षिः कुरुजाङ्गले ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत ॥ ९
सोऽश्वमेधसहस्रेण राजसूयशतेन च ।
पुण्यैः क्षत्रिययज्ञैश्च प्रभूतवरदक्षिणैः ॥ १०
काम्यनैमित्तिकाजस्रैरिष्टैष्टां गतिमाप्तवान् ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ ११
पुत्रात्पुण्यतरस्तुभ्य मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ १२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

नारदेन सृञ्जयंप्रति अङ्गराजगुणवर्णनम् ॥ १ ॥

नारद उवाच ।
अङ्गं च पौरवं वीरं मृतं सृञ्जय शुश्रुम ।
सहस्रं यः सहस्राणां श्वेतानश्वानवासृजत् ॥ १
तस्याश्वमेधे राजर्षेर्देशाद्देशात्समीयुषाम् ।
शिक्षाक्षरविधिज्ञानां नासीत्सङ्ख्या विपश्चिताम् ॥ २
वेदविद्याव्रतस्नाता वदान्याः प्रियदर्शनाः ।
सुभिक्षाच्छादनगृहाः सुशय्यासनभोजनाः ॥ ३
नटनर्तकगन्धर्वैः पूर्णकैर्वर्धमानकैः ।
नित्योद्योगैश्च क्रीडद्भिस्तत्र स्म परिहर्षिताः ॥ ४
यज्ञे यज्ञे यथाकालं दक्षिणाः सोऽत्यकालयत् ।
द्विपान्दशसहस्राख्यानदात्काञ्चनसंवृतान् ॥ ५
सध्वजान्सपताकांश्च रथान्हेममयांस्तथा ।
यः सहस्रं सहस्राणि कन्या हेमविभूषिताः ॥ ६
धूर्युजाश्वगजारूढाः सगृहक्षेत्रगोशताः ।

---

तुभ्यं तव । अयज्वानमदक्षिण्यं पुत्रं अभिलक्ष्य मानुतप्यथाः हे श्वैत्य श्वित्यपुत्र इति उदाहरन्नारदः सृञ्जयं प्रतीति व्यासवाक्यम् । अदाक्षिण्यं इति झ॰ पाठः ॥५७॥ पञ्चपञ्चाशत्तमोऽध्यायः ॥५५॥

हैरण्या हिरण्मयाः ग्राहादयोऽपि । वाहिन्यो नद्यः । स्वैरिण्यः सर्वजनोपभोग्याः ॥ ६ ॥ षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

राजर्षेः सर्वे देवाः समाययुः इति ढ॰ पाठः ॥ २ ॥ पूर्णकैः स्वर्णचूडैः । वर्धमानकैः आरार्तिकहस्तैः ॥ ४ ॥ धूर्युजा रथाः ॥ ७ ॥ सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

शतं शतसहस्राणि स्वर्णमालानथर्षभान् ॥ ७
गवां सहस्रानुचरान्दक्षिणामत्यकालयत् ।
हेमशृङ्गो रौप्यखुराः सवत्साः कांस्यदोहनाः ॥८
दासीदासखरोष्ट्रांश्च प्रादादाजाविकं बहु ।
रत्नानां विविधानां च विविधांश्चान्नपर्वतान् ॥ ९
तस्मिन्संविततते यज्ञे दक्षिणामत्यकालयत् ।
तत्रास्य गाथा गायन्ति ये पुराणविदो जनाः १०
'अङ्गस्य यजमानस्य अपि विष्णुपदे वयम् ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
देवमानुषगन्धर्वांश्चात्यरोचन्त दक्षिणाः ॥' ११
अङ्गस्य यजमानस्य स्वधर्माधिगताः शुभाः ।
गुणोत्तरास्तु क्रतवस्तस्यासन्सार्वकामिकाः ॥ १२
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ १३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

नारदेन सृञ्जयंप्रति शिबिवैभववर्शंसनम् ॥ १ ॥

नारद उवाच

शिबिमौशीनरं चापि मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं सर्वां चर्मवत्पर्यवेष्टयत् ॥ १
साद्रिद्वीपार्णववनां रथघोषेण नादयन् ।
स शिबिर्यष्टुमन्विच्छन्मुख्यः सर्वसपत्नजित् ॥ २
तेन यज्ञैर्बहुविधैरिष्टं पर्याप्तदक्षिणैः ।
आवांहस्य जनानन्यानवाप वसु पुष्कलम् ॥ ३
सर्वमूर्धाभिषिक्तानां संमतः सोऽभवद्युधि ।
अजयच्चाश्वमेधैर्यो विजित्य पृथिवीमिमाम् ॥ ४
निरर्गलैर्बहुफलैर्निष्ककोटिसहस्रदः ।
'बिभर्ति दक्षिणा यस्य गङ्गायाः स्रोत आवृणोत्' ५
हस्त्यश्वपशुभिर्धान्यैर्मृगैर्गोजाविभिस्तथा ।
विविधैः पृथिवीं पुण्यां शिबिर्ब्राह्मणसात्करोत् ॥६
यावत्यो वर्षतो धारा यावत्यो दिवि तारकाः ।
यावत्यः सिकता गाङ्ग्यो यावन्मेरोर्महोपलाः ॥ ७
उदन्वति च यावन्ति रत्नानि प्राणिनोऽपि च
तावतीरददद्गा वै शिबिरौशीनरोऽध्वरे ॥ ८
नोद्यन्तारं धुरस्तस्य कंचिदन्यं प्रजापतिः ।
भूतं भव्यं भवन्तं वा नाध्यगच्छन्नरोत्तमम् ॥ ९
तस्यासन्विविधा यज्ञाः सर्वकामैः समन्विताः ।
हेमयूपासनगृहा हेमप्राकारतोरणाः ॥ १०
शुचिस्वाद्वन्नपानं च ब्राह्मणाः प्रयुतायुताः ।
नानाभक्ष्यैः प्रियकथाः पयोदधिमहाह्रदाः ॥ ११
तस्यासन्यज्ञवाटेषु नद्यः शुभ्रान्नपर्वताः ।
पिबत स्नात खादध्वमिति यत्रोच्यते जनैः ॥ १२
यस्मै प्रादाद्वरं रुद्रस्तुष्टः पुण्येन कर्मणा ।
अक्षयं ददतो वित्तं श्रद्धा कीर्तिस्तथा क्रियाः १३
यथोक्तमेव भूतानां प्रियत्वं स्वर्गमुत्तमम् ।
एतॉंल्लब्ध्वा वरानिष्टाञ्शिबिः काले दिवं गतः १४
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ १५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

पर्यवेष्टयत् स्वाधीनामकरोत् ॥ १ ॥ कोटिसहस्रशः इति क. घ. ङ. पाठः ॥ ५ ॥ तस्य शिबेर्धुरः कार्यभारस्य उद्यन्तारं वोढारं प्रजापतिः स्रष्टा स्वसृष्टौ नाध्यगच्छत् ॥ ९ ॥ ददतो राज्ञो वित्तादिकमक्षयमस्त्विति रुद्रो वरं ददाविति संबन्धः ॥ १३ ॥ अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

सृञ्जयंप्रति नारदेन राममहिमानुवर्णनम् ॥ १ ॥

नारद उवाच ।
रामं दाशरथिं चैव मृतं सृञ्जय शुश्रुम ।
यं प्रजा अन्वमोदन्त पिता पुत्रमिवौरसम् ।
असङ्ख्येया गुणा यस्मिन्नासन्नमिततेजसि ॥ १
यश्चतुर्दशवर्षाणि निदेशात्पितुरच्युतः ।
वने वनितया सार्धमवसल्लक्ष्मणाग्रजः ॥ २
जघान च जनस्थाने राक्षसान्मनुजर्षभः ।
तपस्विनां रक्षणार्थं सहस्राणि चतुर्दश ॥ ३
तत्रैव वसतस्तस्य रावणो नाम राक्षसः ।
जहार भार्यां वैदेहीं संमोह्यैनं सहानुजम् ॥ ४
'रामो हृतां राक्षसेन भार्यां श्रुत्वा जटायुषः ।
आतुरः शोकसंतप्तो रामोऽगच्छद्धरीश्वरम् ॥ ५
तेन रामः सुसंगम्य वानरैश्च महाबलैः ।
आजगामोदधेः पारं सेतुं कृत्वा महार्णवे ॥ ६
तत्र हत्वा तु पौलस्त्यान्ससुहृद्गणबान्धवान् ।
मायाविनं महाघोरं रावणं लोककण्टकम् ॥' ७
सुरासुरैरवध्यं तं देवब्राह्मणकण्टकम् ।
जघान स महाबाहुः पौलस्त्यं सगणं रणे ॥ ८
'हत्वा तत्र रिपुं सङ्ख्ये भार्यया सह संगतः ।
स च लङ्केश्वरं चक्रे धर्मात्मानं विभीषणम् ॥ ९
भार्यया सह संयुक्तस्ततो वानरसेनया ।
अयोध्यामागतो वीरः पुष्पकेण विराजता ॥१०
तत्र राजन्प्रविष्टः सन्नयोध्यायां महायशाः ।
मातृवयस्यान्सचिवानृत्विजः सपुरोहितान् ॥ ११
शुश्रूषमाणः सततं मन्त्रिभिश्चाभिषेचितः ।
विसृज्य हरिराजानं हनुमन्तं सहाङ्गदम् ॥ १२
भ्रातरं भरतं वीरं शत्रुघ्नं चैव लक्ष्मणम् ।
पूजयन्परया प्रीत्या वैदेह्या चाभिपूजितः ॥ १३
दशवर्षसहस्राणि दशवर्षशतानि च ।
चतुःसागरपर्यन्तां पृथिवीमन्वशासत ॥ १४
अश्वमेधशतैरीजे क्रतुभिर्भूरिदक्षिणैः ।
यश्च विप्रप्रसादेन सर्वकामानवाप्य च ॥' १५
संप्राप्य विधिवद्राज्यं सर्वभूतानुकम्पनः ।
'सर्वद्वीपानवष्टभ्य प्रजा धर्मेण पालयन् ॥' १६
स निर्गलं मुख्यतममश्वमेधशतं प्रभुः ।
आजहार सुरेशस्य हविषा मुदमाहरन् ।
अन्यैश्च विविधैर्यज्ञैरीजे बहुगुणैर्नृपः ॥ १७
क्षुत्पिपासेऽजयद्रामः सर्वरोगांश्च देहिनाम् ।
सततं गुणसंपन्नो दीप्यमानः स्वतेजसा ॥ १८
अतिसर्वाणि भूतानि रामो दाशरथिर्बभौ ।
ऋषीणां देवतानां च मानुषाणां च सर्वशः ।
पृथिव्यां सह वासोऽभूद्रामे राज्यं प्रशासति ॥१९
नाहीयत तदा प्राणः प्राणिनां न तदा व्यथा ।
प्राणापानौ समावास्तां रामे राज्यं प्रशासति २०
पर्यदीप्यन्त तेजांसि तदाऽनर्थाश्च नाभवन् ।
दीर्घायुषः प्रजाः सर्वा युवा न म्रियते तदा ॥ २१
वेदैश्चतुर्भिः सुप्रीताः प्राप्नुवन्ति दिवौकसः ।
हव्यं कव्यं च विविधं निष्पूर्तं हुतमेव च ॥ २२
अदंशमशका देशा नष्टव्यालसरीसृपाः ।
नाप्सु प्राणभृतां मृत्युर्नाकाले ज्वलनोऽदहत् २३
अधर्मरुचयो लुब्धा मूर्खा वा नाभवंस्तदा ।
शिष्टेष्टप्राज्ञकर्माणः सर्वे वर्णास्तदाऽभवन् ॥ २४
स्वधां पूजां च रक्षोभिर्जनस्थाने प्रणाशिताम् ।
प्रादान्निहत्य रक्षांसि पितृदेवेभ्य ईश्वरः ॥ २५
सहस्रपुत्राः पुरुषा दशवर्षशतायुषः ।
न च ज्येष्ठाः कनिष्ठेभ्यस्तदा श्राद्धानि कुर्वते ॥ २६

---

स निरर्गलजान्मुख्यानश्वमेधाञ्शतं प्रभुः इति ङ. पाठः । आजहार महायज्ञं प्रजा धर्मेण पालयन् । निरर्गलं सजारूथ्यमश्वमेधं च तं विभुः इति झ. पाठः । आजहार रमेशस्य इति ङ. पाठः ॥ १७ ॥ पृथिव्यां मानुषाणां प्रत्यक्षा देवादयो विचरन्ति पुण्यातिशयात् ॥ १९ ॥ प्राणो बलम् ॥ २० ॥ निष्पूर्तं तटाकारामादि । हुतमिष्टम् । सुप्रीता ब्राह्मणाः शास्त्रपारगाः इति ङ. पाठः ॥ २२ ॥

श्यामो युवा लोहिताक्षो मत्तमातङ्गविक्रमः
आजानुबाहुः सुभुजः सिंहस्कन्धो महाबलः॥ २७
दशवर्षसहस्राणि दशवर्षशतानि च।
सर्वभूतमनःकान्तो रामो राज्यमकारयत्॥ २८
रामो रामो राम इति प्रजानामभवत्कथा
रामभूतं जगदभूद्रामे राज्यं प्रशासति॥ २९
चतुर्विधाः प्रजा रामः स्वर्गं नीत्वा दिवं गतः।
आत्मेच्छया प्रतिष्ठाप्य राजवंशमिहाष्टधा॥ ३०
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत्॥ ३१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये एकोनषष्टितमोऽध्यायः॥ ५९ ॥

---

## षष्टितमोऽध्यायः ॥ ६० ॥

नारदेन सृञ्जयंप्रति भगीरथचरित्रकथनम्॥ १ ॥

---

नारद उवाच।
भगीरथं च राजानं मृतं सृञ्जय शुश्रुम।
'परित्राणाय पूर्वेषां येन गङ्गाऽवतारिता॥ १
यस्येन्द्रो बाहुवीर्येण प्रीतो राज्ञो महात्मनः।
सोऽश्वमेधशतैरीजे समाप्तवरदक्षिणैः॥ २
हविर्मन्त्रान्नसंपन्नैर्देवानामादधौ मुदम्।'
येन भागीरथी गङ्गा चयनैः काञ्चनैश्चिता॥ ३
यः सहस्रं सहस्राणां कन्या हेमविभूषिताः।
राज्ञश्च राजपुत्रांश्च ब्राह्मणेभ्यो ह्यमन्यत॥ ४
सर्वा रथगताः कन्या रथाः सर्वे चतुर्युजः
रथेरथे शतं नागाः सर्वे वै हेममालिनः॥
सहस्रमश्वाश्चैकैकं गजानां पृष्ठतोऽन्वयुः।
अश्वेअश्वे शतं गावो गवां पश्चादजाविकम्॥ ६
तेनाक्रान्ता जनौघेन दक्षिणा भूयसीर्ददत्।
उपह्वरेऽतिव्यथिता तस्याङ्के निषसाद ह॥ ७
तथा भागीरथी गङ्गा ह्यूर्वशी ह्यभवत्पुरा।
दुहितृत्वं गता राज्ञः पुत्रत्वमगमत्तदा॥ ८
तां तु गाथां जगुः प्रीता गन्धर्वाः सूर्यवर्चसः।
पितृदेवमनुष्याणां शृण्वतां वल्गुवादिनः॥ ९
भगीरथं यजमानमैक्ष्वाकुं भूरिदक्षिणम्।
गङ्गा समुद्रगा देवी वव्रे पितरमीश्वरम्॥ १०
तस्य सेन्द्रैः सुरगणैर्देवैर्यज्ञः स्वलङ्कृतः।
सम्यक्परिगृहीतश्च शान्तविघ्नो निरामयः॥ ११
यो य इच्छेत विप्रो वै यत्रयत्रात्मनः प्रियम्।
भगीरथस्तदा प्रीतस्तत्रतत्राददद्वशी॥ १२
नादेयं ब्राह्मणस्यासीद्यस्य यत्स्यात्प्रियं धनम्।
सोऽपि विप्रप्रसादेन ब्रह्मलोकं गतो नृपः॥ १३
येन यातौ मखमुखौ दिशाशाविह पादपाः।
तेनावस्थातुमिच्छन्ति तं गत्वा राजमीश्वरम्॥ १४
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत्॥ १५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये षष्टितमोऽध्यायः॥ ६० ॥

---

रामाद्रामं जगदभूत् इति घ. ङ. पाठः। तत्र रामं अभिरामम् ॥ २९ ॥ एकोनषष्टितमोऽध्यायः॥ ५९ ॥

चयनैः काञ्चनैश्चिता स्वर्णेष्टकमयैः क्रत्वर्थस्थण्डिलैर्व्याप्ता चयनैरिष्टिकासोपानैर्वा कूलद्वये उद्गमात्संगमपर्यन्तं निचितेति वार्थः ॥ ३ ॥ राज्ञश्च राजपुत्रांश्चातिक्रम्येति शेषः। ब्राह्मणेभ्यः अमन्यत दत्तवान्॥ ४ ॥ येन हेतुना उपह्वरे समीपे भूयसीर्दक्षिणा ददत् राजा आस्ते तेन हेतुना गङ्गा जनौघभारेण आक्रान्ता वेत्रयष्टिवत्तीरप्रदेशे नतिं प्राप्ता सती अतिव्यथिताऽतस्तस्याङ्के निषसादह। दक्षिणाभारेण तीरप्रदेशेऽवनते प्रवाहाम्बु राज्ञोऽङ्कपर्यन्तमागतमित्यर्थः॥७॥ पुत्रत्वं नरकात्राणकर्तृत्वम्॥८॥ वशी योगी योगप्रभावात्। यो यत्र देशे यत् इच्छेत्स तत्र प्राप्नुयादित्यर्थः॥१२॥ येऽनुयाता अभिमुखा दिशमद्यापि पादपाः। आनतास्तस्थुरिच्छन्तस्तमन्वागन्तुमीश्वरम् इति क. पाठः। अनेनात्रास्तस्थुः इति क. ङ. पाठः॥ १४ ॥ षष्टितमोऽध्यायः॥६०॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

नारदेन सृञ्जयंप्रति दिलीपप्रभाववर्णनम् ॥ १ ॥

नारद उवाच ।
दिलीपं चापि राजेन्द्र मृतं सृञ्जय शुश्रुम ।
यस्य यज्ञशतेष्वासन्प्रयुतायुतशो द्विजाः ॥ १
तन्त्रज्ञानार्थसंपन्ना यज्वानः पुत्रपौत्रिणः ।
'स्वच्छन्दाः पुण्यगन्धाश्च सुभक्षा हेममालिनः ।
यस्य कर्माणि भूरीणि कथयन्ति मनीषिणः ॥' २
य इमां वसुसंपूर्णां वसुधां वसुधाधिपः ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत ॥ ३
'राजानो वितते यज्ञे उपहारानुपाहरन् ।'
दिलीपस्य तु यज्ञेषु कृतः पन्था हिरण्मयः ।
तं धर्म इव कुर्वाणाः सेन्द्रा देवाः समागमन् ॥४
सहस्रं यत्र मातङ्गा अगच्छन्पर्वतोपमाः ।
चाभवत्सर्वं सदः परमभास्वरम् ॥ ५
रसानां चाभवन्कुल्या भक्ष्याणां चापि पर्वताः ।
सहस्रव्यामा नृपते यूपाश्चासन्हिरण्मयाः ॥ ६
चषालप्रचषालौ च यस्य यूपे हिरण्मयौ ।
नृत्यन्त्यप्सरसो यत्र षट्सहस्राणि सप्त च ॥ ७
यत्र वीणां वादयति प्रीत्या विश्वावसुः स्वयम् ।
सर्वभूतान्यमन्यन्त मम वादयतीति तम् ॥ ८
रागखाण्डवभोज्यैश्च मत्ताः पतिषु शेरते ॥ ९
तदेतदद्भुतं मन्ये अन्यैर्न सदृशं नृपैः ।
यदप्सु युध्यमानस्य चक्रे न परिपेततुः ॥ १०
राजानं दृढधन्वानं दिलीपं सत्यवादिनम् ।
येऽपश्यन्भूरिदक्षिण्यं तेऽपि स्वर्गजितो नराः ११
पञ्च शब्दा न जीर्यन्ति दिलीपस्य निवेशने ।
स्वाध्यायघोषो ज्याघोषः पिबताश्नीत खादत १२
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ १३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये एकषष्टितमोऽध्यायः ॥ ६१ ॥

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

नारदेन सृञ्जयंप्रति मांधातृचरिताभिधानम् ॥ १ ॥

नारद उवाच ।
मांधातारं यौवनाश्वं मृतं सृञ्जय शुश्रुम ।
यं देवावश्विनौ गर्भं पितुः पार्श्वे चकर्षतुः ॥ १
मृगयां विचरन्राजा तृषितः क्लान्तवाहनः ।
धूमं दृष्ट्वाऽगमत्सत्रं पृषदाज्यमवाप सः ॥ २
तं दृष्ट्वा युवनाश्वस्य जठरे रविसंनिभम् ।
गर्भं निरूहतुर्देवावश्विनौ भिषजां वरौ ॥ ३
तं दृष्ट्वा पितुरुत्सङ्गे शयानं देववर्चसम् ।
अन्योन्यमब्रुवन्देवाः कमयं धास्यतीति वै ॥ ४
मामेवायं धयत्वग्र इति ह स्माह वासवः ।
ततोऽङ्गुलिभ्यो हीन्द्रस्य प्रादुरासीत्पयोऽमृतम् ॥५
मां धास्यतीति कारुण्याद्यदिन्द्रो ह्यन्वकम्पयत् ।
तस्मात्तु मांधातेत्येवं नाम तस्याद्भुतं कृतम् ॥ ६
ततस्तु धारां पयसो घृतस्य च महात्मनः ।

---

तन्त्र क्रिया ॥ २ ॥ पन्था हिरण्मयः । हिरण्मय्यः स्रुचो भवन्तीति विधिमार्गस्तत आरभ्य प्रवृत्त इत्यर्थः ॥ ४ ॥ रागखण्डवं गुडोदनम् । पर्पटिकेति वैदर्भाः । यद्योषा हेमसंछन्ना मत्ताः पथिषु शेरते इति ङ. ढ. पाठः । पथि सुशेरते इति क. पाठः । रागखाण्डवभोज्यैश्च मत्ताः पथिषु शेरते इति घ. पाठः ॥ ९ ॥ अप्सु न परिपेततुः न ममज्जतुः । यस्याप्ययुध्यमानस्य चक्रे न परिमर्दनम् इति क. पाठः ॥ १० ॥ एकषष्टितमोऽध्यायः ॥ ६१ ॥

तस्मान्मांधातरित्येवं इति क. पाठः ॥ ६ ॥

तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥७
अपिबत्पाणिमिन्द्रस्य स चाप्यह्नाऽभ्यवर्धत ।
सोऽभवद्द्वादशसमो द्वादशाहेन वीर्यवान् ॥ ८
इमां च पृथिवीं कृत्स्नामेकाह्ना स व्यजीजयत् ।
धर्मात्मा धृतिमान्वीरः सत्यसन्धो जितेन्द्रियः ९
जनमेजयं सुधन्वानं गयं पूरुं बृहद्रथम् ।
असितं च नृगं चैव मांधाता मानवोऽजयत् ॥१०
उदेति च यतः सूर्यो यत्र च प्रतितिष्ठति ।
तत्सर्वं यौवनाश्वस्य मांधातुः क्षेत्रमुच्यते ॥ ११
सोऽश्वमेधशतैरिष्ट्वा राजसूयशतेन च ।
अददद्रोहितान्मत्स्यान्ब्राह्मणेभ्यो विशांपते ॥१२
हैरण्यान्योजनोत्सेधानायतान्शतयोजनम् ।
बहुप्रकारान्सुस्वादून्भक्ष्यभोज्यान्नपर्वतान् ॥ १३
अतिरिक्तं ब्राह्मणेभ्यो भुञ्जानो हीयते जनः १४
भक्ष्यान्नपाननिचयाः शुशुभुस्त्वन्नपर्वताः ।
घृतह्रदाः सूपपङ्का दधिफेना गुडोदकाः ॥ १५
रुरुधुः पर्वतान्नद्यो मधुक्षीरवहाः शुभाः ।
देवासुरा नरा यक्षा गन्धर्वोरगपक्षिणः ॥ १६
विप्रास्तत्रागताश्चासन्वेदवेदाङ्गपारगाः ।
ब्राह्मणा ऋषयश्चापि नासंस्तत्राविपश्चितः ॥ १७
समुद्रान्तां वसुमतीं वसुपूर्णां तु सर्वतः ।
स तां ब्राह्मणसात्कृत्वा जगाम स्वान्गृहान्प्रति १८
'राजाऽपि विविधैरिष्ट्वा यज्ञैर्विविधदक्षिणैः ।'
गतः पुण्यकृतां लोकान्व्याप्य स्वयशसा दिशः१९
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ २०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

नारदेन सृञ्जयंप्रति ययातिचरितकीर्तनम् ॥ १ ॥

नारद उवाच ।
ययातिं नाहुषं चैव मृतं सृञ्जय शुश्रुम ।
'य इमां पृथिवीं जित्वा ससमुद्रां सपर्वताम् ॥१
शम्याप्रासेन निर्माय वेदीः सन्नतदक्षिणाः ।
ईजानः क्रतुभिः पुण्यैः पर्यगच्छत्प्रदक्षिणम् ॥' २
राजसूयशतैरिष्ट्वा सोऽश्वमेधशतेन च ।
पुण्डरीकसहस्रेण वाजपेयशतैस्तथा ॥ ३
अतिरात्रसहस्रेण चातुर्मास्यैश्च कामतः ।
अग्निष्टोमैश्च विविधैः सत्रैश्च प्राज्यदक्षिणैः ॥ ४
अब्राह्मणानां यद्वित्तं पृथिव्यामस्ति किंचन ।
तत्सर्वं परिसङ्ख्याय ततो ब्राह्मणसात्करोत् ॥ ५
सरस्वती पुण्यतमा नदीनां
तथा समुद्राः सरितः साद्रयश्च ।
ईजानाय पुण्यतमाय राज्ञे
घृतं पयो दुदुहुर्नाहुषाय ॥ ६
व्यूढे देवासुरे युद्धे कृत्वा देवसहायताम् ।
चतुर्धा व्यभजत्सर्वां चतुर्भ्यः पृथिवीमिमाम् ॥ ७
यज्ञैर्नानाविधैरिष्ट्वा प्रजामुत्पाद्य चोत्तमाम् ।
देवयान्यां चौशनस्यां शर्मिष्ठायां च धर्मतः ॥८
देवारण्येषु सर्वेषु विजहारामरोपमः ।
आत्मनः कामचारेण द्वितीय इव वासवः ॥ ९
यदा नाभ्यगमच्छान्तिं कामानां सर्ववेदवित् ।

द्वादशसमो द्वादशवार्षिकः । शय इति पाठे द्वादशहस्तः । व्यजीजयद्विजितवान् ॥ ८ ॥ रोहितान् लोहितभूप्रदेशान्पद्मरागखनिमतो वा मत्स्यान्देशविशेषान् । हैरण्यान् स्वर्णाकरयुक्तान् । जनोत्सेधान् जनेषु उत्सेध उच्छ्रायो येषां तान्। मत्स्यदेशोत्पन्ने हि नद्यावद्यापि परंपरया पूर्वापरौ समुद्रौ गच्छत इति तेषामुच्छ्रितत्वं प्रसिद्धम् । रोहितानश्वान् इति क. ङ. पाठः ॥ १३ ॥ अतिरिक्तमवशिष्टं भुञ्जानो जन एव हीयते तत्वन्नमित्यर्थः ॥ १४ ॥ द्विषष्टितमोऽध्यायः ॥ ६२ ॥

प्राज्यदक्षिणैः बहुदक्षिणैः ॥ ४ ॥ अब्राह्मणानां ब्राह्मणद्वेषिणाम् । म्लेच्छानामिति यावत् । परिसंख्याय अपहृत्य ॥ ५ ॥ चतुर्भ्यः ऋत्विग्भ्यः । प्राचीदिग्घोतुर्दक्षिणाध्वर्योरित्यादिश्रुतेः ॥ ७ ॥ त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

ततो गाथामिमां गीत्वा सदारः प्राविशद्वनम् १०
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥ ११
एवं कामान्परित्यज्य ययातिर्धृतिमेत्य च ।
पूरुं राज्ये प्रतिष्ठाप्य प्रयातो वनमीश्वरः ॥ १२
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ १३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

नारदेन सृञ्जयंप्रत्यम्बरीषविभवाभिधानम् ॥ १ ॥

नारद उवाच ।
नाभागमम्बरीषं च मृतं सृञ्जय शुश्रुम ।
यः सहस्रं सहस्राणां राज्ञां चैकस्त्वयोधयत् ॥ १
जिगीषमाणाः संग्रामे समन्ताद्वैरिणोऽभ्ययुः ।
अस्त्रयुद्धविदो घोराः सृजन्तश्चाशिवा गिरः ॥ २
बललाघवशिक्षाभिस्तेषां सोऽस्त्रबलेन च ।
छत्रायुधध्वजरथांश्छित्त्वा प्रासान्गतव्यथः ॥ ३
त एनं मुक्तसन्नाहाः प्रार्थयञ्जीवितैषिणः ।
शरण्यमीयुः शरणं तव स्म इति वादिनः ॥ ४
स तु तान्वशगान्कृत्वा जित्वा चेमां वसुंधराम् ।
ईजे यज्ञशतैरिष्टैर्यथा शक्रस्तथाऽनघः ॥ ५
बुभुजुः सर्वसंपन्नमन्नमन्ये जनाः सदा ।
तस्मिन्यज्ञे तु विप्रेन्द्राः संतृप्ताः परमार्चिताः ६
मोदकान्पूरिकापूपान्स्वादुपूर्णांश्च शष्कुलीः ।
करम्भान्पृथुमृद्वीका अन्नानि सुकृतानि च ॥ ७
सूपान्मैरेयकापूपान्रागषाडवपानकान् ।
मृष्टान्नानि सुयुक्तानि मृदूनि सुरभीणि च ॥ ८
घृतं मधु पयस्तोयं दधीनि रसवन्ति च ।
फलं मूलं च सुस्वादु द्विजास्तत्रोपभुञ्जते ॥ ९
मदनीयानि पापानि विदित्वा चात्मनः सुखम् ।
अपिबन्त यथाकामं पानपा गीतवादितैः ॥ १०
तत्र स्म गाथा गायन्ति क्षीबा हृष्टाः पठन्ति च ।
नाभागस्तुतिसंयुक्ता ननृतुश्च सहस्रशः ॥ ११
तेषु यज्ञेष्वम्बरीषो दक्षिणामत्यकालयत् ।
राज्ञां शतसहस्राणि दशप्रयुतयाजिनाम् ॥ १२
हिरण्यकवचान्सर्वाञ्श्वेतच्छत्रप्रकीर्णकान् ।
हिरण्यस्यन्दनारूढान्सानुयात्रपरिच्छदान् ॥ १३
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ।
मूर्धाभिषिक्तांश्च नृपान्राजपुत्रशतानि च ॥ १४
स दण्डकोशनिचयान्ब्राह्मणेभ्यो ह्यमन्यत ।
नैवं पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ॥ १५
यदम्बरीषो नृपतिः करोत्यमितदक्षिणः ।
इत्येवमनुमोदन्ते प्रीता यस्य महर्षयः ॥ १६
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ १७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

सूपाद्योरण्डकान्यूषान् इति क. ङ. पाठः ॥ ८ ॥ मादनीयानि मदकराणि सुरादीनि । पापानि पापहेतूनीति ज्ञात्वापि सुखलिप्सवः पिबन्तीत्यर्थः । मदनीयानि पानानि विदंशानात्मनः प्रियान् । पपुस्तत्र यथाकामं पानपा(का) गीतकाः परम् इति क. पाठः ॥ १० ॥ अत्यकालयद्दातुं निष्कासितवान् । जिता राजान एव सोपस्करदक्षिणात्वेन दत्ताः । तेषां राज्यानि ते राजानश्च ब्राह्मणसात्कृता इत्यर्थः ॥ १२ ॥ चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

नारदेन सृञ्जयंप्रति शशिबिन्दुयशोनुवर्णनम् ॥ १ ॥

नारद उवाच ।
शशिबिन्दुं च राजानं मृतं सृञ्जय शुश्रुम ।
य ईजे विविधैर्यज्ञैः श्रीमान्सत्यपराक्रमः ॥ १
तस्य भार्यासहस्राणां शतमासीन्महात्मनः ।
एकैकस्यां च भार्यायां सहस्रं तनयाभवन् ॥ २
ते कुमाराः पराक्रान्ताः सर्वे नियुतयाजिनः ।
राजानः क्रतुभिर्मुख्यैरीजाना वेदपारगाः ॥ ३
हिरण्यकवचाः सर्वे सर्वे चोत्तमधन्विनः ।
सर्वेऽश्वमेधैरीजानाः कुमाराः शाशिबिन्दवाः ॥४
तानश्वमेधे राजेन्द्रो ब्राह्मणेभ्योऽददत्पिता ।
शतंशतं रथगजा एकैकं पृष्ठतोऽन्वयुः ॥ ५
राजपुत्रं तदा कन्यास्तपनीयस्वलङ्कृताः
कन्यांकन्यां शतं नागा नागेनागे शतं रथाः ॥ ६
रथेरथे शतं चाश्वा बलिनो हेममालिनः ।
अश्वेअश्वे गोसहस्रं गवां पञ्चाशदाविकाः ॥ ७
एतद्धनमपर्याप्तमश्वमेधे महामखे ।
शशिबिन्दुर्महाभागो ब्राह्मणेभ्यो ह्यमन्यत ॥ ८
वार्क्षाश्च यूपा यावन्त अश्वमेधे महामखे ।
ते तथैव पुनश्चान्ये तावन्तः काञ्चनाभवन् ॥ ९
भक्ष्यान्नपाननिचयाः पर्वताः क्रोशमुच्छ्रिताः ।
तस्याश्वमेधे निर्वृत्ते राज्ञः शिष्टास्त्रयोदश ॥ १०
तुष्टपुष्टजनाकीर्णां शान्तविघ्नामनामयाम् ।
शशिबिन्दुरिमां भूमिं चिरं भुक्त्वा दिवं गतः॥११
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ १२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

नारदेन सृञ्जयंप्रति गयगुणानुवर्णनम् ॥ १ ॥

नारद उवाच ।
गयं चाधूर्तरजसं मृतं सृञ्जय शुश्रुम ।
ये वै वर्षशतं राजा हुतशिष्टाशनोऽभवत् ॥ १
तस्मै ह्यग्निर्वरं प्रादात्ततो वव्रे वरं गयः ।
तपसा ब्रह्मचर्येण व्रतेन नियमेन च ॥ २
गुरूणां च प्रसादेन वेदानिच्छामि वेदितुम् ।
स्वधर्मेणाविहिंस्यान्यान्धनमिच्छामि चाक्षयम्॥३
विप्रेषु ददतश्चैव श्रद्धा भवतु नित्यशः ।
कन्यासु च सवर्णासु सुप्रजस्त्वं च मे भवेत् ॥४
अन्नमोजो महो मह्यं धर्मे मे रमतां मनः ।
अविघ्नं चास्तु मे नित्यं धर्मकार्येषु पावक ॥ ५
तथा भविष्यतीत्युक्त्वा तत्रैवान्तरधीयत ।
गयो ह्यवाप्य तत्सर्वं धर्मेणाराधयञ्जगत् ॥ ६
स दर्शपूर्णमासाभ्यां कालेष्वाग्रयणेन च ।
चातुर्मास्यैश्च विविधैर्यज्ञैश्चावाप्तदक्षिणैः ॥ ७
अयजच्छ्रद्धया राजा परिसंवत्सराञ्शतम् ।
गवां शतसहस्राणि शतमश्वशतानि च ८
शतं निष्कसहस्राणि गवां चाप्ययुतानि षट् ।
उत्थायोत्थाय संप्रादात्परिसंवत्सराञ्शतम् ॥ ९
नक्षत्रेषु च सर्वेषु ददन्नक्षत्रदक्षिणाः ।
ईजे च विविधैर्यज्ञैर्यथा सोमोऽङ्गिरा यथा ॥१०
सौवर्णां पृथिवीं कृत्वा य इमां मणिशर्कराम् ।

त्रयोदशात्र निचयाः शिष्टाः ॥ १० ॥ पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

गयं चामूर्तरयसं इति घ. झ. पाठः ॥ १ ॥ पात्रेषु ददतः सामे श्रद्धा भवतु इति क. ङ. ड. पाठः ॥ ४ ॥ पौर्णमासाभ्यां इति घ. पाठः ॥ ७ ॥ नक्षत्रविहिता दक्षिणाः ॥ १० ॥

विप्रेभ्यः प्राददद्राजा सोऽश्वमेधे महामखे ॥ ११
जाम्बूनदमया यूपाः सर्वे रत्नपरिच्छदाः ।
गयस्यासन्समृद्धास्तु सर्वभूतमनोहराः ॥ १२
सर्वकामसमृद्धं च प्रादादन्नं गयस्तदा ।
ब्राह्मणेभ्यः प्रहृष्टेभ्यः सर्वभूतेभ्य एव च ॥ १३
ससमुद्रवनद्वीपनदीनदवनेषु च ।
नगरेषु च राष्ट्रेषु दिवि व्योम्नि च येऽवसन् ॥ १४
भूतग्रामाश्च विविधाः संतृप्ता यज्ञसंपदा ।
गयस्य सदृशो यज्ञो नास्त्यन्य इति तेऽब्रुवन् ॥ १५
षट्त्रिंशद्योजनायामा त्रिंशद्योजनमायता ।
पश्चात्पुरश्चतुर्विंशद्वेदी ह्यासीद्धिरण्मयी ॥ १६
गयस्य यजमानस्य मुक्तावज्रमणिस्तृता ।
प्रादात्स ब्राह्मणेभ्योऽथ वासांस्याभरणानि च १७
यथोक्ता दक्षिणाश्चान्या विप्रेभ्यो भूरिदक्षिणः ।
यत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः ॥ १८
कुल्याश्च क्षीरवाहिन्यो रसानां चाभवंस्तदा ।
वस्त्राभरणगन्धानां राशयश्च पृथग्विधाः ॥ १९
यस्य प्रभावाच्च गयस्त्रिषु लोकेषु विश्रुतः ।
वटश्चाक्षय्यकरणः पुण्यं ब्रह्मसरश्च तत् ॥ २०
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ २१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

नारदेन सृञ्जयंप्रति रन्तिदेवचरित्रकीर्तनम् ॥ १ ॥

नारद उवाच ।
सांकृतिं रन्तिदेवं च मृतं सृञ्जय शुश्रुम ।
यस्य द्विशतसाहस्रा आसन्सूदा महात्मनः ॥ १
गृहानभ्यागतान्विप्रानतिथीन्परिवेषकाः ।
पक्वंपक्वं दिवारात्रं वरान्नममृतोपमम् ॥ २
न्यायेनाधिगतं वित्तं ब्राह्मणेभ्यो ह्यमन्यत ।
वेदानधीत्य धर्मेण यश्चक्रे द्विषतो वशे ॥ ३
उपस्थिताश्च पशवः स्वयं यं शंसितव्रतम्
बहवः स्वर्गमिच्छन्तो विधिवत्सत्रयाजिनम् ॥ ४
नदी महानसाद्यस्य प्रवृत्ता चर्मराशितः ।
तस्माच्चर्मण्वती नाम ख्याता पुण्या सरिद्वरा ॥ ५
ब्राह्मणेभ्यो ददन्निष्कान्सौवर्णान्स प्रभावतः ।
तुभ्यं निष्कं तुभ्यं निष्कमिति ह स्म प्रभाषते ॥ ६
तुभ्यंतुभ्यमिति प्रादान्निष्कान्निष्कान्सहस्रशः ।
ततः पुनः समाश्वास्य निष्कानेव प्रयच्छति ॥ ७
अल्पं दत्तं मयाऽद्येति निष्ककोटिं सहस्रशः ।
एकाह्ना ताम्यति ततः क्वाद्य विप्रा इति ब्रुवन् ॥ ८
द्विजपाणिवियोगेन दुःखं मे शाश्वतं महत् ।
भविष्यति न संदेह एवं राजाऽददद्वसु ॥ ९
सहस्रशश्च सौवर्णान्वृषभान्गोशतानुगान् ।
साष्टं शतं सुवर्णानां निष्कमाहुर्धनं तथा ॥ १०
अध्यर्धमासमददद्ब्राह्मणेभ्यः शतं समाः
अग्निहोत्रोपकरणं यज्ञोपकरणं च यत् ॥ ११
ऋषिभ्यः करकान्कुम्भान्स्थालीः पिठरमेव च ।
शयनासनयानानि प्रासादांश्च गृहाणि च ॥ १२
वृक्षांश्च विविधान्दद्यादन्नानि च धनानि च ।
सर्वं सौवर्णमेवासीद्रन्तिदेवस्य धीमतः ॥ १३
तत्रास्य गाथा गायन्ति ये पुराणविदो जनाः ।
रन्तिदेवस्य तां दृष्ट्वा समृद्धिमतिमानुषीम् ॥ १४

---

यस्य प्रसादाद्गायत्री त्रिषु लोकेषु विश्रुता इति क. पाठः ॥ २० ॥ षट्षष्टितमोऽध्यायः ॥ ६६ ॥

न्यायेनाधिगतं वित्तं येनाक्षय्यं नगोपमम् इति क. ड. पाठः ॥ ३ ॥ एकान्हा दास्यति पुनः कोऽन्यस्तत्संप्रदास्यति इति घ. ङ. पाठः ॥ ८ ॥ पारिभाषिकं निष्कमाह सहस्रश इति ॥ १० ॥ अध्यर्धमासं पक्षे पक्षे इत्यर्थः । शतं समा इति वाक्यशेषात् ॥ ११ ॥

नैतादृशं दृष्टपूर्वं कुबेरसदनेष्वपि ।
धनं च पूर्यमाणं नः किं पुनर्मनुजेष्विति ॥ १५
व्यक्तं वस्वोकसारेयमित्यूचुस्तत्र विस्मिताः ।
सांकृते रन्तिदेवस्य यां रात्रिमतिथिर्वसेत् ॥ १६
आलभ्यन्त तदा गावः सहस्राण्येकविंशतिः ।
तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः ॥ १७
सूपं भूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा ।
रन्तिदेवस्य यत्किंचित्सौवर्णमभवत्तदा ॥ १८
तत्सर्वं वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत ।
प्रत्यक्षं तस्य हव्यानि प्रतिगृह्णन्ति देवताः ॥ १९
कव्यानि पितरः काले सर्वकामान्द्विजोत्तमाः ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ २०
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ २१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

नारदेन सृञ्जयंप्रति भरतचरितकथनम् ॥ १ ॥

नारद उवाच ।
दौष्यन्तिं भरतं चापि मृतं सृञ्जय शुश्रुम ।
कर्माण्यसुकराण्यन्यैः कृतवान्यः शिशुर्वने ॥ १
हिमावदातान्यः सिंहान्नखदंष्ट्रायुधान्बली ।
निर्वीर्यांस्तरसा कृत्वा विचकर्ष बबन्ध च ॥ २
क्रूरांश्चोग्रतरान्व्याघ्रान्दमित्वा चाकरोद्वशे ।
मनःशिला इव शिलाः संयुक्ता जतुराशिभिः ॥ ३
व्यालादींश्चातिबलवान्सुप्रतीकान्गजानपि ।
दंष्ट्रासु गृह्य विमुखाञ्शुष्कास्यानकरोद्वशे ॥ ४
महिषानप्यतिबलो बलिनो विचकर्ष ह ।
सिंहानां च सुदृप्तानां शतान्याकर्षयद्बलात् ॥ ५
बलिनः सृमरान्खड्गान्नानासत्त्वानि चाप्युत ।
कृच्छ्रप्राणान्वने बद्ध्वा दमयित्वाप्यवासृजत् ॥ ६
तं सर्वदमनेत्याहुर्द्विजास्तेनास्य कर्मणा ।
तं प्रत्यषेधज्जननी मा सत्वानि व्यनीनशः ॥ ७
सोऽश्वमेधशतेनेजे यमुनामनु वीर्यवान् ।
त्रिशतैश्च सरस्वत्यां गङ्गामनु चतुःशतैः ॥ ८
सोऽश्वमेधसहस्रेण राजसूयशतेन च
पुनरीजे महायज्ञैः समाप्तवरदक्षिणैः ॥
अग्निष्टोमातिरात्राणामुक्थ्यविश्वजितां च सः ।
वाजपेयसहस्राणां सहस्रैश्च सुसंवृतैः ॥ १०
इष्ट्वा शाकुन्तलो राजा तर्पयित्वा द्विजान्धनैः ।
सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ।
जाम्बूनदस्य शुद्धस्य कनकस्य महायशाः ॥ ११
यस्य यूपाः शतव्यामाः परिणाहेन काञ्चनाः ।
समागम्य द्विजैः सार्धं सेन्द्रैर्देवैः समुच्छ्रिताः १२
अलङ्कृतान्राजमानान्सर्वरत्नैर्मनोहरैः ।
हैरण्यान्द्विरदानश्वान्रथानुष्ट्रानजाविकान् ॥ १३
दासी दासं धनं धान्यं गाः सवत्साः पयस्विनीः ।
ग्रामान्गृहांश्च क्षेत्राणि विविधांश्च परिच्छदान् १४
कोटीशतायुतांश्चैव ब्राह्मणेभ्यो ह्यमन्यत
चक्रवर्ती ह्यदीनात्मा जितारिर्ह्यजितः परैः ॥ १५
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ १६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

धनं च पूर्णमासाद्य इति घ. ङ. पाठः ॥ १५ ॥ वस्वोकसारा सलोप आर्षः । कनकमयानि ओकांसि सारो यस्याः सा तथा ॥१६॥ नाद्याश्नीत यथा पुरा इति क. पाठः ॥ १८ ॥ सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

शुचिर्वने इति क. ङ. ड. पाठः ॥ १ ॥ क्रूरानिति । यथा मनःशिलामयाः शिलाः जतुराशिभिर्लाक्षापुञ्जैर्युक्तास्तत्सदृशान् रक्तबिन्दुयुक्तान् रक्तपीतवर्णान् व्याघ्रविशेषान् वशेऽकरोदित्यर्थः । शिलाः प्रभुत्वाज्जनकाशिनः इति क. पाठः ॥ ३ ॥ व्यामो हस्तचतुष्टयम् । परिणाहेन दैर्घ्येण ॥ १२ ॥ अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

नारदेन सृञ्जयंप्रति पृथुचरित्रकथनम् ॥ १ ॥

नारद उवाच
पृथुं वैन्यं च राजानं मृतं सृञ्जय शुश्रुम ।
यमभ्यषिञ्चन्संभूय राजसूये महर्षयः ॥ १
अयं नः प्रथयिष्येत सर्वानित्यभवत्पृथुः ।
क्षतान्नस्त्रास्यते सर्वानित्येवं क्षत्रियोऽभवत् ॥ २
पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन् ।
ततो राजेति नामास्य अनुरागादजायत ॥ ३
अकृष्टपच्या पृथिवी आसीद्वैन्यस्य कामधुक् ।
सर्वाः कामदुघा गावः पुटकेपुटके मधु ॥ ४
आसन्हिरण्मया वृक्षाः सुखस्पर्शाः सुखावहाः ।
तेषां चीराणि संवीताः प्रजास्तेष्वेव शेरते ॥ ५
फलान्यमृतकल्पानि स्वादूनि च मधूनि च ।
तेषामासीत्तदाऽऽहारो निराहाराश्च नाभवन् ॥६
अरोगाः सर्वसिद्धार्था मनुष्या ह्यकुतोभयाः ।
न्यवसन्त यथाकामं वृक्षेषु च गुहासु च ॥ ७
प्रविभागो न राष्ट्राणां पुराणां चाभवत्तदा ।
यथासुखं यथाकामं तथैता मुदिताः प्रजाः ॥ ८
तस्य संस्तम्भिता ह्यापः समुद्रमभियास्यतः ।
पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ॥ ९
तं वनस्पतयः शैला देवासुरनरोरगाः ।
सप्तर्षयः पुण्यजना गन्धर्वाप्सरसोऽपि च ।
पितरश्च सुखासीनमभिगम्येदमब्रुवन् ॥ १०
सम्राडसि क्षत्रियोऽसि राजा गोप्ता पिताऽसि नः ।
देह्यस्मभ्यं महाराज प्रभुः सन्नीप्सितान्वरान् ।
यैर्वयं शाश्वतं तृप्ता वर्तयिष्यामहे सुखम् ॥ ११
'विज्ञापितः प्रजाभिस्तु प्रजानां हितकाम्यया ।
धनुर्गृह्य पृषत्कांश्च वसुधामाद्रवद्बली ॥ १२
ततो वैन्यभयाद्राजन्गौर्भूत्वा प्राद्रवन्मही ।
तां पृथुर्धनुरादाय द्रवन्तीमन्वसारयत् ॥ १३
सा लोकान्ब्रह्मलोकादीन्गत्वा वैन्यभयार्दिता ।
सा ददर्शाग्रतो वैन्यं कार्मुकोद्यतपाणिकम् ॥१४
ज्वलद्भिर्विशिखैर्बाणैर्दीप्ततेजःसमद्युतिम् ।
महायोगं महात्मानं दुर्धर्षममरैरपि ॥ १५
अलभन्ती परित्राणं वैन्यमेवाभ्यपद्यत ।
कृताञ्जलिपुटा राजन्पूज्यं लोकैस्त्रिभिस्तदा ॥१६
उवाच चैनं नाधर्म्यं स्त्रीवधं कर्तुमर्हसि ।
कथं धारयिता चासि प्रजा राजन्मया विना १७
पृथुरुवाच ।
एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा ।
एकं प्राणान्बहून्वापि प्राणिनां नास्ति पातकं १८
यस्मिंस्तु निहते भद्रे बहवः सुखमेधते ।
तस्मिन्हते त्वघं नास्ति पातकं नोपभुज्यते ॥१९
सोऽहं पालनिमित्तं त्वां बधिष्यामि वसुंधरे ।
यदि चेद्वचनादद्य न करिष्यसि मे प्रियम् ॥२०
त्वां निहत्य तु बाणेन मच्छासनपराङ्मुखीम् ।
आत्मानं प्रथयित्वाऽहं प्रजा धारयिता स्वयं २१
सुखं वचनमास्थाय मम धर्मभृतां वरे ।
संजीवय प्रजा नित्यं शक्ता ह्यसि वसुंधरे ॥ २२
दुहितृत्वं च मे गच्छ एवमेतन्महाशरम् ।
नियच्छेयं त्वदर्थाय उद्यतं घोरदर्शनम् ॥ २३
भूमिरुवाच ।
सर्वमेतन्महाराज विधास्यामि परंतप ।
वत्सं त्वं पश्य राजन्वै क्षरेयं येन वत्सला ॥ २४
समां तु कुरु सर्वज्ञ मां तु धर्मभृतां वर ।
यथा विष्यन्दमानं वै क्षीरं सर्वत्र भावये ॥ २५
नारद उवाच ।
तत उत्सारयामास शिलाजालानि सर्वशः ।
पृथुर्वैन्यस्तदा राजा तेन शैला विवर्धिताः ॥२६
न हि पूर्वनिसर्गे वै विषमे वसुधातले ।
प्रविभागः पुराणां वा ग्रामाणां वा महीपते ॥२७
न सस्यानि न गोरक्ष्यं न कृषिर्न वणिक्पथः ।
वैन्यात्प्रभृति राजेन्द्र सर्वस्यैतस्य संभवः ॥ २८

---

ध्वजभङ्गस्तोरणादिना ॥ ९ ॥

यत्रयत्र च साम्यं तु भूमावासीत्किलानघ ।
तत्रतत्र प्रजास्तात निवासमभिरोचयन् ।
कृच्छ्रेण च महाराज इत्येवमनुशुश्रुम ॥ २९
तथेत्युक्त्वा पुनर्वैन्यो गृहीत्वाऽऽजगवं धनुः ।
शरांश्चाप्रतिमान्घोरांश्चिन्तयित्वाऽब्रवीन्महीम् ३०
पृथुरुवाच '
एह्येहि वसुधे क्षिप्रं क्षरैभ्यः काङ्क्षितं पयः ।
मच्छासनातिगां वै त्वां प्रमथिष्याम्यहं शरैः ३१
नारद उवाच
तथोक्ता साऽऽत्मनः श्रेयश्चिन्तयित्वाऽब्रवीत्पृथुम् ।
भूमिरुवाच
वत्सं पात्राणि दोग्धॄंश्च क्षीराणि च समादिश ३२
ततो दास्याम्यहं भद्र सर्वं यस्य यथेप्सितम् ।
दुहितृत्वे च मां वीर संकल्पयितुमर्हसि ॥ ३३
नारद उवाच ।'
तथेत्युक्त्वा पृथुः सर्वं विधानमकरोद्वशी ।
ततो भूतनिकायास्तां वसुधां दुदुहुस्तदा ॥ ३४
तां वनस्पतयः पूर्वं समुत्तस्थुर्दुधुक्षवः ।
साऽतिष्ठद्वत्सला वत्सं दोग्धृपात्राणि चेच्छती ३५
वत्सोऽभूत्पुष्पितः सालः प्लक्षो दोग्धाऽभवत्तदा ।
छिन्नप्ररोहणं दुग्धं पात्रमौदुम्बरं शुभम् ॥ ३६
उदयः पर्वतो वत्सो मेरुर्दोग्धा महागिरिः ।
रत्नान्योषधयो दुग्धं पात्रमश्ममयं तथा ॥ ३७
'देवानां वत्स इन्द्रोऽभूत्पात्रं दारुमयं तथा ।'
दोग्धा च सविता देवो दुग्धमूर्जस्करं प्रियम् ३८
असुरा दुदुहुर्मायामयःपात्रे तु तां तदा ।
दोग्धा द्विमूर्धा तत्रासीद्वत्सश्चासीद्विरोचनः॥३९
कृषिं च सस्यं च नरा दुदुहुः पृथिवीतले ।
स्वायंभुवो मनुर्वत्सस्तेषां दोग्धाऽभवत्पृथुः ॥४०
अलाबुपात्रे च तथा विषं दुग्धा वसुंधरा ।
धृतराष्ट्रोऽभवद्दोग्धा तेषां वत्सस्तु तक्षकः ॥४१
सप्तर्षिभिर्ब्रह्म दुग्धा तथा चाक्लिष्टकर्मभिः ।
दोग्धा बृहस्पतिः पात्रं छन्दो वत्सश्च सोमराट्॥
अन्तर्धानं चामपात्रे दुग्धा पुण्यजनैर्विराट् ।
दोग्धा वैश्रवणस्तेषां वत्सश्चासीद्वृषध्वजः ॥ ४३
पुण्यगन्धान्पद्मपात्रे गन्धर्वाप्सरसोऽदुहन् ।
वत्सश्चित्ररथस्तेषां दोग्धा विश्वरुचिः प्रभुः॥४४
स्वधां रजतपात्रेषु दुदुहुः पितरश्च ताम् ।
वत्सो वैवस्वतस्तेषां यमो दोग्धान्तकस्तदा ॥४५
एवं निकायैस्तैर्दुग्धा पयोऽभीष्टं हि सा विराट् ।
यैर्वर्तयन्ति ते ह्यद्य पात्रैर्वत्सैश्च नित्यशः ॥ ४६
यज्ञैश्च विविधैरिष्ट्वा पृथुर्वैन्यः प्रतापवान्
संतर्पयित्वा भूतानि सर्वैः कामैर्मनःप्रियैः ॥४७
हैरण्यानकरोद्राजा ये केचित्पार्थिवा भुवि ।
तान्ब्राह्मणेभ्यः प्रायच्छदश्वमेधे महामखे॥ ४८
स षष्टिं गोसहस्राणि षष्टिं नागशतानि च ।
सौवर्णानकरोद्राजा ब्राह्मणेभ्यश्च तान्ददौ ॥४९
इमां च पृथिवीं सर्वां मणिरत्नविभूषिताम्
सौवर्णीमकरोद्राजा ब्राह्मणेभ्यश्च तां ददौ ॥ ५०
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्य मा पुत्रमनुतप्यथाः
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ५१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

द्विमूर्धा शुक्रोऽभूत् इति क. ङ. ड. पाठः ॥ ३९ ॥ विराट् पृथिवी । वत्सश्चासीत्कुबेरकः इति क. पाठः ॥४३॥ दोग्धा वसुरपि प्रभुः इति क. ड. ड. पाठः ॥ ४४ ॥ वत्सोऽत्र वत्सरस्तेषां क. ङ. पाठः ॥ ४५ ॥ निवर्तयन्ति ते रुद्रादिष्टे वैन्येन सर्वशः इति क. पाठः । यैर्वर्तयन्ति ते तृप्तादिष्टे वैन्येन सर्वशः इति ड. पाठः । ये वर्षयन्ति ते पात्रैः वत्सैर्दोग्धैश्च नित्यशः इति ङ. पाठः ॥ ४६ ॥ पार्थिवाः पृथ्वीसंबन्धिपदार्थाः ॥ ४८ ॥ एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## सप्ततितमोऽध्यायः ॥ ७० ॥

सृञ्जयंप्रति नारदेन परशुरामप्रभाववर्णनम् ॥ १ ॥

नारद उवाच ।
रामो महातपाः शूरो वीरो लोकनमस्कृतः ।
जामदग्न्योऽप्यतियशा अवितृप्तो मरिष्यति ॥ १
यश्चात्नमनुपर्येति भूमिं कुर्वन्विपांसुलाम्
न चासीद्विक्रिया यस्य प्राप्य श्रियमनुत्तमाम्॥ २
'जामदग्न्यो न ते राजन्कच्चिच्छ्रोत्रमुपागतः ।
येनैकेन पुरा राजन्क्रुद्धेन हतबन्धुना ॥ ३
भृगुभिस्ताम्यमानेन त्राहि रामेति विस्वरम् ।
त्रिःसप्तकृत्वो भूमिर्यत्कृता निःक्षत्रिया पुरा ॥' ४
यः क्षत्रियैः परामृष्टे वत्से पितरि चाब्रुवन् ।
ततोऽवधीत्कार्तवीर्यमजितं समरे परैः ॥ ५
क्षत्रियाणां चतुःषष्टिमयुतानि सहस्रशः ।
तदा मृत्योः समेतानि एकेन धनुषाऽजयत् ॥ ६
ब्रह्मद्विषां चाथ तस्मिन्सहस्राणि चतुर्दश ।
पुनरन्यान्निजग्राह दन्तकूरं जघान ह ॥ ७
सहस्रं मुसलेनाहन्सहस्रमसिनाऽवधीत् ।
उद्बन्धनात्सहस्रं च सहस्रमुदके कृतम् ॥ ८
दन्तान्भङ्क्त्वा सहस्रस्य भिन्नकर्णांस्तथाऽकरोत्।
ततः सप्तसहस्राणां कटुधूपमपाययत् ॥ ९
शिष्टान्बध्वा च हत्वा वै तेषां मूर्ध्नि विभिद्य च ।
गुणावतीमुत्तरेण खाण्डवाद्दक्षिणेन च
गिर्यन्ते शतसाहस्रा हैहयाः समरे हताः ॥ १०
सरथाश्वगजा वीरा निहतास्तत्र शेरते ।
पितुर्वधामर्षितेन जामदग्न्येन धीमता ॥ ११
निजघ्ने दशसाहस्रान्रामः परशुना तदा ।
न ह्यमृष्यत ता वाचो यास्तैर्भृशमुदीरिताः ॥ १२
भृगो रामाभिधावेति यदाक्रन्दन्द्विजोत्तमाः ।
ततः काश्मीरदरदान्कुन्तिक्षुद्रकमालवान् ॥ १३
अङ्गवङ्गकलिङ्गांश्च विदेहांस्ताम्रलिप्तकान् ।
रक्षोवाहान्वीतिहोत्रांस्त्रिगर्तान्मार्तिकावतान् १४
शिबीनन्यांश्च राजन्यान्देशान्देशान्सहस्रशः
निजघान शितैर्बाणैर्जामदग्न्यः प्रतापवान् ॥ १५
कोटीशतसहस्राणि क्षत्रियाणां सहस्रशः ।
इन्द्रगोपकवर्णस्य बन्धुजीवनिभस्य च ॥ १६
रुधिरस्य परीवाहैः पूरयित्वा सरांसि च ।
सर्वानष्टादश द्वीपान्वशमानीय भार्गवः ॥ १७
ईजे क्रतुशतैः पुण्यैः समाप्तवरदक्षिणैः ।
वेदीमष्टनलोत्सेधां सौवर्णां विधिनिर्मिताम् ॥ १८
सर्वरत्नशतैः पूर्णां पताकाशतमालिनीम् ।
ग्राम्यारण्यैः पशुगणैः संपूर्णां च महीमिमाम् ॥१९
रामस्य जामदग्न्यस्य प्रतिजग्राह कश्यपः ।
ततः शतसहस्राणि द्विपेन्द्रान्हेमभूषणान् ॥ २०
निर्दस्युं पृथिवीं कृत्वा शिष्टेष्टजनसंकुलाम्
कश्यपाय ददौ रामो हयमेधे महामखे ॥ २१
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
इष्ट्वा क्रतुशतैर्वीरो ब्राह्मणेभ्यो ह्यमन्यत ॥ २२
सप्तद्वीपां वसुमतीं मारीचोऽगृह्णत द्विजः ।
रामं प्रोवाच निर्गच्छ वसुधातो ममाज्ञया ॥ २३
स कश्यपस्य वचनात्प्रोत्सार्य सरितांपतिम् ।
इषुपाते युधां श्रेष्ठः कुर्वन्ब्राह्मणशासनम् ॥ २४
अध्यावसद्गिरिश्रेष्ठं महेन्द्रं पर्वतोत्तमम् ।
एवं गुणशतैर्युक्तो भृगूणां कीर्तिवर्धनः ॥ २५
जामदग्न्यो ह्यतियशा मरिष्यति महाद्युतिः ।
त्वया चतुर्भद्रतरः पुण्यात्पुण्यतरस्तव ॥ २६
अयज्वानमदक्षिण्यं मा पुत्रमनुतप्यथाः ।

ये मृतास्तेऽतीता ये वर्तमानास्तेऽपि मरिष्यन्त्येवेत्याह राम इति ॥ १ ॥ क्षत्रियैः कार्तवीर्यपुत्रैः । अब्रुवन्नविकत्थयन् ॥५॥ मृत्योर्मृत्युमवधीकृत्य ॥ ६ ॥ तस्मिंस्तन्मध्ये एव । दन्तकूरमिति पाठे तद्देशाधिपतिम् ॥ ७ ॥ उद्बन्धनाद्वृक्षशाखावलम्बनात् ॥ ८ ॥ कणधूममपाययत् इति क. ङ. पाठः ॥ ९ ॥ तैराश्रमवासिभिः॥ १२ ॥ अष्टनलेत्यत्र नलशब्दश्चतुर्हस्तवचनः ॥ १८ ॥ सप्ततितमोऽध्यायः ॥ ७० ॥

एते चतुर्भद्रतरास्त्वया भद्रशताधिकाः । मृता नरवरश्रेष्ठ मरिष्यन्ति च सृञ्जय ॥ २७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये सप्ततितमोऽध्यायः ॥ ७० ॥

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

युधिष्ठिरं समाश्वास्य व्यासस्य स्वाश्रमगमनम् ॥ १ ॥

व्यास उवाच ।
पुण्यमाख्यानमायुष्यं श्रुत्वा षोडशराजकम् ।
अव्याहरन्नरपतिस्तूष्णीमासीत्स सृञ्जयः ॥ १
तमब्रवीत्तदा दीनं नारदो भगवानृषिः ।
कच्चिन्मया व्याहृतं यद्धृदये तत्स्थितं तव ॥ २
आहोस्विदन्ततो नष्टं श्राद्धं शूद्रीपताविव ।
स एवमुक्तः प्रत्याह प्राञ्जलिः सृञ्जयस्तदा ॥ ३
पुत्रशोकापहं श्रुत्वा धन्यमाख्यानमुत्तमम् ।
राजर्षीणां पुराणानां यज्वनां दक्षिणावताम् ॥ ४
विस्मयेन हृते शोके तमसीवार्कतेजसा ।
विपाप्माऽस्म्यव्यथोपेतो ब्रूहि किं करवाण्यहम् ॥५
नारद उवाच ।
दिष्ट्यापहतशोकस्त्वं वृणीष्वेह यदिच्छसि ।
तत्ते संपत्स्यते सर्वं न मृषावादिनो वयम्
सृञ्जय उवाच
पावितोऽहमनेनैव प्रसन्नो यद्भवान्मम ।
प्रसन्नो यस्य भगवान्न तस्यास्तीह दुर्लभम् ॥ ७
नारद उवाच
पुनर्ददामि ते पुत्रं दस्युभिर्निहतं वृथा
उद्धृत्य नरकात्कष्टात्पशुवत्प्रोक्षितं यथा ॥
व्यास उवाच ।
प्रादुरासीत्ततः पुत्रः सृञ्जयस्याद्भुतप्रभः ।
प्रसन्नेनर्षिणा दत्तः कुबेरतनयोपमः ॥ ९
ततः संगम्य पुत्रेण प्रीतिमानभवन्नृपः ।
ईजे च क्रतुभिः पुण्यैः समाप्तवरदक्षिणैः ॥ १०
अकृतार्थश्च भीतश्च न च सन्नाहकोविदः ।
अयज्वाचानपत्यश्च ततोऽसौ जीवितः पुनः ॥११
शूरो वीरः कृतार्थश्च प्रमथ्यारीन्सहस्रशः ।
अभिमन्युर्गतः स्वर्गं संग्रामेऽभिमुखाहतः ॥ १२
ब्रह्मचर्येण याँल्लोकान्प्रजया च श्रुतेन च ।
इष्टैश्च क्रतुभिर्यान्ति तांस्ते पुत्रोऽक्षयान्गतः॥ १३
विद्वांसः कर्मभिः पुण्यैः स्वर्गमीहन्ति नित्यशः ।
न तु स्वर्गादयं लोकः काम्यते स्वर्गवासिभिः १४
तस्मात्स्वर्गगतं पुत्रमर्जुनस्य हतं रणे ।
न चेहानयितुं शक्यं किंचिदप्राप्यमीहितम् ॥ १५
यां योगिनो ध्यानविविक्तदर्शनाः
प्रयान्ति यां चोत्तमयज्विनो जनाः ।
तपोभिरिद्धैरनुयान्ति यां तथा
तामक्षयां ते तनयो गतो गतिम् ॥ १६
अन्तात्पुनर्भावगतो विराजते
राजेव वीरो ह्यमृतात्मरश्मिभिः ।
तामैन्दवीमात्मतनुं द्विजोचितां
गतोऽभिमन्युर्न स शोकमर्हति ॥ १७
एवं ज्ञात्वा स्थिरो भूत्वा मा शुचो धैर्यमाप्नुहि ।
जीवन्हि पुरुषः शोच्यो न तु स्वर्गगतोऽनघ ॥ १८
शोचतो हि महाराज अघमेवाभिवर्धते ।
तस्माच्छोकं परित्यज्य श्रेयसे प्रयतेद्बुधः ॥ १९
प्रहर्षं प्रीतिमानन्दं प्रियमुत्सिक्तचित्तताम् ।
एतदाहुर्बुधाः शौचमशौचं शोक उच्यते ॥ २०
एवं विद्वन्समुत्तिष्ठ प्रयतो भव मा शुचः ।

विस्मयेन पुण्याख्यानश्रवणजनितचित्तविस्तारेण ॥ ५ ॥ नेहानियतिना ह्यस्य किं चिदव्याप्तमीहते इति क. पाठः । न चेहानयितुं शक्यं किं चिरं प्राप्यमीहता इति ङ. पाठः । नेहानियतिना ह्यस्य किंचिदप्राप्यमीशितुः इति ङ. पाठः ॥ १५ ॥

अन्तान्मरणात् । भावगतः संपत्प्राप्तः । द्विजोचितां द्विजैरभिमताम् ॥ १७ ॥ अघं दुःखम् ॥ १९ ॥ एकसप्ततितमोऽध्यायः ॥ ७१ ॥

श्रुतस्ते संभवो मृत्योस्तपांस्यनुपमानि च ॥ २१
सर्वभूतसमत्वं च ब्रह्मणा चापि चोदितम् ।
सृञ्जयस्य तु पुत्रोऽसौ मृतः सञ्जीवितः श्रुतः २२
एवं विद्वन्महाराज मा शुचः साधयाम्यहम् ।
एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत ॥ २३
वागीशाने भगवति व्यासे व्यभ्रनभःप्रभे ।
गते मतिमतां श्रेष्ठे समाश्वास्य युधिष्ठिरम् ॥ २४
पूर्वेषां पार्थिवेन्द्राणां महेन्द्रप्रतिमौजसाम् ।
न्यायाधिगतवित्तानां तां श्रुत्वा यज्ञसंपदम् ॥ २५
संपूज्य मनसा विद्वान्विशोकोऽभूद्युधिष्ठिरः ।
पुनश्चाचिन्तयद्दीनः किंस्विद्वक्ष्ये धनञ्जयम् ॥ २६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

॥ समाप्तमभिमन्युवधपर्व ॥

# ( अथ प्रतिज्ञापर्व ॥ ४ ॥ )

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

अभिमन्युमनुशोच्यार्जुनस्य विलापः ॥ १ ॥

धृतराष्ट्र उवाच ।
अथ संशप्तकैः सार्धं युध्यमाने धनंजये ।
अभिमन्यौ हते चापि बाले बलवतां वरे ॥ १
महर्षिसत्तमे याते व्यासे स तु युधिष्ठिरः ।
पाण्डवाः किमथाऽकार्षुः शोकोपहतचेतसः ॥ २
कथं संशप्तकेभ्यो वा निवृत्तो वानरध्वजः ।
केन वा कथितस्तस्य प्रशान्तः सुतपावकः ।
एतन्मे शंस तत्त्वेन सर्वमेवेह सञ्जय ॥ ३
सञ्जय उवाच ।
शृणु राजन्यथा तेभ्यो निवृत्तः कृष्णसारथिः ।
ततः सर्वाणि सैन्यानि दहन्कृष्णगतिर्यथा ॥ ४
संप्रयातेऽस्तमादित्ये संध्याकाल उपस्थिते ।
अयातस्यात्मशिबिरं निमित्तैरघशंसिभिः ॥
यच्चासीन्मानसं तस्य यच्च कृष्णेन भाषितम् ।
यथा च कथितस्तस्य निहतः सुतपावकः ।
विस्तरेणैव मे सर्वं ब्रुवतः शृणु मारिष ॥' ६
तस्मिन्नहनि निर्वृत्ते घोरे प्राणभृतां क्षये ।
आदित्येऽस्तंगते श्रीमान्सन्ध्याकाल उपस्थिते ॥७
व्यपयातेषु वासाय सर्वेषु भरतर्षभ ।
हत्वा संशप्तकव्रातान्दिव्यैरस्त्रैः कपिध्वजः ॥ ८
प्रायात्स्वशिबिरं जिष्णुर्जैत्रमास्थाय तं रथम् ।
गच्छन्नेव च गोविन्दं साश्रुकण्ठोऽभ्यभाषत ॥ ९
किं नु मे हृदयं त्रस्तं वाक्च सज्जति केशव ।
स्यन्दने नावतिष्ठामि गात्रैः सीदामि चाच्युत १०
अनिष्टं चैव मे श्लिष्टं हृदयान्नापसर्पति ।
भुवि ये दिक्षु चात्युग्रा उत्पातास्त्रासयन्ति माम् ११
बहुप्रकारा दृश्यन्ते सर्व एवाघशंसिनः ।
अपि स्वस्ति भवेद्राज्ञः सामात्यस्य गुरोर्मम ॥ १२
वासुदेव उवाच
व्यक्तं शिवं सहभ्रातुर्धर्मराजस्य पाण्डव ।
मा शुचः किंचिदेवान्यत्तत्रानिष्टं भविष्यति ॥ १३
सञ्जय उवाच ।
ततः सन्ध्यामुपास्यैव वीरौ वीरावसादने ।
कथयन्तौ रणे वृत्तं प्रयातौ रथमास्थितौ ॥ १४
ततः स्वशिबिरं प्राप्तौ हतामित्रौ हतद्विषौ ।
वासुदेवोऽर्जुनश्चैव कृत्वा कर्म सुदुष्करम् ॥ १५
ध्वस्ताकारमिवालक्ष्यं संवीक्ष्य शिबिरं स्वकम् ।
बीभत्सुरब्रवीत्कृष्णमस्वस्थहृदयस्ततः ॥ १६
नदन्ति नाद्य तूर्याणि मङ्गल्यानि जनार्दन ।
मिश्रा दुन्दुभिनिर्घोषैः शङ्खाश्चाडम्बरैः सह ॥१७

श्लिष्टमनुबद्धम् ॥ ११ ॥ आडम्बरैस्तूर्यरवैः ॥ १७ ॥

वीणा नैवाद्य वाद्यन्ते शम्यातालस्वनैः सह ।
मङ्गल्यानि च गीतानि न गायन्ति पठन्ति च॥ १८
स्तुतियुक्तानि रम्याणि ममानीकेषु वन्दिनः ।
योधाश्चापि हि मां दृष्ट्वा निवर्तन्ते ह्यधोमुखाः॥ १९
कर्माणि च यथापूर्वं कृत्वा नाभिवदन्ति माम् ।
अपि स्वस्ति भवेदद्य भ्रातृभ्यो मम माधव ॥ २०
न हि शुद्ध्यति मे भावो दृष्ट्वा स्वजनमाकुलम् ।
अपि पाञ्चालराजस्य विराटस्य च मानद ॥ २१
सर्वेषां चैव योधानां सामग्र्यं स्यान्ममाच्युत ।
न च मामद्य सौभद्रः प्रहृष्टो भ्रातृभिः सह ।
रणादायान्तमुचितं प्रत्युद्याति हसन्निव ॥ २२
सञ्जय उवाच ।
एवं संकथयन्तौ तौ प्रविष्टौ शिबिरं स्वकम् ।
ददृशाते भृशास्वस्थान्पाण्डवान्नष्टचेतसः ॥ २३
दृष्ट्वा भ्रातॄंश्च पुत्रांश्च विमना वानरध्वजः ।
अपश्यंश्चैव सौभद्रमिदं वचनमब्रवीत् ॥ २४
मुखवर्णोऽप्रसन्नो वः सर्वेषामेव लक्ष्यते ।
न चाभिमन्युं पश्यामि न च मां प्रतिनन्दथ॥ २५
मया श्रुतश्च द्रोणेन पद्मव्यूहो विनिर्मितः
न च वस्तस्य भेत्ताऽस्ति विना सौभद्रमर्भकम्॥ २६
न चोपदिष्टस्तस्यासीन्मयानीकाद्विनिर्गमः ।
कच्चिन्न बालो युष्माभिः परानीकं प्रवेशितः॥ २७
भित्त्वाऽनीकं महेष्वासः परेषां बहुभिर्युधि ।
कच्चिन्न निहतः सङ्ख्ये सौभद्रः परवीरहा॥ २८
लोहिताक्षं महाबाहुं जातं सिंहमिवाद्रिषु
उपेन्द्रसदृशं ब्रूत कथमायोधने हतः ॥ २९
सुकुमारं महेष्वासं वासवस्यात्मजात्मजम् ।
सदा मम प्रियं ब्रूत कथमायोधने हतः ॥ ३०
सुभद्रायाः प्रियं पुत्रं द्रौपद्याः केशवस्य च ।
अम्बायाश्च प्रियं नित्यं कोऽवधीत्कालमोहितः॥ ३१
सदृशो वृष्णिवीरस्य केशवस्य महात्मनः ।
विक्रमश्रुतमाहात्म्यैः कथमायोधने हतः ॥ ३२
वार्ष्णेयीदयितं शूरं मया सततलालितम् ।
यदि पुत्रं न पश्यामि यास्यामि यमसादनम् ३३

मृदुकुञ्चितकेशान्तं बालं बालमृगेक्षणम् ।
मत्तद्विरदविक्रान्तं सिंहपोतमिवोद्गतम् ॥ ३४
स्मिताभिभाषिणं दान्तं गुरुवाक्यकरं सदा ।
बाल्येऽप्यतुलकर्माणं प्रियवाक्यममत्सरम् ॥ ३५
महोत्साहं महाबाहुं दीर्घराजीवलोचनम् ।
भक्तानुकम्पिनं दान्तं न च नीचानुसारिणम् ३६
कृतज्ञं ज्ञानसंपन्नं कृतास्त्रमनिवर्तिनम् ।
युद्धाभिनन्दिनं नित्यं द्विषतां भयवर्धनम्॥ ३७
स्वेषां प्रियहिते युक्तं पितॄणां जयगृद्धिनम् ।
न च पूर्वं प्रहर्तारं संग्रामे नष्टसंभ्रमम् ।
यदि पुत्रं न पश्यामि यास्यामि यमसादनम् ३८
रथेषु गण्यमानेषु गणितं तं महारथम् ।
मयाऽध्यर्धगुणं सङ्ख्ये तरुणं बाहुशालिनम्॥ ३९
प्रद्युम्नस्य प्रियं नित्यं केशवस्य ममैव च ।
यदि पुत्रं न पश्यामि यास्यामि यमसादनम् ४०
सुनसं सुललाटान्तं स्वक्षिभ्रूदशनच्छदम् ।
अपश्यतस्तद्वदनं का शान्तिर्हृदयस्य मे ॥ ४१
तन्त्रीस्वनसुखं रम्यं पुंस्कोकिलसमध्वनिम् ।
अशृण्वतः स्वनं तस्य का शान्तिर्हृदयस्य मे॥ ४२
रूपं चाप्रतिमं तस्य त्रिदशैश्चापि दुर्लभम् ।
अपश्यतो हि वीरस्य का शान्तिर्हृदयस्य मे॥ ४३
अभिवादनदक्षं तं पितॄणां वचने रतम् ।
नाद्याहं यदि पश्यामि का शान्तिर्हृदयस्य मे ४४
सुकुमारः सदा वीरो महार्हशयनोचितः ।
भूमावनाथवच्छेते नूनं नाथवतां वरः ॥ ४५
शयानं समुपासन्ति यं पुरा परमस्त्रियः ।
तमद्य विप्रविद्धाङ्गमुपासन्त्यशिवाः शिवाः॥ ४६
यः पुरा बोध्यते सुप्तः सूतमागधबन्दिभिः ।
बोधयन्त्यद्य तं नूनं श्वापदा विकृतैः स्वनैः॥ ४७
छत्रच्छायासमुचितं तस्य तद्वदनं शुभम् ।
नूनमद्य रजोध्वस्तं रणरेणुः करिष्यति ॥ ४८
हा पुत्रकावितृप्तस्य सततं पुत्रदर्शने ।
भाग्यहीनस्य कालेन यथा मे नीयसे बलात्॥ ४९

यथेति कथमर्थे ॥ ४९ ॥

सा च संयमनी नूनं सदा सुकृतिनां गतिः ।
स्वभाभिर्मोहिता रम्या त्वयाऽत्यर्थं विराजते ५०
नूनं वैवस्वतश्च त्वां वरुणश्च प्रियातिथिम् ।
शतक्रतुर्धनेशश्च प्राप्तमर्चन्त्यभीरुकम् ॥ ५१
सञ्जय उवाच ।
एवं विलप्य बहुधा भिन्नपोतो वणिग्यथा
दुःखेन महताऽविष्टो युधिष्ठिरमपृच्छत ॥ ५२
'कथं त्वयि च भीमे च धृष्टद्युम्ने च जीवति ।
सात्यके शक्रविक्रान्ते सौभद्रो निहतः परैः ॥' ५३
कच्चित्स कदनं कृत्वा परेषां कुरुनन्दन ।
स्वर्गतोऽभिमुखः सङ्ख्ये युध्यमानो नरर्षभैः ॥५४
स नूनं बहुभिर्यत्तैर्युध्यमानो नरर्षभैः ।
असहायः सहायार्थी मामनुध्यातवान्ध्रुवम् ॥५५
पीड्यमानः शरैर्बालस्तात साध्वभिधाव माम्
इति विप्रलपन्मन्ये नृशंसैर्भुवि पातितः ॥ ५६
अथवा मत्प्रसूतः स स्वस्रीयो माधवस्य च ।
सुभद्रायां च संभूतो न चैवं वक्तुमर्हति ॥ ५७
वज्रसारमयं नूनं हृदयं सुदृढं मम ।
अपश्यतो दीर्घबाहुं रक्ताक्षं यन्न दीर्यते ॥ ५८
कथं बाले महेष्वासा नृशंसा मर्मभेदिनः ।
स्वस्रीये वासुदेवस्य मम पुत्रेऽक्षिपञ्शरान् ॥ ५९
यो मां नित्यमदीनात्मा प्रत्युद्गम्याभिनन्दति ।
उपयान्तं रिपून्हत्वा सोऽद्य मां किं न पश्यति ॥६०
नूनं स पातितः शेते धरण्यां रुधिरोक्षितः ।
शोभयन्मेदिनीं गात्रैरादित्य इव पातितः ॥ ६१
सुभद्रामनुशोचामि या पुत्रमपलायिनम् ।
रणे विनिहतं श्रुत्वा शोकार्ता वै विनङ्क्ष्यति ॥ ६२
सुभद्रा वक्ष्यते किं मामभिमन्युमपश्यती ।
द्रौपदी चैव दुःखार्ता किं वा वक्ष्यामि तामहम् ६३
वज्रसारमयं नूनं हृदयं यन्न यास्यति ।
सहस्रधा वधूं दृष्ट्वा रुदतीं शोककर्शिताम् ॥ ६४
हृष्टानां धार्तराष्ट्राणां सिंहनादो मया श्रुतः ।
युयुत्सुश्चापि कृष्णेन श्रुतो वीरानुपालभन् ॥ ६५
अशक्नुवन्तः पार्थस्य बालं हत्वा महाबलम् ।
किं न लज्जन्त्यधर्मज्ञाः पार्थिवा दृश्यतां बलम् ६६
किं तयोर्विप्रियं कृत्वा केशवार्जुनयोर्मृधे
सिंहवन्नदथ प्रीताः शोककाल उपस्थिते ॥ ६७
आगमिष्यति वः क्षिप्रं फलं पापस्य कर्मणः ।
अधर्मो हि कृतस्तीव्रः कथं स्यादफलश्चिरम् ॥ ६८
इति तान्परिभाषन्वै वैश्यापुत्रो महामतिः ।
अपायाच्छस्त्रमुत्सृज्य कोपदुःखसमन्वितः ॥ ६९
किमर्थमेतन्नाख्यातं त्वया कृष्ण रणे मम
अधक्ष्यं तानहं क्रूरांस्तदा सर्वान्महारथान् ॥ ७०
सञ्जय उवाच ।
पुत्रशोकार्दितं पार्थं ध्यायन्तं साश्रुलोचनम् ।
निगृह्य वासुदेवस्तं पुत्राधिभिरभिप्लुतम् ।
मैवमित्यब्रवीत्कृष्णस्तीव्रशोकसमन्वितम् ॥ ७१
सर्वेषामेष वै पन्थाः शूराणामनिवर्तिनाम् ।
क्षत्रियाणां विशेषेण येषां नः शस्त्रजीविका ॥ ७२
एषा वै युध्यमानानां शूराणामनिवर्तिनाम् ।
विहिता सर्वशास्त्रज्ञैर्गतिर्मतिमतां वर ॥ ७३
ध्रुवं हि युद्धे मरणं शूराणामनिवर्तिनाम्
गतः पुण्यकृतां लोकानभिमन्युर्न संशयः ॥ ७४
एतच्च सर्ववीराणां काङ्क्षितं भरतर्षभ ।
संग्रामेऽभिमुखा मृत्युं प्राप्नुयामेति मानद ॥ ७५
स च वीरान्रणे हत्वा राजपुत्रान्महाबलान्
वीरैराकाङ्क्षितं मृत्युं संप्राप्तोऽभिमुखं रणे ॥ ७६
मा शुचः पुरुषव्याघ्र पूर्वैरेष सनातनः ।
धर्मकृद्भिः कृतो धर्मः क्षत्रियाणां रणे क्षयः ॥७७
इमे ते भ्रातरः सर्वे दीना भरतसत्तम ।
त्वयि शोकसमाविष्टे नृपाश्च सुहृदस्तव ॥ ७८
एतांश्च वचसा साम्ना समाश्वासय मानद ।
विदितं वेदितव्यं ते न शोकं कर्तुमर्हसि ॥ ७९
सञ्जय उवाच ।
एवमाश्वासितः पार्थः कृष्णेनाद्भुतकर्मणा ।
ततोऽब्रवीत्तदा भ्रातॄन्सर्वान्पार्थः सगद्गदम् ॥ ८०

वासुदेव उवाच । किमर्थमेतन्नाख्यातं त्वया पार्थ रणे मम इति ट. पाठः ॥ ७० ॥ द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

स दीर्घबाहुः पृथ्वंसो दीर्घराजीवलोचनः ।
अभिमन्युर्यथा वृत्तः श्रोतुमिच्छाम्यहं तथा ॥८१
सनागस्यन्दनहयान्संग्रामे निहतान्मया ।
क्षिप्रं द्रक्ष्यन्ति ते नूनं मम पुत्रं निहत्य वै ॥ ८२
कथं च वः कृतास्त्राणां सर्वेषां शस्त्रपाणिनाम् ।
सौभद्रो निधनं गच्छेद्वज्रिणापि समागतः ॥८३
यद्येवमहमज्ञास्यमशक्तान्रक्षणे मम ।
सूनोः पाण्डवपाञ्चालानगोप्स्यं तं महारणे ॥८४
कथं च वो रथस्थानां शरवर्षाणि मुञ्चताम् ।
नीतोऽभिमन्युर्निधनं कदर्थीकृत्य वः परैः ॥८५
अहो वः पौरुषं नास्ति न च वोऽस्ति पराक्रमः ।
यत्राभिमन्युः समरे पश्यतां वो निपातितः ॥८६
आत्मानमेव गर्हेयं यदहं वै सुदुर्बलान् ।
युष्मानाज्ञाय निर्यातो भीरूनकृतनिश्चयान् ॥८७
आहोस्विद्भूषणार्थाय वर्मशस्त्रायुधानि वः ।
वाचस्तु वक्तुं संसत्सु मम पुत्रमरक्षताम् ॥ ८८
सञ्जय उवाच ।
एवमुक्त्वा ततो वाक्यमतिष्ठद्वै वरासिमान् ।
न स्माशक्यत बीभत्सुः केनचित्प्रसमीक्षितुम् ८९
तमन्तकमिव क्रुद्धं निःश्वसन्तं मुहुर्मुहुः ।
'महेन्द्रमिव तिष्ठन्तं वज्रोद्यतमहाभुजम् ।'
पुत्रशोकाभिसंतप्तमश्रुपूर्णमुखं तदा ॥ ९०
न भाषितुं शक्नुवन्ति द्रष्टुं वा सुहृदोऽर्जुनम् ।
अन्यत्र वासुदेवाद्वा ज्येष्ठाद्वा पाण्डुनन्दनात् ९१
सर्वास्ववस्थासु हितावर्जुनस्य मनोनुगौ ।
बहुमानात्प्रियत्वाच्च तावेनं वक्तुमर्हतः ॥ ९२
ततस्तं पुत्रशोकेन भृशं पीडितमानसम् ।
राजीवलोचनं क्रुद्धं राजा वचनमब्रवीत् ॥ ९३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

युधिष्ठिरेणार्जुनंप्रत्यभिमन्युनिधनप्रकारकथनम् ॥ १ ॥ अर्जुनेन सशपथं जयद्रथवधप्रतिज्ञा ॥ २ ॥

---

युधिष्ठिर उवाच ।
त्वयि याते महाबाहो संशप्तकबलं प्रति ।
प्रयत्नमकरोत्तीव्रमाचार्यो ग्रहणे मम ॥ १
व्यूढानीकं ततो द्रोणं यतमानं महामृधे ।
प्रतिव्यूह्य सहानीकाः प्रत्यरुध्म वयं बलात् ॥२
स वार्यमाणो रथिभिर्मयि चापि सुरक्षिते ।
अस्मानभिजगामाशु पीडयन्निशितैः शरैः ॥ ३
ते पीड्यमाना द्रोणेन द्रोणानीकं न शक्नुमः ।
प्रतिवीक्षितुमप्याजौ भेत्तुं तत्कुत एव तु ॥ ४
ततस्तमप्रतिरथमहं सौभद्रमब्रवम् ।
द्रोणानीकमिदं भिन्द्धि द्वारं संजनयस्व नः ॥ ५
स तथा चोदितोऽस्माभिः सदश्व इव वीर्यवान् ।
असह्यमपि तं भारं वोढुमेवोपचक्रमे ॥ ६
स तवास्त्रोपदेशेन वीर्येण च समन्वितः ।
प्राविशत्तद्बलं बालः सुपर्ण इव सागरम् ॥ ७
तेऽनुयाता वयं वीरं सात्वतीपुत्रमाहवे ।
प्रवेष्टुकामास्तेनैव येन स प्राविशच्चमूम् ॥ ८
ततः सैन्धवको राजा क्षुद्रस्तात जयद्रथः ।
वरदानेन रुद्रस्य सर्वान्नः समवारयत् ॥
ततो द्रोणः कृपः कर्णो द्रौणिः कौसल्य एव च ।
कृतवर्मा च सौभद्रं षड्रथाः पर्यवारयन् ॥ १०
परिवार्य तु तैः सर्वैर्युधि बालो महारथैः ।
यतमानः परं शक्त्या बहुभिर्विरथीकृतः ॥ ११
ततो दौःशासनिः क्षिप्रं तथा तैर्विरथीकृतम् ।
'संशयं परमं प्राप्तं पदातिनमवस्थितम् ।
गदाहस्तोऽभ्ययात्तूर्णं जिघांसुरपराजितम् ॥ १२
गदिनं त्वथ तं दृष्ट्वा वासवस्यात्मजात्मजः ।
स जग्राह गदां वीरो गदायुद्धविशारदः ॥ १३
गदामण्डलमार्गस्थौ सर्वक्षत्रस्य पश्यतः ।
तौ संप्रजग्मतुर्वीरावन्योन्यस्यान्तरैषणौ ॥ १४

तावन्योन्यं गदाग्राभ्यां ताडितौ युद्धदुर्मदौ ।
इन्द्रध्वजाविवोत्सृष्टौ गतसत्वौ महींगतौ ॥ १५
दौःशासनिरथोत्थाय कुरूणां कीर्तिवर्धनः ।
उत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् ॥ १६
गदावेगेन महता व्यायामेन च मोहितः ।
विमना न्यपतद्भूमौ सौभद्रः परवीरहा ॥ १७
स तु हत्वा सहस्राणि द्विपाश्वरथपत्तिनाम् ।'
राजपुत्रशतं चाग्र्यं वीरांश्चालक्षितान्बहून् ॥ १८
बृहद्बलं च राजानं स्वर्गेण समयोजयत् ।
'गतः सुकृतिनां लोकान्ये च स्वर्गजितां शुभाः १९
अदीनस्त्रासयञ्छत्रून्नन्दयित्वा च बान्धवान् ।
असकृन्नाम विश्राव्य पितॄणां मातुलस्य च ॥' २०
वीरो दिष्टान्तमापन्नः शोचयन्बान्धवान्बहून् ।
'ततः स्म शोकसंतप्ता भवताऽद्य समेयुषः ॥' २१
एतावदेव निर्वृत्तमस्माकं शोकवर्धनम् ।
स चैवं पुरुषव्याघ्रः स्वर्गलोकमवाप्तवान् ॥ २२
सञ्जय उवाच ।
ततोऽर्जुनो वचः श्रुत्वा धर्मराजेन भाषितम् ।
हा पुत्र इति निःश्वस्य व्यथितो न्यपतद्भुवि ॥ २३
विषण्णवदनाः सर्वे परिवार्य धनञ्जयम् ।
नेत्रैरनिमिषैर्दीनाः प्रत्यवैक्षन्परस्परम् ॥ २४
प्रतिलभ्य ततः संज्ञां वासविः क्रोधमूर्च्छितः ।
कम्पमानो ज्वरेणेव निःश्वसंश्च मुहुर्मुहुः ॥ २५
पाणिं पाणौ विनिष्पिष्य दन्तान्कटकटाय्य च ।
'त्रिशिखां भ्रुकुटीं कृत्वा क्रोधसंरक्तलोचनः ।'
उन्मत्त इव विप्रेक्षन्निदं वचनमब्रवीत् ॥ २६
अर्जुन उवाच ।
सत्यं वः प्रतिजानामि श्वोऽस्मि हन्ताऽजयद्रथम् ।
न चेद्वधभयाद्भीतो धार्तराष्ट्रान्प्रहास्यति ॥ २७
न चास्माञ्शरणं गच्छेत्कृष्णं वा पुरुषोत्तमम् ।
भवन्तं वा महाराज श्वोऽस्मि हन्ता जयद्रथम् ॥२८
धार्तराष्ट्रप्रियकरं मयि विस्मृतसौहृदम् ।
पापं बालवधे हेतुं श्वोऽस्मि हन्ता जयद्रथम् ॥२९
रक्षमाणाश्च तं सङ्ख्ये ये मां योत्स्यन्ति केचन ।
अपि द्रोणकृपौ राजञ्छादयिष्यामि ताञ्छरैः ३०
यद्येतदेवं संग्रामे न कुर्यां पुरुषर्षभाः ।
मा स्म पुण्यकृतां लोकान्प्राप्नुयां शूरसंमतान् ॥३१
ये लोका मातृहन्तॄणां ये चापि पितृघातिनाम् ।
गुरुदारगतानां ये पिशुनानां च ये सदा ॥ ३२
साधूनसूयतां ये च ये चापि परिवादिनाम् ।
ये च निक्षेपहन्तॄणां ये च विश्वासघातिनाम् ॥३३
भुक्तपूर्वां स्त्रियं ये च निन्दतामघशंसिनाम् ।
ब्रह्मघ्नानां च ये लोका ये च गोघातिनामपि ॥३४
पायसं वा यवान्नं वा शाकं कृसरमेव वा ।
संयावापूपमांसानि ये च लोका वृथाश्नताम् ।
तानन्हायाधिगच्छेयं न चेद्धन्यां जयद्रथम् ॥ ३५
वेदाध्यायिनमत्यर्थं संशितं वा द्विजोत्तमम् ।
अवमन्यमानो यान्याति वृद्धान्साधून्गुरूंस्तथा ३६
स्पृशतो ब्राह्मणं गां च पादेनाग्निं च या भवेत् ।
याऽप्सु श्लेष्म पुरीषं च मूत्रं वा मुञ्चतां गतिः ।
तां गच्छेयं गतिं कष्टां न चेद्धन्यां जयद्रथम् ॥ ३७
नग्नस्य स्नायमानस्य या च वन्ध्याऽतिथेर्गतिः ।
उत्कोचिनां मृषोक्तीनां वञ्चकानां च या गतिः ३८
आत्मापहारिणां या च या च मिथ्याभिशंसिनाम् ।
भृत्यैः संदृश्यमानानां पुत्रदाराश्रितैस्तथा ॥ ३९
असंविभज्य क्षुद्राणां या गतिर्मिष्टमश्नताम् ।
तां गच्छेयं गतिं घोरां न चेद्धन्यां जयद्रथम् ॥४०
संश्रितं चापि यस्त्यक्त्वा साधुं तद्वचने रतम् ।
न बिभर्ति नृशंसात्मा निन्दते चोपकारिणम् ॥४१
अर्हते प्रातिवेश्याय श्राद्धं यो न ददाति च ।
अनर्हेभ्यश्च यो दद्याद्वृषलीपतये तथा ॥ ४२
मद्यपो भिन्नमर्यादः कृतघ्नो भर्तृनिन्दकः ।
तेषां गतिमियां क्षिप्रं न चेद्धन्यां जयद्रथम् ॥४३
भुञ्जानानां तु सव्येन उत्सङ्गे चापि खादताम् ।
पालाशमासनं चैव तिन्दुकैर्दन्तधावनम् ॥ ४४

वन्ध्यापतेः इति ङ. पाठः । उत्क्रोशकानृतानां च इति क. पाठः । उत्कोटिकानृतानां च इति ट. ङ. पाठः ॥ ३८ ॥

आत्मापहारिणां आत्मानमन्यथा प्रकाशयताम् ॥ ३९ ॥ वृषली शूद्रा कन्याभावे रजस्वला वा ॥ ४२ ॥

ये चावर्जयतां लोकाः स्वपतां च तथोषसि ।
शीतभीताश्च ये विप्रा रणभीताश्च क्षत्रियाः ॥४५
एककूपोदकग्रामे वेदध्वनिविवर्जिते ।
षण्मासं तत्र वसतां तथा शास्त्रं विनिन्दताम् ॥४६
दिवामैथुनिनां चापि दिवसेषु च शेरते ।
अगारदाहिनां चैव गरदानां च ये मताः ॥ ४७
अग्न्यातिथ्यविहीनाश्च गोपानेषु च विघ्नदाः ।
रजस्वलां सेवयन्तः कन्यां शुल्केन दायिनः ॥४८
या च वै बहुयाजिनां ब्राह्मणानां श्ववृत्तिनाम् ।
आस्यमैथुनिकानां च ये दिवामैथुने रताः ॥४९
ब्राह्मणस्य प्रतिश्रुत्य यो वै लोभाद्ददाति न ।
तेषां गतिं गमिष्यामि श्वो न हन्यां जयद्रथम् ५०
धर्मादपेता ये चान्ये मया नात्रानुकीर्तिताः ।
ये चानुकीर्तितास्तेषां गतिं क्षिप्रमवाप्नुयाम् ॥५१
यदि व्युष्टामिमां रात्रिं श्वो न हन्यां जयद्रथम् ।
इमां चाप्यपरां भूयः प्रतिज्ञां मे निबोधत ॥५२
यद्यस्मिन्न हते पापे सूर्योऽस्तमुपयास्यति ।
इहैव संप्रवेष्टाऽहं ज्वलितं जातवेदसम् ॥ ५३
असुरसुरमनुष्याः पक्षिणो वोरगा वा
पितृरजनिचरा वा ब्रह्मदेवर्षयो वा ।
चरमचरमपीदं यत्परं चापि तस्मा-
त्तदपि मम रिपुं तं रक्षितुं नैव शक्ताः ॥ ५४
यदि विशति रसातलं तदग्र्यं
वियदपि देवपुरं दितेः पुरं वा ।
तदपि शरशतैरहं प्रभाते
भृशमभिमन्युरिपोः शिरोऽभिहर्ता ॥ ५५

सञ्जय उवाच ।
एवमुक्त्वा विचिक्षेप गाण्डीवं सव्यदक्षिणम् ।
तस्य सर्वमतिक्रम्य धनुःशब्दोऽस्पृशद्दिवम् ॥५६
तेन प्रतिज्ञाते पाञ्चजन्यं जनार्दनः ।
प्रदध्मौ तत्र संक्रुद्धो देवदत्तं च फल्गुनः ॥ ५७
स पाञ्चजन्योऽच्युतवक्त्रवायुना
भृशं सुपूर्णोदरनिःसृतध्वनिः ।
जगत्सपातालवियद्दिगीश्वरं
प्रकम्पयामास युगात्यये यथा ॥ ५८
ततो वादित्रघोषाश्च प्रादुरासन्सहस्रशः ।
सिंहनादश्च पाण्डूनां प्रतिज्ञाते महात्मना ॥ ५९
'प्रानृत्यदिव गाण्डीवं शरास्तूणीगता मुदा ।
निराक्रामन्निव तदा स्वयमेव मृधैषिणः ॥ ६०
भीमसेनः सुसंहृष्टः प्रत्यभाषत भारत ।
धनंजयमभिप्रेक्ष्य हर्षगद्गदया गिरा ॥ ६१
प्रतिज्ञोद्भवशब्देन कृष्णशङ्खस्वनेन च ।
निहतो धार्तराष्ट्रोऽयं सानुबन्धः सुयोधनः ॥ ६२
अथ मृदिततमाग्र्यदाममाल्यं
तव सुतशोकमयं च रोषजातम् ।
व्यपनुदति महाप्रभावमेत-
न्नरवर वाक्यमिदं महार्थमिष्टम् ॥ ६३
सञ्जय उवाच ।
अथ शङ्खैश्च भेरीभिः पणवैः सैनिकास्तथा ।
सम्रूतमागधा जिष्णुं स्तुतिभिः समपूजयन् ॥६४
तदा भीमं बलं सर्वं तेन नादेन मोहितम् ।
तावकं तन्महाराज विषण्णं समपद्यत ॥' ६५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

## चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

अर्जुनप्रतिज्ञाश्रवणचकितस्य जयद्रथस्य द्रोणदुर्योधनाभ्यामाश्वासनम् ॥ १ ॥

सञ्जय उवाच ।
श्रुत्वा तु तं महाशब्दं पाण्डूनां पुत्रगृद्धिनाम् ।
चारैः प्रवेदितस्त्रस्तः समुत्थाय जयद्रथः ॥ १
शोकसंमूढहृदयो दुःखेनाभ्याहतो भृशम् ।
मज्जमान इवागाधे विपुले शोकसागरे ।
जगाम समितिं राज्ञां सैन्धवो विमृशन्बहु ॥ २

दितेरिति । कार्ये कारणोपचाराद्दैत्यानामित्यर्थः ॥ ५५ ॥ | त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

स तेषां नरदेवानां सकाशे पर्यदेवयत् ।
अभिमन्युपितुर्भीतः सव्रीडो वाक्यमब्रवीत् ॥ ३
योऽसौ पाण्डोः किल क्षेत्रे जातः शक्रेण कामिना ।
स निनीषति दुर्बुद्धिर्मां किलैकं यमक्षयम् ॥ ४
स्वस्ति वोऽस्तु गमिष्यामि स्वगृहं जीवितेप्सया ५
अथवास्त्रप्रतिबलास्त्रात मां क्षत्रियर्षभाः ।
पार्थेन प्रार्थितं वीरास्ते संदत्त ममाभयम् ॥ ६
द्रोणदुर्योधनकृपाः कर्णमद्रेशबाह्लिकाः ।
दुःशासनादयः शक्तास्त्रातुमप्यन्तकार्दितम् ॥ ७
किमङ्ग पुनरेकेन फल्गुनेन जिघांसता ।
न त्रास्यन्ति भवन्तो मां समस्ताः पतयः क्षितेः॥८
प्रतिज्ञां पाण्डवेयानां श्रुत्वा मम महद्भयम् ।
सीदन्ति मम गात्राणि मुमूर्षोरिव पार्थिवाः ॥९
वधो नूनं प्रतिज्ञातो मम गाण्डीवधन्वना ।
तथाहि हृष्टाः क्रोशन्ति शोककालेऽपि पाण्डवाः॥
तन्न देवा न गन्धर्वा नासुरोरगराक्षसाः ।
उत्सहन्तेऽन्यथा कर्तुं कुत एव नराधिपाः ॥ ११
तस्मान्मामनुजानीत भद्रं वोऽस्तु नरर्षभाः ।
अदर्शनं गमिष्यामि न मां द्रक्ष्यन्ति पाण्डवाः१२
सञ्जय उवाच ।
एवं विलपमानं तं भयाद्व्याकुलचेतसम् ।
आत्मकार्यगरीयस्त्वाद्राजा दुर्योधनोऽब्रवीत् १३
न भेतव्यं नरव्याघ्र को हि त्वां पुरुषर्षभ ।
मध्ये क्षत्रियवीराणां तिष्ठन्तं प्रार्थयेद्युधि ॥ १४
'एतेषां नरदेवानां मत्तमातङ्गगामिनाम् ।
सङ्घातमुपयातानामपि बिभ्येत्पुरंदरः ॥' १५
अहं वैकर्तनः कर्णश्चित्रसेनो विविंशतिः ।
भूरिश्रवाः शलः शल्यो वृषसेनो दुरासदः॥ १६
पुरुमित्रो जयो भोजः काम्भोजश्च सुदक्षिणः ।
सत्यव्रतो महाबाहुर्विकर्णो दुर्मुखश्च ह ॥ १७
दुःशासनः सुबाहुश्च कालिङ्गश्चाप्युदायुधः ।
विन्दानुविन्दावावन्त्यौ द्रोणो द्रौणिश्च सौबलः॥
'मायावी बलवाञ्छूरो राक्षसश्चाप्यलम्बुसः ।'
एते चान्ये च बहवो नानाजनपदेश्वराः ।
ससैन्यास्त्वाभिगोप्स्यन्ति व्येतु ते मानसो ज्वरः॥
त्वं चापि रथिनां श्रेष्ठः स्वयं शूरोऽमितद्युते ।
स कथं पाण्डवेयेभ्यो भयं पश्यसि सैन्धव॥२०
अक्षौहिण्यो महावीर्य मदीयास्तव रक्षणे ।
यत्ता योत्स्यन्ति माभैस्त्वं सैन्धव व्येतु ते भयम्२१
सञ्जय उवाच ।
एवमाश्वासितो राजन्पुत्रेण तव सैन्धवः
दुर्योधनेन सहितो द्रोणं रात्रावुपागमत् ॥ २२
उपसंगृह्य चरणौ द्रोणाय स विशांपतिः
उपोपविश्य प्रणतः पर्यपृच्छदिदं वचः ॥ २३
निमित्ते दूरपातित्वे लघुत्वे दृढवेधने
मम ब्रवीतु भगवान्विशेषं फल्गुनस्य च ॥ २४
विद्याविशेषमिच्छामि ज्ञातुमाचार्य तत्त्वतः ।
अर्जुनस्यात्मनश्चैव याथातथ्यं प्रचक्ष्व मे ॥ २५
द्रोण उवाच ।
सममाचार्यकं तात तव चैवार्जुनस्य च ।
योगाद्दुःखोषितत्वाच्च तस्मात्त्वत्तोऽधिकोऽर्जुनः॥
न तु ते युधि संत्रासः कार्यः पार्थात्कथंचन ।
अहं हि रक्षिता तात भयात्त्वां नात्र संशयः॥२७
न हि मद्बाहुगुप्तस्य प्रभवन्त्यमरा अपि ।
व्यूहयिष्यामि तं व्यूहं यं पार्थो न तरिष्यति॥२८
तस्माद्युध्यस्व माभैस्त्वं स्वधर्ममनुपालय ।
पितृपैतामहं मार्गमनुयाहि महारथ ॥ २९
अधीता विधिवद्वेदा अग्नयः सुहुतास्त्वया ।
इष्टं च बहुभिर्यज्ञैर्न ते मृत्युभयंकरः ॥ ३०
दुर्लभं मानुषैर्मन्दैर्महाभाग्यमवाप्य तु ।
भुजवीर्यार्जिताँल्लोकान्दिव्यान्प्राप्स्यस्यनुत्तमान्॥
कुरवः पाण्डवाश्चैव वृष्णयोऽन्ये च मानवाः ।
अहं च सहपुत्रेण अध्रुवा इति चिन्त्यताम्॥ ३२

किलेत्यरुचौ ॥ ४ ॥ स्वगृहाज्जीवितेप्सया इति ङ. पाठः ॥ ५ ॥ पार्थेन पार्थिवा वीरास्तद्दध्वं ममाभयम् इति क. ट. पाठः ॥ ६ ॥ निमित्ते लक्ष्यभेदने ॥ २४ ॥ योगादभ्यासात् । दुःखोचितत्वाच्च इति क. ट. ङ. पाठः ॥ २६ ॥ मृत्युभवं भयम् इति क. पाठः ॥ ३० ॥ चतुःसप्ततितमोऽध्यायः ॥७४॥

पर्यायेण वयं सर्वे कालेन बलिना हताः ।
परलोकं गमिष्यामः स्वैःस्वैः कर्मभिरन्विताः॥ ३३
तपस्तप्त्वा तु याँल्लोकान्प्राप्नुवन्ति तपस्विनः ।
क्षत्रधर्माश्रिता वीराः क्षत्रियाः प्राप्नुवन्ति तान् ३४
एवमाश्वासितो राजा भारद्वाजेन सैन्धवः ।
अपानुदद्भयं पार्थाद्युद्धाय च मनो दधे ॥ ३५
ततः प्रहर्षः सैन्यानां तस्य चासीद्विशांपते ।
वादित्राणां ध्वनिश्चोग्रः सिंहनादरवैः सह ॥ ३६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

श्रीकृष्णेनार्जुनंप्रति द्रोणादिभिर्जयद्रथरक्षणप्रतिज्ञादिकथनम् ॥ १ ॥

सञ्जय उवाच ।
प्रतिज्ञाते तु पार्थेन सिन्धुराजवधे तदा ।
वासुदेवो महाबाहुर्धनञ्जयमभाषत ॥ १
भ्रातॄणां मतमज्ञाय त्वया वाचा प्रतिश्रुतम् ।
सैन्धवं चास्मि हन्तेति तत्साहसमिदं कृतम् ॥ २
असंमन्त्र्य मया सार्धमतिभारोऽयमुद्यतः ।
कथं तु सर्वलोकस्य नावहास्या भवेमहि ॥ ३
धार्तराष्ट्रस्य शिबिरे ये तु प्रणिहिताश्चराः ।
त इमे शीघ्रमागम्य प्रवृत्तिं वेदयन्ति नः ॥ ४
त्वया वै संप्रतिज्ञाते सिन्धुराजवधे प्रभो
सिंहनादः सवादित्रः सुमहानिह तैः श्रुतः ॥ ५
तेन शब्देन वित्रस्ता धार्तराष्ट्राः ससैन्धवाः ।
नाकस्मात्सिंहनादोऽयमिति मत्वा व्यवस्थिताः ६
सुमहाञ्शब्दसंपातः कौरवाणां महाभुज ।
आसीन्नागाश्वपत्तीनां रथघोषश्च भैरवः ॥ ७
अभिमन्योर्वधं श्रुत्वा ध्रुवमार्तो धनञ्जयः ।
रात्रौ निर्यास्यति क्रोधादिति मत्वा व्यवस्थिताः८
तैश्चारेभ्य इयं कृत्स्ना श्रुता सत्यवतस्तव ।
प्रतिज्ञा सिन्धुराजस्य वधे राजीवलोचन ॥ ९
ततो विमनसः सर्वे त्रस्ताः क्षुद्रमृगा इव
आसन्सुयोधनामात्याः स च राजा जयद्रथः॥ १०
अथोत्थाय सहामात्यैर्दीनः स्वशिबिरात्किल ।
आयात्सौवीरसिन्धूनामीश्वरो राजसंसदम् ॥ ११
स मन्त्रकाले संमन्त्र्य सर्वां नैश्रेयसीं क्रियाम् ।
सुयोधनमिदं वाक्यमब्रवीद्राजसंसदि ॥ १२
मामसौ पुत्रहन्तेति श्वोऽभियाता धनञ्जयः ।
प्रतिज्ञातो हि सेनाया मध्ये तेन वधो मम ॥ १३
तां न देवा न गन्धर्वा नासुरोरगराक्षसाः ।
उत्सहन्तेऽन्यथा कर्तुं प्रतिज्ञां सव्यसाचिनः ॥ १४
ते मां रक्षत संग्रामे मा वो मूर्ध्नि धनंजयः ।
पदं कृत्वाऽऽप्नुयाल्लक्ष्यं युक्तं प्रतिविधीयताम् १५
अथ रक्षा न मे सम्यक्क्रियते कुरुनन्दन ।
अनुजानीहि मां राजन्गमिष्यामि गृहान्प्रति १६
एवमुक्तस्त्ववाक्शीर्षो विमनाः ससुयोधनः ।
श्रुत्वा तं समयं तस्य ध्यानमेवान्वपद्यत ॥ १७
तमार्तमभिसंप्रेक्ष्य राजा किल स सैन्धवः ।
मृदु चात्महितं चैव सापेक्षमिदमुक्तवान् ॥ १८
नेह पश्यामि भवतां तथावीर्यं धनुर्धरम् ।
योऽर्जुनस्यास्त्रमस्त्रेण प्रतिहन्यान्महाहवे ॥ १९
वासुदेवसहायस्य गाण्डीवं धुन्वतो धनुः ।
कोऽर्जुनस्याग्रतस्तिष्ठेत्साक्षादपि शतक्रतुः ॥ २०
महेश्वरोऽपि पार्थेन श्रूयते योधितः पुरा ।
पदातिना महावीर्यो गिरौ हिमवति प्रभुः ॥२१
दानवानां सहस्राणि हिरण्यपुरवासिनाम् ।
जघानैकरथेनैव देवराजप्रचोदितः ॥ २२
समायुक्तो हि कौन्तेयो वासुदेवेन धीमता
सामरानपि लोकांस्त्रीन्हन्यादिति मतिर्मम ॥ २३
सोऽहमिच्छाम्यनुज्ञातुं रक्षितुं वा महात्मना ।
द्रोणेन सहपुत्रेण वीरेण यदि मन्यसे ॥ २४

अशब्दो निषेधे । अज्ञात्वेत्यर्थः ॥ २ ॥

श्रीभगवानुवाच ।
स राज्ञा स्वयमाचार्यो भृशमत्रार्थितोऽर्जुन ।
संविधानं च विहितं रथाश्च किल सज्जिताः ॥२५
कर्णो भूरिश्रवा द्रौणिर्वृषसेनश्च दुर्जयः ।
कृपश्च मद्रराजश्च षडेतेऽस्य पुरोगमाः ॥ २६
शकटः पद्मकश्चार्धो व्यूहो द्रोणेन निर्मितः ।
पद्मकर्णिकमध्यस्थः सूची पार्श्वे जयद्रथः ॥ २७
स्थास्यते रक्षितो वीरैः सिन्धुराट् स सुदुर्मदः
धनुष्यस्त्रे च वीर्ये च प्राणे चैव तथौरसे ॥ २८
अविषह्यतमा ह्येते निश्चिताः पार्थ षड्रथाः ।
एतानजित्वा सगणान्नैव प्राप्यो जयद्रथः ॥२९
तेषामेकैकशो वीर्यं षण्णां त्वमनुचिन्तय ।
सहिता हि नरव्याघ्र न शक्या जेतुमञ्जसा ॥ ३०
भूयस्तु मन्त्रयिष्यामि नीतिमात्महिताय वै ।
मन्त्रज्ञैः सचिवैः सार्धं सुहृद्भिः कार्यसिद्धये ॥ ३१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

अर्जुनेन श्रीकृष्णंप्रति स्वसामर्थ्यकथनम् ॥ १ ॥

अर्जुन उवाच ।
षड्रथान्धार्तराष्ट्रस्य मन्यसे यान्बलाधिकान् ।
तेषां वीर्यं ममार्धेन न तुल्यमिति मे मतिः ॥ १
अस्त्रमस्त्रेण सर्वेषामेतेषां मधुसूदन ।
मया द्रक्ष्यसि निर्भिन्नं जयद्रथवधैषिणा ॥ २
द्रोणस्य मिषतश्चाहं सगणस्य विपश्चितः ।
मूर्धानं सिन्धुराजस्य पातयिष्यामि भूतले ॥ ३
यदि साध्याश्च रुद्राश्च वसवश्च सहाश्विनः ।
मरुतश्च सहेन्द्रेण विश्वेदेवाः सहेश्वराः ॥ ४
पितरः सहगन्धर्वाः सुपर्णाः सागराद्रयः ।
द्यौर्वियत्पृथिवी चेयं दिशश्च सदिगीश्वराः ॥ ५
ग्राम्यारण्यानि भूतानि स्थावराणि चराणि च ।
त्रातारः सिन्धुराजस्य भवन्ति मधुसूदन ॥ ६
तथापि बाणैर्निहतं श्वो द्रष्टासि रणे मया ।
सत्येन च शपे कृष्ण तथैवायुधमालभे ॥ ७
यस्य गोप्ता महेष्वासो द्रोणः पापस्य दुर्मतेः ।
तमेव प्रथमं द्रोणमभियास्यामि केशव ॥ ८
तस्मिन्युद्धमिदं बद्धं मन्यते स सुयोधनः ।
तस्मात्तस्यैव सेनाग्रं भित्त्वा यास्यामि सैन्धवम् ॥ ९
द्रष्टासि श्वो महेष्वासान्नाराचैस्तिग्मतेजितैः ।
शृङ्गाणीव गिरेर्वज्रैर्दार्यमाणान्मया युधि ॥ १०
नरनागाश्वदेहेभ्यो विस्रविष्यति शोणितम् ।
पतद्भ्यः पतितेभ्यश्च विभिन्नेभ्यः शितैः शरैः ॥ ११
गाण्डीवप्रेषिता बाणा मनोऽनिलसमा जवे ।
नृनागाश्वान्विदेहासून्कर्तारश्च सहस्रशः ॥ १२
शक्राद्भीष्मात्कृपाद्द्रोणाद्देवाद्रुद्राच्च यन्मया ।
उपात्तमस्त्रं घोरं तद्द्रष्टारोऽत्र नरा युधि ॥ १३
ब्राह्मेणास्त्रेण चास्त्राणि हन्यमानानि संयुगे ।
मया द्रष्टाऽसि सर्वेषां सैन्धवस्याभिरक्षिणाम् १४
शरवेगसमुत्कृत्तै राज्ञां केशव मूर्धभिः ।
आस्तीर्यमाणां पृथिवीं द्रष्टाऽसि श्वो मया युधि १५
क्रव्यादांस्तर्पयिष्यामि द्रावयिष्यामि शात्रवान् ।
सुहृदो नन्दयिष्यामि प्रमथिष्यामि सैन्धवम् ॥१६
बह्वागस्कृत्कुसंबन्धी पापदेशसमुद्भवः ।
मया सैन्धवको राजा हतः स्वाञ्शोचयिष्यति ॥१७
सर्वे क्षीरान्नभोक्तारः पापाचारा रणाजिरे ।
मया सराजका बाणैर्हता नश्यन्ति सैन्धवाः ॥ १८
तथा प्रभाते कर्ताऽस्मि यथा कृष्ण सुयोधनः ।
नान्यं धनुर्धरं लोके मंस्यते मत्समं युधि ॥ १९
'गाण्डीवं च धनुर्दिव्यं योद्धारं च धनञ्जम् ।

---

संविधानं प्रतिविधानम् ॥ २५ ॥ पद्मव्यूहः पश्चार्धे पश्चाद्भागे यस्य । सूची सूचीमुखो व्यूहः ॥ २७ ॥ पञ्चसप्ततितमोऽध्यायः ॥ ७५॥

तस्मिन् द्रोणे । युद्धं बद्धमिव बद्धं एकान्तजयेन स्थिरीकृतम् ॥ ९ ॥ षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

यन्तारं च हृषीकेशं कोऽतिवर्तेत संयुगे' ॥ २०
तव प्रसादाद्भगवन्किंनावाप्तं रणे मम ।
अविषह्यं हृषीकेश किं जानन्मां विगर्हसे ॥ २१
यथा लक्ष्म स्थिरं चन्द्रे समुद्रे च यथा जलम् ।
एवमेतां प्रतिज्ञां मे सत्यां विद्धि जनार्दन ॥ २२
मावमंस्था ममास्त्राणि मावमंस्थाश्च गाण्डिवम् ।
मावमंस्था बलं बाह्वोर्मावमंस्था धनञ्जयम् ॥ २३
गाण्डीवं च धनुर्दिव्यं योद्धा चाहं नरर्षभ ।
त्वं च यन्ता हृषीकेश किंनु स्यादजितं मया ॥ २४
यथाभियाय संग्रामं न जितो वै जयामि च
तेन सत्येन संग्रामे हतं विद्धि जयद्रथम् ॥ २५
'त्वं च माधव सर्वं तत्तथा प्रतिविधास्यसि ।
यथा रिपूणां मिषतां प्रमथिष्यामि सैन्धवम्' २६
ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु सन्नतिः ।
श्रीर्ध्रुवाऽपि च दक्षेषु ध्रुवो नारायणे जयः ॥ २७
सञ्जय उवाच
एवमुक्त्वा हृषीकेशं स्वयमात्मानमात्मना ।
संदिदेशार्जुनो नर्दन्वासविः केशवं प्रभुम् ॥ २८
यथा प्रभातां रजनीं कल्पितः स्याद्रथोत्तमः ।
तथा कार्यं त्वया कृष्ण प्रतिज्ञा स्याद्यथा ध्रुवा ॥ २९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

श्रीकृष्णेन सुभद्रासमाश्वासनम् ॥ १ ॥

सञ्जय उवाच
तां निशां दुःखशोकार्तौ निःश्वसन्ताविवोरगौ ।
निद्रां नैवोपलेभाते वासुदेवधनञ्जयौ ॥ १
नरनारायणौ क्रुद्धौ ज्ञात्वा देवाः सवासवाः ।
व्यथिताश्चिन्तयामासुः किंस्विदेतद्भविष्यति ॥ २
ववुश्च दारुणा वाता रूक्षा घोराभिशंसिनः ।
सकबन्धस्तथाऽऽदित्ये परिघः समदृश्यत ॥ ३
शुष्काशन्यश्च निष्पेतुः सनिर्घाताः सविद्युतः ।
चचाल चापि पृथिवी सशैलवनकानना ॥ ४
चुक्षुभुश्च महाराज सागरा मकरालयाः ।
प्रतिस्रोतःप्रवृत्ताश्च तथा गन्तुं समुद्रगाः ॥ ५
रथाश्वनरनागानां प्रवृत्तमधरोत्तरम् ।
क्रव्यादानां प्रमोदार्थं यमराष्ट्रविवृद्धये ॥
वाहनानि शकृन्मूत्रे मुमुचू रुरुदुश्च ह ।
तान्दृष्ट्वा दारुणान्सर्वानुत्पातांल्लोमहर्षणान् ॥ ७
सर्वे ते व्यथिताः सैन्यास्त्वदीया भरतर्षभ
श्रुत्वा महाबलस्योग्रां प्रतिज्ञां सव्यसाचिनः ॥ ८
अथ कृष्णं महाबाहुरब्रवीत्पाकशासनिः ।
आश्वासय सुभद्रां त्वं भगिनीं स्नुषया सह ॥ ९
स्नुषां चास्या वयस्याश्च विशोकाः कुरु माधव ।
साम्ना सत्येन युक्तेन वचसाऽऽश्वासय प्रभो ॥ १०
ततोऽर्जुनगृहं गत्वा वासुदेवः सुदुर्मनाः ।
भगिनीं पुत्रशोकार्तामाश्वासयत दुःखिताम् ॥ ११
वासुदेव उवाच ।
मा शोकं कुरु वार्ष्णेयि कुमारं प्रति सस्नुषा ।
सर्वेषां प्राणिनां भीरु निष्ठैषा कालनिर्मिता ॥ १२
कुले जातस्य वीरस्य क्षत्रियस्य विशेषतः ।
सदृशं मरणं ह्येतत्तव पुत्रस्य मा शुचः ॥ १३
दिष्ट्या महारथो धीरः पितुस्तुल्यपराक्रमः ।
क्षात्रेण विधिना प्राप्तो वीराभिलषितां गतिम् ॥ १४
जित्वा सुबहुशः शत्रून्प्रेषयित्वा च मृत्यवे ।
गतः पुण्यकृतां लोकान्सर्वकामदुहोऽक्षयान् ॥ १५
तपसा ब्रह्मचर्येण श्रुतेन प्रज्ञयापि च ।
सन्तो यां गतिमिच्छन्ति तां प्राप्तस्तव पुत्रकः ॥ १६
वीरसूर्वीरपत्नी त्वं वीरजा वीरबान्धवा ।
मा शुचस्तनयं भद्रे गतः स परमां गतिम् ॥ १७
'स्वाध्याययुक्तं ब्राह्मणी याचितारं
गौर्वोढारं क्षिप्रगन्तारमश्वा ।

दासं शूद्रा कर्मकारं तु वैश्या
शूरं सूते त्वद्विधा राजपुत्री ॥' १८
प्राप्स्यते चाप्यसौ पापः सैन्धवो बालघातकः।
अधर्मस्यास्य तु फलं ससुहृद्गणबान्धवः ॥ १९
व्युष्टायां तु वरारोहे रजन्यां पापकर्मकृत् ।
न हि मोक्ष्यति पार्थात्स प्रविष्टोऽप्यमरावतीम् २०
श्वः शिरः पादमूलं ते सैन्धवस्याहृतं ध्रुवम् ।
पद्म्यां प्रमथितासि त्वं विशोका भव मा रुदः॥२१
क्षत्रधर्मं पुरस्कृत्य गतः शूरः सतां गतिम् ।
वयं च प्राप्नुयामेह ये चान्ये शस्त्रजीविनः॥२२
व्यूढोरस्को महाबाहुरनिवर्ती रिपुव्रजात् ।
गतस्तव वरारोहे पुत्रः स्वर्गं ज्वरं जहि ॥ २३
अनुयातश्च पितरं मातृपक्षं च वीर्यवान् ।
सहस्रशो रिपून्हत्वा हतः शूरो महारथः ॥ २४
आश्वासय स्नुषां राज्ञि मा शुचः क्षत्रिये भृशम्।
श्वः प्रियं सुमहच्छ्रुत्वा विशोका भव नन्दिनि॥२५
यत्पार्थेन प्रतिज्ञातं तत्तथा न तदन्यथा ।
चिकीर्षितं हि ते भर्तुर्न भवेज्जातु निष्फलम्॥२६
यदि च मनुजपन्नगाः पिशाचा
रजनिचराः पतगाः सुरासुराश्च ।
रणगतमभियान्ति सिन्धुराजं
न स भविता सह तैरपि प्रभाते ॥ २७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

अभिमन्युमनुशोच्य विलपन्त्याः सुभद्रायाः कृष्णेनाश्वासनम् ॥ १ ॥

सञ्जय उवाच ।
एतच्छ्रुत्वा वचस्तस्य केशवस्य महात्मनः ।
सुभद्रा पुत्रशोकार्ता विललाप सुदुःखिता ॥ १
हा पुत्र मम मन्दायाः कथमेत्यासि संयुगम् ।
निधनं प्राप्तवांस्तात पितुस्तुल्यपराक्रमः ॥ २
कथमिन्दीवरश्यामं सुदंष्ट्रं चारुलोचनम् ।
मुखं ते दृश्यते वत्स गुण्ठितं रणरेणुना ॥ ३
नूनं शूरं निपतितं त्वां पश्यन्त्यनिवर्तिनम् ।
सुशिरोग्रीवबाह्वंसं व्यूढोरस्कं नतोदरम् ॥ ४
चारूपचितसर्वाङ्गं स्वक्षं शस्त्रक्षताचितम् ।
भूतानि त्वां निरीक्षन्ते भूमौ चन्द्रमिवोदितम्॥५
शयनीयं पुराऽध्युष्य स्पर्ध्यास्तरणसंवृतम् ।
भूमावद्य कथं शेषे विप्रविद्धः सुखोचितः ॥ ६
योऽन्वास्यत पुरा वीरो वरस्त्रीभिर्महाभुजः ।
कथमन्वास्यते सोऽद्य शिवाभिः पतितो मृधे॥७
योऽस्तूयत पुरा हृष्टैः सूतमागधबन्दिभिः ।
सोऽद्य क्रव्याद्गणैर्घोरैर्विनदद्भिरुपास्यते ॥ ८
पाण्डवेषु च नाथेषु वृष्णिवीरेषु वा विभो ।
पाञ्चालेषु च वीरेषु हतः केनास्यनाथवत् ॥ ९
'यत्र त्वं केशवे नाथे सत्यनाथो यथा हतः ।'
अतृप्तदर्शना पुत्र दर्शनस्य तवानघ ।
मन्दभाग्या गमिष्यामि व्यक्तमद्य यमक्षयम्॥१०
विशालाक्षं सुकेशान्तं चारुवाक्यं सुगन्धि च।
तव पुत्र कदा भूयो मुखं द्रक्ष्यामि निर्व्रणम्॥ ११
धिग्बलं भीमसेनस्य धिक्पार्थस्य धनुष्मताम्।
धिग्वीर्यं वृष्णिवीराणां पाञ्चालानां च धिग्बलं १२
धिक्केकयांस्तथा चेदीन्मत्स्यांश्चैवाथ सृञ्जयान्।
ये त्वां रणगतं वीरं न शेकुरभिरक्षितुम् ॥ १३
अद्य पश्यामि पृथिवीं शून्यामिव हतत्विषम्।
अभिमन्युमपश्यन्ती शोकव्याकुललोचना ॥ १४
स्वस्रीयं वासुदेवस्य पुत्रं गाण्डीवधन्वनः ।
कथं त्वाऽतिरथं वीरं द्रक्ष्याम्यद्य निपातितम्॥१५
एह्येहि तृषितो वत्स स्तनौ पूर्णौ पिबाशु मे ।
अङ्कमारुह्य मन्दाया ह्यतृप्तायाश्च दर्शने ॥ १६
हा वीर दृष्टो नष्टश्च धनं स्वप्न इवासि मे ।
अहो ह्यनित्यं मानुष्यं जलबुद्बुदचञ्चलम् ॥ १७

अभियान्ति रक्षिष्यन्ति ॥ २७ ॥

सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

इमां ते तरुणीं भार्यां तवाधिभिरभिप्लुताम्।
'उत्तरामुत्तमां जात्या सुशीलां प्रियभाषिणीम्॥१८
शनकैः परिरभ्यैनां स्नुषां मम यशस्विनीम्
सुकुमारीं विशालाक्षीं पूर्णचन्द्रनिभाननाम्॥ १९
बालपल्लवतन्वङ्गीं मत्तमातङ्गगामिनीम्।
बिम्बाधरोष्ठीमबलामभिमन्यो प्रहर्षय॥ २०
त्वया विना कथं पुत्र जीर्णां पतितमानसाम्।'
इमां संधारयिष्यामि वृषभादिव धेनुकाम्॥ २१
अहो ह्यकाले प्रस्थानं कृतवानसि पुत्रक।
विहाय फलकाले मां सुगृद्धां तव दर्शने॥ २२
नूनं गतिः कृतान्तस्य प्राज्ञैरपि सुदुर्विदा।
यत्र त्वं केशवे नाथे संग्रामेऽनाथवद्धतः॥ २३
यज्वनां दानशीलानां ब्राह्मणानां कृतात्मनाम्।
चरितब्रह्मचर्याणां पुण्यतीर्थावगाहिनाम्॥ २४
कृतज्ञानां वदान्यानां गुरुशुश्रूषिणामपि।
सहस्रदक्षिणानां च या गतिस्तामवाप्नुहि॥ २५
या गतिर्युध्यमानानां शूराणामनिवर्तिनाम्।
हत्वारीन्निहतानां च संग्रामे तां गतिं व्रज॥२६
गोसहस्रप्रदातॄणां क्रतुदानां च या गतिः।
नैवेशिकं चाभिमतं ददतां या गतिः शुभा॥२७
ब्राह्मणेभ्यः शरण्येभ्यो निधिं निदधतां च या।
या चापि न्यस्तदण्डानां तां गतिं व्रज पुत्रक २८
ब्रह्मचर्येण यां यान्ति मुनयः संशितव्रताः।
एकपत्न्यश्च यां यान्ति तां गतिं व्रज पुत्रक॥२९
राज्ञां सुचरितैर्या च गतिर्भवति शाश्वती।
चतुराश्रमिणां पुण्यैः पावितानां सुरक्षितैः॥३०
दीनानुकम्पिनां या च सततं संविभागिनाम्।
पैशुन्याच्च निवृत्तानां तां गतिं व्रज पुत्रक॥३१
व्रतिनां धर्मशीलानां गुरुशुश्रूषिणामपि।
अमोघातिथिनां या च तां गतिं व्रज पुत्रक॥३२
कृच्छ्रेषु या धारयतामात्मानं व्यसनेषु च।
गतिः शोकाग्निदग्धानां तां गतिं व्रज पुत्रक ३३
मातापित्रोश्च शुश्रूषां कल्पयन्तीह ये सदा।
स्वदारनिरतानां च या गतिस्तामवाप्नुहि॥ ३४
ऋतुकाले स्वकां भार्यां गच्छतां या मनीषिणाम्।
परस्त्रीभ्यो निवृत्तानां तां गतिं व्रज पुत्रक॥३५
साम्ना ये सर्वभूतानि पश्यन्ति गतमत्सराः
नारुंतुदानां क्षमिणां या गतिस्तामवाप्नुहि॥ ३६
मधुमांसान्निवृत्तानां मदाद्दम्भात्तथाऽनृतात्।
परोपतापात्यक्तानां तां गतिं व्रज पुत्रक॥ ३७
ह्रीमन्तः सर्वशास्त्रज्ञा ज्ञानतृप्ता जितेन्द्रियाः।
यां गतिं साधवो यान्ति तां गतिं व्रज पुत्रक॥ ३८
सञ्जय उवाच।
एवं विलपतीं दीनां सुभद्रां शोककर्शिताम्।
अन्वपद्यत पाञ्चाली वैराटिसहितां तदा॥ ३९
सा प्रकामं रुदित्वा च विलप्य च सुदुःखिता।
उन्मत्तवत्तदा राजन्विसंज्ञा पतिता क्षितौ॥४०
सोपचारस्तु कृष्णस्तां दुःखितां भृशदुःखितः।
सिक्त्वाम्भसा समाश्वास्य तत्तदुक्त्वा हितं वचः॥
विसंज्ञकल्पां रुदतीमपविद्धां प्रवेपतीम्।
भगिनीं पुण्डरीकाक्ष इदं वचनमब्रवीत्॥ ४२
सुभद्रे मा शुचः पुत्रं पाञ्चाल्याश्वासयोत्तराम्।
गतोऽभिमन्युः प्रथितां गतिं क्षत्रियपुङ्गवः॥४३
ये चान्येऽपि कुले सन्ति पुरुषा नो वरानने।
सर्वे न ते गतिं यान्ति याऽभिमन्योर्यशस्विनः ४४
कुर्याम तद्वयं कर्म कुर्युर्येत्सुहृदश्च नः।
कृतवान्यादृगद्यैकस्तव पुत्रो महारथः॥ ४५
सञ्जय उवाच
एवमाश्वास्य भगिनीं द्रौपदीमपि चोत्तराम्।
पार्थस्यैव महाबाहुः पार्श्वमागादरिंदमः॥ ४६
ततोऽभ्यनुज्ञाय नृपान्कृष्णो बन्धूंस्तथाऽर्जुनम्।
विवेशान्तःपुरे राजंस्ते च जग्मुः स्वमालयम्॥४७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि अष्टसप्ततितमोऽध्यायः॥ ७८॥

नैवेशिकं सोपकरणं गृहम्। नैवेशिकायेति पाठे गृहाश्रमोन्मुखाय विद्याव्रतस्नाताय। अभिमतं विवाहोपयुक्तम्॥ २७॥ न्यस्तदण्डानां निरस्ताभिमानानाम्। दण्डो स्त्री लगुडे पुमानित्युपक्रम्य दमे यमेऽभिमानेचेति मेदिनी॥ २८॥ एकपत्न्यः पतिंव्रताः॥ २९॥ अष्टसप्ततितमोऽध्यायः॥ ७८॥

## एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

श्रीकृष्णेन रात्रावर्जुनेन त्र्यम्बकाय बलिप्रदापनम् ॥ १ ॥ कृष्णदारुकसंभाषणम् ॥ २ ॥

सञ्जय उवाच ।
ततोऽर्जुनस्य भवनं प्रविश्याप्रतिमं विभुः ।
स्पृष्ट्वाम्भः पुण्डरीकाक्षः स्थण्डिले शुभलक्षणे ।
संतस्तार शुभां शय्यां दर्भैर्वैदूर्यसन्निभैः ॥ १
ततो माल्येन विधिवल्लाजैर्गन्धैः सुमङ्गलैः ।
अलंचकार तां शय्यां परिवार्यायुधोत्तमैः ॥ २
ततः स्पृष्टोदकं पार्थं विनीतपरिचारकम् ।
नैत्यकं दर्शयाञ्चक्रे नैशं त्रैयम्बकं बलिम् ॥ ३
ततः प्रीतमनाः पार्थो गन्धमाल्यैश्च माधवम् ।
अलङ्कृत्योपहारं तं नैशं तस्मै न्यवेदयत् ॥ ४
साधुसाध्विति गोविन्दः फल्गुनं प्रत्यभाषत ॥५
सुप्यतां पार्थ भद्रं ते कल्याणाय व्रजाम्यहम् ।
स्थापयित्वा ततो द्वास्थान्गोप्तॄंश्चात्तायुधान्नरान् ॥
दारुकानुगतः श्रीमान्विवेश शिबिरं स्वकम् ।
शिश्ये च शयने शुभ्रे बहुकृत्यं विचिन्तयन् ॥७
पार्थाय सर्वं भगवाञ्शोकदुःखापहं विधिम् ।
व्यदधात्पुण्डरीकाक्षस्तेजोद्युतिविवर्धनम् ॥ ८
योगमास्थाय युक्तात्मा सर्वेषामीश्वरेश्वरः ।
श्रेयस्कामः पृथुयशा विष्णुर्जिष्णुप्रियंकरः ॥ ९
न पाण्डवानां शिबिरे कश्चित्सुष्वाप तां निशाम् ।
प्रजागरः सर्वजनं ह्याविवेश विशांपते ॥ १०
पुत्रशोकाभितप्तेन प्रतिज्ञातो महात्मना ।
श्वः सिन्धुराजस्य वधः कार्यो गाण्डीवधन्वना ११
तत्कथं नु महाबाहुर्वासविः परवीरहा ।
प्रतिज्ञां सफलां कुर्यादिति ते समचिन्तयन् ॥१२
कष्टं हीदं व्यवसितं पाण्डवेन महात्मना ।
पुत्रशोकाभिभूतेन प्रतिज्ञा महती कृता ॥ १३
भ्रातरश्चापि विक्रान्ता बहुलानि बलानि च ।
धृतराष्ट्रस्य पुत्रेण सर्वतः संनिवेशिताः ॥ १४
स हत्वा सैन्धवं सङ्ख्ये पुनरेतु जयी सुखी ।
'हत्वा रिपुगणं सर्वं पारयित्वा महाव्रतम् ॥ १५
यद्यस्ति सुकृतं किंचिदस्माकं हन्तु सैन्धवम् ।
जित्वा सर्वान्रिपून्पार्थस्त्रातु नोऽस्मान्महाभयात् ॥
एवमाशंसमानास्ते केचित्तस्थुरुपश्रुतिम् ।
श्रुत्वा चेष्टं सुमनसो व्यक्तमाशंसिरे जयम् ॥१७
भविता नु कथं कृत्यमिदमित्यब्रुवञ्जनाः ।'
श्वोऽहत्वा सिन्धुराजं वै धूमकेतुं प्रवेक्ष्यति ॥१८
न शक्यमनृतां कर्तुं प्रतिज्ञां विजयेन हि ।
'महद्धि साहसं पार्थः कृतवाञ्छोकमोहितः ॥' १९
धर्मपुत्रः कथं राजा भविष्यति मृतेऽर्जुने ।
तस्मिन्हि विजयः कृत्स्नः पाण्डवेन समाहितः ॥२०
यदि नोऽस्ति कृतं किंचिद्यदि दत्तं हुतं यदि ।
फलेन तस्य सर्वस्य सव्यसाची जयत्वरीन् ॥ २१
सञ्जय उवाच ।
एवं कथयतां तेषां जयमाशंसतां प्रभो ।
कृच्छ्रेण महता राजन्रजनी व्यत्यवर्तत ॥ २२
तस्या रजन्या मध्ये तु प्रतिबुद्धो जनार्दनः ।
स्मृत्वा प्रतिज्ञां पार्थस्य दारुकं प्रत्यभाषत ॥२३
अर्जुनेन प्रतिज्ञातमार्तेन हतबन्धुना ।
जयद्रथं वधिष्यामि श्वोभूत इति दारुक ॥ २४
तत्तु दुर्योधनः श्रुत्वा मन्त्रिभिर्मन्त्रयिष्यति ।
यथा जयद्रथं पार्थो न हन्यादिति संयुगे ॥ २५
अक्षौहिण्यो हि ताः सर्वा रक्षिष्यन्ति जयद्रथम् ।
द्रोणश्च सहपुत्रेण सर्वास्त्रविधिपारगः ॥ २६
एको वीरः सहस्राक्षो दैत्यदानवदर्पहा ।
सोऽपि तं नोत्सहेताजौ हन्तुं द्रोणेन रक्षितम् ॥२७
सोऽहं श्वस्तत्करिष्यामि यथा कुन्तीसुतोऽर्जुनः ।
अप्राप्तेऽस्तं दिनकरे हनिष्यति जयद्रथम् ॥ २८
न हि दारा न मित्राणि ज्ञातयो न च बान्धवाः ।
कश्चिदन्यः प्रियतरः कुन्तीपुत्रान्ममार्जुनात् ॥ २९

लाजैरक्षतैः ॥ २ ॥ तस्मै त्र्यम्बकाय ॥ ४ ॥ पार्थाय तादर्थ्ये चतुर्थी । तेजः प्रतापः ॥ ८ ॥ महात्मना इत्यस्यानन्तरं स च राजा महावीर्यः पारयत्वर्जुनः स ताम् इत्येकमर्धं ङ. च. झ. ञ. पुस्तकेषु अधिकं वर्तते ॥ १३ ॥

अनर्जुनमिमं लोकं मुहूर्तमपि दारुक ।
उं न शक्तोऽहं भविता न च तत्तथा ॥ ३०
अहं विजित्य तान्सर्वान्सहसा सहयद्विपान् ।
अर्जुनार्थे हनिष्यामि सकर्णान्ससुयोधनान् ॥ ३१
श्वो निरीक्षन्तु मे वीर्यं त्रयो लोका महाहवे
धनञ्जयार्थे समरे पराक्रान्तस्य दारुक ॥ ३२
श्वो नरेन्द्रसहस्राणि राजपुत्रशतानि च ।
साश्वद्विपरथान्याजौ विद्रविष्यामि दारुक ॥ ३३
श्वस्तां चक्रप्रमथितां द्रक्ष्यसे नृपवाहिनीम् ।
मया क्रुद्धेन समरे पाण्डवार्थे निपातिताम् ॥ ३४
श्वः सदेवाः सगन्धर्वाः पिशाचोरगराक्षसाः ।
ज्ञास्यन्ति लोकाः सर्वे मां सुहृदं सव्यसाचिनः ३५
यस्तं द्वेष्टि स मां द्वेष्टि यस्तं चानु स मामनु ।
इति संकल्प्यतां बुद्ध्या शरीरार्धं ममार्जुनः ॥ ३६
यथा त्वं मे प्रभातायामस्यां निशि रथोत्तमम् ।
कल्पयित्वा यथाशास्त्रमादाय व्रज संयतः ॥ ३७
गदां कौमोदकीं दिव्यां शक्तिं चक्रं धनुः शरान् ।
आरोप्य वै रथे सूत सर्वोपकरणानि च ॥ ३८
स्थानं च कल्पयित्वाऽथ रथोपस्थे ध्वजस्य मे ।
वैनतेयस्य वीरस्य समरे रथशोभिनः ॥ ३९
छत्रं जाम्बूनदैर्जालैरर्कज्वलनसप्रभैः
विश्वकर्मकृतैर्दिव्यैरश्वानपि विभूषय ॥ ४०
बलाहकं मेघपुष्पं शैब्यं सुग्रीवमेव च ।
युक्त्वा वाजिवरांस्तत्र कवची तिष्ठ दारुक ॥ ४१
पाञ्चजन्यस्य निर्घोषं पर्जन्यनिनदोपमम् ।
श्रुत्वा च भैरवं नादमुपेयास्त्वं जवेन माम् ॥ ४२
एकाह्नाऽहममर्षं च सर्वदुःखानि चैव ह ।
भ्रातुः पैतृष्वसेयस्य व्यपनेष्यामि दारुक ॥ ४३
सर्वोपायैर्यतिष्यामि यथा बीभत्सुराहवे ।
पश्यतां धार्तराष्ट्राणां हनिष्यति जयद्रथम् ॥ ४४
यस्ययस्य च बीभत्सुर्वधे यत्नं करिष्यति ।
आशंसेऽहं रणे तंतं तत्रतत्र हनिष्यति ॥ ४५
दारुक उवाच ।
जय एव ध्रुवस्तस्य कुत एव पराजयः ।
यस्य त्वं पुरुषव्याघ्र सारथ्यमुपजग्मिवान् ॥ ४६
एवं चैतत्करिष्यामि यथा मामनुभाषसे ।
सुप्रभातामिमां रात्रिं जयाय विजयस्य हि ॥ ४७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

## अशीतितमोऽध्यायः ॥ ८० ॥

अर्जुनस्य स्वप्ने कृष्णेन सह कैलासगमनम् ॥ १ ॥ तथा स्तुत्वा रुद्रप्रसादनम् ॥ २ ॥

सञ्जय उवाच
धार्तराष्ट्रस्य तं मन्त्रं स्मरन्नेव धनंजयः ।
प्रतिज्ञामात्मनो रक्षन्मुमोहाचिन्त्यविक्रमः ॥ १
तं तु शोकेन संतप्तं स्वप्ने कपिवरध्वजम् ।
आससाद महातेजा ध्यायन्तं गरुडध्वजः ॥ २
प्रत्युत्थानं च कृष्णस्य सर्वावस्थासु फल्गुनः ।
न लोपयति धर्मात्मा भक्त्या प्रेम्णा च सर्वदा ॥ ३
प्रत्युत्थाय च गोविन्दं स्वं तस्मै चासनं ददौ ।
न चासने स्वयं बुद्धिं बीभत्सुर्व्यदधात्तदा ॥ ४
ततः कृष्णो महातेजा जानँल्लोकस्य निश्चयम् ।
कुन्तीपुत्रमिदं वाक्यमासीनः स्थितमब्रवीत् ॥ ५
मा विषादे मनः पार्थ कृथाः कालो हि दुर्जयः ।
कालः सर्वाणि भूतानि नियच्छति भवाभवे ॥ ६
किमर्थं च विषादस्ते तद्ब्रूहि द्विपदां वर ।
न शोच्यं विदुषां श्रेष्ठ शोकः कार्यविनाशनः ॥ ७
यत्तु कार्यं भवेत्कार्यं कर्मणा तत्समाचर ।

सहसा बलेन ॥ ३१ ॥ अनु अनुगतः ॥ ३६ ॥ एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

न शोच्यं शोको नाचरणीयः ॥ ७ ॥ कार्यं कृत्यं कार्यं करणीयं भवेदित्यन्वयः ॥ ८ ॥

हीनचेष्टस्य यः शोकः स हि शत्रुर्धनञ्जय ॥ ८
शोचन्नन्दयते शत्रून्कर्शयत्यपि बान्धवान् ।
क्षीयते च नरस्तस्मान्न त्वं शोचितुमर्हसि ॥ ९
सञ्जय उवाच ।
इत्युक्तो वासुदेवेन बीभत्सुरपराजितः ।
आबभाषे तदा विद्वानिदं वचनमर्थवत् ॥ १०
मया प्रतिज्ञा महती जयद्रथवधे कृता ।
श्वोऽसि हन्ता दुरात्मानं पुत्रघ्नमिति केशव ॥ ११
मत्प्रतिज्ञाविघातार्थं धार्तराष्ट्रैः किलाच्युत ।
पृष्ठतः सैन्धवः कार्यः सर्वैर्गुप्तो महारथैः ॥ १२
दश चैका च ताः कृष्ण अक्षौहिण्यः सुदुर्जयाः ।
हतावशेषास्तत्रेमा हन्त माधव सङ्ख्यया ॥ १३
ताभिः परिवृतः सङ्ख्ये सर्वैश्चैव महारथैः ।
कथं शक्येत संद्रष्टुं दुरात्मा कृष्ण सैन्धवः ॥ १४
प्रतिज्ञापारणं चापि न भविष्यति केशव ।
प्रतिज्ञायां च हीनायां कथं जीवति मद्विधः ॥ १५
दुःखापायस्य मे वीर विकाङ्क्षा परिवर्तते ।
द्रुतं च याति सविता तत एतद्ब्रवीम्यहम् ॥ १६
सञ्जय उवाच ।
शोकस्थानं तु तच्छ्रुत्वा पार्थस्य द्विजकेतनः ।
संस्पृश्याम्भस्ततः कृष्णः प्राङ्मुखः समवस्थितः १७
इदं वाक्यं महातेजा बभाषे पुष्करेक्षणः ।
हितार्थं पाण्डुपुत्रस्य सैन्धवस्य वधे कृती ॥ १८
श्रीभगवानुवाच ।
पार्थ पाशुपतं नाम परमास्त्रं सनातनम् ।
येन सर्वान्मृधे दैत्याञ्जघ्ने देवो महेश्वरः ॥ १९
यदि तद्विदितं तेऽद्य श्वो हन्ताऽसि जयद्रथम् ।
अथ ज्ञातुं प्रपद्यस्व मनसा वृषभध्वजम् ॥ २०
तं देवं मनसा ध्यात्वा जोषमास्स्व धनञ्जय ।
ततस्तस्य प्रसादात्त्वं भक्त्या प्राप्स्यसि तन्महत् २१
सञ्जय उवाच ।
ततः कृष्णवचः श्रुत्वा संस्पृश्याम्भो धनञ्जयः ।
भूमावासीन एकाग्रो जगाम मनसा भवम् ॥ २२

ततः प्रणिहितो ब्राह्मे मुहूर्ते शुभलक्षणे ।
आत्मानमर्जुनोऽपश्यद्गगने सहकेशवम् ॥ २३
पुण्यं हिमवतः पादं मणिमन्तं च पर्वतम् ।
ज्योतिर्भिश्च समाकीर्णं सिद्धचारणसेवितम् ॥ २४
वायुवेगगतिः पार्थः खं भेजे सहकेशवः ।
केशवेन गृहीतः स दक्षिणे विभुना भुजे ॥ २५
प्रेक्षमाणो बहून्भावाञ्जगामाद्भुतदर्शनान् ।
उदीच्यां दिशि धर्मात्मा सोपश्यच्छ्वेतपर्वतम् २६
कुबेरस्य विहारे च नलिनीं पद्मभूषिताम् ।
सरिच्छ्रेष्ठां च तां गङ्गां वीक्षमाणो बहूदकाम् ॥२७
सदा पुष्पफलैर्वृक्षैरुपेतां स्फटिकोपलाम् ।
सिंहव्याघ्रसमाकीर्णां नानामृगसमाकुलाम् ॥२८
पुण्याश्रमवतीं रम्यां मनोज्ञाण्डजसेविताम् ।
मन्दरस्य प्रदेशांश्च किन्नरोद्गीतनादितान् ॥ २९
हेमरूप्यमयैः शृङ्गैर्नानौषधिविदीपितान् ।
तथा मन्दारवृक्षैश्च पुष्पितैरुपशोभितान् ॥ ३०
स्निग्धाञ्जनचयाकारं संप्राप्तः कालपर्वतम् ।
ब्रह्मतुङ्गं नदीश्चान्यास्तथा जनपदानपि ॥ ३१
स तुङ्गं शतशृङ्गं च शर्यातिवनमेव च ।
पुण्यमश्वशिरस्थानं स्थानमाथर्वणस्य च ॥ ३२
वृषदंशं च शैलेन्द्रं महामन्दरमेव च ।
अप्सरोभिः समाकीर्णं किन्नरैश्चोपशोभितम् ॥ ३३
तस्मिञ्शैले व्रजन्पार्थः सकृष्णः समवैक्षत ।
शुभैः प्रस्रवणैर्जुष्टां हेमधातुविभूषिताम् ॥ ३४
चन्द्ररश्मिप्रकाशाङ्गीं पृथिवीं पुरमालिनीम् ।
समुद्रांश्चाद्भुताकारानपश्यद्बहुलाकरान् ॥ ३५
वियद्द्यां पृथिवीं चैव तथा विष्णुपदं व्रजन् ।
विस्मितः सह कृष्णेन क्षिप्तो बाण इवाभ्यगात् ३६
ग्रहनक्षत्रसोमानां सूर्याग्न्योश्च समत्विषम् ।
अपश्यत तदा पार्थो ज्वलन्तमिव पर्वतम् ॥ ३७
समासाद्य तु तं शैलं शैलाग्रे समवस्थितम् ।
तपोनित्यं महात्मानमपश्यद्वृषभध्वजम् ॥ ३८
सहस्रमिव सूर्याणां दीप्यमानं स्वतेजसा ।

---

णिहितः समाहितमनाः ॥ २३ ॥ अथर्वणस्य मुनेः ॥ ३२ ॥

तथा च व्रजन्विष्णुपदमाकाशमभ्यगादित्यन्वयः ॥ ३६ ॥

शूलिनं जटिलं गौरं वल्कलाजिनवाससम् ॥ ३९
नयनानां सहस्रैश्च विचित्राङ्गं महौजसम् ।
पार्वत्या सहितं देवं भूतसङ्घैश्च भास्वरैः ॥ ४०
गीतवादित्रसन्नादैर्हास्यलास्यसमन्वितम् ।
वल्गितास्फोटितोत्क्रुष्टैः पुण्यैर्गन्धैश्च सेवितम् ४१
स्तूयमानं स्तवैर्दिव्यैर्ऋषिभिर्ब्रह्मवादिभिः ।
गोप्तारं सर्वभूतानामीशानं वरदं शिवम् ॥ ४२
वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा क्षितिम् ।
पार्थेन सह धर्मात्मा गृणन्ब्रह्म सनातनम् ॥ ४३
लोकादिं विश्वकर्माणमजमीशानमव्ययम् ।
मनसः परमं योनिं खं वायुं ज्योतिषां निधिम् ४४
स्रष्टारं वारिधाराणां भुवश्च प्रकृतिं पराम् ।
देवदानवयक्षाणां मानवानां च शासकम् ॥ ४५
योगानां च परं धाम दृष्टं ब्रह्मविदां निधिम् ।
चराचरस्य स्रष्टारं प्रतिहर्तारमेव च ॥ ४६
कालकोपं महात्मानं शक्रसूर्यगुणोदयम् ।
ववन्दतुस्तदा कृष्णौ वाङ्मनोबुद्धिकर्मभिः ॥ ४७
यं प्रपद्यन्ति विद्वांसः सूक्ष्माध्यात्मपदैषिणः ।
तमजं कारणात्मानं जग्मतुः शरणं भवम् ॥ ४८
अर्जुनश्चापि तं देवं भूयो भूयोऽप्यवन्दत ।
ज्ञात्वा तं सर्वभूतादिं भूतभव्यभवोद्भवम् ॥ ४९
'शरण्यं शरणं देवमीशानं परमेश्वरम् ।
जगाम जगतां नाथमर्जुनः सजनार्दनः ॥' ५०
ततस्तावागतौ दृष्ट्वा नरनारायणावुभौ ।
सुप्रसन्नमनाः शर्वः प्रोवाच प्रहसन्निव ॥ ५१
स्वागतं वां नरश्रेष्ठावुत्तिष्ठेतां गतक्लमौ ।
किंच वामीप्सितं वीरौ मनसः क्षिप्रमुच्यताम् ५२
येन कार्येण संप्राप्तौ युवां तत्साधयामि किम् ।
व्रियतामात्मनः श्रेयस्तत्सर्वं प्रददानि वाम् ॥५३

सञ्जय उवाच ।

ततस्तद्वचनं श्रुत्वा प्रत्युत्थाय कृताञ्जली ।
वासुदेवार्जुनौ शर्वं तुष्टुवाते महामती ।
भक्त्या स्तवेन दिव्येन महात्मानावनिन्दितौ ॥५४

कृष्णार्जुनावूचतुः ।

नमो भवाय शर्वाय रुद्राय वरदाय च ।
पशूनां पतये नित्यमुग्राय च कपर्दिने ॥ ५५
महादेवाय भीमाय त्र्यम्बकाय च शान्तये ।
ईशानाय मखघ्नाय नमोऽस्त्वन्धकघातिने ॥५६
कुमारगुरवे तुभ्यं नीलग्रीवाय वेधसे ।
पिनाकिने हविष्याय सत्याय विभवे सदा ॥ ५७
विलोहिताय धूम्राय व्याधायानपराजिते ।
नित्यं नीलशिखण्डाय शूलिने दिव्यचक्षुषे ॥ ५८
होत्रे पोत्रे त्रिनेत्राय व्याधाय वसुरेतसे ।
अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च ॥५९
वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे ।
तप्यमानाय सलिले ब्रह्मण्यायाजिताय च ॥ ६०
विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते ।
नमोनमस्ते सेव्याय भूतानां प्रभवे सदा ॥ ६१
ब्रह्मवक्त्राय सर्वाय शंकराय शिवाय च ।
नमोस्तु वाचस्पतये प्रजानां पतये नमः ॥ ६२
'अभिगम्याय काम्याय स्तुत्यायार्याय सर्वदा ।
नमोऽस्तु देवदेवाय महाभूतधराय च ।

---

लास्यं नृत्तम् । वल्गितमितस्ततः प्रचारः । आस्फोटितं भुजाडम्बरः । उत्क्रुष्टमुच्चैः स्वनितम् ॥ ४१ ॥ विश्वं जगत्कर्म प्राप्यं यस्य । ईशानमप्रतिहतेच्छम् । अव्ययमविकारम् । मनसः परमं प्रवृत्तिनिवृत्तिकारणम् । योनिमुत्पत्तिस्थानं च । ज्योतिषां तेजसां निधिमधिष्ठानम् ॥ ४४ ॥ योगानां योगदर्शिनां परं धाम परमाश्रयम् । दृष्टं साक्षाद्भूतं ब्रह्मतत्त्वं तद्विदां निधिं रहस्यम् ॥ ४६ ॥ कालइव कोपो यस्य । शक्रस्य गुणा ऐश्वर्यादयः सूर्यस्य गुणाः प्रतापादयः तेषामुदयो यस्मात् । कालकेशं इति क. पाठः ॥४७॥ कारणात्मानं कारणैकस्वभावम् ॥४८॥ भवः सर्वप्रभुत्वात् । शर्वः संहरणात् ॥ ५५॥ शान्तिः शमप्रधानत्वात् ॥ ५६ ॥ हविष्यः हविष्ययोग्यत्वात् । विभुर्व्यापकत्वात् ॥ ५७ ॥ व्याधाय मृगहननात् । द्विरुक्तिर्द्विस्तथाकरणात् । अनान्प्राणिनः पराजयतीति अनपराजित्सर्वभूतोत्तमत्वात् । नीलशिखण्डो नीलकेशत्वात् ॥ ५८ ॥ होता दीक्षितः भावेन हवनशीलत्वात् । वसुरेता अग्नौ रेतःक्षेपणात् ॥ ५९ ॥ मुण्डो दीक्षितत्वात् । ब्रह्मचारी रेतोविधारणात् ॥ ६० ॥ भूतानां प्राणिनां प्रमथादीनाम् ॥ ६१ ॥ ब्रह्मवक्त्रो वेदपूर्णमुखत्वात् । शिवो मोक्षहेतुत्वात् । वाचस्पतिर्वाङ्मयप्रवर्तनात् ॥ ६२ ॥ अशीतितमोऽध्यायः ॥ ८० ॥

नमो विश्वस्य पतये पत्तीनां पतये नमः ॥' ६३
नमो विश्वस्य पतये महतां पतये नमः ।
नमः सहस्रशिरसे सहस्रभुजमृत्यवे ॥ ६४
सहस्रनेत्रपादाय नमोऽसङ्ख्येयकर्मणे ।
नमो हिरण्यवर्णाय हिरण्यकवचाय च ।
भक्तानुकम्पिने नित्यं सिध्यतां नो वरः प्रभो॥६५
सञ्जय उवाच
एवं स्तुत्वा महादेवं वासुदेवः सहार्जुनः ।
प्रसादयामास भवं तदा ह्यस्त्रोपलब्धये ॥ ६६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

## एकाशीतितमोऽध्यायः ॥ ८१ ॥

अर्जुनेन स्वप्ने शंकरात्पाशुपतास्त्रमुपलभ्य कृष्णेनसह पुनः शिबिरं प्रत्यागमनम् ॥ १ ॥

सञ्जय उवाच
ततः पार्थः प्रसन्नात्मा प्राञ्जलिर्वृषभध्वजम् ।
ददर्शोत्फुल्लनयनः समस्तं तेजसां निधिम् ॥ १
तं चोपहारं सुकृतं नैशं नैत्यकमात्मना ।
ददर्श त्र्यम्बकाभ्याशे वासुदेवनिवेदितम् ॥ २
ततोऽभिपूज्य मनसा कृष्णं शर्वं च पाण्डवः ।
इच्छाम्यहं दिव्यमस्त्रमित्यभाषत शंकरम् ॥ ३
ततः पार्थस्य विज्ञाय वरार्थे वचनं तदा ।
वासुदेवार्जुनौ देवः स्मयमानोऽभ्यभाषत ॥ ४
स्वागतं वां नरश्रेष्ठौ विज्ञातं मनसेप्सितम् ।
येन कामेन संप्राप्तौ भवद्भ्यां तं ददाम्यहम् ॥ ५
सरोऽमृतमयं दिव्यमभ्याशे शत्रुसूदनौ ।
तत्र मे तद्धनुर्दिव्यं शरश्च निहितः पुरा ॥ ६
येन देवारयः सर्वे मया युधि निपातिताः ।
तत आनीयतां कृष्णौ सशरं धनुरुत्तमम् ॥ ७
तथेत्युक्त्वा तु तौ वीरौ सर्वपारिषदैः सह ।
प्रस्थितौ तत्सरो दिव्यं दिव्यैश्वर्यशतैर्युतम् ॥ ८
निर्दिष्टं यद्वृषाङ्केण पुण्यं सर्वार्थसाधकम् ।
तौ जग्मतुरसंभ्रान्तौ नरनारायणावृषी ॥ ९
ततस्तौ तत्सरो गत्वा सूर्यमण्डलसन्निभम् ।
नागमन्तर्जले घोरं ददृशातेऽर्जुनाच्युतौ ॥ १०
द्वितीयं चापरं नागं सहस्रशिरसं वरम् ।
वमन्तं विपुला ज्वाला ददृशातेऽग्निवर्चसम् ॥११
ततः कृष्णश्च पार्थश्च संस्पृश्याम्भः कृताञ्जली ।
तौ नागावुपतस्थाते नमस्यन्तौ वृषध्वजम्॥ १२
गृणन्तौ वेदविद्वांसौ तद्ब्रह्म शतरुद्रियम् ।
अप्रमेयप्रमाणं तौ गत्वा सर्वात्मना भवम् ॥१३
ततस्तौ रुद्रमाहात्म्याद्धित्वा रूपं महोरगौ ।
धनुर्बाणश्च शत्रुघ्नं तद्द्वन्द्वं समपद्यत ॥ १४
तौ तज्जगृहतुः प्रीतौ धनुर्बाणं च सुप्रभम् ।
आजह्रतुर्महात्मानौ ददतुश्च महात्मने ॥ १५
ततः पार्श्वाद्वृषाङ्कस्य ब्रह्मचारी न्यवर्तत ।
पिङ्गाक्षस्तपसः क्षेत्रं बलवान्नीललोहितः ॥ १६
स तद्गृह्य धनुःश्रेष्ठं तस्थौ स्थानं समाहितः ।
विचकर्षाथ विधिवत्सशरं धनुरुत्तमम् ॥ १७
तस्य मौर्वीं च मुष्टिं च स्थानं चालक्ष्य पाण्डवः।
श्रुत्वा मन्त्रं भवप्रोक्तं जग्राहाचिन्त्यविक्रमः॥ १८
स सरस्येव तं बाणं मुमोचातिबलः प्रभुः ।
चिक्षेप च पुनर्वीरस्तस्मिन्सरसि तद्धनुः ॥ १९
ततः प्रीतं भवं ज्ञात्वा स्मृतिमानर्जुनस्तदा ।
वरमारण्यके दत्तं दर्शनं शंकरस्य च ।
मनसा चिन्तयामास तन्मे संपद्यतां भव ॥ २०
तस्य तन्मतमाज्ञाय प्रीतः प्रादाद्वरं भवः ।
तच्च पाशुपतं घोरं प्रतिज्ञायाश्च पारणम् ॥ २१
ततः पाशुपतं दिव्यमवाप्य पुनरीश्वरात् ।
'मा दुर्धर्षः कृतं कार्यममन्यत ॥ २२

आत्मना सुकृतं सूपकल्पितम् ॥ २ ॥ द्वन्द्वं युगलम् ॥१४॥ नीललोहितः भगवतोऽपरा तनुः ॥ १६ ॥ स्थानं स्थापनकम् ॥ १७ ॥ जग्राह मनसि कृतवान् ॥ १८ ॥ एकाशीतितमोऽध्यायः ॥ ८१ ॥

'ततोऽर्जुनहृषीकेशौ पुनः पुनररिंदमौ ।'
ववन्दतुश्च संहृष्टौ शिरोभ्यां तं महेश्वरम् ॥ २३
अनुज्ञातौ क्षणे तस्मिन्भवेनार्जुनकेशवौ ।
प्राप्तौ स्वशिबिरं वीरौ मुदा परमया युतौ ॥ २४
तथा भवेनानुमतौ महासुरनिघातिना ।
इन्द्राविष्णू यथा प्रीतौ जम्भस्य वधकाङ्क्षिणौ॥२५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

## द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

श्रीकृष्णस्य कृताह्निकं युधिष्ठिरं प्रत्यागमनम् ॥ १ ॥

सञ्जय उवाच ।
तयोः संवदतोरेव कृष्णदारुकयोस्तथा ।
साऽत्यगाद्रजनी राजन्नथ राजा स बोध्यते॥ १
पठन्ति पाणिध्वनिका मागधाः स्तवगायकाः।
वैतालिकाश्च सूताश्च तुष्टुवुः पुरुषर्षभम् ॥ २
नर्तकाश्चाप्यनृत्यन्त जगुर्गीतानि गायकाः ।
कुरुवंशस्तवार्थानि मधुरं रक्तकण्ठिनः ॥ ३
मृदङ्गा झर्झरा भेर्यः पणवानकगोमुखाः ।
आडम्बराश्च शङ्खाश्च दुन्दुभ्यश्च महास्वनाः ॥४
एवमेतानि सर्वाणि तथान्यान्यपि भारत ।
वादयन्ति स्म संहृष्टाः कुशलाः साधुशिक्षिताः॥५
स मेघसमनिर्घोषो महाञ्शब्दोऽस्पृशद्दिवम् ।
पार्थिवप्रवरं सुप्तं युधिष्ठिरमबोधयत् ॥ ६
प्रतिबुद्धः सुखं सुप्तो महार्हे शयनोत्तमे ।
उत्थायावश्यकार्यार्थं ययौ स्नानगृहं नृपः ॥ ७
ततः शुक्लाम्बराः स्नातास्तरुणाः शतमष्ट च ।
स्नापकाः काञ्चनैः कुम्भैः पूर्णैः समुपतस्थिरे ॥८
भद्रासने सूपविष्टः परिधायाम्बरं लघु ।
सस्नौ चन्दनसंयुक्तैः पानीयैरभिमन्त्रितैः ॥ ९
उत्सादितः कषायेण बलवद्भिः सुशिक्षितैः ।
आप्लुतः साधिवासेन जलेन सस्सुगन्धिना ॥ १०
राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम् ।
जलक्षयनिमित्तं वै वेष्टयामास मूर्धनि ॥ ११
हरिणा चन्दनेनाङ्गमुपलिप्य महाभुजः ।
स्रग्वी चाक्लिष्टवसनः प्राङ्मुखः प्राञ्जलिः स्थितः॥
'कृत्वेन्द्रियाणामैकाग्र्यं मनसश्च महामनाः ।'
जजाप जप्यं कौन्तेयः सतां मार्गमनुष्ठितः ।
तत्राग्निशरणं दीप्तं प्रविवेश विनीतवत् ॥ १३
समिद्भिः स पवित्राभिरग्निमाहुतिभिस्तथा ।
मन्त्रपूताभिरर्चित्वा निश्चक्राम गृहात्ततः ॥ १४
द्वितीयां पुरुषव्याघ्रः कक्ष्यां निर्गम्य पार्थिवः ।
ततो वेदविदो वृद्धानपश्यद्ब्राह्मणर्षभान् ॥ १५
दान्तान्वेदव्रतस्नातान्स्नातानवभृथेषु च ।
सहस्रानुचरान्सौरान्सहस्रं चाष्ट चापरान् ॥ १६
अक्षतैः सुमनोभिश्च वाचयित्वा महाभुजः ।
तान्द्विजान्मधुसर्पिर्भ्यां फलैः श्रेष्ठैः सुमङ्गलैः॥१७
प्रादात्काञ्चनमेकैकं निष्कं विप्राय पाण्डवः ।
अलङ्कृतं चाश्वशतं वासांसीष्टाश्च दक्षिणाः॥ १८
तथा गाः कपिला दोग्ध्रीः सवत्साः पाण्डुनन्दनः।
हेमशृङ्गा रौप्यखुरा दत्त्वा तेभ्यः प्रदक्षिणम् ॥ १९
स्वस्तिकान्वर्धमानांश्च नन्द्यावर्तांश्च काञ्चनान् ।
माल्यं च जलकुम्भांश्च ज्वलितं च हुताशनम्॥२०
पूर्णान्यक्षतपात्राणि रुचकं रोचनास्तथा ।
स्वलङ्कृताः शुभाः कन्या दधिसर्पिर्मधूदकम्॥ २१

पाणिध्वनिका हस्तेन तालस्वनं कुर्वते ॥ २ ॥ रक्तकण्ठिनो रञ्जकस्वराः ॥ ३ ॥ झर्झरा झिल्लिकाः । भेर्यो बृहड्ढक्काः । पणवा मुरजाः । आनकाः पटहाः । गोमुखाः त्रागडाः । आडम्बराश्च क्षुद्रपटहाः । दुन्दुभ्यो ढक्काः ॥ ४ ॥ भद्रासने चतुःसमासने ॥ ९ ॥ कषायेण सर्वौषध्यादिकल्केन ॥ १० ॥ अक्लिष्टमनुपहतं वसनं यस्य ॥ १२ ॥ दीप्तं ज्वलदग्निम् ॥ १३ ॥ सौरान्सूर्योपासकान् ॥ १६ ॥ प्रदक्षिणं कृत्वेति शेषः ॥ १९ ॥ स्वस्तिकानालिङ्गनानि । वर्धमानान् शरावान् । नन्द्यावर्तान्संपुटिताघर्घपात्राणि ॥ २० ॥ रुचकं मातुलुङ्गकम् ॥ २१ ॥

मङ्गल्यान्पक्षिणश्चैव यच्चान्यदपि पूजितम् ।
दृष्ट्वा स्पृष्ट्वा च कौन्तेयो बाह्यां कक्ष्यां ततोऽगमत्॥
ततस्तस्यां महाबाहोस्तिष्ठतः परिचारकाः ।
सौवर्णं सर्वतोभद्रं मुक्तावैदूर्यमण्डितम् ॥ २३
परार्ध्यास्तरणास्तीर्णं सोत्तरच्छदमृद्धिमत् ।
विश्वकर्मकृतं दिव्यमुपजह्रुर्वरासनम् ॥ २४
तत्र तस्योपविष्टस्य भूषणानि महात्मनः ।
उपाजह्रुर्महार्हाणि प्रेष्याः शुभ्राणि सर्वशः ॥ २५
युक्ताभरणवेषस्य कौन्तेयस्य महात्मनः ।
रूपमासीन्महाराज द्विषतां शोकवर्धनम् ॥ २६
चामरैश्चन्द्ररश्म्याभैर्हेमदण्डैः सुशोभनैः ।
दोधूयमानैः शुशुभे विद्युद्भिरिव तोयदः ॥ २७
संस्तूयमानः सूतैश्च वन्द्यमानश्च वन्दिभिः ।
उपगीयमानो गन्धर्वैरास्ते स्म कुरुनन्दनः॥ २८
ततो मुहूर्तमासीच्च वन्दिनां निनदो महान् ।
रथानां नेमिघोषश्च खुरघोषश्च वाजिनाम् ॥ २९
ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।
नराणां पदशब्दैश्च कम्पतीव स्म मेदिनी ॥ ३०
ततः शुद्धान्तमासाद्य जानुभ्यां भूतले स्थितः
शिरसा वन्दनीयं तमभिवाद्य जनेश्वरम् ॥ ३१
कुण्डली बद्धनिस्त्रिंशः सन्नद्धकवचो युवा ।
अभिप्रणम्य शिरसा द्वास्थो धर्मात्मजाय वै॥ ३२
न्यवेदयद्धृषीकेशमुपयान्तं महात्मने ।
सोऽब्रवीत्पुरुषव्याघ्रः स्वागतेनैव माधवः ॥ ३३
'प्रवेश्यतां समीपं मे किमर्थं प्रविलम्बसे ।'
आसनं च मधुघ्नाय दीयतां परमार्चितम् ।
ततः प्रवेश्य वार्ष्णेयमुपवेश्य वरासने ॥ ३४
सत्कृत्य सत्कृतस्तेन पर्यपृच्छद्युधिष्ठिरः ॥ ३५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

जयद्रथवधस्य दुष्करत्वाशङ्किनो युधिष्ठिरस्य कृष्णेन समाश्वासनम् ॥ १ ॥

युधिष्ठिर उवाच ।
सुखेन रजनी व्युष्टा कच्चित्ते मधुसूदन ।
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत॥ १
सञ्जय उवाच
वासुदेवोऽपि तद्युक्तं प्रत्युवाच युधिष्ठिरम् ।
दर्शनादेव ते सौम्य न किंचिदशुभं मम ॥ २
सञ्जय उवाच ।
ततश्च प्रकृतीः क्षत्ता न्यवेदयदुपस्थिताः ।
अनुज्ञातश्च राज्ञा स प्रावेशयत तं जनम् ॥ ३
विराटं भीमसेनं च धृष्टद्युम्नं च सात्यकिम् ।
चेदिपं धृष्टकेतुं च द्रुपदं च महारथम् ॥ ४
शिखण्डिनं यमौ चैव चेकितानं सकेकयम् ।
युयुत्सुं चैव कौरव्यं पाञ्चाल्यं चोत्तमौजसम् ॥ ५
युधामन्युं सुबाहुं च द्रौपदेयांश्च सर्वशः ।
एतांश्च सुहृदश्चान्यान्दर्शयामास पाण्डवम् ॥ ६
अनुज्ञाताश्च पार्थेन स्वासीना आसनेषु ते ।
सर्वेष्वथ परार्ध्येषु यथार्हं वन्द्य पाण्डवम् ॥ ७
एकस्मिन्नासने वीरावुपविष्टौ महाबलौ ।
कृष्णश्च युयुधानश्च वेद्यामिव हुताशनौ ॥ ८
ततो युधिष्ठिरस्तेषां शृण्वतां मधुसूदनम् ।
अब्रवीत्पुण्डरीकाक्षमाभाष्य मधुरं वचः ॥ ९
एकं त्वां वयमाश्रित्य सहस्राक्षमिवामराः ।
प्रार्थयामो जयं युद्धे शाश्वतानि सुखानि च ॥ १०
त्वं हि राज्यविनाशं च द्विषद्भिश्च निराक्रियाम् ।
क्लेशांश्च विविधान्कृष्ण सर्वांस्तानपि वेत्थ नः॥ ११
त्वयि सर्वेश सर्वेषामस्माकं भक्तवत्सल ।
सुखमायत्तमत्यर्थं यात्रा च मधुसूदन ॥ १२
स तथा कुरु वार्ष्णेय यथा त्वयि मनो मम ।

विश्वकर्मकृतं विश्वकर्मप्रणीतेन विधिना निर्मितम् ॥ २४ ॥ वन्द्यमानः स्तूयमानः । स्तुत्यर्थस्य वदे रूपम् ॥ २८ ॥ शुद्धान्तं कक्ष्याभ्यन्तरम् ॥ ३१ ॥ द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
निराक्रियामपसारणम् ॥ ११ ॥ यात्रा स्थितिः ॥ १२ ॥

अर्जुनस्य यथा सत्या प्रतिज्ञा स्याच्चिकीर्षिता ॥ १३
स भवांस्तारयत्वस्माद्दुःखामर्षमहार्णवात् ।
पारं तितीर्षतामद्य प्लवो नो भव माधव ॥ १४
नहि तत्कुरुते योधः कार्तवीर्यसमोऽपि यः ।
युधि यत्कुरुषे कृष्ण सारथ्यं त्वं समास्थितः ॥ १५
यथैव सर्वास्वापत्सु पासि वृष्णीञ्जनार्दन ।
तथैवास्मान्महाबाहो वृजिनात्त्रातुमर्हसि ॥ १६
त्वमगाधेऽप्लवे मग्नान्पाण्डवान्कुरुसागरे ।
समुद्धर प्लवो भूत्वा शङ्खचक्रगदाधर ॥ १७
नमस्ते देवदेवेश सनातन विशातन ।
विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ॥ १८
नारदस्त्वां समाचख्यौ पुराणमृषिसत्तमम् ।
वरदं शार्ङ्गिणं श्रेष्ठं तत्सत्यं कुरु माधव ॥ १९
इत्युक्तः पुण्डरीकाक्षो धर्मराजेन संसदि ।
तोयमेघस्वनो वाग्मी प्रत्युवाच युधिष्ठिरम् ॥ २०
वासुदेव उवाच ।
सामरेष्वपि लोकेषु सर्वेषु न तथाविधः ।
शरासनधरः कश्चिद्यथा पार्थो धनञ्जयः ॥ २१
वीर्यवानस्त्रसंपन्नः पराक्रान्तो महाबलः ।
युद्धशौण्डः सदामर्षी तेजसा परमो नृणाम् ॥ २२
स युवा वृषभस्कन्धो दीर्घबाहुर्महाबलः ।
सिंहर्षभगतिः श्रीमान्द्विषतस्ते हनिष्यति ॥ २३
अहं च तत्करिष्यामि तथा कुन्तीसुतोऽर्जुनः ।
धार्तराष्ट्रस्य सैन्यानि धक्ष्यत्यग्निरिवेन्धनम् ॥ २४
अद्य तं पापकर्माणं क्षुद्रं सौभद्रघातिनम् ।
अपुनर्दर्शनं मार्गमिषुभिः क्षेप्स्यतेऽर्जुनः ॥ २५
तस्याद्य गृध्राः श्येनाश्च चण्डगोमायवस्तथा ।
भक्षयिष्यन्ति मांसानि ये चान्ये पुरुषादकाः २६
यद्यस्य देवा गोप्तारः सेन्द्राः सर्वे तथाऽप्यसौ ।
राजधानीं यमस्याद्य हतः प्राप्स्यति दुर्मतिः ॥ २७
निहत्य सैन्धवं जिष्णुरद्य त्वामुपयास्यति ।
विशोको विज्वरो राजन्भव शान्तिपुरस्कृतः ॥ २८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

## चतुरशीतितमोऽध्यायः ॥ ८४ ॥

जयद्रथंप्रति गच्छताऽर्जुनेन युधिष्ठिररक्षणाय सात्यकिंप्रति चोदना ॥ १ ॥

सञ्जय उवाच
तथा तु वदतां तेषां प्रादुरासीद्धनञ्जयः
राजानं ससुहृद्गणम् ॥ १
तं प्रविष्टं शुभां कक्ष्यामभिवन्द्याग्रतः स्थितम् ।
तमुत्थायार्जुनं प्रेम्णा सस्वजे पाण्डवर्षभः ॥ २
मूर्ध्नि चैनमुपाघ्राय परिष्वज्य च बाहुना ।
आशिषः परमाः प्रोच्य स्मयमानोऽभ्यभाषत ॥ ३
व्यक्तमर्जुन संग्रामे ध्रुवस्ते विजयो महान् ।
तादृग्रूपा च ते च्छाया प्रसन्नश्च जनार्दनः ॥ ४
सञ्जय उवाच ।
तमब्रवीत्ततो जिष्णुर्महदाश्चर्यमुत्तमम् ।
दृष्टवानसि भद्रं ते केशवस्य प्रसादजम् ॥ ५
ततस्तत्कथयामास यथादृष्टं धनञ्जयः ।
आश्वासनार्थं सुहृदां त्र्यम्बकेण समागमम् ॥ ६
ततः शिरोभिरवनिं स्पृष्ट्वा सर्वे च विस्मिताः ।
नमस्कृत्य वृषाङ्काय साधुसाध्वित्यथाब्रुवन् ॥ ७
अनुज्ञातास्ततः सर्वे सुहृदो धर्मसूनुना ।
त्वरमाणाः सुसन्नद्धा हृष्टा युद्धाय निर्ययुः ॥ ८
अभिवाद्य तु राजानं युयुधानाच्युतार्जुनाः ।
हृष्टा विनिर्ययुस्ते वै युधिष्ठिरनिवेशनात् ॥ ९
रथेनैकेन दुर्धर्षौ युयुधानजनार्दनौ ।
जग्मतुः सहितौ वीरावर्जुनस्य निवेशनम् ॥ १०
तत्र गत्वा हृषीकेशः कल्पयामास शास्त्रवित् ।
रथं रथवरस्याजौ वानरर्षभलक्षणम् ॥ ११

वृजिनात् व्यसनात् ॥ १६ ॥ सनातन अनादिनिधन । विशातन संहर्तः । कृष्ण संसारकर्षक । पुरुषोत्तम परमात्मन् ॥ १८ ॥

युद्धशौण्डः युद्धप्रवीणः ॥ २२ ॥ त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

स मेघसमनिर्घोषस्तप्तकाञ्चनसप्रभः ।
बभौ रथवरः क्लृप्तः शिशुर्दिवसकृद्यथा ॥ १२
ततः पुरुषशार्दूलः सज्जं सर्वं न्यवेदयत् ।
रथं पुरुषसिंहस्य सध्वजं सुपताकिनम् ॥ १३
स तु लोकवरः पुंसां किरीटी हेमवर्मभृत् ।
चापबाणधरो वाहं प्रदक्षिणमवर्तत ॥ १४
तपोविद्यावयोवृद्धैः क्रियावद्भिर्जितेन्द्रियैः ।
स्तूयमानो जयाशीर्भिरारुरोह महारथम् ॥ १५
जैत्रैः सांग्रामिकैर्मन्त्रैः पूर्वमेव रथोत्तमम् ।
अभिमन्त्रितमर्चिष्मानुदयं भास्करो यथा ॥ १६
स रथे रथिनां श्रेष्ठः काञ्चने काञ्चनावृतः ।
विबभौ विमलोऽर्चिष्मान्मेराविव दिवाकरः ॥१७
अन्वारुरुहतुः पार्थं युयुधानजनार्दनौ
शर्यातेर्यज्ञमायान्तं यथेन्द्रं देवमश्विनौ ॥ १८
अथ जग्राह गोविन्दो रश्मीन्रश्मिविदांवरः ।
मातलिर्वासवस्येव वृत्रं हन्तुं प्रयास्यतः ॥ १९
स ताभ्यां सहितः पार्थो रथप्रवरमास्थितः ।
सहितो बुधशुक्राभ्यां तमो निघ्नन्यथा शशी ॥२०
सैन्धवस्य वधप्रेप्सुः प्रयातः शत्रुपूगहा ।
सहाम्बुपतिमित्राभ्यां यथेन्द्रस्तारकामये ॥ २१
ततो वादित्रनिर्घोषैर्माङ्गल्यैश्च स्तवैः शुभैः ।
प्रयान्तमर्जुनं वीरं मागधाश्चैव तुष्टुवुः ॥ २२
सजयाशीः सपुण्याहः सूतमागधनिःस्वनः ।
युक्तो वादित्रघोषेण तेषां रतिकरोऽभवत् ॥ २३
तमनुप्रवणो वायुः पुण्यगन्धवहः शुभः ।
ववौ संहर्षयन्पार्थं द्विषतश्चापि शोषयन् ॥ २४
ततस्तस्मिन्क्षणे राजन्विविधानि शुभानि च ।
प्रादुरासन्निमित्तानि विजयाय बहूनि च ॥ २५
पाण्डवानां त्वदीयानां विपरीतानि मारिष
दृष्ट्वाऽर्जुनो निमित्तानि विजयाय प्रदक्षिणम् ।
युयुधानं महेष्वासमिदं वचनमब्रवीत् ॥ २६
युयुधानाद्य युद्धे मे दृश्यते विजयो ध्रुवः
यथाहीमानि लिङ्गानि दृश्यन्ते शिनिपुङ्गव ॥ २७
सोऽहं तत्र गमिष्यामि यत्र सैन्धवको नृपः
यियासुर्यमलोकाय मम वीर्यं प्रतीक्षते ॥ २८
यथा परमकं कृत्यं सैन्धवस्य वधो मम
तथैव सुमहत्कृत्यं धर्मराजस्य रक्षणम् ॥ २९
स त्वमद्य महाबाहो राजानं परिपालय ।
यथैव हि मया गुप्तस्त्वया गुप्तो भवेत्तथा ॥ ३०
न पश्यामि च तं लोके यस्त्वां युद्धे पराजयेत् ।
वासुदेवसमं युद्धे स्वयमप्यमरेश्वरः ॥ ३१
त्वयि चाहं पराश्वस्तः प्रद्युम्ने वा महारथे ।
शक्नुयां सैन्धवं हन्तुमनपेक्षो नरर्षभ ॥ ३२
मय्यपेक्षा न कर्तव्या गोप्ताऽयं मम केशवः ।
राज्ञ एव परा गुप्तिः कार्या सर्वात्मना त्वया ॥ ३३
न हि यत्र महाबाहुर्वासुदेवो व्यवस्थितः ।
किंचिद्व्यापद्यते तत्र यत्राहमपि च ध्रुवम् ॥ ३४
एवमुक्तस्तु पार्थेन सात्यकिः परवीरहा ।
तथेत्युक्त्वाऽगमत्तत्र यत्र राजा युधिष्ठिरः ॥ ३५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

समाप्तं च प्रतिज्ञापर्व ।

# ( अथ जयद्रथवधपर्व ॥ ५ ॥ )

## पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

धृतराष्ट्रेण पुत्रान्प्रति शोचनपूर्वकं सञ्जयंप्रत्यभिमन्युनिधनानन्तरीयकयुद्धकथनचोदना ॥ १ ॥

धृतराष्ट्र उवाच ।
श्वोभूते किमकार्षुस्ते दुःखशोकसमन्विताः ।
अभिमन्यौ हते तत्र कैर्वाऽयुध्यन्त पाण्डवाः ॥ १
जानन्तस्तस्य कर्माणि कुरवः सव्यसाचिनः ।

शिशुर्दिवसकृत् बालः सूर्यः ॥ १२ ॥ यथा च्यवनमश्विनौ इति क. ट. ड. पाठः ॥ १८ ॥ प्रदक्षिणं छन्दोनुवर्तिनम् ॥ २६ ॥ अपेक्षा अनुरोधः ॥ ३३ ॥ चतुरशीतितमोऽध्यायः ८४

कथं तत्किल्बिषं कृत्वा निर्भया ब्रूहि मामकाः ॥ २
पुत्रशोकाभिसंतप्तं क्रुद्धं मृत्युमिवान्तकम् ।
आयान्तं पुरुषव्याघ्रं कथं ददृशुराहवे ॥ ३
कपिराजध्वजं सञ्जये विधुन्वानं महद्धनुः ।
दृष्ट्वा पुत्रपरिद्यूनं किमकुर्वत मामकाः ॥ ४
किंनु सञ्जय संग्रामे वृत्तं दुर्योधनं प्रति ।
परिदेवो महानद्य श्रूयते हि गृहेगृहे ॥ ५
भूयाञ्शब्दानतीत्यान्याञ्शब्दः सैन्धववेश्मनि ।
पौराणिकानां तूर्याणां शङ्खदुन्दुभिघोषवान् ॥ ६
सूतमागधबन्दीनां नर्तकानां च निःस्वनः ।
सोऽद्य न श्रूयते शब्दः सूतपुत्र यथा पुरा ॥ ७
शब्दो नानाविधोऽभीष्टमभवद्यत्र मे श्रुतः ।
दीनानामद्य तं शब्दं न शृणोमि समीरितम् ॥ ८
निवेशने सत्यधृतेः सोमदत्तस्य सञ्जय ।
आसीनोऽहं पुरा तात शब्दमश्रौषमुत्तमम् ॥ ९
तदद्य पुण्यहीनोऽहमार्तस्वरनिनादितम् ।
निवेशनं गतोत्साहं विकृतं तात लक्षये ॥ १०
विविंशतेर्दुर्मुखस्य चित्रसेनविकर्णयोः ।
अन्येषां च सुतानां मे न तथा श्रूयते ध्वनिः ॥ ११
ब्राह्मणाः क्षत्रिया वैश्या यं शिष्याः पर्युपासते
द्रोणपुत्रं महेष्वासं पुत्राणां मे परायणम् ॥ १२
वितण्डालापसंलापैर्द्रुतवादित्रवादितैः
गीतैश्च विविधैरिष्टै रमते यो दिवानिशम् ॥ १३
उपास्यमानो बहुभिः कुरुपाण्डवसात्वतैः ।
श्लक्ष्णस्तस्य गृहे शब्दो नाद्य द्रौणेर्यथा पुरा ॥ १४
द्रोणपुत्रं महेष्वासं गायना नर्तकाश्च ये
अत्यर्थमुपतिष्ठन्ति तेषां न श्रूयते ध्वनिः ॥ १५
विन्दानुविन्दयोः सायं शिबिरे यो महाध्वनिः ।
श्रूयते सोऽद्य न तथा केकयानां च वेश्मसु ॥ १६
नित्यं प्रमुदितानां च तालगीतस्वनो महान् ।
नृत्यतां श्रूयते तात गणानां सोऽद्य न स्वनः ॥ १७
सप्ततन्तून्वितन्वाना याजका यमुपासते ।
सौमदत्तिं श्रुतनिधिं तेषां न श्रूयते ध्वनिः ॥ १८
ज्याघोषो ब्रह्मघोषश्च तोमरासिरथध्वनिः ।
द्रोणस्यासीदविरतो गृहे तं न शृणोम्यहम् ॥ १९
नानादेशसमुत्थानां गीतानां योऽभवत्स्वनः ।
वादित्रनादितानां च सोऽद्य न श्रूयते महान् ॥ २०
यदाप्रभृत्युपप्लव्याच्छान्तिमिच्छञ्जनार्दनः ।
आगतः सर्वभूतानामनुकम्पार्थमच्युतः ॥ २१
ततोऽहमब्रुवं सूत मन्दं दुर्योधनं तदा ।
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः ॥ २२
कालप्राप्तमहं मन्ये मा त्वं दुर्योधनातिगाः ।
'संशाम्य भ्रातृभिस्तैस्तु क्षत्रियानभिपालय ॥' २३
शर्म चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम् ।
हितार्थमभिजल्पन्तं न तवास्ति रणे जयः ॥ २४
प्रत्याचष्ट स दाशार्हमृषभं सर्वधन्विनाम् ।
अनुनेयानि जल्पन्तमनयान्नान्वपद्यत ॥ २५
'कर्णदुःशासनमतः सौबलस्य च दुर्मतेः ।
प्रत्याख्यातो महाबाहुः कुलान्तकरणेन वै ॥' २६
ततो दुःशासनस्यैव कर्णस्य च मतं द्वयोः ।
अन्ववर्तत मां हित्वा कृष्टः कालेन दुर्मतिः ॥ २७
न ह्यहं युद्धमिच्छामि विदुरो द्रोण एव वा ।
वाह्लीकः सोमदत्तो वा भीष्मो द्रौणायनिस्तथा २८
शलो भूरिश्रवाश्चैव पुरुमित्रो विविंशतिः ।
जयः कृपो वा धर्मात्मा ये चान्ये मम बान्धवाः २९
एतेषां मतमास्थाय यदि वर्त्स्यति पुत्रकः ।
एतेभ्यश्च मदूर्ध्वं च अभोक्ष्यद्वसुधामिमाम् ॥ ३०
श्लक्ष्णा मधुरसंभाषा ज्ञातिमध्ये प्रियंवदाः ।
कुलीनाः संमताः प्राज्ञाः सुखं जीवन्ति मानवाः
धर्मापेक्षी नरो नित्यं सर्वत्र लभते सुखम् ।
प्रेत्यभावे च कल्याणं प्रसादं प्रतिपद्यते ॥ ३२
अर्हास्ते पृथिवीं भोक्तुं समर्थाः साधनेऽपि च ।
तेषामपि समुद्रान्ता पितृपैतामही मही ॥ ३३
'न च त्वाऽभिभविष्यन्ति हित्वा धर्मं पृथात्मजाः ।

पुत्रपरिद्यूनं पुत्रवधदुःखितम् ॥ ४ ॥ स्वपक्षस्थापनहीनः प्रतिपक्षे प्रतिक्षेपो वितण्डा । अलापो भाषणम् । संलापो मिथो भाषणम् ॥ १३ ॥ गणानां सङ्घानाम् ॥ १७ ॥ तीर्थेन निदानेन उपायेन वा ॥ २२ ॥ कालप्राप्तं समयोचितम् ॥ २३ ॥ अनुनेयानि अनुकूलानि ॥ २५ ॥ श्लक्ष्णा ऋजवः ॥ ३१ ॥ साधने स्वीकरणे ॥ ३३ ॥

नियुज्यमानाः स्थास्यन्ति पाण्डवा धर्मवर्त्मनि ॥
सन्ति मे ज्ञातयस्तात येषां श्रोष्यन्ति पाण्डवाः ।
शल्यस्य सोमदत्तस्य भीष्मस्य च महात्मनः ॥३५
द्रोणस्याथ विकर्णस्य बाह्लीकस्य कृपस्य च ।
अन्येषां चैव वृद्धानां भरतानां महात्मनाम् ।
त्वदर्थमब्रवं तात न जहुर्वचनानि ते ॥ ३६
कं वा त्वं मन्यसे तेषां यस्त्वां ब्रूयादतोऽन्यथा ।
कृष्णो न धर्मं संजह्यात्सर्वे ते हि तदन्वयाः ॥३७
मयाऽपि चोक्तास्ते वीरा वचनं धर्मसंहितम् ।
नान्यथा प्रकरिष्यन्ति धर्मात्मानो हि पाण्डवाः ॥
इत्यहं विलपन्सूत बहुशः पुत्रमुक्तवान् ।
न च मे श्रुतवान्मूढो मन्ये कालस्य पर्ययम् ॥३९
वृकोदरार्जुनौ यत्र वृष्णिवीरश्च सात्यकिः ।
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः ॥ ४०
धृष्टद्युम्नश्च दुर्धर्षः शिखण्डी चापराजितः ।
अश्मकाः केकयाश्चैव क्षत्रधर्मा च सौमकिः ॥४१
चैद्यश्च चेकितानश्च पुत्रः काश्यस्य चाभिभूः ।
द्रौपदेया विराटश्च द्रुपदश्च महारथः ॥ ४२
यमौ च पुरुषव्याघ्रौ मन्त्री च मधुसूदनः ।
क एताञ्जातु युध्येत लोकेऽस्मिन्वै जिजीविषुः ॥
दिव्यमस्त्रं विकुर्वाणान्प्रसहेद्वा परान्मम ।
अन्यो दुर्योधनात्कर्णाच्छकुनेश्चापि सौबलात् ।
दुःशासनचतुर्थानां नान्यं पश्यामि पञ्चमम् ॥४४
येषां वचनकृत्स स्याद्धृष्वक्सेनो रथे स्थितः ।
सन्नद्धश्चार्जुनो योद्धा तेषां नास्ति पराजयः ॥४५
तथा मम विलापानां नायं दुर्योधनः स्मरेत् ।
हतौ हि पुरुषव्याघ्रौ भीष्मद्रोणौ त्वमात्थ वै ४६
तेषां विदुरवाक्यानामुक्तानां दीर्घदर्शनात् ।
दृष्ट्वेमां फलनिर्वृत्तिं मन्ये शोचन्ति पुत्रकाः ॥४७
सेनां दृष्ट्वाऽभिभूतां मे शैनेयेनार्जुनेन च ।
शून्यान्दृष्ट्वा रथोपस्थान्मन्ये शोचन्ति पुत्रकाः ४८
हिमात्यये यथा कक्षं शुष्कं वातेरितो महान् ।
अग्निर्दहेत्तथा सेनां मामिकां स धनंजयः ॥ ४९
आचक्ष्व मम तत्सर्वं कुशलो ह्यसि सञ्जय ।
यदोपयाताः सायाह्ने कृत्वा पार्थस्य किल्बिषम् ॥५०
अभिमन्यौ हते तात कथमासीन्मनो हि वः ॥५१
न जातु तस्य कर्माणि युधि गाण्डीवधन्वनः ।
अपकृत्य महत्तात सोढुं शक्ष्यन्ति मामकाः ॥५२
किंनु दुर्योधनः कृत्यं कर्णः कृत्यं किमब्रवीत् ।
दुःशासनः सौबलश्च तेषामेवं गते सति ॥ ५३
सर्वेषां समवेतानां पुत्राणां मम सञ्जय ।
यद्वृत्तं तात संग्रामे मन्दस्यापनयैर्भृशम् ॥ ५४
लोभानुगस्य दुर्बुद्धेः क्रोधेन विकृतात्मनः ।
राज्यकामस्य मूढस्य रागोपहतचेतसः ।
दुर्नीतं वा सुनीतं वा तन्ममाचक्ष्व सञ्जय ॥५५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## षडशीतितमोऽध्यायः ॥ ८६ ॥

सञ्जयेन धृतराष्ट्रोपालम्भपूर्वकं युद्धकथनोपक्रमः ॥ १ ॥

सञ्जय उवाच ।
हन्त ते संप्रवक्ष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
शुश्रूषस्व स्थिरो भूत्वा तव ह्यपनयो महान् ॥ १
गतोदके सेतुबन्धो यादृक्तादृगयं तव ।
विलापो निष्फलो राजन्मा शुचो भरतर्षभ ॥ २
अनतिक्रमणीयोऽयं कृतान्तस्याद्भुतो विधिः
मा शुचो भरतश्रेष्ठ दिष्टमेतत्पुरातनम् ॥ ३
यदि त्वं हि पुरा द्यूतात्कुन्तीपुत्रं युधिष्ठिरम् ।
निवर्तयेथाः पुत्रांश्च न त्वां व्यसनमाव्रजेत् ॥ ४
युद्धकाले पुनः प्राप्ते तदैव भवता यदि ।

---

दिव्यमस्त्रं विकुर्वाणाः संहरेयुररिंदमाः इति क. ट. पाठः ॥४४॥ दीर्घदर्शनादनागतानुसंधानात् ॥ ४७ ॥ महदत्यर्थम् ॥ ५२ ॥ तेषां मध्ये ॥ ५३ ॥ रागो मात्सर्यं रागस्तु मात्सर्ये इति मेदिनी ॥ ५५ ॥ पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

निवर्तिताः स्युः संरब्धा न त्वां व्यसनमाव्रजेत् ॥
दुर्योधनं चाविधेयं बध्नीयास्त्वं पुरा यदि ।
अवेक्ष्य कौरवान्राजन्प्राप्स्यसे त्वं महद्यशः ॥ ६
तत्ते बुद्धिव्यतीचारमुपलप्स्यन्ति तज्जनाः ।
पाञ्चाला वृष्णयः सर्वे ये चान्येऽपि नराधिपाः ७
स कृत्वा पितृकर्म त्वं पुत्रं संस्थाप्य सत्पथे ।
वर्तेथा यदि धर्मेण न त्वां व्यसनमाव्रजेत् ॥ ८
त्वं तु प्राज्ञतमो लोके हित्वा धर्मं सनातनम् ।
दुर्योधनस्य कर्णस्य शकुनेश्चान्वगा मतम् ॥ ९
तत्ते विलपितं सर्वं मया राजन्निशामितम् ।
अर्थे निविशमानस्य विषमिश्रं यथा मधु ॥ १०
न तथा मन्यते कृष्णो न च राजा युधिष्ठिरः ।
न भीष्मो नैव च द्रोणो यथा त्वं मन्यसे नृप ११
व्यजानीत यदा तु त्वां लुब्धं धर्मप्रवादिनम् ।
तदाप्रभृति कृष्णस्त्वां न तथा बहुमन्यते ॥ १२
परुषाण्युच्यमानांश्च यथा पार्थानुपेक्षसे ।
तस्यानुबन्धः प्राप्तस्त्वां पुत्राणां राज्यकामुक ॥१३
पितृपैतामहं राज्यमपावृत्तं त्वयाऽनघ ।
अथ पार्थैर्जितां कृत्स्नां पृथिवीं प्रत्यपद्यथाः ॥१४
पाण्डुना निर्जितं राज्यं कौरवाणां यशस्तथा ।
एतच्चाप्यधिकं भूयः पाण्डवैर्धर्मचारिभिः ॥ १५
तेषां तत्तादृशं कर्म त्वामासाद्य सुनिष्फलम् ।
यत्पित्र्याद्भ्रंशिता राज्यात्त्वयेहामिषगृद्धिना ॥१६
यत्पुनर्युद्धकाले त्वं पुत्रान्गर्हयसे नृप ।
बहुधा व्याहरन्दोषान्न तदद्योपपद्यते ॥ १७
न हि रक्षन्ति राजानो युध्यन्तो जीवितं रणे ।
चमूं विगाह्य पार्थानां युध्यन्ते क्षत्रियर्षभाः ॥१८
या तु कृष्णार्जुनौ सेनां यां सात्यकिवृकोदरौ
रक्षेरन्को नु तां युध्येच्चमूमन्यत्र कौरवात् ॥ १९
येषां योद्धा गुडाकेशो येषां मन्त्री जनार्दनः ।
येषां च सात्यकिर्योद्धा येषां योद्धा वृकोदरः ॥२०
को हि तान्विषहेद्योद्धुं मर्त्यधर्मा धनुर्धरः ।
अन्यत्र कौरवेयेभ्यो ये वा तेषां पदानुगाः ॥२१
यावत्तु शक्यते कर्तुमन्तरज्ञैर्जनाधिपैः ।
क्षत्रधर्मरतैः शूरैस्तावत्कुर्वन्ति कौरवाः ॥ २२
यथा तु पुरुषव्याघ्रैर्युद्धं परमसंकटम् ।
कुरूणां पाण्डवैः सार्धं तत्सर्वं शृणु तत्त्वतः ॥२३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

द्रोणेन शकटव्यूहनिर्माणम् ॥ १ ॥

सञ्जय उवाच ।
तस्यां निशायां व्युष्टायां द्रोणः शस्त्रभृतां वरः ।
स्वान्यनीकानि सर्वाणि प्राक्रामद्व्यूहितुं ततः ॥१
शूराणां गर्जतां राजन्संक्रुद्धानाममर्षिणाम् ।
श्रूयन्ते स्म गिरश्चित्राः परस्परवधैषिणाम् ॥ २
विस्फार्य च धनूंष्यन्ये ज्याः परे परिमृज्य च ।
विनिःश्वसन्तः प्राक्रोशन्क्वेदानीं स धनंजयः ॥३
विकोशान्सुत्सरूनन्ये कृतधारान्समाहितान् ।
पीतानाकाशसंकाशानसीन्केचिच्च चिक्षिपुः ॥४
चरन्तस्त्वसिमार्गांश्च धनुर्मार्गांश्च शिक्षिताः ।
संग्राममनसः शूरा दृश्यन्ते स्म सहस्रशः ॥ ५
सघण्टाश्चन्दनादिग्धाः स्वर्णवज्रविभूषिताः ।
समुत्क्षिप्य गदाश्चान्ये पर्यपृच्छन्त पाण्डवम् ॥६
अन्ये बलमदोन्मत्ताः परिघैर्बाहुशालिनः
चक्रुः संबाधमाकाशमुच्छ्रितेन्द्रध्वजोपमैः ॥ ७
नानाप्रहरणैश्चान्ये विचित्रस्रगलङ्कृताः ।

ते तव बुद्धेर्व्यतिचारं वैषम्यमुपलप्स्यन्त्यनुभविष्यन्ति ॥ ७ ॥ अर्थे निविशमानानां यथा पार्थानुपेक्षसे इति क. ट. पाठः ॥ १३ ॥ अन्तरज्ञैरवसरवेदिभिः ॥ २२ ॥

षडशीतितमोऽध्यायः ॥ ८६ ॥

पीतान् पायितोदकान् ॥ ४ ॥

संग्राममनसः शूरास्तत्रतत्र व्यवस्थिताः ॥ ८
क्वार्जुनः क्व स गोविन्दः क्व च मानी वृकोदरः।
क्व च ते सुहृदस्तेषामाह्वयन्ते रणे तदा ॥ ९
ततः शङ्खमुपाध्माय त्वरयन्वाजिनः स्वयम् ।
इतस्ततस्तान्रचयन्द्रोणश्चरति वेगितः ॥ १०
तेष्वनीकेषु सर्वेषु स्थितेष्वाहवनन्दिषु ।
भारद्वाजो महाराज जयद्रथमथाब्रवीत् ॥ ११
त्वं चैव सौमदत्तिश्च कर्णश्चैव महारथः
अश्वत्थामा च शल्यश्च वृषसेनः कृपस्तथा ॥१२
शतं चाश्वसहस्राणां रथानामयुतानि षट् ।
द्विरदानां प्रभिन्नानां सहस्राणि चतुर्दश ॥ १३
पदातीनां सहस्राणि दंशितान्येकविंशतिः ।
गव्यूतिषु त्रिमात्रासु मामनासाद्य तिष्ठत ॥ १४
तत्रस्थं त्वां न संसोढुं शक्ता देवाः सवासवाः ।
किं पुनः पाण्डवाः सर्वे समाश्वसिहि सैन्धव ॥१५
सञ्जय उवाच ।
एवमुक्तः समाश्वस्तः सिंधुराजो जयद्रथः ।
संप्रायात्सहगान्धारैर्वृतस्तैश्च महारथैः ।
वर्मिभिः सादिभिर्यत्तैः प्रासपाणिहयस्थितैः ॥१६
चामरापीडिनः सर्वे जाम्बूनदविभूषिताः ।
जयद्रथस्य राजेन्द्र हयाः साधुप्रवाहिनः ॥ १७
ते चैकसप्तसाहस्रास्त्रिसाहस्राश्च सैन्धवाः ॥ १८
मत्तानां सुविरूढानां हस्त्यारोहैर्विशारदैः ।
हस्तिनां भीमरूपाणां वर्मिणां रौद्रकर्मिणाम् ॥१९
अध्यर्धेन सहस्रेण पुत्रो दुर्मर्षणस्तव ।
अग्रतः सर्वसैन्यानां योत्स्यमानो व्यवस्थितः ॥२०
ततो दुःशासनश्चैव विकर्णश्च तवात्मजौ ।
सिन्धुराजार्थसिद्ध्यर्थमग्रानीके व्यवस्थितौ ॥२१
दीर्घो द्वादशगव्यूतिः पश्चार्धे पञ्चविस्तृतः ।
व्यूहस्तु चक्रशकटो भारद्वाजेन निर्मितः ॥ २२
नानानृपतिभिर्वीरैस्तत्रतत्र व्यवस्थितैः ।
रथाश्वगजपत्त्योघैर्द्रोणेन विहितः स्वयम् ॥ २३
पश्चार्धे तस्य पद्मस्तु गर्भव्यूहः पुनः कृतः ।
सूचीपद्मस्य गर्भस्थो गूढो व्यूहः कृतः पुनः ॥ २४
एवमेतं महाव्यूहं व्यूह्य द्रोणो व्यवस्थितः ।
सूचीमुखे महेष्वासः कृतवर्मा व्यवस्थितः ॥२५
अनन्तरं च काम्भोजो जलसन्धश्च मारिष ।
दुर्योधनश्च कर्णश्च तदनन्तरमेव च ॥ २६
ततः शतसहस्राणि योधानामनिवर्तिनाम् ।
व्यवस्थितानि सर्वाणि शकटे मुखरक्षिणाम् ॥२७
तेषां च पृष्ठतो राजा बलेन महता वृतः ।
जयद्रथस्ततो राजा सूचीपार्श्वे व्यवस्थितः ॥ २८
शकटस्य तु राजेन्द्र भारद्वाजो मुखे स्थितः ।
नात्र तस्याभवद्भेदो जुगोपैनं ततः स्वयम् ॥२९
श्वेतवर्माम्बरोष्णीषो व्यूढोरस्को महाभुजः ।
धनुर्विस्फारयन्द्रोणस्तस्थौ क्रुद्ध इवान्तकः ।
'तस्य सैन्यस्य सर्वस्य नेता गोप्ता च वीर्यवान्' ३०
पताकिनं शोणहयं वेदीकृष्णाजिनध्वजम् ।
द्रोणस्य रथमालोक्य प्रहृष्टाः कुरवोऽभवन् ॥ ३१
सिद्धचारणसङ्घानां विस्मयः सुमहानभूत् ।
द्रोणेन विहितं दृष्ट्वा व्यूहं क्षुब्धार्णवोपमम् ॥ ३२
सशैलसागरवनां नानाजनपदाकुलाम् ।
ग्रसेद्व्यूहः क्षितिं सर्वामिति भूतानि मेनिरे ॥ ३३

बहुरथमनुजाश्वपत्तिनागं
प्रतिभयनिःस्वनमद्भुतानुरूपम् ।
अहितहृदयभेदनं महद्वै
शकटमवेक्ष्य कृतं ननन्द राजा ॥ ३४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

क्वचेति चकार इत्यर्थे । इत्याह्वयन्त इत्यन्वयः ॥ ९ ॥ त्रिमात्रासु त्रिसंख्यासु तिसृष्वित्यर्थः ॥ १४ ॥ पश्चार्धे पश्चाद्भागे पञ्चगव्यूतिः । चक्रशकटः चक्रगर्भः शकटः ॥ २२ ॥ अद्भुतानुरूपमाश्चर्यरूपं एतत्समययोग्यं च ॥ ३४ ॥ सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

## अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

अर्जुनस्य रणाङ्गणप्रवेशः ॥ १ ॥

सञ्जय उवाच ।
व्यूढेषु तव सैन्येषु समुत्क्रुष्टेषु मारिष ।
ताड्यमानासु भेरीषु मृदङ्गेष्वानकेषु च ॥ १
अनीकानां च संह्रादे वादित्राणां च निःस्वने ।
प्रध्मापितेषु शङ्खेषु सन्नादे रोमहर्षणे ॥ २
प्रगृहीतेषु शस्त्रेषु भारतेषु युयुत्सुषु ।
रौद्रे मुहूर्ते संप्राप्ते सव्यसाची व्यदृश्यत ॥ ३
बलानां वायसानां च पुरस्तात्सव्यसाचिनः ।
पिशितासृग्भुजां सङ्घाः प्रलीयन्ते सहस्रशः ॥ ४
मृगाश्च घोरसंनादाः शिवाश्चाशिवदर्शनाः
दक्षिणेन प्रयातानामस्माकं नेदुरध्वनि ॥ ५
लोकक्षये महाराज यादृशास्तादृशा हि ते ।
अशिवा धार्तराष्ट्राणां शिवाः पार्थस्य संयुगे ॥' ६
सनिर्घाता ज्वलन्त्यश्च पेतुरुल्काः सहस्रशः ।
चचाल च मही कृत्स्ना भये घोरे समुत्थिते ॥ ७
विष्वग्वाताः सनीहारा रूक्षाः शर्करकर्षिणः
ववुरायाति कौन्तेये संग्रामे समुपस्थिते ॥ ८
नाकुलिश्च शतानीको धृष्टद्युम्नश्च पार्षतः ।
पाण्डवानामनीकानि प्राज्ञौ तौ व्यूहतुस्तदा ॥ ९
ततो रथसहस्रेण द्विरदानां शतेन च ।
त्रिभिरश्वसहस्रैश्च पदातीनां शतैः शतैः ॥ १०
अध्यर्धमात्रे धनुषां सहस्रे तनयस्तव ।
अग्रतः सर्वसैन्यानां स्थित्वा दुर्मर्षणोऽब्रवीत् ॥ ११
अद्य गाण्डीवधन्वानं तपन्तं युद्धदुर्मदम्
अहमावारयिष्यामि वेलेव मकरालयम् ॥ १२
अद्य पश्यन्तु संग्रामे धनंजयममर्षणम् ।
विषक्तं मयि दुर्धर्षं भिन्नं कुम्भमिवाश्मनि ॥ १३
तिष्ठध्वं रथिनो यूयं संग्राममभिकाङ्क्षिणः ।
युध्यामि संहतानेवान्यशो मानं च वर्धयन् ॥ १४
एवं ब्रुवन्महाराज महात्मा स महीपतिः ।
महेष्वासैर्वृतो राजन्महेष्वासो व्यवस्थितः ॥ १५
ततोऽर्जुनो महाराज महात्मा महतां पतिः ।
महारथसमाख्यातो महेष्वासो व्यवस्थितः ॥ १६
कक्षाग्निरिव दुःस्पर्शः सवज्र इव वासवः ।
दण्डपाणिरिवासह्यो मृत्युः कालेन चोदितः ॥ १७
शूलपाणिरिवाक्षोभ्यो वरुणः पाशवानिव ।
युगान्ताग्निरिवार्चिष्मान्दिधक्षुः स्थास्नुजङ्गमम् १८
क्रोधामर्षबलोद्भूतो निवातकवचान्तकः ।
युद्धे जेता स्थितः सत्ये पारयिष्यन्महाव्रतम् ॥ १९
आमुक्तकवचः खड्गी जाम्बूनदकिरीटभृत् ।
शुभ्रमाल्याम्बरधरः स्वङ्गदश्चारुकुण्डलः ॥ २०
रथप्रवरमास्थाय नरो नारायणानुगः ।
विधुन्वन्गाण्डिवं सङ्ख्ये बभौ सूर्य इवोदितः ॥ २१
अग्रानीकस्य सोऽध्यर्धे इषुपाते धनञ्जयः ।
व्यवस्थाप्य रथं राजञ्शङ्खं दध्मौ प्रतापवान् ॥ २२
अथ कृष्णोऽप्यसंभ्रान्तः पार्थेन सह मारिष ।
प्राध्मापयत्पाञ्चजन्यं शङ्खप्रवरमोजसा ॥ २३
तयोः शङ्खप्रणादेन तव सैन्ये विशांपते
आसन्संहृष्टरोमाणः कम्पिता गतचेतसः ॥ २४
यथा त्रस्यन्ति भूतानि सर्वाण्यशनिनिःस्वनात् ।
तथा शङ्खप्रणादेन वित्रेसुस्तव सैनिकाः ॥ २५
प्रसुस्रुवुः शकृन्मूत्रं वाहनानि च सर्वशः ।
एवं सवाहनं सर्वमाविग्नमभवद्बलम् ॥ २६
सीदन्ति स्म नरा राजञ्शङ्खशब्देन मारिष ।
विसंज्ञाश्चाभवन्केचित्केचिद्राजन्वितत्रसुः ॥ २७
ततः कपिर्महानादं सहभूतैर्ध्वजालयैः ।
अकरोद्व्यादितास्यश्च भीषयंस्तव सैनिकान् ॥ २८
ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चानकैः सह ।
पुनरेवाभ्यहन्यन्त तव सैन्यप्रहर्षणाः ॥ २९
नानावादित्रसंह्रादैः क्ष्वेडितास्फोटिताकुलैः ।
सिंहनादैः समुत्क्रुष्टैः समाधूतैर्महारथैः ॥ ३०

शतैः शतैर्दशसहस्रैः ॥ १० ॥ समाधूतैः संचालितैः ॥ ३० ॥

अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

तस्मिंस्तु तुमुले शब्दे भीरूणां भयवर्धने । अतीव हृष्टो दाशार्हमब्रवीत्पाकशासनिः ॥ ३१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

## एकोननवतितमोऽध्यायः ॥ ८९ ॥

अर्जुनयुद्धवर्णनम् ॥ १ ॥

अर्जुन उवाच
चोदयाश्वान्हृषीकेश यत्र दुर्मर्षणः स्थितः ।
एतद्भित्त्वा गजानीकं प्रवेक्ष्याम्यरिवाहिनीम् ॥१
सञ्जय उवाच ।
एवमुक्तो महाबाहुः केशवः सव्यसाचिना ।
अचोदयद्धयांस्तत्र यत्र दुर्मर्षणः स्थितः ॥ २
स संप्रहारस्तुमुलः संप्रवृत्तः सुदारुणः ।
एकस्य च बहूनां च रथनागनरक्षयः ॥ ३
ततः सायकवर्षेण पर्जन्य इव वृष्टिमान् ।
परानवाकिरत्पार्थः पर्वतानिव नीरदः ॥ ४
ते चापि रथिनः सर्वे त्वरिताः कृतहस्तवत् ।
अवाकिरन्बाणजालैस्तत्र कृष्णधनंजयौ ॥ ५
ततः क्रुद्धो महाबाहुर्वार्यमाणः परैर्युधि ।
शिरांसि रथिनां पार्थः कायेभ्योऽपाहरच्छरैः ॥६
उद्भ्रान्तनयनैर्वक्त्रैः संदष्टौष्ठपुटैः शुभैः
सकुण्डलशिरस्त्राणैर्वसुधा समकीर्यत ॥ ७
पुण्डरीकवनानीव विध्वस्तानि समन्ततः ।
विनिकीर्णानि योधानां वदनानि चकाशिरे ॥८
सुवर्णचित्राभरणाः संसिक्ता रुधिरेण च ।
संसक्ता इव दृश्यन्ते मेघसङ्घाः सविद्युतः ॥ ९
शिरसां पततां राजञ्शब्दोऽभूद्वसुधातले ।
कालेन परिपक्वानां तालानां पततामिव ॥ १०
कबन्ध उत्थितः कश्चिद्विष्फार्य सशरं धनुः ।
किंचित्खड्गं विनिष्कृष्य भुजेनोद्यम्य तिष्ठति ।
'गृहीत्वाऽन्यस्य केशेषु शिरो नृत्यति चापरः ॥'
पतितानि न जानन्ति शिरांसि पुरुषर्षभाः ।
अमृष्यमाणाः संग्रामे कौन्तेयं जयगृद्धिनः ॥१२
हयानामुत्तमाङ्गैश्च हस्तिहस्तैश्च मेदिनी ।
बाहुभिश्च शिरोभिश्च वीराणां समकीर्यत ॥ १३
अयं पार्थः कुतः पार्थः पार्थोऽयमिति सर्वशः ।
'तिष्ठ पार्थेहि मां पार्थ क यासीति च जल्पताम् ।'
तव सैन्येषु योधानां पार्थभूतमिवाभवत् ॥ १४
अन्योन्यमपि चाजघ्नुरात्मानमपि चापरे ।
पार्थभूतममन्यन्त जनाः कालेन मोहिताः ॥१५
निष्टनन्तः सरुधिरा विसंज्ञा गाढवेदनाः ।
शयाना बहवो वीराः कीर्तयन्तः स्वबान्धवान् १६
सभिण्डिपालाः सप्रासाः सशक्त्यृष्टिपरश्वथाः ।
सनिर्व्यूहाः सनिस्त्रिंशाः सशरासनतोमराः॥१७
सबाणवर्माभरणाः सगदाः साङ्गदा रणे ।
महाभुजगसंकाशा बाहवः परिघोपमाः ॥ १८
उद्वेष्टन्ति विचेष्टन्ति संचेष्टन्ति च सर्वशः ।
वेगं कुर्वन्ति संरब्धा निकृत्ताः परमेषुभिः ॥ १९
यो यः स समरे पार्थं प्रतिसंचरते नरः ।
तस्यतस्यान्तको बाणः शरीरमुपसर्पति ॥ २०
नृत्यतो रथमार्गेषु धनुर्व्यायच्छतस्तथा ।
न कश्चित्तत्र पार्थस्य ददृशेऽन्तरमण्वपि ॥ २१
यत्तस्य घटमानस्य क्षिप्रं विक्षिपतः शरान् ।
लाघवात्पाण्डुपुत्रस्य व्यस्मयन्त परे जनाः ॥ २२
हस्तिनं हस्तियन्तारमश्वमाश्विकमेव च ।
अभिनत्फल्गुनो बाणै रथिनं च ससारथिम् ॥ २३
आवर्तमानमावृत्तं युध्यमानं च पाण्डवः ।
प्रमुखे तिष्ठमानं च न कंचिन्न निहन्ति सः ॥ २४
यथोदयन्वै गगने सूर्यो हन्ति महत्तमः ।
तथाऽर्जुनो गजानीकमवधीत्कङ्कपत्रिभिः ॥ २५

निर्व्यूह आयुधविशेषः ॥ १७ ॥ प्रतिसंचरते प्रत्युद्गच्छति ॥ २० ॥ यत्तस्यावहितस्य ॥ २२ ॥

हस्तिभिः पतितैर्भिन्नैस्तव सैन्यमदृश्यत ।
अन्तकाले यथा भूमिर्व्यवकीर्णा महीधरैः ॥ २६
यथा मध्यंदिने सूर्यो दुष्प्रेक्ष्यः प्राणिभिः सदा
तथा धनञ्जयः क्रुद्धो दुष्प्रेक्ष्यो युधि शत्रुभिः ॥२७
तत्तथा तव पुत्रस्य सैन्यं युधि परंतप ।
प्रभग्नं द्रुतमाविग्नमतीव शरपीडितम् ॥ २८
मारुतेनेव महता मेघानीकं व्यदीर्यत ।
प्रकाल्यमानं तत्सैन्यं नाशकत्प्रतिवीक्षितुम् ॥ २९
प्रतोदैश्चापकोटीभिर्हुंकारैः साधुवाहितैः ।
कशापार्ष्ण्यभिघातैश्च वाग्भिरुग्राभिरेव च ॥ ३०
चोदयन्तो हयांस्तूर्णं पलायन्ते स्म तावकाः ।
सादिनो रथिनश्चैव पत्तयश्चार्जुनार्दिताः ॥ ३१
पार्ष्ण्यङ्गुष्ठाङ्कुशैर्नागं चोदयन्तस्तथाऽपरे ।
शरैः संमोहिताश्चान्ये तमेवाभिमुखा ययुः ॥ ३२
तव योधा हतोत्साहा विभ्रान्तमनसस्तदा ॥ ३३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकोननवतितमोऽध्यायः ॥ ८९ ॥

## नवतितमोऽध्यायः ॥ ९० ॥

अर्जुनेन दुःशासनपराजयः ॥ १ ॥

धृतराष्ट्र उवाच ।
तस्मिन्प्रभग्ने सैन्याग्रे वध्यमाने किरीटिना
के तु तत्र रणे वीराः प्रत्युदीयुर्धनञ्जयम् ॥ १
आहोस्विच्छकटव्यूहं प्रविष्टा मोघनिश्चयाः ।
द्रोणमाश्रित्य तिष्ठन्ति प्राकारमकुतोभयाः ॥ २
सञ्जय उवाच
तथाऽर्जुनेन संभग्ने तस्मिंस्तव बलेऽनघ
हतवीरे हतोत्साहे पलायनकृतक्षणे ॥ ३
पाकशासनिनाऽभीक्ष्णं वध्यमाने शरोत्तमैः ।
न तत्र कश्चित्संग्रामे शशाकार्जुनमीक्षितुम् ॥ ४
ततस्तव सुतो राजन्दृष्ट्वा सैन्यं तथागतम् ।
दुःशासनो भृशं क्रुद्धो युद्धायार्जुनमभ्यगात् ॥ ५
सकाञ्चनविचित्रेण कवचेन समावृतः ।
जाम्बूनदशिरस्त्राणः शूरस्तीव्रपराक्रमः ॥ ६
नागानीकेन महता ग्रसन्निव महीमिमाम् ।
दुःशासनो महाराज सव्यसाचिनमावृणोत् ॥ ७
ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।
ज्याक्षेपनिनदैश्चैव विरावेण च दन्तिनाम् ॥ ८
भूर्दिशश्चान्तरिक्षं च शब्देनासीत्समावृतम् ।
'युवराजो बलश्लाघी पिङ्गलः प्रियदर्शनः
स मुहूर्तं प्रतिभयो दारुणः समपद्यत ॥ ९
तान्दृष्ट्वा पततस्तूर्णमङ्कुशैरभिचोदितान्
व्यालम्बहस्तान्संरब्धान्सपक्षानिव पर्वतान् ॥१०
सिंहनादेन महता नरसिंहो धनञ्जयः ।
'तदाचलघनप्रख्यं पताकाशतसंकुलम् ।'
गजानीकममित्राणामभितो व्यधमच्छरैः ॥ ११
महोर्मिणमिवोद्धूतं श्वसनेन महार्णवम्
किरीटी तद्गजानीकं प्राविशन्मकरो यथा ॥ १२
खमाश्रित इवादित्यः प्रतपन्स युगक्षये ।
ददृशे दिक्षु सर्वासु पार्थः परपुरंजयः ॥ १३
खुरशब्देन चाश्वानां नेमिघोषेण तेन च ।
तेन चोत्कुष्टशब्देन ज्यानिनादेन तेन च ॥ १४
नानावादित्रशब्देन पाञ्चजन्यस्वनेन च ।
देवदत्तस्य घोषेण गाण्डीवनिनदेन च
मन्दवेगा नरा नागा बभूवुस्ते विचेतसः ॥ १५
शरैराशीविषस्पर्शैर्निर्भिन्नाः सव्यसाचिना ।
ते गजाः समसीदन्त मग्नाः पङ्कार्णवेष्विव ॥१६
युगपच्च समाविष्टैः शरैर्गाण्डीवधन्वनः ।
अनेकशतसाहस्रैर्द्रुमा मधुकरैरिव ।
'पुङ्खावशिष्टैर्बहुभिः शोणितोत्पीडवाहिभिः ॥' १७

द्रुतं विद्रुतम् । आविग्नं भीतम् ॥ २८ ॥ साधुवाहितैः सुष्ठुव्यापारितैः ॥ ३० ॥ एकोननवतितमोऽध्यायः ॥ ८९ ॥

पलायने कृतः क्षणोऽवसरो येन ॥ ३ ॥ प्रतिभयो भयंकरः । दारुणः क्रूरः ॥ ९ ॥

आरावं परमं कृत्वा वध्यमानाः किरीटिना ।
निपेतुरनिशं भूमौ छिन्नपक्षा इवाद्रयः ॥ १८
अपरे दन्तवेष्टेषु कुम्भेषु च कटेषु च ।
शरैः समर्पिता नागाः क्रौञ्चवद्व्यनदन्मुहुः ॥ १९
गजस्कन्धगतानां च पुरुषाणां किरीटिना ।
छिद्यन्ते चोत्तमाङ्गानि भल्लैः सन्नतपर्वभिः ॥२०
सकुण्डलानां पततां शिरसां धरणीतले ।
पद्मानामिव संघातैः पार्थश्चक्रे निवेदनम् ॥ २१
यन्त्रबद्धा विकवचा व्रणार्ता रुधिरोक्षिताः ।
भ्रमत्सु युधि नागेषु मनुष्या विललम्बिरे ॥ २२
केचिदेकेन बाणेन सुयुक्तेन सुपत्रिणा ।
द्वौ त्रयश्च विनिर्भिन्ना निपेतुर्धरणीतले ॥ २३
अपरे मदसंरब्धा मातङ्गाः पर्वतोपमाः ।
सारोहा न्यपतन्भूमौ द्रुमवन्त इवाचलाः ॥ २४
मौर्वीं ध्वजं धनुश्चैव युगमीषां तथैव च ।
रथिनां कुट्टयामास भल्लैः सन्नतपर्वभिः ॥ २५
न संदधन्न चाकर्षन्न विमुञ्चन्न चोद्वहन् ।
मण्डलेनैव धनुषा नृत्यन्पार्थः स्म दृश्यते ॥ २६
अतिविद्धाश्च नाराचैर्वमन्तो रुधिरं मुखैः ।
मुहूर्तान्न्यपतन्नन्ये वारणा वसुधातले ॥ २७
उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
अदृश्यन्त महाराज तस्मिन्परमसंकुले ॥ २८
सचापाः साङ्गुलित्राणाः सखड्गाः साङ्गदा रणे ।
अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः ॥ २९
सूपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
चक्रैर्विमथितैरक्षैर्भग्नैश्च बहुधा युगैः ॥ ३०
चर्मचापधरैश्चैव व्यवकीर्णैस्ततस्ततः ।
स्रग्भिराभरणैर्वस्त्रैः पतितैश्च महाध्वजैः ॥ ३१
निहतैर्वारणैरश्वैः क्षत्रियैश्च निपातितैः ।
अदृश्यत मही तत्र दारुणप्रतिदर्शना ॥ ३२
एवं दुःशासनबलं वध्यमानं किरीटिना ।
संप्राद्रवन्महाराज व्यथितं सहनायकम् ॥ ३३
'एवं बले द्रुते याते राजपुत्रं महारथम् ।
विव्याध दशभिर्बाणैस्तिष्ठतिष्ठेति चाब्रवीत् ॥३४
जीवितेन कथं गन्ता दुरुक्तं यावदद्य ते ।
तद्वाक्यसदृशं कर्म कुरु त्वं यदि मन्यसे ॥ ३५
एवमुक्त्वा ततो राजा पार्थः पार्थिवमर्दनः ।
भृशं क्रुद्धो महाराज अविध्यत्तनयं तव ॥' ३६
ततो दुःशासनस्त्रस्तः सहानीकः शरार्दितः ।
द्रोणं त्रातारमाकाङ्क्षञ्शकटव्यूहमभ्यगात् ॥ ३७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे नवतितमोऽध्यायः ॥ ९० ॥

## एकनवतितमोऽध्यायः ॥ ९१ ॥

अर्जुनस्य व्यूहमुखस्थेन द्रोणेन कंचित्कालं युद्ध्वा तमपहाय व्यूहप्रवेशः ॥ १ ॥

सञ्जय उवाच ।
दुःशासनबलं हत्वा सव्यसाची महारथः ।
सिन्धुराजं परीप्सन्वै द्रोणानीकमुपाद्रवत् ॥ १
स तु द्रोणं समासाद्य व्यूहस्य प्रमुखे स्थितम् ।
कृताञ्जलिरिदं वाक्यं कृष्णस्यानुमतेऽब्रवीत् ॥ २
शिवेन ध्याहि मां ब्रह्मन्स्वस्ति चैव वदस्व मे ।
भवत्प्रसादादिच्छामि प्रवेष्टुं दुर्भिदां चमूम् ॥ ३
भवान्पितृसमो मह्यं धर्मराजसमोऽपि च ।
धौम्यकृष्णसमश्चैव सत्यमेतद्ब्रवीमि ते ॥ ४
अश्वत्थामा यथा तात रक्षणीयस्त्वयाऽनघ ।
तथाऽहमपि ते रक्ष्यः सदैव द्विजसत्तम ॥ ५
तव प्रसादादिच्छेयं सिन्धुराजानमाहवे ।
निहन्तुं द्विपदां श्रेष्ठ प्रतिज्ञां रक्ष मे प्रभो ॥ ६
सञ्जय उवाच ।
एवमुक्तस्तदाऽऽचार्यः प्रत्युवाच स्मयन्निव ।
मामजित्वा न बीभत्सो शक्यो जेतुं जयद्रथः ॥७

---

दन्तवेष्टेषु दन्तमूलेषु । कटेषु कटिषु ॥ १९ ॥ निवेदनमुपाहारम् ॥ २१ ॥ यन्त्रबद्धा यन्त्रैरालिखिताः ॥ २२ ॥

नवतितमोऽध्यायः ॥ ९० ॥

एतावदुक्त्वा तं द्रोणः शरव्रातैरवाकिरत् ।
सरथाश्वध्वजं तीक्ष्णैः प्रहसन्वै ससारथिम् ॥ ८
ततोऽर्जुनः शरव्रातान्द्रोणस्यावार्य सायकैः ।
द्रोणमभ्यर्दयद्बाणैर्घोररूपैर्महत्तरैः ॥ ९
विव्याध च रणे द्रोणमनुमान्य विशांपते ।
क्षत्रधर्मं समास्थाय नवभिः सायकैः पुनः ॥ १०
तस्येषूनिषुभिश्छित्त्वा द्रोणो विव्याध तावुभौ ।
विषाग्निज्वलितप्रख्यैरिषुभिः कृष्णपाण्डवौ ॥ ११
इयेष पाण्डवस्तस्य बाणैश्छेत्तुं शरासनम् ।
तस्य चिन्तयतस्त्वेव फल्गुनस्य महात्मनः ॥ १२
द्रोणः शरैरसंभ्रान्तो ज्यां चिच्छेदाशु वीर्यवान् ।
विव्याध च हयानस्य ध्वजं सारथिमेव च ॥ १३
अर्जुनं च शरैर्वीरः स्मयमानोऽभ्यवाकिरत् ।
एतस्मिन्नन्तरे पार्थः सज्यं कृत्वा महद्धनुः ॥ १४
विशेषयिष्यन्नाचार्यं सर्वास्त्रविदुषां वरः ।
मुमोच षट्शतान्बाणान्गृहीत्वैकमिव द्रुतम् ॥ १५
पुनः सप्तशतानन्यान्सहस्रं चानिवर्तिनः ।
चिक्षेपायुतशश्चान्यांस्तेऽघ्नन्द्रोणस्य तां चमूम् ॥ १६
तैः सम्यगस्तैर्बलिना कृतिना चित्रयोधिना ।
मनुष्यवाजिमातङ्गा विद्धाः पेतुर्गतासवः ॥ १७
विसूताश्वध्वजाः पेतुः संछिन्नायुधजीविताः ।
रथिनो रथमुख्येभ्यः सहसा शरपीडिताः ॥ १८
चूर्णिताक्षिप्तदग्धानां वज्रानिलहुताशनैः ।
तुल्यरूपा गजाः पेतुर्गिर्यग्राम्बुदवेश्मनाम् ॥ १९
पेतुरश्वसहस्राणि प्रहतान्यर्जुनेषुभिः ।
हंसा हिमवतः पृष्ठे वारिविप्रहता इव ॥ २०
रथाश्वद्विपपत्त्योघाः सलिलौघा इवाद्भुताः ।
युगान्तादित्यरश्म्याभैः पाण्डवास्त्रशरैर्हताः ॥ २१

तं पाण्डवादित्यशरांशुजालं
　कुरुप्रवीरान्युधि निष्टपन्तम् ।
स द्रोणमेघः शरवृष्टिवेगैः
　प्राच्छादयन्मेघ इवार्करश्मीन् ॥ २२

अथात्यर्थं विसृष्टेन द्विषतामसुभोजिना ।
आजघ्ने वक्षसि द्रोणो नाराचेन धनञ्जयम् ॥ २३
स विह्वलितसर्वाङ्गः क्षितिकम्पे यथाऽचलः ।
धैर्यमालम्ब्य बीभत्सुर्द्रोणं विव्याध पत्रिभिः ॥ २४
द्रोणस्तु पञ्चभिर्बाणैर्वासुदेवमताडयत् ।
अर्जुनं च त्रिसप्तत्या ध्वजं चास्य त्रिभिः शरैः ॥ २५
विशेषयिष्यञ्छिष्यं च द्रोणो राजन्पराक्रमी ।
अदृश्यमर्जुनं चक्रे निमेषाच्छरवृष्टिभिः ॥ २६
प्रसक्तान्पततोऽद्राक्ष्म भारद्वाजस्य सायकान् ।
मण्डलीकृतमेवास्य धनुश्चादृश्यताद्भुतम् ॥ २७
तेऽभ्ययुः समरे राजन्वासुदेवधनंजयौ ।
द्रोणसृष्टाः सुबहवः कङ्कपत्रपरिच्छदाः ॥ २८
तत्राद्भुतमपश्याम शिलानामिव सर्पणम् ।
यद्द्रोणं तरसा पार्थो वृद्धं बालोऽपि नातरत् ॥ २९
चिन्तयामास वार्ष्णेयो दृष्ट्वा द्रोणस्य विक्रमम् ।
नातिवर्तिष्यते ह्येनं वेलामिव महार्णवः ॥ ३०
ततः पार्थं समुद्विग्नं लक्ष्य चिन्तयतेऽच्युतः ।
द्रोणस्य चापि विक्रान्तं दृष्ट्वा मधुनिषूदनः ।
इत्यब्रवीद्वासुदेवो धनञ्जयमुदारधीः ॥ ३१
पार्थपार्थ महाबाहो न नः कालात्ययो भवेत् ।
द्रोणमुत्सृज्य गच्छामो ब्राह्मणोऽसौ गतक्लमः ॥ ३२
सञ्जय उवाच ।
पार्थश्चाप्यब्रवीत्कृष्णं यथेष्टमिति केशवम् ॥ ३३
ततः प्रदक्षिणं कृत्वा द्रोणं प्रायान्महाभुजम् ।
परिवृत्तश्च बीभत्सुरगच्छद्विसृजञ्शरान् ॥ ३४
ततोऽब्रवीत्स्वयं द्रोणः केदं पाण्डव गम्यते ।
ननु नाम रणे शत्रुमजित्वा न निवर्तसे ॥ ३५
अर्जुन उवाच ।
गुरुर्भवान्न मे शत्रुः शिष्यः पुत्रसमोऽस्मि ते ।
न चास्ति स पुमाँल्लोके यस्त्वां युधि पराजयेत् ३६
सञ्जय उवाच ।
एवं ब्रुवाणो बीभत्सुर्जयद्रथवधोत्सुकः ।
त्वरायुक्तो महाबाहुस्त्वत्सैन्यं समुपाद्रवत् ॥ ३७
तं चक्ररक्षौ पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।

गिर्यग्राम्बुदवेश्मनां वज्रानिलहुताशनैः चूर्णिताक्षिप्तदग्धानां इति यथासंख्येनान्वयः ॥ १९ ॥ एकनवतितमोऽध्यायः ॥ ९१ ॥

अन्वयातां महात्मानौ विशन्तं तावकं बलम् ॥३८
ततो जयो महाराज कृतवर्मा च सात्वतः ।
काम्भोजश्च श्रुतायुश्च धनञ्जयमवारयन् ॥ ३९
तेषां दशसहस्राणि रथानामनुयायिनाम् ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ४०
मावेल्लका ललित्थाश्च केकया मद्रकास्तथा ।
नारायणाश्च गोपालाः कांभोजानां च ये गणाः॥४१
कर्णेन विजिताः पूर्वं संग्रामे शूरसंमताः ।
भारद्वाजं पुरस्कृत्य हृष्टात्मानोऽर्जुनं प्रति ॥ ४२
पुत्रशोकाभिसंतप्तं क्रुद्धं मृत्युमिवान्तकम् ।
त्यजन्तं तुमुले प्राणान्सन्नद्धं चित्रयोधिनम् ॥४३
गाहमानमनीकानि मातङ्गमिव यूथपम् ।
महेष्वासं पराक्रान्तं नरव्याघ्रमवारयन् ॥ ४४
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ।
अन्योन्यं वै प्रार्थयतां योधानामर्जुनस्य च ॥४५
जयद्रथवधप्रेप्सुमायान्तं पुरुषर्षभम् ।
न्यवारयन्त सहिताः क्रिया व्याधिमिवोत्थितं ४६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकनवतितमोऽध्यायः ॥ ९१ ॥

## द्विनवतितमोऽध्यायः ॥ ९२ ॥

अर्जुनेन श्रुतायुधसुदक्षिणयोर्वधः ॥ १ ॥

सञ्जय उवाच ।
सन्निरुद्धस्तु तैः पार्थो महाबलपराक्रमः ।
द्रुतं समनुयातश्च द्रोणेन रथिनां वरः ॥ १
किरन्निषुगणांस्तीक्ष्णान्स रश्मीनिव भास्करः ।
तापयामास तत्सैन्यं देहं व्याधिगणो यथा ॥ २
अश्वो विद्धो रथश्छिन्नः सारोहः पातितो गजः ।
छत्राणि चापविद्धानि रथाश्चक्रैर्विना कृताः ॥ ३
विद्रुतानि च सैन्यानि शरार्तानि समन्ततः ।
इत्यासीत्तुमुलं युद्धं न प्राज्ञायत किंचन ॥ ४
तेषां संयच्छतां सङ्ख्ये परस्परमजिह्मगैः ।
अर्जुनो ध्वजिनीं राजन्नभीक्ष्णं समकम्पयत् ॥ ५
सत्यां चिकीर्षमाणस्तु प्रतिज्ञां सत्यसङ्गरः ।
अभ्यद्रवद्रथश्रेष्ठं शोणाश्वं श्वेतवाहनः ॥ ६
तं द्रोणः पञ्चविंशत्या मर्मभिद्भिरजिह्मगैः ।
अन्तेवासिनमाचार्यो महेष्वासं समार्पयत् ॥ ७
तं तूर्णमिव बीभत्सुः सर्वशस्त्रभृतां वरः ।
अभ्यधावदिषूनस्यन्निषुवेगविघातकान् ॥ ८
तस्याशु क्षिपतो भल्लान्भल्लैः सन्नतपर्वभिः ।
प्रत्यविध्यदमेयात्मा ब्रह्मास्त्रं समुदीरयन् ॥ ९
तदद्भुतमपश्याम द्रोणस्याचार्यकं युधि ।
यतमानो युवा नैनं प्रत्यविध्यद्यदर्जुनः ॥ १०
क्षरन्निव महामेघो वारिधाराः सहस्रशः ।
द्रोणमेघः पार्थशैलं ववर्ष शरवृष्टिभिः ॥ ११
अर्जुनः शरवर्षं तच्छरवर्षेण वीर्यवान् ।
अवारयदसंभ्रान्तो न त्वाचार्यमपीडयत् ॥ १२
द्रोणस्तु पञ्चविंशत्या श्वेतवाहनमार्दयत् ।
वासुदेवं च सप्तत्या बाह्वोरुरसि चाशुगैः ॥ १३
पार्थस्तु प्रहसन्धीमानाचार्यं स शरौघिणम् ।
विसृजन्तं शितान्बाणानवारयत तं युधि ॥ १४
अथ तौ वध्यमानौ तु द्रोणेन रथसत्तमौ ।
अवर्जयेतां दुर्धर्षं युगान्ताग्निमिवोत्थितम् ॥ १५
वर्जयन्निशितान्बाणान्द्रोणचापविनिःसृतान् ।
किरीटमाली कौन्तेयो भोजानीकमथाविशत् ॥१६
सोऽन्तरा कृतवर्माणं काम्भोजं च सुदक्षिणम् ।
अभ्ययाद्वर्जयन्द्रोणं मैनाकमिव पर्वतम् ॥ १७
ततो भोजो नरव्याघ्रो दुर्धर्षं कुरुसत्तमम् ।
अविध्यत्तूर्णमव्यग्रो दशभिः कङ्कपत्रिभिः ॥ १८
तमर्जुनः शतेनाजौ राजन्विव्याध पत्रिणाम् ।

तेषां संयच्छतां विधारयताम् ॥ ५ ॥

आचार्यकं शिक्षाम् ॥ १० ॥

पुनश्चान्यैस्त्रिभिर्बाणैर्मोहयन्निव सात्वतम् ॥ १९
भोजस्तु प्रहसन्पार्थं वासुदेवं च माधवम् ।
एकैकं पञ्चविंशत्या सायकानां समार्पयत् ॥ २०
तस्यार्जुनो धनुश्छित्त्वा विव्याधैनं त्रिसप्तभिः ।
शरैरग्निशिखाकारैः क्रुद्धाशीविषसन्निभैः ॥ २१
अथान्यद्धनुरादाय कृतवर्मा महारथः ।
पञ्चभिः सायकैस्तूर्णं विव्याधोरसि भारत ॥२२
पुनश्च निशितैर्बाणैः पार्थं विव्याध पञ्चभिः ।
तं पार्थो नवभिर्बाणैराजघान स्तनान्तरे ॥ २३
दृष्ट्वा विषक्तं कौन्तेयं कृतवर्मरथं प्रति ।
चिन्तयामास वार्ष्णेयो न नः कालात्ययो भवेत्॥
ततः कृष्णोऽब्रवीत्पार्थं कृतवर्मणि मा दयाम् ।
कुरु संबन्धकं हित्वा प्रमथ्यैनं विशातय ॥ २५
ततः स कृतवर्माणं मोहयित्वाऽर्जुनः शरैः ।
अभ्यगाज्जवनैरश्वैः कांभोजानामनीकिनीम् ॥२६
अमर्षितस्तु हार्दिक्यः प्रविष्टे श्वेतवाहने ।
विधुन्वन्सशरं चापं पाञ्चाल्याभ्यां समागतः २७
चक्ररक्षौ तु पाञ्चाल्यावर्जुनस्य पदानुगौ ।
पर्यवारयदायान्तौ कृतवर्मा रथेषुभिः ॥ २८
तावविध्यत्ततो भोजः कृतवर्मा शितैः शरैः ।
त्रिभिरेव युधामन्युं चतुर्भिश्चोत्तमौजसम् ॥ २९
तावप्येनं विविधतुर्दशभिर्दशभिः शरैः
त्रिभिरेव युधामन्युरुत्तमौजास्त्रिभिस्तथा ।
संचिच्छिदतुरप्यस्य ध्वजं कार्मुकमेव च ॥ ३०
अथान्यद्धनुरादाय हार्दिक्यः क्रोधमूर्छितः ।
कृत्वा विधनुषौ वीरौ शरवर्षैरवाकिरत् ॥ ३१
तावन्ये धनुषी सज्ये कृत्वा भोजं विजघ्नतुः ।
तेनान्तरेण बीभत्सुर्विवेशामित्रवाहिनीम् ॥ ३२
न लेभाते तु तौ द्वारं वारितौ कृतवर्मणा ।
धार्तराष्ट्रेष्वनीकेषु यतमानौ नरर्षभौ ॥ ३३
अनीकान्यर्दयन्युद्धे त्वरितः श्वेतवाहनः ।
नावधीत्कृतवर्माणं प्राप्तमप्यरिसूदनः ॥ ३४
तं दृष्ट्वा तु तथाऽऽयान्तं शूरो राजा श्रुतायुधः ।
अभ्यद्रवत्सुसंक्रुद्धो विधुन्वानो महद्धनुः ॥ ३५
स पार्थं त्रिभिरानर्च्छत्सप्तत्या च जनार्दनम् ।
क्षुरप्रेण सुतीक्ष्णेन पार्थकेतुमताडयत् ॥ ३६
ततोऽर्जुनो नवत्या तु शराणां नतपर्वणाम् ।
आजघान भृशं क्रुद्धस्तोत्त्रैरिव महाद्विपम् ॥ ३७
स तन्न ममृषे राजन्पाण्डवेयस्य विक्रमम् ।
अथैनं सप्तसप्तत्या नाराचानां समार्पयत् ॥ ३८
तस्यार्जुनो धनुश्छित्त्वा शरावापं निकृत्य च ।
आजघानोरसि क्रुद्धः सप्तभिर्नतपर्वभिः ॥ ३९
अथान्यद्धनुरादाय स राजा क्रोधमूर्छितः ।
वासविं नवभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ४०
ततोऽर्जुनः स्मयन्नेव श्रुतायुधमरिंदमः ।
शरैरनेकसाहस्रैः पीडयामास भारत ॥ ४१
अश्वांश्चास्यावधीत्तूर्णं सारथिं च महारथः ।
विव्याध चैनं सप्तत्या नाराचानां महाबलः ॥ ४२
हताश्वं रथमुत्सृज्य स तु राजा श्रुतायुधः ।
अभ्यद्रवद्रणे पार्थं गदामुद्यम्य वीर्यवान् ॥ ४३
वरुणस्यात्मजो वीरः स तु राजा श्रुतायुधः ।
पर्णाशाजननी यस्य शीततोया महानदी ॥ ४४
तस्य माताऽब्रवीद्राजन्वरुणं पुत्रकारणात् ।
अवध्योऽयं भवेल्लोके शत्रूणां तनयो मम ॥ ४५
वरुणस्त्वब्रवीत्प्रीतो ददाम्यस्मै वरं हितम्
दिव्यमस्त्रं सुतस्तेऽयं येनावध्यो भविष्यति ॥४६
नास्ति चाप्यमरत्वं वै मनुष्यस्य कथंचन ।
सर्वेणावश्यमर्तव्यं जातेन सरितां वरे ॥ ४७
दुर्धर्षस्त्वेष शत्रूणां रणेषु भविता सदा ।
अस्त्रस्यास्य प्रभावाद्वै व्येतु ते मानसो ज्वरः ॥ ४८
इत्युक्त्वा वरुणः प्रादाद्गदां मन्त्रपुरस्कृताम् ।
यामासाद्य दुराधर्षः सर्वलोके श्रुतायुधः ॥ ४९
उवाच चैनं भगवान्पुनरेव जलेश्वरः ।
अयुध्यति न मोक्तव्या सा त्वय्येव पतेदिति ॥५०
हन्यादेषा प्रतीपं हि प्रयोक्तारमपि प्रभो ।
न चाकरोत्स तद्वाक्यं प्राप्ते काले श्रुतायुधः ॥ ५१
स तया वीरघातिन्या जनार्दनमताडयत् ।

रथेषुभिः अदूरस्थायिभिर्बाणैः ॥ २८ ॥

प्रतिजग्राह तां कृष्णः पीनेनांसेन वीर्यवान् ।
नाकम्पयत शौरिं सा विन्ध्यं गिरिमिवानिलः ५२
'ततोऽर्जुनः क्षुरप्राभ्यां भुजौ परिघसंनिभौ ।
चिच्छेद पाण्डवः शीघ्रं जलेश्वरसुतस्य वै ॥ ५३
सा ज्वलन्ती महोल्केव समासाद्य जनार्दनम् ।'
प्रत्यागता महावेगा कृत्येव दुरधिष्ठिता ॥ ५४
जघान चास्थितं वीरं श्रुतायुधममर्षणम् ।
'स पपात हतो भूमौ विशिरा विभुजो बली ।
संभग्न इव वातेन बहुशाखो वनस्पतिः ॥ ५५
सा विस्फुरन्ती ज्वलिता वज्रवेगसमा गदा ।'
हत्वा श्रुतायुधं वीरं धरणीमन्वपद्यत ॥ ५६
गदां निवर्तितां दृष्ट्वा निहतं च श्रुतायुधम् ।
हाहाकारो महांस्तत्र सैन्यानां समजायत ।
स्वेनास्त्रेण हतं दृष्ट्वा श्रुतायुधमरिन्दमम् ॥ ५७
अयुध्यमानाय ततः केशवाय नराधिप ।
क्षिप्ता श्रुतायुधेनाथ तस्मात्तमवधीद्गदा ॥ ५८
यथोक्तं वरुणेनाजौ तथा स निधनं गतः ।
व्यसुश्चाप्यपतद्भूमौ प्रेक्षतां सर्वधन्विनाम् ॥ ५९
पतमानस्तु स बभौ पर्णाशायाः प्रियः सुतः ।
संभग्न इव वातेन बहुशाखो वनस्पतिः ॥ ६०
ततः सर्वाणि सैन्यानि सेनामुख्याश्च सर्वशः ।
प्राद्रवन्त हतं दृष्ट्वा श्रुतायुधमरिंदमम् ॥ ६१
ततः काम्भोजराजस्य पुत्रः शूरः सुदक्षिणः ।
अभ्ययाज्जवनैरश्वैः फल्गुनं शत्रुसूदनम् ॥ ६२
तस्य पार्थः शरान्सप्त प्रेषयामास भारत ।
ते तं शूरं विनिर्भिद्य प्राविशन्धरणीतलम् ॥ ६३
सोऽतिविद्धः शरैस्तीक्ष्णैर्गाण्डीवप्रेषितैर्मृधे ।
अर्जुनं प्रतिविव्याध दशभिः कङ्कपत्रिभिः ॥ ६४
वासुदेवं त्रिभिर्विद्ध्वा पुनः पार्थं च पञ्चभिः ।
तस्य पार्थो धनुश्छित्त्वा केतुं चिच्छेद मारिष ॥ ६५
भल्लाभ्यां भृशतीक्ष्णाभ्यां तं च विव्याध पाण्डवः ।
स तु पार्थं त्रिभिर्विद्ध्वा सिंहनादमथानदत् ॥ ६६
सर्वपारशवीं चैव शक्तिं शूरः सुदक्षिणः ।
सघण्टां प्राहिणोद्घोरां क्रुद्धो गाण्डीवधन्वने ॥ ६७
सा ज्वलन्ती महोल्केव तमासाद्य महारथम् ।
सविस्फुलिङ्गा निर्भिद्य निपपात महीतले ॥ ६८
शक्त्या त्वभिहतो गाढं मूर्च्छयाऽभिपरिप्लुतः ।
समाश्वास्य महातेजाः सृक्किणी परिलेलिहन् ॥ ६९
तं चतुर्दशभिः पार्थो नाराचैः कङ्कपत्रिभिः ।
साश्वध्वजधनुःसूतं विव्याधाचिन्त्यविक्रमः ॥ ७०
रथं चान्यैः सुबहुभिश्चक्रे विशकलं शरैः ।
सुदक्षिणं तं काम्भोजं मोघसंकल्पविक्रमम् ।
बिभेद हृदि बाणेन पृथुधारेण पाण्डवः ॥ ७१
स भिन्नवर्मा स्रस्ताङ्गः प्रभ्रष्टमुकुटाङ्गदः ।
पपाताभिमुखः शूरो यन्त्रमुक्त इव ध्वजः ॥ ७२
गिरेः शिखरजः श्रीमान्सुशाखः सुप्रतिष्ठितः ।
निर्भग्न इव वातेन कर्णिकारो हिमात्यये ।
विशीर्णः पतितो राजा प्रसार्य विपुलौ भुजौ ॥ ७३
शेते स निहतो भूमौ काम्भोजास्तरणोचितः ।
महार्हाभरणोपेतः सानुमानिव पर्वतः ॥ ७४
सुदर्शनीयस्ताम्राक्षः कर्णिना स सुदक्षिणः ।
पुत्रः काम्भोजराजस्य पार्थेन विनिपातितः ॥ ७५
धारयन्नग्निसंकाशां शिरसा काञ्चनीं स्रजम् ।
अशोभत महाबाहुर्व्यसुर्भूमौ निपातितः ॥ ७६
ततः सर्वाणि सैन्यानि व्यद्रवन्त सुतस्य ते ।
हतं श्रुतायुधं दृष्ट्वा काम्भोजं च सुदक्षिणम् ॥ ७७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे द्विनवतितमोऽध्यायः ॥ ९२ ॥

## त्रिनवतितमोऽध्यायः ॥ ९३ ॥

अर्जुनेन श्रुतायुःप्रभृतीनां वधः ॥ १ ॥

सञ्जय उवाच ।
हते सुदक्षिणे राजन्वीरे चैव श्रुतायुधे ।
जवेनाभ्यद्रवन्पार्थं कुपिताः सैनिकास्तव ॥ १
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ।

---

कृत्या अभिचारदेवता ॥ ५४ ॥ ध्वजः शक्रध्वजः ॥ ७२ ॥

द्विनवतितमोऽध्यायः ॥ ९२ ॥

अभ्यवर्षंस्ततो राजञ्शरवर्षैर्धनंजयम् ॥ २
तेषां षष्टिशतानन्यान्प्रामथ्नात्पाण्डवः शरैः ।
ते स्म भीताः पलायन्ते व्याघ्रात्क्षुद्रमृगा इव ॥ ३
ते निवृत्ताः पुनः पार्थं सर्वतः पर्यवारयन् ।
रणे सपत्नान्निघ्नन्तं जिगीषन्तं परान्युधि ॥ ४
तेषामापततां तूर्णं गाण्डीवप्रेषितैः शरैः ।
शिरांसि पातयामास बाहूंश्चापि धनंजयः ॥ ५
शिरोभिः पातितैस्तत्र भूमिरासीन्निरन्तरा ।
अभ्रच्छायेव चैवासीद्ध्वाङ्क्षगृध्रबलैर्युधि ॥ ६
तेषु तूत्साद्यमानेषु क्रोधामर्षसमन्वितौ ।
श्रुतायुश्चाश्रुतायुश्च धनंजयमयुध्यताम् ॥ ७
बलिनौ स्पर्धिनौ वीरौ कुलजौ बाहुशालिनौ ।
तावेनं शरवर्षाणि सव्यदक्षिणमस्यताम् ॥ ८
त्वरायुक्तौ महराज प्रार्थयानौ महद्यशः ।
अर्जुनस्य वधप्रेप्सू पुत्रार्थे तव धन्विनौ ॥ ९
तावर्जुनं सहस्रेण पत्रिणां नतपर्वणाम् ।
पूरयामासतुः क्रुद्धौ तटाकं जलदौ यथा ॥ १०
श्रुतायुश्च ततः क्रुद्धस्तोमरेण धनञ्जयम् ।
आजघान रथश्रेष्ठः पीतेन निशितेन च ॥ ११
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः ।
जगाम परमं मोहं मोहयन्केशवं रणे ॥ १२
एतस्मिन्नेव काले तु सोऽश्रुतायुर्महारथः ।
शूलेन भृशतीक्ष्णेन ताडयामास पाण्डवम् ॥ १३
क्षते क्षारं स हि ददौ पाण्डवस्य महात्मनः ।
पार्थोऽपि भृशसंविद्धो ध्वजयष्टिं समाश्रितः ॥ १४
ततः सर्वस्य सैन्यस्य तावकस्य विशांपते ।
सिंहनादो महानासीद्धतं मत्वा धनंजयम् ॥ १५
कृष्णश्च भृशसंतप्तो दृष्ट्वा पार्थं विचेतनम् ।
आश्वासयत्सुहृद्याभिर्वाग्भिस्तत्र धनञ्जयम् ॥ १६
ततस्तौ रथिनां श्रेष्ठौ लब्धलक्षौ धनञ्जयम् ।
वासुदेवं च वार्ष्णेयं शरवर्षैः समन्ततः ॥ १७
सचक्रकूबररथं साश्वध्वजपताकिनम् ।
अदृश्यं चक्रतुर्युद्धे तदद्भुतमिवाभवत् ॥ १८
प्रत्याश्वस्तस्तु बीभत्सुः शनकैरिव भारत ।
प्रेतराजपुरं प्राप्य पुनः प्रत्यागतो यथा ॥ १९
संछन्नं शरजालेन रथं दृष्ट्वा सकेशवम् ।
शत्रू चाभिमुखौ दृष्ट्वा दीप्यमानाविवानलौ ॥ २०
प्रादुश्चक्रे ततः पार्थः शाक्रमस्त्रं महारथः ।
तस्मादासन्सहस्राणि शराणां नतपर्वणाम् ॥ २१
ते जघ्नुस्तौ महेष्वासौ ताभ्यां मुक्तांश्च सायकान् ।
विचेरुराकाशगताः पार्थचापविनिःसृताः ॥ २२
प्रतिहत्य शरांस्तूर्णं शरवेगेन पाण्डवः ।
प्रतस्थे तत्रतत्रैव योधयन्वै महारथान् ॥ २३
तौ च फल्गुनबाणौघैर्विबाहुशिरसौ कृतौ ।
वसुधामन्वपद्येतां वातनुन्नाविव द्रुमा ॥ २४
श्रुतायुषश्च निधनं वधश्चैवाश्रुतायुषः ।
लोकविस्मापनमभूत्समुद्रस्येव शोषणम् ॥ २५
तयोः पदानुगान्हत्वा पुनः पञ्चशतं रथान् ।
प्रत्यगाद्भारतीं सेनां निघ्नन्पार्थो वरान्वरान् ॥२६
श्रुतायुषं च निहतं प्रेक्ष्य चैवाश्रुतायुषम् ।
नियतायुश्च संक्रुद्धो दीर्घायुश्चैव भारत ॥ २७
पुत्रौ तयोर्नरश्रेष्ठौ कौन्तेयं प्रति जग्मतुः ।
किरन्तौ विविधान्बाणान्पितृव्यसनकर्शितौ ॥२८
तावर्जुनो मुहूर्तेन शरैः सन्नतपर्वभिः ।
प्रैषयत्परमक्रुद्धो यमस्य सदनं प्रति ॥ २९
लोडयन्तमनीकानि द्विपं पद्मसरो यथा ।
नाशक्नुवन्वारयितुं पार्थं क्षत्रियपुङ्गवाः ॥ ३०
अङ्गास्तु गजसङ्घैश्च पाण्डवं पर्यवारयन् ।
क्रुद्धाः सहस्रशो राजञ्शिक्षिता हस्तिसादिनः ३१
दुर्योधनसमादिष्टाः कुञ्जरैः पर्वतोपमैः ।
प्राच्याश्च दाक्षिणात्याश्च कलिङ्गप्रमुखा नृपाः॥३२
तेषामापततां शीघ्रं गाण्डीवप्रेषितैः शरैः
निचकर्त शिरांस्युग्रो बाहूनपि सुभूषणान् ॥ ३३
तैः शिरोभिर्मही कीर्णा बाहुभिश्च सहाङ्गदैः ।
बभौ कनकपाषाणा भुजगैरिव संवृता ॥ ३४
बाहवो विशिखैश्छिन्नाः शिरांस्युन्मथितानि च ।
पतमानान्यदृश्यन्त द्रुमेभ्य इव पक्षिणः ॥ ३५
शरैः सहस्रशो विद्धा द्विपाः प्रस्रुतशोणिताः ।
अदृश्यन्ताद्रयः काले गैरिकाम्बुस्रवा इव ॥ ३६
निहताः शेरते स्मान्ये बीभत्सोर्निशितैः शरैः ।

गजपृष्ठगता म्लेच्छा नानाविकृतदर्शनाः ॥ ३७
नानावेषधरा राजन्नानाशस्त्रौघसंवृताः ।
रुधिरेणानुलिप्ताङ्गा भान्ति चित्रैः शरैर्हताः ॥ ३८
शोणितं निर्वमन्ति स्म द्विपाः पार्थशराहताः ।
सहस्रशश्छिन्नगात्राः सारोहाः सपदानुगाः ॥ ३९
चुक्रुशुश्च निपेतुश्च बभ्रमुश्चापरे दिशः ।
भृशं त्रस्ताश्च बहवः स्वानेव ममृदुर्गजाः ॥ ४०
सोत्तरायुधिनश्चैव द्विपास्तीक्ष्णविषोपमाः ।
विदन्त्यसुरमायां ये सुघोरा घोरचक्षुषः ॥ ४१
यवनाः पारदाश्चैव शकाश्च सह बाह्लिकैः ।
काकवर्णा दुराचाराः स्त्रीलोलाः कलहप्रियाः ४२
द्राविडास्तत्र युध्यन्ते मत्तमातङ्गविक्रमाः ।
गोयोनिप्रभवा म्लेच्छाः कालकल्पाः प्रहारिणः ॥
दार्वातिसारा दरदाः पुण्ड्राश्चैव सहस्रशः ।
ते न शक्याः स्म सङ्ख्यातुं व्राताः शतसहस्रशः ४४
अभ्यवर्षन्त ते सर्वे पाण्डवं निशितैः शरैः ।
अवाकिरंश्च ते म्लेच्छा नानायुद्धविशारदाः ॥ ४५
तेषामपि ससर्जाशु शरवृष्टिं धनञ्जयः ।
सृष्टिस्तथाविधा ह्यासीच्छलभानामिवायतिः ॥४६
अभ्रच्छायामिव शरैः सैन्ये कृत्वा धनञ्जयः ।
मुण्डार्धमुण्डाञ्जटिलानशुचीञ्जटिलाननान् ।
म्लेच्छानशातयत्सर्वान्समेतानस्त्रतेजसा ॥ ४७
शरैश्च शतशो विद्धास्ते सङ्घा गिरिचारिणः ।
प्राद्रवन्त रणे भीता गिरिगह्वरवासिनः ॥ ४८
गजाश्वसादिम्लेच्छानां पतितानां शितैः शरैः ।
बकाः कङ्का वृका भूमावपिबन्रुधिरं मुदा ॥ ४९
पत्त्यश्वरथनागैश्च प्रच्छन्नकृतसंक्रमाम् ।
शरवर्षप्लवां घोरां केशशैवलशाद्वलाम् ।
प्रावर्तयन्नदीमुग्रां शोणितौघतरङ्गिणीम् ॥ ५०
छिन्नाङ्गुलीक्षुद्रमत्स्यां युगान्ते कालसन्निभाम् ।
प्राकरोद्गजसंबाधां नदीमुत्तरशोणिताम् ॥ ५१
देहेभ्यो राजपुत्राणां नागाश्वरथसादिनाम् ।
यथा स्थलं च निम्नं च न स्याद्वर्षति वासवे ।
तथाऽऽसीत्पृथिवी सर्वा शोणितेन परिप्लुता ॥ ५२
षट्सहस्रान्हयान्वीरान्पुनर्दशशतान्वरान् ।
प्राहिणोन्मृत्युलोकाय क्षत्रियान्क्षत्रियर्षभः ॥ ५३
शरैः सहस्रशो विद्धा विधिवत्कल्पिता द्विपाः ।
शेरते भूमिमासाद्य शैला वज्रहता इव ॥ ५४
स वाजिरथमातङ्गान्निघ्नन्व्यचरदर्जुनः ।
प्रभिन्न इव मातङ्गो मृद्नन्नलवनं यथा ॥ ५५
भूरिद्रुमलतागुल्मं शुष्केन्धनतृणोलपम्
निर्दहेदनलोऽरण्यं यथा वायुसमीरितः ॥ ५६
सेनारण्यं तव तथा कृष्णानिलसमीरितः ।
शरार्चिरदहत्क्रुद्धः पाण्डवोऽग्निर्धनञ्जयः ॥ ५७
शून्यान्कुर्वन्रथोपस्थान्मानवैः संस्तरन्महीम् ।
प्रानृत्यदिव संबाधे चापहस्तो धनञ्जयः ।
वज्रकल्पैः शरैर्भूमिं कुर्वन्नुत्तरशोणिताम् ॥ ५८
'ततः प्रावर्तत नदी शोणितौघतरङ्गिणी ।
नराश्वद्विपकायेभ्यः पर्वतेभ्य इवापगा ॥ ५९
अस्थिशर्करसंबाधा ध्वजवृक्षा रथह्रदा ।
संछिन्नशीर्षपाषाणा हस्तिहस्तमहाग्रहा ॥ ६०
मांसमज्जास्थिपङ्काढ्या हताश्वमकराकुला ।
उष्णीषफेनसंछन्ना शरघोरझषाकुला ॥ ६१
रुद्रस्याक्रीडसदृशीं भूमिं कुर्वन्विभीषणाम् ।'
प्राविशद्भारतीं सेनां संक्रुद्धो वै धनञ्जयः ॥ ६२
तं श्रुतायुस्तथाम्बष्ठो व्रजमानं न्यवारयत् ॥ ६३
तस्यार्जुनः शरैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः ।
न्यपातयद्धयाञ्शीघ्रं यतमानस्य मारिष ।
धनुश्चास्यापरैश्छित्त्वा शरैः पार्थो विचक्रमे ॥ ६४
अम्बष्ठस्तु गदां गृह्य क्रोधपर्याकुलेक्षणः ।
आससाद रणे पार्थं केशवं च महारथम् ॥ ६५
ततः संप्रहरन्वीरो गदामुद्यम्य भारत ।
रथमावार्य गदया केशवं समताडयत् ॥ ६६
गदया ताडितं दृष्ट्वा केशवं परवीरहा ।

गोयोनिप्रभवा नन्दिन्यां जाताः ॥ ४३ ॥ सृष्टिः संसृष्टिः ॥ ४६ ॥ जटिलाननान् जटिलानि रूढश्मश्रूण्याननानि येषाम् ॥ ४७ ॥ प्रच्छन्नेन प्रच्छादनेन कृतो रचितः संक्रमो यस्याम् ॥ ५० ॥ उत्तरशोणितां शोणितप्रधानाम् ॥ ५१ ॥ हयान् अश्वारोहान् ॥ ५३ ॥ त्रिनवतितमोऽध्यायः ॥ ९३ ॥

अर्जुनोऽथ भृशं क्रुद्धः सोऽम्बष्ठं प्रति भारत ॥ ६७
ततः शरैर्हेमपुङ्खैः सगदं रथिनां वरम् ।
छादयामास समरे मेघः सूर्यमिवोदितम् ॥ ६८
अथापरैः शरैश्चापि गदां तस्य महात्मनः ।
अचूर्णयत्तदा पार्थस्तदद्भुतमिवाभवत् ॥ ६९
अथ तां पतितां दृष्ट्वा गृह्यान्यां च महागदाम् ।
अर्जुनं वासुदेवं च पुनः पुनरताडयत् ॥ ७०
तस्यार्जुनः क्षुरप्राभ्यां सगदावुद्यतौ भुजौ ।
चिच्छेदेन्द्रध्वजाकारौ शिरश्चान्येन पत्रिणा ॥ ७१
स पपात हतो राजन्वसुधामनुनादयन् ।
इन्द्रध्वज इवोत्सृष्टो यन्त्रनिर्मुक्तबन्धनः ॥ ७२
अम्बष्ठे तु तदा भग्ने तव सैन्यमभज्यत ॥ ७३
रथानीकावगाढश्च वारणाश्वशतैर्वृतः ।
अदृश्यत तदा पार्थो घनैः सूर्य इवावृतः ॥ ७४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

अर्जुनाद्भीतेन दुर्योधनेन द्रोणमेत्य तदुपालम्भपूर्वकं जयद्रथंप्रति शोचनम् ॥ १ ॥ द्रोणेन दुर्योधनस्य मन्त्रोच्चारणपूर्वकं कवचमाबध्यार्जुनेन सह युद्धाय प्रेषणम् ॥ २ ॥

सञ्जय उवाच ।
ततः प्रविष्टे कौन्तेये सिन्धुराजजिघांसया ।
द्रोणानीकं विनिर्भिद्य भोजानीकं च दुस्तरम् ॥ १
काम्भोजस्य च दायादे हते राजन्सुदक्षिणे ।
श्रुतायुषि च विक्रान्ते निहते सव्यसाचिना ॥ २
विप्रद्रुतेष्वनीकेषु विध्वस्तेषु समन्ततः ।
प्रभग्नं स्वबलं दृष्ट्वा पुत्रस्ते द्रोणमभ्ययात् ॥ ३
त्वरन्नेकरथेनैव समेत्य द्रोणमब्रवीत् ।
गतः स पुरुषव्याघ्रः प्रमथ्यैतां महाचमूम् ॥ ४
अथ बुद्ध्या समीक्षस्व किंनु कार्यमनन्तरम् ।
अर्जुनस्य विघाताय दारुणेऽस्मिञ्जनक्षये ॥ ५
यथा स पुरुषव्याघ्रो न हन्येत जयद्रथः ।
तथा विधत्स्व भद्रं ते त्वं हि नः परमा गतिः ॥ ६
असौ धनंजयाग्निर्हि कोपमारुतचोदितः ।
सेनाकक्षं दहति मे वह्निः कक्षमिवोत्थितः ॥ ७
अतिक्रान्ते हि कौन्तेये भित्त्वा सैन्यं परंतप ।
जयद्रथस्य गोप्तारः संशयं परमं गताः ॥ ८
स्थिरा बुद्धिर्नरेन्द्राणामासीद्ब्रह्मविदां वर ।
नातिक्रमिष्यति द्रोणं जातु जीवन्धनञ्जयः ॥ ९
योऽसौ पार्थो व्यतिक्रान्तो मिषतस्ते महाद्युते ।
सर्वं ह्यद्यातुरं मन्ये नेदमस्ति बलं मम ॥ १०
जानामि त्वां महाभाग पाण्डवानां हिते रतम् ।
ततो मुह्यामि च ब्रह्मन्कार्यवत्तां विचिन्तयन् ॥ ११
यथाशक्ति च ते ब्रह्मन्वर्धयन्वृत्तिमुत्तमाम् ।
प्रीणामि च यथाशक्ति तच्च त्वं नावबुध्यसे ॥ १२
अस्मान्न त्वं सदा भक्तानिच्छस्यमितविक्रम ।
पाण्डवान्सततं प्रीणास्यस्माकं विप्रिये रतान् ॥ १३
अस्मानेवोपजीवंस्त्वमस्माकं विप्रिये रतः ।
न ह्यहं त्वां विजानामि मधुदिग्धमिव क्षुरम् ॥ १४
'नह्यहं त्वां विजानामि सर्पं मण्डूकराविणम् ।'
नादास्यच्चेद्वरं मह्यं भवान्पाण्डवनिग्रहे ।
नावारयिष्यं गच्छन्तमहं सिन्धुपतिं गृहान् ॥ १५
मया त्वाशंसमानेन त्वत्तस्त्राणमबुद्धिना ।
आश्वासितः सिन्धुपतिर्मोहाद्दत्तश्च मृत्यवे ॥ १६
यमदंष्ट्रान्तरं प्राप्तो मुच्येतापि हि मानवः ।
नार्जुनस्य वशं प्राप्तो मुच्येताजौ जयद्रथः ॥ १७
स तथा कुरु शोणाश्व यथा मुच्येत सैन्धवः ।
मम चार्तप्रलापानां माक्रुधः पाहि सैन्धवम् ॥ १८
द्रोण उवाच ।
नाभ्यसूयामि ते वाक्यमश्वत्थाम्नाऽसि मे समः ।

आतुरमनवस्थितम् ॥ १० ॥ नावबुध्यसे न स्मरसि ॥ १२ ॥ नेच्छसि नानुरुध्यसे ॥ १३ ॥ वचसा ललितं सदा । हृदयेन

भृशं तीक्ष्णं इति क. पाठः ॥ १४ ॥

सत्यं तु ते प्रवक्ष्यामि तज्जुषस्व विशांपते ॥ १९
सारथिः प्रवरः कृष्णः शीघ्राश्चास्य हयोत्तमाः।
अल्पं च विवरं कृत्वा तूर्णं याति धनञ्जयः॥ २०
किं न पश्यसि बाणौघान्क्रोशमात्रे किरीटिनः।
पश्चाद्रथस्य पतितान्क्षिप्ताञ्शीघ्रं हि गच्छतः॥ २१
न चाहं शीघ्रयानेऽद्य समर्थो वयसान्वितः।
सेनामुखे च पार्थानामेतद्बलमुपस्थितम् ॥ २२
युधिष्ठिरश्च मे ग्राह्यो मिषतां सर्वधन्विनाम्।
एवं मया प्रतिज्ञातं क्षत्रमध्ये महाभुज ॥ २३
धनञ्जयेन चोत्सृष्टो वर्तते प्रमुखे नृप।
तस्माद्व्यूहमुखं हित्वा नाहं यास्यामि फल्गुनम्॥२४
तुल्याभिजनकर्माणं शत्रुमेकं सहायवान्।
गत्वा योधय मा भैस्त्वं त्वं ह्यस्य जगतः पतिः २५
राजा शूरः कृती दक्षो वैरमुत्पाद्य पाण्डवैः।
वीरः स्वयं प्रयाह्याशु यत्र पार्थो धनञ्जयः॥ २६

दुर्योधन उवाच

कथं त्वामप्यतिक्रान्तः सर्वशस्त्रभृतां वरम्।
धनञ्जयो मया शक्य आचार्य प्रतिबाधितुम्॥ २७
अपि शक्यो रणे जेतुं वज्रहस्तः पुरंदरः।
नार्जुनः समरे शक्यो जेतुं परपुरंजयः॥ २८
येन भोजश्च हार्दिक्यो भवांश्च त्रिदशोपमः।
अस्त्रप्रतापेन जितौ श्रुतायुश्च निबर्हितः॥ २९
सुदक्षिणश्च निहतः स च राजा श्रुतायुधः।
श्रुतायुश्चाश्रुतायुश्च म्लेच्छाश्चायुतशो हताः॥ ३०
तं कथं पाण्डवं युद्धे दहन्तमिव पावकम्।
प्रतियोत्स्यामि दुर्धर्षं तन्ममाचक्ष्व सत्तम॥ ३१
क्षमं चेन्मन्यसे युद्धं मम तेनाद्य शाधि माम्।
परवानस्मि भवतः प्रेष्यवद्रक्ष मे यशः॥ ३२

द्रोण उवाच।

सत्यं वदसि कौरव्य दुराधर्षो धनञ्जयः।
अहं तु तत्करिष्यामि यथैनं प्रसहिष्यसि॥ ३३
अद्भुतं चाद्य पश्यन्तु लोके सर्वधनुर्धराः।
विषक्तं त्वयि कौन्तेयं वासुदेवस्य पश्यतः॥३४
एष ते कवचं राजंस्तथा बध्नामि काञ्चनम्।
यथा न बाणा नास्त्राणि प्रहरिष्यन्ति ते रणे॥ ३५
यदि त्वां सासुरसुराः सयक्षोरगराक्षसाः।
योधयन्ति त्रयो लोकाः सनरा नास्ति ते भयम् ३६
न कृष्णो न च कौन्तेयो न चान्यः शस्त्रभृद्रणे।
शरानर्पयितुं कश्चित्कवचे तव शक्ष्यति॥ ३७
स त्वं कवचमास्थाय क्रुद्धमद्य रणेऽर्जुनम्।
त्वरमाणः स्वयं याहि न त्वाऽसौ विषहिष्यति॥३८

सञ्जय उवाच

एवमुक्त्वा त्वरन्द्रोणः स्पृष्ट्वाम्भो वर्म भास्वरम्।
आबबन्धाद्भुततमं जपन्मन्त्रं यथाविधि॥ ३९
रणे तस्मिन्सुमहति विजयस्य सुतस्य ते।
विसिष्मापयिषुर्लोकान्विद्यया ब्रह्मवित्तमः॥ ४०

द्रोण उवाच

करोतु स्वस्ति ते ब्रह्मा स्वस्ति कुर्वन्तु ब्राह्मणाः।
सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति भारत॥ ४१
ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः।
तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वन्तु ते सदा॥ ४२
स्वस्ति तेऽस्त्वेकपादेभ्यो बहुपादेभ्य एव च।
स्वस्त्यस्त्वपादकेभ्यश्च नित्यं तव महारणे॥ ४३
स्वाहा स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा।
लक्ष्मीररुन्धती चैव कुरुतां स्वस्ति तेऽनघ॥ ४४
असितो देवलश्चैव विश्वामित्रस्तथाङ्गिराः।
वसिष्ठः कश्यपश्चैव स्वस्ति कुर्वन्तु ते नृप॥ ४५
धाता विधाता लोकेशो दिशश्च सदिगीश्वराः।
स्वस्ति तेऽद्य प्रयच्छन्तु कार्तिकेयश्च षण्मुखः॥ ४६
'येन देवाः सकृद्भग्नाः संग्रामे तारकामये
धृताः स च हतः शूरो ह्यवध्यो देवतागणैः॥ ४७
विवस्वान्कुरुतां स्वस्ति तथा वैवस्वतो यमः।
पार्षदा वशगा यस्य स्वस्ति तुभ्यं प्रयच्छतु॥' ४८
दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः।
'दिशश्च विदिशश्चैव सिद्धा लोकहिते रताः।
स्वस्ति कुर्वन्तु ते नित्यं मन्त्रेणानेन संस्तुताः॥' ४९

ते त्वाम् ॥ ३५ ॥ चत्वार ऐरावतवामनाञ्जनसार्वभौमाः ॥ ४९ ॥

अधस्ताद्धरणीं योऽसौ सदा धारयते नृप ।
शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ॥ ५०
गान्धारे युधि विक्रम्य निर्जिते पाकशासने ।
पुरा वृत्रेण दैत्येन भिन्नदेहाः सहस्रशः ॥ ५१
हृततेजोबलाः सर्वे तदा सेन्द्रा दिवौकसः ।
ब्रह्माणं शरणं जग्मुर्वृत्राद्भीता महासुरात् ॥ ५२
देवा ऊचुः ।
प्रमर्दितानां वृत्रेण देवानां देवसत्तम ।
गतिर्भव सुरश्रेष्ठ त्राहि नो महतो भयात् ॥ ५३
अथ पार्श्वे स्थितं विष्णुं शक्रादींश्च सुरोत्तमान् ।
प्राह पथ्यमिदं वाक्यं विषण्णान्सुरसत्तमान् ॥५४
रक्ष्या मे सततं देवाः सहेन्द्राः सद्विजातयः ।
त्वष्टुः सुदुर्धरं तेजो येन वृत्रो विनिर्मितः ॥५५
त्वष्ट्रा पुरा तपस्तप्त्वा वर्षायुतशतं तदा ।
वृत्रो विनिर्मितो देवाः प्राप्यानुज्ञां महेश्वरात् ॥५६
शंकरस्य प्रसादाद्वै हन्याद्वेवरिपुर्बली ।
नागत्वा शंकरस्थानं भगवान्दृश्यते हरः ॥ ५७
दृष्ट्वा जेष्यथ वृत्रं तं क्षिप्रं गच्छत मन्दरम् ।
यत्रास्ते तपसां योनिर्दक्षयज्ञविनाशनः ॥ ५८
पिनाकी सर्वभूतेशो भगनेत्रनिपातनः ।
ते गत्वा सहिता देवा ब्रह्मणा सह मन्दरम् ॥ ५९
अपश्यंस्तेजसां राशिं सूर्यकोटिसमप्रभम् ।
सोऽब्रवीत्स्वागतं देवा ब्रूत किं करवाण्यहम् ॥६०
अमोघं दर्शनं मह्यं कामप्राप्तिरतोऽस्तु वः ।
एवमुक्तास्तु ते सर्वे प्रत्यूचुस्तं दिवौकसः ॥ ६१
हृतौजसां नो वृत्रेण गतिर्भव दिवौकसाम् ।
[illegible]क्षस्व नो देव प्रहारैर्जर्जरीकृताः ।
शरणं त्वां प्रपन्नाः स गतिर्भव महेश्वर ॥ ६२
शर्व उवाच ।
विदितं वो यथा देवाः कृत्येयं सुमहाबला ।
त्वष्टुस्तेजोभवा घोरा दुर्निवार्याऽकृतात्मभिः ॥६३
अवश्यं तु मया कार्यं साह्यं सर्वदिवौकसाम् ।
ममेदं गात्रजं शक्र कवचं गृह्य भास्वरम् ॥ ६४
बधानानेन मन्त्रेण मानसेन सुरेश्वर ।
वधायासुरमुख्यस्य वृत्रस्य सुरघातिनः ॥ ६५
द्रोण उवाच ।
इत्युक्त्वा वरदः प्रादाद्वर्म तन्मन्त्रमेव च ।
स तेन वर्मणा गुप्तः प्रायाद्वृत्रचमूं प्रति ॥ ६६
नानाविधैश्च शस्त्रौघैः पात्यमानैर्महारणे ।
न सन्धिः शक्यते भेत्तुं वर्मबन्धस्य तस्य तु ॥ ६७
स तेन वर्मणा गुप्तो वृत्रं देवरिपुं तदा ।
जघान समरेऽभीतः शक्रो देवाग्रणीस्तदा ॥ ६८
तं च मन्त्रमयं बन्धं वर्म चाङ्गिरसे ददौ ।
अङ्गिराः प्राह पुत्रस्य मन्त्रज्ञस्य बृहस्पतेः ।
बृहस्पतिरथोवाच अग्निवेश्याय धीमते ॥ ६९
अग्निवेश्यो मम प्रादात्तेन बध्नामि वर्म ते ।
तवाद्य देहरक्षार्थं मन्त्रेण नृपसत्तम ॥ ७०
सञ्जय उवाच ।
एवमुक्त्वा ततो द्रोणस्तव पुत्रं महाद्युतिम् ।
पुनरेव वचः प्राह शनैराचार्यपुङ्गवः ॥ ७१
ब्रह्मसूत्रेण बध्नामि कवचं तव भारत ।
हिरण्यगर्भेण यथा बद्धं विष्णोः पुरा रणे ॥ ७२
यथा च ब्रह्मणा बद्धं संग्रामे तारकामये ।
शक्रस्य कवचं दिव्यं तथा बध्नाम्यहं तव ॥ ७३
सञ्जय उवाच ।
बद्ध्वा तु कवचं तस्य मन्त्रेण विधिपूर्वकम् ।
प्रेषयामास राजानं युद्धाय महते द्विजः ॥ ७४
स सन्नद्धो महाबाहुराचार्येण महात्मना ।
'प्रस्थितः सहसा राजन्यत्र यातो धनञ्जयः ॥' ७५
रथानां च सहस्रेण त्रिगर्तानां प्रहारिणाम् ।
तथा दन्तिसहस्रेण मत्तानां वीर्यशालिनाम् ॥७६
अश्वानां नियुतेनैव तथाऽन्यैश्च महारथैः ।
वृतः प्रायान्महाबाहुरर्जुनस्य रथं प्रति ॥ ७७
नानावादित्रघोषेण यथा वैरोचनिस्तथा ॥ ७८

---

अनुज्ञां वरम् ॥ ५६ ॥ हन्याद्धन्तुमर्हति ॥ ५७ ॥ मानसेन मनसोच्चारणीयेन ॥ ६५ ॥ ब्रह्मसूत्रेण ब्रह्मणा सूचितेनोपदेशेन ॥ ७२ ॥ चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

ततः शब्दो महानासीत्सैन्यानां तव भारत । अगाधं प्रस्थितं दृष्ट्वा समुद्रमिव कौरवम् ॥ ७९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

## पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

राज्ञां द्वन्द्वीभूय युद्धाय समागमः ॥ १ ॥

सञ्जय उवाच ।
प्रविष्टयोर्महाराज पार्थवार्ष्णेययो रणे ।
दुर्योधने प्रयाते च पृष्ठतः पुरुषर्षभे ॥ १
जवेनाभ्यद्रवन्द्रोणं महता निःस्वनेन च ।
पाण्डवाः सोमकैः सार्धं ततो युद्धमवर्तत ॥ २
तद्युद्धमभवत्तीव्रं तुमुलं रोमहर्षणम् ।
कुरूणां पाण्डवानां च व्यूहस्य पुरतोऽद्भुतम् ॥ ३
राजन्कदाचिन्नास्माभिर्दृष्टं तादृङ्न च श्रुतम् ।
यादृङ्मध्यगते सूर्ये युद्धमासीद्विशांपते ॥ ४
धृष्टद्युम्नमुखाः पार्था व्यूढानीकाः प्रहारिणः ।
द्रोणस्य सैन्यं ते सर्वे शरवर्षैरवाकिरन् ॥ ५
वयं द्रोणं पुरस्कृत्य सर्वशस्त्रभृतां वरम् ।
पार्षतप्रमुखान्पार्थानभ्यवर्षाम सायकैः ॥ ६
महामेघाविवोदीर्णौ मिश्रवातौ हिमात्यये ।
सेनाग्रे प्रचकाशेते रुचिरे रथभूषिते ॥ ७
समेत्य तु महासेने चक्रतुर्वेगमुत्तमम् ।
जाह्नवीयमुने नद्यौ प्रावृषीवोल्बणोदके ॥ ८
नानाशस्त्रपुरोवातो द्विपाश्वरथसंवृतः ।
गदाविद्युन्महारौद्रः संग्रामजलदो महान् ॥ ९
भारद्वाजानिलोद्धूतः शरधारासहस्रवान् ।
अभ्यवर्षन्महारौद्रं पाण्डुसेनाग्निमुद्धतम् ॥ १०
समुद्रमिव घर्मान्ते विशन्घोरो महानिलः ।
व्यक्षोभयदनीकानि पाण्डवानां द्विजोत्तमः ॥ ११
तेऽपि सर्वप्रयत्नेन द्रोणमेव समाद्रवन् ।
बिभित्सन्तो महासेतुं वार्योघाः प्रबला इव ॥ १२
वारयामास तान्द्रोणो जलौघमचलो यथा ।
पाण्डवान्समरे क्रुद्धान्पाञ्चालांश्च सकेकयान् ॥ १३
अथापरे च राजानः परिवृत्य समन्ततः ।
महाबला रणे शूराः पाञ्चालानन्ववारयन् ॥ १४
ततो रणे नरव्याघ्रः पार्षतः पाण्डवैः सह ।
संजघानासकृद्द्रोणं बिभित्सुररिवाहिनीम् ॥ १५
यथैव शरवर्षाणि द्रोणो वर्षति पार्षते ।
तथैव शरवर्षाणि धृष्टद्युम्नोऽप्यवर्षत ॥ १६
सनिस्त्रिंशपुरोवातः शक्तिप्रासर्ष्टिसंवृतः ।
ज्याविद्युच्चापसंह्रादो धृष्टद्युम्नबलाहकः ॥ १७
शरधाराश्मवर्षाणि व्यसृजत्सर्वतो दिशम् ।
निघ्नन्रथवराश्वौघान्प्लावयामास वाहिनीम् ॥ १८
यंयमार्च्छच्छरैर्द्रोणः पाण्डवानां रथव्रजम् ।
ततस्ततः शरैर्द्रोणमपाकर्षत पार्षतः ॥ १९
तथा तु यतमानस्य द्रोणस्य युधि भारत ।
धृष्टद्युम्नं समासाद्य त्रिधा सैन्यमभिद्यत ॥ २०
भोजमेकेऽभ्यवर्तन्त जलसन्धं तथाऽपरे ।
पाण्डवैर्हन्यमानाश्च द्रोणमेवापरे ययुः ॥ २१
संघट्टयति सैन्यानि द्रोणस्तु रथिनां वरः ।
व्यधमच्चापि तान्यस्य धृष्टद्युम्नो महारथः ॥ २२
धार्तराष्ट्रास्तथा भूता वध्यन्ते पाण्डुसृञ्जयैः ।
अगोपाः पशवोऽरण्ये बहुभिः श्वापदैरिव ॥ २३
कालः स्म ग्रसते योधान्धृष्टद्युम्नेन मोहितान् ।
संग्रामे तुमुले तस्मिन्निति संमेनिरे जनाः ॥ २४
कुनृपस्य यथा राष्ट्रं दुर्भिक्षव्याधितस्करैः ।
द्राव्यते तद्वदापन्ना पाण्डवैस्तव वाहिनी ॥ २५
अर्करश्मिविमिश्रेषु शस्त्रेषु कवचेषु च ।
चक्षूंषि प्रत्यहन्यन्त सैन्येन रजसा तथा ॥ २६
त्रिधा भूतेषु सैन्येषु वध्यमानेषु पाण्डवैः ।

हिमात्यये शिशिरे । सेनाग्रे प्रधाने सेने ॥ ७ ॥ प्लावयामास विद्रावितवान् ॥ १८ ॥ अपाकर्षत व्यावर्तितवान् ॥ १९ ॥ संघट्टयति संमेलयति ॥ २२ ॥

अमर्षितस्ततो द्रोणः पाञ्चालान्व्यधमच्छरैः ॥२७
मृद्गतस्तान्यनीकानि निघ्नतश्चापि सायकैः ।
बभूव रूपं द्रोणस्य कालाग्नेरिव दीप्यतः ॥ २८
रथं नागं हयं चापि पत्तिनश्च विशांपते ।
एकैकेनेषुणा सङ्ख्ये निर्बिभेद महारथः ॥ २९
पाण्डवानां तु सैन्येषु नास्ति कश्चित्स भारत ।
दधार यो रणे बाणान्द्रोणचापच्युतान्प्रभो ॥३०
तत्पच्यमानमर्केण द्रोणसायकतापितम्
बभ्राम पार्षतं सैन्यं तत्रतत्रैव भारत ॥ ३१
'हन्यमानं तु तत्सैन्यं भारद्वाजेन सर्वतः ।
शरैरग्निशिखाकारैर्दह्यते भरतर्षभ ॥' ३२
तथैव पार्षतेनापि काल्यमानं बलं तव ।
अभवत्सर्वतो दीप्तं शुष्कं वनमिवाग्निना ॥ ३३
बाध्यमानेषु सैन्येषु द्रोणपार्षतसायकैः ।
त्यक्त्वा प्राणान्परं शक्त्या युध्यन्ते स्वर्गलिप्सवः ॥
तावकानां परेषां च युध्यतां भरतर्षभ ।
नासीत्कश्चिन्महाराज योऽत्याक्षीत्संयुगं भयात् ॥
भीमसेनं तु कौन्तेयं सोदर्याः पर्यवारयन् ।
विविंशतिश्चित्रसेनो विकर्णश्च महारथः ॥ ३६
विन्दानुविन्दावावन्त्यौ क्षेमधूर्तिश्च वीर्यवान् ।
त्रयाणां तव पुत्राणां त्रय एवानुयायिनः ॥ ३७
बाह्लीकराजस्तेजस्वी कुलपुत्रो महारथः ।
सहसेनः सहामात्यो द्रौपदेयानवारयत् ॥ ३८
शैब्यो गोवासनो राजा योधैर्दशशतावरैः ।
काश्यस्याभिभुवः पुत्रं पराक्रान्तमवारयत् ॥ ३९
अजातशत्रुं कौन्तेयं ज्वलन्तमिव पावकम् ।
मद्राणामीश्वरः शल्यो राजा राजानमावृणोत् ॥४०
दुःशासनस्त्ववस्थाप्य स्वमनीकममर्षणः ।
सात्यकिं प्रययौ क्रुद्धः शूरो रथवरं युधि ॥ ४१
स्वकेनाहमनीकेन सन्नद्धः कवचावृतः ।
चतुःशतैर्महेष्वासैश्चेकितानमवारयम् ॥ ४२
शकुनिस्तु सहानीको माद्रीपुत्राववारयत् ।
गान्धारकैः सप्तशतैश्चापशक्त्यसिपाणिभिः ॥ ४३
विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्च्छताम् ।
प्राणांस्त्यक्त्वा महेष्वासौ मित्रार्थेऽभ्युद्यतायुधौ ॥
शिखण्डिनं याज्ञसेनिं रुन्धानमपराजितम् ।
बाह्लीकः प्रतिसंयत्तः पराक्रान्तमवारयत् ॥ ४५
धृष्टद्युम्नं तु पाञ्चाल्यं क्रूरैः सार्धं प्रभद्रकैः ।
आवन्त्यः सहसौवीरैः क्रुद्धरूपमवारयत् ॥ ४६
घटोत्कचं तथा शूरं राक्षसं क्रूरकर्मिणम् ।
अलायुधोऽद्रवत्तूर्णं क्रुद्धमायान्तमाहवे ॥ ४७
अलम्बुसं राक्षसेन्द्रं कुन्तिभोजो महारथः
सैन्येन महता युक्तः क्रुद्धरूपमवारयत् ॥ ४८
सैन्धवः पृष्ठतस्त्वासीत्सर्वसैन्यस्य भारत ।
रक्षितः परमेष्वासैः कृपप्रभृतिभी रथैः ॥ ४९
तस्यास्तां चक्ररक्षौ द्वौ सैन्धवस्य बृहत्तमौ ।
द्रौणिर्दक्षिणतो राजन्सूतपुत्रश्च वामतः ॥ ५०
पृष्ठगोपास्तु तस्यासन्सौमदत्तिपुरोगमाः ।
कृपश्च वृषसेनश्च शलः शल्यश्च दुर्जयः ॥ ५१
नीतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः ।
सैन्धवस्य विधायैवं रक्षां युयुधिरे ततः ॥ ५२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

## षण्णवतितमोऽध्यायः ॥ ९६ ॥

राज्ञां द्वन्द्वयुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
राजन्संग्राममाश्चर्यं शृणु कीर्तयतो मम ।
कुरूणां पाण्डवानां च यथा युद्धमवर्तत ॥ १
भारद्वाजं समासाद्य व्यूहस्य प्रमुखे स्थितम् ।
अयोधयन्रणे पार्था द्रोणानीकं बिभित्सवः ॥ २
रक्षमाणः स्वकं व्यूहं द्रोणोऽपि सह सैनिकैः ।

काश्यस्य काशिराजस्य ॥ ३९ ॥ आवन्त्योऽन्यः ॥ ४६ ॥

पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

अयोधयद्रणे पार्थान्प्रार्थयानो महद्यशः ॥ ३
विन्दानुविन्दावावन्त्यौ विराटं दशभिः शरैः ।
आजघ्नतुः सुसंक्रुद्धौ तव पुत्रहितैषिणौ ॥ ४
विराटश्च महाराज तावुभौ समरे स्थितौ ।
पराक्रान्तौ पराक्रम्य योधयामास सानुगौ ॥ ५
तेषां युद्धं समभवद्दारुणं शोणितोदकम् ।
सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ॥ ६
बाह्लीकं रभसं युद्धे याज्ञसेनिर्महाबलः ।
आजघ्ने विशिखैस्तीक्ष्णैर्घोरैर्मर्मास्थिभेदिभिः ॥ ७
बाह्लीको याज्ञसेनिं तु हेमपुङ्खैः शिलाशितैः ।
आजघान भृशं क्रुद्धो नवभिर्नतपर्वभिः ॥ ८
तद्युद्धमभवद्धोरं शरशक्तिसमाकुलम् ।
भीरूणां त्रासजननं शूराणां हर्षवर्धनम् ॥ ९
ताभ्यां तत्र शरैर्मुक्तैरन्तरिक्षं दिशस्तथा ।
अभवत्संवृतं सर्वं न प्राज्ञायत किंचन ॥ १०
शैब्यो गोवासनो युद्धे काश्यपुत्रं महारथम् ।
ससैन्यो योधयामास गजः प्रतिगजं यथा ॥ ११
बाह्लीकराजः संक्रुद्धो द्रौपदेयान्महारथान् ।
मनः पञ्चेन्द्रियाणीव शुशुभे योधयन्रणे ॥ १२
अयोधयंस्ते सुभृशं तं शरौघैः समन्ततः ।
इन्द्रियाणि यथा देहं शश्वद्देहवतां वर ॥ १३
वार्ष्णेयं सात्यकिं युद्धे पुत्रो दुःशासनस्तव ।
आजघ्ने सायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिः ॥ १४
सोऽतिविद्धो बलवता महेष्वासेन धन्विना ।
ईषन्मूर्च्छां जगामाशु सात्यकिः सत्यविक्रमः ॥ १५
समाश्वस्तस्तु वार्ष्णेयस्तव पुत्रं महारथम् ।
विव्याध दशभिस्तूर्णं सायकैः कङ्कपत्रिभिः ॥ १६
तावन्योन्यं दृढं विद्धावन्योन्यशरपीडितौ ।
रेजतुः समरे राजन्पुष्पिताविव किंशुकौ ॥ १७
अलम्बुसस्तु संक्रुद्धः कुन्तिभोजशरार्दितः ।
अशोभत भृशं लक्ष्म्या पुष्पाढ्य इव किंशुकः ॥ १८
कुन्तिभोजं ततो रक्षो विद्ध्वा बहुभिरायसैः ।
अनदद्भैरवं नादं वाहिन्याः प्रमुखे तव ॥ १९
ततस्तौ समरे शूरौ योधयन्तौ परस्परम् ।
ददृशुः सर्वसैन्यानि शक्रजम्भौ यथा पुरा ॥ २०
शकुनिं रभसं युद्धे कृतवैरं च भारत ।
माद्रीपुत्रौ च संरब्धौ शरैश्चार्दयतां भृशम् ॥ २१
तुमुलः स महान्राजन्प्रावर्तत जनक्षयः ।
त्वया संजनितोऽत्यर्थं कर्णेन च विवर्धितः ॥ २२
रक्षितस्तव पुत्रैश्च क्रोधमूलो हुताशनः ।
य इमां पृथिवीं राजन्दग्धुं सर्वां समुद्यतः ॥ २३
शकुनिः पाण्डुपुत्राभ्यां कृतः स विमुखः शरैः ।
न स जानाति कर्तव्यं युद्धे किंचित्पराक्रमम् ॥ २४
विमुखं चैनमालोक्य माद्रीपुत्रौ महारथौ ।
ववर्षतुः पुनर्बाणैर्यथा मेघौ महागिरिम् ॥ २५
स वध्यमानो बहुभिः शरैः सन्नतपर्वभिः ।
संप्रायाज्जवनैरश्वैर्द्रोणानीकाय सौबलः ॥ २६
घटोत्कचस्तथा शूरं राक्षसं तमलायुधम् ।
अभ्ययाद्रभसं युद्धे वेगमास्थाय मध्यमम् ॥ २७
तयोर्युद्धं महाराज चित्ररूपमिवाभवत् ।
यादृशं हि पुरावृत्तं रामरावणयोर्मृधे ॥ २८
ततो युधिष्ठिरो राजा मद्रराजानमाहवे ।
विद्ध्वा पञ्चाशता बाणैः पुनर्विव्याध सप्तभिः ॥ २९
ततः प्रववृते युद्धं तयोरत्यद्भुतं नृप ।
यथा पूर्वं महद्युद्धं शम्बरामरराजयोः ॥ ३०
विविंशतिश्चित्रसेनो विकर्णश्च तवात्मजः ।
अयोधयन्भीमसेनं महत्या सेनया वृताः ॥ ३१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे षण्णवतितमोऽध्यायः ॥ ९६ ॥

हुताशनः प्रावर्ततेऽत्यनुषज्यते ॥ २३ ॥

षण्णवतितमोऽध्यायः ॥ ९६ ॥

## सप्तनवतितमोऽध्यायः ॥ ९७ ॥

द्रोणधृष्टद्युम्नयोर्युद्धम् ॥ १ ॥

सञ्जय उवाच ।
तथा तस्मिन्प्रवृत्ते तु संग्रामे रोमहर्षणे ।
कौरवेयांस्त्रिधाभूतान्पाण्डवाः समुपाद्रवन् ॥ १
जलसन्धं महाबाहुं भीमसेनोऽभ्यवर्तत ।
युधिष्ठिरः सहानीकः कृतवर्माणमाहवे ॥ २
किरंस्तु शरवर्षाणि रोचमान इवांशुमान् ।
धृष्टद्युम्नो महाराज द्रोणमभ्यद्रवद्रणे ॥ ३
ततः प्रववृते युद्धं त्वरतां सर्वधन्विनाम् ।
कुरूणां पाण्डवानां च संक्रुद्धानां परस्परम् ॥ ४
संक्षये तु तथाभूते वर्तमाने महाभये ।
द्वन्द्वीभूतेषु सैन्येषु युध्यमानेष्वभीतवत् ॥ ५
द्रोणः पाञ्चालपुत्रेण बली बलवता सह ।
यदक्षिपत्पृषत्कौघांस्तदद्भुतमिवाभवत् ॥ ६
पुण्डरीकवनानीव विध्वस्तानि समन्ततः ।
चक्राते द्रोणपाञ्चाल्यौ नृणां शीर्षाण्यनेकशः ॥७
विनिकीर्णानि वीराणामनीकेषु समन्ततः ।
वस्त्राभरणशस्त्राणि ध्वजवर्मायुधानि च ॥ ८
तपनीयतनुत्राणाः संसिक्ता रुधिरेण च ।
कोविदारा इवाभान्ति पुष्पितास्तत्र भारत ।
तावकाः समरे योधाः पाण्डवेयाश्च विक्षताः ॥९
कुञ्जराश्वनरानन्ये पातयन्ति स्म पत्रिभिः ।
तालमात्राणि चापानि विकर्षन्तो महारथाः॥१०
असिचर्माणि चापानि शिरांसि कवचानि च ।
विप्रकीर्यन्त शूराणां संप्रहारे महात्मनाम् ॥ ११
उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
अदृश्यन्त महाराज तस्मिन्परमसंकुले ॥ १२
गृध्राः कङ्का बकाः श्येना वायसा जम्बुकास्तथा ।
बहुशः पिशिताशाश्च तत्रादृश्यन्त मारिष ॥ १३
भक्षयन्तश्च मांसानि पिबन्तश्चापि शोणितम् ।
विलुम्पमानाः केशांश्च मज्जाश्च बहुधा नृप ॥१४
आकर्षन्तः शरीराणि शरीरावयवांस्तथा ।
नराश्वगजसङ्घानां शिरांसि च ततस्ततः ॥ १५
कृतास्त्रा रणशिक्षाभिर्दीक्षिता रणशालिनः ।
रणे जयं प्रार्थयाना भृशं युयुधिरे तदा ॥ १६
असिमार्गान्बहुविधान्विचेरुः सैनिका रणे ।
ऋष्टिभिः शक्तिभिः प्रासैः शूलतोमरपट्टसैः ॥१७
गदाभिः परिघैश्चान्यैरायुधैश्च भुजैरपि ।
अन्योन्यं जघ्निरे क्रुद्धा युद्धरङ्गगता नराः ॥ १८
रथिनो रथिभिः सार्धमश्वारोहाश्च सादिभिः ।
मातङ्गा वरमातङ्गैः पदाताश्च पदातिभिः ॥ १९
क्षीबा इवान्ये चोन्मत्ता रङ्गेष्विव च वारणाः ।
उच्चुकुशुरथान्योन्यं जघ्नुरन्योन्यमेव च ॥ २०
वर्तमाने तथा युद्धे निर्मर्यादे विशांपते ।
धृष्टद्युम्नो हयानश्वैर्द्रोणस्य व्यत्यमिश्रयत् ॥ २१
ते हयाः साध्वशोभन्त मिश्रिता वातरंहसः ।
पारावतसवर्णाश्च रक्तशोणाश्च संयुगे ॥ २२
पारावतसवर्णास्ते रक्तशोणविमिश्रिताः ।
हयाः शुशुभिरे राजन्मेघा इव सविद्युतः ॥ २३
धृष्टद्युम्नस्तु संप्रेक्ष्य द्रोणमभ्याशमागतम् ।
असिचर्माददे वीरो धनुरुत्सृज्य भारत ॥ २४
चिकीर्षुर्दुष्करं कर्म पार्षतः परवीरहा ।
ईषायाः समतिक्रम्य द्रोणस्य रथमाविशत् ॥२५
अतिष्ठद्युगमध्ये स युगसन्नहनेषु च ।
जघनार्धेषु चाश्वानां तत्सैन्यान्यभ्यपूजयन् ॥२६
खड्गेन चरतस्तस्य शोणाश्वानधितिष्ठतः ।
न ददर्शान्तरं द्रोणस्तदद्भुतमिवाभवत् ॥ २७
यथा श्येनस्य पतनं वनेष्वामिषगृद्धिनः ।
तथैवासीदभीसारस्तस्य द्रोणं जिघांसतः ॥ २८
ततः शरशतेनास्य शतचन्द्रं समाक्षिपत् ।
द्रोणो द्रुपदपुत्रस्य खड्गं च दशभिः शरैः ॥ २९
हयांश्चैव चतुःषष्ट्या शराणां जघ्निवान्बली ।
ध्वजं छत्रं च भल्लाभ्यां तथा तौ पार्ष्णिसारथी ३०
अथास्मै त्वरितो बाणमपरं जीवितान्तकम् ।

युगसन्नहनेषु युगबन्धेषु ॥ २६ ॥

धृष्टद्युम्नाय चिक्षेप वज्रं वज्रधरो यथा ॥ ३१
तं चतुर्दशभिस्तीक्ष्णैर्बाणैश्चिच्छेद सात्यकिः ।
ग्रस्तमाचार्यमुख्येन धृष्टद्युम्नं व्यमोचयत् ॥ ३२
सिंहेनेव मृगं ग्रस्तं नरसिंहेन मारिष ।
द्रोणाद्वै मोचयामास पाञ्चाल्यं शिनिपुङ्गवः ॥३३
सात्यकिं प्रेक्ष्य गोप्तारं पाञ्चाल्यं च महाहवे ।
शराणां त्वरितो द्रोणः षड्विंशत्या समार्पयत् ॥ ३४
ततो द्रोणं शिनेः पौत्रो ग्रसन्तमपि सृञ्जयान् ।
प्रत्यविध्यच्छितैर्बाणैः षड्विंशत्या स्तनान्तरे ॥ ३५
ततः सर्वे रथास्तूर्णं पाञ्चाल्या जयगृद्धिनः ।
सात्वताभिसृते द्रोणे धृष्टद्युम्नमवाक्षिपन् ॥ ३६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे सप्तनवतितमोऽध्यायः ॥ ९७ ॥

## अष्टनवतितमोऽध्यायः ॥ ९८ ॥

द्रोणसात्यक्योर्युद्धम् ॥ १ ॥

धृतराष्ट्र उवाच
बाणे तस्मिन्निकृत्ते तु धृष्टद्युम्ने च मोक्षिते ।
तेन वृष्णिप्रवीरेण युयुधानेन सञ्जय ॥ १
अमर्षितो महेष्वासः सर्वशस्त्रभृतां वरः ।
नरव्याघ्रं शिनेः पौत्रं द्रोणः किमकरोद्युधि ॥ २
सञ्जय उवाच ।
संप्रस्रुतक्रोधविषो व्यादितास्यशरासनः ।
तीक्ष्णधारेषुदशनः सितनाराचदंष्ट्रवान् ॥ ३
संरम्भामर्षताम्राक्षो महोरग इव श्वसन् ।
नरवीरः प्रमुदितः शोणैरश्वैर्महाजवैः ॥ ४
उत्पतद्भिरिवाकाशे क्रामद्भिरिव पर्वतम् ।
रुक्मपुङ्खाञ्शरानस्यन्युयुधानमुपाद्रवत् ॥ ५
शरपातमहावर्षं रथघोषबलाहकम् ।
कार्मुकैरावृतं राजन्नाराचबहुविद्युतम् ॥ ६
शक्तिखड्गाशनिधरं क्रोधवेगसमुत्थितम् ।
द्रोणमेघमनावार्यं हयमारुतचोदितम् ॥ ७
दृष्ट्वैवाभिपतन्तं तं शूरः परपुरंजयः ।
उवाच सूतं शैनेयः प्रहसन्युद्धदुर्मदः ॥ ८
एनं वै ब्राह्मणं शूरं स्वकर्मण्यनवस्थितम् ।
आश्रयं धार्तराष्ट्रस्य धर्मराजभयावहम् ॥ ९
शीघ्रं प्रजवितैरश्वैः प्रत्युद्याहि प्रहृष्टवत् ।
आचार्यं राजपुत्राणां सततं शूरमानिनम् ॥ १०
सञ्जय उवाच
'एवमुक्तस्ततः सूतः सात्यकस्यावहद्रथम् ।'
ततो रजतसंकाशा माधवस्य हयोत्तमाः ।
द्रोणस्याभिमुखाः शीघ्रमगच्छन्वातरंहसः ॥ ११
ततस्तौ द्रोणशैनेयौ युयुधाते परंतपौ ।
शरैरनेकसाहस्रैस्ताडयन्तौ परस्परम् ॥ १२
इषुजालावृतं व्योम चक्रतुः पुरुषर्षभौ ।
पूरयामासतुर्वीरावुभौ दश दिशः शरैः ।
मेघाविवातपापाये धाराभिरितरेतरम् ॥ १३
न स्म सूर्यस्तदा भाति न ववौ च समीरणः ।
इषुजालावृतं घोरमन्धकारं समन्ततः ॥ १४
अनाधृष्यमिवान्येषां शूराणामभवत्तदा ।
अन्धकारीकृते लोके द्रोणशैनेययोः शरैः ॥ १५
तयोः शीघ्रास्त्रविदुषोर्द्रोणसात्वतयोस्तदा ।
नान्तरं शरवृष्टीनां ददृशे नरसिंहयोः ॥ १६
इषूणां सन्निपातेन शब्दो धाराभिघातजः ।
शुश्रुवे शक्रमुक्तानामशनीनामिव स्वनः ॥ १७
नाराचैर्व्यतिविद्धानां शराणां रूपमाबभौ ।
आशीविषविदष्टानां सर्पाणामिव भारत ॥ १८
तयोर्ज्यातलनिर्घोषः शुश्रुवे युद्धशौण्डयोः ।
अजस्रं शैलशृङ्गाणां वज्रेणाहन्यतामिव ॥ १९
उभयोस्तौ रथौ राजंस्ते चाश्वास्तौ च सारथी ।

अवाक्षिपन् अपनीतवन्तः ॥३६॥ सप्तनवतितमोऽध्यायः॥९७॥

अन्तरमवच्छेदः ॥ १६ ॥

रुक्मपुङ्खैः शरैश्छन्नाश्चित्ररूपा बभुस्तदा ॥ २०
निर्मलानामजिह्मानां नाराचानां विशांपते ।
निर्मुक्ताशीविषाभानां संपातोऽभूत्सुदारुणः॥२१
उभयोः पतिते छत्रे तथैव पतितौ ध्वजौ ।
'निकृन्ततोः शरैस्तीक्ष्णैर्द्रोणसात्यकयो रणे॥'२२
उभौ रुधिरसिक्ताङ्गावुभौ च विजयैषिणौ ।
स्रवद्भिः शोणितं गात्रैः प्रस्रुताविव वारणौ ।
अन्योन्यमभ्यविध्येतां जीवितान्तकरैः शरैः॥२३
गर्जितोत्क्रुष्टसन्नादाः शङ्खदुन्दुभिनिःस्वनाः ।
उपारमन्महाराज व्याजहार न कश्चन ॥ २४
तुर्णीभूतान्यनीकानि योधा युद्धादुपारमन् ।
ददर्श द्वैरथं ताभ्यां जातकौतूहलो जनः ॥ २५
रथिनो हस्तियन्तारो हयारोहाः पदातयः
अवैक्षन्ताचलैर्नेत्रैः परिवार्य नरर्षभौ ॥ २६
हस्त्यनीकान्यतिष्ठन्त तथानीकानि वाजिनाम् ।
तथैव रथवाहिन्यः प्रतिव्यूह्य व्यवस्थिताः ॥ २७
मुक्ताविद्रुमचित्रैश्च मणिकाञ्चनभूषितैः ।
ध्वजैराभरणैश्चित्रैः कवचैश्च हिरण्मयैः ॥ २८
वैजयन्तीपताकाभिः परिस्तोमाङ्गकम्बलैः ।
विमलैर्निशितैः शस्त्रैर्हयानां च प्रकीर्णकैः॥ २९
जातरूपमयीभिश्च राजतीभिश्च मूर्धसु ।
गजानां कुम्भमालाभिर्दन्तवेष्टैश्च भारत ॥ ३०
सबलाकाः सखद्योताः सैरावतशतह्रदाः ।
अदृश्यन्तोष्णपर्याये मेघानामिव वागुराः ॥३१
अपश्यन्नस्मदीयाश्च ते च यौधिष्ठिराः स्थिताः ।
तद्युद्धं युयुधानस्य द्रोणस्य च महात्मनः ॥ ३२
विमानाग्रगता देवा ब्रह्मसोमपुरोगमाः ।
सिद्धचारणसङ्घाश्च विद्याधरमहोरगाः ॥ ३३
'गन्धर्वा दानवा यक्षा राक्षसाप्सरसः खगाः ।'
गतप्रत्यागताक्षेपैश्चित्रैरस्त्रविघातिभिः ।
विविधैर्विस्मयं जग्मुस्तयोः पुरुषसिंहयोः ॥ ३४
हस्तलाघवमस्त्रेषु दर्शयन्तौ महाबलौ ।
अन्योन्यमभिविध्येतां शरैस्तौ द्रोणसात्यकी॥ ३५
ततो द्रोणस्य दाशार्हः शरांश्चिच्छेद संयुगे
पत्रिभिः सुदृढैराशु धनुश्चैव महाद्युतेः ॥ ३६
निमेषान्तरमात्रेण भारद्वाजोऽपरं धनुः ।
सज्यं चकार तदपि चिच्छेदास्य स सात्यकिः॥३७
ततस्त्वरन्पुनर्द्रोणो धनुर्हस्तो व्यतिष्ठत ।
सज्यं सज्यं धनुश्चास्य चिच्छेद निशितैः शरैः॥३८
एवमेकशतं छिन्नं धनुषां दृढधन्विना ।
न चान्तरं तयोर्दृष्टं संधाने च्छेदनेऽपि च॥ ३९
ततोऽस्य संयुगे द्रोणो दृष्ट्वा कर्मातिमानुषम् ।
युयुधानस्य राजेन्द्र मनसैतदचिन्तयत् ॥ ४०
एतदस्त्रबलं रामे कार्तवीर्ये धनञ्जये ।
भीष्मे च पुरुषव्याघ्रे यदिदं सात्वतां वरे ॥ ४१
तं चास्य मनसा द्रोणः पूजयामास विक्रमम् ।
लाघवं वासवस्येव संप्रेक्ष्य द्विजसत्तमः ॥ ४२
तुतोषास्त्रविदां श्रेष्ठस्तथा देवाः सवासवाः ।
न तामालक्षयामासुर्लघुतां शीघ्रचारिणः ॥ ४३
देवाश्च युयुधानस्य गन्धर्वाश्च विशांपते ।
सिद्धचारणसङ्घाश्च विदुर्द्रोणस्य कर्म तत् ॥ ४४
ततोऽन्यद्धनुरादाय द्रोणः क्षत्रियमर्दनः ।
अस्त्रैरस्त्रविदां श्रेष्ठो योधयामास भारत ॥ ४५
तस्यास्त्राण्यस्त्रमायाभिः प्रतिहत्य स सात्यकिः ।
जघान निशितैर्बाणैस्तदद्भुतमिवाभवत् ॥ ४६
तस्यातिमानुषं कर्म दृष्ट्वाऽन्यैरसमं रणे ।
युक्तं योगेन योगज्ञास्तावकाः समपूजयन् ॥ ४७
यदस्त्रमस्यति द्रोणस्तदेवास्यति सात्यकिः ।
तमाचार्योऽथ संभ्रान्तोऽयोधयच्छत्रुतापनः॥ ४८
ततः क्रुद्धो महाराज धनुर्वेदस्य पारगः ।
वधाय युयुधानस्य दिव्यमस्त्रमुदैरयत् ॥ ४९
तदाग्नेयं महाघोरं रिपुघ्नमुपलक्ष्य सः ।

---

रथवाहिन्यो रथसेनाः ॥ २७ ॥ वैजयन्ती विलक्षणाभिः पताकाभिः । परिस्तोमैर्वर्णकम्बलैः । अङ्गकम्बलैः सूक्ष्मकम्बलैः ॥२९॥ ऐरावतमिन्द्रधनुः । ऐरावतोऽभ्रमातङ्गे इत्युपक्रम्य नपुंसकं महेन्द्रस्य ऋजुदीर्घशरासने इति मेदिनी ॥ उष्णस्य पर्याये अपगमे वागुराः जालानि समूहा इतियावत् ॥ ३१ ॥ प्रत्यागतं निवर्तनम् । आक्षेपः प्रहरणम् ॥ ३४ ॥ आलक्षयामासुर्लक्षितवन्तः ॥ ४३ ॥ विदुर्नैत्यनुषज्यते ॥ ४४ ॥ योगेन युक्त्या ॥ ४७ ॥

दिव्यमस्त्रं महेष्वासो वारुणं समुदैरयत् ॥ ५०
हाहाकारो महानासीद् दृष्ट्वा दिव्यास्त्रधारिणौ ।
न विचेरुस्तदाऽऽकाशे भूतान्याकाशगान्यपि ५१
अस्त्रे ते वारुणाग्नेये यदा बाणैः समाहिते ।
न यावदभ्यपद्येतां व्यावर्तदथ भास्करः ॥ ५२
ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः ।
नकुलः सहदेवश्च पर्यरक्षन्त सात्यकिम् ॥ ५३
धृष्टद्युम्नमुखैः सार्धं विराटश्च सकेकयः ।
मत्स्याः साल्वेयसेनाश्च द्रोणमाजग्मुरञ्जसा ॥ ५४
दुःशासनं पुरस्कृत्य राजपुत्राः सहस्रशः ।
द्रोणमभ्युपपद्यन्त सपत्नैः परिवारितम् ॥ ५५
ततो युद्धमभूद्राजंस्तेषां तव च धन्विनाम् ।
रजसा संवृते लोके शरजालसमावृते ॥ ५६
सर्वमाविग्नमभवन्न प्राज्ञायत किंचन ।
सैन्येन रजसा ध्वस्ते निर्मर्यादमवर्तत ॥ ५७
'तेनान्तरेण पार्थस्तु रणे जित्वा महारिपून् ।
अतिक्रान्तस्तदा युद्धं कृत्वा पर्यवतस्थिवान् ॥' ५८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे अष्टनवतितमोऽध्यायः ॥ ९८ ॥

## एकोनशततमोऽध्यायः ॥ ९९ ॥

अर्जुनेन रणाङ्गणे हयाप्यायनाय शरैः सरोनिर्माणम् ॥ १ ॥ तथा शरमयवेश्मनिर्माणम् ॥ २ ॥

सञ्जय उवाच ।
'वर्तमाने तदा युद्धे द्रोणस्य सह पाण्डुभिः ।'
परिवर्तमान आदित्ये तत्र सूर्ये च रश्मिभिः ।
रजसा कीर्यमाणाश्च मन्दीभूताश्च कौरवाः ॥ १
तिष्ठतां युध्यमानानां पुनरावर्ततामपि ।
भज्यतां जयतां चैव जगाम तदहः शनैः ॥ २
तथा तेषु विषक्तेषु सैन्येषु जयगृद्धिषु ।
अर्जुनो वासुदेवश्च सैन्धवायैव जग्मतुः ॥ ३
रथमार्गप्रमाणं तु कौन्तेयो निशितैः शरैः ।
चकार यं च पन्थानं ययौ तेन जनार्दनः ॥ ४
यत्रयत्र रथो याति पाण्डवस्य महात्मनः ।
तत्रतत्रैव दीर्यन्ते सेनास्तव विशांपते ॥ ५
रथशिक्षां तु दाशार्हो दर्शयामास वीर्यवान् ।
उत्तमाधममध्यानि मण्डलानि विदर्शयन् ॥ ६
ते तु नामाङ्किता बाणाः कालज्वलनसन्निभाः ।
स्नायुनद्धाः सुपर्वाणः पृथवो दीर्घगामिनः ॥ ७
वैणवाश्चायसाश्चोग्रा ग्रसन्तो विविधानरीन् ।
रुधिरं पतगैः सार्धं प्राणिनां पपुराहवे ॥ ८
रथस्थितोऽग्रतः क्रोशं यानस्यत्यर्जुनः शरान् ।
रथे क्रोशमतिक्रान्ते तस्य ते घ्नन्ति शात्रवान् ॥ ९
तार्क्ष्यमारुतरंहोभिर्वाजिभिः साधुवाहिभिः ।
यथाऽगच्छद्धृषीकेशः कृत्स्नं विस्मापयञ्जगत् ॥ १०
न तथा गच्छति रथस्तपनस्य विशांपते ।
नेन्द्रस्य न तु रुद्रस्य नापि वैश्रवणस्य च ॥ ११
नान्यस्य समरे राजन्गतपूर्वस्तथा रथः ।
यथा ययावर्जुनस्य मनोभिप्रायशीघ्रगः ॥ १२
प्रविश्य तु रणे राजन्केशवः परवीरहा ।
सेनामध्ये हयांस्तूर्णं चोदयामास भारत ॥ १३
ततस्तस्य रथौघस्य मध्यं प्राप्य हयोत्तमाः ।
कृच्छ्रेण रथमूहुस्तं क्षुत्पिपासासमन्विताः ॥ १४
क्षताश्च बहुभिः शस्त्रैर्युद्धशौण्डैरनेकशः ।
मण्डलानि विचित्राणि विचेरुस्ते मुहुर्मुहुः ॥ १५
हतानां वाजिनागानां रथानां च नरैः सह ।
उपरिष्टादतिक्रान्ताः शैलाभानां सहस्रशः ॥ १६
'श्रमेण महता युक्तास्ते हया वातरंहसः ।
मन्दवेगगता राजन्संवृत्तास्तत्र संयुगे ॥' १७
एतस्मिन्नन्तरे वीरावावन्त्यौ भ्रातरौ नृप ।
सहसेनौ समार्च्छेतां पाण्डवं क्लान्तवाहनम् ॥ १८

न यावदभ्यपद्येतां यावदेव न पराभूते । व्यावर्तत् मध्याह्नतः परावृत्तोऽभूत् ॥ ५२ ॥ अष्टनवतितमोऽध्यायः ॥ ९८ ॥

स्नायुनद्धाः सूक्ष्मचर्माग्रग्रथिताः ॥ ७ ॥ क्रोशं क्रोशमुद्दिश्य ॥ ९ ॥

तावर्जुनं चतुःषष्ट्या सप्तत्या च जनार्दनम् ।
शराणां च शतैरश्वानविध्येतां मुदान्वितौ ॥ १९
तावर्जुनो महाराज नवभिर्नतपर्वभिः ।
आजघान रणे क्रुद्धो मर्मज्ञो मर्मभेदिभिः ॥ २०
ततस्तौ तु शरौघेण बीभत्सुं सहकेशवम् ।
आच्छादयेतां संरब्धौ सिंहनादं च चक्रतुः ॥ २१
तयोस्तु धनुषी मुष्टौ भल्लाभ्यां श्वेतवाहनः ।
चिच्छेद समरे तूर्णं भूय एव धनञ्जयः ।
अथान्यैर्विशिखैस्तूर्णं ध्वजौ च कनकोज्ज्वलौ ॥ २२
अथान्ये धनुषी राजन्प्रगृह्य समरे तदा ।
पाण्डवं भृशसंक्रुद्धावर्दयामासतुः शरैः ॥ २३
तयोस्तु भृशसंक्रुद्धः शराभ्यां पाण्डुनन्दनः ।
धनुषी चिच्छिदे तूर्णं भूय एव धनञ्जयः ॥ २४
तथान्यैर्विशिखैस्तूर्णं रुक्मपुङ्खैः शिलाशितैः ।
जघानाश्वांस्तथा सूतौ पार्ष्णी च सपदानुगौ ॥ २५
ज्येष्ठस्य च शिरः कायात्क्षुरप्रेण न्यकृन्तत ।
स पपात हतः पृथ्व्यां वातरुग्ण इव द्रुमः ॥ २६
विन्दं तु निहतं दृष्ट्वा ह्यनुविन्दः प्रतापवान् ।
हताश्वं रथमुत्सृज्य गदां गृह्य महाबलः ॥ २७
अभ्यवर्तत संग्रामे भ्रातुर्वधमनुस्मरन् ।
गदया रथिनां श्रेष्ठो नृत्यन्निव महारथः ॥ २८
अनुविन्दस्तु गदया ललाटे मधुसूदनम् ।
स्पृष्ट्वा नाकम्पयत्क्रुद्धो मैनाकमिव पर्वतम् ॥ २९
तस्यार्जुनः शरैः षड्भिर्ग्रीवां पादौ भुजौ शिरः ।
निचकर्त स संछिन्नः पपाताद्रिचयो यथा ॥ ३०
ततस्तौ निहतौ दृष्ट्वा तयो राजन्पदानुगाः ।
अभ्यद्रवन्त संक्रुद्धाः किरन्तः शतशः शरान् ॥ ३१
तानर्जुनः शरैस्तूर्णं निहत्य भरतर्षभ ।
व्यरोचत यथा वह्निर्दावं दग्ध्वा हिमात्यये ॥ ३२
तयोः सेनामतिक्रम्य कृच्छ्रादिव धनञ्जयः ।
विबभौ जलदं हित्वा दिवाकर इवोदितः ॥ ३३
तं दृष्ट्वा कुरवस्त्रस्ताः प्रहृष्टाश्चाभवन्पुनः ।
अभ्यवर्तन्त पार्थं च समन्ताद्भरतर्षभ ॥ ३४
श्रान्तं चैनं समालक्ष्य ज्ञात्वा दूरे च सैन्धवम् ।
सिंहनादेन महता सर्वतः पर्यवारयन् ॥ ३५
तांस्तु दृष्ट्वा सुसंरब्धानुत्स्मयन्पुरुषर्षभः ।
शनकैरिव दाशार्हमर्जुनो वाक्यमब्रवीत् ॥ ३६
शरार्दिताश्च ग्लानाश्च हया दूरे च सैन्धवः ।
किमिहानन्तरं कार्यं साधिष्ठं तव रोचते ॥ ३७
ब्रूहि कृष्ण यथातत्त्वं त्वं हि प्राज्ञतमः सदा ।
भवन्नेत्रा रणे शत्रून्विजेष्यन्तीह पाण्डवाः ॥ ३८
मम त्वनन्तरं कृत्यं यद्वै तत्त्वं निबोध मे ।
हयान्विमुच्य हि सुखं विशल्यान्कुरु माधव ॥ ३९
सञ्जय उवाच ।
एवमुक्तस्तु पार्थेन केशवः प्रत्युवाच तम् ।
ममाप्येतन्मतं पार्थ यदिदं ते प्रभाषितम् ॥ ४०
अर्जुन उवाच ।
अहमावारयिष्यामि सर्वसैन्यानि केशव
त्वमप्यत्र यथान्यायं कुरु कार्यमनन्तरम् ॥ ४१
सञ्जय उवाच ।
सोऽवतीर्य रथोपस्थादसंभ्रान्तो धनञ्जयः ।
गाण्डीवं धनुरादाय तस्थौ गिरिरिवाचलः ॥ ४२
तमभ्यधावन्क्रोशन्तः क्षत्रिया जयकाङ्क्षिणः ।
इदं छिद्रमिति ज्ञात्वा धरणीस्थं धनंजयम् ॥ ४३
तमेकं रथवंशेन महता पर्यवारयन् ।
विकर्षन्तश्च चापानि विसृजन्तश्च सायकान् ॥ ४४
शस्त्राणि च विचित्राणि क्रुद्धास्तत्र व्यदर्शयन् ।
छादयन्तः शरैः पार्थं मेघा इव दिवाकरम् ॥ ४५
अभ्यद्रवन्त वेगेन क्षत्रियाः क्षत्रियर्षभम् ।
नरसिंहं रथोदाराः सिंहं मत्ता इव द्विपाः ॥ ४६
तत्र पार्थस्य भुजयोर्महद्बलमदृश्यत ।
यत्क्रुद्धो बहुलाः सेनाः सर्वतः समवारयत् ॥ ४७
अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतो विभुः ।
इषुभिर्बहुभिस्तूर्णं सर्वानेव समावृणोत् ॥ ४८
तत्रान्तरिक्षे बाणानां प्रगाढानां विशांपते ।
संघर्षेण महार्चिष्मान्पावकः समजायत ॥ ४९

सूतौ सारथी । पार्ष्णी पृष्ठरक्षौ ॥ २५ ॥ अद्रिचयो गिरिशृङ्गम् ॥ ३० ॥ प्रगाढानां व्यवगाढानाम् ॥ ४९ ॥

तत्रतत्र महेष्वासैः श्वसद्भिः शोणितोक्षितैः ।
हयैर्नागैश्च संभिन्नैर्नदद्भिश्चारिकर्शन ॥ ५०
संरब्धैश्चारिभिर्वीरैः प्रार्थयद्भिर्जयं मृधे ।
एकस्थैर्बहुभिः क्रुद्धैरूष्मेव समजायत ॥ ५१
शरोर्मिणं ध्वजावर्तं नागनक्रं दुरत्ययम् ।
पदातिमत्स्यकलिलं शङ्खदुन्दुभिनिःस्वनम् ॥ ५२
असङ्ख्येयमपारं च रजो नीरमतीव च ।
उष्णीषकमठं छत्रपताकाफेनमालिनम् ॥ ५३
रथसागरमक्षोभ्यं मातङ्गाङ्गशिलाचितम् ।
वेलाभूतस्तदा पार्थः पत्रिभिः समवारयत् ॥ ५४
[धृतराष्ट्र उवाच ।
अर्जुने धरणीं प्राप्ते हयहस्ते च केशवे ।
एतदन्तरमासाद्य कथं पार्थो न घातितः ॥ ५५
सञ्जय उवाच ।
सद्यः पार्थिव पार्थेन निरुद्धाः सर्वपार्थिवाः ।
रथस्था धरणीस्थेन वाक्यमच्छान्दसं यथा ॥ ५६
स पार्थः पार्थिवान्सर्वान्भूमिस्थोपि रथस्थितान् ।
एको निवारयामास लोभः सर्वगुणानिव ॥ ५७]
ततो जनार्दनः सङ्ख्ये प्रियं पुरुषसत्तमम् ।
असंभ्रान्तो महाबाहुरर्जुनं वाक्यमब्रवीत् ॥ ५८
उदपानमिहाश्वानां नालमस्ति रणेऽर्जुन ।
परीप्सन्ते जलं चेमे पेयं न त्ववगाहनम् ॥ ५९
इदमस्तीत्यसंभ्रान्तो ब्रुवन्नस्त्रेण मेदिनीम् ।
अभिहत्यार्जुनश्चक्रे वाजिपानं सरः शुभम् ॥ ६०
[हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
सुविस्तीर्णं प्रसन्नाम्भः प्रफुल्लवरपङ्कजम् ॥ ६१
कूर्ममत्स्यगणाकीर्णमगाधमृषिसेवितम् ।
आगच्छन्नारदमुनिर्दर्शनार्थं कृतं क्षणात् ॥ ६२]
शरवंशं शरस्थूणं शराच्छादनमद्भुतम् ।
शरवेश्माकरोत्पार्थस्त्वष्टेवाद्भुतकर्मकृत् ॥ ६३
ततः प्रहस्य गोविन्दः साधुसाध्वित्यथाब्रवीत् ।
शरवेश्मनि पार्थेन कृते तस्मिन्महात्मना ॥ ६४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकोनशततमोऽध्यायः ॥ ९९ ॥

## शततमोऽध्यायः ॥ १०० ॥

श्रीकृष्णेनार्जुननिर्मितसरसि स्नापनादिनाऽऽप्यायितानां तुरगाणां पुना रथे योजनम् ॥ १ ॥ पुना रथमारूढयोः कृष्णार्जुनयोर्जयद्रथंप्रति गमनम् ॥ २ ॥

सञ्जय उवाच ।
सलिले जनिते तस्मिन्कौन्तेयेन महात्मना ।
निस्तारिते द्विषत्सैन्ये कृते च शरवेश्मनि ॥ १
वासुदेवो रथात्तूर्णमवतीर्य महाद्युतिः ।
मोचयामास तुरगान्वितुन्नान्कङ्कपत्रिभिः ॥ २
अदृष्टपूर्वं तद्दृष्ट्वा साधुवादो महानभूत् ।
सिद्धचारणसङ्घानां सैनिकानां च सर्वशः ॥ ३
पदातिनं तु कौन्तेयं युध्यमानं महारथाः ।
नाशक्नुवन्वारयितुं तदद्भुतमिवाभवत् ॥ ४
आपतत्सु रथौघेषु प्रभूतगजवाजिषु ।
नासंभ्रमत्तदा पार्थस्तदस्य पुरुषानति ॥ ५
व्यसृजन्त शरौघांस्ते पाण्डवं प्रति पार्थिवाः ।
न चाव्यथत धर्मात्मा वासविः परवीरहा ॥ ६
शतानि शरजालानि गदाः प्रासांश्च वीर्यवान् ।
आगतानग्रसत्पार्थः सरितः सागरो यथा ॥ ७
अस्त्रवेगेन महता पार्थो बाहुबलेन च ।
सर्वेषां पार्थिवेन्द्राणामग्रसत्तान्शरोत्तमान् ॥ ८
तत्तु पार्थस्य विक्रान्तं वासुदेवस्य चोभयोः ।

वेलाभूतो मर्यादारूपः ॥ ५४ ॥ कुण्डलितास्त्रयः श्लोकाः झ. पाठे एव वर्तन्ते ॥ ५५ ॥ अलं पर्याप्तम् ॥ ५९ ॥ अभिहत्य खात्वा । वाजिपानं अश्वपानीयम् ॥ ६० ॥ हंसकारण्डवाकीर्णमित्यादियोग्यतया वर्णनम् ॥ कुण्डलितौ द्वौ श्लोकौ घ. झ. पाठयोरेव ॥ ६१ ॥ वंशः शालाधारकाष्ठम् । स्थूणा मध्यस्तम्भः ॥ ६३ ॥ एकोनशततमोऽध्यायः ॥ ९९ ॥

पुरुषानति पुरुषेभ्योऽतिशयः । असंभ्रमत् । उपसर्गात्पूर्वमार्षोऽट् ॥ ५ ॥

अपूजयन्महाराज कौरवा महदद्भुतम् ॥ ९
कौरवा ऊचुः ।
किमद्भुततमं लोके भविताऽप्यथवा ह्यभूत् ।
यदश्वान्पार्थ गोविन्दौ पाययामासतू रणे ॥ १०
भयं विपुलमस्मासु तावधत्तां नरोत्तमौ ।
तेजो विदधतुश्चोग्रं यत्सैन्यं तावकं विभो ।
'दधारैको रणे पार्थो वेलेवोद्वृत्तमर्णवम् ॥ ११
पार्थस्य शरसंछन्ने तस्मिन्सद्मनि भारत ।
आकाशमिव संप्राप्य विचेरुस्तत्र पक्षिणः ॥ १२
न चैनं युधि तिष्ठन्तं सैन्येषु तव मारिष ।
अभ्यद्रवत्सुसंक्रुद्धः पुमान्कश्चित्तु तावकः ॥ १३
सर्वे विमनसोऽभूवंस्तव योधा विशांपते ।
संप्रेक्ष्य तत्र गोविन्दं पाण्डवं च धनंजयम् ॥' १४
अथ स्मयन्हृषीकेशः स्त्रीमध्य इव भारत ।
अर्जुनेन कृते सङ्ख्ये शरगर्भगृहे तदा ॥ १५
उपावर्तयदव्यग्रस्तानश्वान्पुष्करेक्षणः ।
मिषतां सर्वसैन्यानां त्वदीयानां विशांपते ॥ १६
'उपावृत्त्योत्थितानश्वान्पाणिभ्यां पुष्करेक्षणः ।
संमार्जयन्रणे राजन्पश्यतां सर्वयोधिनाम् ॥' १७
तेषां श्रमं च ग्लानिं च वमथुं वेपथुं व्रणान् ।
सर्वं व्यपानुदत्कृष्णः कुशलो ह्यश्वकर्मणि ॥ १८
शल्यानुद्धृत्य पाणिभ्यां परिमृज्य च तान्हयान् ।
उपावर्त्य यथान्यायं पाययामास वारि सः ॥ १९
स ताँल्लब्धोदकान्स्नाताञ्जग्धान्नान्विगतक्लमान् ।
योजयामास संहृष्टः पुनरेव रथोत्तमे ॥ २०
स तं रथवरं शौरिः सर्वशस्त्रभृतां वरः ।
समास्थाय महातेजाः सार्जुनः प्रययौ द्रुतम् २१
'योजयित्वा हयांस्तस्य विधिदृष्टेन कर्मणा ।
रणे चचार गोविन्दस्तृणीकृत्य महारथान् ॥' २२
रथं रथवरस्याजौ युक्तं लब्धोदकैर्हयैः ।
दृष्ट्वा कुरुबलश्रेष्ठाः पुनर्विमनसोऽभवन् ॥ २३
विनिःश्वसन्तस्ते राजन्भग्नदंष्ट्रा इवोरगाः ।
धिगहोऽतिगतः पार्थः कृष्णश्चेत्यब्रुवन्पृथक् ॥ २४
तत्सैन्यं सर्वतो दृष्ट्वा रोमहर्षणमद्भुतम् ।
त्वरध्वमिति चाक्रन्दन्नैतदस्तीति चाब्रुवन् ॥ २५
सर्वक्षत्रस्य मिषतो रथेनैकेन दंशितौ ।
बालः क्रीडनकेनेव कदर्थीकृत्य नो बलम् ॥ २६
क्रोशतां यतमानानामसंसक्तौ परंतपौ ।
दर्शयित्वाऽऽत्मनो वीर्यं प्रयातौ सर्वराजसु ॥ २७
'यथा दैवासुरे युद्धे तृणीकृत्य च दानवान् ।
इन्द्राविष्णू पुरा राजञ्जम्भस्य वधकाङ्क्षिणौ ॥' २८
तौ प्रयातौ पुनर्दृष्ट्वा तदाऽन्ये सैनिकाब्रुवन् ।
त्वरध्वं कुरवः सर्वे वधे कृष्णकिरीटिनोः ॥ २९
रथं युङ्क्त्वा हि दाशार्हो मिषतां सर्वधन्विनाम् ।
जयद्रथाय यात्येष कदर्थीकृत्य नो रणे ॥ ३०
तत्र केचिन्मिथो राजन्समभाषन्त भूमिपाः ।
अदृष्टपूर्वं संग्रामे तद्दृष्ट्वा महदद्भुतम् ॥ ३१
सर्वसैन्यानि राजा च धृतराष्ट्रोऽत्ययं गतः ।
दुर्योधनापराधेन क्षत्रं कृत्स्ना च मेदिनी ॥ ३२
विलयं समनुप्राप्ता तच्च राजा न बुध्यते ।
इत्येवं क्षत्रियास्तत्र ब्रुवन्त्यन्ये च भारत ॥ ३३
सिन्धुराजस्य यत्कृत्यं गतस्य यमसादनम् ।
तत्करोतु वृथादृष्टिर्धार्तराष्ट्रोऽनुपायवित् ॥ ३४
ततः शीघ्रतरं प्रायात्पाण्डवः सैन्धवं प्रति ।
विवर्तमाने तिग्मांशौ हृष्टैः पीतोदकैर्हयैः ॥ ३५
तं प्रयान्तं महाबाहुं सर्वशस्त्रभृतां वरम् ।
नाशक्नुवन्वारयितुं योधाः क्रुद्धमिवान्तकम् ॥ ३६
विद्राव्य तु ततः सैन्यं पाण्डवः शत्रुतापनः ।
यथा मृगगणान्सिंहः सैन्धवार्थे व्यलोडयत् ॥ ३७
गाहमानस्त्वनीकानि तूर्णमश्वानचोदयत् ।
बलाकाभं तु दाशार्हः पाञ्चजन्यं व्यनादयत् ॥ ३८
कौन्तेयेनाग्रतः सृष्टा न्यपतन्पृष्ठतः शराः ।
तूर्णात्तूर्णतरं ह्यश्वाः प्रावहन्वातरंहसः ॥ ३९
ततो नृपतयः क्रुद्धाः परिवव्रुर्धनंजयम् ।
क्षत्रिया बहवश्चान्ये जयद्रथवधैषिणम् ॥ ४०

विदधतुर्दर्शितवन्तौ ॥ ११ ॥ उपावर्तयत्परिलोडितवान् ॥ १६ ॥ श्रमं मनःकायखेदम् । ग्लानिं बलापचयम् । वमथुं फेनोद्गमं ॥ १८ ॥ प्रावहन् अत्यक्रामन् ॥ ३९ ॥

सैन्येषु विप्रयातेषु धिष्ठितं पुरुषर्षभम् ।
दुर्योधनोऽन्वयात्पार्थं त्वरमाणो महाहवे ॥ ४१
वातोद्धूतपताकं तं रथं जलदनिःस्वनम् ।
घोरं कपिध्वजं दृष्ट्वा विषण्णा रथिनोऽभवन् ॥ ४२
दिवाकरेऽथ रजसा सर्वतः संवृते भृशम् ।
शरार्ताश्च रणे योधाः शेकुः कृष्णौ न वीक्षितुम् ॥ ४३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे शततमोऽध्यायः ॥ १०० ॥

## एकाधिकशततमोऽध्यायः ॥ १०१ ॥

जयद्रथं यियासोरर्जुनस्य दुर्योधनेन निरोधः ॥ १ ॥

सञ्जय उवाच ।
स्रंसन्त इव मज्जानस्तावकानां भयान्नृप ।
तौ दृष्ट्वा समतिक्रान्तौ वासुदेवधनंजयौ ॥ १
सर्वे तु प्रतिसंरब्धा ह्रीमन्तः सत्त्वचोदिताः ।
स्थिरीभूता महात्मानः प्रत्यगच्छन्धनञ्जयम् ॥ २
ये गताः पाण्डवं युद्धे रोषामर्षसमन्विताः ।
तेऽद्यापि न निवर्तन्ते सिन्धवः सागरादिव ॥ ३
असन्तस्तु न्यवर्तन्त वेदेभ्य इव नास्तिकाः ।
नरकं भजमानास्ते प्रत्यपद्यन्त किल्बिषम् ॥ ४
तावतीत्य रथानीकं विमुक्तौ पुरुषर्षभौ ।
ददृशाते यथा राहोरास्यान्मुक्तौ प्रभाकरौ ॥ ५
मत्स्याविव महाजालं विदार्य विगतक्लमौ ।
तथा कृष्णावदृश्येतां सेनाजालं विदार्य तत् ॥ ६
विमुक्तौ शस्त्रसंबाधाद्द्रोणानीकात्सुदुर्भिदात् ।
अदृश्येतां महात्मानौ कालसूर्याविवोदितौ ॥ ७
अस्त्रसंबाधनिर्मुक्तौ विमुक्तौ शस्त्रसंकटात् ।
अदृश्येतां महात्मानौ शत्रुसंबाधकारिणौ ॥ ८
विमुक्तौ ज्वलनस्पर्शान्मकरास्याज्झषाविव ।
अक्षोभयेतां सेनां तौ समुद्रं मकराविव ॥ ९
तावकास्तव पुत्राश्च द्रोणानीकस्थयोस्तयोः ।
नैतौ तरिष्यतो द्रोणमिति चक्रुस्तदा मतिम् ॥ १०
तौ तु दृष्ट्वा व्यतिक्रान्तौ द्रोणानीकं महाद्युती ।
नाशशंसुर्महाराज सिन्धुराजस्य जीवितम् ॥ ११
आशा बलवती राजन्सिन्धुराजस्य जीविते ।
द्रोणहार्दिक्ययोः कृष्णौ न मोक्ष्येते इति प्रभो ॥ १२
तामाशां विफलीकृत्य संतीर्णौ तौ परंतपौ ।
द्रोणानीकं महाराज भोजानीकं च दुस्तरम् ॥ १३
अथ दृष्ट्वा व्यतिक्रान्तौ ज्वलिताविव पावकौ ।
निराशाः सिन्धुराजस्य जीवितं न शशंसिरे ॥ १४
मिथश्च समभाषेतामभीतौ भयवर्धनौ ।
जयद्रथवधे वाचस्तास्ताः कृष्णधनंजयौ ॥ १५
असौ मध्ये कृतः षड्भिर्धार्तराष्ट्रैर्महारथैः ।
चक्षुर्विषयसंप्राप्तो न मे मोक्ष्यति सैन्धवः ॥ १६
यद्यस्य समरे गोप्ता शक्रो देवगणैः सह ।
तथाप्येनं निहंस्याव इति कृष्णावभाषताम् ॥ १७
इति कृष्णौ महाबाहू मिथः कथयतां तदा
सिन्धुराजमवेक्षन्तौ त्वत्पुत्रा बहु चुक्रुशुः ॥ १८
अतीत्य मरुधन्वानं प्रयान्तौ तृषितौ गजौ ।
पीत्वा वारि समाश्वस्तौ तथैवास्तामरिंदमौ ॥ १९
व्याघ्रसिंहगजाकीर्णानतिक्रम्य च पर्वतान् ।
वणिजाविव दृश्येतां हीनमृत्यू जरातिगौ ॥ २०
तथाहि मुखवर्णोऽयमनयोरिति मेनिरे ।
तावका वीक्ष्य मुक्तौ तौ विक्रोशन्ति स्म सर्वशः ॥ २१
द्रोणादाशीविषाकाराज्ज्वलितादिव पावकात् ।
अन्येभ्यः पार्थिवेभ्यश्च भास्वन्ताविव भास्करौ ॥ २२
विमुक्तौ सागरप्रख्याद्द्रोणानीकादरिंदमौ ।
अदृश्येतां मुदा युक्तौ समुत्तीर्यार्णवं यथा ॥ २३
अस्त्रौघान्महतो मुक्तौ द्रोणहार्दिक्यरक्षितात् ।

धिष्ठितं किंचिदवस्थितम् ॥ ४१ ॥ शततमोऽध्यायः ॥ १०० ॥
अमर्षश्चिरानुबद्धः कोपः ॥ ३ ॥ प्रभाकरौ चन्द्रादित्यौ ॥ ५ ॥ मरुधन्वानं मरुस्थलम् ॥ १९ ॥

रोचमानावदृश्येतामिन्द्राग्न्योः सदृशौ रणे ॥ २४
उद्भिन्नरुधिरौ कृष्णौ भारद्वाजस्य सायकैः ।
शितैश्चितौ व्यरोचेतां कर्णिकारैरिवाचलौ ॥ २५
द्रोणग्राहह्रदान्मुक्तौ शक्त्याशीविषसंकटात् ।
अयःशरोग्रमकरात्क्षत्रियप्रवराम्भसः ॥ २६
ज्याघोषतलनिर्ह्रादाद्गदानिस्त्रिंशविद्युतः ।
द्रोणास्त्रमेघान्निर्मुक्तौ सूर्येन्दू तिमिरादिव ॥ २७
बाहुभ्यामिव संतीर्णौ सिन्धुषष्ठाः समुद्रगाः ।
तपान्ते सरितः पूर्णा महाग्राहसमाकुलाः ॥ २८
'महाशैलोच्चयां घोरां लङ्घयित्वा महानदीम् ।
निस्तीर्णाविव ध्वगौ यद्वत्तद्वत्तौ तारितौ रणे ॥' २९
इति कृष्णौ महेष्वासौ प्रशस्तौ लोकविश्रुतौ ।
सर्वभूतान्यमन्यन्त द्रोणास्त्रबलवारणात् ॥ ३०
जयद्रथं समीपस्थमवेक्षन्तौ जिघांसया ।
रुरुं वनान्ते लिप्सन्तौ व्याघ्रवत्तावतिष्ठताम् ॥ ३१
यथा हि मुखवर्णोऽयमनयोरिति मेनिरे ।
तव योधा महाराज हतमेव जयद्रथम् ॥ ३२
लोहिताक्षौ महाबाहू संयुक्तौ कृष्णपाण्डवौ ।
सिन्धुराजमभिप्रेक्ष्य हृष्टौ व्यनदतां मुहुः ॥ ३३
शौरेरभीषुहस्तस्य पार्थस्य च धनुष्मतः ।
तयोरासीत्प्रभा राजन्सूर्यपावकयोरिव ॥ ३४
हर्ष एव तयोरासीद्द्रोणानीकप्रमुक्तयोः ।
समीपे सैन्धवं दृष्ट्वा श्येनयोरामिषं यथा ॥ ३५
तौ तु सैन्धवमालोक्य वर्तमानमिवान्तिके ।
सहसा पेततुः क्रुद्धौ क्षिप्रं श्येनाविवामिषम् ॥ ३६
तौ दृष्ट्वा तु व्यतिक्रान्तौ हृषीकेशधनञ्जयौ ।
सिन्धुराजस्य रक्षार्थं पराक्रान्तः सुतस्तव ॥ ३७
द्रोणेनाबद्धकवचो राजा दुर्योधनस्ततः ।
ययावेकरथेनाजौ हयसंस्कारवित्प्रभो ॥ ३८
कृष्णपार्थौ महेष्वासौ व्यतिक्रम्याथ ते सुतः ।
अग्रतः पुण्डरीकाक्षं प्रतीयाय नराधिप ॥ ३९
ततः सर्वेषु सैन्येषु वादित्राणि प्रहृष्टवत् ।
प्रावाद्यन्त व्यतिक्रान्ते तव पुत्रे धनंजयम् ॥ ४०
सिंहनादरवाश्चासञ्शङ्खशब्दविमिश्रिताः ।
दृष्ट्वा दुर्योधनं तत्र कृष्णयोः प्रमुखे स्थितम् ॥ ४१
ये च ते सिन्धुराजस्य गोप्तारः पावकोपमाः ।
ते प्राहृष्यन्त समरे दृष्ट्वा पुत्रं तव प्रभो ॥ ४२
दृष्ट्वा दुर्योधनं कृष्णो व्यतिक्रान्तं सहानुगम् ।
अब्रवीदर्जुनं राजन्प्राप्तकालमिदं वचः ॥ ४३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकाधिकशततमोऽध्यायः ॥ १०१ ॥

## द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

दुर्योधने निरुन्धाने कृष्णेन तद्दुष्कृतानुस्मारणपूर्वकमर्जुनंप्रति तद्वधचोदना ॥१॥ अर्जुनंप्रति दुर्योधनस्य वीरवादः ॥२॥

वासुदेव उवाच ।
दुर्योधनमतिक्रान्तमेतं पश्य धनञ्जय ।
आपद्गतमिमं मन्ये नास्त्यस्य सदृशो रथः ॥ १
दूरपाती महेष्वासः कृतास्त्रो युद्धदुर्मदः ।
दृढहस्तश्चित्रयोधी धार्तराष्ट्रो महाबलः ॥ २
अत्यन्तसुखसंवृद्धो मानितश्च महारथैः ।
कृती च सततं पार्थ नित्यं द्वेष्टि च पाण्डवान् ॥ ३
तेन युद्धमहं मन्ये प्राप्तकालं तवानघ ।
अत्र नो द्यूतमायत्तं विजयायेतराय वा ॥ ४
अत्र क्रोधविषं पार्थ विमुञ्च चिरसंभृतम् ।
एष मूलमनर्थानां पाण्डवानां महात्मनाम् ॥ ५
सोऽयं प्राप्तस्तवाक्षेपं पश्य साफल्यमात्मनः ।
कथं हि राजा राज्यार्थी त्वया गच्छेत संयुगम् ॥ ६
दिष्ट्या त्विदानीं संप्राप्त एष ते बाणगोचरम् ।

सिंधुः षष्ठी यासाम् । ताश्च शतद्रुविपाशेरावतीचन्द्रभागावितस्ताः । एताहि नितान्तदुस्तराः ॥ २८ ॥ रुरुं निपाने इति ट. पाठः । रुरुंनिपाते इति क. पाठः ॥ ३१ ॥ अग्रतः प्रमुखे ॥ ३९ ॥ एकाधिकशततमोऽध्यायः ॥ १०१ ॥

नास्तीत्यर्जुनोत्तेजनम् ॥ १ ॥ आक्षेपं शरगोचरम् ॥ ६ ॥

यथाऽयं जीवितं जह्यात्तथा कुरु धनंजय ॥ ७
ऐश्वर्यमदसंमूढो नैष दुःखमुपेयिवान् ।
न च ते संयुगे वीर्यं जानाति पुरुषर्षभ ॥ ८
त्वां हि लोकास्त्रयः पार्थ ससुरासुरमानवाः ।
नोत्सहन्ते रणे जेतुं किमुतैकः सुयोधनः ॥ ९
स दिष्ट्या समनुप्राप्तस्तव पार्थ रथान्तिकम् ।
जह्येनं त्वं महाबाहो यथा वृत्रं पुरंदरः ॥ १०
एष ह्यनर्थे सततं पराक्रान्तस्तवानघ ।
निकृत्या धर्मराजं च द्यूते वञ्चितवानयम् ॥ ११
बहूनि सुनृशंसानि कृतान्येतेन मानद ।
युष्मासु पापमतिना अपापेष्वपि नित्यदा ॥ १२
तमनार्यं सदा क्रुद्धं पुरुषं कामरूपिणम्
आर्यां युद्धे मतिं कृत्वा जहि पार्थाविचारयन् ॥ १३
निकृत्या राज्यहरणं वनवासं च पाण्डव ।
च कृष्णाया हृदि कृत्वा पराक्रम ॥ १४
दिष्ट्यैष तव बाणानां गोचरे परिवर्तते ।
प्रतिघाताय कार्यस्य दिष्ट्या च यततेऽग्रतः ॥ १५
दिष्ट्या जानाति संग्रामे योद्धव्यं हि त्वया सह ।
दिष्ट्या च सफलाः पार्थ सर्वे कामा ह्यकामिताः ॥ १६
तस्माज्जहि रणे पार्थ धार्तराष्ट्रं कुलाधमम् ।
यथेन्द्रेण हतः पूर्वं जम्भो देवासुरे मृधे ॥ १७
अस्मिन्हते त्वया सैन्यमनाथं भिद्यतामिदम् ।
वैरस्य दिष्ट्या सहजं मूलं छिन्धि दुरात्मनाम् ॥ १८
सञ्जय उवाच ।
तं तथेत्यब्रवीत्पार्थः कृत्यरूपमिदं मम ।
सर्वमन्यदनादृत्य गच्छ यत्र सुयोधनः ॥ १९
येनैतद्दीर्घकालं नो भुक्तं राज्यमकण्टकम् ।
अप्यस्य युधि विक्रम्य च्छिन्द्यां मूर्धानमाहवे ॥ २०
अपि तस्य ह्यनर्हायाः परिक्लेशस्य माधव ।
कृष्णायाः शक्नुयां गन्तुं पदं केशप्रधर्षणे ॥ २१
'अप्यहं तानि दुःखानि पूर्ववृत्तानि माधव ।
दुर्योधनं रणे हत्वा प्रतिमोक्ष्ये कथञ्चन ॥' २२

इत्येवंवादिनौ कृष्णौ हृष्टौ श्वेतान्हयोत्तमान् ।
प्रेषयामासतुः सङ्ख्ये प्रेप्सन्तौ तं नराधिपम् ॥ २३
तयोः समीपं संप्राप्य पुत्रस्ते भरतर्षभ
न चकार भयं प्राप्ते भये महति मारिष ॥ २४
तदस्य क्षत्रियाः कर्म सर्वे एवाभ्यपूजयन् ।
यदर्जुनहृषीकेशौ प्रत्युद्यातौ न्यवारयत् ॥ २५
ततः सर्वस्य सैन्यस्य तावकस्य विशांपते ।
महानादो ह्यभूत्तत्र दृष्ट्वा राजानमाहवे ॥ २६
तस्मिञ्जनसमुन्नादे प्रवृत्ते भैरवे सति ।
कदर्थीकृत्य ते पुत्रः प्रत्यमित्रमवारयत् ॥ २७
आवारितस्तु कौन्तेयस्तव पुत्रेण धन्विना
संरम्भमगमद्भूयः स च तस्मिन्परंतपः ॥ २८
तौ दृष्ट्वा प्रतिसंरब्धौ दुर्योधनधनञ्जयौ ।
अभ्यवैक्षन्त राजानो भीमरूपाः समन्ततः ॥ २९
दृष्ट्वा तु पार्थं संरब्धं वासुदेवं च मारिष ।
प्रहसन्नेव पुत्रस्ते योद्धुकामः समाह्वयत् ॥ ३०
ततः प्रहृष्टो दाशार्हः पाण्डवश्च धनञ्जयः ।
व्यक्रोशेतां महानादं दध्मतुश्चाम्बुजोत्तमौ ॥ ३१
तौ हृष्टरूपौ संप्रेक्ष्य कौरवेयास्तु सर्वशः ।
निराशाः समपद्यन्त पुत्रस्य तव जीविते ॥ ३२
शोकमापुः परं चैव कुरवः सर्व एव ते ।
अमन्यन्त च पुत्रं ते वैश्वानरमुखे हुतम् ॥ ३३
तथा तु दृष्ट्वा योधास्ते प्रहृष्टौ कृष्णपाण्डवौ ।
हतो राजा हतो राजेत्यूचिरे च भयार्दिताः ॥ ३४
जनस्य सन्निनादं तु श्रुत्वा दुर्योधनोऽब्रवीत् ।
व्येतु वो भीरहं कृष्णौ प्रेषयिष्यामि मृत्यवे ॥ ३५
इत्युक्त्वा सैनिकान्सर्वाञ्जयापेक्षी नराधिपः ।
पार्थमाभाष्य संरम्भादिदं वचनमब्रवीत् ॥ ३६
पार्थ यच्छिक्षितं तेऽस्त्रं दिव्यं पार्थिवमेव च ।
तद्दर्शय मयि क्षिप्रं यदि जातोऽसि पाण्डुना ॥ ३७
यद्बलं तव वीर्यं च केशवस्य तथैव च ।
तत्कुरुष्व मयि क्षिप्रं पश्यामस्तव पौरुषम् ॥ ३८

---

कार्यस्य जयद्रथवधरूपस्य ॥ १५ ॥ कृत्यरूपमत्यन्तकरणीयम् ॥ १९ ॥ पदं प्रतिपदम् । गन्तुं पदवीं कलहस्य च इति क. पाठः ॥ २१ ॥

असत्परोक्षं कर्माणि कृतानि प्रवदन्ति ते । स्वामिसत्कारयुक्तानि यानि तानीह दर्शय ॥ ३९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

अर्जुनेन दुर्योधनपराजयः ॥ १ ॥

सञ्जय उवाच ।
एवमुक्त्वाऽर्जुनं राजा त्रिभिर्मर्मातिगैः शरैः ।
अभ्यविध्यन्महावेगैश्चतुर्भिश्चतुरो हयान् ॥ १
वासुदेवं च दशभिः प्रत्यविध्यत्स्तनान्तरे ।
प्रतोदं चास्य भल्लेन च्छित्त्वा भूमावपातयत् ॥ २
तं चतुर्दशभिः पार्थश्चित्रपुङ्खैः शिलाशितैः ।
अविध्यत्तूर्णमव्यग्रस्ते चाभ्रश्यन्त वर्मणि ॥ ३
तेषां नैष्फल्यमालोक्य पुनर्नव च पञ्च च ।
प्राहिणोन्निशितान्बाणांस्ते चाभ्रश्यन्त वर्मणः ॥ ४
अष्टाविंशांस्तु तान्बाणानस्तान्विप्रेक्ष्य निष्फलान् ।
अब्रवीत्परवीरघ्नः कृष्णोऽर्जुनमिदं वचः ॥ ५
अदृष्टपूर्वं पश्यामि शिलानामिव सर्पणम् ।
त्वया संप्रेषिताः पार्थ नार्थं कुर्वन्ति पत्रिणः ॥ ६
कच्चिद्गाण्डीवजः प्राणस्तथैव भरतर्षभ ।
मुष्टिश्च ते यथा पूर्वं भुजयोश्च बलं तव ॥ ७
न वा कच्चिदयं कालः प्राप्तः स्यादद्य पश्चिमः ।
तव चैवास्य शत्रोश्च तन्ममाचक्ष्व पृच्छतः ॥ ८
विस्मयो मे महान्पार्थ तव दृष्ट्वा शरानिमान् ।
व्यर्थान्निपतितान्सङ्ख्ये दुर्योधनरथं प्रति ॥ ९
वज्राशनिसमा घोराः परकायावभेदिनः ।
शराः कुर्वन्ति ते नार्थं पार्थ काऽद्य विडम्बना १०
अर्जुन उवाच ।
द्रोणेन नियतं कृष्ण धार्तराष्ट्रे निदर्शितम् ।
अन्ते विहितमस्त्राणामेतत्कवचधारणम् ॥ ११
अस्मिन्नन्तर्हितं कृष्ण त्रैलोक्यमपि वर्मणि ।
एको द्रोणो हि वेदैतदहं तस्माच्च सत्तमात् ॥ १२
न शक्यमेतत्कवचं बाणैर्भेत्तुं कथंचन ।
अपि वज्रेण गोविन्द स्वयं मघवता युधि ॥ १३
जानंस्त्वमपि वै कृष्ण मां विमोहयसे कथम् ।
यद्वृत्तं त्रिषु लोकेषु यच्च केशव वर्तते ॥ १४
तथा भविष्यद्यच्चैव तत्सर्वं विदितं तव ।
न त्विदं वेद वै कश्चिद्यथा त्वं मधुसूदन ॥ १५
एष दुर्योधनः कृष्ण द्रोणेन विहितामिमाम् ।
तिष्ठत्यभीतवत्सङ्ख्ये बिभ्रत्कवचधारणाम् ॥ १६
यत्त्वत्र विहितं कार्यं नैष तद्वेत्ति माधव ।
स्त्रीवदेष बिभर्त्येतां युक्तां कवचधारणाम् ॥ १७
पश्य बाह्वोश्च मे वीर्यं धनुषश्च जनार्दन ।
पराजयिष्ये कौरव्यं कवचेनापि रक्षितम् ॥ १८
इदमङ्गिरसे प्रादाद्देवेशो वर्म भास्वरम् ।
तस्माद्बृहस्पतिः प्राप ततः प्राप पुरंदरः ॥ १९
पुनर्ददौ सुरपतिर्मह्यं वर्म ससंग्रहम् ।
दैवं यद्यस्य वर्मैतद्ब्रह्मणा वा स्वयं कृतम् ।
नैनं गोप्स्यति दुर्बुद्धिमद्य बाणहतं मया ॥ २०
सञ्जय उवाच ।
एवमुक्त्वाऽर्जुनो बाणानभिमन्त्र्य व्यकर्षयत् ।
मानवास्त्रेण मानार्हस्तीक्ष्णावरणभेदिना ॥ २१
विकृष्यमाणांस्तेनैव धनुर्मध्यगताञ्छरान् ।
तानस्यास्त्रेण चिच्छेद द्रौणिः सर्वास्त्रघातिना २२
तान्निकृत्तानिषून्दृष्ट्वा दूरतो ब्रह्मवादिना ।
न्यवेदयत्केशवाय विस्मितः श्वेतवाहनः ॥ २३
नैतदस्त्रं मया शक्यं द्विः प्रयोक्तुं जनार्दन ।
अस्त्रं मामेव हन्याद्धि हन्याच्चापि बलं मम ॥ २४

---

स्वामिसत्कारो वीरप्रधानोऽयमिति यदन्यैः सत्करणं तेन युक्तानि योग्यतां गतानि ॥ ३९ ॥ द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

गाण्डीवतो बाणाः इति ङ. पाठः । गाण्डीवतः प्राणा इति क. ट. पाठः ॥ ७ ॥ युक्तां अन्यप्रयुक्ताम् ॥ १७ ॥ ससंग्रहं सोपदेशम् । दैवं देवैः कृतम् ॥ २० ॥

ततो दुर्योधनः कृष्णौ नवभिर्नवभिः शरैः ।
अविध्यत रणे राजञ्शरैराशीविषोपमैः ॥ २५
भूय एवाभ्यवर्षच्च समरे कृष्णपाण्डवौ ।
शरवर्षेण महता ततोऽहृष्यन्त तावकाः ।
चक्रुर्वादित्रनिनदान्सिंहनादरवांस्तथा ॥ २६
ततः क्रुद्धो रणे पार्थः सृक्किणी परिसंलिहन् ।
नापश्यच्च ततोऽस्याङ्गं यन्न स्याद्वर्मरक्षितम् ॥ २७
ततोऽस्य निशितैर्बाणैः सुमुक्तैरन्तकोपमैः ।
हयांश्चकार निर्देहानुभौ च पार्ष्णिसारथी ॥ २८
धनुरस्याच्छिनत्तूर्णं हस्तावापं च वीर्यवान् ।
रथं च शकलीकर्तुं सव्यसाची प्रचक्रमे ॥ २९
दुर्योधनं च बाणाभ्यां तीक्ष्णाभ्यां विरथीकृतम् ।
आविध्यद्धस्ततलयोरुभयोरर्जुनस्तदा ॥ ३०
[प्रयत्नज्ञो हि कौन्तेयो नखमांसान्तरेषुभिः ।
स वेदनाभिराविग्नः पलायनपरायणः ॥ ३१]
तं कृच्छ्रामापदं प्राप्तं दृष्ट्वा परमधन्विनः ।
समापेतुः परीप्सन्तो धनञ्जयशरार्दितम् ॥ ३२
तं रथैर्बहुसाहस्रैः कल्पितैः कुञ्जरैर्हयैः ।
पदात्योघैश्च संरब्धैः परिवव्रुर्धनंजयम् ॥ ३३
अथ नार्जुनगोविन्दौ न रथो वा व्यदृश्यत ।
अस्त्रवर्षेण महता शरौघैश्चापि संवृतौ ॥ ३४
ततोऽर्जुनोऽस्त्रवीर्येण निजघ्ने तां वरूथिनीम् ।
तत्र व्यङ्गी कृताः पेतुः शतशोऽथ रथद्विपाः ॥ ३५
ते हता हन्यमानाश्च न्यगृह्णंस्तं रथोत्तमम् ।
स रथः स्तम्भितस्तस्थौ क्रोशमात्रे समन्ततः ॥ ३६
ततोऽर्जुनं वृष्णिवीरस्त्वरितो वाक्यमब्रवीत् ।
धनुर्विस्फारयात्यर्थमहं ध्मास्यामि चाम्बुजम् ॥ ३७
ततो विस्फार्य बलवद्गाण्डीवं जघ्निवान्रिपून् ।
महता शरवर्षेण तलशब्देन चार्जुनः ॥ ३८
पाञ्चजन्यं च बलवान्दध्मौ तारेण केशवः ।
रजसा ध्वस्तपक्ष्मान्तः प्रस्विन्नवदनो भृशम् ॥ ३९
'तेनाच्युतोष्ठपुटपूरितमारुतेन
शङ्खान्तरोदरविवृद्धविनिःसृतेन ।
नादेन सासुरवियत्सुरलोकपाल-
मुद्विग्नमीश्वर जगत्स्फुटतीव सर्वम् ॥' ४०
तस्य शङ्खस्य नादेन धनुषो निःस्वनेन च ।
निःसत्वाश्च ससत्वाश्च क्षितौ पेतुस्तदा जनाः ॥ ४१
तैर्विमुक्तो रथो रेजे वाय्वीरित इवाम्बुदः ।
जयद्रथस्य गोप्तारस्ततः क्षुब्धाः सहानुगाः ॥ ४२
ते दृष्ट्वा सहसा पार्थं गोप्तारः सैन्धवस्य तु ।
चक्रुर्नादान्महेष्वासाः कम्पयन्तो वसुंधराम् ॥ ४३
बाणशब्दरवांश्चोग्रान्विमिश्राञ्शङ्खनिःस्वनैः
प्रादुश्चक्रुर्महात्मानः सिंहनादरवानपि ॥ ४४
तं श्रुत्वा निनदं घोरं तावकानां समुत्थितम् ।
प्रदध्मतुः शङ्खवरौ वासुदेवधनञ्जयौ ॥ ४५
तेन शब्देन महता पूरितेयं वसुंधरा ।
सशैला सार्णवद्वीपा सपाताला विशांपते ॥ ४६
स शब्दो भरतश्रेष्ठ व्याप्य सर्वा दिशो दश ।
प्रतिसस्वान तत्रैव कुरुपाण्डवयोर्बले ॥ ४७
तावका रथिनस्तत्र दृष्ट्वा कृष्णधनञ्जयौ ।
संभ्रमं परमं प्राप्तास्त्वरमाणा महारथाः ॥ ४८
अथ कृष्णौ महाभागौ तावका वीक्ष्य दंशितौ ।
अभ्यद्रवन्त संक्रुद्धास्तदद्भुतमिवाभवत् ॥ ४९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

## चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

अर्जुनस्य भूरिश्रवःप्रभृतिभिरष्टभिर्युद्धम् ॥ १ ॥

सञ्जय उवाच ।
तावकास्त्वभिसंप्रेक्ष्य वृष्ण्यन्धककुरूद्वहौ ।
सत्वरास्तौ जिघांसन्तस्तथैव विजयः परान् ॥ १
सुवर्णचित्रैर्वैयाघ्रैः स्वनवद्भिर्महारथैः ।

---

निर्देहान् निकृत्तावयवान् ॥ २८ ॥ नखमांसान्तरे इषुभिराविध्यदिति पूर्वेणान्वयः। संधिरार्षः। अयं श्लोकः झ. पाठ एवास्ति ॥ ३१ ॥ क्रोशमात्रे सैधवतोर्थात् ॥ ३६ ॥ त्र्यधिकशततमोऽध्यायः ॥

वैयाघ्रैर्व्याघ्रचर्मचित्रैः ॥ २ ॥

दीपयन्तो दिशः सर्वा ज्वलद्भिरिव पावकैः ॥ २
रुक्मपुङ्खैश्च दुष्प्रेक्ष्यैः कार्मुकैः पृथिवीपते ।
कूजद्भिरतुलान्नादान्रोषितैरुरगैरिव ॥ ३
भूरिश्रवाः शलः कर्णो वृषसेनो जयद्रथः ।
कृपश्च मद्रराजश्च द्रौणिश्च रथिनां वरः ॥ ४
ते पिबन्त इवाकाशमश्वैरष्टौ महारथाः ।
व्यराजयन्दश दिशो वैयाघ्रैर्हेमचन्द्रकैः ॥ ५
ते दंशिताः सुसंरब्धा रथैर्मेघौघनिःस्वनैः ।
समावृण्वन्दश दिशः पार्थस्य निशितैः शरैः॥ ६
कौलूतका हयाश्चित्रा वहन्तस्तान्महारथान् ।
व्यशोभन्त तदा शीघ्रा दीपयन्तो दिशो दश ॥ ७
आजानेयैर्महावेगैर्नानादेशसमुत्थितैः ।
पार्वतीयैर्नदीजैश्च सैन्धवैश्च हयोत्तमैः ॥ ८
कुरुयोधवरा राजंस्तव पुत्रं परीप्सवः ।
धनञ्जयरथं शीघ्रं सर्वतः समुपाद्रवन् ॥ ९
ते प्रगृह्य महाशङ्खान्दध्मुः पुरुषसत्तमाः ।
पूरयन्तो दिवं राजन्पृथिवीं च ससागराम् ॥ १०
तथैव दध्मतुः शङ्खौ वासुदेवधनञ्जयौ ।
प्रवरौ सर्वदेवानां सर्वशङ्खवरौ भुवि ॥ ११
देवदत्तं च कौन्तेयः पाञ्चजन्यं च केशवः ।
शब्दस्तु देवदत्तस्य धनञ्जयसमीरितः ॥ १२
पृथिवीं चान्तरिक्षं च दिशश्चैव समावृणोत् ।
तथैव पाञ्चजन्योऽपि वासुदेवसमीरितः ॥ १३
सर्वशब्दानतिक्रम्य पूरयामास रोदसी ।
तस्मिंस्तथा वर्तमाने दारुणे नादसंकुले ॥ १४
भीरूणां त्रासजनने शूराणां हर्षवर्धने ।
प्रवादितासु भेरीषु झर्झरेष्वानकेषु च ॥ १५
मृदङ्गेष्वपि राजेन्द्र वाद्यमानेष्वनेकशः ।
महारथसमाख्याता दुर्योधनहितैषिणः ॥ १६
अमृष्यमाणास्तं शब्दं क्रुद्धाः परमधन्विनः ।
कर्णादयो महेष्वासास्त्वत्सैन्यपरिरक्षिणः ॥ १७
अमर्षिता महाशङ्खान्दध्मुर्वीरा महारथाः ।
कृते प्रतिकरिष्यन्तः केशवस्यार्जुनस्य च ॥ १८
बभूव तव तत्सैन्यं शङ्खशब्दे समीरिते ।
उद्विग्नरथनागाश्वमस्वस्थमिव चाभिभो ॥ १९
तत्प्रहृष्टजनाबाधं भेरीशङ्खनिनादितम् ।
बभूव भृशमुद्विग्नं निर्घातैरिव संवृतम् ॥ २०
स शब्दः सुमहान्राजन्दिशः सर्वा व्यनादयत् ।
त्रासयामास तत्सैन्यं युगान्त इव संभृतः ॥ २१
ततो दुर्योधनोऽष्टौ च राजानस्ते महारथाः ।
जयद्रथस्य रक्षार्थं पाण्डवं पर्यवारयन् ॥ २२
ततो द्रौणिस्त्रिसप्तत्या वासुदेवमताडयत् ।
अर्जुनं च त्रिभिर्भल्लैर्ध्वजमश्वांश्च पञ्चभिः ॥ २३
तमर्जुनः पृषत्कानां शतैः षड्भिरताडयत् ।
अत्यर्थमिव संक्रुद्धः प्रतिविद्धे जनार्दने ॥ २४
कर्णं च दशभिर्विद्ध्वा वृषसेनं त्रिभिस्तथा ।
शल्यस्य सशरं चापं मुष्टौ चिच्छेद वीर्यवान् ॥ २५
गृहीत्वा धनुरन्यत्तु शल्यो विव्याध पाण्डवम् ।
भूरिश्रवास्त्रिभिर्बाणैर्हेमपुङ्खैः शिलाशितैः ॥ २६
कर्णो द्वात्रिंशता चैव वृषसेनश्च सप्तभिः ।
जयद्रथस्त्रिसप्तत्या कृपश्च दशभिः शरैः ।
मद्रराजश्च दशभिर्विव्यधुः फल्गुनं रणे ॥ २७
ततः शराणां षष्ट्या तु द्रौणिः पार्थमवाकिरत् ।
वासुदेवं च विंशत्या पुनः पार्थं च पञ्चभिः ॥ २८
प्रहसंस्तु नरव्याघ्रः श्वेताश्वः कृष्णसारथिः ।
प्रत्यविध्यत्स तान्सर्वान्दर्शयन्पाणिलाघवम् ॥ २९
कर्णं द्वादशभिर्विद्ध्वा वृषसेनं त्रिभिः शरैः ।
शल्यस्य सशरं चापं मुष्टिदेशे व्यकृन्तत ॥ ३०
सौमदत्तिं त्रिभिर्विद्ध्वा शल्यं च दशभिः शरैः ।
शितैरग्निशिखाकारैर्द्रौणिं विव्याध चाष्टभिः॥ ३१
गौतमं पञ्चविंशत्या सैन्धवं च शतेन ह ।
पुनर्द्रौणिं च सप्तत्या शराणां सोऽभ्यताडयत् ॥ ३२
भूरिश्रवास्तु संक्रुद्धः प्रतोदं चिच्छिदे हरेः ।
अर्जुनं च त्रिसप्तत्या बाणानामाजघान ह ॥ ३३

चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

---

कौलूतकाः कुलूतदेशजाः पार्वतीयसमानलक्षणाः ॥ ७ ॥
आजानेयैः कुलीनैः । नदीजैर्नदीतीरजैः ॥ ८ ॥

ततः शरशतैस्तीक्ष्णैस्तानरीन्श्वेतवाहनः । प्रत्यषेधद्द्रुतं क्रुद्धो महावातो घनानिव ॥ ३४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

## पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

सञ्जयेन रथानां ध्वजवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
ध्वजान्बहुविधाकारान्भ्राजमानानतिश्रिया ।
पार्थानां मामकानां च तान्ममाचक्ष्व सञ्जय ॥ १
सञ्जय उवाच ।
ध्वजान्बहुविधाकाराञ्शृणु तेषां महात्मनाम् ।
रूपतो वर्णतश्चैव नामतश्च निबोध मे ॥ २
तेषां तु रथमुख्यानां रथेषु विविधा ध्वजाः ।
प्रत्यदृश्यन्त राजेन्द्र ज्वलिता इव पावकाः ॥ ३
काञ्चनाः काञ्चनापीडाः काञ्चनस्रगलङ्कृताः ।
काञ्चनानीव शृङ्गाणि काञ्चनस्य महागिरेः ॥ ४
अनेकवर्णा विविधा ध्वजाः परमशोभनाः ।
ते ध्वजाः संवृतास्तेषां पताकाभिः समन्ततः ।
नानावर्णविरागाभिः शुशुभुः सर्वतो वृताः ॥ ५
पताकाश्च ततस्तास्तु श्वसनेन समीरिताः ।
नृत्यमाना व्यदृश्यन्त रङ्गमध्ये विलासिकाः ॥ ६
इन्द्रायुधसवर्णाभाः पताका भरतर्षभ ।
दोधूयमाना रथिनां शोभयन्ति महारथान् ॥ ७
सिंहलाङ्गूल उग्रास्यो ध्वजो वानरलक्षणः ।
धनञ्जयस्य संग्रामे प्रत्यदृश्यत भारत ॥ ८
स वानरध्वजो राजन्पताकाभिरलङ्कृतः ।
त्रासयामास तत्सैन्यं ध्वजो गाण्डीवधन्वनः ॥ ९
तथैव सिंहलाङ्गूलं द्रोणपुत्रस्य भारत
ध्वजाग्रं समपश्याम बालसूर्यसमप्रभम् ॥ १०
काञ्चनं पवनोद्धूतं शक्रध्वजसमप्रभम् ।
नन्दनं कौरवेन्द्राणां द्रौणेर्लक्ष्म समुच्छ्रितम् ॥ ११
हस्तिकक्ष्या पुनर्हैमी बभूवाधिरथेर्ध्वजः ।
आहवे खं महाराज ददृशे पूरयन्निव ॥ १२
पताकी काञ्चनः स्रग्वी ध्वजः कर्णस्य संयुगे ।
नृत्यतीव रथोपस्थे श्वसनेन समीरितः ॥ १३
आचार्यस्य तु पाण्डूनां ब्राह्मणस्य तपस्विनः ।
गोवृषो गौतमस्यासीत्कृपस्य सुपरिष्कृतः ॥ १४
स तेन भ्राजते राजन्गोवृषेण महारथः ।
त्रिपुरघ्नरथो यद्वद्गोवृषेण विराजता ॥ १५
मयूरो वृषसेनस्य काञ्चनो मणिरत्नवान् ।
व्याहरिष्यन्निवातिष्ठत्सेनाग्रमुपशोभयन् ॥ १६
तेन तस्य रथो भाति मयूरेण महात्मनः ।
यथा स्कन्दस्य राजेन्द्र मयूरेण विराजता ॥ १७
मद्रराजस्य शल्यस्य ध्वजाग्रेऽग्निशिखामिव ।
सौवर्णीं प्रतिपश्याम सीतामप्रतिमां शुभाम् ॥ १८
सा सीता भ्राजते तस्य रथमास्थाय मारिष ।
सर्वबीजविरूढेव यथा सीता श्रिया वृता ॥ १९
वराहः सिन्धुराजस्य राजतोऽभिविराजते ।
ध्वजाग्रे लोहिताङ्गाभो हेमजालपरिष्कृतः ॥ २०
शुशुभे केतुना तेन राजतेन जयद्रथः ।
यथा देवासुरे युद्धे पुरा पूषा स्म शोभते ॥ २१
सौमदत्तेः पुनर्यूपो यज्ञशीलस्य धीमतः ।
ध्वजः सूर्य इवाभाति सोमश्चात्र प्रदृश्यते ॥ २२
स यूपः काञ्चनो राजन्सौमदत्तेर्विराजते ।
राजसूये मखश्रेष्ठे यथा यूपः समुच्छ्रितः ॥ २३
शलस्य तु महाराज राजतो द्विरदो महान्
केतुः काञ्चनचित्राङ्गैर्मयूरैरुपशोभितः ॥ २४
स केतुः शोभयामास सैन्यं ते भरतर्षभ ।
यथा श्वेतो महानागो देवराजचमूं तथा ॥ २५
नागो मणिमयो राज्ञो ध्वजः कनकसंवृतः ।

रूपमाकारः ॥ २ ॥ ध्वजाग्रं ध्वजमुख्यम् ॥१०॥ काञ्चनम् काञ्चनमयम् ॥ ११ ॥ व्याहरिष्यन्वदिष्यन् ॥ १६ ॥

किङ्किणीशतसंह्रादो भ्राजंश्चित्रो रथोत्तमे ॥ २६
व्यभ्राजत भृशं राजन्पुत्रस्तव विशांपते ।
ध्वजेन महता सङ्ख्ये कुरूणामृषभस्तदा ॥ २७
नवैते तव वाहिन्यामुच्छ्रिताः परमध्वजाः ।
व्यदीपयंस्ते पृतनां युगान्तादित्यसन्निभाः ॥ २८
दशमस्त्वर्जुनस्यासीदेक एव महाकपिः ।
अदीप्यतार्जुनो येन हिमवानिव शंभुना ॥ २९
ततश्चित्राणि शुभ्राणि सुमहान्ति महारथाः ।
कार्मुकाण्याददुस्तूर्णमर्जुनार्थे परंतपाः ॥ ३०
तथैव धनुरायच्छत्पार्थः शत्रुविनाशनः ।
गाण्डीवं दिव्यकर्मा तद्राजन्दुर्मन्त्रिते तव ॥ ३१
तवापराधाद्राजानो निहता बहुशो युधि ।
नानादिग्भ्यः समाहूताः सहयाः सरथद्विपाः ३२
तेषामासीद्व्यतिक्षेपो गर्जतामितरेतरम् ।
दुर्योधनमुखानां च पाण्डूनामृषभस्य च ॥ ३३
तत्राद्भुतं परं चक्रे कौन्तेयः कृष्णसारथिः ।
यदेको बहुभिः सार्धं समागच्छदभीतवत् ॥ ३४
अशोभत महाबाहुर्गाण्डीवं विक्षिपन्धनुः ।
जिगीषुस्तान्नरव्याघ्रो जिघांसुश्च जयद्रथम् ॥ ३५
तत्रार्जुनो नरव्याघ्रः शरैर्मुक्तैः सहस्रशः ।
अदृश्यांस्तावकान्योधान्प्रचक्रे शत्रुतापनः ॥ ३६
ततस्तेऽपि नरव्याघ्राः पार्थं सर्वे महारथाः ।
अदृश्यं समरे चक्रुः सायकौघैः समन्ततः ॥ ३७
संवृते नरसिंहैस्तु कुरूणामृषभेऽर्जुने ।
महानासीत्समुद्धूतस्तस्य सैन्यस्य निःस्वनः ॥ ३८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

## षडधिकशततमोऽध्यायः ॥ १०६ ॥

द्रोणयुधिष्ठिरयोर्युद्धम् ॥ १ ॥

धृतराष्ट्र उवाच ।
अर्जुने सैन्धवं प्राप्ते भारद्वाजेन संवृताः ।
पाञ्चालाः कुरुभिः सार्धं किमकुर्वत सञ्जय ॥ १
सञ्जय उवाच
अपराह्णे महाराज संग्रामे रोमहर्षणे ।
पाञ्चालानां कुरूणां च द्रोणद्यूतमवर्तत ॥ २
पाञ्चाला हि जिघांसन्तो द्रोणं संहृष्टचेतसः ।
अभ्यमुञ्चन्त गर्जन्तः शरवर्षाणि मारिष ॥ ३
ततस्तु तुमुलस्तेषां संग्रामोऽवर्ततात्भुतः ।
पाञ्चालानां कुरूणां च घोरो देवासुरोपमः ॥ ४
सर्वे द्रोणरथं प्राप्य पाञ्चालाः पाण्डवैः सह ।
तदनीकं बिभित्सन्तो महास्त्राणि व्यदर्शयन् ॥ ५
द्रोणस्य रथपर्यन्तं रथिनो रथमास्थिताः ।
कम्पयन्तोऽभ्यवर्तन्त वेगमास्थाय मध्यमम् ॥ ६
तमभ्ययाद्बृहत्क्षत्रः केकयानां महारथः ।
विमुञ्चन्निशितान्बाणान्महेन्द्राशनिसन्निभान् ॥ ७
तं तु प्रत्युद्ययौ शीघ्रं क्षेमधूर्तिर्महायशाः ।
विमुञ्चन्निशितान्बाणाञ्शतशोऽथ सहस्रशः ॥ ८
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः ।
त्वरितोऽभ्यद्रवद्द्रोणं महेन्द्रमिव शम्बरः ॥ ९
तमापतन्तं सहसा व्यादितास्यमिवान्तकम् ।
वीरधन्वा महेष्वासस्त्वरमाणः समभ्ययात् ॥ १०
युधिष्ठिरं महाराजं जिगीषुं समवस्थितम् ।
सहानीकं ततो द्रोणो न्यवारयत वीर्यवान् ॥ ११
नकुलं कुशलं युद्धे पराक्रान्तं पराक्रमी ।
अभ्यगच्छत्समायान्तं विकर्णस्ते सुतः प्रभो ॥ १२
सहदेवं तथाऽऽयान्तं दुर्मुखः शत्रुकर्शनः ।
शरैरनेकसाहस्रैः समवाकिरदाशुगैः ॥ १३
सात्यकिं तु नरव्याघ्रं व्याघ्रदत्तस्त्ववारयत् ।
शरैः सुनिशितैस्तीक्ष्णैः कम्पयन्वै मुहुर्मुहुः ॥ १४

व्यतिक्षेपः अन्योन्याभिघातः ॥ ३३ ॥ पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

द्रोणे युद्धमवर्तत क. ङ. पाठः । घोरं युद्धमवर्तत इति ट. पाठः ॥ २ ॥ कम्पयन्तो भुवमिति शेषः ॥ ६ ॥

द्रौपदेयान्नरव्याघ्रान्मुञ्चतः सायकोत्तमान् ।
संरब्धान्रथिनः श्रेष्ठान्सौमदत्तिरवारयत् ॥ १५
भीमसेनं तदा क्रुद्धं भीमरूपो भयानकः ।
प्रत्यवारयदायान्तमार्श्यशृङ्गिर्महाबलः ॥ १६
तयोः समभवद्युद्धं नरराक्षसयोर्मृधे ।
यादृगेव पुरावृत्तं रामरावणयोर्नृप ॥ १७
ततो युधिष्ठिरो द्रोणं नवत्या नतपर्वणाम् ।
आजघ्ने भरतश्रेष्ठः सर्वमर्मसु भारत ॥ १८
तं द्रोणः पञ्चविंशत्या निजघान स्तनान्तरे ।
रोषितो भरतश्रेष्ठ कौन्तेयेन यशस्विना ॥ १९
अदृश्यं समरे चक्रे राजानं सायकोत्तमैः ।
साश्वसूतध्वजं द्रोणः पश्यतां सर्वधन्विनाम् ॥ २०
ताञ्शरान्द्रोणमुक्तांस्तु शरवर्षेण पाण्डवः ।
अवारयत धर्मात्मा दर्शयन्पाणिलाघवम् ॥ २१
ततो द्रोणो भृशं क्रुद्धो धर्मराजस्य संयुगे ।
चिच्छेद समरे धन्वी धनुस्तस्य महात्मनः ॥ २२
अथैनं छिन्नधन्वानं त्वरमाणो महारथः ।
शरैरनेकसाहस्रैः पूरयामास सर्वतः ॥ २३
अदृश्यं वीक्ष्य राजानं भारद्वाजस्य सायकैः ।
सर्वभूतान्यमन्यन्त हतमेव युधिष्ठिरम् ॥ २४
केचिच्चैनममन्यन्त तथैव विमुखीकृतम् ।
हृतो राजेति राजेन्द्र ब्राह्मणेन महात्मना ॥ २५
स कृच्छ्रं परमं प्राप्तो धर्मराजो युधिष्ठिरः ।
त्यक्त्वा तत्कार्मुकं छिन्नं भारद्वाजेन संयुगे ।
आददेऽन्यद्धनुर्दिव्यं भास्वरं वेगवत्तरम् ॥ २६
ततस्तान्सायकांस्तत्र द्रोणमुक्तान्सहस्रशः ।
चिच्छेद समरे वीरस्तदद्भुतमिवाभवत् ॥ २७
छित्त्वा तु ताञ्शरान्राजन्क्रोधसंरक्तलोचनः ।
शक्तिं जग्राह समरे गिरीणामपि दारिणीम् ।
स्वर्णदण्डां महाघोरामष्टघण्टां भयावहाम् ॥ २८
समुत्क्षिप्य च तां हृष्टो ननाद बलवद्बली ।
नादेन सर्वभूतानि त्रासयन्निव भारत ॥ २९
शक्तिं समुद्यतां दृष्ट्वा धर्मराजेन संयुगे ।
स्वस्ति द्रोणाय सहसा सर्वभूतान्यथाब्रुवन् ॥ ३०
सा राजभुजनिर्मुक्ता निर्मुक्तोरगसन्निभा ।
प्रज्वालयन्ती गगनं दिशः सप्रदिशस्तथा ।
द्रोणान्तिकमनुप्राप्ता दीप्तास्या पन्नगी यथा ॥ ३१
तामापतन्तीं सहसा दृष्ट्वा द्रोणो विशांपते ।
प्रादुश्चक्रे ततो ब्राह्ममस्त्रमस्त्रविदां वरः ॥ ३२
तदस्त्रं भस्मसात्कृत्वा तां शक्तिं घोरदर्शनाम् ।
जगाम स्यन्दनं तूर्णं पाण्डवस्य यशस्विनः ॥ ३३
ततो युधिष्ठिरो राजा द्रोणास्त्रं तत्समुद्यतम् ।
अशामयन्महाप्राज्ञो ब्रह्मास्त्रेणैव मारिष ॥ ३४
विद्ध्वा तं च रणे द्रोणं पञ्चभिर्नतपर्वभिः ।
क्षुरप्रेण सुतीक्ष्णेन चिच्छेदास्य महद्धनुः ॥ ३५
तदपास्य धनुश्छिन्नं द्रोणः क्षत्रियमर्दनः ।
गदां चिक्षेप सहसा धर्मपुत्राय मारिष ॥ ३६
तामापतन्तीं सहसा गदां दृष्ट्वा युधिष्ठिरः ।
गदामेवाग्रहीत्क्रुद्धश्चिक्षेप च परंतप ॥ ३७
ते गदे सहसा मुक्ते समासाद्य परस्परम् ।
संघर्षात्पावकं मुक्त्वा समेयातां महीतले ॥ ३८
ततो द्रोणो भृशं क्रुद्धो धर्मराजस्य मारिष ।
चतुर्भिर्निशितैस्तीक्ष्णैर्हयाञ्जघ्ने शरोत्तमैः ॥ ३९
चिच्छेदैकेन भल्लेन धनुश्चेन्द्रध्वजोपमम् ।
केतुमेकेन चिच्छेद पाण्डवं चार्दयत्त्रिभिः ॥ ४०
हताश्वात्तु रथात्तूर्णमवप्लुत्य युधिष्ठिरः ।
तस्थावूर्ध्वभुजो राजा व्यायुधो भरतर्षभ ॥ ४१
विरथं तं समालोक्य व्यायुधं च विशेषतः ।
द्रोणो व्यमोहयच्छत्रून्सर्वसैन्यानि चाभिभो ॥ ४२
मुञ्चंश्चेषुगणांस्तीक्ष्णाँल्लघुहस्तो दृढव्रतः ।
अभिदुद्राव राजानं सिंहो मृगमिवोल्बणः ॥ ४३
तमभिद्रुतमालोक्य द्रोणेनामित्रघातिना ।
सुमहाञ्शब्दः पाण्डूनां समजायत ॥ ४४
हृतो राजा हृतो राजा भारद्वाजेन मारिष ।
इत्यासीत्सुमहाञ्शब्दः पाण्डुसैन्यस्य सर्वतः ॥ ४५

सौमदत्तिः शलः ॥ १५ ॥ हृतो राजेति. अमन्यन्तेत्यनुषङ्गः ॥ २५ ॥ षडधिकशततमोऽध्यायः ॥ १०६ ॥

ततस्त्वरितमारुह्य सहदेवरथं नृपः। अपायाज्जवनैरश्वैः कुन्तीपुत्रो युधिष्ठिरः॥ ४६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे षडधिकशततमोऽध्यायः॥ १०६॥

## सप्ताधिकशततमोऽध्यायः॥ १०७॥

संकुलयुद्धवर्णनम्॥ १॥

सञ्जय उवाच।
बृहत्क्षत्रमथायान्तं केकयं दृढविक्रमम्।
क्षेमधूर्तिर्महाराज विव्याधोरसि मार्गणैः॥ १
बृहत्क्षत्रस्तु तं राजा नवत्या नतपर्वणाम्।
आजघ्ने त्वरितो राजन्द्रोणानीकबिभित्सया॥ २
क्षेमधूर्तिस्तु संक्रुद्धः केकयस्य महात्मनः।
धनुश्चिच्छेद भल्लेन पीतेन निशितेन ह॥ ३
अथैनं छिन्नधन्वानं शरेणानतपर्वणा।
विव्याध समरे तूर्णं प्रवरं सर्वधन्विनाम्॥ ४
अथान्यद्धनुरादाय बृहत्क्षत्रो हसन्निव।
व्यश्वसूतरथं चक्रे क्षेमधूर्तिं महारथम्॥ ५
ततोऽपरेण भल्लेन पीतेन निशितेन च।
जहार नृपतेः कायाच्छिरोऽज्वलितकुण्डलम्॥ ६
तच्छिन्नं सहसा तस्य शिरः कुञ्चितमूर्धजम्।
सकिरीटं महीं प्राप्य बभौ ज्योतिरिवाम्बरात्॥ ७
तं निहत्य रणे हृष्टो बृहत्क्षत्रो महारथः।
सहसाऽभ्यपतत्सैन्यं तावकं पार्थकारणात्॥ ८
धृष्टकेतुं तथाऽऽयान्तं द्रोणहेतोः पराक्रमी।
वीरधन्वा महेष्वासो वारयामास भारत॥ ९
तौ परस्परमासाद्य शरदंष्ट्रौ तरस्विनौ।
शरैरनेकसाहस्रैरन्योन्यमभिजघ्नतुः॥ १०
तावुभौ नरशार्दूलौ युयुधाते परस्परम्।
महावने तीव्रमदौ वारणाविव यूथपौ॥ ११
गिरिगह्वरमासाद्य शार्दूलाविव रोषितौ।
युयुधाते महावीर्यौ परस्परजिघांसया॥ १२
तद्युद्धमासीत्तुमुलं प्रेक्षणीयं विशांपते।
सिद्धचारणसङ्घानां विस्मयाद्भुतदर्शनम्॥ १३
वीरधन्वा ततः क्रुद्धो धृष्टकेतोः शरासनम्।
द्विधा चिच्छेद भल्लेन प्रहसन्निव भारत॥ १४
तदुत्सृज्य धनुश्छिन्नं चेदिराजो महारथः।
शक्तिं जग्राह विपुलां हेमदण्डामयस्मयीम्॥ १५
तां तु शक्तिं महावीर्यां दोर्भ्यामायम्य भारत।
चिक्षेप सहसा यत्तो वीरधन्वरथं प्रति॥ १६
तया तु वीरघातिन्या शक्त्या त्वभिहतो भृशम्।
निर्भिन्नहृदयस्तूर्णं निपपात रथान्महीम्॥ १७
तस्मिन्विनिहते वीरे त्रैगर्तानां महारथे।
बलं तेऽभज्यत विभो पाण्डवेयैः समन्ततः॥ १८
सहदेवे ततः षष्टिं सायकान्दुर्मुखोऽक्षिपत्।
ननाद च महानादं तर्जयन्पाण्डवं रणे॥ १९
माद्रेयस्तु ततः क्रुद्धो दुर्मुखं च शितैः शरैः।
भ्राता भ्रातरमायत्तो विव्याध प्रहसन्निव॥ २०
तं रणे रभसं दृष्ट्वा सहदेवं महाबलम्।
दुर्मुखो नवभिर्बाणैस्ताडयामास भारत॥ २१
दुर्मुखस्य तु भल्लेन छित्त्वा केतुं महाबलः।
जघान चतुरो वाहांश्चतुर्भिर्निशितैः शरैः॥ २२
अथापरेण भल्लेन पीतेन निशितेन ह।
चिच्छेद सारथेः कायाच्छिरो ज्वलितकुण्डलम्॥ २३
क्षुरप्रेण च तीक्ष्णेन कौरव्यस्य महद्धनुः।
सहदेवो रणे छित्त्वा तं च विव्याध पञ्चभिः॥ २४
हताश्वं तु रथं त्यक्त्वा दुर्मुखो विमनास्तदा।
आरुरोह रथं राजन्निरमित्रस्य भारत॥ २५
सहदेवस्ततः क्रुद्धो निरमित्रं महाहवे।
जघान पृथुधारेण भल्लेन परवीरहा॥ २६
स पपात रथोपस्थान्निरमित्रो जनेश्वरः।
त्रिगर्तराजस्य सुतो व्यथयंस्तव वाहिनीम्॥ २७
तं तु हत्वा महाबाहुः सहदेवो व्यरोचत।
यथा दाशरथी रामः खरं हत्वा महाबलम्॥ २८
हाहाकारो महानासीत्त्रिगर्तानां जनेश्वर।

राजपुत्रं हतं दृष्ट्वा निरमित्रं महारथम् ॥ २९
नकुलस्ते सुतं राजन्विकर्णं पृथुलोचनम् ।
मुहूर्ताज्जितवाँल्लोके तदद्भुतमिवाभवत् ॥ ३०
सात्यकिं व्याघ्रदत्तस्तु शरैः सन्नतपर्वभिः
चक्रेऽदृश्यं साश्वसूतं सध्वजं पृतनान्तरे ॥ ३१
तान्निवार्य शराञ्शूरः शैनेयः कृतहस्तवत् ।
साश्वसूतध्वजं बाणैर्व्याघ्रदत्तमपातयत् ॥ ३२
कुमारे निहते तस्मिन्मागधस्य सुते प्रभो ।
मागधाः सर्वतो यत्ता युयुधानमुपाद्रवन् ॥ ३३
विसृजन्तः शरांश्चैव तोमरांश्च सहस्रशः ।
भिण्डिपालांस्तथा प्रासान्मुद्गरान्मुसलानपि ।
अयोधयन्रणे शूराः सात्वतं युद्धदुर्मदम् ॥ ३४
तांस्तु सर्वान्स बलवान्सात्यकिर्युद्धदुर्मदः ।
नातिकृच्छ्राद्धसन्नेव विजिग्ये पुरुषर्षभः ॥ ३५
मागधान्द्रवतो दृष्ट्वा हतशेषान्समन्ततः
बलं तेऽभज्यत विभो युयुधानशरार्दितम् ॥ ३६
नाशयित्वा रणे सैन्यं त्वदीयं तु समन्ततः ।
विधुन्वानो धनुःश्रेष्ठं व्यभ्राजत महायशाः ॥ ३७
भज्यमानं बलं राजन्सात्वतेन महात्मना ।
नाभ्यवर्तत युद्धाय त्रासितं दीर्घबाहुना ॥ ३८
ततो द्रोणो भृशं क्रुद्धः सहसोद्वृत्य चक्षुषी ।
सात्यकिं सत्यकर्माणं स्वयमेवाभिदुद्रुवे ॥ ३९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

## अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

द्रौपदेयैः शलवधः ॥ १ ॥ भीमसेनेनालम्बुसपराजयः ॥ २ ॥

सञ्जय उवाच ।
द्रौपदेयान्महेष्वासान्सौमदत्तिर्महायशाः ।
एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ॥ १
ते पीडिता भृशं तेन रौद्रेण सहसा विभो ।
प्रमूढा नैव विविदुर्मृधे कृत्यं स्म किंचन ॥ २
नाकुलिश्च शतानीकः सौमदत्तिं नरर्षभम् ।
द्वाभ्यां विद्ध्वाऽनदद्धृष्टः शराभ्यां शत्रुकर्शनः ॥३
तथेतरे रणे यत्तास्त्रिभिस्त्रिभिरजिह्मगैः ।
विव्यधुः समरे तूर्णं सौमदत्तिममर्षणम् ॥ ४
स तान्प्रति महाराज पञ्च चिक्षेप सायकान् ।
एकैकं हृदि चाजघ्ने एकैकेन महायशाः ॥ ५
ततस्ते भ्रातरः पञ्च शरैर्विद्धा महात्मना ।
परिवार्य रणे वीरं विव्यधुः सायकैर्भृशम् ॥ ६
आर्जुनिस्तु हयांस्तस्य चतुर्भिर्निशितैः शरैः ।
प्रेषयामास संक्रुद्धो यमस्य सदनं प्रति ॥ ७
भैमसेनिर्धनुश्छित्त्वा सौमदत्तेर्महात्मनः ।
ननाद बलवन्नादं विव्याध च शितैः शरैः ॥ ८
यौधिष्ठिरिर्ध्वजं तस्य छित्त्वा भूमावपातयत् ।
नाकुलिश्चाथ यन्तारं रथनीडादपाहरत् ॥ ९
साहदेविस्तु तं ज्ञात्वा भ्रातृभिर्विमुखीकृतम्
क्षुरप्रेण शिरो राजन्निचकर्त महात्मनः ॥ १०
तच्छिरो न्यपतद्भूमौ तपनीयविभूषितम् ।
अभासयद्रणोद्देशं बालसूर्यसमप्रभम् ॥ ११
सौमदत्तेः शिरो दृष्ट्वा निपतत्तन्महात्मनः ।
वित्रस्तास्तावका राजन्प्रदुद्रुवुरनेकधा ॥ १२
अलम्बुसस्तु समरे भीमसेनं महाबलम् ।
योधयामास संक्रुद्धो लक्ष्मणं रावणिर्यथा ॥ १३
संप्रयुद्धौ रणे दृष्ट्वा तावुभौ नरराक्षसौ ।
विस्मयः सर्वभूतानां भयं चासीत्सुदारुणम् ॥ १४
आर्श्यशृङ्गिं ततो भीमो नवभिर्निशितैः शरैः ।
विव्याध प्रहसन्राजन्राक्षसेन्द्रममर्षणम् ॥ १५
तद्रक्षः समरे विद्धं कृत्वा नादं भयावहम् ।
अभ्यद्रवत्ततो भीमं ये च तस्य पदानुगाः ॥ १६
स भीमं पञ्चभिर्विद्ध्वा शरैः सन्नतपर्वभिः ।
भैमान्परिजघानाशु रथांस्त्रिंशतमाहवे ।

सौमदत्तेः शलस्य ॥ १२ ॥

पुनश्चतुःशतान्हत्वा भीमं विव्याध पत्रिणा ॥ १७
सोऽतिविद्धस्तथा भीमो राक्षसेन महाबलः ।
निपसाद रथोपस्थे मूर्च्छयाऽभिपरिप्लुतः ॥ १८
प्रतिलभ्य ततः संज्ञां मारुतिः क्रोधमूर्च्छितः ।
विकृष्य कार्मुकं घोरं भारसाधनमुत्तमम् ।
अलम्बुसं शरैस्तीक्ष्णैरर्दयामास सर्वतः ॥ १९
स विद्धो बहुभिर्बाणैर्नीलाञ्जनचयोपमः ।
शुशुभे सर्वतो राजन्प्रफुल्ल इव किंशुकः ॥ २०
स वध्यमानः समरे भीमचापच्युतैः शरैः ।
स्मरन्भ्रातृवधं चैव पाण्डवेन महात्मना ।
घोरं रूपमथो कृत्वा भीमसेनमभाषत ॥ २१
तिष्ठेदानीं रणे पार्थ पश्य मेऽद्य पराक्रमम् ॥ २२
बको नाम सुदुर्बुद्धे राक्षसप्रवरो बली ।
परोक्षं मम तद्वृत्तं यद्भ्राता मे हतस्त्वया ॥ २३
सञ्जय उवाच ।
एवमुक्त्वा ततो भीममन्तर्धानं गतस्तदा ।
महता शरवर्षेण भृशं तं समवाकिरत् ॥ २४
भीमस्तु समरे राजन्नदृश्ये राक्षसे तदा ।
आकाशं पूरयामास शरैः सन्नतपर्वभिः ॥ २५
स वध्यमानो भीमेन निमेषाद्रथमास्थितः ।
जगाम धरणीं चैव क्षुद्रः खं सहसाऽगमत् ॥ २६
उच्चावचानि रूपाणि चकार सुबहूनि च ।
अणुर्बृहत्पुनः स्थूलो नादान्मुञ्चन्निवाम्बुदः ॥२७
[निपेतुर्गगनाच्चैव शरधाराः सहस्रशः ।
शक्तयः कणपाः प्रासाः शूलपट्टसतोमराः ॥ २८
शतघ्न्यः परिघाश्चैव भिण्डिपालाः परश्वथाः ।
शिलाः खड्गा गुडाश्चैव ऋष्टीर्वज्राणि चैव ह ॥ २९
सा राक्षसविसृष्टा तु शस्त्रवृष्टिः सुदारुणा ।
जघान पाण्डुपुत्रस्य सैनिकान्रणमूर्धनि ॥ ३०]
उच्चावचास्तथा वाचो व्याजहार समन्ततः ।
तेन पाण्डवसैन्यानां मृदिता युधि वारणाः ॥ ३१
हयाश्च बहवो राजन्पत्तयश्च तथा पुनः ।
रथेभ्यो रथिनः पेतुस्तस्य नुन्नाः स सायकैः ॥ ३२
शोणितोदां रथावर्तां हस्तिग्राहसमाकुलाम् ।
छत्रहंसां कर्दमिनीं बाहुपन्नगसंकुलाम् ॥ ३३
नदीं प्रवर्तयामास रक्षोगणसमाकुलाम् ।
वहन्तीं बहुधा राजंश्चेदिपाञ्चालसृञ्जयान् ॥ ३४
तं तथा समरे राजन्विचरन्तमभीतवत् ।
पाण्डवा भृशसंविग्नाः प्रापश्यंस्तस्य विक्रमम् ॥ ३५
तावकानां तु सैन्यानां प्रहर्षः समजायत ।
वादित्रनिनदश्चोग्रः सुमहान्रोमहर्षणः ॥ ३६
तं श्रुत्वा निनदं घोरं तव सैन्यस्य पाण्डवः ।
नामृष्यत यथा नागस्तलशब्दं समीरितम् ॥ ३७
ततः क्रोधाभिताम्राक्षो निर्दहन्निव पावकः ।
संदधे त्वाष्ट्रमस्त्रं स स्वयं त्वष्टेव मारुतिः ॥ ३८
ततः शरसहस्राणि प्रादुरासन्समन्ततः ।
तैः शरैस्तव सैन्यस्य विद्रवः सुमहानभूत् ॥ ३९
तदस्त्रं प्रेरितं तेन भीमसेनेन संयुगे ।
राक्षसस्य महामायां हत्वा राक्षसमार्दयत् ॥ ४०
स वध्यमानो बहुधा भीमसेनेन राक्षसः ।
संत्यज्य समरे भीमं द्रोणानीकमुपाद्रवत् ॥ ४१
तस्मिंस्तु निर्जिते राजन्राक्षसेन्द्रे महात्मना ।
अनादयन्सिंहनादैः पाण्डवाः सर्वतो दिशम् ॥ ४२
अपूजयन्मारुतिं च संहृष्टास्ते महाबलम् ।
प्रह्रादमिव दैतेया यथा शक्रं मरुद्गणाः ॥ ४३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

## नवाधिकशततमोऽध्यायः ॥ १०९ ॥

घटोत्कचेनालम्बुसवधः ॥ १ ॥

सञ्जय उवाच ।
'किरन्तं शरवर्षाणि रोषाद्द्रोणं महाहवे ।
वित्रासयन्तं तां सेनां कौन्तेयानां महीपते ॥ १
दृष्ट्वा ततो महेष्वासो निघ्नन्तं च रथान्भृशम् ।

बृहत् बृहन् ॥२७॥ कुण्डलितः पाठो ङ. झ. ञ. पुस्तकेषु दृश्यते ॥ २८ ॥ ऋष्टीः ऋष्टयः॥२९॥ अष्टाधिकशततमोऽध्यायः १०८

घटोत्कचो महाबाहू रणायाभिजगाम ह ॥ २
पिशाचवदनैर्युक्तं रथं काञ्चनभूषितम् ।
समास्थाय महाराज नानाप्रहरणैर्युतः ॥ ३
दंशितस्तपनीयेन कवचेन सुवर्चसा ।
भूषणैराचिताङ्गश्च नदन्निव च तोयदः ॥ ४
हैडिम्बेयः सुसंक्रुद्धो द्रोणमभ्यद्रवद्बली ।
तमभ्यधावदायान्तं क्रुद्धरूपमलम्बुसः ॥ ५
ऋक्षचर्मपरिक्षिप्तं रथमास्थाय दंशितः ।
रक्तोष्ठः सधनुष्पाणिः प्रांशुः कल्प इव स्थितः ॥ ६
क्षिपञ्छतघ्नीर्विपुला मुसलोपमतोमरान् ।
मुसण्ठीर्बहुलाश्चैव त्रिशूलानपि पट्टसान् ॥ ७
कर्पराञ्छतधारांश्च पिनाकान्विविधांस्तथा ।
चक्राणि च क्षुरप्राणि क्षेपणीश्च कटङ्कटान् ॥ ८
नाराचान्विविधानस्यन्सकङ्कोलूकवायसान् ।
चिक्षेप धनुरादाय निनदन्भैरवान्रवान् ॥ ९
तं रौद्रं क्रूरमायान्तं दृष्ट्वा कालमिवागतम् ।
प्राद्रवद्भयसंविग्ना राजन्पाण्डववाहिनी ॥ १०
सात्यकिस्तु रथव्याघ्रो दृष्ट्वा तं राक्षसं युधि ।
अभ्ययादमरप्रख्यो भ्रामयित्वा महद्धनुः ॥ ११
अभ्यद्रवच्च तद्रक्षस्तिष्ठतिष्ठेति चाब्रवीत् ।
अलम्बुसं राक्षसेन्द्रं सोऽस्त्रवर्षैरवाकिरत् ॥ १२
ततः पाण्डवसैन्यानि विद्रुतान्यथ भारत ।
निरीक्ष्याभ्यद्रवत्तूर्णं त्वरमाणो घटोत्कचः ॥ १३
चिक्षेप च गदाशक्तीस्तोमरानथ पट्टसान् ।
हेमचित्रत्सरूनुग्रान्खड्गानाकाशसप्रभान् ॥ १४
अन्योन्यमारादालोक्य राक्षसौ तौ महाबलौ ।
भैरवं नदतुर्नादान्सतोयाविव तोयदौ ॥ १५
ततः प्रववृते युद्धं घोरं राक्षससिंहयोः ।
यादृगेव पुरा वृत्तं रामरावणयोर्मृधे ॥ १६
स शक्तीश्च पिनाकांश्च वज्रान्खड्गान्परश्वथान् ।
अन्योन्यमभिसंक्रुद्धौ तदा व्यसृजतामुभौ ॥ १७
आकृष्यमाणे धनुषि तयोर्बाहुबलेन च ।
यन्त्रेणेव तदा राजन्भृशं नादान्प्रचक्रतुः ॥ १८
अलम्बुसस्ततश्चक्रं कृतान्तज्वलनप्रभम् ।
घटोत्कचाय चिक्षेप यत्नमास्थाय वीर्यवान् ॥ १९
तद्भैमसेनिः संप्रेक्ष्य चक्रं वेगवदन्तरे ।
गदया ताडयामास तद्दीर्णं शतधाऽभवत् ॥ २०
ततोऽग्निचूर्णैः सहसा चक्रघातविनिःसृतैः ।
दंशकैरिव सा सेना पतद्भिर्भृशसंकुला ॥ २१
ततः प्रतिहते चक्रे स वीरो रोषसंकुलः ।
प्राहिणोत्तरसा शूलं शक्तीर्दशशतं तदा ॥ २२
ज्वलन्तीश्च किरन्तीश्च ज्वालामालाः समन्ततः ।
युगान्तोल्कानिभास्तीक्ष्णा हेमदण्डा महास्वनाः ॥
ताश्चापतन्तीः संप्रेक्ष्य राक्षसस्य घटोत्कचः ।
अर्धचन्द्रैः प्रचिच्छेद नाराचैः कङ्कपत्रिभिः ॥ २४
ततो रोषपरीताङ्गः प्रमुमोच स राक्षसः ।
शरवर्षं महाघोरं घटोत्कचरथं प्रति ॥ २५
तयोः प्रतिभयं युद्धमासीद्राक्षससिंहयोः
कुर्वतोर्विविधा मायाः शक्रशम्बरयोरिव ॥ २६
अलम्बुसो भृशं क्रुद्धो घटोत्कचमताडयत् ॥ २७
तयोर्युद्धं समभवद्रक्षोग्रामणिमुख्ययोः ।
यादृगेव पुरा वृत्तं रामरावणयोः प्रभो ॥ २८
घटोत्कचस्तु विंशत्या नाराचानां स्तनान्तरे ।
अलम्बुसमथो विद्ध्वा सिंहवद्व्यनदन्मुहुः ॥ २९
तथैवालम्बुसो राजन्हैडिम्बिं युद्धदुर्मदम् ।
विद्ध्वा विद्ध्वाऽनदद्धृष्टः पूरयन्खं समन्ततः ॥ ३०
तथा तौ भृशसंक्रुद्धौ राक्षसेन्द्रौ महाबलौ ।
निर्विशेषमयुध्येतां मायाभिरितरेतरम् ॥ ३१
मायाशतसृजौ नित्यं मोहयन्तौ परस्परम् ।
मायायुद्धेषु कुशलौ मायायुद्धमयुध्यताम् ॥ ३२
यांयां घटोत्कचो युद्धे मायां दर्शयते नृप ।
तां तामलम्बुसो राजन्माययैव निजघ्निवान् ॥ ३३
तं तथा युध्यमानं तु मायायुद्धविशारदम् ।
अलम्बुसं राक्षसेन्द्रं दृष्ट्वाऽक्रुध्यन्त पाण्डवाः ॥ ३४
त एनं भृशसंविग्नाः सर्वतः प्रवरा रथैः ।
अभ्यद्रवन्त संक्रुद्धा भीमसेनादयो नृप ॥ ३५
त एनं कोष्ठकीकृत्य रथवंशेन मारिष ।

---

रक्षोग्रामणिमुख्ययोः रक्षःपतिप्रधानयोः ॥ २८ ॥

सर्वतो व्यकिरन्बाणैरुल्काभिरिव कुञ्जरम् ॥ ३६
स तेषामस्त्रवेगं तं प्रतिहत्यास्त्रमायया ।
तस्माद्रथव्रजान्मुक्तो वनदाहादिव द्विपः ॥ ३७
स विस्फार्य धनुर्घोरमिन्द्राशनिसमस्वनम् ।
मारुतिं पञ्चविंशत्या भैमसेनिं च पञ्चभिः ॥ ३८
युधिष्ठिरं त्रिभिर्विद्ध्वा सहदेवं च सप्तभिः ।
नकुलं च त्रिसप्तत्या द्रौपदेयांश्च मारिष ।
पञ्चभिःपञ्चभिर्विद्ध्वा घोरं नादं ननाद ह ॥ ३९
तं भीमसेनो नवभिः सहदेवस्तु पञ्चभिः ।
युधिष्ठिरः शतेनैव राक्षसं प्रत्यविध्यत ।
नकुलस्तु चतुःषष्ट्या द्रौपदेयास्त्रिभिस्त्रिभिः ॥ ४०
हैडिम्बो राक्षसं विद्ध्वा युद्धे पञ्चाशता शरैः ।
पुनर्विव्याध सप्तत्या ननाद च महाबलः ॥ ४१
तस्य नादेन महता कम्पितेयं वसुंधरा ।
सपर्वतवना राजन्सपादपजलाशया ॥ ४२
सोऽतिविद्धो महेष्वासैः सर्वतस्तैर्महारथैः ।
प्रतिविव्याध तान्सर्वान्पञ्चभिः पञ्चभिः शरैः ४३
तं क्रुद्धं राक्षसं युद्धे प्रतिक्रुद्धस्तु राक्षसः ।
हैडिम्बो भरतश्रेष्ठ शरैर्विव्याध सप्तभिः ॥ ४४
सोऽतिविद्धो बलवता राक्षसेन्द्रो महाबलः ।
व्यसृजत्सायकांस्तूर्णं रुक्मपुङ्खाञ्शिलाशितान् ॥
ते शरा नतपर्वाणो भैमसेनिं विनिर्भिदः ।
रुषिताः पन्नगा यद्वद्योधमुख्यानुपागमन् ॥ ४६
ततस्ते पाण्डवा राजन्समन्तान्निशिताञ्शरान् ।
प्रेषयामासुरुद्विग्ना हैडिम्बश्च घटोत्कचः ॥ ४७
स विध्यमानः समरे पाण्डवैर्जितकाशिभिः ।
*नाभ्यपद्यत कर्तव्यमार्श्यशृङ्गिर्महाबलः ॥ ४८
घटोत्कचं महाराज शरवर्षैरवाकिरत् ।
दग्धाद्रिकूटसदृशं तमञ्जनचयोपमम् ॥ ४९
घटोत्कचोऽप्यसंभ्रान्तः शरवर्षं महत्तरम् ।
अलम्बुसवधप्रेप्सुर्मुमोचाग्निरिव ज्वलन् ॥ ५०
अलम्बुसवधाच्चोग्राद्धटोत्कचवधादपि ।
शराः प्रादुर्भवन्ति स्म द्विरेफा इव शाखिनः ॥ ५१
अभ्रच्छायेव रचिता बाणैस्तत्र नरेश्वर ।
न स्म विज्ञायते किंचिदन्धकारे कृते शरैः ॥ ५२
तत आकर्णमुक्तेन भल्लेन च घटोत्कचः ।
अलम्बुसस्य चिच्छेद शिरो यन्तुर्महाबलः ॥ ५३
ततोऽपरैर्वेगवद्भिः क्षुरैस्तस्य घटोत्कचः ।
अक्षमीषां युगं चैव चिच्छेद युधि ताडयन् ॥ ५४
अवस्कन्द्य रथात्तूर्णं कैर्मीरः क्रोधमूर्च्छितः ।
तस्मिन्मायामयं घोरमस्त्रवर्षं ववर्ष ह ॥ ५५
घटोत्कचोऽप्याशु रथात्प्रस्कन्द्य स तमेव च ।
मायास्त्रेणैव मायास्त्रं व्यधमत्समरे रिपोः ॥ ५६
हैडिम्बेनार्द्यमानस्तु युधि सोऽलम्बुसोऽद्रवत् ।
अन्तर्हितो महाराज घटोत्कचमयोधयत् ॥ ५७
अन्तर्धानगतं दृष्ट्वा तत्रतत्र घटोत्कचः ।
गदया ताडयामास वेगवत्या महाबलः ॥ ५८
उत्पपात ततो व्योम्नि प्रहारपरिपीडितः ।
अलम्बुसो राक्षसेन्द्रः सहसा पक्षिराडिव ॥ ५९
घटोत्कचोऽप्यसंभ्रान्तः खड्गपाणिरथोत्पतत् ।
ततो वेगेन महता विवर्षिषुरिवाम्बुदः ॥ ६०
तमापतन्तं संप्रेक्ष्य कैर्मीरी राक्षसोत्तमः ।
अभिदुद्राव वेगेन सिंहः सिंहमिव स्थितम् ॥ ६१
दक्षिणेनासिमुद्यम्य वक्षः प्रच्छाद्य वर्मणा ।

* नाभ्यपद्यतेत्यारभ्य विजिगीषुर्ननादहेति ७९ तमश्लोकपर्यन्तं विद्यमानानां श्लोकानां स्थाने अधोलिखिताः सार्धषट्श्लोका एव ञ. पुस्तके सन्ति ।

मर्त्यधर्ममनुप्राप्तः कर्तव्यं नान्वपद्यत ।
ततः समरशौण्डो वै भैमसेनिर्महाबलः ॥
समीक्ष्य तदवस्थं तं वधायास्य मनो दधे ।
वेगं चक्रे महान्तं च राक्षसेन्द्ररथं प्रति ॥
दग्धाद्रिकूटशृङ्गाभं भिन्नाञ्जनचयोपमम् ।
रथाद्रथमभिद्रुत्य क्रुद्धो हैडिम्बिराक्षिपत् ॥
उद्ववर्ह रथाच्चापि पन्नगं गरुडो यथा ।
समुत्क्षिप्य च बाहुभ्यामाविद्ध्य च पुनःपुनः ॥
निष्पिपेष क्षितौ क्षिप्रं पूर्णकुम्भमिवाश्मनि ।
बललाघवसंपन्नः संपन्नो विक्रमेण च ॥
भैमसेनी रणे क्रुद्धः सर्वसैन्यान्यभीषयत् ।
स विस्फारितसर्वाङ्गश्चूर्णितास्थिर्विभीषणः ॥
घटोत्कचेन वीरेण हतः सालकटङ्कटः ।

अभिदुद्राव वेगेन वेगवन्तं घटोत्कचः ॥ ६२
तावुभौ वेगसंरब्धावलम्बुसघटोत्कचौ ।
अन्योन्यस्य तथैवोरू समाजघ्नतुरञ्जसा ॥ ६३
अन्योन्यस्याभिघातेन तयो राक्षससिंहयोः ।
शैलेनाभिहतस्येव शैलस्याभून्महास्वनः ॥ ६४
ततोऽपसृत्य सहसा पुनरापेततुर्भृशम् ।
चरन्तावसिमार्गांस्तान्विविधान्राक्षसोत्तमौ ॥ ६५
तयोर्गात्रेषु पतितावसी भिन्नौ निपेततुः ।
वेगोत्सृष्टे मघवता वज्रे शैलतटेष्विव ॥ ६६
ततः सैन्यानि ददृशुस्तद्युद्धमतिदारुणम् ।
युद्धं तयो राक्षसयोरामिषे श्येनयोरिव ॥ ६७
ततो लोहितरक्ताक्षावुभौ तौ राक्षसोत्तमौ ।
तथैक्ष्येतां तु शार्दूलौ सन्ध्यारक्ताविवाम्बुदौ ॥ ६८
चक्राते श्येनवच्चैव मण्डलानि सहस्रशः ।
उभौ निस्त्रिंशहस्तौ तौ सपक्षाविव पक्षिणौ ॥ ६९
भ्रामयित्वा तु तं खड्गं पाण्डोः किर्मीरनन्दनः ।
चिक्षेपास्य शिरो हर्तुं स च तस्य घटोत्कचः ॥ ७०
तावसी युगपद्दीप्तौ समेत्य विपुलौ भुवि ।
पतितौ तौ तु बाहुभ्यां राक्षसौ समसज्जताम् ॥ ७१
शीर्षाघातांसघातैश्च परस्परमथाहतौ ।
पुनर्विमिश्रितौ वीरौ व्यायुध्येते मुहुर्मुहुः ॥ ७२
भैमसेनिरथोत्क्षिप्य समाविध्य पुनःपुनः ।
निष्पिपेष क्षितौ क्षिप्रं पूर्णकुम्भमिवाश्मनि ॥ ७३
बललाघवसंपन्नः संपन्नो विक्रमेण च ।
भैमसेनिरथ क्रुद्धः सर्वसैन्यस्य पश्यतः ॥ ७४
असृक्क्षरितसर्वाङ्गश्चूर्णितास्थिविभूषणः ।
घटोत्कचेन निष्पिष्टो हतः सालकटङ्कटः ॥ ७५
पाण्डवानां ततः सेना तं दृष्ट्वा विनिपातितम् ।
ननाद सुमहानादं हर्षवेगसमाप्लुता ॥ ७६
ततस्तु निपपाताशु गतासुर्भुवि राक्षसः ।
शिखरं पर्वतस्येव वज्रवेगेन पातितम् ॥ ७७
पतता तेन महता रथिनां दन्तिनां दश ।
तव सैन्ये महाराज निहताः सुबृहत्तया ॥ ७८
ततो घटोत्कचो हत्वा तद्रक्षो वृत्रसंनिभम् ।
पुनः स रथमास्थाय विजिगीषुर्ननादह ॥' ७९
ततः सुमनसः पार्था हते तस्मिन्निशाचरे ।
चुक्रुशुः सिंहनादांश्च वासांस्यादुधुवुश्च ह ॥ ८०
तावकाश्च हतं दृष्ट्वा राक्षसेन्द्रं महाबलम् ।
अलम्बुसं तथा शूरा विशीर्णमिव पर्वतम् ।
हाहाकारमकार्षुश्च सैन्यानि भरतर्षभ ॥ ८१
जनाश्च तद्ददृशिरे रक्षः कौतूहलान्विताः ।
यदृच्छया निपतितं भूमावङ्गारकं यथा ॥ ८२
घटोत्कचस्तु तद्धत्वा रक्षो बलवतां वरम् ।
मुमोच बलवन्नादं बलं हत्वेव वासवः ॥ ८३

स पूज्यमानः पितृभिः सबान्धवै-
र्घटोत्कचः कर्मणि दुष्करे कृते ।
रिपुं निहत्याभिननन्द वै तदा
ह्यलम्बुसं पक्कमलम्बुषं यथा ॥ ८४

ततो निनादः सुमहान्समुत्थितः
सशङ्खनानाविधबाणघोषवान् ।
निशम्य तं प्रत्यनदंस्तु पाण्डवा-
स्ततो ध्वनिर्भुवनमथाऽस्पृशद्भृशम् ॥ ८५

'ततोऽभिगम्य राजानं धर्मपुत्रं युधिष्ठिरम् ।
स्वकर्मावेदयन्मूर्ध्ना प्राञ्जलिर्निपपात ह ॥ ८६
मूर्ध्न्युपाघ्राय तं ज्येष्ठः परिष्वज्य च पाण्डवः ।
प्रितोऽस्मीत्यब्रवीद्राजन्हर्षादुत्फुल्ललोचनः ॥ ८७
घटोत्कचेन निष्पिष्टे हते सालकटङ्कटे ।
बभूवुर्मुदिताः सर्वे हते तस्मिन्निशाचरे ॥' ८८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे नवाधिकशततमोऽध्यायः ॥ १०९ ॥

भुवनं स्वर्लोकम् ॥ ८५ ॥

नवाधिकशततमोऽध्यायः ॥ १०९ ॥

## दशाधिकशततमोऽध्यायः ॥ ११० ॥

रणाङ्गणे पाञ्चजन्यस्वने श्रुते अश्रुतेच गाण्डीवघोषे अर्जुनस्य विपदमाशङ्कमानेन युधिष्ठिरेण सात्यकिंप्रति अर्जुनवृत्तान्तपरिज्ञानाय गमनचोदना ॥ १ ॥

धृतराष्ट्र उवाच ।
भारद्वाजं कथं युद्धे युयुधानो न्यवारयत् ।
सञ्जयाचक्ष्व तत्त्वेन परं कौतूहलं हि मे ॥ १
सञ्जय उवाच ।
शृणु राजन्महाप्राज्ञ संग्रामं रोमहर्षणम् ।
द्रोणस्य पाण्डवैः सार्धं युयुधानपुरोगमैः ॥ २
वध्यमानं बलं दृष्ट्वा युयुधानेन मारिष ।
अभ्यद्रवत्स्वयं द्रोणः सात्यकिं सत्यविक्रमम् ॥ ३
तमापतन्तं सहसा भारद्वाजं महारथम् ।
सात्यकिः पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ॥ ४
द्रोणोऽपि युधि विक्रान्तो युयुधानं समाहितः ।
अविध्यत्पञ्चभिस्तूर्णं हेमपुङ्खैः शरैः शितैः ॥ ५
ते वर्म भित्त्वा सुदृढं द्विषत्पिशितभोजनाः ।
अभ्ययुर्धरणीं राजन्वल्मीकमिव पन्नगाः ॥ ६
दीर्घबाहुरभिक्रुद्धस्तोत्रार्दित इव द्विपः ।
द्रोणं पञ्चाशताऽविध्यन्नाराचैरग्निसन्निभैः ॥ ७
भारद्वाजो रणे विद्धो युयुधानेन सत्वरम् ।
सात्यकिं बहुभिर्बाणैर्यतमानमविध्यत ॥ ८
ततः क्रुद्धो महेष्वासो भूय एव महाबलः ।
सात्वतं पीडयामास शतेन नतपर्वणाम् ॥ ९
स वध्यमानः समरे भारद्वाजेन सात्यकिः ।
नान्वपद्यत कर्तव्यं किंचिदेव विशांपते ॥ १०
विषण्णवदनश्चापि युयुधानोऽभवन्नृप ।
भारद्वाजं रणे दृष्ट्वा विसृजन्तं शिताञ्शरान् ॥ ११
तं तु संप्रेक्ष्य ते पुत्राः सैनिकाश्च विशांपते ।
प्रहृष्टमनसो भूत्वा सिंहवद्व्यनदन्मुहुः ॥ १२
तं श्रुत्वा निनदं घोरं पीड्यमानं च माधवम् ।
युधिष्ठिरोऽब्रवीद्राजा सर्वसैन्यानि भारत ॥ १३
एष वृष्णिवरो वीरः सात्यकिः सत्यविक्रमः ।
ग्रस्यते युधि वीरेण भानुमानिव राहुणा ।
अभिद्रवत गच्छध्वं सात्यकिर्यत्र युध्यते ॥ १४
धृष्टद्युम्नं च पाञ्चाल्यमिदमाह जनाधिपः ।
'द्रोणं वारय सुक्षिप्रं सात्यकिं मावधीद्द्विजः ॥' १५
अभिद्रव द्रुतं द्रोणं किमु तिष्ठसि पार्षत ।
न पश्यसि भयं द्रोणाद्घोरं नः समुपस्थितम् ॥ १६
असौ द्रोणो महेष्वासो युयुधानेन संयुगे ।
क्रीडते सूत्रबद्धेन पक्षिणा बालको यथा ॥ १७
तत्रैव सर्वे गच्छन्तु भीमसेनपुरोगमाः ।
त्वयैव सहिताः सर्वे युयुधानरथं प्रति ॥ १८
पृष्ठतोऽनुगमिष्यामि त्वामहं सहसैनिकः ।
सात्यकिं मोक्षयस्वाद्य यमदंष्ट्रान्तरं गतम् ॥ १९
सञ्जय उवाच ।
एवमुक्त्वा ततो राजा सर्वसैन्येन भारत ।
अभ्यद्रवद्रणे द्रोणं युयुधानस्य कारणात् ॥ २०
तत्रारावो महानासीद्द्रोणमेकं युयुत्सताम् ।
पाण्डवानां च भद्रं ते सृञ्जयानां च सर्वशः ॥ २१
ते समेत्य नरव्याघ्रा भारद्वाजं महारथम् ।
अभ्यवर्षञ्शरैस्तीक्ष्णैः कङ्कबर्हिणवाजितैः ॥ २२
स्मयन्नेव तु तान्वीरान्द्रोणः प्रत्यग्रहीत्स्वयम् ।
अतिथीनागतान्यद्वत्सलिलेनासनेन च ॥ २३
तर्पितास्ते शरैस्तस्य भारद्वाजस्य धन्विनः ।
आतिथेयं गृहं प्राप्य तर्प्यन्तेऽतिथयो यथा ॥ २४
भारद्वाजं च ते सर्वे न शेकुः प्रतिवीक्षितुम् ।
मध्यंदिनमनुप्राप्तं सहस्रांशुमिव प्रभो ॥ २५
तांस्तु सर्वान्महेष्वासान्द्रोणः शस्त्रभृतां वरः ।
अतापयच्छरव्रातैर्गभस्तिभिरिवांशुमान् ॥ २६
वध्यमाना महाराज पाण्डवाः सृञ्जयास्तथा ।
त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः ॥ २७
द्रोणस्य च व्यदृश्यन्त विसर्पन्तो महाशराः ।
गभस्तय इवार्कस्य प्रतपन्तः समन्ततः ॥ २८
तस्मिन्द्रोणेन निहताः पाञ्चालाः पञ्चविंशतिः ।

तस्मिन्नवसरे ॥ २९ ॥

महारथाः समाख्याता धृष्टद्युम्नस्य संमताः ॥ २९
पाण्डूनां सर्वसैन्येषु पाञ्चालानां तथैव च ।
द्रोणं स ददृशुः शूरं विनिघ्नन्तं वरान्वरान् ॥ ३०
केकयानां शतं हत्वा विद्राव्य च समन्ततः ।
द्रोणस्तस्थौ महाराज व्यादितास्य इवान्तकः ॥ ३१
पाञ्चालान्सृञ्जयान्मत्स्यान्केकयांश्च नराधिप ।
द्रोणोऽजयन्महाबाहुः शतशोऽथ सहस्रशः ॥ ३२
तेषां समभवच्छब्दो विद्धानां द्रोणसायकैः ।
वनौकसामिवारण्ये व्याप्तानां धूमकेतुना ॥ ३३
तत्र देवाः सगन्धर्वाः पितरश्चाब्रुवन्नृप ।
एते द्रवन्ति पाञ्चालाः पाण्डवाश्च ससैनिकाः ॥ ३४
तं तथा समरे द्रोणं निघ्नन्तं सोमकान्रणे ।
न चाप्यभिययुः केचिदपरे नैव विव्यधुः ॥ ३५
वर्तमाने तथा रौद्रे तस्मिन्वीरवरक्षये ।
अशृणोत्सहसा पार्थः पाञ्चजन्यस्य निःस्वनम् ३६
पूरिते वासुदेवेन शङ्खराजे महात्मना ।
युध्यमानेषु वीरेषु सैन्धवस्याभिरक्षिषु ॥ ३७
नदत्सु धार्तराष्ट्रेषु विजयस्य रथं प्रति ।
गाण्डीवस्य च निर्घोषे विप्रनष्टे समन्ततः ॥ ३८
कश्मलाभिहतो राजा चिन्तयामास पाण्डवः ।
न नूनं स्वस्ति पार्थाय यथा नदति शङ्खराट् ॥ ३९
कौरवाश्च यथा हृष्टा विनदन्ति
'व्यक्तमद्य विनश्यन्ति सर्वलोकमहारथाः ॥' ४०
एवं संचिन्तयित्वा तु व्याकुलेनान्तरात्मना ।
अजातशत्रुः कौन्तेयः सात्वतं प्रत्यभाषत ॥ ४१
बाष्पगद्गदया वाचा मुह्यमानो मुहुर्मुहुः ।
कृत्यस्यानन्तरापेक्षी शैनेयं शिनिपुङ्गवम् ॥ ४२
युधिष्ठिर उवाच ।
यः स धर्मः पुरा दृष्टः सद्भिः शैनेय शाश्वतः ।
सांपराये सुहृत्कृत्ये तस्य कालोऽयमागतः ॥ ४३
सर्वेष्वपि च योधेषु चिन्तयञ्शिनिपुङ्गव ।
त्वत्तः सुहृत्तमं कंचिन्नाभिजानामि सात्यके ॥ ४४
यो हि प्रीतमना नित्यं यश्च नित्यमनुव्रतः ।
स कार्ये सांपराये तु नियोज्य इति मे मतिः ॥ ४५
यथा च केशवो नित्यं पाण्डवानां परायणम् ।
तथा त्वमपि वार्ष्णेय कृष्णतुल्यपराक्रमः ॥ ४६
सोऽहं भारं समाधास्ये त्वयि तं वोढुमर्हसि ।
अभिप्रायं च मे नित्यं न वृथा कर्तुमर्हसि ॥ ४७
स त्वं भ्रातुर्वयस्यस्य गुरोरपि च संयुगे ।
कुरु कृच्छ्रे सहायार्थमर्जुनस्य नरर्षभ ॥ ४८
त्वं हि सत्यव्रतः शूरो मित्राणामभयंकरः ।
लोके विख्यायसे वीर कर्मभिः सत्यवागिति ॥ ४९
यो हि शैनेय मित्रार्थे युध्यमानस्त्यजेत्तनुम् ।
पृथिवीं च द्विजातिभ्यो यो दद्यात्स समो भवेत् ५०
श्रुताश्च बहवोऽस्माभी राजानो ये दिवं गताः ।
दत्त्वेमां पृथिवीं कृत्स्नां ब्राह्मणेभ्यो यथाविधि ५१
'दीयमाना च बहुभिर्दास्यते च मुहुर्मही ।
न हि कश्चिद्रणे प्राणान्मित्रार्थे त्यक्तवानिह ॥' ५२
एवं त्वामपि धर्मात्मन्प्रयाचेऽहं कृताञ्जलिः ।
पृथिवीदानतुल्यं स्यादधिकं वा फलं विभो ॥ ५३
एक एव सदा कृष्णो मित्राणामभयकरः ।
रणे संत्यजति प्राणान्द्वितीयस्त्वं च सात्यके ॥ ५४
विक्रान्तस्य च वीरस्य युद्धे प्रार्थयतो यशः ।
शूर एव सहायः स्यान्नेतरः प्राकृतो जनः ॥ ५५
ईदृशे तु परामर्दे वर्तमानस्य माधव ।
त्वदन्यो हि रणे गोप्ता विजयस्य न विद्यते ॥ ५६
श्लाघन्नेव हि कर्माणि शतशस्तव पाण्डवः ।
मम सञ्जनयन्हर्षं पुनः पुनरकीर्तयत् ॥ ५७
लघुहस्तश्चित्रयोधी तथा लघुपराक्रमः ।
प्राज्ञः सर्वास्त्रविच्छूरो मुह्यते न च संयुगे ॥ ५८
महास्कन्धो महोरस्को महाबाहुर्महाहनुः ।
महाबलो महावीर्यः स महात्मा महारथः ॥ ५९
शिष्यो मम सखा चैव प्रियोऽस्याहं प्रियश्च मे ।
युयुधानः सहायो मे प्रमथिष्यति कौरवान् ॥ ६०
अस्मदर्थे च राजेन्द्र संनह्येद्यदि केशवः ।
रामो वाप्यनिरुद्धो वा प्रद्युम्नो वा महारथः ॥ ६१

कृत्यस्य जयद्रथवधस्यानन्तरापेक्षी अविघ्नाकाङ्क्षी ॥ ४२ ॥ यः स धर्मो मैत्रीलक्षणः । सांपराये आपत्काले ॥ ४३ ॥ वयस्यस्य स्निग्धस्य । सहायार्थं सहायरूपप्रयोजनम् ॥ ४८ ॥

गदो वा सारणो वापि साम्बो वा सह वृष्णिभिः ।
सहायार्थं महाराज संग्रामोत्तममूर्धनि ॥ ६२
तथाप्यहं नरव्याघ्रं शैनेयं सत्यविक्रमम् ।
साहाय्ये विनियोक्ष्यामि नास्ति मेऽन्योहि तत्समः
इति द्वैतवने तात मामुवाच धनंजयः ।
परोक्षं त्वद्गुणांस्तथ्यान्कथयन्नार्यसंसदि ॥ ६४
तस्य त्वमेवं संकल्पं न वृथा कर्तुमर्हसि ।
धनंजयस्य वार्ष्णेय मम भीमस्य चोभयोः ॥ ६५
यच्चापि तीर्थानि चरन्नगच्छं द्वारकां प्रति ।
तत्राहमपि ते भक्तिमर्जुनं प्रति दृष्टवान् ॥ ६६
न तत्सौहृदमन्येषु मया शैनेय लक्षितम् ।
यथा त्वमस्मान्भजसे वर्तमानानुपप्लवे ॥ ६७
सोऽभिजात्या च भक्त्या च सख्यस्याचार्यकस्य च ।
सौहृदस्य च वीर्यस्य कुलीनत्वस्य माधव ॥ ६८
सत्यस्य च महाबाहो अनुकम्पार्थमेव च ।
अनुरूपं महेष्वास कर्म त्वं कर्तुमर्हसि ॥ ६९
सुयोधनो हि सहसा गतो द्रोणेन दंशितः ।
पूर्वमेवानुयातास्ते कौरवाणां महारथाः ॥ ७०
सुमहान्निनदश्चैव श्रूयते विजयं प्रति ।
स शैनेय जवेनाशु गन्तुमर्हसि मानद ॥ ७१
भीमसेनो वयं चैव संयत्ताः महसैनिकाः ।
द्रोणमावारयिष्यामो यदि त्वां प्रतियोत्स्यते ॥ ७२
पश्य शैनेय सैन्यानि द्रवमाणानि संयुगे ।
महान्तं च रणे शब्दं दीर्यमाणां च भारतीम् ॥ ७३
महामारुतवेगेन समुद्रमिव पर्वसु ।
धार्तराष्ट्रबलं तात विक्षिप्तं सव्यसाचिना ॥ ७४
रथैर्विपरिधावद्भिर्मनुष्यैश्च हयैश्च ह ।
सैन्यं रजःसमुद्भूतमेतत्संपरिवर्तते ॥ ७५
संवृतः सिन्धुसौवीरैर्नखरप्रासयोधिभिः ।
अत्यन्तोपचितैः शूरैः फल्गुनः परवीरहा ॥ ७६
नैतद्बलमसंवार्य शक्यो जेतुं जयद्रथः ।
एते हि सैन्धवस्यार्थे सर्वे संत्यक्तजीविताः ॥ ७७
शरशक्तिध्वजवरं हयनागसमाकुलम् ।
पश्यैतद्धार्तराष्ट्राणामनीकं सुदुरासदम् ॥ ७८
शृणु दुन्दुभिनिर्घोषं शङ्खशब्दांश्च पुष्कलान् ।
सिंहनादरवांश्चैव रथनेमिस्वनांस्तथा ॥ ७९
नागानां शृणु शब्दं च पत्तीनां च सहस्रशः ।
सादिनां द्रवतां चैव शृणु कम्पयतां महीम् ॥ ८०
पुरस्तात्सैन्धवानीकं द्रोणानीकं च पृष्ठतः ।
बहुत्वाद्धि नरव्याघ्र देवेन्द्रमपि पीडयेत् ॥ ८१
अपर्यन्ते बले मग्नो जह्यादपि च जीवितम् ।
तस्मिंश्च निहते युद्धे कथं जीवेत मादृशः ॥ ८२
सर्वथा मम्नुप्राप्तः सुकृच्छ्रं त्वयि जीवति ।
श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डवः ॥ ८३
लघ्वस्त्रश्चित्रयोधी च प्रविष्टस्तात भारतीम् ।
सूर्योदये महाबाहुर्दिवसश्चातिवर्तते ॥ ८४
तन्न जानामि वार्ष्णेय यदि जीवति वा न वा ।
कुरूणां चापि तत्सैन्यं सागरप्रतिमं महत् ॥ ८५
एक एव च बीभत्सुः प्रविष्टस्तात भारतीम् ।
अविषह्यां महाबाहुः सुरैरपि महाहवे ॥ ८६
न हि मे वर्तते बुद्धिरद्य युद्धे कथंचन ।
द्रोणोऽपि रभसो युद्धे मम पीडयते बलम् ॥ ८७
प्रत्यक्षं ते महाबाहो यथाऽसौ चरति द्विजः ।
युगपच्च समेतानां कार्याणां त्वं विचक्षणः ।
महार्थं लघुसंयुक्तं कर्तुमर्हसि मानद ॥ ८८
तस्य मे सर्वकार्येषु कार्यमेतन्मतं महत् ।
अर्जुनस्य परित्राणं कर्तव्यमिति संयुगे ॥ ८९
नाहं शोचामि दाशार्हं गोप्तारं जगतः पतिम् ।
स हि शक्तो रणे तात त्रींल्लोकानपि संगतान् ॥ ९०
विजेतुं पुरुषव्याघ्रः सत्यमेतद्ब्रवीमि ते ।
किंपुनर्धार्तराष्ट्रस्य बलमेतत्सुदुर्बलम् ॥ ९१
अर्जुनस्त्वेष वार्ष्णेय पीडितो बहुभिर्युधि ।
प्रजह्यात्समरे प्राणांस्तस्माद्विन्दामि कश्मलम् ॥ ९२
तस्य त्वं पदवीं गच्छ गच्छेयुस्त्वादृशा यथा ।
तादृशस्येदृशे काले मादृशेनाभिनोदितः ॥ ९३
रणे वृष्णिप्रवीराणां द्वावेवातिरथौ स्मृतौ ।

उपप्लवे विमर्दे ॥ ६७ ॥ सख्यादेरनुरूपमित्यनेनान्वयः ॥ ६८ ॥ सत्यस्याङ्गीकारस्य । अनुकम्पार्थमर्जुनानुपालननिमित्तम् ॥ ६९ ॥ श्रूयते हि रणं प्रति इति क. पाठः ॥ ७१ ॥ महार्थं महान्तमर्थम् । लघुसंयुक्तमविलम्बसंपन्नम् ॥ ८८ ॥

प्रद्युम्नश्च महाबाहुस्त्वं च सात्वत विश्रुतः ॥ ९४
अस्त्रे नारायणसमः संकर्षणसमो बले ।
वीरतायां नरव्याघ्र धनंजयसमो ह्यसि ॥ ९५
भीष्मद्रोणावतिक्रम्य सर्वयुद्धविशारदम् ।
त्वामेव पुरुषव्याघ्रं लोके सन्तः प्रचक्षते ॥ ९६
'सदेवासुरगन्धर्वान्सकिन्नरमहोरगान् ।
योधयेच्च जगत्सर्वं विजयेत रिपून्बहून् ॥ ९७
इति ब्रुवन्ति लोकेषु जनास्तव गुणांस्तथा ।
समागमेषु सर्वेषु पृथगेव च सर्वदा ।'
नाशक्यं विद्यते लोके सात्यकेरिति माधव ॥ ९८
तत्त्वां यदभिवक्ष्यामि तत्कुरुष्व महाबल ॥ ९९
संभावना हि लोकस्य मम पार्थस्य चोभयोः ।
नान्यथा तां महाबाहो संप्रकर्तुमिहार्हसि ॥ १००
परित्यज्य प्रियान्प्राणान्रणे चर विभीतवत् ।
न हि शैनेय दाशार्हा रणे रक्षन्ति जीवितम् ॥ १०१
अयुद्धमनवस्थानं संग्रामे च पलायनम् ।
भीरूणामसतां मार्गो नैष दाशार्हसेवितः ॥ १०२
तवार्जुनो गुरुस्तात धर्मात्मा शिनिपुङ्गव ।
वासुदेवो गुरुश्चापि तव पार्थस्य धीमतः ॥ १०३
कारणद्वयमताद्ध जानस्त्वामहमब्रुवम् ।
मावमंस्था वचो मह्यं गुरुस्तव गुरोर्ह्यहम् ॥ १०४
वासुदेवमतं चैव मम चैवार्जुनस्य च ।
सत्यमेतन्मयोक्तं ते याहि यत्र धनंजयः ॥ १०५
एतद्वचनमाज्ञाय मम सत्यपराक्रम ।
प्रविशैतद्बलं तात धार्तराष्ट्रस्य दुर्मतेः ॥ १०६
प्रविश्य च यथान्यायं संगम्य च महारथैः ।
यथार्हमात्मनः कर्म रणे सात्वत दर्शय ॥ १०७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे दशाधिकशततमोऽध्यायः ॥ ११० ॥

## एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

अर्जुनंप्रति गच्छेति युधिष्ठिरचोदितेन सात्यकिना तंप्रति स्वस्यार्जुनेन तद्रक्षणाय नियोगाभिधानपूर्वकं स्वेन तस्यापरित्याज्यत्वकथनम् ॥ १ ॥ युधिष्ठिरेण भीमादिभिः स्वस्य रक्षणकथनपूर्वकं पुनःसात्यकेरर्जुनंप्रति गमने नियोजनम् ॥ २ ॥

सञ्जय उवाच ।
प्रीतियुक्तं च हृद्यं च माननीयं च सर्वशः ।
कालयुक्तं च चित्रं च स्वधिया चाभिभाषितम् ॥ १
धर्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः ।
सात्यकिर्भरतश्रेष्ठ प्रत्युवाच युधिष्ठिरम् ॥ २
श्रुतं ते गदतो वाक्यं सर्वमेतन्मयाऽच्युत ।
न्याययुक्तं च सत्यं च फल्गुनार्थे यशस्करम् ॥ ३
एवंविधे तथा काले मादृशं प्रेक्ष्य सत्तम ।
वक्तुमर्हसि राजेन्द्र यथा पार्थं तथैव माम् ॥ ४
न मे धनंजयस्यार्थे प्राणा रक्ष्याः कथंचन ।
त्वत्प्रयुक्तः पुनरहं किं नकुर्यां महाहवे ॥ ५
लोकत्रयं योधयेयं सदेवासुरमानुषम् ।
त्वत्प्रयुक्तो नरेन्द्रेन्द्र किंपुनस्तान्सुदुर्बलान् ॥ ६
सुयोधनबलं त्वद्य योधयिष्ये समन्ततः ।
विजेष्ये च रणे राजन्सत्यमेतद्ब्रवीमि ते ॥ ७
कुशल्यहं कुशलिनं समासाद्य धनञ्जयम् ।
हते जयद्रथे राजन्पुनरेष्यामि तेऽन्तिकम् ॥ ८
अवश्यं तु मया सर्वं विज्ञाप्यस्त्वं नराधिप ।
वासुदेवस्य यद्वाक्यं फल्गुनस्य च धीमतः ॥ ९
दृढं त्वभिहितश्चाहमर्जुनेन पुनःपुनः ।
मध्ये सर्वस्य सैन्यस्य वासुदेवस्य शृण्वतः ॥ १०
अद्य माधव राजानमप्रमत्तोऽनुपालय ।
आर्यां युद्धे मतिं कृत्वा यावद्धन्मि जयद्रथम् ॥ ११
त्वयि चाहं महाबाहो प्रद्युम्ने वा महारथे ।
नृपं निक्षिप्य गच्छेयं निरपेक्षो जयद्रथम् ॥ १२
जानीषे हि रणे द्रोणं कुरुषु श्रेष्ठसंमतम् ।
प्रतिज्ञा चापि ते नित्यं श्रुता द्रोणस्य माधव ॥ १३
ग्रहणे धर्मराजस्य भारद्वाजोऽपि गृध्यति ।

विभीतवदभीतः ॥ १०१ ॥ अनवस्थानमस्थैर्यम् ॥ १०२ ॥

दशाधिकशततमोऽध्यायः ॥ ११० ॥

शक्तश्चापि रणे द्रोणो निग्रहीतुं युधिष्ठिरम् ॥ १४
एवं त्वयि समाधाय धर्मराजं नरोत्तमम् ।
अहमद्य गमिष्यामि सैन्धवस्य वधाय हि ॥ १५
'स त्वमद्य रणे यत्तो रक्ष माधव पाण्डवम् ।
रक्षणे धर्मराजस्य ध्रुवो हि विजयो मम ॥' १६
जयद्रथं च हत्वाऽहं द्रुतमेष्यामि माधव ।
धर्मराजं न चेद्द्रोणो निगृह्णीयाद्रणे बलात् ॥१७
निगृहीते नरश्रेष्ठे भारद्वाजेन माधव ।
सैन्धवस्य वधो न स्यान्ममाप्रीतिस्तथा भवेत् ॥१८
एवंगते नरश्रेष्ठे पाण्डवे सत्यवादिनि ।
अस्माकं गमनं व्यक्तं वनं प्रति भवेत्पुनः ॥ १९
सोऽयं मम जयो व्यक्तं व्यर्थ एव भविष्यति ।
यदि द्रोणो रणे क्रुद्धो निगृह्णीयाद्युधिष्ठिरम् ॥ २०
स त्वमद्य महाबाहो प्रियार्थं मम माधव ।
जयार्थं च यशोर्थं च रक्ष राजानमाहवे ॥ २१
स भवान्मयि निक्षेपो निक्षिप्तः सव्यसाचिना ।
भारद्वाजाद्भयं नित्यं मन्यमानेन वै प्रभो ॥ २२
तस्यापि च महाबाहो नित्यं पश्यामि संयुगे ।
नान्यं हि प्रतियोद्धारं रौक्मिणेयादृते प्रभो ॥ २३
मां चापि मन्यते युद्धे भारद्वाजस्य धीमतः ।
सोऽहं संभावनां चैतामाचार्यवचनं च तत् ।
पृष्ठतो नोत्सहे कर्तुं त्वां वा त्यक्तुं महीपते ॥ २४
आचार्यो लघुहस्तत्वादभेद्यकवचावृतः ।
उपलभ्य रणे क्रीडेद्यथा शकुनिना शिशुः ॥ २५
यदि कार्ष्णिर्धनुष्पाणिरिह स्यान्मकरध्वजः ।
तस्मै त्वां विसृजेयं वै स त्वां रक्षेद्यथाऽर्जुनः ॥ २६
कुरु त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यः प्रतीयाद्रणे द्रोणं यावद्गच्छामि पाण्डवम् ॥ २७
मा च ते भयमद्यास्तु राजन्नर्जुनसंभवम् ।
न स जातु महाबाहुर्भारमुद्यम्य सीदति ॥ २८
ये च सौवीरका योधास्तथा सैन्धवपौरवाः ।
उदीच्या दाक्षिणात्याश्च ये चान्येऽपि महारथाः ॥
ये च कर्णमुखा राजन्रथोदाराः प्रकीर्तिताः ।
एतेऽर्जुनस्य क्रुद्धस्य कलां नार्हन्ति षोडशीम् ॥३०
उद्युक्ताः पृथिवीपाल ससुरासुरमानुषाः ।
सराक्षसगणा राजन्सकिन्नरमहोरगाः ॥ ३१
जङ्गमस्थावरैः सार्धं नालं पार्थस्य संयुगे ।
एवं ज्ञात्वा महाराज व्येतु ते भीर्धनञ्जये ॥ ३२
यत्र वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ ।
न तत्र कर्मणो व्यापत्कथंचिदपि विद्यते ॥ ३३
दैवं कृतास्त्रतां योगममर्षं शौर्यमाहवे ।
कृतज्ञतां दयां चैव भ्रातुस्त्वमनुचिन्तय ॥ ३४
मयि चापि सहाये ते गच्छमानेऽर्जुनं प्रति ।
द्रोणे चित्रास्त्रतां सङ्ख्ये राजंस्त्वमनुचिन्तय ॥ ३५
आचार्यो हि भृशं राजन्निग्रहे तव गृध्यति ।
प्रतिज्ञामात्मनो रक्षन्सत्यां कर्तुं च भारत ॥ ३६
कुरुष्वाद्यात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यस्याहं प्रत्ययात्पार्थं गच्छेयं फल्गुनं प्रति ॥ ३७
न ह्यहं त्वां महाराज अनिक्षिप्य महाहवे ।
क्वचिद्यास्यामि कौरव्य सत्यमेतद्ब्रवीमि ते ॥ ३८
'न पश्यामि रथं कंचिद्यस्ते गोप्ता भवेदिह ।
शक्तं यं मन्यसे राजन्गोप्तारं प्रति पाण्डव ॥' ३९
एतद्विचार्य बहुशो बुद्ध्या बुद्धिमतां वर ।
दृष्ट्वा श्रेयः परं बुद्ध्या ततो राजन्प्रशाधि माम् ॥४०
युधिष्ठिर उवाच ।
एवमेतन्महाबाहो यथा वदसि माधव ।
न तु मे शुद्ध्यते भावः श्वेताश्वं प्रति मारिष ॥ ४१
करिष्ये परमं यत्नमात्मनो रक्षणे ह्यहम् ।
गच्छ त्वं समनुज्ञातो यत्र यातो धनञ्जयः ॥ ४२
आत्मसंरक्षणं सङ्ख्ये गमनं चार्जुनं प्रति ।
विचार्यैतत्स्वयं बुद्ध्या गमनं तत्र रोचये ॥ ४३
स त्वमातिष्ठ यानाय यत्र यातो धनञ्जयः ।
ममापि रक्षणं भीमः करिष्यति महाबलः ॥ ४४
पार्षतश्च ससोदर्यः पार्थिवाश्च महाबलाः ।

---

एवमीदृश्यामपि कार्यगतौ । समाधाय निक्षिप्य ॥ १५ ॥ एवंगते ग्रहणं प्राप्ते । अस्माकं चिन्तितं व्यक्तं व्यर्थमेव भवेद्युधि इति क, ख, ङ, पाठः ॥ १९ ॥ यावद्गच्छामि गमिष्यामि ॥ २७ ॥ अर्जुनसंभवमर्जुनविषयम् ॥ २८ ॥ दैवममानुषताम् । योगमभिज्ञानम् ॥ ३४ ॥ क्वचित्कस्मिंश्चित् अनिक्षिप्येत्यन्वयः ॥ ३८ ॥ दृष्ट्वा निश्चित्य ॥ ४० ॥ आतिष्ठ प्रक्रमस्व ॥ ४४ ॥

द्रौपदेयाश्च मां तात रक्षिष्यन्ति न संशयः ॥ ४५
केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः ।
विराटो द्रुपदश्चैव शिखण्डी च महारथः ॥ ४६
धृष्टकेतुश्च बलवान्कुन्तिभोजश्च मातुलः ।
नकुलः सहदेवश्च पाञ्चालाः सृञ्जयास्तथा ।
एते समाहितास्तात रक्षिष्यन्ति न संशयः ॥ ४७
न द्रोणः सह सैन्येन कृतवर्मा च संयुगे ।
समासादयितुं शक्तो न च मां धर्षयिष्यति ॥ ४८
धृष्टद्युम्नश्च समरे द्रोणं क्रुद्धं परंतपः ।
वारयिष्यति विक्रम्य वेलेव मकरालयम् ॥ ४९
यत्र स्थास्यति संग्रामे पार्षतः परवीरहा ।
न द्रोणस्य बलं तात क्रमेत्तत्र कथंचन ॥ ५०
एष द्रोणविनाशाय समुत्पन्नो हुताशनात् ।
कवची स शरी खड्गी धन्वी च वरभूषणः ॥ ५१
'एष द्रोणं रणे क्रुद्धं वारयेत स वै प्रभो ।
पाञ्चालः सहितैः सर्वैः पाण्डवानां च धन्विभिः ॥'
विश्रब्धं गच्छ शैनेय मा कार्षीर्मयि संभ्रमम् ।
धृष्टद्युम्नो रणे क्रुद्धं द्रोणमावारयिष्यति ॥ ५३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

## द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

सात्यकेः युधिष्ठिररक्षणे भीमं नियोज्यार्जुनदर्शनाय प्रस्थानम् ॥ १ ॥

सञ्जय उवाच
धर्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः ।
स पार्थाद्भयमाशंसन्परित्यागान्महीपतेः ॥ १
अपवादं ह्यात्मनश्च लोकाद्रक्षन्विशेषतः ।
न मां भीतमिति ब्रूयात्प्रयान्तं फल्गुनं प्रति ॥ २
निश्चित्य बहुधैवं स सात्यकिर्युद्धदुर्मदः ।
नातिव्यक्तमिवाभाष्य धर्मराजं महायशाः ॥ ३
शोकगद्गदया वाचा शोकोपहतचेतनः ।
यथेदानीमिति ध्यात्वा धर्मराजमथाब्रवीत् ॥ ४
कृतां चेन्मन्यसे रक्षां स्वस्ति तेऽस्तु विशांपते ।
अनुयास्यामि बीभत्सुं करिष्ये वचनं तव ॥ ५
न हि मे पाण्डवात्कश्चित्त्रिषु लोकेषु विद्यते ।
यो मे प्रियतरो राजन्सत्यमेतद्ब्रवीमि ते ॥ ६
तस्याहं पदवीं यास्ये संदेशात्तव मानद ।
त्वत्कृते न च मे किंचिदकर्तव्यं कथंचन ॥ ७
यथा हि मे गुरोर्वाक्यं विशिष्टं द्विपदां वर ।
तथा तवापि वचनं विशिष्टतरमेव मे ॥ ८
प्रिये हि तव वर्तेते भ्रातरौ कृष्णपाण्डवौ ।
तयोः प्रिये स्थितं चैव विद्धि मां राजपुङ्गव ॥ ९
तवाज्ञां शिरसा गृह्य पाण्डवार्थमहं प्रभो ।
भित्त्वेदं दुर्भिदं सैन्यं प्रयास्ये नरपुङ्गव ॥ १०
द्रोणानीकं विशाम्येष क्रुद्धो झष इवार्णवम् ।
तत्र यास्यामि यत्रासौ राजन्राजा जयद्रथः ॥ ११
यत्र सेनान्तमाश्रित्य भीतस्तिष्ठति पाण्डवात् ।
गुप्तो रथवरश्रेष्ठैर्द्रौणिकर्णकृपादिभिः ॥ १२
इतस्त्रियोजनं मन्ये तमध्वानं विशांपते ।
यत्र तिष्ठति पार्थोऽसौ जयद्रथवधोद्यतः ॥ १३
त्रियोजनगतस्यापि तस्य यास्याम्यहं पदम् ।
आसैन्धववधाद्राजन्सुदृढेनान्तरात्मना ॥ १४
अनादिष्टस्तु गुरुणा को नु युध्येत मानवः ।
आदिष्टस्तु यथा राजन्को न युध्येत मादृशः ॥ १५
अभिजानामि तं देशमितः पूर्णं त्रियोजनम्
यत्र तिष्ठति राजाऽसौ सैन्धवो बालघातकः ॥ १६
सागरप्रतिमं सैन्यं गर्जन्तमिव सागरम् ।
हलशक्तिगदाप्रासचर्मखड्गर्ष्टितोमरम् ।
इष्वस्त्रवरसंबाधं क्षोभयित्वा व्रजाम्यहम् ॥ १७
यदेतत्कुञ्जरानीकं सहस्रमनुपश्यसि ।
कुलमाञ्जनकं नाम यत्रैते वीर्यशालिनः ॥ १८

---

मातुलः पुरुजित् ॥ ४७ ॥ मयि मामधिकृत्य । संभ्रममुद्वेगम् ॥ ५३ ॥ एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

ते मां भीतमिति ब्रूयुरयान्तं इति झ. पाठः ॥ २ ॥ आसैन्धववधात् सैन्धववधात्प्रागेव ॥ १४ ॥ हलादितोमरान्तमर्शआद्य-

आस्थिता बहुभिर्म्लेच्छैर्युद्धशौण्डैः प्रहारिभिः ।
नागा नगनिभा राजन्क्षरन्त इव तोयदाः ॥ १९
नैते जातु निवर्तेरन्प्रेषिता हस्तिसादिभिः ।
अन्यत्र हि वधादेषां नास्ति राजन्पराजयः ॥ २०
अथ यान्रथिनो राजन्सहस्रमनुपश्यसि ।
एते रुक्मरथा नाम राजपुत्रा महारथाः ॥ २१
रथेष्वस्त्रेषु निपुणा नागेषु च विशांपते ।
धनुर्वेदे गताः पारं मुष्टियुद्धे च कोविदाः ॥ २२
गदायुद्धविशेषज्ञा नियुद्धकुशलास्तथा ।
खड्गप्रहरणे युक्ताः संपाते चासिचर्मणोः ॥ २३
शूराश्च कृतविद्याश्च स्पर्धन्ते च परस्परम् ।
नित्यं हि समरे राजन्विजिगीषन्ति मानवान् ॥ २४
कर्णेन विहिता राजन्दुःशासनमनुव्रताः ।
एतांस्तु वासुदेवोऽपि रथोदारान्प्रशंसति ॥ २५
सततं प्रियकामाश्च कर्णस्यैते वशे स्थिताः ।
तस्यैव वचनाद्राजन्निवृत्ताः श्वेतवाहनात् ॥ २६
ते न क्रान्ता न च श्रान्ता दृढावरणकार्मुकाः ।
मदर्थेऽधिष्ठिता नूनं धार्तराष्ट्रस्य शासनात् ॥ २७
एतान्प्रमथ्य संग्रामे प्रियार्थं तव कौरव ।
प्रयास्यामि ततः पश्चात्पदवीं सव्यसाचिनः ॥ २८
यांस्त्वेतानपरान्राजन्नागान्सप्तशतानिमान् ।
प्रेक्षसे वर्मसंछन्नान्किरातैः समधिष्ठितान् ॥ २९
किरातराजो यान्प्रादाद्गृहीतः सव्यसाचिना ।
स्वलङ्कृतांस्तदा प्रेष्यानिच्छञ्जीवितमात्मनः ॥ ३०
आसन्नेते पुरा राजंस्तव कर्मकरा दृढम् ।
त्वामेवाद्य युयुत्सन्ते पश्य कालस्य पर्ययम् ॥ ३१
एषामेते महामात्राः किराता युद्धदुर्मदाः ।
हस्तिशिक्षाविदश्चैव सर्वे चैवाग्नियोनयः ॥ ३२
एते विनिर्जिताः सङ्ख्ये संग्रामे सव्यसाचिना ।
मदर्थमद्य संयत्ता दुर्योधनवशानुगाः ॥ ३३
एतान्हत्वा शरै राजन्किरातान्युद्धदुर्मदान् ।
सैन्धवस्य वधे यत्तमनुयास्यामि पाण्डवम् ॥ ३४
ये त्वेते सुमहानागा अञ्जनस्य कुलोद्भवाः ।
कर्कशाश्च विनीताश्च प्रभिन्नकरटामुखाः ॥ ३५
जाम्बूनदमयैः सर्वैर्वर्मभिः सुविभूषिताः ।
लब्धलक्षा रणे राजन्नैरावणसमा युधि ॥ ३६
आस्थिता दस्युभिस्तीक्ष्णैः शूरैरुत्तमपार्वतैः ।
कर्कशैः प्रवरैर्योधैः कार्ष्णायसतनुच्छदैः ॥ ३७
सन्ति गोयोनयश्चात्र सन्ति वानरयोनयः ।
अनेकयोनयश्चान्ये तथा मानुषयोनयः ॥ ३८
अनीकमसतामेतद्धूम्रवर्णमुदीर्यते ।
म्लेच्छानां पापकर्तॄणां हिमदुर्गनिवासिनाम् ॥ ३९
एतद्दुर्योधनो लब्ध्वा समग्रं राजमण्डलम् ।
कृपं च सौमदत्तिं च द्रोणं च रथिनां वरम् ॥ ४०
सिन्धुराजं तथा कर्णमवमन्यत पाण्डवान् ।
कृतार्थमथ चात्मानं मन्यते कालचोदितः ॥ ४१
ते तु सर्वेऽद्य संप्राप्ता मम नाराचगोचरम् ।
नभविष्यन्ति कौन्तेय यद्यपि स्युर्मनोजवाः ॥ ४२
तेन संभाविता नित्यं परवीर्योपजीविना ।
विनाशमुपयास्यन्ति मच्छरौघनिपीडिताः ॥ ४३
ये त्वेते रथिनो राजन्दृश्यन्ते काञ्चनध्वजाः ।
एते दुर्वारणा नाम काम्भोजा यदि ते श्रुताः ॥ ४४
शूराश्च कृतविद्याश्च धनुर्वेदे च निष्ठिताः ।
संहताश्च भृशं ह्येते अन्योन्यस्य हितैषिणः ॥ ४५
अक्षौहिण्यश्च संरब्धा धार्तराष्ट्रस्य भारत ।
यत्ता मदर्थे तिष्ठन्ति कुरुवीराभिरक्षिताः ॥ ४६
अप्रमत्ता महाराज मामेव प्रत्युपस्थिताः ।
तानहं प्रमथिष्यामि तृणानीव हुताशनः ॥ ४७
तस्मात्सर्वानुपासङ्गान्सर्वोपकरणानि च ।
रथे कुर्वन्तु मे राजन्यथावद्रथकल्पकाः ॥ ४८
अस्मिंस्तु किल संमर्दे ग्राह्यं विविधमायुधम् ।
यथोपदिष्टमाचार्यैः कार्यः पञ्चगुणो रथः ॥ ४९
काम्भोजैर्हि समेष्यामि तीक्ष्णैराशीविषोपमैः ।
नानाशस्त्रसमावायैर्विविधायुधयोधिभिः ॥ ५०
किरातैश्च समेष्यामि विषकल्पैः प्रहारिभिः ।
लालितैः सततं राज्ञा दुर्योधनहितैषिभिः ॥ ५१

जन्तम् ॥ १७ ॥ संपाते विहरणे ॥ २३ ॥ तदा दिग्विजये ॥ ३० ॥ अञ्जनस्य वरुणोपवाह्यस्य ॥ ३५ ॥ तेन दुर्योधनेन । संभाविताः संवर्धिताः ॥ ४३ ॥ पञ्चगुणः पञ्चगुणसामग्रीक ॥ ४९ ॥ नानाशस्त्राणां समावायः समूहो येषु ॥ ५० ॥

शक्रैश्चापि समेष्यामि शक्रतुल्यपराक्रमैः ।
अग्निकल्पैर्दुराधर्षैः प्रदीप्तैरिव पावकैः ॥ ५२
तथाऽन्यैर्विविधैर्योधैः कालकल्पैर्दुरासदैः ।
समेष्यामि रणे राजन्बहुभिर्युद्धदुर्मदैः ॥ ५३
'त्रियोजनगतस्यापि पदवीं सव्यसाचिनः ।
यास्यामि रथिनां श्रेष्ठं प्रवरं च धनुष्मताम् ॥ ५४
सूर्योदयगतस्याहं पाण्डवस्य गतिं चरन् ।
अपराह्णगते सूर्ये गमिष्यामि न संशयः ॥' ५५
तस्माद्वै वाजिनो मुख्यान्विश्रुताञ्शुभलक्षणैः ।
उपावृत्तांश्च पीतांश्च पुनर्युञ्जन्तु मे रथे ॥ ५६
सञ्जय उवाच ।
तस्य सर्वानुपासङ्गान्सर्वोपकरणानि च ।
रथे चास्थापयद्राजा शस्त्राणि विविधानि च ॥ ५७
ततस्तान्सर्वतोमुक्तान्सदश्वांश्चतुरो जनाः ।
रसवत्पाययामासुः पानं मदसमीरणम् ॥ ५८
पीतोपवृत्तान्स्नातांश्च जग्धान्नान्समलङ्कृतान् ।
विनीतशल्यांस्तुरगांश्चतुरो हेममालिनः ॥ ५९
तान्युक्तान्रुक्मवर्णाभान्विनीताञ्शीघ्रगामिनः ।
संहृष्टमनसो व्यग्रान्विधिवत्कल्पितान्रथे ॥ ६०
महाध्वजेन सिंहेन हेमकेसरमालिना ।
संवृते केतकैर्हैमैर्मणिविद्रुमचित्रितैः ॥ ६१
पाण्डुराभ्रप्रकाशाभिः पताकाभिरलङ्कृते ।
हेमदण्डोच्छ्रितच्छत्रे बहुशस्त्रपरिच्छदे ।
योजयामास विधिवद्धेमभाण्डविभूषितान् ॥ ६२
दारुकस्यानुजो भ्राता सूतस्तस्य प्रियः सखा ।
न्यवेदयद्रथं युक्तं वासवस्येव मातलिः ॥ ६३
ततः स्नातः शुचिर्भूत्वा कृतकौतुकमङ्गलः ।
स्नातकानां सहस्रस्य स्वर्णनिष्कानथो ददौ ॥ ६४
आशीर्वादैः परिष्वक्तः सात्यकिः श्रीमतां वरः ।
ततः समधुपर्काम्भः पीत्वा कैरातकं मधु ॥ ६५
लोहिताक्षो बभौ तत्र मदविह्वललोचनः ।
आलभ्य वीरकांस्यं च हर्षेण महताऽन्वितः ॥ ६६
द्विगुणीकृततेजोभिः प्रज्वलन्निव पावकः ।
उत्सङ्गे धनुरादाय सशरं रथिनां वरः ॥ ६७
'आशीर्वादैः परिष्वक्तः सात्यकिः श्रीमतां वरः ।'
कृतस्वस्त्ययनो विप्रैः कवची समलङ्कृतः ॥ ६८
लाजैर्गन्धैस्तथा माल्यैः कन्याभिश्चाभिनन्दितः ।
युधिष्ठिरस्य चरणावभिवाद्य कृताञ्जलिः ॥ ६९
तेन मूर्धन्युपाघ्रातः कृतस्वस्त्ययनोऽपि च ।
आशिषो विविधाः श्रुत्वा धर्मराजमुखेरिताः ।
हर्षेण महता युक्त आरुरोह महारथम् ॥ ७०
ततस्ते वाजिनो हृष्टाः सुपुष्टा वातरंहसः ।
अजय्या जैत्रमूहुस्तं विकुर्वाणाः स सैन्धवाः ।
यथा शक्ररथं राजन्नूहुस्ते हरयः पुरा ॥ ७१
तथैव भीमसेनोऽपि धर्मराजेन पूजितः ।
प्रायात्सात्यकिना सार्धमभिवाद्य युधिष्ठिरम् ७२
तौ दृष्ट्वा प्रविविक्षन्तौ तव सेनामरिंदमौ ।
संयत्तास्तावकाः सर्वे तस्थुर्द्रोणपुरोगमाः ॥ ७३
सन्नद्धमनुगच्छन्तं दृष्ट्वा भीमं स सात्यकिः ।
अभिनन्द्याब्रवीद्वीरस्तदा हर्षकरं वचः ॥ ७४
त्वं भीम रक्ष राजानमेतत्कार्यतमं हि ते ।
अहं भित्त्वा प्रवेक्ष्यामि कालपक्वमिदं बलम् ॥ ७५
आयत्यां च तदात्वे च श्रेयो राज्ञोऽभिरक्षणम् ।
जानीषे मम वीर्यं त्वं तव चाहमरिंदम ।
तस्माद्भीम निवर्तस्व मम चेदिच्छसि प्रियम् ॥ ७६
सञ्जय उवाच ।
तथोक्तः सात्यकिं प्राह व्रज त्वं कार्यसिद्धये ।
अहं राज्ञः करिष्यामि रक्षां पुरुषसत्तम ॥ ७७
एवमुक्तः प्रत्युवाच भीमसेनं स माधवः ।
गच्छ गच्छ ध्रुवं पार्थ ध्रुवो हि विजयो मम ॥ ७८
यन्मे स्निग्धोऽनुरक्तश्च त्वमद्य वशमास्थितः ।
निमित्तानि च धन्यानि यथा भीम वदन्ति माम् ७९
निहते सैन्धवे पापे पाण्डवेन महात्मना ।
परिष्वजिष्ये राजानं धर्मात्मानं युधिष्ठिरम् ।

पीताः पायितपेयाः ॥ ५६ ॥ केतकैः कुन्दघटितशलाकाभिः ॥ ६१ ॥ स्वर्णनिष्कान् दीनारान् ॥ ६४ ॥ ततः समधुपर्कार्हैः पीत्वा कैलातकं मधु इति झ. ञ. पाठः । कैलावतं मधु इति ङ. पाठः ॥ ६५ ॥ आयत्यामुत्तरकाले । तदात्वे तत्क्षणे ॥ ७६

द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

'अप्रमादश्च ते कार्यो द्रोणं प्रति महारथम् ॥' ८०
सञ्जय उवाच ।
एतावदुक्त्वा भीमं तु विसृज्य च महायशाः ।
संप्रैक्षत्तावकं सैन्यं व्याघ्रो मृगगणानिव ॥ ८१
तं दृष्ट्वा प्रविविक्षन्तं सैन्यं तव जनाधिप ।
भूय एवाभवन्मूढं सुभृशं चाप्यकम्पत ॥ ८२
ततः प्रयातः सहसा तव सैन्यं स सात्यकिः ।
दिदृक्षुरर्जुनं राजन्धर्मराजस्य शासनात् ॥ ८३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

## त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

अर्जुनं गच्छतः सात्यकेः कृतवर्मणासह युद्धम् ॥ १ ॥

सञ्जय उवाच ।
प्रयाते तव सैन्यं तु युयुधाने युयुत्सया ।
धर्मराजो महाराज स्वेनानीकेन संवृतः ।
प्रायाद्द्रोणरथं प्रेप्सुर्युयुधानस्य पृष्ठतः ॥ १
ततः पाञ्चालराजस्य पुत्रः समरदुर्मदः ।
'प्रयाते माधवे राजन्निदं वचनमब्रवीत् ॥'
प्राक्रोशत्पाण्डवानीके वसुदानश्च पार्थिवः ।
आगच्छत प्रहरत द्रुतं विपरिधावत ॥ ३
यथा सुखेन गच्छेत सात्यकिर्युद्धदुर्मदः ।
महारथा हि बहवो यतिष्यन्तेऽस्य निर्जये ॥ ४
सञ्जय उवाच ।
'सेनापतिवचः श्रुत्वा पाण्डवेयाः समन्ततः ।
अभ्युद्ययुर्महाराज तव सैन्यं समन्ततः ॥ ५
जहि प्रहर गृह्णीहि विध्य विद्रव चाद्रव ।'
इति ब्रुवन्तो वेगेन निपेतुस्ते महारथाः ॥ ६
वयं प्रतिजिगीषन्तस्तत्र तान्समभिद्रुताः ।
'बाणशङ्खरवान्कृत्वा विमिश्रान्वाद्यनिस्वनैः ॥ ७
युयुधानरथं दृष्ट्वा तावका अभिदुद्रुवुः ।'
ततः शब्दो महानासीद्युयुधानरथं प्रति ॥ ८
आकीर्यमाणा धावन्ती तव पुत्रस्य वाहिनी ।
सात्वतेन महाराज शतधाऽभिव्यशीर्यत ॥ ९
तस्यां विदीर्यमाणायां शिनेः पुत्रो महारथः ।
सप्तवीरान्महेष्वासानग्रानीकेष्वपोथयत् ॥ १०
अथान्यानपि राजेन्द्र नानाजनपदेश्वरान् ।
शरैरनलसंकाशैर्निन्ये वीरान्यमक्षयम् ॥ ११
शतमेकेन विव्याध शतेनैकं च पत्रिणाम् ।
द्विपारोहान्द्विपांश्चैव हयारोहान्हयांस्तथा ।
रथिनः साश्वसूतांश्च जघानेशः पशूनिव ॥ १२
तं तथाऽद्भुतकर्माणं शरसंपातवर्षिणम् ।
न केचनाभ्यधावन्वै सात्यकिं तव सैनिकाः ॥ १३
ते भीता मृद्यमानाश्च प्रमृष्टा दीर्घबाहुना ।
आयोधनं जहुर्वीरा दृष्ट्वा तमतिमानिनम् ॥ १४
तमेकं बहुधा पश्यन्मोहितास्तस्य तेजसा ॥ १५
रथैर्विमथितैश्चैव भग्ननीडैश्च मारिष ।
चक्रैर्विमथितैश्छत्रैर्ध्वजैश्च विनिपातितैः ॥ १६
अनुकर्षैः पताकाभिः शिरस्त्राणैः सकाञ्चनैः ।
बाहुभिश्चन्दनादिग्धैः साङ्गदैश्च विशांपते ॥ १७
हस्तिहस्तोपमैश्चापि भुजङ्गाभोगसन्निभैः ।
ऊरुभिः पृथिवी च्छन्ना मनुजानां नराधिप ॥ १८
शशाङ्कसन्निभैश्चैव वदनैश्चारुकुण्डलैः ।
पतितैर्ऋषभाक्षाणां बभौ भारत मेदिनी ॥ १९
गजैश्च बहुधा छिन्नैः शयानैः पर्वतोपमैः ।
रराजातिभृशं भूमिर्विकीर्णैरिव पर्वतैः ॥ २०
तपनीयमयैर्योक्त्रैर्मुक्ताजालविभूषितैः ।
उरश्छदैर्विचित्रैश्च व्यशोभन्त तुरंगमाः ।
गतसत्वा महीं प्राप्य प्रमृष्टा दीर्घबाहुना ॥ २१
नानाविधानि सैन्यानि तव हत्वा तु सात्वतः ।
प्रविष्टस्तावकं सैन्यं द्रावयित्वा चमूं भृशम् ॥२
ततस्तेनैव मार्गेण येन यातो धनंजयः ।
इयेष सात्यकिर्गन्तुं ततो द्रोणेन वारितः ॥ २३
भारद्वाजं समासाद्य युयुधानश्च सात्यकिः ।

ईशो रुद्रः ॥ १२ ॥ ऋषभस्येवाक्षीणि येषाम् ॥ १९ ॥

न न्यवर्तत संक्रुद्धो वेलामिव जलाशयः ॥ २४
निवार्य तु रणे द्रोणो युयुधानं महारथम् ।
विव्याध निशितैर्बाणैः पञ्चभिर्मर्मभेदिभिः ॥ २५
सात्यकिस्तु रणे द्रोणं राजन्विव्याध सप्तभिः ।
हेमपुङ्खैः शिलाधौतैः कङ्कबर्हिणवाजितैः ॥ २६
तं षड्भिः सायकैर्द्रोणः साश्वयन्तारमार्दयत् ।
स तं न ममृषे द्रोणं युयुधानो महारथः ॥ २७
सिंहनादं ततः कृत्वा द्रोणं विव्याध सात्यकिः ।
दशभिः सायकैश्चान्यैः षड्भिरष्टाभिरेव च ॥ २८
युयुधानः पुनर्द्रोणं विव्याध दशभिः शरैः ।
एकेन सारथिं चास्य चतुर्भिश्चतुरो हयान् ।
ध्वजमेकेन बाणेन विव्याध युधि मारिष ॥ २९
तं द्रोणः साश्वयन्तारं सरथध्वजमाशुगैः ।
त्वरन्प्राच्छादयद्बाणैः शलभानामिव व्रजैः ॥ ३०
तथैव युयुधानोऽपि द्रोणं बहुभिराशुगैः ।
'प्राच्छादयदसंभ्रान्तस्त्वरमाणो महारथः ॥ ३१
द्रोणस्तु परमक्रुद्धः सात्यकिं परवीरहा ।
अवाकिरच्छितैर्बाणैर्वासुदेवपराक्रमम् ॥ ३२
तं तथा शरजालेन प्रच्छाद्य महता पुनः ।
द्रोणः प्रहस्य शैनेयमिदं वचनमब्रवीत् ॥' ३३
तवाचार्यो रणं हित्वा गतः कापुरुषो यथा ।
युध्यमानं च मां हित्वा प्रदक्षिणमवर्तत ॥ ३४
त्वं हि मे युध्यतो नाद्य जीवन्यास्यसि माधव ।
यदि मां त्वं रणे हित्वा न यास्याचार्यवद्द्रुतम् ॥ ३५
सात्यकिरुवाच ।
धनंजयस्य पदवीं धर्मराजस्य शासनात् ।
गच्छामि स्वस्ति ते ब्रह्मन्न मे कालात्ययो भवेत् ॥ ३६
आचार्यानुगतो मार्गः शिष्यैरन्वास्यते सदा ।
तस्मादेव व्रजाम्याशु यथा मे स गुरुर्गतः ॥ ३७
सञ्जय उवाच ।
एतावदुक्त्वा शैनेय आचार्यं परिवर्जयन् ।
प्रयातः सहसा राजन्सारथिं चेदमब्रवीत् ॥ ३८
द्रोणः करिष्यते यत्नं सर्वथा मम वारणे ।
यत्तो याहि रणे सूत शृणु चेदं वचः परम् ॥ ३९
एतदालोक्यते सैन्यमावन्त्यानां महाप्रभम् ।
अस्यानन्तरतस्त्वेतद्दाक्षिणात्यं महद्बलम् ॥ ४०
तदनन्तरमेतच्च बाह्लिकानां महद्बलम् ।
बाह्लिकाभ्याशतो युक्तं कर्णस्य च महद्बलम् ॥ ४१
अन्योन्येन हि सैन्यानि भिन्नान्येतानि सारथे ।
अन्योन्यं समुपाश्रित्य न त्यक्ष्यन्ति रणाजिरम् ॥ ४२
एतदन्तरमासाद्य चोदयाश्वान्प्रहृष्टवत् ।
मध्यमं जवमास्थाय वह मामत्र सारथे ॥ ४३
बाह्लिका यत्र दृश्यन्ते नानाप्रहरणोद्यताः ।
दाक्षिणात्याश्च बहवः सूतपुत्रपुरोगमाः ॥ ४४
हस्त्यश्वरथसंबाधं यच्चानीकं विलोक्यते ।
नानादेशसमुत्थैश्च पदातिभिरधिष्ठितम् ॥ ४५
'*ततः शक्यो महाव्यूहो भेत्तुं स सहसा रणे ।
तं देशं त्वरिता यामो मृद्नन्तो युधि शात्रवान् ॥ ४६
तत्रैते संप्रहृष्टत्वान्नास्मान्प्रति युयुत्सवः ॥ ४७
अयुध्यमानो बहुभिरेकं प्राप्य सुदुर्बलम् ।
बलं प्रमथ्य गच्छामि मिषतां सर्वधन्विनाम् ॥ ४८
मध्यतो याहि यत्रोग्रं कर्णस्य सुमहद्बलम् ।
यत्रैते परमक्रुद्धा दाक्षिणात्या महारथाः ।
एतान्विजित्य संग्रामे ततो यामो धनंजयम् ॥ ४९
सञ्जय उवाच ।
युयुधानवचः श्रुत्वा युयुधानस्य सारथिः ।
यथोक्तमगमद्राजन्वर्जयन्द्रोणमाहवे ॥' ५०
तं द्रोणोऽनुययौ क्रुद्धो विकिरन्विशिखान्बहून् ।
युयुधानं महाभागं गच्छन्तमनिवर्तिनम् ॥ ५१
स च सैन्यं महद्भित्त्वा दाक्षिणात्यबलं च तत् ।
कर्णस्य सैन्यं सुमहदभिहत्य शितैः शरैः ॥ ५२
प्राविशद्भारतीं सेनामपर्यन्तां स सात्यकिः ।
सात्यको हि ततः सैन्यं द्रावयन्स समन्ततः ॥ ५३
प्रविष्टे युयुधाने तु सैनिकेषु द्रुतेषु च ।

त्वंहि त्वमपि ॥ ३५ ॥

भिन्नानि पृथग्भूतानि ॥ ४२ ॥

* एतदादि पञ्चश्लोकानां स्थाने अधो लिखित एकएव श्लोकः झ. पुस्तकेऽस्ति ।

**एतावदुक्त्वा यन्तारं ब्राह्मणं परिवर्जयन् । | मध्यतो याहि यत्रोग्रं कर्णस्य च महद्बलम् ।**

अमर्षी कृतवर्मा तु सात्यकिं पर्यवारयत् ॥ ५४
तमापतन्तं विशिखैः षड्भिराहत्य सात्यकिः ।
चतुर्भिश्चतुरोऽस्याश्वानाजघानाशु वीर्यवान् ॥५५
ततः पुनः षोडशभिर्नतपर्वभिराशुगैः ।
सात्यकिः कृतवर्माणं प्रत्यविध्यत्स्तनान्तरे ॥५६
स ताड्यमानो विशिखैर्बहुभिस्तिग्मतेजनैः ।
सात्वतेन महाराज कृतवर्मा न चक्षमे ॥ ५७
स वत्सदन्तं संधाय तिग्मांश्वनलसप्रभम् ।
आकृष्य राजन्नाकर्णाद्विव्याधोरसि सात्यकिम् ५८
स तस्य देहावरणं भित्त्वा देहं च सायकः ।
सपुङ्खपत्रः पृथिवीं विवेश रुधिरोक्षितः ॥ ५९
अथास्य बहुभिर्बाणैरच्छिनत्परमास्त्रवित् ।
स मार्गणगणं राजन्कृतवर्मा शरासनम् ॥ ६०
विव्याध च रणे राजन्सात्यकिं सत्यविक्रमम् ।
दशभिर्विशिखैस्तीक्ष्णैरभिक्रुद्धः स्तनान्तरे ॥ ६१
ततः प्रशीर्णे धनुषि शक्त्या शक्तिमतां वरः ।
जघान दक्षिणं बाहुं सात्यकिः कृतवर्मणः ॥ ६२
ततोऽन्यत्सुदृढं चापं पूर्णमायम्य सात्यकिः ।
व्यसृजद्विशिखांस्तूर्णं शतशोऽथ सहस्रशः ॥ ६३
सरथं कृतवर्माणं समन्तात्पर्यवारयत् ।
छादयित्वा रणे राजन्हार्दिक्यं स तु सात्यकिः ।
अथास्य भल्लेन शिरः सारथेः समकृन्तत ॥ ६४
स पपात हतः सूतो हार्दिक्यस्य महारथात् ।
ततस्ते यन्तृरहिताः प्राद्रवंस्तुरगा भृशम् ॥ ६५
अथ भोजस्तु संभ्रान्तो निगृह्य तुरगान्स्वयम् ।
तस्थौ वीरो धनुष्पाणिस्तत्सैन्यान्यभ्यपूजयन् ६६
स मुहूर्तमिवाश्वास्य सदश्वान्समनोदयत् ।
व्यपेतभीरमित्राणामावहत्सुमहद्भयम् ॥ ६७
सात्यकिश्चाभ्यगात्तस्मात्स तु भीममुपाद्रवत् ॥६८
युयुधानोऽपि राजेन्द्र भोजानीकाद्विनिःसृतः ।
प्रययौ त्वरितस्तूर्णं काम्भोजानां महाचमूम् ॥६९
स तत्र बहुभिः शूरैः सन्निरुद्धो महारथैः ।
न चचाल तदा राजन्सात्यकिः सत्यविक्रमः ॥७०
संधाय च चमूं द्रोणो भोजे भारं निवेश्य च ।
अभ्यधावद्रणे यत्तो युयुधानं युयुत्सया ॥ ७१
तथा तमनुधावन्तं युयुधानस्य पृष्ठतः ।
न्यवारयन्त संहृष्टाः पाण्डुसैन्ये बृहत्तमाः ।
समासाद्य तु हार्दिक्यं रथानां प्रवरं रथम् ॥ ७२
पाञ्चाला विगतोत्साहा भीमसेनपुरोगमाः ।
विक्रम्य वारिता राजन्वीरेण कृतवर्मणा ॥ ७३
यतमानांश्च तान्सर्वानीषद्विगतचेतसः ।
अभितस्ताञ्शरौघेण क्लान्तवाहानकारयत् ॥ ७४
निगृहीतास्तु भोजेन भोजानीकेप्सवो रणे ।
अतिष्ठन्नार्यवद्वीराः प्रार्थयन्तो महद्यशः ।
'हार्दिक्यं समरे यत्ता न शेकुः प्रतिवीक्षितुम् ॥' ७५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

## चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

धृतराष्ट्रस्य स्वसैन्यपराजयश्रवणेन शोचनम् ॥ १ ॥ संजयेन तदुपालम्भपूर्वकं कृतवर्मपराक्रमकथनम् ॥ २ ॥

धृतराष्ट्र उवाच ।
एवं बहुगुणं सैन्यमेवं प्रविचितं बलम् ।
व्यूढमेवं यथान्यायमेवं बहु च सञ्जय ॥ १
नित्यं पूजितमस्माभिरभिकामं च नः सदा ।
प्रौढमत्यद्भुताकारं पुरस्ताद्दृष्टविक्रमम् ॥ २
नातिवृद्धमबालं च नाकृशं नातिपीवरम् ।
लघुवृत्तायतप्रायं सारगात्रमनामयम् ॥ ३
आत्तसन्नाहसंछन्नं बहुशस्त्रपरिच्छदम् ।

जिह्मगानिलसन्निभम् इति झ. पाठः ॥ ५८ ॥ संधाय यथास्थानमानीय ॥ ७१ ॥ आर्यवत्कुलीनवत् । कुलीनत्वादितियावत् ॥ ७५ ॥ त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

बहुगुणं बहवो गुणाः शौर्यादयः संध्यादयो वा यस्मिन् । बलं प्रबलम् ॥ १ ॥ नः अभिकाममनुरक्तम् ॥ २ ॥ लघुनो मनोज्ञस्य वृत्तस्यायतनमायामः प्रायः प्रचुरं यत्र । सारगात्रं निबि-

शस्त्रग्रहणविद्यासु बह्वीषु परिनिष्ठितम् ॥ ४
आरोहे पर्यवस्कन्दे सरणे सान्तरप्लुते ।
सम्यक्प्रहरणे याने व्यपयाने च कोविदम् ॥ ५
नागेष्वश्वेषु बहुशो रथेषु च परीक्षितम् ।
'चर्मनिस्त्रिंशयुद्धे च नियुद्धे च विशारदम् ।'
परीक्ष्य च यथान्यायं वेतनेनोपपादितम् ॥ ६
न गोष्ठ्या नोपकारेण न संबन्धनिमित्ततः ।
नानाहूतं नाप्यभृतं मम सैन्यं बभूव ह ॥ ७
कुलीनार्यजनोपेतं तुष्टपुष्टमनुद्धतम् ।
कृतमानोपचारं च यशस्वि च मनस्वि च ॥ ८
सचिवैश्चापरैर्मुख्यैर्बहुभिः पुण्यकर्मभिः
लोकपालोपमैस्तात पालितं नरसत्तमैः ॥ ९
बहुभिः पार्थिवैर्गुप्तमसत्प्रियचिकीर्षुभिः ।
अस्मानभिसृतैः कामात्सबलैः सपदानुगैः ॥ १०
महोदधिमिवापूर्णमापगाभिः समन्ततः ।
अपक्षैः पक्षिसंकाशै रथैरश्वैश्च संवृतम् ॥ ११
प्रभिन्नकरटैश्चैव द्विरदैरावृतं महत् ।
यदहन्यत मे सैन्यं किमन्यद्भागधेयतः ॥ १२
योधाक्षय्यजलं भीमं वाहनोर्मितरङ्गिणम् ।
क्षेपण्यसिगदाशक्तिशरप्रासझषाकुलम् ॥ १३
ध्वजभूषणसंबाधरत्नोपलसुसंचितम् ।
वाहनैरभिधावद्भिर्वायुवेगविकम्पितम् ॥ १४
द्रोणगम्भीरपातालं कृतवर्ममहाह्रदम् ।
जलसन्धमहाग्राहं कर्णचन्द्रोदयोद्धतम् ॥ १५
गते सैन्यार्णवं भित्त्वा तरसा पाण्डवर्षभे ।
सञ्जयैकरथेनैव युयुधाने च मामकम् ॥ १६
तत्र शेषं न पश्यामि प्रविष्टे सव्यसाचिनि ।
सात्वते च रथोदारे मम सैन्यस्य सञ्जय ॥ १७
तौ तत्र समतिक्रान्तौ दृष्ट्वाऽतीव तरस्विनौ ।
सिन्धुराजं तु संप्रेक्ष्य गाण्डीवस्य च गोचरम् ॥ १८
किं नु वा कुरवः कृत्यं विदधुः कालचोदिताः ।
दारुणैकायनेऽकाले कथं वा प्रतिपेदिरे ॥ १९
ग्रस्तान्हि कौरवान्मन्ये मृत्युना तात संगतान् ।
विक्रमोऽपि रणे तेषां न तथा दृश्यते हि वै ॥ २०
अक्षतौ संयुगे तत्र प्रविष्टौ कृष्णपाण्डवौ
न च वारयिता कश्चित्तयोरस्तीह सञ्जय ॥ २१
भृताश्च बहवो योधाः परीक्ष्यैव महारथाः ।
वेतनेन यथायोगं प्रियवादेन चापरे ॥ २२
असत्कारभृतस्तात मम सैन्ये न विद्यते ।
कर्मणा ह्यनुरूपेण लभ्यते भक्तवेतनम् ॥ २३
न च योधोऽभवत्कश्चिन्मम सैन्ये तु सञ्जय ।
अल्पदानभृतस्तात तथा चाभृतको नरः ॥ २४
पूजितो हि यथाशक्त्या दानमानासनैर्मया ।
तथा पुत्रैश्च मे तात ज्ञातिभिश्च सबान्धवैः ॥ २५
ते च प्राप्यैव संग्रामे निर्जिताः सव्यसाचिना ।
शैनेयेन परामृष्टाः किमन्यद्भागधेयतः ॥ २६
रक्ष्यते यश्च संग्रामे ये च सञ्जय रक्षिणः ।
एकः साधारणः पन्था रक्ष्यस्य सह रक्षिभिः ॥ २७
अर्जुनं समरे दृष्ट्वा सैन्धवस्याग्रतःस्थितम् ।
पुत्रो मम भृशं मूढः किं कार्यं प्रत्यपद्यत ॥ २८
सात्यकिं च रणे दृष्ट्वा प्रविशन्तमभीतवत् ।
किं नु दुर्योधनः कृत्यं प्राप्तकालममन्यत ॥ २९
सर्वशस्त्रातिगौ सेनां प्रविष्टौ रथिसत्तमौ ।
दृष्ट्वा कां वै धृतिं युद्धे प्रत्यपद्यन्त मामकाः ॥ ३०
दृष्ट्वा कृष्णं तु दाशार्हमर्जुनार्थे व्यवस्थितम् ।
शिनीनामृषभं चैव मन्ये शोचन्ति पुत्रकाः ॥ ३१
दृष्ट्वा सेनां व्यतिक्रान्तां सात्वतेनार्जुनेन च ।
पलायमानांश्च कुरून्मन्ये शोचन्ति पुत्रकाः ॥ ३२
विद्रुतान्रथिनो दृष्ट्वा निरुत्साहान्द्विषज्जये ।
पलायनकृतोत्साहान्मन्ये शोचन्ति पुत्रकाः ॥ ३३

---

ङ्गावयवम् ॥ ३ ॥ पर्यवस्कन्दे अवरोहणे । सरणे प्रसरणे । सान्तरप्लुते प्लवनान्तरितायां गतौ । व्यपयानेऽपसरणे ॥ ५ ॥ वेतनेन दिनमासवर्षदेयेन धनेन ॥ ६ ॥ गोष्ठ्या संलापमात्रेण ॥ ७ ॥ वाहनान्येवोर्मितरङ्गपरम्परा विद्यते यत्र । क्षेपण्यो यन्त्राणि ॥ १३ ॥ रत्नैरुपलैश्च सुसंचितं सुष्ठुसंछादितम् । वाहनाभिधावनान्येव वायुवेगतया रूपितानि ॥ १४ ॥ मम सैन्यस्य शेषमित्यन्वयः ॥ १७ ॥ दारुणैकायने अतिभीषणेऽनन्यगतिके । अकाले अतीते समये ॥ १९ ॥ लभ्यते सैन्येनार्थात् ॥ २३ ॥ धृतिं धारणाम् ॥ ३० ॥

शून्यान्कृतांस्त्रथोपस्थान्सात्वतेनार्जुनेन च ।
हतांश्च योधान्संदृश्य मन्ये शोचन्ति पुत्रकाः॥ ३४
व्यश्वनागरथान्दृष्ट्वा तत्र वीरान्सहस्रशः ।
धावमानान्रणे व्यग्रान्मन्ये शोचन्ति पुत्रकाः ३५
महानागान्विद्रवतो दृष्ट्वाऽर्जुनशराहतान् ।
पतितान्पततश्चान्यान्मन्ये शोचन्ति पुत्रकाः॥ ३६
विहीनांश्च कृतानश्वान्विरथांश्च कृतान्नरान् ।
तत्र सात्यकिपार्थाभ्यां मन्ये शोचन्ति पुत्रकाः३७
हयौघान्निहतान्दृष्ट्वा द्रवमाणांस्ततस्ततः ।
रणे माधवपार्थाभ्यां मन्ये शोचन्ति पुत्रकाः॥३८
पत्तिसङ्घान्रणे दृष्ट्वा धावमानांश्च सर्वशः ।
निराशा विजये सर्वे मन्ये शोचन्ति पुत्रकाः॥ ३९
द्रोणस्य समतिक्रान्तावनीकमपराजितौ ।
क्षणेन दृष्ट्वा तौ वीरौ मन्ये शोचन्ति पुत्रकाः॥ ४०
संमूढोऽसि भृशं तात श्रुत्वा कृष्णधनंजयौ ।
प्रविष्टौ मामकं सैन्यं सात्वतेन सहाच्युतौ॥ ४१
तस्मिन्प्रविष्टे पृतनां शिनीनां प्रवरे रथे ।
भोजानीकं व्यतिक्रान्ते किमकुर्वत कौरवाः॥ ४२
तथा द्रोणेन समरे निगृहीतेषु पाण्डुषु ।
कथं युद्धमभूत्तत्र तन्ममाचक्ष्व सञ्जय ॥ ४३
द्रोणो हि बलवान्श्रेष्ठः कृतास्त्रो युद्धदुर्मदः ।
पाञ्चालास्तं महेष्वासं प्रत्ययुध्यन्कथं रणे ॥ ४४
बद्धवैरास्ततो द्रोणे धनंजयजयैषिणः ।
भारद्वाजसुतस्तेषु दृढवैरो महारथः ॥ ४५
अर्जुनश्चापि यच्चक्रे सिन्धुराजवधं प्रति ।
तन्मे सर्वं समाचक्ष्व कुशलो ह्यसि सञ्जय॥ ४६
सञ्जय उवाच ।
आत्मापराधात्संभूतं व्यसनं भरतर्षभ ।
प्राप्य प्राकृतवद्वीर न त्वं शोचितुमर्हसि ॥ ४७
पुरा यदुच्यसे प्राज्ञैः सुहृद्भिर्विदुरादिभिः ।
मा हार्षीः पाण्डवान्राजन्निति तन्न त्वया श्रुतम्४८
सुहृदां हितकामानां वाक्यं यो न शृणोति ह ।
स महद्व्यसनं प्राप्य शोचते वै यथा भवान् ॥ ४९
याचितोऽसि पुरा राजन्दाशार्हेण शमं प्रति ।
न च तं लब्धवान्कामं त्वत्तः कृष्णो महायशाः ५०
तव निर्गुणतां ज्ञात्वा पक्षपातं सुतेषु च ।
द्वैधीभावं तथा धर्मे पाण्डवेषु च मत्सरम् ॥ ५१
तव जिह्ममभिप्रायं विदित्वा पाण्डवान्प्रति ।
आर्तप्रलापांश्च बहून्मनुजाधिप सत्तम ॥ ५२
सर्वलोकस्य तत्त्वज्ञः सर्वलोकेश्वरः प्रभुः ।
वासुदेवस्ततो युद्धं कुरूणामकरोन्महत् ॥ ५३
आत्मापराधात्सुमहान्प्राप्तस्ते विपुलः क्षयः ।
नैनं दुर्योधने दोषं कर्तुमर्हसि मानद ॥ ५४
न हि ते सुकृतं किंचिदादौ मध्ये च भारत ।
दृश्यते पृष्ठतश्चैव त्वन्मूलो हि पराजयः ॥ ५५
तस्मादद्य स्थिरो भूत्वा ज्ञात्वा लोकस्य निर्णयम् ।
शृणु युद्धं यथावृत्तं घोरं देवासुरोपमम् ॥ ५६
प्रविष्टे तव सैन्यं तु शैनेये सत्यविक्रमे ।
भीमसेनमुखाः पार्थाः प्रतीयुर्वाहिनीं तव ॥ ५७
आगच्छतस्तान्सहसा क्रुद्धरूपान्सहानुगान् ।
दधारैको रणे पाण्डून्कृतवर्मा महारथः ॥ ५८
यथोद्वृत्तं वारयते वेला वै सलिलार्णवम् ।
पाण्डुसैन्यं तथा सङ्ख्ये हार्दिक्यः समवारयत्॥ ५९
तत्राद्भुतमपश्याम हार्दिक्यस्य पराक्रमम् ।
यदेनं सहिताः पार्था नातिचक्रमुराहवे ॥ ६०
ततो भीमस्त्रिभिर्विद्ध्वा कृतवर्माणमाशुगैः ।
शङ्खं दध्मौ महाबाहुर्हर्षयन्सर्वपाण्डवान् ॥ ६१
सहदेवस्तु विंशत्या धर्मराजश्च पञ्चभिः ।
शतेन नकुलश्चापि हार्दिक्यं समविध्यत ॥ ६२
द्रौपदेयास्त्रिसप्तत्या सप्तभिश्च घटोत्कचः ।
धृष्टद्युम्नस्त्रिभिश्चापि कृतवर्माणमार्दयत् ॥ ६३
विराटो द्रुपदश्चैव याज्ञसेनिश्च पञ्चभिः ।
शिखण्डी चैव हार्दिक्यं विद्ध्वा पञ्चभिराशुगैः ६४
पुनर्विव्याध विंशत्या सायकानां हसन्निव ।
कृतवर्मा ततो राजन्सर्वतस्तान्महारथान् ॥ ६५
एकैकं पञ्चभिर्विद्ध्वा भीमं विव्याध सप्तभि

व्यग्राननेकाग्रान् । अव्यग्रान् पलायनैकमनस इति वा ॥ ३५॥ निर्गुणतां गुणवैषम्यम् । द्वैधीभावमनिश्चयम् ॥ ५१ ॥ सुमहान् विपुल इति पर्यायाभ्यां महत्त्वोद्रेकः ॥ ५४ ॥ निर्णयं नियतस्वभावम् ॥ ५६ ॥ सर्वतः सर्वान् ॥ ६५ ॥

धनुर्ध्वजं चास्य तदा रथाद्भूमावपातयत् ॥ ६६
अथैनं छिन्नधन्वानं त्वरमाणो महारथः ।
आजघानोरसि क्रुद्धः सप्तत्या निशितैः शरैः ॥ ६७
स गाढविद्धो बलवान्हार्दिक्यस्य शरोत्तमैः ।
चचाल रथमध्यस्थः क्षितिकम्पे यथाऽचलः ॥ ६८
भीमसेनं तथा दृष्ट्वा धर्मराजपुरोगमाः ।
विसृजन्तः शरान्राजन्कृतवर्माणमार्दयन् ॥ ६९
तं तथा कोष्ठकीकृत्य रथवंशेन मारिष ।
विव्यधुः सायकैर्हृष्टा रक्षार्थं मारुतेर्मृधे ॥ ७०
प्रतिलभ्य ततः संज्ञां भीमसेनो महाबलः ।
शक्तिं जग्राह समरे हेमदण्डामयस्मयीम् ॥ ७१
चिक्षेप च रथात्तूर्णं कृतवर्मरथं प्रति ।
सा भीमभुजनिर्मुक्ता निर्मुक्तोरगसन्निभा ॥ ७२
कृतवर्माणमभितः प्रजज्वाल सुदारुणा ।
तामापतन्तीं सहसा युगान्ताग्निसमप्रभाम् ॥ ७३
द्वाभ्यां शराभ्यां हार्दिक्यो निजघान द्विधा तदा ।
सा छिन्ना पतिता भूमौ शक्तिः कनकभूषणा ॥ ७४
द्योतयन्ती दिशो राजन्महोल्केव नभश्च्युता ।
शक्तिं विनिहतां दृष्ट्वा भीमश्चुक्रोध वै भृशम् ॥ ७५
ततोऽन्यद्धनुरादाय वेगवत्सुमहास्वनम् ।
भीमसेनो रणे क्रुद्धो हार्दिक्यं समवारयत् ॥ ७६
अथैनं पञ्चभिर्बाणैराजघान स्तनान्तरे ।
भीमो भीमबलो राजंस्तव दुर्मन्त्रितेन च ॥ ७७
भोजस्तु क्षतसर्वाङ्गो भीमसेनेन मारिष ।
रक्ताशोक इवोत्फुल्लो व्यभ्राजत रणाजिरे ॥ ७८
ततः क्रुद्धस्त्रिभिर्बाणैर्भीमसेनं हसन्निव ।
अभिहत्य दृढं युद्धे तान्सर्वान्प्रत्यविध्यत ॥ ७९
त्रिभिस्त्रिभिर्महेष्वासो यतमानान्महारथान् ।
तेऽपि तं प्रत्यविध्यन्त सप्तभिः सप्तभिः शरैः ॥ ८०
शिखण्डिनस्ततः क्रुद्धः क्षुरप्रेण महारथः ।
धनुश्चिच्छेद समरे प्रहसन्निव सात्वतः ॥ ८१
शिखण्डी तु ततः क्रुद्धश्छिन्ने धनुषि सत्वरः ।
असिं जग्राह समरे शतचन्द्रं च भास्वरम् ॥ ८२
भ्रामयित्वा महच्चर्म चामीकरविभूषितम् ।
तमसिं प्रेषयामास कृतवर्मरथं प्रति ॥ ८३
स तस्य सशरं चापं छित्त्वा राजन्महानसिः ।
अभ्यगाद्धरणीं राजंश्च्युतं ज्योतिरिवाम्बरात् ॥ ८४
एतस्मिन्नेव काले तु त्वरमाणं महारथाः ।
विव्यधुः सायकैर्गाढं कृतवर्माणमाहवे ॥ ८५
अथान्यद्धनुरादाय त्यक्त्वा तच्च महद्धनुः ।
विशीर्णं भरतश्रेष्ठ हार्दिक्यः परवीरहा ॥ ८६
विव्याध पाण्डवान्युद्धे त्रिभिस्त्रिभिरजिह्मगैः ।
शिखण्डिनं च विव्याध त्रिभिः पञ्चभिरेव च ॥ ८७
धनुरन्यत्समादाय शिखण्डी तु महायशाः ।
अवारयत्कूर्मनखैराशुगैर्हृदिकात्मजम् ॥ ८८
ततः क्रुद्धो रणे राजन्हृदिकस्यात्मसंभवः ।
अभिदुद्राव वेगेन याज्ञसेनिं महारथम् ॥ ८९
भीष्मस्य समरे राजन्मृत्योर्हेतुं महात्मनः ।
विदर्शयन्बलं शूरः शार्दूल इव कुञ्जरम् ॥ ९०
तौ दिशागजसंकाशौ ज्वलिताविव पावकौ ।
समापेततुरन्योन्यं शरसङ्घैररिंदमौ ॥ ९१
विधुन्वानौ धनुःश्रेष्ठे संदधानौ च सायकान् ।
विसृजन्तौ च शतशो गभस्तीनिव भास्करौ ॥ ९२
तापयन्तौ शरैस्तीक्ष्णैरन्योन्यं तौ महारथौ ।
युगान्तप्रतिमौ वीरौ रेजतुर्भास्कराविव ॥ ९३
कृतवर्मा च समरे याज्ञसेनिं महारथम् ।
विद्ध्वेषुभिस्त्रिसप्तत्या पुनर्विव्याध सप्तभिः ॥ ९४
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं मूर्च्छयाऽभिपरिप्लुतः ॥ ९५
तं विषण्णं रणे दृष्ट्वा तावकाः पुरुषर्षभ ।
हार्दिक्यं पूजयामासुर्वासांस्यादुधुवुश्च ह ॥ ९६
शिखण्डिनं तथा ज्ञात्वा हार्दिक्यशरपीडितम् ।
अपोवाह रणाद्यन्ता त्वरमाणो महारथम् ॥ ९७
सादितं तु रथोपस्थे दृष्ट्वा पार्थाः शिखण्डिनम् ।
परिवव्रू रथैस्तूर्णं कृतवर्माणमाहवे ॥ ९८
तत्राद्भुतं परं चक्रे कृतवर्मा महारथः ।

द्विधा स्थानद्वये ॥ ७४ ॥ कूर्मनखैः कूर्मनखाकृतिफलकैः ॥ ८८ ॥ चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

यदेकः समरे पार्थान्वारयामास सानुगान् ॥९९
पार्थाञ्जित्वाऽजयच्चेदीन्पाञ्चालान्सृञ्जयानपि ।
केकयांश्च महावीर्यान्कृतवर्मा महारथः ॥ १००
ते वध्यमानाः समरे हार्दिक्येन स पाण्डवाः ।
इतश्चेतश्च धावन्तो नैव चक्रुर्धृतिं रणे ॥ १०१
जित्वा पाण्डुसुतान्युद्धे भीमसेनपुरोगमान् ।
हार्दिक्यः समरेऽतिष्ठद्विधूम इव पावकः ॥ १०२
ते द्राव्यमाणाः समरे हार्दिक्येन महारथाः ।
विमुखाः समपद्यन्त शरवृष्टिभिरार्दिताः ॥ १०३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

---

## पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

सात्यकिना जलसन्धस्य वधः ॥ १ ॥

सञ्जय उवाच ।
शृणुष्वैकमना राजन्यन्मां त्वं परिपृच्छसि ।
द्राव्यमाणे बले तस्मिन्हार्दिक्येन महात्मना ॥ १
लज्जयावनते चापि परिहृष्टे च तावके ।
द्वीपो य आसीत्पाण्डूनामगाधे गाधमिच्छताम् ॥ २
श्रुत्वा स निनदं भीमं तावकानां महाहवे ।
शैनेयस्त्वरितो राजन्कृतवर्माणमभ्ययात् ॥ ३
उवाच सारथिं तत्र क्रोधामर्षसमन्वितः ।
हार्दिक्याभिमुखं सूत कुरु मे रथमुत्तमम् ॥ ४
कुरुते कदनं पश्य पाण्डुसैन्ये ह्यमर्षितः ।
एनं जित्वा पुनः सूत यास्यामि विजयं प्रति ॥ ५
एवमुक्ते तु वचने सूतस्तस्य महामते ।
निमेषान्तरमात्रेण कृतवर्माणमभ्ययात् ॥ ६
कृतवर्मा तु हार्दिक्यः शैनेयं निशितैः शरैः ।
अवाकिरत्सुसंक्रुद्धस्ततोऽक्रुध्यत्स सात्यकिः ॥ ७
अथाशु निशितं भल्लं शैनेयः कृतवर्मणः ।
प्रेषयामास समरे शरांश्च चतुरोऽपरान् ॥ ८
ते तस्य जघ्निरे वाहान्भल्लेनास्याच्छिनद्धनुः ।
पृष्ठरक्षं तथा सूतमविध्यन्निशितैः शरैः ॥ ९
ततस्तं विरथं कृत्वा सात्यकिः सत्यविक्रमः ।
सेनामस्यार्दयामास शरैः सन्नतपर्वभिः ॥ १०
अभज्यताथ पृतना शैनेयशरपीडिता ।
'पलायनकृतोत्साहा भ्रमन्ती तत्रतत्र ह ।'
ततः प्रायात्स त्वरितः सात्यकिः सत्यविक्रमः ११
शृणु राजन्यदकरोत्तव सैन्येषु वीर्यवान् ।
अतीत्य स महाराज द्रोणानीकमहार्णवम् ॥ १२
पराजित्य तु संहृष्टः कृतवर्माणमाहवे ।
यन्तारमब्रवीच्छूरः शनैर्याहीत्यसंभ्रमम् ॥ १३
दृष्ट्वा तु तव तत्सैन्यं रथाश्वद्विपसंकुलम् ।
पदातिजनसंपूर्णमब्रवीत्सारथिं पुनः ॥ १४
यदेतन्मेघसंकाशं द्रोणानीकस्य सव्यतः ।
सुमहत्कुञ्जरानीकं यस्य रुक्मरथो मुखम् ॥ १५
एते हि बहवः सूत दुर्निवार्याश्च संयुगे ।
दुर्योधनसमादिष्टा मदर्थे त्यक्तजीविताः ॥ १६
राजपुत्रा महेष्वासाः सर्वे विक्रान्तयोधिनः ।
'न चाजित्वा रणे ह्येताञ्शक्यः प्राप्तुं जयद्रथः ॥ १७
नापि सूत मया पार्थः शक्यः प्राप्तुं कथंचन ।
एते तिष्ठन्ति सहिताः सर्वविद्यासु निष्ठिताः ॥' १८
त्रिगर्तानां रथोदाराः सुवर्णविकृतध्वजाः ।
मामेवाभिमुखा वीरा योत्स्यमाना व्यवस्थिताः १९
अत्र मां प्रापय क्षिप्रमश्वांश्चोदय सारथे ।
त्रिगर्तैः सह योत्स्यामि भारद्वाजस्य पश्यतः ॥ २०
सञ्जय उवाच ।
ततः प्रायाच्छनैः सूतः सात्वतस्य मते स्थितः ।
रथेनादित्यवर्णेन भास्वरेण पताकिना ॥ २१
तमूहुः सारथेर्वश्या वल्गमाना हयोत्तमाः ।
वायुवेगसमाः सङ्ख्ये कुन्देन्दुरजतप्रभाः ॥ २२
आपतन्तं रणे तं तु शङ्खवर्णैर्हयोत्तमैः ।

परिवव्रुस्ततः शूरा गजानीकेन सर्वतः ।
किरन्तो विविधांस्तीक्ष्णान्सायकाँल्लघुवेधिनः २३
सात्वतोऽपि शितैर्बाणैर्गजानीकमयोधयत् ।
पर्वतानिव वर्षेण तपान्ते जलदो महान् ॥ २४
वज्राशनिसमस्पर्शैर्वध्यमानाः शरैर्गजाः
प्राद्रवन्रणमुत्सृज्य शिनिवीरसमीरितैः ॥ २५
शीर्णदन्ता विरुधिरा भिन्नमस्तकपिण्डिकाः ।
विशीर्णकर्णास्यकरा विनियन्तृपताकिनः ॥ २६
संभिन्नवर्मघण्टाश्च विनिकृत्तमहाध्वजाः ।
हतारोहा दिशो राजन्भेजिरे भ्रष्टकम्बलाः ॥२७
रुवन्तो विविधान्नादाञ्जलदोपमनिःस्वनाः ।
नाराचैर्वत्सदन्तैश्च भल्लैरञ्जलिकैस्तथा ॥ २८
क्षुरप्रैरर्धचन्द्रैश्च सात्वतेन विदारिताः ।
क्षरन्तोऽसृक्तथा मूत्रं पुरीषं च प्रदुद्रुवुः ।
बभ्रमुश्चस्खलुश्चान्ये पेतुर्मम्लुस्तथाऽपरे ॥ २९
एवं तत्कुञ्जरानीकं युयुधानेन पीडितम् ।
शरैरग्न्यर्कसंकाशैः प्रदुद्राव समन्ततः ॥ ३०
तस्मिन्हते गजानीके जलसन्धो महाबलः ।
यत्तः संप्रापयन्नागं रजताश्वरथं प्रति ॥ ३१
रुक्मवर्मधरः शूरस्तपनीयाङ्गदः शुचिः ।
कुण्डली मकुटी खड्गी रक्तचन्दनरूषितः ॥ ३२
शिरसा धारयन्दीप्तां तपनीयमयीं स्रजम् ।
उरसा धारयन्निष्कं कण्ठसूत्रं च भास्वरम् ॥ ३३
चापं च रुक्मविकृतं विधुन्वन्गजमूर्धनि ।
अशोभत महाराज सविद्युदिव तोयदः ॥ ३४
तमापतन्तं सहसा मागधस्य गजोत्तमम् ।
सात्यकिर्वारयामास वेलेव मकरालयम् ॥ ३५
नागं निवारितं दृष्ट्वा शैनेयस्य शरोत्तमैः ।
अक्रुध्यत रणे राजञ्जलसन्धो महाबलः ॥ ३६
ततः क्रुद्धो महाराज मार्गणैर्भारसाधनैः ।
अविध्यत शिनेः पौत्रं जलसन्धो महोरसि ॥ ३७
ततोऽपरेण भल्लेन पीतेन निशितेन च ।
अस्यतो वृष्णिवीरस्य निचकर्त शरासनम् ॥ ३८
सात्यकिं छिन्नधन्वानं प्रहसन्निव भारत ।
अविध्यन्मागधो वीरः पञ्चभिर्निशितैः शरैः ॥३९
स विद्धो बहुभिर्बाणैर्जलसन्धेन वीर्यवान् ।
नाकम्पत महाबाहुस्तदद्भुतमिवाभवत् ॥ ४०
अचिन्तयन्वै स शरान्नात्यर्थं संभ्रमाद्बली ।
धनुरन्यत्समादाय तिष्ठतिष्ठेत्युवाच ह ॥ ४१
एतावदुक्त्वा शैनेयो जलसन्धं महोरसि ।
विव्याध षष्ट्या सुभृशं शराणां प्रहसन्निव ॥ ४२
क्षुरप्रेण सुतीक्ष्णेन मुष्टिदेशे महद्धनुः ।
जलसन्धस्य चिच्छेद विव्याध च त्रिभिः शरैः॥४३
जलसन्धस्तु तत्त्यक्त्वा सशरं वै शरासनम् ।
तोमरं व्यसृजत्तूर्णं सात्यकिं प्रति मारिष ॥ ४४
स निर्भिद्य भुजं सव्यं माधवस्य महारणे ।
अभ्यगाद्धरणीं घोरः श्वसन्निव महोरगः ॥ ४५
निर्भिन्ने तु भुजे सव्ये सात्यकिः सत्यविक्रमः ।
त्रिंशद्भिर्विशिखैस्तीक्ष्णैर्जलसन्धमताडयत् ॥ ४६
प्रगृह्य तु ततः खड्गं जलसन्धो महाबलः ।
आर्षभं चर्म च महच्छतचन्द्रकसंकुलम् ।
आविध्य च ततः खड्गं सात्वतायोत्ससर्ज ह ॥ ४७
शैनेयस्य धनुश्छित्त्वा स खड्गो न्यपतन्महीम् ।
अलातचक्रवच्चैव व्यरोचत महीं गतः ॥ ४८
अथान्यद्धनुरादाय सर्वकायावदारणम् ।
'जलसन्धमभिप्रेक्ष्य उत्स्मयित्वा च माधवः॥'४९
शालस्कन्धप्रतीकाशमिन्द्राशनिसमस्वनम् ।
विष्फार्य विव्यधे क्रुद्धो जलसन्धं शरेण ह ॥ ५०
ततः साभरणौ बाहू क्षुराभ्यां माधवोत्तमः ।
साङ्गदौ जलसन्धस्य चिच्छेद प्रहसन्निव ॥ ५१
तौ बाहू परिघप्रख्यौ पेततुर्गजसत्तमात् ।
वसुंधराधराद्भ्रष्टौ पञ्चशीर्षाविवोरगौ ॥ ५२
ततः सुदंष्ट्रं सुहनु चारुकुण्डलमण्डितम्
क्षुरेणास्य तृतीयेन शिरश्चिच्छेद सात्यकिः ॥ ५३
तत्पातितशिरोबाहुकबन्धं भीमदर्शनम् ।
द्विरदं जलसन्धस्य रुधिरेणाभ्यषिञ्चत ॥ ५४

पिण्डिका गण्डः ॥ २६ ॥ कण्ठसूत्रं हारम् ॥ ३३ ॥ ततो ग्रहणानन्तरम् । आविध्य भ्रामयित्वा ॥ ४७ ॥ वसुंधराधरात् पर्वतात् ॥ ५२ ॥ पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

जलसन्धं निहत्याजौ त्वरमाणस्तु सात्वतः ।
त्रिसानं पातयामास गजस्कन्धाद्विशांपते ॥ ५५
रुधिरेणावसिक्ताङ्गो जलसन्धस्य कुञ्जरः ।
विलम्बमानमवहत्संश्लिष्टं परमासनम् ॥ ५६
शरार्दितः सात्वतेन मर्दमानः स्ववाहिनीम् ।
घोरमार्तस्वरं कृत्वा विदुद्राव महागजः ॥ ५७
हाहाकारो महानासीत्तव सैन्यस्य मारिष ।
जलसन्धं हतं दृष्ट्वा वृष्णीनामृषभेण तु ॥ ५८
विमुखाश्चाभ्यधावन्त तव योधाः समन्ततः ।
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ॥ ५९
एतस्मिन्नन्तरे राजन्द्रोणः शस्त्रभृतां वरः ।
'संन्यस्य भारं सुमहत्कृतवर्मणि भारत ॥ ६०
अभ्ययाज्जवनैरश्वैर्युयुधानं महारथम् ।
स हि पार्थात्रणे यत्तान्द्धारको महाबलः ॥' ६१
तमुदीर्णं तथा दृष्ट्वा शैनेयं कुरुपुङ्गवाः ।
द्रोणेनैव सह क्रुद्धाः सात्यकिं समुपाद्रवन् ॥ ६२
ततः प्रववृते युद्धं कुरूणां सात्वतस्य च ।
द्रोणस्य च रणे राजन्घोरं देवासुरोपमम् ॥ ६३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

## षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

सात्यकिना दुर्योधनकृतवर्मणोः पराजयः ॥ १ ॥

सञ्जय उवाच ।
'सात्वतस्य रणे कर्म दृष्ट्वा योद्धुं महारथाः ।
अमृष्यमाणाः संयत्ताः शैनेयं समुपाद्रवन् ॥' १
ते किरन्तः शरव्रातान्सर्वे यत्ताः प्रहारिणः ।
त्वरमाणा महाराज युयुधानमयोधयन् ॥ २
तं द्रोणः सप्तसप्तत्या जघान निशितैः शरैः ।
दुर्मर्षणो द्वादशभिर्दुःसहो दशभिः शरैः ॥ ३
विकर्णश्चापि निशितैस्त्रिंशद्भिः कङ्कपत्रिभिः ।
विव्याध मार्गणैस्तूर्णं वामपार्श्वे स्तनान्तरे ॥ ४
दुर्मुखो दशभिर्बाणैस्तथा दुःशासनोऽष्टभिः ।
चित्रसेनश्च शैनेयं द्वाभ्यां विव्याध मारिष ॥ ५
दुर्योधनश्च महता शरवर्षेण माधवम् ।
अपीडयद्रणे राजञ्शूराश्चान्ये महारथाः ॥ ६
सर्वतः प्रतिविद्धस्तु तव पुत्रैर्महारथैः ।
'स तुद्यमानश्च तदा सर्वतः कुरुपुङ्गवैः ॥' ७
तान्प्रत्यविध्यद्वार्ष्णेयः पृथक्पृथगजिह्मगैः ।
'सात्यकिः पुण्डरीकाक्षो ह्यस्त्रेषु परिनिष्ठितः ॥' ८
भारद्वाजं त्रिभिर्बाणैर्दुःसहं नवभिः शरैः ।
विकर्णं पञ्चविंशत्या चित्रसेनं च सप्तभिः ॥ ९
दुर्मर्षणं द्वादशभिरष्टाभिश्च विविंशतिम् ।
सत्यव्रतं च नवभिर्विजयं दशभिः शरैः ॥ १०
'दुर्योधनं त्रिभिर्विद्ध्वा सुपुङ्खैस्तिग्मतेजनैः ।'
ततो रुक्माङ्गदं चापं विधुन्वानो महारथः ।
अभ्ययात्सात्यकिस्तूर्णं पुत्रं तव महारथम् ॥ ११
राजानं सर्वलोकस्य सर्वलोकमहारथम् ।
शरैरभ्यहनद्गाढं ततो युद्धमभूत्तयोः ॥ १२
विमुञ्चतौ शरांस्तीक्ष्णान्संदधानौ च सायकान् ।
अदृश्यं समरेऽन्योन्यं चक्रतुस्तौ महारथौ ॥ १३
सात्यकिः कुरुराजेन निर्विद्धो बह्वशोभत ।
अस्रवद्रुधिरं भूरि स्वरसं चन्दनो यथा ॥ १४
सात्वतेन च बाणौघैर्निर्विद्धस्तनयस्तव ।
शातकुम्भमयापीडो बभौ यूप इवोच्छ्रितः ॥ १५
माधवस्तु रणे राजन्कुरुराजस्य धन्विनः ।
धनुश्चिच्छेद समरे क्षुरप्रेण हसन्निव ॥ १६
अथैनं छिन्नधन्वानं शरैर्बहुभिराचिनोत् ।
निर्भिन्नश्च शरैस्तेन द्विषता क्षिप्रकारिणा ।
नामृष्यत रणे राजा शत्रोर्विजयलक्षणम् ॥ १७
अथान्यद्धनुरादाय हेमपृष्ठं दुरासदम् ।

रुक्माङ्गदं चापि इति ङ. पाठः ॥ ११ ॥

चन्दनो रक्तचन्दनः ॥ १४ ॥

विव्याध सात्यकिं तूर्णं सायकानां शतेन ह ॥ १८
सोऽतिविद्धो बलवता तव पुत्रेण धन्विना ।
अमर्षवशमापन्नस्तव पुत्रमपीडयत् ॥ १९
पीडितं नृपतिं दृष्ट्वा तव पुत्रं महारथाः ।
सात्यकिं शरवर्षेण छादयामासुरोजसा ॥ २०
स च्छाद्यमानो बहुभिस्तव पुत्रैर्महारथैः ।
एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ।
दुर्योधनं च त्वरितो विव्याधाष्टभिराशुगैः ॥ २१
प्रहसंश्चास्य चिच्छेद कार्मुकं रिपुभीषणम् ।
नागं मणिमयं चैव शरैर्ध्वजमपातयत् ॥ २२
हत्वा तु चतुरो वाहांश्चतुर्भिर्निशितैः शरैः ।
सारथिं पातयामास क्षुरप्रेण महायशाः ॥ २३
एतस्मिन्नन्तरे चैव कुरुराजं महारथम् ।
अवाकिरच्छरैर्हृष्टो बहुभिर्मर्मभेदिभिः ॥ २४
स विध्यमानः समरे शैनेयस्य शरोत्तमैः ।
प्राद्रवत्सहसा राजन्पुत्रो दुर्योधनस्तव ।
आप्लुतश्च ततो यानं चित्रसेनस्य धन्विनः ॥ २५
हाहाभूतं जगच्चासीद्दृष्ट्वा राजानमाहवे ।
ग्रस्यमानं सात्यकिना खे सोममिव राहुणा ॥ २६
तं तु शब्दमथ श्रुत्वा कृतवर्मा महारथः ।
अभ्ययात्सहसा तत्र यत्रास्ते माधवः प्रभुः ॥ २७
विधुन्वानो धनुः श्रेष्ठं चोदयंश्चैव वाजिनः ।
भर्त्सयन्सारथिं चाग्रे याहियाहीति सत्वरम् ॥ २८
तमापतन्तं संप्रेक्ष्य व्यादितास्यमिवान्तकम् ।
युयुधानो महाराज यन्तारमिदमब्रवीत् ॥ २९
कृतवर्मा रथेनैष द्रुतमापतते शरी ।
प्रत्युद्याहि रथेनैनं प्रवरं सर्वधन्विनाम् ॥ ३०
'प्रयाहि सत्वरं सूत रथेन रथसत्तमम् ।
निहनिष्यामि तं सङ्ख्ये वृष्णिवीरमरिंदमम् ॥' ३१
ततः प्रजविताश्वेन रथेन रथिनांवरः ।
आससाद रणे भोजं प्रतिमानं धनुष्मताम् ॥३२
ततो गभस्तिमत्प्रख्यौ ज्वलिताविव पावकौ ।
समेयातां नरव्याघ्रौ व्याघ्राविव तरस्विनौ ॥ ३३
कृतवर्मा तु शैनेयं षड्विंशत्या समार्पयत् ।
निशितैः सायकैस्तीक्ष्णैर्यन्तारं चास्य पञ्चभिः ३४
चतुरश्चतुरो वाहांश्चतुर्भिः परमेषुभिः ।
अविध्यत्साधुदान्तान्वै सैन्धवान्सात्वतस्य हि ३५
रुक्मध्वजो रुक्मपृष्ठं महद्विस्फार्य कार्मुकम् ।
रुक्माङ्गदी रुक्मवर्मा रुक्मपुङ्खैरवारयत् ॥ ३६
ततोऽशीतिं शिनेः पौत्रः सायकान्कृतवर्मणे ।
प्राहिणोत्त्वरया युक्तो द्रष्टुकामो धनंजयम् ॥ ३७
सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ।
समकम्पत दुर्धर्षः क्षितिकम्पे यथाऽचलः ॥ ३८
त्रिषष्ट्या चतुरोऽस्याश्वान्सप्तभिः सारथिं तथा ।
विव्याध निशितैस्तूर्णं सात्यकिः सत्यविक्रमः ३९
'हताश्वसूते तु रथे स्थिताय शिनिपुङ्गवः ।'
सुवर्णपुङ्खं विशिखं समादाय च सात्यकिः ।
व्यसृजत्तं महाज्वालं संक्रुद्धमिव पन्नगम् ॥ ४०
सोऽविध्यत्कृतवर्माणं यमदण्डोपमः शरः ।
जाम्बूनदविचित्रं च वर्म निर्भिद्य भानुमत् ।
अभ्यगाद्धरणीमुग्रो रुधिरेण समुक्षितः ॥ ४१
संजातरुधिरश्चाजौ सात्वतेषुभिरार्दितः ।
सशरं धनुरुत्सृज्य न्यपतत्स्यन्दनोत्तमात् ॥ ४२
स सिंहदंष्ट्रो जानुभ्यां पतितोऽमितविक्रमः
शरार्दितः सात्यकिना रथोपस्थे नरर्षभः ॥ ४३
सहस्रबाहुसदृशमक्षोभ्यमिव सागरम् ।
निवार्य कृतवर्माणं सात्यकिः प्रययौ ततः ॥ ४४
'न हि तस्य शरोऽपार्थः कथंचिदपि पार्थिव ।
दिदृक्षुः स हि वेगेन प्रायाद्यत्र धनंजयः ॥ ४५
स शक्त्या क्षत्रियैस्तत्र निरुद्धो बलवत्तरः ।
युयुधे सात्वतो राजन्दिदृक्षुः पाण्डुनन्दनम् ॥' ४६
खड्गशक्तिधनुःकीर्णां गजाश्वरथसंकुलाम् ।
प्रवर्तितोग्ररुधिरां शतशः क्षत्रियर्षभैः ॥ ४७
प्रेक्षतां सर्वसैन्यानां मध्येन शिनिपुङ्गवः ।
अभ्यगाद्वाहिनीं हित्वा वृत्रहेवासुरीं चमूम् ॥ ४८

षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

दंष्ट्राश्चतस्रो यस्य स्युर्दशनेभ्यः समुच्छ्रिताः । सिंहदंष्ट्रः स गदितश्चतुर्दंष्ट्रश्च सूरिभिः ॥ ४३ ॥

समाश्वस्य च हार्दिक्यो गृह्य चान्यन्महद्धनुः । तस्थौ स तत्र बलवान्वारयन्युधि पाण्डवान् ॥ ४९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

## सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

सात्यकिपराक्रमवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
कात्यमानेषु सैन्येषु शैनेयेन ततस्ततः ।
भारद्वाजः शरव्रातैर्मर्मभिद्भिरवाकिरत् ॥ १
स संप्रहारस्तुमुलो द्रोणसात्वतयोरभूत् ।
पश्यतां सर्वसैन्यानां बलिवासवयोरिव ॥ २
ततो द्रोणः शिनेः पौत्रं चित्रैः सर्वायसैः शरैः ।
त्रिभिराशीविषाकारैर्ललाटे समविध्यत ॥ ३
तैर्ललाटार्पितैर्बाणैर्युयुधानस्त्वजिह्मगैः ।
व्यरोचत महाराज त्रिशृङ्ग इव पर्वतः ॥ ४
ततोऽस्य बाणानपरानिन्द्राशनिसमस्वनान् ।
भारद्वाजोऽन्तरप्रेक्षी प्रेषयामास संयुगे ॥ ५
तान्द्रोणचापनिर्मुक्तान्दाशार्हः पततः शरान् ।
द्वाभ्यांद्वाभ्यां सुपुङ्खाभ्यां चिच्छेद परमास्त्रवित् ६
तामस्य लघुतां द्रोणः समवेक्ष्य विशांपते ।
प्रहस्य सहसाऽविध्यत्त्रिंशता शिनिपुङ्गवम् ॥ ७
पुनः पञ्चशतेषूणां शितेन च समार्पयत् ।
लघुतां युयुधानस्य लाघवेन विशेषयन् ॥ ८
समुत्पतन्ति वल्मीकाद्यथा क्रुद्धा महोरगाः ।
तथा द्रोणरथाद्राजन्नापतन्ति तनुच्छिदः ॥ ९
तथैव युयुधानेन सृष्टाः शतसहस्रशः ।
अवाकिरन्द्रोणरथं शरा रुधिरभोजनाः ॥ १०
लाघवाद्द्विजमुख्यस्य सात्वतस्य च मारिष ।
विशेषं नाध्यगच्छाम समावास्तां नरर्षभौ ॥ ११
सात्यकिस्तु ततो द्रोणं नवभिर्नतपर्वभिः ।
आजघान भृशं क्रुद्धो ध्वजं च निशितैः शरैः ॥ १२
सारथिं च शतेनैव भारद्वाजस्य पश्यतः ।
लाघवं युयुधानस्य दृष्ट्वा द्रोणो महारथः ॥ १३
सप्तत्या सारथिं विद्ध्वा तुरङ्गांश्च त्रिभिस्त्रिभिः ।
ध्वजमेकेन चिच्छेद माधवस्य रथे स्थितम् ॥ १४
अथापरेण भल्लेन हेमपुङ्खेन पत्रिणा ।
धनुश्चिच्छेद समरे माधवस्य महात्मनः ॥ १५
सात्यकिस्तु ततः क्रुद्धो धनुस्त्यक्त्वा महारथः ।
गदां जग्राह महतीं भारद्वाजाय चाक्षिपत् ॥ १६
तामापतन्तीं सहसा पट्टबद्धामयस्मयीम् ।
न्यवारयच्छरैर्द्रोणो बहुभिर्बहुरूपिभिः ॥ १७
अथान्यद्धनुरादाय सात्यकिः सत्यविक्रमः ।
विव्याध बहुभिर्वीरं भारद्वाजं शिलाशितैः ॥ १८
स विद्ध्वा समरे द्रोणं सिंहनादममुञ्चत ।
तं वै न मृमषे द्रोणः सिंहनादं महात्मनः ॥ १९
ततः शक्तिं रणे द्रोणो रुक्मदण्डामयस्मयीम् ।
तरसा प्रेषयामास माधवस्य रथं प्रति ॥ २०
अनासाद्य तु शैनेयं सा शक्तिः कालसन्निभा ।
भित्त्वा रथं जगामोग्रा धरणीं दारुणस्वना ॥ २१
ततो द्रोणं शिनेः पौत्रो राजन्विव्याध पत्रिणा ।
दक्षिणं भुजमासाद्य पीडयन्भरतर्षभ ॥ २२
द्रोणोऽपि समरे राजन्माधवस्य महद्धनुः ।
अर्धचन्द्रेण चिच्छेद रथशक्त्या च सारथिम् ॥ २३
मुमोह सारथिस्तस्य रथशक्त्या समाहतः
स रथोपस्थमासाद्य मुहूर्तं संन्यषीदत ॥ २४
चकार सात्यकी राजंस्तत्र कर्मातिमानुषम् ।
अयोधयच्च यद्द्रोणं रश्मीञ्जग्राह च स्वयम् ॥ २५
ततः शरशतेनैव युयुधानो महारथः ।
अविध्यद्ब्राह्मणं सङ्ख्ये हृष्टरूपो विशांपते ॥ २६
तस्य द्रोणः शरान्पञ्च प्रेषयामास भारत ।
ते घोराः कवचं भित्त्वा पपुः शोणितमाहवे ॥ २७
निर्विद्धस्तु शरैर्घोरैरक्रुध्यत्सात्यकिर्भृशम् ।

रथशक्त्या केतकपत्राकारमुखया शक्त्या ॥ २३ ॥

। सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

सायकान्व्यसृजच्चापि वीरो रुक्मरथं प्रति ॥ २८
ततो द्रोणस्य यन्तारं निपात्यैकेषुणा भुवि ।
अश्वान्व्यद्रावयद्बाणैर्हतसूतांस्ततस्ततः ॥ २९
स रथः प्रद्रुतः सङ्ख्ये मण्डलानि सहस्रशः ।
चकार राजतो राजन्भ्राजमान इवांशुमान् ॥ ३०
अभिद्रवत गृह्णीत हयान्द्रोणस्य धावत ।
इति स्म चुक्रुशुः सर्वे राजपुत्राः सराजकाः ॥ ३१
ते सात्यकिमपास्याशु राजन्युधि महारथाः
यतो द्रोणस्ततः सर्वे सहसा समुपाद्रवन् ॥ ३२
तान्दृष्ट्वा प्रद्रुतान्सङ्ख्ये सात्वतेन शरार्दितान् ।
प्रभग्नं पुनरेवासीत्तव सैन्यं समाकुलम् ॥ ३३
व्यूहस्यैव पुनर्द्वारं गत्वा द्रोणो व्यवस्थितः ।
वातायमानैस्तैरश्वैर्नीतो वृष्णिशरार्दितैः ॥ ३४
पाण्डुपाञ्चालसंभिन्नं व्यूहमालोक्य वीर्यवान् ।
शैनेये नाकरोद्यत्नं व्यूहमेवाभ्यरक्षत ॥ ३५
निवार्य पाण्डुपाञ्चालान्द्रोणाग्निः प्रदहन्निव ।
तस्थौ क्रोधेध्मसंदीप्तः कालसूर्य इवोद्यतः ॥ ३६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

---

## अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

सात्यकिना सुदर्शननाम्नो राज्ञो वधः ॥ १ ॥

सञ्जय उवाच ।
द्रोणं स जित्वा पुरुषप्रवीर-
स्तथैव हार्दिक्यमुखांस्त्वदीयान् ।
प्रहस्य सूतं वचनं बभाषे
शिनिप्रवीरः कुरुपुङ्गवाग्र्य ॥
निमित्तमात्रं वयमद्य सूत
दग्धा रथाः केशवफल्गुनाभ्याम्
हतान्निहन्मेह नरर्षभेण
वयं सुरेशात्मसमुद्भवेन ॥
सञ्जय उवाच ।
तमेवमुक्त्वा शिनिपुङ्गवस्तदा
महामृधे सोऽग्र्यधनुर्धरोऽरिहा ।
किरन्समन्तात्सहसा शरान्बली
समापतच्छ्येन इवामिषाशया ॥
तं यान्तमश्वैः शशिशङ्खवर्णै-
र्विगाह्य सैन्यं पुरुषप्रवीरम् ।
नाशक्नुवन्वारयितुं समन्ता-
दादित्यरश्मिप्रतिमं रथाग्र्यम् ॥
असह्यविक्रान्तमदीनसत्त्वं
सर्वे गणा भारत ये त्वदीयाः ।
सहस्रनेत्रप्रतिमप्रभाव
दिवीव सूर्यं जलदव्यपाये ॥ ५
अमर्षपूर्णस्त्वतिचित्रयोधी
शरासनी काञ्चनवर्मधारी ।
सुदर्शनः सात्यकिमापतन्तं
न्यवारयद्राजवरः प्रसह्य ॥ ६
तयोरभूद्भारत संप्रहारः
सुदारुणस्तं समतिप्रशंसन् ।
योधास्त्वदीयाश्च हि सोमकाश्च
वृत्रेन्द्रयोर्युद्धमिवामरौघाः ॥ ७
शरैः सुतीक्ष्णैः शतशोऽभ्यविध्य-
त्सुदर्शनः सात्वतमुख्यमाजौ ।
अनागतानेव तु तान्पृषत्कां-
श्चिच्छेद राजञ्शिनिपुङ्गवोऽपि ॥ ८
तथैव शक्रप्रतिमोऽपि सात्यकिः
सुदर्शने यान्क्षिपति स्म सायकान् ।
द्विधा त्रिधा तानकरोत्सुदर्शनः
शरोत्तमैः स्यन्दनवर्यमास्थितः ॥ ९
तान्वीक्ष्य बाणान्निहतांस्तदानीं
सुदर्शनः सात्यकिबाणवेगैः ।

क्रोधाद्दिधक्षन्निव तिग्मतेजाः
शरानमुञ्चत्तपनीयचित्रान् ॥ १०
पुनः स बाणैस्त्रिभिरग्निकल्पै-
राकर्णपूर्णैर्निशितैः सुपुङ्खैः ।
विव्याध देहावरणं विभिद्य
ते सात्यकेराविविशुः शरीरम् ॥ ११
तथैव तस्यावनिपालपुत्रः
संधाय बाणैरपरैर्ज्वलद्भिः ।
आजघ्निवांस्तान्रजतप्रकाशां-
श्चतुर्भिरश्वांश्चतुरः प्रसह्य ॥ १२
तथा तु तेनाभिहतस्तरस्वी
नप्ता शिनेरिन्द्रसमानवीर्यः ।
सुदर्शनस्येषुगणैः सुतीक्ष्णै-
र्हयान्निहत्याशु ननाद नादम् ॥ १३
अथास्य सूतस्य शिरो निकृत्य
भल्लेन शक्राशनिसन्निभेन ।
सुदर्शनस्यापि शिनिप्रवीरः
क्षुरेण कालानलसंनिभेन ॥ १४
सकुण्डलं पूर्णशशिप्रकाशं
भ्राजिष्णु वक्त्रं विचकर्त देहात् ।
यथा पुरा वज्रधरः प्रसह्य
बलस्य सङ्ख्येऽतिबलस्य राजन् ॥ १५
निहत्य तं पार्थिवपुत्रपौत्रं
रणे यदूनामृषभस्तरस्वी ।
मुदा समेतः परया महात्मा
रराज राजन्सुरराजकल्पः ॥ १६
ततो ययावर्जुनमेव वीरो
निवार्य सैन्यं तव मार्गणौघैः ।
सदश्वयुक्तेन रथेन राजँ-
ल्लोकं विसिस्मापयिषुर्नृवीरः ॥ १७
तत्तस्य विस्मापयनीयमग्र्य-
मपूजयन्योधवराः समेताः ।
प्रवर्तमानानिषुगोचरेऽरी-
न्ददाह बाणैर्हुतभुग्यथैव ॥ १८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

## एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

सात्यकिपराक्रमवर्णनम् ॥ १ ॥

'सञ्जय उवाच ।
निर्जित्य कृतवर्माणं भारद्वाजं च संयुगे ।
स सात्यकिः सत्यधृतिर्महात्मा शिनिपुङ्गवः ॥ १
दुर्योधनं च निर्जित्य शूरं चैव सुयोधनम् ।
जलसन्धं निहत्याजौ शूरसेनं च पार्थिवम् ॥ २
म्लेच्छांश्च बहुधा राजन्काश्यपुत्रं च संयुगे ।
निषादांस्तङ्गणांश्चैव कलिङ्गान्मगधानपि ॥ ३
केकयाञ्छूरसेनांश्च तथा पर्वतवासिनः ।
काम्भोजान्यवनांश्चैव वसातींश्च शिबीनपि ॥ ४
कोसलान्मगधांश्चैव यातुधानान्सतित्तिरान् ।
एतांश्चान्यान्रणे हत्वाऽगच्छद्युद्धे स सात्यकिः ॥५
रुधिरौघनदीं घोरां केशशैवालशाद्वलाम् ।
शक्तिग्राहसमाकीर्णां छत्रहंसोपशोभिताम् ॥ ६
दुस्तरां भीरुभिर्नित्यं शूरलोकप्रवाहिनीम् ।
प्रवर्त्य हृषितो राजन्पुनर्यन्तारमब्रवीत् ॥ ७
ध्वजनागाश्वकलिलं शरशक्त्यूर्मिमालिनम् ।'

अग्र्यं प्रधानं कर्म ॥ १८ ॥

अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

* एतदादिसार्धसप्तश्लोकस्थाने वक्ष्यमाणः सार्धएव श्लोकः झ. पुस्तकेऽस्ति ।
सञ्जय उवाच ।
ततः स सात्यकिर्धीमान्महात्मा वृष्णिपुङ्गवः ।
सुदर्शनं निहत्याजौ यन्तारं पुनरब्रवीत् ॥
रथाश्वनागकलिलं शरशक्त्यूर्मिमालिनम् ।

खड्गमत्स्यं गदाग्राहं शूरायुधमहास्वनम् ॥ ८
प्राणापहारिणं रौद्रं वादित्रोत्क्रुष्टनादितम् ।
शूराणां सुखसंस्पर्शमस्पृश्यमथ भीरुणाम् ।
तीर्णाः स्म दुस्तरं तात द्रोणानीकमहार्णवम् ॥ ९
जलसन्धबलेनाजौ पुरुषादैरिवावृतम् ।
अतोऽन्यत्पृतनाशेषं मन्ये कुनदिकामिव ॥ १०
तर्तव्यामल्पसलिलां चोदयाश्वानसंभ्रमम् ।
हस्तप्राप्तमहं मन्ये सांप्रतं सव्यसाचिनम् ॥ ११
निर्जित्य दुर्धरं द्रोणं सपदानुगमाहवे ।
हार्दिक्यं योधवर्यं च मन्ये प्राप्तं धनञ्जयम् ॥ १२
न हि मे जायते त्रासो दृष्ट्वा सैन्यान्यनेकशः ।
वह्नेरिव प्रदीप्तस्य वने शुष्कतृणालयम् ॥ १३
पश्य पाण्डवमुख्येन यातां भूमिं किरीटिना ।
पत्त्यश्वरथनागौघैः पतितैर्विषमीकृताम् ॥ १४
द्रवते तद्यथा सैन्यं तेन भग्नं महात्मना ।
रथैर्विपरिधावद्भिर्गजैरश्वैश्च सारथे ।
कौशेयारुणसंकाशमेतदुद्धूयते रजः ॥ १५
अभ्याशस्थमहं मन्ये श्वेताश्वं कृष्णसारथिम् ॥ १६
श्रूयते ह्येष निर्घोषो जलदस्येव गर्जतः ।
विष्फार्यमाणस्य रणे गाण्डीवस्यामितौजसः ॥ १७
अभ्याशस्थमहं मन्ये सैन्धवस्य किरीटिनम् ।
तादृशः श्रूयते शब्दः सैन्यानां सागरोपमः ॥१८
यादृशानि निमित्तानि मम प्रादुर्भवन्ति वै ।
अनस्तंगत आदित्ये हन्ता सैन्धवमर्जुनः ॥ १९
शनैर्विस्रम्भयन्नश्वान्याहि यत्रारिवाहिनी ॥ २०
यत्रैते सतलत्राणाः सुयोधनपुरोगमाः
दंशिताः क्रूरकर्माणः काम्भोजा युद्धदुर्मदाः ॥२१
शरबाणासनधरा यवनाश्च प्रहारिणः ।
शकाः किराता दरदा बर्बरास्ताम्रलिप्तकाः ॥ २२
अन्ये च बहवो म्लेच्छा विविधायुधपाणयः
मामेवाभिमुखाः सर्वे तिष्ठन्ति समरार्थिनः ॥ २३
एतान्सरथनागाश्वान्निहत्याजौ सपत्तिनः ।
इदं दुर्गं महाघोरं तीर्णमेवोपधारय ॥ २४

सूत उवाच ।
न संभ्रमो मे वार्ष्णेय विद्यते सत्यविक्रम ।
यद्यपि स्यात्तव क्रुद्धो जामदग्न्योऽग्रतः स्थितः ॥२५
द्रोणो वा रथिनां श्रेष्ठः कृपो मद्रेश्वरोऽपि वा ।
तथापि संभ्रमो न स्यात्त्वामाश्रित्य महाभुज ॥ २६
त्वया सुबहवो युद्धे निर्जिताः शत्रुसूदन ।
दंशिताः क्रूरकर्माणः काम्भोजा युद्धदुर्मदाः ॥२७
शरबाणासनधरा यवनाश्च प्रहारिणः ।
शकाः किराता दरदा बर्बरास्ताम्रलिप्तकाः ।
अन्ये च बहवो म्लेच्छा विविधायुधपाणयः ॥ २८
न च मे संभ्रमः कश्चिद्भूतपूर्वः कथंचन ।
किमुतैतत्समासाद्य धीर संयुगगोष्पदम् ॥ २९
आयुष्मन्कतरेण त्वां प्रापयामि धनञ्जयम् ।
केभ्यः क्रुद्धोऽसि वार्ष्णेय कान्स्विन्मृत्युरुपस्थितः ॥
केषां सङ्गमनीकस्य हन्तुमुत्सहते मनः ।
के त्वां युधि पराक्रान्तं कालान्तकयमोपमम् ॥ ३१
दृष्ट्वा विक्रमसंपन्नं विद्रविष्यन्ति संयुगे ।
केषां वैवस्वतो राजा स्मरतेऽद्य महाभुज ॥ ३२

सात्यकिरुवाच
मुण्डानेतान्हनिष्यामि दानवानिव वासवः
प्रतिज्ञां पारयिष्यामि काम्भोजानेव मां वह ॥ ३३
अन्येषां कदनं कृत्वा क्षिप्रं यास्यामि पाण्डवम् ३४
अद्य द्रक्ष्यन्ति मे वीर्यं कौरवाः ससुयोधनाः ।
मुण्डानीके हते सूत सर्वसैन्येषु चासकृत् ॥ ३५
अद्य कौरवसैन्यस्य दीर्यमाणस्य संयुगे ।
श्रुत्वा विरावं बहुधा संतप्स्यति सुयोधनः ॥ ३६
अद्य पाण्डवमुख्यस्य श्वेताश्वस्य महात्मनः ।
आचार्यककृतं मार्गं दर्शयिष्यामि संयुगे ॥ ३७
अद्य मद्बाणनिहतान्योधमुख्यान्सहस्रशः ।
दृष्ट्वा दुर्योधनो राजा पश्चात्तापं गमिष्यति ॥३८
अद्य मे क्षिप्रहस्तस्य क्षिपतः सायकोत्तमान्
अलातचक्रप्रतिमं धनुर्द्रक्ष्यन्ति कौरवाः ॥ ३९
मत्सायकचिताङ्गानां रुधिरं स्रवतां मुहुः ।

---

विस्रम्भयन् आश्वासयन् ॥ २० ॥

पारयिष्यामि समापयिष्यामि ॥ ३३ ॥

सैनिकानां वधं दृष्ट्वा संतप्स्यति सुयोधनः ॥४०
अद्य मे क्रुद्धरूपस्य निघ्नतश्च वरान्वरान् ।
द्विफल्गुनमिमं लोकं मंस्यतेऽद्य सुयोधनः ॥ ४१
अद्य राजसहस्राणि निहतानि मया रणे ।
दृष्ट्वा दुर्योधनो राजा संतप्स्यति महामृधे ॥ ४२
अद्य स्नेहं च भक्तिं च पाण्डवेषु महात्मसु ।
हत्वा राजसहस्राणि दर्शयिष्यामि राजसु ॥ ४३
बलं वीर्यं कृतज्ञत्वं मम ज्ञास्यन्ति कौरवाः ॥४४
सञ्जय उवाच ।
एवमुक्तस्तदा सूतः शिक्षितान्साधुवाहिनः ।
शशाङ्कसन्निकाशान्वै वाजिनो व्यनुदद्भृशम् ॥४५
ते पिबन्त इवाकाशं युयुधानं हयोत्तमाः ।
प्रापयन्यवनाञ्शीघ्रं मनःपवनरंहसः ॥ ४६
सात्यकिं ते समासाद्य पृतनास्वनिवर्तिनम् ।
बहवो लघुहस्ताश्च शरवर्षैरवाकिरन् ॥ ४७
तेषामिषूनथास्त्राणि वेगवान्नतपर्वभिः ।
अच्छिनत्सात्यकी राजन्नैनं ते प्राप्नुवञ्शराः ॥ ४८
रुक्मपुङ्खैः सुनिशितैर्गार्ध्रपत्रैरजिह्मगैः ।
उच्चकर्त शिरांस्युग्रो यवनानां भुजानपि ॥ ४९
शैक्यायसानि वर्माणि कांस्यानि च समन्ततः ।
भित्त्वा देहांस्तथा तेषां शरा जग्मुर्महीतलम् ॥ ५०
ते हन्यमाना वीरेण म्लेच्छाः सात्यकिना रणे ।
शतशोऽभ्यपतंस्तत्र व्यसवो वसुधातले ॥ ५१
सुपूर्णायतमुक्तैस्तानव्यवच्छिन्नपिण्डितैः ।
पञ्च षट् सप्त चाष्टौ च बिभेद यवनाञ्शरैः ॥ ५२
काम्भोजानां सहस्रैश्च शकानां च विशांपते ।
शबराणां किरातानां बर्बराणां तथैव च ॥ ५३
अगम्यरूपां पृथिवीं मांसशोणितकर्दमाम् ।
कृतवांस्तत्र शैनेयः क्षपयंस्तावकं बलम् ॥ ५४
दस्यूनां सशिरस्त्राणैः शिरोभिर्लूनमूर्धजैः ।
दीर्घकूर्चैर्मही कीर्णा विबर्हैरण्डजैरिव ॥ ५५
रुधिरोक्षितसर्वाङ्गैस्तैस्तदायोधनं बभौ ।
कबन्धैः संवृतं सर्वं ताम्राभ्रैः खमिवावृतम् ॥ ५६
वज्राशनिसमस्पर्शैः सुपर्वभिरजिह्मगैः ।
ते सात्वतेन निहताः समावव्रुर्वसुंधराम् ॥ ५७
'तेषामस्त्राणि बाणांश्च शैनेयो नतपर्वभिः ।
निचकर्त महाराज यवनानां शिरोधराः ॥ ५८
ते शरा नतपर्वाणो युयुधानप्रचोदिताः ।
हित्वा देहांस्तथा तेषां पतन्ति स्म महीतले ॥ ५९
ते हन्यमाना वीरास्तु वृष्णिवीरेण संयुगे ।
शस्त्राहताः पतन्त्युर्व्यां काम्भोजाः सपदानुगाः ॥
काम्भोजानां भुजैश्छिन्नैर्यवनानां च भारत ।
तत्रतत्र मही भाति पञ्चास्यैरिव पन्नगैः ॥' ६१
अल्पावशिष्टाः संभग्नाः कृच्छ्रप्राणा विचेतसः ।
जिताः सङ्ख्ये महाराज युयुधानेन दंशिताः ॥ ६२
पार्ष्णिभिश्च कशाभिश्च ताडयन्तस्तुरंगमान् ।
जवमुत्तममास्थाय सर्वतः प्राद्रवन्भयात् ॥ ६३
काम्भोजसैन्यं विद्राव्य दुर्जयं युधि भारत ।
यवनानां च तत्सैन्यं शकानां च महद्बलम् ॥ ६४
ततः स पुरुषव्याघ्रः सात्यकिः सत्यविक्रमः ।
प्रहृष्टस्तावकाञ्जित्वा सूतं याहीत्यचोदयत् ॥ ६५
तत्तस्य समरे कर्म दृष्ट्वाऽन्यैरकृतं पुरा ।
चारणाः सहगन्धर्वाः पूजयांचक्रिरे भृशम् ॥ ६६
तं यान्तं पृष्ठगोप्तारमर्जुनस्य विशांपते ।
चारणाः प्रेक्ष्य संहृष्टास्त्वदीयाश्चाभ्यपूजयन् ॥६७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

## विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

सात्यकियुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
जित्वा यवनकाम्भोजान्युयुधानस्ततोऽर्जुनम् ।
जगाम तव सैन्यस्य मध्येन रथिनां वरः ॥ १
शरदंष्ट्रो नरव्याघ्रो विचित्रकवचच्छविः ।

---

शैक्यायसानि शोणितायोमयानि ॥ ५० ॥ सुपूर्णायतमुक्तैरा-कर्णज्योत्सृष्टैः । अव्यवच्छिन्नपिण्डितैरनवच्छिन्नसंहतैः ॥ ५२ ॥

एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

मृगं व्याघ्र इवाजिघ्रंस्तव सैन्यमभीषयत् ॥ २
स रथेन चरन्मार्गान्धनुरुद्भ्रामयन्भृशम् ।
रुक्मपृष्ठं महावेगं रुक्मचन्द्रकसंकुलम् ॥ ३
रुक्माङ्गदशिरस्त्राणो रुक्मवर्मसमावृतः ।
रुक्मध्वजधनुः शूरो मेरुशृङ्गमिवाबभौ ॥ ४
सधनुर्मण्डलः सङ्ख्ये तेजोभासुररश्मिवान् ।
शरदीवोदितः सूर्यो नृसूर्यो विरराज ह ॥ ५
वृषभस्कन्धविक्रान्तो वृषभाक्षो नरर्षभः ।
तावकानां बभौ मध्ये गवां मध्ये यथा वृषः ॥ ६
मत्तद्विरदसंकाशं मत्तद्विरदगामिनम् ।
प्रभिन्नमिव मातङ्गं यूथमध्ये व्यवस्थितम् ॥ ७
व्याधा इव जिघांसन्तस्त्वदीयाः समुपाद्रवन् ।
'सात्यकिं समरे राजन्परिवव्रुस्तवात्मजाः ॥' ८
द्रोणानीकमतिक्रान्तं भोजानीकं च दुस्तरम् ।
जलसन्धार्णवं तीर्त्वा काम्भोजानां च वाहिनीम् ९
हार्दिक्यमकरान्मुक्तं तीर्णं वै सैन्यसागरम् ।
परिवव्रुः सुसंक्रुद्धास्त्वदीयाः सात्यकिं रथाः॥१०
दुर्योधनश्चित्रसेनो दुःशासनविविंशती ।
शकुनिर्दुःसहश्चैव युवा दुर्धर्षणः क्रथः ॥ ११
अन्ये च बहवः शूराः शस्त्रवन्तो दुरासदाः ।
पृष्ठतः सात्यकिं यान्तमन्वधावन्नमर्षिणः ॥ १२
अथ शब्दो महानासीत्तव सैन्यस्य मारिष ।
मारुतोद्धूतवेगस्य सागरस्येव पर्वणि ॥ १३
तानभिद्रवतः सर्वान्समीक्ष्य शिनिपुङ्गवः ।
शनैर्याहीति यन्तारमब्रवीत्प्रहसन्निव ॥ १४
इदमेति समुद्धूतं धार्तराष्ट्रबलं महत् ।
मामेवाभिमुखं तूर्णं गजाश्वरथपत्तिमत् ।
नादयद्वै दिशः सर्वा रथघोषेण सारथे ॥ १५
पृथिवीं चान्तरिक्षं च कम्पयन्सागरानपि ।
एतद्बलार्णवं सूत वारयिष्ये महारणे ।
पौर्णमास्यामिवोद्धूतं वेलेव मकरालयम् ॥ १६
पश्य मे सूत विक्रान्तमिन्द्रस्येव महामृधे ।
एष सैन्यानि शत्रूणां विधमामि शितैः शरैः॥ १७
निहतानाहवे पश्य पदात्यश्वरथद्विपान् ।
मच्छरैरग्निसंकाशैर्विद्धदेहान्सहस्रशः ॥ १८
इत्येवं ब्रुवतस्तस्य सात्यकेरमितौजसः
समीपे सैनिकास्ते तु शीघ्रमीयुर्युयुत्सवः ।
जह्याद्रवस्व तिष्ठेति पश्यपश्येति वादिनः ॥ १९
तानेवं ब्रुवतो वीरान्सात्यकिर्निशितैः शरैः ।
जघान त्रिशतानश्वान्कुञ्जरांश्च चतुःशतान् ।
'लघ्वस्त्रश्चित्रयोधी च प्रहरञ्शिनिपुङ्गवः ॥' २०
स संप्रहारस्तुमुलस्तस्य तेषां च धन्विनाम् ।
देवासुररणप्रख्यः प्रावर्तत जनक्षयः ॥ २१
मेघजालनिभं सैन्यं तव पुत्रस्य मारिष ।
प्रत्यगृह्णाच्छिनेः पौत्रः शरैराशीविषोपमैः ॥ २२
प्रच्छाद्यमानः समरे शरजालैः स वीर्यवान् ।
असंभ्रमन्महाराज तावकानवधीद्बहून् ॥ २३
आश्चर्यं तत्र राजेन्द्र सुमहद्दृष्टवानहम् ।
न मोघः सायकः कश्चित्सात्यकेरभवत्प्रभो ॥ २४
रथनागाश्वकलिलः पदात्यूर्मिसमाकुलः ।
शैनेयवेलामासाद्य स्थितः सैन्यमहार्णवः ॥ २५
संभ्रान्तनरनागाश्वमावर्तत मुहुर्मुहुः ।
तत्सैन्यमिषुभिस्तेन वध्यमानं समन्ततः ।
बभ्राम तत्रतत्रैव गावः शीतार्दिता इव ॥ २६
पदातिनं रथं नागं सादिनं तुरगं तथा ।
अविद्धं तत्र नाद्राक्षं युयुधानस्य सायकैः ॥ २७
न तादृक्कदनं राजन्कृतवांस्तत्र फल्गुनः ।
यादृक्क्षयमनीकानामकरोत्सात्यकिर्नृप ॥ २८
अत्यर्जुनं शिनेः पौत्रो युध्यते पुरुषर्षभः ।
वीतभीर्लाघवोपेतः कृतित्वं संप्रदर्शयन् ॥ २९
ततो दुर्योधनो राजा सात्वतस्य त्रिभिः शरैः ।
विव्याध सूतं निशितैश्चतुर्भिश्चतुरो हयान् ॥ ३०
सात्यकिं च त्रिभिर्विद्ध्वा पुनरष्टाभिरेव च ।
दुःशासनः षोडशभिर्विव्याध शिनिपुङ्गवम् ॥३१
शकुनिः पञ्चविंशत्या चित्रसेनश्च पञ्चभिः ।
दुःसहः पञ्चदशभिर्विव्याधोरसि सात्यकिम् ॥ ३२
उत्स्मयन्वृष्णिशार्दूलस्तथा बाणैः समाहतः ।
तानविध्यन्महाराज सर्वानेव त्रिभिस्त्रिभिः ॥ ३३

गाढविद्धानरीन्कृत्वा मार्गणैः सोऽतितेजनैः ।
शैनेयः श्येनवत्सङ्ख्ये व्यचरल्लघुविक्रमः ॥ ३४
सौबलस्य धनुश्छित्त्वा हस्तावापं निकृत्य च ।
दुर्योधनं त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे ॥ ३५
चित्रसेनं शतेनैव दशभिर्दुःसहं तथा ।
दुःशासनं तु विंशत्या विव्याध शिनिपुङ्गवः ॥ ३६
अथान्यद्धनुरादाय श्यालस्तव विशांपते ।
अष्टाभिः सात्यकिं विद्ध्वा पुनर्विव्याध पञ्चभिः ३७
दुःशासनश्च दशभिर्दुःसहश्च त्रिभिः शरैः ।
दुर्मुखश्च द्वादशभी राजन्विव्याध सात्यकिम् ॥ ३८
दुर्योधनस्त्रिसप्तत्या विद्ध्वा भारत माधवम् ।
ततोऽस्य निशितैर्बाणैस्त्रिभिर्विव्याध सारथिम् ॥ ३९
तान्सर्वान्सहिताञ्शूरान्यतमानान्महारथान् ।
पञ्चभिः पञ्चभिर्बाणैः पुनर्विव्याध सात्यकिः ४०
ततः स रथिनां श्रेष्ठस्तव पुत्रस्य सारथिम् ।
आजघानाशु भल्लेन स हतो न्यपतद्भुवि ॥ ४१
पतिते सारथौ तस्मिंस्तव पुत्ररथः प्रभो ।
वातायमानैस्तैरश्वैरपानीयत संगरात् ॥ ४२
ततस्तव सुतो राजन्सैनिकाश्च विशांपते ।
राज्ञो रथमभिप्रेक्ष्य विद्रुताः शतशोऽभवन् ॥ ४३
विद्रुतं तत्र तत्सैन्यं दृष्ट्वा भारत सात्यकिः ।
अवाकिरच्छरैस्तीक्ष्णै रुक्मपुङ्खैः शिलाशितैः ॥४४
विद्राव्य सर्वसैन्यानि तावकानि सहस्रशः ।
प्रययौ सात्यकी राजञ्श्वेताश्वस्य रथं प्रति ॥ ४५
'तं प्रयान्तं महाबाहुं तावकाः प्रेक्ष्य मारिष ।
दृष्टं चादृष्टवत्कृत्वा क्रियामन्यामयोजयन् ॥' ४६
तं शरानाददानं च रक्षमाणं च सारथिम् ।
आत्मानं पालयानं च तावकाः समपूजयन् ॥ ४७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

## एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

सात्यकियुद्धवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
संप्रमृद्य महत्सैन्यं यान्तं शैनेयमर्जुनम् ।
निर्ह्रीका मम ते पुत्राः किमकुर्वत सञ्जय ॥
कथं वैषां तदा युद्धे धृतिरासीन्मुमूर्षताम् ।
शैनेयचरितं दृष्ट्वा यादृशं सव्यसाचिनः ॥ २
किं नु वक्ष्यन्ति ते क्षात्रं सैन्यमध्ये पराजिताः ।
कथं नु सात्यकिर्युद्धे व्यतिक्रान्तो महायशाः ॥ ३
कथं च मम पुत्राणां जीवतां तत्र सञ्जय ।
शैनेयोऽभिययौ युद्धे तन्ममाचक्ष्व सञ्जय ॥ ४
अत्यद्भुतमिदं तात त्वत्सकाशाच्छृणोम्यहम् ।
एकस्य बहुभिः सार्धं शत्रुभिस्तैर्महारथैः ॥ ५
विपरीतमहं मन्ये मन्दभाग्यं सुतं प्रति ।
यत्रावध्यन्त समरे सात्वतेन महारथाः ॥ ६
एकस्य हि न पर्याप्तं यत्सैन्यं तस्य सञ्जय ।
क्रुद्धस्य युयुधानस्य सर्वे तिष्ठन्तु पाण्डवाः ॥ ७
निर्जित्य समरे द्रोणं कृतिनं चित्रयोधिनम् ।
यथा पशुगणान्सिंहस्तद्वद्धन्ता सुतान्मम ॥ ८
कृतवर्मादिभिः शूरैर्यत्तैर्बहुभिराहवे ।
युयुधानो न शकितो हन्तुं यत्पुरुषर्षभः ॥ ९
नैतदीदृशकं युद्धं कृतवांस्तत्र फल्गुनः ।
यादृशं कृतवान्युद्धं शिनेर्नप्ता महायशाः ॥ १०
सञ्जय उवाच ।
तव दुर्मन्त्रिते राजन्दुर्योधनकृतेन च ।
शृणुष्वावहितो भूत्वा यत्ते वक्ष्यामि भारत ॥ ११
ते पुनः संन्यवर्तन्त कृत्वा संशपथान्मिथः ।
परां युद्धे मतिं क्रूरां तव पुत्रस्य शासनात् ॥ १२
त्रीणि सादिसहस्राणि दुर्योधनपुरोगमाः ।
शककाम्भोजबाह्लीका यवनाः पारदास्तथा ॥ १३
कुलिन्दास्तङ्गणाम्बष्ठाः पैशाचाश्च सबर्बराः ।
पार्वतीयाश्च राजेन्द्र क्रुद्धाः पाषाणपाणयः ।

दुर्योधनस्य कृतेन कर्मणा ॥ ११ ॥

मतिं क्रूरेत्यन्वयः ॥ १२ ॥

अभ्यद्रवन्त शैनेयं शलभाः पावकं यथा ॥ १४
युक्ताश्च पार्वतीयानां रथाः पाषाणयोधिनाम् ।
शूराः पञ्चशतं राजञ्शैनेयं समुपाद्रवन् ॥ १५
ततो रथसहस्रेण महारथशतेन च ।
द्विरदानां सहस्रेण द्विसाहस्रैश्च वाजिभिः ॥ १६
शरवर्षाणि मुञ्चन्तो विविधानि महारथाः ।
अभ्यद्रवन्त शैनेयमसङ्ख्येयाश्च पत्तयः ॥ १७
तांश्च संचोदयन्सर्वान्घ्नतैनमिति भारत ।
दुःशासनो महाराज सात्यकिं पर्यवारयत् ॥ १८
तत्राद्भुतमपश्याम शैनेयचरितं महत् ।
यदेको बहुभिः सार्धमसंभ्रान्तमयुध्यत ॥ १९
अवधीच्च रथानीकं द्विरदानां च तद्बलम् ।
सादिनश्चैव तान्सर्वान्दस्यूनपि च सर्वशः ॥ २०
तत्र चक्रैर्विमथितैर्भग्नैश्च परमायुधैः
अक्षैश्च बहुधा भग्नैरीषादण्डकबन्धुरैः ॥ २१
कुञ्जरैर्मथितैश्चापि ध्वजैश्च विनिपातितैः ।
वर्मभिश्च तथाऽनीकैर्व्यवकीर्णा वसुंधरा ॥ २२
स्रग्भिराभरणैर्वस्त्रैरनुकर्षैश्च मारिष ।
संछन्ना वसुधा तत्र द्यौर्ग्रहैरिव भारत ॥ २३
गिरिरूपधरैश्चापि पतितैश्च महागजैः ।
'म्लेच्छस्थितैर्महाराज भिन्नाञ्जनचयोपमैः ॥ २४
मृगैर्मन्द्रैश्च भद्रैश्च मृगमन्द्रैस्तथाऽपरैः ।
भद्रैर्मन्द्रमृगैश्चैव मृगभद्रैस्तथैव च ॥ २५
भद्रमन्द्रैश्चैव तथा तथा भद्रमृगैरपि ।
तत्रतत्र धरा कीर्णा शयानैः पर्वतोपमैः ॥' २६
अञ्जनस्य कुले जाता वामनस्य च भारत ।
सुप्रतीककुले जाता महापद्मकुले तथा ॥ २७
ऐरावतकुले चैव तथाऽन्येषु कुलेषु च ।
जाता दन्तिवरा राजञ्शेरते बहवो हताः ॥ २८
वनायुजान्पार्वतीयान्काम्भोजान्बाह्लिकानपि ।
तथा हयवरान्राजन्निजघ्ने तत्र सात्यकिः ॥ २९
नानादेशसमुत्थांश्च नानाजातींश्च दन्तिनः ।
निजघ्ने तत्र शैनेयः शतशोऽथ सहस्रशः ॥ ३०
तेषु प्रकाल्यमानेषु दस्यून्दुःशासनोऽब्रवीत् ।
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः ॥ ३१
तांश्चातिभग्नान्संप्रेक्ष्य पुत्रो दुःशासनस्तव
पाषाणयोधिनः शूरान्पार्वतीयानचोदयत् ॥ ३२
अश्मयुद्धेषु कुशला नैतज्जानाति सात्यकिः ।
अश्मयुद्धमजानन्तं हतैनं युद्धकामुकम् ॥ ३३
तथैव कुरवः सर्वे नाश्मयुद्धविशारदाः
अभिद्रवत मा भैष्ट न वः प्राप्स्यति सात्यकिः ॥ ३४
ते पार्वतीया राजानः सर्वे पाषाणयोधिनः ।
अभ्यद्रवन्त शैनेयं राजानमिव मन्त्रिणः ॥ ३५
ततो गजशिरःप्रख्यैरुपलैः शैलवासिनः ।
उद्यतैर्युयुधानस्य पुरतस्तस्थुराहवे ॥ ३६
क्षेपणीयैस्तथाप्यन्ये सात्वतस्य वधैषिणः ।
चोदितास्तव पुत्रेण सर्वतो रुरुधुर्दिशः ॥ ३७
तेषामापततामेव शिलायुद्धं चिकीर्षताम् ।
सात्यकिः प्रतिसंधाय निशितान्प्राहिणोच्छरान् ३८
तामश्मवृष्टिं तुमुलां पार्वतीयैः समीरिताम् ।
चिच्छेदोरगसंकाशैर्नाराचैः शिनिपुङ्गवः ॥ ३९
तैरश्मचूर्णैर्दीप्यद्भिः खद्योतानामिव व्रजैः ।
प्रायः सैन्यान्यहन्यन्त हाहाभूतानि मारिष ॥ ४०
ततः पञ्चशतं शूराः समुद्यतमहाशिलाः ।
निकृत्तबाहवो राजन्निपेतुर्धरणीतले ॥ ४१
सात्वतस्य च भल्लैन निष्पिष्टैस्तैस्तथाऽ
न्यपतन्निहता म्लेच्छास्तत्रतत्र गतासवः ॥ ४२
ते हन्यमानाः समरे सात्वतेन महात्मना ।
अश्मवृष्टिं महाघोरां पातयन्ति स्म सात्वते ॥ ४३
पाषाणयोधिनः शूरान्यतमानानवस्थितान् ।
न्यवधीद्बहुसाहस्रांस्तदद्भुतमिवाभवत् ॥ ४४
ततः पुनर्बस्तमुखैरश्मवृष्टीः समन्ततः ।
अधोबस्तैः स्थूलबस्तैर्दरदैः खसतङ्कणैः ॥ ४५
लम्पकैश्च कुलिन्दैश्च क्षिप्ताः क्षिप्ताश्च सात्यकिः ।

मृगमन्द्रादयो गजविशेषाः ॥ २५ ॥ वामनस्य यमोपवाह्यस्य । सुप्रतीकस्य ईशोपवाह्यस्य । महापद्मस्य कुमुदस्य कुले ॥ २७ ॥ अन्येषु कुलेषु पुण्डरीकपुष्पदन्तसार्वभौमीयेषु ॥ २८ ॥ क्षेपणीयैः शस्त्रैः ॥ ३७ ॥ ततः पुनर्व्यात्तमुखास्तेऽश्मवृष्टीः समन्ततः। अयोहस्ताः शूलहस्ता दरदास्तङ्कणाः खसाः । लम्पकाश्च कुलिन्दाश्च चिक्षिपुस्तांश्च सात्यकिः । इति झ. ञ. घ. पाठः ॥ ४५ ॥

नाराचैः प्रतिचिच्छेद प्रतिपत्तिविशारदः ॥ ४६
अद्रीणां भिद्यमानानामन्तरिक्षे शितैः शरैः ।
शब्देन प्राद्रवन्सङ्ख्ये रथाश्वगजपत्तयः ॥ ४७
अश्मचूर्णैरवाकीर्णा मनुष्यगजवाजिनः ।
नाशक्नुवन्नवस्थातुं भ्रमरैरिव दंशिताः ॥ ४८
हतशिष्टाः सरुधिरा भिन्नमस्तकपिण्डिकाः ।
'विभिन्नशिरसो राजन्दन्तैश्छिन्नैश्च दन्तिनः ।
निर्धूतैश्च करैर्नागा व्यङ्गाश्च शतशः कृताः ॥ ४९
हत्वा पञ्चशतं योधांस्तत्क्षणेनैव मारिष ।
व्यचरत्पृतनामध्ये शैनेयः कृतहस्तवन् ॥ ५०
कुञ्जराः सैन्यवर्तन्त युयुधानेन मोहिताः ॥ ५१
अश्मनां भिद्यमानानां सायकैः श्रूयते ध्वनिः ।
पद्मपत्रेषुधाराणां पतन्तीनामिव ध्वनिः ॥' ५२
ततः शब्दः समभवत्तव सैन्यस्य मारिष ।
माधवेनार्द्यमानस्य सागरस्येव पर्वणि ॥ ५३
तं शब्दं तुमुलं श्रुत्वा द्रोणो यन्तारमब्रवीत् ।
एष सूत रणे क्रुद्धः सात्वतानां महारथः ॥ ५४
दारयन्बहुधा सैन्यं रणे चरति कालवत् ।
यत्रैष शब्दस्तुमुलस्तत्र सूत रथं नय ॥ ५५
पाषाणयोधिभिर्नूनं युयुधानः समागतः ।
तथाहि रथिनः सर्वे ह्रियन्ते विद्रुतैर्हयैः ॥ ५६
विशस्त्रकवचा रुग्णास्तत्रतत्र पतन्ति च ।
न शक्नुवन्ति यन्तारः संयन्तुं तुमुले हयान् ॥ ५७
सञ्जय उवाच ।
इत्येतद्वचनं श्रुत्वा भारद्वाजस्य सारथिः ।
प्रत्युवाच ततो द्रोणं सर्वशस्त्रभृतां वरम् ॥ ५८
सैन्यं द्रवति चायुष्मन्कौरवेयं समन्ततः ।
पश्य योधान्रणे भग्नान्धावतो वै ततस्ततः ॥ ५९
इमे च संहताः शूराः पाञ्चालाः पाण्डवैः सह ।
त्वामेव हि जिघांसन्त आद्रवन्ति समन्ततः ॥ ६०
अत्र कार्यं समाधत्स्व प्राप्तकालमरिंदम ।
स्थाने वा गमने वापि दूरं यातश्च सात्यकिः ॥ ६१
सञ्जय उवाच ।
तथैवं वदतस्तस्य भारद्वाजस्य सारथेः ।
प्रत्यदृश्यत शैनेयो निघ्नन्बहुविधान्रथान् ॥ ६२
ते वध्यमानाः समरे युयुधानेन तावकाः ।
युयुधानरथं त्यक्त्वा द्रोणानीकाय दुद्रुवुः ॥ ६३
यैस्तु दुःशासनः सार्धं रथैः पूर्वं न्यवर्तत ।
ते भीतास्त्वभ्यधावन्त सर्वे द्रोणरथं प्रति ॥ ६४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

## द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

सात्यकिभयात्पलायमानस्य दुश्शासनस्य द्रोणेनोपालम्भः ॥ १ ॥ द्रोणधृष्टद्युम्नयोर्युद्धम् ॥ २ ॥

---

सञ्जय उवाच ।
दुःशासनरथं दृष्ट्वा समीपे पर्यवस्थितम् ।
भारद्वाजस्ततो वाक्यं दुःशासनमथाब्रवीत् ॥ १
दुःशासन रथाः सर्वे कस्माच्चैते प्रविद्रुताः ।
कच्चित्क्षेमं तु नृपतेः कच्चिज्जीवति सैन्धवः ॥ २
राजपुत्रो भवानत्र राजभ्राता महारथः ।
किमर्थं द्रवते युद्धे यौवराज्यमवाप्य च ॥ ३
दासी जिताऽसि द्यूते त्वं यथा कामचरी भव
वाससां वाहिका राज्ञो भ्रातुर्ज्येष्ठस्य मे भव ॥ ४
न सन्ति पतयः सर्वे तेऽद्य षण्ढतिलैः समाः ।
दुःशासनैवं कस्मात्त्वं पूर्वमुक्त्वा पलायसे ॥ ५
स्वयं वैरं महत्कृत्वा पाञ्चालैः पाण्डवैः सह ।
एकं सात्यकिमासाद्य कथं भीतोऽसि संयुगे ॥ ६
न जानीषे पुरा त्वं तु गृह्णन्नक्षान्दुरोदरे ।
शरा ह्येते भविष्यन्ति दारुणाशीविषोपमाः ॥ ७
अप्रियाणां हि वचनं पाण्डवस्य विशेषतः ।

---

अद्रीणां प्रस्तराणाम् ॥ ४७ ॥

एकविंशत्यधिकशततमोऽध्यायः ॥१२१॥

द्रौपद्याश्च परिक्लेशस्त्वन्मूलो ह्यभवत्पुरा ॥ ८
क्व ते मानश्च दर्पश्च क्व ते वीर्यं क्व गर्जितम् ।
आशीविषसमान्पार्थान्कोपयित्वा क्व यास्यसि ॥९
शोच्येयं भारती सेना राज्यं चैव सुयोधनः ।
यस्य त्वं कर्कशो भ्राता पलायनपरायणः ॥ १०
ननु नाम त्वया वीर दार्यमाणा भयार्दिता ।
स्वबाहुबलमास्थाय रक्षितव्या ह्यनीकिनी ॥ ११
स त्वमद्य रणं हित्वा भीतो हर्षयसे परान् ।
विद्रुते त्वयि सैन्यस्य नायके शत्रुसूदन ।
कोऽन्यः स्थास्यति संग्रामे भीतो भीते व्यपाश्रये१२
एकेन सात्वतेनाद्य युध्यमानस्य तेन वै ।
पलायने तव मतिः संग्रामाद्धि प्रवर्तते ॥ १३
यदा गाण्डीवधन्वानं भीमसेनं च कौरव ।
यमौ च द्रक्ष्यसि रणे तदा वै किं करिष्यसि ॥ १४
युधि फल्गुनबाणानां सूर्याग्निसमवर्चसाम् ।
न तुल्याः सात्यकिशरा येभ्यो भीतः पलायसे १५
त्वरितो वीर गच्छ त्वं गान्धार्युदरमाविश ।
पृथिव्यां धावमानस्य नान्यत्पश्यामि जीवनम्१६
यदि तावत्कृता बुद्धिः पलायनपरायणा ।
पृथिवी धर्मराजाय शमेनैव प्रदीयताम् ॥ १७
यावत्फल्गुननाराचा निर्मुक्तोरगसन्निभाः ।
नाविशन्ति शरीरं ते तावत्संशाम्य पाण्डवैः ॥१८
यावत्ते पृथिवीं पार्था हत्वा भ्रातृशतं रणे ।
नाक्षिपन्ति महात्मानस्तावत्संशाम्य पाण्डवैः १९
यावन्न क्रुध्यते राजा धर्मपुत्रो युधिष्ठिरः ।
कृष्णश्च समरश्लाघी तावत्संशाम्य पाण्डवैः ॥ २०
यावद्भीमो महाबाहुर्विगाह्य महतीं चमूम् ।
सोदरांस्ते न मृद्नाति तावत्संशाम्य पाण्डवैः ॥ २१
पूर्वमुक्तश्च ते भ्राता भीष्मेणासौ सुयोधनः ।
अजेयाः पाण्डवाः सङ्ख्ये सौम्य संशाम्य तैः सह२२
'मया शमवता चोक्तो रक्ष शेषं सुयोधन ।
संशाम्य पार्थैस्त्वं रक्ष वीर सर्वान्महीक्षितः ॥'२३
न च तत्कृतवान्मन्दस्तव भ्राता सुयोधनः ।
स युद्धे धृतिमास्थाय यत्तो युध्यस्व पाण्डवैः ॥ २४
तवापि शोणितं भीमः पास्यतीति मया श्रुतम् ।
तच्चाप्यवितथं तस्य तत्तथैव भविष्यति ॥ २५
किं भीमस्य न जानासि विक्रमं त्वं सुबालिश ।
यत्त्वया वैरमारब्धं संयुगे प्रपलायिना ॥ २६
गच्छ तूर्णं रथेनैव यत्र तिष्ठति सात्यकिः ।
त्वया हीनं बलं ह्येतद्विद्रविष्यति भारत ।
आत्मार्थं योधय रणे सात्यकिं सत्यविक्रमम् ॥२७
सञ्जय उवाच ।
एवमुक्तस्तव सुतो नाब्रवीत्किंचिदप्यसौ ।
श्रुतं चाश्रुतवत्कृत्वा प्रायाद्येन स सात्यकिः ॥२८
सैन्येन महता युक्तो म्लेच्छानामनिवर्तिनाम् ।
आसाद्य च रणे यत्तो युयुधानमयोधयत् ॥ २९
द्रोणोऽपि रथिनां श्रेष्ठः पाञ्चालान्पाण्डवांस्तथा ।
अभ्यद्रवत संक्रुद्धो जवमास्थाय मध्यमम् ॥ ३०
प्रविश्य च रणे द्रोणः पाण्डवानां वरूथिनीम् ।
द्रावयामास योधान्वै शतशोऽथ सहस्रशः ॥ ३१
ततो द्रोणो महाराज नाम विश्राव्य संयुगे ।
पाण्डुपाञ्चालमत्स्यानां प्रचक्रे कदनं महत् ॥ ३२
तं जयन्तमनीकानि भारद्वाजं ततस्ततः ।
पाञ्चालपुत्रो द्युतिमान्वीरकेतुः समभ्ययात् ॥ ३३
स द्रोणं पञ्चभिर्विद्ध्वा शरैः सन्नतपर्वभिः ।
ध्वजमेकेन विव्याध सारथिं चास्य सप्तभिः ॥ ३४
तत्राद्भुतं महाराज दृष्टवानस्मि संयुगे ।
यद्द्रोणो रभसं युद्धे पाञ्चाल्यं नात्यवर्तत ॥ ३५
सन्निरुद्धं रणे द्रोणं पाञ्चला वीक्ष्य मारिष ।
आवव्रुः सर्वतो राजन्धर्मपुत्रजयैषिणः ॥ ३६
ते शरैरग्निसंकाशैस्तोमरैश्च महाधनैः ।
शस्त्रैश्च विविधै राजन्द्रोणमेकमवाकिरन् ॥ ३७
निवार्य तान्बाणगणान्द्रोणो राजन्समन्ततः ।
महाजलधरान्व्योम्नि मातरिश्वेव चाबभौ ॥ ३८
ततः शरं महाघोरं सूर्यपावकसन्निभम् ।
संदधे परवीरघ्नो वीरकेतो रथं प्रति ॥ ३९
स भित्त्वा तु शरो राजन्पाञ्चालकुलनन्दनम् ।
अभ्यगाद्धरणीं तूर्णं लोहिताद्रो ज्वलन्निव ॥ ४०

ततोऽपतद्रथात्तूर्णं पाञ्चालकुलनन्दनः ।
पर्वताग्रादिव महांश्चम्पको वायुपीडितः ॥ ४१
तस्मिन्हते महेष्वासे राजपुत्रे महाबले ।
पाञ्चालास्त्वरिता द्रोणं समन्तात्पर्यवारयन् ॥४२
चित्रकेतुः सुधन्वा च चित्रवर्मा च भारत ।
तथा चित्ररथश्चैव भ्रातृव्यसनकर्शिताः ॥ . ४३
अभ्यद्रवन्त सहिता भारद्वाजं युयुत्सवः ।
मुञ्चन्तः शरवर्षाणि तपान्ते जलदा इव ॥
'अदृश्यं समरे चक्रुर्भारद्वाजं सुधन्विनः ॥' ४४
स वध्यमानो बहुधा राजपुत्रैर्महारथैः ।
क्रोधमाहारयत्तेषामभावाय द्विजर्षभः ॥ ४५
ततः शरमयं जालं द्रोणस्तेषामवासृजत् ।
ते हन्यमाना द्रोणस्य शरैराकर्णचोदितैः ।
कर्तव्यं नाभ्यजानन्वै कुमारा राजसत्तम ॥ ४६
तान्विमूढान्रणे द्रोणः प्रहसन्निव भारत ।
व्यश्वसूतरथांश्चक्रे कुमारान्कुपितो रणे ॥ ४७
अथापरैः सुनिशितैर्भल्लैस्तेषां महायशाः ।
पुष्पाणीव विवान्वायुः सोत्तमाङ्गान्यपातयत् ॥४८
ते रथेभ्यो हताः पेतुः क्षितौ राजन्सुवर्चसः ।
देवासुरे पुरा युद्धे यथा दैतेयदानवाः ॥ ४९
तान्निहत्य रणे राजन्भारद्वाजः प्रतापवान् ।
कार्मुकं भ्रामयामास हेमपृष्ठं दुरासदम् ॥ ५०
'तदस्य भ्राजते राजन्मेघमध्ये तडिद्यथा ॥' ५१
पाञ्चालान्निहतान्दृष्ट्वा देवकल्पान्महारथान् ।
धृष्टद्युम्नो भृशोद्विग्नो नेत्राभ्यां पातयञ्जलम् ।
अभ्यवर्तत संग्रामे क्रुद्धो द्रोणरथं प्रति ॥ ५२
ततो हाहेति सहसा नादः समभवन्नृप ।
पाञ्चाल्येन रणे दृष्ट्वा द्रोणमावारितं शरैः ॥ ५३
स च्छाद्यमानो बहुधा पार्षतेन महात्मना ।
न विव्यथे ततो द्रोणः स्मयन्नेवान्वयुध्यत ॥ ५४
ततो द्रोणं महाराज पाञ्चाल्यः क्रोधमूर्च्छितः ।
आजघानोरसि क्रुद्धो नवत्या नतपर्वणाम् ॥ ५५
स गाढविद्धो बलिना भारद्वाजो महायशाः ।

निषसाद रथोपस्थे कश्मलं च जगा
तं वै तथागतं दृष्ट्वा धृष्टद्युम्नः परा
चापमुत्सृज्य शीघ्रं तु असिं जग्राह
अवप्लुत्य रथाच्चापि त्वरितः स म
आरुरोह रथं तूर्णं भारद्वाजस्य र
हर्तुमिच्छञ्शिरः कायात्क्रोधसं
प्रत्याश्वस्तस्ततो द्रोणो धनुर्गृह्य
आसन्नमागतं दृष्ट्वा धृष्टद्युम्नं
शरैर्वैतस्तिकै राजन्विव्याधास
योधयामास समरे धृष्टद्युम्नं म
ते हि वैतस्तिका नाम शरा
द्रोणस्य विहिता राजन्यैर्धृष्ट
स वध्यमानो बहुभिः सा
अवप्लुत्य रथात्तूर्णं भग्नवेग
आरुह्य स्वरथं वीरः प्रगृह्य
विव्याध समरे द्रोणं धृष्ट
द्रोणश्चापि महाराज शरैर्वि
तदद्भुतमभूद्युद्धं द्रोणपाञ्चा
त्रैलोक्यकाङ्क्षिणोरासीच्छक्रप्र
मण्डलानि विचित्राणि यमकान..
चरन्तौ युद्धमार्गज्ञौ ततक्षतुरथेषुभिः ..
मोहयन्तौ मनांस्याजौ योधानां द्रोणपार्षत.
सृजन्तौ शरवर्षाणि वर्षास्विव बलाहकौ ।
छादयन्तौ महात्मानौ शरैर्व्योम दिशो महीम् ६७
तदद्भुतं तयोर्युद्धं भूतसङ्घा ह्यपूजयन् ।
क्षत्रियाश्च महाराज ये चान्ये तव सैनिकाः ॥ ६८
अवश्यं समरे द्रोणो धृष्टद्युम्नेन संगतः ।
वशमेष्यति नो राजन्पाञ्चाला इति चुक्रुशुः ॥ ६९
द्रोणस्तु त्वरितो युद्धे धृष्टद्युम्नस्य सारथेः
शिरः प्रच्यावयामास फलं पक्वं तरोरिव ॥ ७०
ततस्तु प्रद्रुता वाहा राजंस्तस्य महात्मनः ॥ ७१
तेषु प्रद्रवमाणेषु पाञ्चालान्सृञ्जयांस्तथा ।

---

विशेषेण वातीति विवान् । पुष्पाणीव वनाद्वायुः इति ट. पाठः । पुष्पाणीव विचिन्वन्हि इति झ. ञ. पाठः ॥४८॥ द्रोणस्य विविधा राजन् इति ट. पाठः । द्रोणस्य विदिता इति क. पाठः ॥ ६१ ॥

द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

द्रोणस्तत्रतत्र पराक्रमी ॥ ७२
'पाञ्चालान्भारद्वाजः प्रतापवान् ।
स्वं व्यूहं पुनरास्थाय स्थितोऽभवदरिंदमः ।
न चैनं पाण्डवा युद्धे जेतुमुत्सेहिरे प्रभो ॥ ७३

ाहाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

## त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

.नपराजयः ॥ १ ॥

ाजञ्शैनेयं समुपाद्रवत् ।
पर्जन्य इव वृष्टिमान् ॥ १
षष्ट्या तथा षोडशभिः शरैः ।
मैनाकमिव पर्वतम् ॥ २
सायकैरावृणोद्भृशम् ।
ःदेशोद्भवेन च ॥ ३
ान्सायकान्बहून् ।
ुयन्वै दिशो दश ॥ ४
ात्यकिः कौरवं रणे ।
छादयामास सायकैः ॥ ५
थैर्दुःशासनपुरोगमाः ।
ास्तत्र सैन्यस्य पश्यतः ॥ ६
ाजेन्द्र पुत्रो दुःशासनस्तव ।
ृयपेतभी राजन्सात्यकिं चार्दयच्छरैः ॥ ७
ुर्भिर्वाजिनस्तस्य सारथिं च त्रिभिः शरैः
ात्यकिं च शतेनाजौ विद्ध्वा नादं मुमोच सः ॥ ८
ततः क्रुद्धो महाराज माधवस्तस्य संयुगे ।
रथं सूतं ध्वजं तं च चक्रेऽदृश्यमजिह्मगैः ॥ ९
स तु दुःशासनं शूरं सायकैरावृणोद्भृशम् ।
मशकं समनुप्राप्तमूर्णनाभिरिवोर्णया ॥ १०
त्वरन्समावृणोद्बाणैर्दुःशासनममित्रजित् ॥ ११
दृष्ट्वा दुःशासनं राजा तथा शरशताचितम् ।
त्रिगर्तांश्चोदयामास युयुधानरथं प्रति ॥ १२
तेऽगच्छन्युयुधानस्य समीपं क्रूरकर्मणः ।
त्रिगर्तानां त्रिसाहस्रा रथा युद्धविशारदाः ॥ १३
ते तु तं रथवंशेन महता पर्यवारयन् ।

स्थिरां कृत्वा मतिं युद्धे भूत्वा संशप्तका मिथः ॥ १४
तेषां प्रयतमानानां शरवर्षाणि मुञ्चताम्
योधान्पञ्चशतान्मुख्यानग्र्यानीके व्यपोथयत् १५
तेऽपतन्निहतास्तूर्णं शिनिप्रवरसायकैः ।
महामारुतवेगेन भग्ना इव नगाद्रुमाः ॥ १६
नागैश्च बहुधा च्छिन्नैर्ध्वजैश्चैव विशांपते ।
हयैश्च कनकापीडैः पतितैस्तत्र मेदिनी ॥ १७
शैनेयशरसंकृत्तैः शोणितौघपरिप्लुतैः ।
अशोभत महाराज किंशुकैरिव पुष्पितैः ॥ १८
ते वध्यमानाः समरे युयुधानेन तावकाः ।
त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः ॥ १९
ततस्ते पर्यवर्तन्त सर्वे द्रोणरथं प्रति
भयात्पतगराजस्य गर्तानीव महोरगाः ॥ २०
हत्वा पञ्चशतान्योधाञ्छरैराशीविषोपमैः ।
प्रायात्स शनकैर्वीरो धनञ्जयरथं प्रति ॥ २१
तं प्रयान्तं नरश्रेष्ठं पुत्रो दुःशासनस्तव ।
विव्याध नवभिस्तूर्णं शरैः सन्नतपर्वभिः ॥ २२
स तु तं प्रतिविव्याध पञ्चभिर्निशितैः शरैः ।
रुक्मपुङ्खैर्महेष्वासो गार्ध्रपत्रैरजिह्मगैः ॥ २३
सात्यकिं तु महाराज प्रहसन्निव भारत ।
दुःशासनस्त्रिभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ २४
शैनेयस्तव पुत्रं तु हत्वा पञ्चभिराशुगैः ।
धनुश्चास्य रणे छित्त्वा विस्मयन्नर्जुनं ययौ ॥ २५
ततो दुःशासनः क्रुद्धो वृष्णिवीराय गच्छते ।
सर्वपारशवीं शक्तिं विससर्ज जिघांसया ॥ २६
तां तु शक्तिं तदा घोरां तव पुत्रस्य सात्यकिः ।
चिच्छेद शतधा राजन्निशितैः कङ्कपत्रिभिः ॥ २७

अथान्यद्धनुरादाय पुत्रस्तव जनेश्वर ।
सात्यकिं च शरैर्विद्ध्वा सिंहनादं ननाद च ॥ २८
सात्यकिस्तु रणे क्रुद्धो मोहयित्वा सुतं तव ।
शरैरग्निशिखाकारैराजघान स्तनान्तरे ॥ २९
त्रिभिरेव महाभागः शरैः सन्नतपर्वभिः ।
सर्वायसैस्तीक्ष्णवक्त्रैः पुनर्विव्याध चाष्टभिः ॥ ३०
दुःशासनस्तु विंशत्या सात्यकिं प्रत्यविध्यत ।
सात्वतोऽपि महाराज तं विव्याध स्तनान्तरे ॥ ३१
त्रिभिरेव महाभागः शरैः सन्नतपर्वभिः ।
ततोऽस्य वाहान्निशितैः शरैर्जघ्ने महारथः ॥ ३२
सारथिं च सुसंक्रुद्धः शरैः सन्नतपर्वभिः ।
धनुरेकेन भल्लेन हस्तावापं च पञ्चभिः ॥ ३३
ध्वजं च रथशक्तिं च भल्लाभ्यां परमास्त्रवित् ।
चिच्छेद विशिखैस्तीक्ष्णैस्तथोभौ पार्ष्णिसारथी ३४
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
त्रिगर्तसेनापतिना स्वरथेनापवाहितः ॥ ३५
तमभिद्रुत्य शैनेयो मुहूर्तमिव भारत ।
न जघान महाबाहुर्भीमसेनवचः स्मरन् ॥ ३६
भीमसेनेन तु वधः सुतानां तव भारत ।
प्रतिज्ञातः सभामध्ये सर्वेषामेव संयुगे ॥ ३७
ततो दुःशासनं जित्वा सात्यकिः संयुगे प्रभो ।
जगाम त्वरितो राजन्येन यातो धनञ्जयः ॥ ३८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

## चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

संकुलयुद्धवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
किं तस्यां मम सेनायां नासन्केचिन्महारथाः ।
ये तथा सात्यकिं यान्तं नैवाघ्नन्नाप्यवारयन् ॥ १
एको हि समरे कर्म कृतवान्सत्यविक्रमः ।
शक्रतुल्यबलो युद्धे महेन्द्रो दानवेष्विव ॥ २
अथवा शून्यमासीत्तद्येन यातः स सात्यकिः ।
हतभूयिष्ठमथवा येन यातः स सात्यकिः ॥ ३
यत्कृतं वृष्णिवीरेण कर्म शंससि मे रणे ।
नैतदुत्सहते कर्तुं कर्म शक्रोऽपि सञ्जय ॥ ४
अश्रद्धेयमचिन्त्यं च कर्म तस्य महात्मनः ।
वृष्ण्यन्धकप्रवीरस्य श्रुत्वा मे व्यथितं मनः ॥ ५
न सन्ति तस्मात्पुत्रा मे यथा सञ्जय भाषसे ।
एको वै बहुलाः सेनाः प्रामृद्नात्सत्यविक्रमः ॥ ६
कथं च युध्यमानानामपक्रान्तो महात्मनाम् ।
एको बहूनां शैनेयस्तन्ममाचक्ष्व सञ्जय ॥ ७
सञ्जय उवाच ।
राजन्सेनासमुद्योगो रथनागाश्वपत्तिमान् ।
अतुल्यस्तव सेनायां युगान्तसदृशोऽभवत् ॥ ८
आहूतेषु समूहेषु तव सैन्यस्य मानद ।
नास्ति लोके समः कश्चित्समूह इति मे मतिः ॥ ९
तत्र देवास्त्वभाषन्त चारणाश्च समागताः ।
एतदन्ताः समूहा वै भविष्यन्ति महीतले ॥ १०
न च वै तादृशो व्यूह आसीत्कश्चिद्विशांपते ।
यादृग्जयद्रथवधे द्रोणेन विहितोऽभवत् ॥ ११
'उद्धृता पृथिवी नूनं युद्धहेतोः समागतैः ।
इति तत्र जनाश्चाहुर्दृष्ट्वा तां जनसंसदम् ॥' १२
चण्डवातविभिन्नानां समुद्राणामिव स्वनः ।
रणेऽभवद्बलौघानामन्योन्यमभिधावताम् ॥ १३
पार्थिवानां समेतानां बहून्यासन्नरोत्तम ।
त्वद्बले पाण्डवानां च सहस्राणि शतानि च ॥ १४
संरब्धानां प्रवीराणां समरे दृढकर्मणाम् ।
तत्रासीत्सुमहाशब्दस्तुमुलो रोमहर्षणः ॥ १५
'पाण्डवानां कुरूणां च गर्जतामितरेतरम् ।
क्ष्वेलाः किलकिलाशब्दास्तत्रासन्वै सहस्रशः १६
भेरीशब्दाश्च तुमुला बाणशब्दाश्च भारत ।

अनीकेषु समूहेषु इति क. ख. पाठः ॥ ९ ॥

अन्योन्यं निघ्नतां चैव नराणां शुश्रुवे स्वनः ॥' १७
अथाक्रन्दद्भीमसेनो धृष्टद्युम्नश्च मारिष ।
नकुलः सहदेवश्च धर्मराजश्च पाण्डवः ॥ १८
आगच्छत प्रहरत द्रुतं विपरिधावत ।
प्रविष्टावरिसेनां हि वीरौ माधवपाण्डवौ ॥ १९
यथा सुखेन गच्छेतां जयद्रथवधं प्रति ।
तथा प्रकुरुत क्षिप्रमिति सैन्यान्यचोदयन् ॥ २०
तयोरभावे कुरवः कृतार्थाः स्युर्वयं जिताः ॥ २१
'यत्र यातौ महात्मानौ तूर्णं परपुरंजयौ ।'
ते यूयं सहिता भूत्वा तूर्णमेव बलार्णवम् ।
क्षोभयध्वं महावेगाः पवनः सागरं यथा ॥ २२
भीमसेनेन ते राजन्पाञ्चाल्येन च नोदिताः ।
आजघ्नुः कौरवान्सङ्ख्ये त्यक्त्वाऽसूनात्मनः प्रियान्
इच्छन्तो निधनं युद्धे शस्त्रैरुत्तमतेजसः ।
स्वर्गेप्सवो मित्रकार्ये नाभ्यनन्दन्त जीवितम् ॥ २४
तथैव तावका राजन्प्रार्थयन्तो महद्यशः ।
आर्या युद्धे मतिं कृत्वा युद्धायैवावतस्थिरे ॥ २५
तस्मिन्सुतुमुले युद्धे वर्तमाने भयावहे ।
जित्वा सर्वाणि सैन्यानि प्रायात्सात्यकिरर्जुनं २६
कवचानां प्रभास्तत्र सूर्यरश्मिविराजिताः ।
दृष्टीः सङ्ख्ये सैनिकानां प्रतिजघ्नुः समन्ततः ।
'ध्वजशस्त्रप्रतिहता लोकान्समवदीपयन् ॥ २७
चण्डवातोद्धतान्मेघान्विकिरन्रश्मिमानिव ।
तथा तव महत्सैन्यं तव्यरोचत तापयन् ॥ २८
संप्रहृष्टः स सहसा तव सैन्यार्णवं प्रति ।
लोलयन्सर्वतो गत्वा समुद्रं मकरो यथा ॥ २९
तत्र राजन्महानासीत्संग्रामो भीतिवर्धनः ।
पाण्डवस्य महाबाहो तावकानां च दारुणः ॥ ३०
रुद्रस्याक्रीडसंकाशः संहारः सर्वदेहिनाम् ।
ततः शब्दो महानासीत्प्रायाद्यत्र धनञ्जयः ॥ ३१
तत्र स्म कदनं घोरं वर्तते पाण्डुपूर्वज ।
अर्जुनस्य महाबाहोस्तावकानां च धन्विनाम् ॥ ३२
मध्ये भारतसैन्यस्य माधवस्य महारणे ।
द्रोणस्यापि परैः सार्धं व्यूहद्वारे सुदारुणम् ॥ ३३
एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते ।
क्रुद्धेऽर्जुने तथा द्रोणे सात्वते च महारथे ॥' ३४
तथा प्रयतमानानां पाण्डवानां महात्मनाम् ।
दुर्योधनो महाराजन्व्यगाहत महद्बलम् ॥ ३५
स सन्निपातस्तुमुलस्तेषां तस्य च भारत ।
अभवत्सर्वभूतानामभावकरणो महान् ॥ ३६
धृतराष्ट्र उवाच ।
तथा यातेषु सैन्येषु तथा कृच्छ्रगतः स्वयम् ।
कच्चिद्दुर्योधनः सूत नाकार्षीत्पृष्ठतो रणम् ॥ ३७
एकस्य च बहूनां च सन्निपातो महाहवे ।
विशेषतो नरपतेर्विषमः प्रतिभाति मे ॥ ३८
सोऽत्यन्तसुखसंवृद्धो लक्ष्म्या लोकस्य चेश्वरः ।
एको बहून्समासाद्य कच्चिन्नासीत्पराङ्मुखः ॥ ३९
सञ्जय उवाच ।
राजन्संग्राममाश्चर्यं तव पुत्रस्य भारत ।
एकस्य बहुभिः सार्धं शृणुष्व गदतो मम ॥ ४०
दुर्योधनेन समरे पृतना पाण्डवी रणे ।
नलिनी द्विरदेनेव समन्तात्प्रतिलोडिता ॥ ४१
ततस्तां प्रहतां सेनां दृष्ट्वा पुत्रेण ते नृप ।
भीमसेनपुरोगास्तं पाञ्चालाः समुपाद्रवन् ॥ ४२
स भीमसेनं दशभिः शरैर्विव्याध पाण्डवम् ।
त्रिभिस्त्रिभिर्यमौ वीरौ धर्मराजं च सप्तभिः ॥ ४३
विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनम् ।
धृष्टद्युम्नं च विंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ४४
शतशश्चापरान्योधान्सद्विपांश्च रथान्रणे ।
शरैरवचकर्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः ॥ ४५
न संदधद्विमुञ्चन्वा मण्डलीकृतकार्मुकः ।
अदृश्यत रिपून्निघ्नञ्छिक्षयाऽस्त्रबलेन च ॥ ४६
तस्य तान्निघ्नतः शत्रून्हेमपृष्ठं महद्धनुः ।
अजस्रं मण्डलीभूतं ददृशुः समरे जनाः ॥ ४७
ततो युधिष्ठिरो राजा भल्लाभ्यामच्छिनद्धनुः ।
तव पुत्रस्य कौरव्य यतमानस्य संयुगे ॥ ४८

लक्ष्म्येति विशेषणे तृतीया ॥ ३९ ॥

चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

विव्याध चैनं दशभिः सम्यगस्तैः शरोत्तमैः ।
वर्म चाशु समासाद्य ते भित्त्वा क्षितिमाविशन् ४९
ततः प्रमुदिताः पार्थाः परिवव्रुर्युधिष्ठिरम् ।
यथा वृत्रवधे देवाः पुरा शक्रं महर्षयः ॥ ५०
ततोऽन्यद्धनुरादाय तव पुत्रः प्रतापवान् ।
तिष्ठतिष्ठेति राजानं ब्रुवन्पाण्डवमभ्ययात् ॥ ५१
तमायान्तमभिप्रेक्ष्य तव पुत्रं महामृधे ।
प्रत्युद्ययुः समुदिताः पाञ्चाला जयगृद्धिनः ॥ ५२
तान्द्रोणः प्रतिजग्राह परीप्सन्युधि पाण्डवम् ।
चण्डवातोद्धुतान्मेघान्गिरिरम्बुमुचो यथा ॥ ५३
तत्र राजन्महानासीत्संग्रामो रोमहर्षणः ।
पाण्डवानां महाबाहो तावकानां च संयुगे ॥ ५४
रुद्रस्याक्रीडसदृशः संहारः सर्वदेहिनाम् ॥ ५५
ततः शब्दो महानासीद्यातो येन धनंजयः ।
अतीव सर्वशब्देभ्यो रोमहर्षकरः प्रभो ॥ ५६
अर्जुनस्य महाबाहो तावकानां च धन्विनाम् ।
मध्ये भारतसैन्यस्य माधवस्य महारणे ।
द्रोणस्यापि परैः सार्धं व्यूहद्वारे महारणे ॥ ५७
एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते ।
क्रुद्धेऽर्जुने तथा द्रोणे सात्वते च महारथे ॥ ५८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

## पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

द्रोणपराक्रमवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
अपराह्णे महाराज संग्रामः सुमहानभूत् ।
पर्जन्यसमनिर्घोषः पुनर्द्रोणस्य सोमकैः ॥ १
शोणाश्वं रथमास्थाय नरवीरः समाहितः ।
समरेऽभ्यद्रवत्पाण्डूञ्जवमास्थाय मध्यमम् ॥ २
तव प्रियहिते युक्तो महेष्वासो महाबलः ।
चित्रपुङ्खैः शितैर्बाणैः कलशोत्तमसंभवः ।
'जघान सोमकान्राजन्सृञ्जयान्केकयानपि ॥' ३
वरान्वरान्हि योधानां विचिन्वन्निव भारत ।
आक्रीडत रणे राजन्भारद्वाजः प्रतापवान् ॥ ४
तमभ्ययाद्बृहत्क्षत्रः केकयानां महारथः ।
भ्रातॄणां नृप पञ्चानां श्रेष्ठः समरकर्कशः ॥ ५
विमुञ्चन्विशिखांस्तीक्ष्णानाचार्यं भृशमार्दयत् ।
महामेघो यथा वर्षं विमुञ्चन्गन्धमादने ॥ ६
तस्य द्रोणो महाराज स्वर्णपुङ्खाञ्शिलाशितान् ।
प्रेषयामास संक्रुद्धः सायकान्दश पञ्च च ॥ ७
तांस्तु द्रोणविनिर्मुक्तान्क्रुद्धाशीविषसंनिभान् ।
एकैकं पञ्चभिर्बाणैर्युधि चिच्छेद हृष्टवत् ॥ ८
तदस्य लाघवं दृष्ट्वा प्रहस्य द्विजपुङ्गवः ।
प्रेषयामास विशिखानष्टौ संनतपर्वणः ॥ ९
तान्दृष्ट्वा पततस्तूर्णं द्रोणचापच्युताञ्शरान् ।
अवारयच्छरैरेव तावद्भिर्निशितैर्मृधे ॥ १०
ततोऽभवन्महाराज तव सैन्यस्य विस्मयः ।
बृहत्क्षत्रेण तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ॥ ११
ततो द्रोणो महाराज बृहत्क्षत्रं विशेषयन् ।
प्रादुश्चक्रे रणे दिव्यं ब्राह्ममस्त्रं सुदुर्जयम् ॥ १२
कैकेयोऽस्त्रं समालोक्य मुक्तं द्रोणेन संयुगे ।
ब्रह्मास्त्रेणैव राजेन्द्र ब्राह्ममस्त्रमशातयत् ॥ १३
ततोऽस्त्रे निहते ब्राह्मे बृहत्क्षत्रस्तु भारत ।
विव्याध ब्राह्मणं षष्ट्या स्वर्णपुङ्खैः शिलाशितैः ॥ १४
तं द्रोणो द्विपदां श्रेष्ठो नाराचेन समार्पयत् ।
स तस्य कवचं भित्त्वा प्राविशद्धरणीतलम् ॥ १५
कृष्णसर्पो यथा मुक्तो वल्मीकं नृपसत्तम ।
तथाऽत्यगान्महीं बाणो भित्त्वा कैकेयमाहवे ॥ १६
सोऽतिविद्धो महाराज कैकेयो द्रोणसायकैः ।
क्रोधेन महताऽऽविष्टो व्यावृत्य नयने शुभे ॥ १७
द्रोणं विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ।
सारथिं चास्य बाणेन भृशं मर्मस्वताडयत् ॥ १८

द्रोणस्तु बहुभिर्विद्धो बृहत्क्षत्रेण मारिष ।
असृजद्विशिखांस्तीक्ष्णान्केकेयस्य रथं प्रति ॥ १९
व्याकुलीकृत्य तं द्रोणो बृहत्क्षत्रं महारथम् ।
अश्वांश्चतुर्भिर्न्यवधीच्चतुरोऽस्य पतत्रिभिः ॥ २०
सूतं चैकेन बाणेन रथनीडादपातयत् ।
द्वाभ्यां ध्वजं च च्छत्रं च च्छित्त्वा भूमावपातयत् ॥
ततः साधुविसृष्टेन नाराचेन द्विजर्षभः ।
हृद्यविध्यद्बृहत्क्षत्रं स च्छिन्नहृदयोऽपतत् ॥ २२
बृहत्क्षत्रे हते राजन्केकयानां महारथे ।
शैशुपालिरभिक्रुद्धो यन्तारमिदमब्रवीत् ॥ २३
सारथे याहि यत्रैष द्रोणस्तिष्ठति दंशितः ।
विनिघ्नन्केकयान्सर्वान्पाञ्चालानां च वाहिनीं २४
तस्य तद्वचनं श्रुत्वा सारथी रथिनां वरम् ।
द्रोणाय प्रापयामास काम्भोजैर्जवनैर्हयैः ॥ २५
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः ।
वधायाभ्यद्रवद्द्रोणं पतङ्ग इव पावकम् ॥ २६
सोऽविध्यत तदा द्रोणं षष्ट्या साश्वरथध्वजम् ।
पुनश्चान्यैः शरैस्तीक्ष्णैः सुप्तं व्याघ्रं तुदन्निव ॥ २७
तस्य द्रोणो धनुर्मध्ये क्षुरप्रेण शितेन च ।
चकर्त गार्ध्रपत्रेण यतमानस्य शुष्मिणः ॥ २८
अथान्यद्धनुरादाय शैशुपालिर्महारथः ।
विव्याध सायकैर्द्रोणं कङ्कबर्हिणवाजितैः ॥ २९
तस्य द्रोणो हयान्हत्वा चतुर्भिश्चतुरः शरैः ।
सारथेश्च शिरः कायाच्चकर्त प्रहसन्निव ॥ ३०
अथैनं पञ्चविंशत्या सायकानां समार्पयत् ॥ ३१
अवप्लुत्य रथाच्चैद्यो गदामादाय सत्वरः ।
भारद्वाजाय चिक्षेप रुषितामिव पन्नगीम् ॥ ३२
तामापतन्तीमालोक्य कालरात्रिमिवोद्यताम् ।
अश्मसारमयीं गुर्वीं तपनीयविभूषिताम् ।
शरैरनेकसाहस्रैर्भारद्वाजोऽच्छिनच्छितैः ॥ ३३
सा छिन्ना बहुभिर्बाणैर्भारद्वाजेन मारिष ।
गदा पपात कौरव्य नादयन्ती धरातलम् ॥ ३४
गदां विनिहतां दृष्ट्वा धृष्टकेतुरमर्षणः ।
तोमरं व्यसृजद्वीरः शक्तिं च कनकोज्ज्वलाम् ३५
तोमरं पञ्चभिर्भित्त्वा शक्तिं चिच्छेद पञ्चभिः ।
तौ जग्मतुर्महीं छिन्नौ सर्पाविव गरुत्मता ॥ ३६
ततोऽस्य विशिखं तीक्ष्णं वधाय वधकाङ्क्षिणः ।
प्रेषयामास समरे भारद्वाजः प्रतापवान् ॥ ३७
स तस्य कवचं भित्त्वा हृदयं चामितौजसः ।
अभ्यगाद्धरणीं बाणो हंसः पद्मवनं यथा ॥ ३८
पतङ्गं हि ग्रसेच्चाषो यथा क्षुद्रं बुभुक्षितः
तथा द्रोणोऽग्रसच्छूरो धृष्टकेतुं महाहवे ॥ ३९
निहते चेदिराजे तु तत्खण्डं पित्र्यमाविशत् ।
अमर्षवशमापन्नः पुत्रोऽस्य परमास्त्रवित् ॥ ४०
तमपि प्रहसन्द्रोणः शरैर्निन्ये यमक्षयम् ।
महाव्याघ्रो महारण्ये मृगशावं यथा बली ॥ ४१
तेषु प्रक्षीयमाणेषु पाण्डवेयेषु भारत ।
जरासन्धसुतो वीरः स्वयं द्रोणमुपाद्रवत् ॥ ४२
स तु द्रोणं महाबाहुः शरधाराभिराहवे ।
अदृश्यमकरोत्तूर्णं जलदो भास्करं यथा ॥ ४३
तस्य तल्लाघवं दृष्ट्वा द्रोणः क्षत्रियमर्दनः ।
व्यसृजत्सायकांस्तूर्णं शतशोऽथ सहस्रशः ॥ ४४
छादयित्वा रणे द्रोणं रथस्थं रथिनां वरम् ।
जारासन्धिं जघानाशु मिषतां सर्वधन्विनाम् ॥ ४५
योयो विधीयते खण्डस्तंतं द्रोणोऽन्तकोपमः ।
आदत्त सर्वभूतानि प्राप्ते काले यथान्तकः ॥ ४६
ततो द्रोणो महाराज नाम विश्राव्य संयुगे ।
शरैरनेकसाहस्रैः पाण्डवेयान्समावृणोत् ॥ ४७
ते तु नामाङ्किता बाणा द्रोणेनास्ताः शिलाशिताः ।
नरान्नागान्हयांश्चैव निजघ्नुः शतशो मृधे ॥ ४८
ते वध्यमाना द्रोणेन शक्रेणेव महासुराः ।
समकम्पन्त पाञ्चाला गावः शीतार्दिता इव ॥ ४९
ततो निष्टानको घोरः पाण्डवानामजायत ।
द्रोणेन वध्यमानेषु सैन्येषु भरतर्षभ ॥ ५०
प्रताप्यमानाः सूर्येण हन्यमानाश्च सायकैः ।
अन्वपद्यन्त पाञ्चालास्तदा संत्रस्तचेतसः ॥ ५१
मोहिता बाणजालेन भारद्वाजेन संयुगे ।
ऊरुग्राहगृहीतानां पाञ्चालानां महारथाः ॥ ५२

निष्टानकः कष्टस्वनः ॥ ५० ॥

ऊरुग्राहः ऊरुस्तम्भः ॥ ५२ ॥

चेदयश्च महाराज सृञ्जयाः काशिकोसलाः ।
अभ्यद्रवन्त संहृष्टा भारद्वाजं युयुत्सया ॥ ५३
ब्रुवन्तश्च रणेऽन्योन्यं चेदिपाञ्चालसृञ्जयाः ।
हत द्रोणं हत द्रोणमिति ते द्रोणमभ्ययुः ॥ ५४
यतन्तः पुरुषव्याघ्राः सर्वशक्त्या महाद्युतिम् ।
निनीषवो रणे द्रोणं यमस्य सदनं प्रति ॥ ५५
यतमानांस्तु तान्वीरान्भारद्वाजः शिलीमुखैः ।
यमाय प्रेषयामास चेदिमुख्यान्विशेषतः ॥ ५६
तेषु प्रक्षीयमाणेषु चेदिमुख्येषु सर्वशः ।
पाञ्चलाः समकम्पन्त द्रोणसायकपीडिताः ॥ ५७
प्राक्रोशन्भीमसेनं ते धृष्टद्युम्नं च भारत ।
दृष्ट्वा द्रोणस्य कर्माणि तथारूपाणि मारिष ॥ ५८
भीम उवाच ।
ब्राह्मणेन तपो नूनं चरितं दुश्चरं महत् ।
तथा हि युधि संक्रुद्धो दहति क्षत्रियर्षभान् ॥ ५९
धर्मो युद्धं क्षत्रियस्य ब्राह्मणस्य परं तपः ।
तपस्वी कृतविद्यश्च प्रेक्षितेनापि निर्दहेत् ॥ ६०
द्रोणाग्निमस्त्रसंस्पर्शं प्रविष्टाः क्षत्रियर्षभाः ।
बहवो दुस्तरं घोरं यत्रादह्यन्त भारत ॥ ६१
यथाबलं यथोत्साहं यथासत्वं महाद्युतिः ।
मोहयन्सर्वभूतानि द्रोणो हन्ति बलानि नः ॥ ६२
सञ्जय उवाच ।
तस्य तद्वचनं श्रुत्वा क्षत्रधर्मा व्यवस्थितः ।
अर्धचन्द्रेण चिच्छेद द्रोणस्य सशरं धनुः ॥ ६३
स संरब्धतरो भूत्वा द्रोणः क्षत्रियमर्दनः ॥ ६४
अन्यत्कार्मुकमादाय भास्वरं वेगवत्तरम् ।
तत्राधाय शरं तीक्ष्णं परानीकविशातनम् ॥ ६५
आकर्णपूर्णमाचार्यो बलवानभ्यवासृजत् ।
स हत्वा क्षत्रधर्माणं जगाम धरणीतलम् ॥ ६६
स भिन्नहृदयो वाहादपतन्मेदिनीतले ।
ततः सैन्यान्यकम्पन्त धृष्टद्युम्नसुते हते ॥ ६७
अथ द्रोणं समारोहच्चेकितानो महाबलः ।
स द्रोणं दशभिर्विद्ध्वा प्रत्यविद्ध्यत्स्तनान्तरे ॥ ६८
चतुर्भिः सारथिं चास्य चतुर्भिश्चतुरो हयान् ।
तमाचार्यस्त्रिभिर्बाणैर्बाह्वोरुरसि चार्दयत् ॥ ६९
ध्वजं सप्तभिरुन्मथ्य यन्तारमवधीत्त्रिभिः ।
तस्य सूते हते तेऽश्वा रथमादाय विद्रुताः ॥ ७०
समरे शरसंवीता भारद्वाजेन मारिष ।
चेकितानरथं दृष्ट्वा हताश्वं हतसारथिम् ॥ ७१
तान्समेतान्रणे शूरांश्चेदिपाञ्चालसृञ्जयान् ।
समन्ताद्द्रावयन्द्रोणो बह्वशोभत मारिष ॥ ७२
आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः ।
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ ७३
अथ द्रोणं महाराज विचरन्तमभीतवत् ।
वज्रहस्तममन्यन्त शत्रवः शत्रुसूदनम् ॥ ७४
ततोऽब्रवीन्महाबाहुर्द्रुपदो बुद्धिमान्नृप ।
लुब्धोऽयं क्षत्रियान्हन्ति व्याघ्रः क्षुद्रमृगानिव ७५
कृच्छ्रान्दुर्योधनो लोकान्पापः प्राप्स्यति दुर्मतिः ।
यस्य लोभाद्विनिहताः समरे क्षत्रियर्षभाः ॥ ७६
शतशः शेरते भूमौ निकृत्ता गोवृषा इव ।
रुधिरेण परीताङ्गाः श्वसृगालादनीकृताः ॥ ७७
सञ्जय उवाच ।
एवमुक्त्वा महाराज द्रुपदोऽक्षौहिणीपतिः ।
पुरस्कृत्य रणे पार्थान्द्रोणमभ्यद्रवद्द्रुतम् ॥ ७८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

## षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

**अर्जुनवृत्तान्तपरिज्ञानाय सात्यकिं प्रेषितवता युधिष्ठिरेण पुनस्तयोर्वृत्तान्तपरिज्ञानाय भीमसेनस्य तत्र गमनचोदना ॥ १ ॥**

सञ्जय उवाच ।
व्यूहेष्वालोड्यमानेषु पाण्डवानां ततस्ततः ।
सुदूरमन्वयुः पार्थाः पाञ्चालाः सह सोमकैः ॥ १
वर्तमाने तथा रौद्रे संग्रामे रोमहर्षणे ।

आकर्णमुपागतं पलितं केशादेः शौक्ल्यं यस्य । वयसा कालपिण्डसंयोगेन । अशीतिपञ्चकः चतुःशताब्दः ॥ ७३ ॥

पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

संक्षये जगतस्तीव्रे युगान्त इव भारत ॥ २
द्रोणे युधि पराक्रान्ते नर्दमाने मुहुर्मुहुः ।
पाञ्चालेषु च क्षीणेषु वध्यमानेषु पाण्डुषु ॥ ३
नापश्यच्छरणं कंचिद्धर्मराजो युधिष्ठिरः ।
चिन्तयामास राजेन्द्र कथमेतद्भविष्यति ॥ ४
ततो वीक्ष्य दिशः सर्वाः सव्यसाचिदिदृक्षया ।
युधिष्ठिरो ददर्शाथ नैव पार्थं न माधवम् ॥ ५
सोऽपश्यन्नरशार्दूलं वानरर्षभलक्षणम् ।
गाण्डीवस्य च निर्घोषमशृण्वन्व्यथितेन्द्रियः ॥ ६
अपश्यन्सात्यकिं चापि वृष्णीनां प्रवरं रथम् ।
चिन्तयाभिपरीताङ्गो धर्मराजो युधिष्ठिरः ।
नाध्यगच्छत्तदा शान्तिं तावपश्यन्नरोत्तमौ ॥ ७
लोकोपक्रोशभीरुत्वाद्धर्मराजो महामनाः ।
अचिन्तयन्महाबाहुः शैनेयस्य रथं प्रति ॥ ८
पदवीं प्रेषितश्चैव फल्गुनस्य मया रणे ।
शैनेयः सात्यकिः सत्यो मित्राणामभयंकरः ॥ ९
तदिदं ह्येकमेवासीद्द्विधा जातं ममाऽद्य वै ।
सात्यकिश्च हि विज्ञेयः पाण्डवश्च धनञ्जयः ॥ १०
सात्यकिं प्रेषयित्वा तु पाण्डवस्य पदानुगम् ।
सात्वतस्यापि कं युद्धे प्रेषयिष्ये पदानुगम् ॥ ११
करिष्यामि प्रयत्नेन भ्रातुरन्वेषणं यदि ।
युयुधानमनन्विष्य लोको मां गर्हयिष्यति ॥ १२
भ्रातुरन्वेषणं कृत्वा धर्मपुत्रो युधिष्ठिरः ।
परित्यजति वार्ष्णेयं सात्यकिं सत्यविक्रमम् ॥ १३
लोकापवादभीरुत्वात्सोऽहं पार्थं वृकोदरम् ।
पदवीं प्रेषयिष्यामि माधवस्य महात्मनः ॥ १४
यथैव च मम प्रीतिरर्जुने शत्रुसूदने ।
तथैव वृष्णिवीरेऽपि सात्वते युद्धदुर्मदे ॥ १५
अतिभारे नियुक्तश्च मया शैनेयनन्दनः ।
स तु मित्रोपरोधेन गौरवात्तु महाबलः ।
प्रविष्टो भारतीं सेनां मकरः सागरं यथा ॥ १६
असौ हि श्रूयते शब्दः शूराणामनिवर्तिनाम् ।
मिथः संयुध्यमानानां वृष्णिवीरेण धीमता ॥ १७
प्राप्तकालं सुबलवन्निश्चितं बहुधा हि मे ।
तत्रैव पाण्डवेयस्य भीमसेनस्य धन्विनः ।
गमनं रोचते मह्यं यत्र यातौ महारथौ ॥ १८
न चाप्यसह्यं भीमस्य विद्यते भुवि किंचन ॥ १९
शक्तो ह्येष रणे यत्तः पृथिव्यां सर्वधन्विनाम् ।
स्वबाहुबलमास्थाय प्रतिव्यूहितुमञ्जसा ॥ २०
यस्य बाहुबलं सर्वे समाश्रित्य महात्मनः ।
वनवासान्निवृत्ताः स्म न च युद्धेषु निर्जिताः ॥ २१
इतो गते भीमसेने सात्वतं प्रति पाण्डवे ।
सनाथौ भवितारौ हि युधि सात्वतफल्गुनौ ॥ २२
कामं त्वशोचनीयौ तौ रणे सात्वतफल्गुनौ ।
रक्षितौ वासुदेवेन स्वयं शस्त्रविशारदौ ॥ २३
अवश्यं तु मया कार्यमात्मनः शोकनाशनम् ।
तस्माद्भीमं नियोक्ष्यामि सात्वतस्य पदानुगम् २४
ततः प्रतिकृतं मन्ये विधानं सात्यकिं प्रति ॥ २५
एवं निश्चित्य मनसा धर्मपुत्रो युधिष्ठिरः ।
यन्तारमब्रवीद्राजा भीमं प्रति नयस्व माम् ॥ २६
धर्मराजवचः श्रुत्वा सारथिर्हयकोविदः ।
रथं हेमपरिष्कारं भीमान्तिकमुपानयत् ॥ २७
भीमसेनमनुज्ञाप्य प्राप्तकालमचिन्तयत् ।
कश्मलं प्राविशद्राजा बहु तत्र समादिशत् ॥ २८
स कश्मलसमाविष्टो भीममाहूय पार्थिवः ।
अब्रवीद्वचनं राजन्कुन्तीपुत्रो युधिष्ठिरः ॥ २९
यः सदेवान्सगन्धर्वान्दैत्यांश्चैकरथोऽजयत् ।
तस्य लक्ष्म न पश्यामि भीमसेनानुजस्य ते ॥ ३०
सञ्जय उवाच ।
ततोऽब्रवीद्धर्मराजं भीमसेनस्तथागतम् ।
नैवाद्राक्षं नचाश्रौषं तव कश्मलमीदृशम् ॥ ३१
पुरातिदुःखदीर्णानां भवान्गतिरभूद्धि नः ।
उत्तिष्ठोत्तिष्ठ राजेन्द्र शाधि किं करवाणि ते ॥ ३२
न ह्यसाध्यमकार्यं वा विद्यते मम मानद ।
आज्ञापय कुरुश्रेष्ठ मा च शोके मनः कृथाः ॥ ३३

वानरर्षभलक्षणं वानरप्रधानध्वजम् । वरवानरकेतनमिति पाठे वा ॥ ६ ॥ सत्यो दृढप्रतिज्ञः ॥ ९ ॥ सात्यकिंप्रति प्रतिविधानं कृतमित्यन्वयः ॥ २५ ॥

सञ्जय उवाच ।
तमब्रवीदश्रुपूर्णः कृष्णसर्प इव श्वसन् ।
भीमसेनमिदं वाक्यं प्रम्लानवदनो नृपः ॥ ३४
श्रूयते पाञ्चजन्यस्य यथा शङ्खस्य निस्वनः ।
पूरितो वासुदेवेन संरब्धेन यशस्विना ॥ ३५
नूनमद्य हतः शेते तव भ्राता धनञ्जयः ।
तस्मिन्विनिहते नूनं युध्यतेऽसौ जनार्दनः ॥ ३६
यस्य सत्ववतो वीर्यं ह्युपजीवन्ति पाण्डवाः ।
यं भयेष्वभिगच्छन्ति सहस्राक्षमिवामराः ॥ ३७
स शूरः सैन्धवप्रेप्सुरन्वयाद्भारतीं चमूम् ।
तस्य वै गमनं विद्मो भीम नावर्तनं पुनः ॥ ३८
श्यामो युवा गुडाकेशो दर्शनीयो महारथः ।
व्यूढोरस्को महाबाहुर्मत्तद्विरदविक्रमः ॥ ३९
चकोरनेत्रस्ताम्रास्यो द्विषतां भयवर्धनः ।
'मम प्रियहितार्थं च शक्रलोकादिहागतः ॥ ४०
वृद्धोपसेवी धृतिमान्कृतज्ञः सत्यसङ्गरः ।
प्रविष्टो महतीं सेनामपर्यन्तां धनञ्जयः ॥ ४१
प्रविष्टे च चमूं घोरामर्जुने शत्रुनाशने ।
प्रेषितः सात्वतो वीरः फल्गुनस्य पदानुगः ॥ ४२
तस्याभिगमनं जाने भीम नावर्तनं पुनः ।'
तदिदं मम भद्रं ते शोकस्थानमरिंदम ॥ ४३
अर्जुनार्थे महाबाहो सात्वतस्य च कारणात् ।
वर्धते हविषेवाग्निरिध्यमानः पुनः पुनः ॥ ४४
तस्य लक्ष्म न पश्यामि तेन विन्दामि कश्मलम् ।
तं विद्धि पुरुषव्याघ्रं सात्वतं च महारथम् ॥ ४५
स तं महारथं पश्चादनुयातस्तवानुजम् ।
तमपश्यन्महाबाहुमहं विन्दामि कश्मलम् ॥ ४६
'अथैनं पुनराचक्ष्व लोहिताक्षं सकेशवम् ।
दृष्ट्वा कुशलिनं पार्थं सैन्धवान्ते ससात्यकिम् ॥ ४७
संविदं मम कुर्यास्त्वं सिंहनादेन पाण्डव ॥ ४८
नूनं विनिहतः शूरः सव्यसाची परंतप ।'
पार्थे तस्मिन्हते चैव युध्यते गरुडध्वजः ॥ ४९
सहयो नास्य वै कश्चित्तेन विन्दामि कश्मलम् ।
तस्मात्कृष्णो रणे नूनं युध्यते युद्धकोविदः ॥ ५०
न हि मे शुध्यते भावस्तयोरेव परंतप ।
स तत्र गच्छ कौन्तेय यत्र यातो धनञ्जयः ॥ ५१
सात्यकिश्च महावीर्यः कर्तव्यं यदि मन्यसे ।
वचनं मम धर्मज्ञ भ्राता ज्येष्ठो भवामि ते ॥ ५२
न मेऽर्जुनस्तथा ज्ञेयो ज्ञातव्यः सात्यकिर्यथा ॥ ५३
चिकीर्षुर्मत्प्रियं पार्थ स यातः सव्यसाचिनः ।
पदवीं दुर्गमां घोरामगम्यामकृतात्मभिः ॥ ५४
दृष्ट्वा कुशलिनौ कृष्णौ सात्वतं चैव सात्यकिम् ।
संविदं चैव कुर्यास्त्वं सिंहनादेन पाण्डव ॥ ५५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

## सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

कतिचन धार्तराष्ट्रान्निहत्य निर्गच्छता भीमेन स्वपथं निरुन्धानस्य द्रोणस्य रथभञ्जनम् ॥ १ ॥

भीमसेन उवाच ।
ब्रह्मेशानेन्द्रवरुणानवहद्यः पुरा रथः ।
तमास्थाय गतौ कृष्णौ न तयोर्विद्यते भयम् ॥ १
तवाज्ञां शिरसा बिभ्रदेष गच्छामि मा शुचः ।
समेत्य तान्नरव्याघ्रांस्तव दास्यामि संविदम् ॥ २
सञ्जय उवाच ।
एतावदुक्त्वा प्रययौ परिदाय युधिष्ठिरम् ।
धृष्टद्युम्नाय बलवान्सुहृद्भ्यश्च पुनःपुनः ।
धृष्टद्युम्नं चेदमाह भीमसेनो महाबलः ॥
विदितं ते महाबाहो यथा द्रोणो महारथः ।

चकोरनेत्रो रक्तान्तायतनयनः । ताम्रास्यो रक्तगौरमुखः ॥ ४० ॥
षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

संविदं ज्ञापनम् ॥ २ ॥

ग्रहणे धर्मराजस्य सर्वोपायेन वर्तते ॥ ४
न च मे गमने कृत्यं तादृक्पार्षत विद्यते ।
यादृशं रक्षणे राज्ञः कार्यमात्ययिकं हि नः ॥ ५
एवमुक्तोऽस्मि पार्थेन प्रतिवक्तुं न चोत्सहे ।
प्रयास्ये तत्र यत्रासौ मुमूर्षुः सैन्धवः स्थितः ॥ ६
धर्मराजस्य वचने स्थातव्यमविशङ्कया ।
यास्यामि पदवीं भ्रातुः सात्वतस्य च धीमतः ॥ ७
सोऽद्य यत्तो रणे पार्थं परिरक्ष युधिष्ठिरम् ।
एतद्धि सर्वकार्याणां परमं कृत्यमाहवे ॥ ८
तमब्रवीन्महाराज धृष्टद्युम्नो वृकोदरम् ।
ईप्सितं ते करिष्यामि गच्छ पार्थाविचारयन् ॥ ९
नाहत्वा समरे द्रोणो धृष्टद्युम्नं कथंचन ।
निग्रहं धर्मराजस्य प्रकरिष्यति संयुगे ॥ १०

सञ्जय उवाच ।

ततो निक्षिप्य राजानं धृष्टद्युम्ने च पाण्डवम् ।
अभिवाद्य गुरुं ज्येष्ठं प्रययौ येन फल्गुनः ॥ ११
परिष्वक्तश्च कौन्तेयो धर्मराजेन मारुतिः ।
आघ्रातश्च तथा मूर्ध्नि श्रावितश्चाशिषः शुभाः ॥ १२
[कृत्वा प्रदक्षिणान्विप्रानर्चितांस्तुष्टमानसान् ।
आलभ्य मङ्गलान्यष्टौ पीत्वा कैरातकं मधु ॥ १३
द्विगुणद्रविणो वीरो मदरक्तान्तलोचनः ।
विप्रैः कृतस्वस्त्ययनो विजयोत्पादसूचितः ॥ १४
पश्यन्नेवात्मनो बुद्धिं विजयानन्दकारिणीम् ।
अनुलोमानिलैश्चाशु प्रदर्शितजयोदयः ॥] १५
भीमसेनो महाबाहुः कवची शुभकुण्डली ।
सगदः सतलत्राणः सशरी रथिनां वरः ।
रथमारुह्य निर्युक्तं सर्वोपकरणान्वितम् ॥' १६
तस्य कार्ष्णायसं वर्म हेमचित्रं महर्द्धिमत् ।
विबभौ सर्वतः श्लिष्टं सविद्युदिव तोयदः ॥ १७
पीतरक्तासितसितैर्वासोभिश्च सुवेष्टितः ।
कण्ठसूत्रेण विबभौ सेन्द्रायुध इवाम्बुदः ॥ १८

प्रयाते भीमसेने तु तव सैन्यं युयुत्सया ।
पाञ्चजन्यरवो घोरः पुनरासीद्विशांपते ॥ १९
तं श्रुत्वा निनदं घोरं त्रैलोक्यत्रासनं महत् ।
पुनर्भीमं महाबाहुं धर्मपुत्रोऽभ्यभाषत ॥ २०
एष वृष्णिप्रवीरेण ध्मातः सलिलजो भृशम् ।
पृथिवीं चान्तरिक्षं च विनादयति शङ्खराट् ॥ २१
नूनं व्यसनमापन्ने सुमहत्सव्यसाचिनि ।
कुरुभिर्युध्यते सार्धं सर्वैश्चक्रगदाधरः ॥ २२
नूनमार्या महत्कुन्ती पापं व्यसनमीदृशम् ।
द्रौपदी च सुभद्रा च पश्यन्ति सह बन्धुभिः ।
तद्भीम त्वरया युक्तो याहि यत्र धनञ्जयः ॥ २३
मुह्यतीव हि मे चित्तं धनञ्जयदिदृक्षया ।
दिशश्च प्रदिशः पार्थं सात्वतस्य च कारणात् ॥ २४
गच्छगच्छेति गुरुणा सोऽनुज्ञातो वृकोदरः ।
ततः पाण्डुसुतो राजन्भीमसेनः प्रतापवान् ॥ २५
बद्धगोधाङ्गुलित्राणः प्रगृहीतशरासनः ।
ज्येष्ठेन प्रहितो भ्रात्रा भ्राता भ्रातुः प्रियंकरः ॥ २६
आहत्य दुन्दुभिं भीमः शङ्खं प्रध्माप्य चासकृत् ।
विनद्य सिंहनादेन ज्यां विकर्षन्पुनःपुनः ॥ २७
तेन शब्देन वीराणां पातयित्वा मनांस्युत ।
दर्शयन्घोरमात्मानममित्रान्सहसाऽभ्ययात् ॥ २८
तमूहुर्जवना दान्ता विरुवन्तो हयोत्तमाः ।
विशोकेन सुसंयत्ता मनोमारुतरंहसः ॥ २९
आरुजन्विरुजन्पार्थो ज्यां विकर्षंश्च पाणिना ।
संप्रकर्षन्विकर्षंश्च सेनाग्रं समलोडयत् ॥ ३०
तं प्रयान्तं महाबाहुं पाञ्चालाः सहसोमकाः ।
पृष्ठतोऽनुययुः शूरा मघवन्तमिवामराः ॥ ३१
तं समेत्य महाराज तावकाः पर्यवारयन् ।
दुःशासनश्चित्रसेनः कुण्डभेदी विविंशतिः ॥ ३२
दुर्मुखो दुःसहश्चैव विकर्णश्च शलस्तथा ।
विन्दानुविन्दौ सुमुखो दीर्घबाहुः सुदर्शनः ॥ ३३

---

आत्ययिकं अतिशयितम् ॥५॥ इदं श्लोकत्रयं झ. पुस्तक एव वर्तते । अनलो गोहिरण्यं च दूर्वागोरोचनामृतम् । अक्षतं दधि चेत्यष्टौ मङ्गलानि प्रचक्षते ॥ १३ ॥ विजयोत्पादसूचितः सूचितविजयोत्पादः ॥ १४ ॥ रथमारुह्य प्रययाविति पूर्वेणान्वयः ॥ १६ ॥ आह कुन्ती नूनमार्या पापमद्य निदर्शनम् । द्रौपद्री च सुभद्रा च पश्यन्त्यौ सह बन्धुभिः । इति झ. पाठः ॥ २३ ॥ आरुजन् कृन्तन् । विरुजन्विध्यन् । विकर्षन् अत्यर्थं कर्षन् । संप्रकर्षन् सम्यक्प्रकर्षेण विलिखन् । विकर्षन् विक्षिपन् ॥३०॥

वृन्दारकः सुहस्तश्च सुषेणो दीर्घलोचनः ।
अभयो रौद्रकर्मा च सुवर्मा दुर्विमोचनः ॥ ३४
शोभन्तो रथिनां श्रेष्ठाः सहसैन्यपदानुगाः ।
संयत्ताः समरे वीरा भीमसेनमुपाद्रवन् ॥ ३५
तैः समन्ताद्वृतः शूरः समरेषु महारथः ।
तान्समीक्ष्य तु कौन्तेयो भीमसेनः पराक्रमी ।
अभ्यवर्तत वेगेन सिंहः क्षुद्रमृगानिव ॥ ३६
ते महास्त्राणि दिव्यानि तत्र वीरा अदर्शयन् ।
छादयन्तः शरैर्भीमं मेघाः सूर्यमिवोदितम् ॥ ३७
ततः क्रुद्धो महाराज भीमसेनः पराक्रमी ।
अग्रतः स्यन्दनानीकं शरवर्षैरवाकिरत् ॥ ३८
ते वध्यमानाः समरे तव पुत्रा महारथाः ।
भीमं भीमबला युद्धे योधयन्ति जयैषिणः ॥ ३९
ततो दुःशासनः क्रुद्धो रथशक्तिं समाक्षिपत् ।
सर्वपारसवीं तीक्ष्णां जिघांसुः पाण्डुनन्दनम् ॥ ४०
आपतन्तीं महाशक्तिं तव पुत्रप्रणोदिताम् ।
द्विधा चिच्छेद तां भीमस्तदद्भुतमिवाभवत् ॥ ४१
अथान्यैर्विशिखैस्तीक्ष्णैः संक्रुद्धः कुण्डभेदिनम् ।
सुषेणं दीर्घनेत्रं च त्रिभिस्त्रीनवधीद्बली ॥ ४२
ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम् ।
पुत्राणां तव वीराणां युध्यतामवधीत्पुनः ॥ ४३
अभयं रौद्रकर्माणं दुर्विमोचनमेव च ।
त्रिभिस्त्रीनवधीद्भीमः पुनरेव सुतांस्तव ॥ ४४
वध्यमाना महाराज पुत्रास्तव बलीयसा ।
भीमं प्रहरतां श्रेष्ठं समन्तात्पर्यवारयन् ॥ ४५
ते शरैर्भीमकर्माणं ववर्षुः पाण्डवं युधि ।
मेघा इवातपापाये धाराभिर्धरणीधरम् ॥ ४६
स तद्बाणमयं वर्षमश्मवर्षमिवाचलः ।
प्रतीच्छन्पाण्डुदायादो न प्राव्यथत शत्रुहा ॥ ४७
विन्दानुविन्दौ सहितौ सुवर्माणं च ते सुतम् ।
प्रहसन्नेव कौन्तेयः शरैर्निन्ये यमक्षयम् ॥ ४८
ततः सुदर्शनं वीरं पुत्रं ते भरतर्षभ ।
विव्याध समरे तूर्णं स पपात ममार च ॥ ४९
सोऽचिरेणैव कालेन तद्रथानीकमाशुगैः ।
दिशः सर्वाः समालोक्य व्यधमत्पाण्डुनन्दनः ५०
ततो वै रथघोषेण गर्जितेन मृगा इव ।
भज्यमानाश्च समरे तव पुत्रा विशांपते ।
प्राद्रवन्सहसा सर्वे भीमसेनभयार्दिताः ॥ ५१
अनुयायाच्च कौन्तेयः पुत्राणां ते महद्बलम् ।
विव्याध समरे राजन्कौरवेयान्समन्ततः ॥ ५२
वध्यमाना महाराज भीमसेनेन तावकाः ।
त्यक्त्वा भीमं रणाज्जग्मुश्चोदयन्तो हयोत्तमान् ५३
तांस्तु निर्जित्य समरे भीमसेनो महाबलः ।
सिंहनादरवं चक्रे बाहुशब्दं च पाण्डवः ॥ ५४
महान्तं तलशब्दं च कृत्वा द्रोणान्तिकं ययौ ।
तमावारयदाचार्यो वेलेवोद्वृत्तमर्णवम् ॥ ५५
तस्य द्रोणो रथं राजञ्छादयामास संयुगे ।
साश्वसूतध्वजं तूर्णं तदद्भुतमिवाभवत् ॥ ५६
ललाटेऽताडयच्चैनं नाराचेन स्मयन्निव ।
ऊर्ध्वरश्मिरिवादित्यो विबभौ तत्र पाण्डवः ॥ ५७
स मन्यमानस्त्वाचार्यो ममायं फल्गुनो यथा ।
भीमः करिष्यते पूजामित्युवाच वृकोदरम् ॥ ५८
भीमसेन न ते शक्यं प्रवेष्टुमरिवाहिनीम् ।
मामनिर्जित्य समरे शत्रुमद्य महाबल ॥ ५९
यदि ते सानुजः कृष्णः प्रविष्टोऽनुमते मम ।
अनीकं न तु शक्यं मे प्रवेष्टुमिह वै त्वया ॥ ६०
सञ्जय उवाच ।
अथ भीमस्तु तच्छ्रुत्वा गुरोर्वाक्यमशेषतः ।
क्रुद्धः प्रोवाच वै द्रोणं रक्तताम्रेक्षणः श्वसन् ॥ ६१
तवार्जुनो नानुमते ब्रह्मबन्धो रणाजिरम् ।
प्रविष्टः स हि दुर्धर्षः शक्रस्यापि विशेद्बलम् ॥ ६२
येन त्वं परमां पूजां कुर्वता मानितो ह्यसि ।
नार्जुनोऽहं घृणी विप्र भीमसेनोऽस्मि ते रिपुः ॥ ६३
पिता नस्त्वं गुरुर्बन्धुस्तदा पुत्रा हि ते वयम् ।
इति मन्यामहे सर्वे भवन्तं प्रणताः स्थिताः ॥ ६४
तदद्य विपरीतं ते वदतोऽस्मासु दृश्यते ।
यदि शत्रुं त्वमात्मानं मन्यसे तत्तथाऽस्त्विह ।
एष ते सदृशं कर्म शत्रोर्भीमः करिष्यति ॥ ६५

* इयं कथा झ. पाठे पूर्वाध्याये ३७ तमश्लोकादनन्तरं कथितास्ति ।

सञ्जय उवाच ।
अथोद्भाम्य गदां वीरः कालदण्डमिवान्तकः ।
द्रोणायावासृजद्राजन्स रथादवपुप्लुवे ॥ ६६
साश्वसूतध्वजं यानं द्रोणस्यापोथयत्तदा ।
तदद्भुतमपश्याम पाण्डवेयस्य विक्रमम् ॥ ६७
द्रोणं तु विरथं कृत्वा भीमसेनो महाबलः ।
अभ्यवर्तत सैन्यानि तावकानि समन्ततः ॥ ६८
स मृद्नंस्तरसा योधान्वायुर्वृक्षानिवौजसा ।
विचचार रणे राजन्वायुतुल्यपराक्रमः ॥ ६९
निर्जितस्तु तदा तेन पाण्डवेन महात्मना ।
अन्यं तु रथमातिष्ठद्द्रोणः प्रहरतां वरः ॥ ७०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

---

## अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

पुनर्द्रोणरथान्भङ्क्त्वा गच्छतो भीमस्यार्जुनदर्शनेन सिंहनादः ॥ १ ॥ तच्छ्रवणेन युधिष्ठिरस्य हर्षोदयः ॥ २ ॥

सञ्जय उवाच ।
समुत्तीर्णं रथानीकं पाण्डवं विहसन्रणे ।
विवारयिषुराचार्यः शरवर्षैरवाकिरत् ॥ १
पिबन्निव शरौघांस्तान्द्रोणचापपरिच्युतान् ।
सोऽभ्यद्रवत सोदर्यान्मोहयन्बलमायया ॥ २
तं मृधे वेगमास्थाय परं परमधन्विनः ।
चोदितास्तव पुत्रैश्च सर्वतः पर्यवारयन् ॥ ३
स तैस्तु संवृतो भीमः क्रोधेन प्रदहन्निव ।
उद्यच्छन्स गदां तेभ्यः सुघोरां सिंहवन्नदन् ।
अवासृजच्च वेगेन शत्रुपक्षविनाशिनीम् ॥ ४
इन्द्राशनिरिवेन्द्रेण प्रविद्धा संहतात्मना ।
प्रामथ्नात्सा महाराज सैनिकांस्तव संयुगे ॥ ५
घोषेण महता राजन्पूरयन्तीव मेदिनीम् ।
ज्वलन्ती तेजसा भीमा त्रासयामास ते सुतान् ॥ ६
तां पतन्तीं महावेगां दृष्ट्वा तेजोभिसंवृताम् ।
प्राद्रवंस्तावकाः सर्वे नदन्तो भैरवान्रवान् ॥ ७
सिंहनादमसह्यं हि श्रुत्वा भीमस्य संयुगे ।
प्रापतन्मनुजास्त्रस्ता रथेभ्यो रथिनस्तदा ॥ ८
ते हन्यमाना भीमेन गदाहस्तेन तावकाः ।
प्राद्रवन्त रणे भीता व्याघ्रघ्राता मृगा इव ॥ ९
स तान्विद्राव्य कौन्तेयः सङ्ख्येऽमित्रान्दुरासदान् ।
सुपर्ण इव वेगेन पक्षिराडत्यगाच्चमूम् ॥ १०
तथा तु विप्रकुर्वाणं रथयूथपयूथपम्
भारद्वाजो महाराज भीमसेनं समभ्ययात् ॥ ११
भीमं तु समरे द्रोणो वारयित्वा शरोर्मिभिः ।
अकरोत्सहसा नादं पाण्डूनां भयमादधत् ॥ १२
तद्युद्धमासीत्सुमहद्घोरं देवासुरोपमम् ।
द्रोणस्य च महाराज भीमस्य च महात्मनः ॥ १३
यदा तु विशिखैस्तीक्ष्णैर्द्रोणचापविनिःसृतैः ।
वध्यन्ते समरे वीराः शतशोऽथ सहस्रशः ॥ १४
ततो रथादवप्लुत्य वेगमास्थाय पाण्डवः ।
निमील्य नयने राजन्पदातिर्द्रोणमभ्ययात् ॥ १५
अंसे शिरो भीमसेनः करौ कृत्वोरसि स्थिरौ ।
वेगमास्थाय बलवान्मनोनिलगरुत्मताम् ॥ १६
यथा हि गोवृषो वर्षं प्रतिगृह्णाति लीलया ।
तथा भीमो नरव्याघ्रः शरवर्षं समग्रहीत् ॥ १७
स वध्यमानः समरे रथं द्रोणस्य मारिष ।
ईषायां पाणिना गृह्य प्रचिक्षेप महाबलः ॥ १८
द्रोणस्तु सत्वरो राजन्क्षिप्तो भीमेन संयुगे ।
'ददृशे तावकैर्योधैर्विस्मयोत्फुल्ललोचनैः ।
परिहृत्य रथं द्रोणश्चूर्णितं तं महीतले ॥' १९
रथमन्यं समारुह्य व्यूहद्वारं ययौ पुनः ।
तमायान्तं तथा दृष्ट्वा भग्नोत्साहं गुरुं तदा ॥ २०
गत्वा वेगात्पुनर्भीमो धुरं गृह्य रथस्य तु ।
तमप्यतिरथं भीमश्चिक्षेप भृशरोषितः ॥ २१
एवमष्टौ रथाः क्षिप्ता भीमसेनेन लीलया ॥ २२
व्यदृश्यत निमेषेण पुनः स्वरथमास्थितः

बलमायया बलाविष्करणेन ॥ २ ॥

दृश्यते तावकैर्योधैर्विस्मयोत्फुल्ललोचनैः ॥ २३
तस्मिन्क्षणे तस्य यन्ता तूर्णमश्वानचोदयत् ।
भीमसेनस्य कौरव्य तदद्भुतमिवाभवत् ॥ २४
ततः स्वरथमास्थाय भीमसेनो महाबलः ।
अभ्यद्रवत वेगेन तव पुत्रस्य वाहिनीम् ॥ २५
स मृद्नन्क्षत्रियानाजौ वातो वृक्षानिवोद्धतः ।
अगच्छद्दारयन्सेनां सिन्धुवेगो नगानिव ॥ २६
भोजानीकं समासाद्य हार्दिक्येनाभिरक्षितम् ।
प्रमथ्य तरसा वीरस्तदप्यतिबलोऽभ्ययात् ॥ २७
संत्रासयन्ननीकानि तलशब्देन पाण्डवः ।
अजयत्सर्वसैन्यानि शार्दूल इव गोवृषान् ॥ २८
भोजानीकमतिक्रम्य दरदानां च वाहिनीम् ।
तथा म्लेच्छगणानन्यान्बहून्युद्धविशारदान् ॥२९
सात्यकिं चैव संप्रेक्ष्य युध्यमानं महारथम् ।
रथेन यत्तः कौन्तेयो वेगेन प्रययौ तदा ॥ ३०
भीमसेनो महाराज द्रष्टुकामो धनञ्जयम् ।
अतीत्य समरे योधांस्तावकान्पाण्डुनन्दनः ॥ ३१
सोऽपश्यदर्जुनं तत्र युध्यमानं महारथम् ।
सैन्धवस्य वधार्थं हि पराक्रान्तं पराक्रमी ॥ ३२
तं दृष्ट्वा पुरुषव्याघ्रश्चुक्रोश महतो रवान् ।
प्रावृट्काले महाराज नर्दन्निव बलाहकः ॥ ३३
तं तस्य निनदं घोरं पार्थः शुश्राव नर्दतः ।
वासुदेवश्च कौरव्य भीमसेनस्य संयुगे ॥ ३४
तौ श्रुत्वा युगपद्वीरौ निनदं तस्य शुष्मिणः ।
पुनः पुनः प्राणदतां दिदृक्षन्तौ वृकोदरम् ॥ ३५
ततः पार्थो महानादं मुञ्चन्वै माधवश्च ह ।
अभ्ययातां महाराज नर्दन्तौ गोवृषाविव ॥ ३६
भीमसेनरवं श्रुत्वा फल्गुनस्य च धन्विनः ।
अप्रीयत महाराज धर्मपुत्रो युधिष्ठिरः ॥ ३७
विशोकश्चाभवद्राजा श्रुत्वा तं निनदं तयोः ।
धनञ्जयस्य समरे जयमाशास्तवान्विभुः ॥ ३८
तथा तु नर्दमाने वै भीमसेने मदोत्कटे ।
स्मितं कृत्वा महाबाहुर्धर्मपुत्रो युधिष्ठिरः ॥ ३९
हृद्गतं मनसा प्राह ध्यात्वा धर्मभृतां वरः ।
दत्ता भीम त्वया संविकृतं गुरुवचस्तथा ॥ ४०
न हि तेषां जयो युद्धे येषां द्वेष्टाऽसि पाण्डव ।
दिष्ट्या जीवति संग्रामे सव्यसाची धनञ्जयः ॥ ४१
दिष्ट्या च कुशली वीरः सात्यकिः सत्यविक्रमः ।
दिष्ट्या शृणोमि गर्जन्तौ वासुदेवधनञ्जयौ ॥ ४२
येन शक्रं रणे जित्वा तर्पितो हव्यवाहनः ।
स हन्ता द्विषतां सङ्ख्ये दिष्ट्या जीवति फल्गुनः ४३
यस्य बाहुबलं सर्वे वयमाश्रित्य जीविताः ।
स हन्ता रिपुसैन्यानां दिष्ट्या जीवति फल्गुनः ४४
निवातकवचा येन देवैरपि सुदुर्जयाः ।
निर्जिता धनुषैकेन दिष्ट्या पार्थः स जीवति ॥ ४५
कौरवान्सहितान्सर्वान्गोग्रहार्थे समागतान् ।
योऽजयन्मत्स्यनगरे दिष्ट्या पार्थः स जीवति ॥ ४६
कालकेयसहस्राणि चतुर्दश महारणे ।
योऽवधीद्भुजवीर्येण दिष्ट्या पार्थः स जीवति ॥ ४७
गन्धर्वराजं बलिनं दुर्योधनकृते च वै ।
जितवान्योऽस्त्रवीर्येण दिष्ट्या पार्थः स जीवति ४८
किरीटमाली बलवाञ्छ्वेताश्वः कृष्णसारथिः ।
मम प्रियश्च सततं दिष्ट्या पार्थः स जीवति ॥ ४९
पुत्रशोकाभिसंतप्तश्चिकीर्षन्कर्म दुष्करम् ।
जयद्रथवधान्वेषी प्रतिज्ञां कृतवान्हि यः ।
कच्चित्स सैन्धवं सङ्ख्ये हनिष्यति धनञ्जयः ॥ ५०
कच्चित्तीर्णप्रतिज्ञं हि वासुदेवेन रक्षितम् ।
अनस्तमित आदित्ये समेष्याम्यहमर्जुनम् ॥ ५१
कच्चित्सैन्धवको राजा दुर्योधनहिते रतः ।
नन्दयिष्यत्यमित्रान्हि फल्गुनेन निपातितः ॥५२
कच्चिद्दुर्योधनो राजा फल्गुनेन निपातितम् ।
दृष्ट्वा सैन्धवकं सङ्ख्ये शममस्मासु धास्यति ॥ ५३
दृष्ट्वा विनिहतान्भ्रातॄन्भीमसेनेन संयुगे ।
कच्चिद्दुर्योधनो मन्दः शममस्मासु यास्यति ॥ ५४
दृष्ट्वा चान्यान्महायोधान्पातितान्धरणीतले ।
कच्चिद्दुर्योधनो मन्दः पश्चात्तापं गमिष्यति ॥ ५५

भीमसेनस्य कर्मेति शेषः ॥ २४ ॥

अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

कच्चिद्भीष्मेण नो वैरं शममेकेन यास्यति ।
शेषस्य रक्षणार्थं च संधास्यति सुयोधनः ॥ ५६
एवं बहुविधं तस्य राज्ञश्चिन्तयतस्तदा ।
कृपयाऽभिपरीतस्य घोरं युद्धमवर्तत ॥ ५७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

---

## एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

भीमेन कर्णपराजयो दुःशलवधश्च ॥ १ ॥

धृतराष्ट्र उवाच ।
निनदन्तं तथा तं तु भीमसेनं महाबलम् ।
मेघस्तनितनिर्घोषं के वीराः पर्यवारयन् ॥ १
न हि पश्याम्यहं तं वै त्रिषु लोकेषु कंचन ।
क्रुद्धस्य भीमसेनस्य यस्तिष्ठेदग्रतो रणे ॥ २
गदां युयुत्समानस्य कालस्येवेह सञ्जय ।
न हि पश्याम्यहं युद्धे यस्तिष्ठेदग्रतः पुमान् ॥ ३
रथं रथेन यो हन्यात्कुञ्जरं कुञ्जरेण च ।
कस्तस्य समरे स्थाता साक्षादपि पुरंदरः ॥ ४
क्रुद्धस्य भीमसेनस्य मम पुत्राञ्जिघांसतः ।
दुर्योधनहिते युक्ताः समतिष्ठन्त केऽग्रतः ॥ ५
भीमसेनदवाग्नेस्तु मम पुत्रांस्तृणोलपम् ।
प्रधक्ष्यतो रणमुखे केऽतिष्ठन्नग्रतो नराः ॥ ६
काल्यमानांस्तु पुत्रान्मे दृष्ट्वा भीमस्य संयुगे ।
कालेनेव प्रजाः सर्वाः के भीमं पर्यवारयन् ॥ ७
न मेऽर्जुनाद्भयं तादृक्कृष्णान्नापि च सात्वतात् ।
हुतभुग्जन्मनो नैव यादृग्भीमाद्भयं मम ॥ ८
भीमवह्नेः प्रदीप्तस्य मम पुत्रान्दिधक्षतः ।
के शूराः पर्यवर्तन्त तन्ममाचक्ष्व सञ्जय ॥ ९
सञ्जय उवाच ।
तथा तु नर्दमानं तं भीमसेनं महाबलम् ।
तुमुलेनैव शब्देन कर्णोऽप्यभ्यद्रवद्बली ॥ १०
व्याक्षिपन्सुमहच्चापमतिमात्रममर्षणः ।
कर्णः सुयुद्धमाकाङ्क्षन्दर्शयिष्यन्बलं मृधे ॥ ११
रुरोध मार्गं भीमस्य वातस्येव महीरुहः ।
भीमोऽपि दृष्ट्वा सावेगं पुरो वैकर्तनं स्थितम् ॥ १२
चुकोप बलवद्वीरश्चिक्षेपास्य शिलाशितान् ।
तान्प्रत्यगृह्णात्कर्णोऽपि प्रतीपं प्रापयच्छरान् ॥ १३
ततस्तु सर्वयोधानां यततां प्रेक्षतां तदा ।
प्रावेपन्निव गात्राणि कर्णभीमसमागमे ॥ १४
रथिनां सादिनां चैव तयोः श्रुत्वा तलस्वनम् ।
भीमसेनस्य निनदं श्रुत्वा घोरं रणाजिरे ॥ १५
खं च भूमिं च संरुद्धां मेनिरे क्षत्रियर्षभाः ।
पुनर्घोरेण नादेन पाण्डवस्य महात्मनः ॥ १६
समरे सर्वयोधानां धनूंष्यभ्यपतन्क्षितौ ।
शस्त्राणि न्यपतन्दोर्भ्यः केषांचिच्चासवोऽद्रवन् ॥ १७
वित्रस्तानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः ।
वाहनानि च सर्वाणि बभूवुर्विमनांसि च ॥ १८
प्रादुरासन्निमित्तानि घोराणि सुबहून्युत ।
गृध्रकङ्कबलैश्चासीदन्तरिक्षं समावृतम् ॥ १९
तस्मिन्सुतुमुले राजन्कर्णभीमसमागमे ।
ततः कर्णस्तु विंशत्या शराणां भीममार्दयत् ॥ २०
विव्याध चास्य त्वरितः सूतं पञ्चभिराशुगैः ।
प्रहस्य भीमसेनोऽपि कर्णं प्रत्याद्रवद्रणे ॥ २१
सायकानां चतुःषष्ट्या क्षिप्रकारी महायशाः ।
तस्य कर्णो महेष्वासः सायकांश्चतुरोऽक्षिपत् ॥ २२
असंप्राप्तांश्च तान्भीमः सायकैर्नतपर्वभिः ।
चिच्छेद बहुधा राजन्दर्शयन्पाणिलाघवम् ॥ २३
तं कर्णश्छादयामास शरव्रातैरनेकशः ।
संछाद्यमानः कर्णेन बहुधा पाण्डुनन्दनः ॥ २४
चिच्छेद चापं कर्णस्य मुष्टिदेशे महारथः ।
विव्याध चैनं बहुभिः सायकैर्नतपर्वभिः ॥ २५

---

युयुत्समानस्य व्यापारयतः ॥ ३ ॥ सावेगं सत्वरम् ॥ १२ ॥ संरुद्धामेकतामापन्नाम् ॥ १६ ॥

अथान्यद्धनुरादाय सज्यं कृत्वा च सूतजः ।
विव्याध समरे भीमं भीमकर्मा महारथः ॥ २६
तस्य भीमो भृशं क्रुद्धस्त्रीञ्शरान्नतपर्वणः ।
निचखानोरसि क्रुद्धः सूतपुत्रस्य वेगतः ॥ २७
तैः कर्णोऽराजत शरैरुरोमध्यगतैः सदा ।
महीधर इवोदग्रस्त्रिशृङ्गो भरतर्षभ ॥ २८
सुस्राव चास्य रुधिरं विद्धस्य परमेषुभिः ।
धातुप्रस्यन्दिनः शैलाद्यथा गैरिकधातवः ॥ २९
किंचिद्विचलितः कर्णः सुप्रहाराभिपीडितः ।
आकर्णपूर्णमाकृष्य भीमं विव्याध सायकैः ॥ ३०
चिक्षेप च पुनर्बाणाञ्शतशोऽथ सहस्रशः ।
स शरैरर्दितस्तेन कर्णेन दृढधन्विना ।
धनुर्ज्यामच्छिनत्तूर्णं भीमस्तस्य क्षुरेण ह ॥ ३१
सारथिं चास्य भल्लेन रथनीडादपातयत् ।
वाहांश्च चतुरस्तस्य व्यसूंश्चक्रे महारथः ॥ ३२
हताश्वात्तु रथात्कर्णः समाप्लुत्य विशांपते ।
स्यन्दनं वृषसेनस्य तूर्णमापुप्लुवे भयात् ॥ ३३
निर्जित्य तु रणे कर्णं भीमसेनः प्रतापवान् ।
ननाद बलवान्नादं पर्जन्यनिनदोपमम् ॥ ३४
तस्य तं निनदं श्रुत्वा प्रहृष्टोऽभूद्युधिष्ठिरः ।
कर्णं पराजितं मत्वा भीमसेनेन संयुगे ॥ ३५
समन्ताच्छङ्खनिनदं पाण्डुसेनाऽकरोत्तदा ।
शत्रुसेनाध्वनिं श्रुत्वा तावका ह्यनदन्भृशम् ॥ ३६
स शङ्खबाणनिनदैर्हर्षाद्राजा स्ववाहिनीम् ।
चक्रे युधिष्ठिरः सङ्ख्ये हर्षनादैश्च संकुलाम् ॥ ३७
गाण्डीवं व्याक्षिपत्पार्थः कृष्णोऽप्यब्जमवादयत् ।
तमन्तर्धाय निनदं भीमस्य नदतो ध्वनिः ।
अश्रूयत तदा राजन्सर्वसैन्येषु दारुणः ॥ ३८
ततो व्यायच्छतामस्त्रैः पृथक्पृथगजिह्मगैः ।
मृदुपूर्वं तु राधेयो दृढपूर्वं तु पाण्डवः ॥ ३९
'भीमोऽपि च महाराज वैकर्तनमुपाद्रवत् ।
आसुरे तु महासैन्ये तारकं पावकिर्यथा ॥ ४०
तयोरेवं महद्युद्धमभवद्भीमकर्णयोः ।
तं भीमसेनो महता शरवर्षेण वारयन् ॥ ४१
विव्याध सारथिं चास्य हयांश्च चतुरः शरैः ।
ध्वजं चास्य पताकां च भल्लैः सन्नतपर्वभिः ।
रथं च चक्ररक्षौ च भीमश्चिच्छेद मारिष ॥ ४२
कर्णोऽपि रथिनां श्रेष्ठो भीमसेनेन कम्पितः ।
खड्गचर्मधरो राजन्भीममभ्यद्रवद्बली ॥ ४३
भीमश्चिच्छेद खड्गं च चर्मणा सह मारिष ॥ ४४
दृष्ट्वा कर्णं च पार्थेन बाधितं बहुभिः शरैः ।
दुर्योधनो महाराज दुश्शलं प्रत्यभाषत ।
कर्णं कृच्छ्रगतं पश्य शीघ्रं यानं प्रयच्छ ह ॥ ४५
सञ्जय उवाच ।
एवमुक्तस्ततो राज्ञा दुश्शलः समुपाद्रवत् ।
दुश्शलस्य रथं कर्णश्चारुरोह महारथः ॥ ४६
तौ पार्थः सहसा गत्वा विव्याध दशभिः शरैः ।
पुनश्च कर्णं विद्ध्वाऽपि दुश्शलस्य शिरोऽहरत् ॥ ४७
दुश्शलं निहतं दृष्ट्वा भीमसेनेन मारिष ।
तस्यैव धनुरादाय कर्णो विव्याध पाण्डवम् ॥ ४८
अन्योन्यं समरे वीरौ युयुधाते महाबलौ ।
शत्रुघ्नौ शत्रुमध्ये तु बलवज्रभृताविव ॥ ४९
भीमो विद्ध्वा हयांश्चैव सारथिं च पुनःपुनः ।
कर्णमभ्यद्रवत्पार्थः प्रहसंश्च महाबलः ॥ ५०
ततो व्यायच्छमानस्य भीमसेनस्य संयुगे ।
तत्सैन्यं कलिलीभूतं न प्राज्ञायत किंचन ॥' ५१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

## त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

द्रोणदुर्योधनसंवादो दुर्योधनयुद्धं च ॥ १ ॥

सञ्जय उवाच ।
तस्मिन्विलुलिते सैन्ये सैन्धवायार्जुने गते ।
सात्वते भीमसेने च पुत्रस्ते द्रोणमभ्ययात् ।
त्वरन्नेकरथेनैव बहु कृत्यं विचिन्तयन् ॥ १

---

व्यायच्छतां प्रहरताम् ॥ ३९ ॥

एकोनत्रिंसदधिकशततमोऽध्यायः ॥ १२९ ॥

स रथस्तव पुत्रस्य त्वरया परया युतः ।
तूर्णमभ्यद्रवद्द्रोणं मनोमारुतवेगवान् ॥ २
'इह दृष्ट इतो नष्टः सरथः प्राद्रवन्नृपः ।
मुहूर्तादिव पुत्रस्ते द्रोणमासाद्य मारिष ।'
ससंभ्रममिदं वाक्यमब्रवीत्कुरुनन्दनः ॥ ३
अर्जुनो भीमसेनश्च सात्यकिश्चापराजितः ।
विजित्य सर्वसैन्यानि सुमहान्ति महारथाः ॥ ४
संप्राप्ताः सिन्धुराजस्य समीपमनिवारिताः ।
व्यायच्छन्ति च तत्रापि सर्वे एवापराजिताः ॥ ५
यदि तावद्रणे पार्थो व्यतिक्रान्तो महारथः ।
कथं सात्यकिभीमाभ्यां व्यतिक्रान्तोऽसि मानद ६
आश्चर्यभूतो लोकेऽस्मिन्समुद्रस्येव शोषणम् ।
निर्जयस्तव विप्राग्र्य सात्वतेनार्जुनेन च ।
तथैव भीमसेनेन लोकः संवदते भृशम् ॥ ७
कथं द्रोणो जितः सङ्ख्ये धनुर्वेदस्य पारगः ।
इत्येवं ब्रुवते योधा अश्रद्धेयमिदं तव ॥ ८
नाश एव तु मे नूनं मन्दभाग्यस्य संयुगे ।
यत्र त्वां पुरुषव्याघ्रं व्यतिक्रान्तास्त्रयो रथाः ॥ ९
द्रोण उवाच ।
एवं गते तु कृत्येऽस्मिन्ब्रूहि यत्ते विवक्षितम् ।
यद्गतं गतमेवेदं शेषं चिन्तय मानद ॥ १०
दुर्योधन उवाच ।
यत्कृत्यं सिन्धुराजस्य प्राप्तकालमनन्तरम् ।
तत्संविधीयतां क्षिप्रं साधु संचिन्त्य नो द्विज ॥ ११
द्रोण उवाच ।
चिन्त्यं बहुविधं तात यत्कृत्यं तच्छृणुष्व मे ।
त्रयो हि समतिक्रान्ताः पाण्डवानां महारथाः १२
यावत्तेषां भयं पश्चात्तावदेषां पुरःसरम् ।
तद्गरीयस्तरं मन्ये यत्र कृष्णधनञ्जयौ ॥ १३
सा पुरस्ताच्च पश्चाच्च गृहीता भारती चमूः ।
तत्र कृत्यमहं मन्ये सैन्धवस्याभिरक्षणम् ॥ १४
स नो रक्ष्यतमस्तात क्रुद्धाद्भीतो धनञ्जयात् ।
गतौ च सैन्धवं भीमौ युयुधानवृकोदरौ ॥ १५
संप्राप्तं तदिदं द्यूतं यत्तच्छकुनिबुद्धिजम् ।
न सभायां जयो वृत्तो नापि तत्र पराजयः ।
इह नो ग्लहमानानामद्य तावज्जयाजयौ ॥ १६
यान्स्म तान्ग्लहते घोराञ्छकुनिः कुरुसंसदि ।
अक्षान्स मन्यमानः प्राक्शरास्ते हि दुरासदाः १७
यत्र ते बहवस्तात कौरवेया व्यवस्थिताः ।
सेनां दुरोदरं विद्धि शरानक्षान्विशांपते ।
ग्लहं च सैन्धवं राजंस्तत्र द्यूतस्य निश्चयः ॥ १८
सैन्धवे तु महद्द्यूतं समासक्तं परैः सह ।
अत्र ते ध्रुवमायत्तो जयो वाऽजय एव वा ॥ १९
अत्र सर्वे महाराज त्यक्त्वा जीवितमात्मनः ।
सैन्धवस्य रणे रक्षां विधिवत्कर्तुमर्हथ ।
तत्र नो ग्लहमानानां ध्रुवौ जयपराजयौ ॥ २०
यत्र ते परमेष्वासा यत्ता रक्षन्ति सैन्धवम् ।
तत्र गच्छ स्वयं शीघ्रं तांश्च रक्षस्व रक्षिणः ॥ २१
इहैव त्वहमासिष्ये प्रेषयिष्यामि चापरान् ।
निरोत्स्यामि च पाञ्चालान्सहितान्पाण्डुसृञ्जयैः ॥
सञ्जय उवाच ।
ततो दुर्योधनोऽगच्छत्तूर्णमाचार्यशासनात् ।
उद्यम्यात्मानमुग्राय कर्मणे स पदानुगः ॥ २३
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
बाह्येन सेनामभ्येत्य जग्मतुः सव्यसाचिनम् ॥ २४
यौ तु पूर्वं महाराज वारितौ कृतवर्मणा ।
प्रविष्टे त्वर्जुने राजंस्तव सैन्यं युयुत्सया ॥ २५
पार्श्वे भित्त्वा चमूं वीरौ प्रविष्टौ तव वाहिनीम् ।
पार्श्वेन सैन्यमायान्तौ कुरुराजो ददर्श ह ॥ २६
ताभ्यां दुर्योधनः सार्धमकरोत्सङ्ख्यमुत्तमम् ।
त्वरितस्त्वरमाणाभ्यां भ्रातृभ्यां भारतो बली ॥ २७
तावेनमभ्यद्रवतामुभावुद्यतकार्मुकौ ।
महारथसमाख्यातौ क्षत्रियप्रवरौ युधि ॥ २८
तमविध्यद्युधामन्युस्त्रिंशता कङ्कपत्रिभिः ।

तान्प्रसिद्धान् यानक्षान् । अक्षान् मन्यमानः प्राग् ग्लहते स्म इत्यन्वयः ॥ १७ ॥ यत्र सभायाम् । दूरोदरं द्यूतकारिणम् ॥ १८ ॥ जयपराजयौ जयः पराजयो वेत्यर्थः ॥ २० ॥ त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

विंशत्या सारथिं चास्य चतुर्भिश्चतुरो हयान् ॥ २९
दुर्योधनो युधामन्योर्ध्वजमेकेषुणाऽच्छिनत् ।
एकेन कार्मुकं चास्य चकर्त तनयस्तव ॥ ३०
सारथिं चास्य भल्लेन रथनीडादपाहरत् ।
ततोऽविध्यच्छरैस्तीक्ष्णैश्चतुर्भिश्चतुरो हयान् ॥ ३१
युधामन्युश्च संक्रुद्धः शरांस्त्रिंशतमाहवे ।
व्यसृजत्तव पुत्रस्य त्वरमाणः स्तनान्तरे ॥ ३२
तथोत्तमौजाः संक्रुद्धः शरैर्हेमविभूषितैः ।
अविध्यत्सारथिं चास्य प्राहिणोद्यमसादनम् ॥ ३३
दुर्योधनोऽपि राजेन्द्र पाञ्चाल्यस्योत्तमौजसः ।
जघान चतुरोऽस्याश्वानुभौ तौ पार्ष्णिसारथी ॥ ३४
उत्तमौजा हताश्वस्तु हतसूतश्च संयुगे ।
आरुरोह रथं भ्रातुर्युधामन्योरभित्वरन् ॥ ३५
स रथं प्राप्य तं भ्रातुर्दुर्योधनहयाञ्शरैः ।
बहुभिस्ताडयामास ते हताः प्रापतन्भुवि ॥ ३६
हयेषु पतितेष्वस्य चिच्छेद परमेषुणा ।
युधामन्युर्धनुः शीघ्रं शरावापं च संयुगे ।
'अविध्यत्सारथिं चास्य प्राहिणोद्यमसादनम्' ३७
हताश्वसूतात्सरथादवतीर्य नराधिपः ।
गदामादाय ते पुत्रः पाञ्चाल्यावभ्यधावत ॥ ३८
तमापतन्तं संप्रेक्ष्य क्रुद्धं कुरुपतिं तदा ।
अवप्लुतौ रथोपस्थाद्युधामन्यूत्तमौजसौ ॥ ३९
ततः स हेमचित्रं तं गदया स्यन्दनं गदी ।
संक्रुद्धः पोथयामास साश्वसूतध्वजं नृप ॥ ४०
'एतदीदृशकं पुत्रस्तवाकार्षीज्जनाधिप ।
गदया गदिनां श्रेष्ठः सर्वलोकमहारथः ॥' ४१
भङ्क्त्वा रथं स पुत्रस्ते हताश्वो हतसारथिः ।
मद्रराजरथं तूर्णमारुरोह परंतपः ॥ ४२
पाञ्चालानां ततो मुख्यौ राजपुत्रौ महारथौ ।
रथावन्यौ समारुह्य बीभत्सुमभिजग्मतुः ॥ ४३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

## एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

भीमेन कर्णस्य पराजयः ॥ १ ॥

सञ्जय उवाच ।
वर्तमाने महाराज संग्रामे रोमहर्षणे ।
व्याकुलेषु च सर्वेषु पीड्यमानेषु सर्वशः ॥ १
राधेयो भीममानर्छे युद्धाय भरतर्षभ ।
यथा नागो वने नागं मत्तो मत्तमभिद्रवेत् ॥ २
'ततो व्यायच्छतामस्त्रैः पृथक्पृथगरिंदमौ ।
मृदुपूर्वं च राधेयो दृढपूर्वं च पाण्डवः ॥' ३
धृतराष्ट्र उवाच ।
यौ तौ कर्णश्च भीमश्च संप्रयुद्धौ महाबलौ ।
अर्जुनस्य रथोपान्ते कीदृशः सोऽभवद्रणः ॥ ४
पूर्वं हि निर्जितः कर्णो भीमसेनेन संयुगे ।
कथं भूयः स राधेयो भीममागान्महारथः ॥ ५
भीमो वा सूततनयं प्रत्युद्यातः कथं रणे ।
महारथसमाख्यातं पृथिव्यां प्रवरं रथम् ॥ ६
भीष्मद्रोणावतिक्रम्य धर्मराजो युधिष्ठिरः ।
नान्यतो भयमादत्त विना कर्णान्महारथात् ॥ ७
भयाद्यस्य महाबाहो न शेते बहुलाः समाः ।
चिन्तयन्नित्यशो वीर्यं राधेयस्य महात्मनः ।
तं कथं सूतपुत्रं तु भीमोऽयोधयताहवे ॥ ८
ब्रह्मण्यं वीर्यसंपन्नं समरेष्वनिवर्तिनम् ।
कथं कर्णं युधां श्रेष्ठं योधयामास पाण्डवः ॥ ९
यौ तौ समीयतुर्वीरौ वैकर्तनवृकोदरौ ।
कथं तावत्र युध्येतां महाबलपराक्रमौ ॥ १०
भ्रातृत्वं दर्शितं पूर्वं घृणी चापि स सूतजः ।
कथं भीमेन युयुधे कुन्त्या वाक्यमनुस्मरन् ॥ ११
भीमो वा सूतपुत्रेण स्मरन्वैरं पुरा कृतम् ।

पूर्वमुद्योगे दर्शितमुद्भावितं भ्रातृत्वं कुन्त्या वाक्यं च चतुर्णामवध्यत्वलक्षणं चानुस्मरन्नित्यन्वयः ॥ ११ ॥

अयुध्यत कथं शूरः कर्णेन सह संयुगे ॥ १२
आशास्ते च सदा सूतपुत्रे दुर्योधनो मम ।
कर्णो जेष्यति संग्रामे समस्तान्पाण्डवानिति ॥ १३
जयाशा यत्र पुत्रस्य मम मन्दस्य संयुगे ।
स कथं भीमकर्माणं भीमसेनमयोधयत् ॥ १४
यं समासाद्य पुत्रैर्मे कृतं वैरं महारथैः ।
तं सूततनयं तात कथं भीमो ह्ययोधयत् ॥ १५
अनेकान्विप्रकारांश्च सूतपुत्रसमुद्भवान् ।
स्मरमाणः कथं भीमो युयुधे सूतसूनुना ॥ १६
योऽजयत्पृथिवीं सर्वां रथेनैकेन वीर्यवान् ।
तं सूततनयं युद्धे कथं भीमो ह्ययोधयत् ॥ १७
यो जातः कुण्डलाभ्यां च कवचेन सहैव च ।
तं सूतपुत्रं समरे भीमः कथमयोधयत् ॥ १८
'अस्त्रहेतोः पुरा तात भार्गवं समपूजयत् ।
तस्य प्रसादाद्ब्रह्मास्त्रं लब्धवांश्च भृगूत्तमात् ॥' १९
यथा तयोर्युद्धमभूद्यश्चासीद्विजयी तयोः ।
तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय ॥ २०

सञ्जय उवाच ।

भीमसेनस्तु राधेयमुत्सृज्य रथिनां वरम् ।
इयेष गन्तुं यत्रास्तां वीरौ कृष्णधनञ्जयौ ॥ २१
तं प्रयान्तमभिद्रुत्य राधेयः कङ्कपत्रिभिः ।
अभ्यवर्षन्महाराज मेघो वृष्ट्येव पर्वतम् ॥ २२
फुल्लता पङ्कजेनेव वक्त्रेण विहसन्बली ।
आजुहाव रणे यान्तं भीममाधिरथिस्तदा ॥ २३

कर्ण उवाच ।

भीमाहितैस्तव रणः स्वप्नेऽपि न विभावितः ।
तद्दर्शयसि कस्मान्मे पृष्ठं पार्थदिदृक्षया ॥ २४
कुन्त्याः पुत्रस्य सदृशं नेदं पाण्डवनन्दन ।
तेन मामभितः स्थित्वा शरवर्षैरवाकिर ॥ २५

सञ्जय उवाच ।

भीमसेनस्तदाह्वानं कर्णान्नामर्षयद्युधि ।
अर्धमण्डलमावृत्य सूतपुत्रमयोधयत् ॥ २६
अवक्रगामिभिर्बाणैरभ्यवर्षन्महायशाः ।
दंशितं द्वैरथे यत्तं सर्वशस्त्रविशारदम् ॥ २७
विधित्सुः कलहस्यान्तं जिघांसुः कर्णमक्षिणोत् ॥ २८
हत्वा तस्यानुगांस्तं च हन्तुकामो महाबलः ।
तस्मै व्यसृजदुग्राणि विविधानि परंतपः ।
अमर्षात्पाण्डवः क्रुद्धः शरवर्षाणि मारिष ॥ २९
तस्य तानीषुवर्षाणि मत्तद्विरदगामिनः ।
सूतपुत्रोऽस्त्रमायाभिरग्रसत्परमास्त्रवित् ॥ ३०
स यथावन्महाबाहुर्विद्यया वै सुपूजितः ।
आचार्यवन्महेष्वासः कर्णः पर्यचरद्बली ॥ ३१
युध्यमानं तु संरम्भाद्भीमसेनं हसन्निव ।
अभ्यपद्यत कौन्तेयं कर्णो राजन्वृकोदरम् ॥ ३२
तन्नामृष्यत कौन्तेयः कर्णस्य स्मितमाहवे ।
युध्यमानेषु वीरेषु पश्यत्सु च समन्ततः ॥ ३३
तं भीमसेनः संप्राप्तं वत्सदन्तैः स्तनान्तरे ।
विव्याध बलवान्क्रुद्धस्तोत्त्रैरिव महाद्विपम् ॥ ३४
पुनश्च सूतपुत्रं तु स्वर्णपुङ्खैः शिलाशितैः ।
सुमुक्तैश्चित्रवर्माणं निर्बिभेद त्रिसप्तभिः ॥ ३५
कर्णो जाम्बूनदैर्जालैः संछन्नान्वातरंहसः ।
हयान्विव्याध भीमस्य पञ्चभिः पञ्चभिः शरैः ॥ ३६
ततो बाणमयं जालं भीमसेनरथं प्रति ।
कर्णेन विहितं राजन्निमेषार्धाददृश्यत ॥ ३७
सरथः सध्वजस्तत्र ससूतः पाण्डवस्तदा ।
प्राच्छाद्यत महाराज कर्णचापच्युतैः शरैः ॥ ३८
तस्य कर्णश्चतुःषष्ट्या व्यधमत्कवचं दृढम् ।
क्रुद्धश्चाप्यहनत्पार्थं नाराचैर्मर्मभेदिभिः ॥ ३९
ततोऽचिन्त्य महाबाहुः कर्णकार्मुकनिःसृतान् ।
समाश्लिष्यदसंभ्रान्तः सूतपुत्रं वृकोदरः ॥ ४०
स कर्णचापप्रभवानिषूनाशीविषोपमान् ।
बिभ्रद्भीमो महाराज न जगाम व्यथां रणे ॥ ४१
ततो द्वात्रिंशता भल्लैर्निशितैस्तिग्मतेजनैः ।
विव्याध समरे कर्णं भीमसेनः प्रतापवान् ॥ ४२
अयत्नेनैव तं कर्णः शरैर्भृशमवाकिरत् ।
भीमसेनं महाबाहुं सैन्धवस्य वधैषिणम् ॥ ४३

---

अभितः संमुखे ॥ २५ ॥

एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

मृदुपूर्वं तु राधेयो भीममाजावयोधयत् ।
क्रोधपूर्वं तथा भीमः पूर्ववैरमनुस्मरन् ॥ ४४
तं भीमसेनो नामृष्यदवमानममर्षणः ।
स तस्मै व्यसृजत्तूर्णं शरवर्षममित्रहा ॥ ४५
ते शराः प्रेषितास्तेन भीमसेनेन संयुगे ।
निपेतुः सर्वतो वीरे कूजन्त इव पक्षिणः ॥ ४६
हेमपुङ्खा महावेगा भीमसेनधनुश्च्युताः ।
प्राच्छादयंस्ते राधेयं शलभा इव पावकम् ॥ ४७
कर्णस्तु रथिनां श्रेष्ठश्छाद्यमानः समन्ततः ।
राजन्व्यसृजदुग्राणि शरवर्षाणि भारत ॥ ४८
तस्य तानशनिप्रख्यानिषून्समरशोभिनः ।
चिच्छेद बहुभिर्भल्लैरसंप्राप्तान्वृकोदरः ॥ ४९
पुनश्च शरवर्षेण च्छादयामास भारत ।
कर्णो वैकर्तनो युद्धे भीमसेनमरिंदमः ॥ ५०
तत्र भारत भीमं तु दृष्टवन्तः स्म सायकैः ।
समाचिततनुं सङ्ख्ये श्वाविधं शललैरिव ॥ ५१
हेमपुङ्खाञ्छिलाधौतान्कर्णचापच्युताञ्छरान् ।
दधार समरे वीरः स्वरश्मीनिव रश्मिमान् ॥५२
रुधिरोक्षितसर्वाङ्गो भीमसेनो व्यराजत ।
समृद्धकुसुमापीडो वसन्तेऽशोकवृक्षवत् ॥ ५३
तत्तु भीमो महाबाहोः कर्णस्य चरितं रणे ।
नामृष्यत महाबाहुः क्रोधादुद्वृत्तलोचनः ॥ ५४
स कर्णं पञ्चविंशत्या नाराचानां समार्पयत् ।
महीधरमिव श्वेतं गूढपादैर्विषोल्बणैः ॥ ५५
पुनरेव च विव्याध षड्भिरष्टाभिरेव च ।
मर्मस्वमरविक्रान्तः सूतपुत्रं तनुत्यजम् ॥ ५६
पुनरन्येन बाणेन भीमसेनः प्रतापवान् ।
चिच्छेद कार्मुकं तूर्णं कर्णस्य प्रहसन्निव ॥ ५७
जघान चतुरश्चाश्वान्सूतं च त्वरितः शरैः ।
नाराचैरर्करश्म्याभैः कर्णं विव्याध चोरसि ॥ ५८
ते जग्मुर्धरणीमाशु कर्णं निर्भिद्य पत्रिणः ।
यथा जलधरं भित्त्वा दिवाकरमरीचयः ॥ ५९
स वैकल्यं महत्प्राप्य च्छिन्नधन्वा शराहतः ।
तथा पुरुषमानी स लज्जामुत्सृज्य भारत ।
भीमसेनभयात्कर्णः प्रत्यपायाद्रथान्तरम् ॥ ६०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

## द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

भीमकर्णयोर्युद्धम् ॥ १ ॥

धृतराष्ट्र उवाच ।
[स्वयं शिष्यो महेशस्य भृगूत्तमधनुर्धरः ।
शिष्यत्वं प्राप्तवान्कर्णस्तस्य तुल्योऽस्त्रविद्यया ॥ १
तद्विशिष्टोऽपि वा कर्णः शिष्यः शिष्यगुणैर्युतः ।
कुन्तीपुत्रेण भीमेन निर्जितः स तु लीलया ॥] २
यस्मिञ्जयाशा महती पुत्राणां मम सञ्जय ।
तं भीमाद्विमुखं दृष्ट्वा किंनु दुर्योधनोऽब्रवीत् ॥ ३
कथं च युयुधे भीमो वीर्यश्लाघी महाबलः ॥ ४
कर्णो वा समरे तात किमकार्षीदतः परम् ।
भीमसेनं रणे दृष्ट्वा ज्वलन्तमिव पावकम् ॥ ५
सञ्जय उवाच ।
रथमन्यं समास्थाय विधिवत्कल्पितं पुनः ।
अभ्ययात्पाण्डवं कर्णो वातोद्धूत इवार्णवः ॥ ६
क्रुद्धमाधिरथिं दृष्ट्वा पुत्रास्तव विशांपते ।
भीमसेनममन्यन्त वैश्वानरमुखे हुतम् ॥ ७
चापशब्दं ततः कृत्वा तलशब्दं च भैरवम् ।
अभ्यद्रवत राधेयो भीमसेनरथं प्रति ॥ ८
पुनरेव तयो राजन्घोर आसीत्समागमः ।
वैकर्तनस्य शूरस्य भीमस्य च महात्मनः ॥ ९
संरब्धौ हि महाबाहू परस्परवधैषिणौ ।

कुण्डलितौ द्वौ श्लोकौ झ. पुस्तके एव वर्तेते । भृगूत्तमधनुर्धरो रामः ॥ १ ॥

अन्योन्यमीक्षांचक्राते दहन्ताविव लोचनैः ॥ १०
क्रोधरक्तेक्षणौ तीव्रौ निःश्वसन्ताविवोरगौ ।
शूरावन्योन्यमासाद्य ततक्षतुररिंदमौ ॥ ११
व्याघ्राविव सुसंरब्धौ श्येनाविव च शीघ्रगौ ।
शरभाविव संक्रुद्धौ युयुधाते परस्परम् ॥ १२
ततो भीमः स्मरन्क्लेशानक्षद्यूते वनेऽपि च ।
विराटनगरे चैव दुःखं प्राप्तमरिंदमः ॥ १३
राष्ट्राणां स्फीतरत्नानां हरणं च तवात्मजैः ।
सततं च परिक्लेशान्सपुत्रेण त्वया कृतान् ॥ १४
दग्धुमैच्छश्च यः कुन्तीं सपुत्रां त्वमनागसम् ।
कृष्णायाश्च परिक्लेशं सभामध्ये दुरात्मभिः ॥ १५
केशपक्षग्रहं चैव दुःशासनकृतं तथा ।
परुषाणि च वाक्यानि कर्णेनोक्तानि भारत ॥ १६
पतिमन्यं परीप्सस्व न सन्ति पतयस्तव ।
पतिता नरके पार्थाः सर्वे षण्डतिलोपमाः ॥ १७
समक्षं तव कौरव्य यदूचुः कौरवास्तदा ।
दासीभावेन कृष्णां च भोक्तुकामाः सुतास्तव ॥ १८
यच्चापि तान्प्रव्रजतः कृष्णाजिननिवासिनः ।
परुषाण्युक्तवान्कर्णः सभायां सन्निधौ तव ॥ १९
तृणीकृत्य च यत्पार्थांस्तव पुत्रो ववल्ग ह ।
विषमस्थान्समस्थो हि संरब्धो गतचेतनः ॥ २०
बाल्यात्प्रभृति चारिघ्नः स्वानि दुःखानि चिन्तयन् ।
निरविद्यत धर्मात्मा जीवितेन वृकोदरः ॥ २१
ततो विष्फार्य सुमहद्धेमपृष्ठं दुरासदम् ।
चापं भरतशार्दूलस्त्यक्तात्मा कर्णमभ्ययात् ॥ २२
स सायकमयैर्जालैर्भीमः कर्णरथं प्रति ।
भानुमद्भिः शिलाधौतैर्भानोः प्राच्छादयत्प्रभां ॥ २३
ततः प्रहस्याधिरथिस्तूर्णमस्यञ्शिताञ्शरान् ।
व्यधमद्भीमसेनस्य शरजालानि पत्रिभिः ॥ २४
महारथो महाबाहुर्महाबाणैर्महाबलः ।
विव्याधाधिरथिर्भीमं नवभिर्निशितैस्तदा ॥ २५
स तोत्रैरिव मातङ्गो वार्यमाणः पतत्रिभिः
अभ्यधावदसंभ्रान्तः सूतपुत्रं वृकोदरः ॥ २६
तमापतन्तं वेगेन रभसं पाण्डवर्षभम् ।
कर्णः प्रत्युद्ययौ युद्धे मत्तो मत्तमिव द्विपम् ॥ २७
ततः प्रध्माप्य जलजं भेरीशतसमस्वनम् ।
अक्षुभ्यत बलं हर्षादुद्धूत इव सागरः ॥ २८
तदुद्धूतं बलं दृष्ट्वा नागाश्वरथपत्तिमत् ।
भीमः कर्णं समासाद्य च्छादयामास सायकैः ॥ २९
अश्वानृक्षसवर्णांश्च हंसवर्णैर्हयोत्तमैः ।
व्यामिश्रयद्रणे कर्णः पाण्डवं छादयञ्छरैः ॥ ३०
ऋक्षवर्णान्हयान्कर्कैर्मिश्रान्मारुतरंहसः ।
निरीक्ष्य तव पुत्राणां हाहाकृतमभूद्बलम् ॥ ३१
ते हया बह्वशोभन्त मिश्रिता वातरंहसः ।
सितासिता महाराज यथा व्योम्नि बलाहकाः ३२
संरब्धौ क्रोधताम्राक्षौ प्रेक्ष्य कर्णवृकोदरौ ।
संत्रस्ताः समकम्पन्त त्वदीयानां महारथाः ॥३३
यमराष्ट्रोपमं घोरमासीदायोधनं तयोः ।
दुर्दर्शं भरतश्रेष्ठ प्रेतराजपुरं यथा ॥ ३४
समाजमिव तच्चित्रं प्रेक्षमाणा महारथाः ।
नालक्षयञ्जयं व्यक्तमेकस्यैव महारणे ॥ ३५
तयोः प्रैक्षन्त संमर्दं सन्निकृष्टं महास्त्रयोः ।
तव दुर्मन्त्रिते राजन्सपुत्रस्य विशांपते ॥ ३६
छादयन्तौ हि शत्रुघ्नावन्योन्यं सायकैः शितैः ।
शरजालावृतं व्योम चक्रातेऽद्भुतविक्रमौ ॥ ३७
तावन्योन्यं जिघांसन्तौ शरैस्तीक्ष्णैर्महारथौ ।
प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ ॥ ३८
सुवर्णविकृतान्बाणान्विमुञ्चन्तावरिंदमौ ।
भास्वरं व्योम चक्राते महोल्काभिरिव प्रभो ॥ ३९
ताभ्यां मुक्ताः शरा राजन्गार्ध्रपत्राश्चकाशिरे ।
श्रेण्यः शरदि मत्तानां सारसानामिवाम्बरे ॥ ४०
संसक्तं सूतपुत्रेण दृष्ट्वा भीममरिंदमम् ।
अतिभारममन्येतां भीमे कृष्णधनंजयौ ॥ ४१
तत्राधिरथिभीमाभ्यां शरैर्मुक्तैर्दृढं हताः ।
इषुपातमतिक्रम्य पेतुरश्वनरद्विपाः ॥ ४२
पतद्भिः पतितैश्चान्यैर्गतासुभिरनेकशः ।
कृतो राजन्महाराज पुत्राणां ते जनक्षयः ॥ ४३

कर्कैः श्वेतैरश्वैः ॥ ३१ ॥ समाजं रङ्गं । एकस्यैव कस्यचित् नान्यस्य ॥ ३५ ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

मनुष्याश्वगजानां च शरीरैर्गतजीवितैः । क्षणेन भूमिः संजज्ञे संवृता भरतर्षभ ॥ ४४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

## त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

भीमेन कर्णसहकारिणो दुर्जयस्य वधः ॥ १ ॥

धृतराष्ट्र उवाच ।
अत्यद्भुतमहं मन्ये भीमसेनस्य विक्रमम् ।
यत्कर्णं योधयामास समरे लघुविक्रमः ॥ १
त्रिदशानपि वा युक्तान्सर्वशस्त्रधरान्युधि ।
वारयेद्यो रणे कर्णः सयक्षासुरमानुषान् ॥ २
स कथं पाण्डवं युद्धे भ्राजमानमिव श्रिया ।
नातरत्संयुगे तात तन्ममाचक्ष्व सञ्जय ॥ ३
कथं च युद्धं संभूतं तयोः प्राणदुरोदरे ।
अत्र मन्ये समायत्तो जयो वाऽजय एव च ॥ ४
कर्णं प्राप्य रणे सूत मम पुत्रः सुयोधनः ।
जेतुमुत्सहते पार्थान्सगोविन्दान्ससात्वतान् ॥ ५
श्रुत्वा तु निर्जितं कर्णमसकृद्भीमकर्मणा ।
भीमसेनेन समरे मोह आविशतीव माम् ॥ ६
विनष्टान्कौरवान्मन्ये मम पुत्रस्य दुर्नयैः ।
नहि कर्णो महेष्वासान्पार्थाञ्जेष्यति सञ्जय ॥ ७
कृतवान्यानि युद्धानि कर्णः पाण्डुसुतैः सह ।
सर्वत्र पाण्डवाः कर्णमजयंस्ते रणाजिरे ॥ ८
अजेयाः पाण्डवास्तात देवैरपि सवासवैः ।
न च तद्बुध्यते मन्दः पुत्रो दुर्योधनो मम ॥ ९
धनं धनेश्वरस्येव हृत्वा पार्थस्य मे सुतः ।
मधुप्रेप्सुरिवाबुद्धिः प्रपातं नावबुध्यते ॥ १०
निकृत्या निकृतिप्रज्ञो राज्यं हृत्वा महात्मनाम् ।
जितमित्येव मन्वानः पाण्डवानवमन्यते ॥ ११
पुत्रस्नेहाभिभूतेन मया चाप्यकृतात्मना ।
धर्मे स्थिता महात्मानो निकृताः पाण्डुनन्दनाः १२
शमकामः ससोदर्यो दीर्घप्रेक्षी युधिष्ठिरः ।
अशक्त इति मत्वा तु मम पुत्रैर्निराकृतः ॥ १३
तानि दुःखान्यनेकानि विप्रकारांश्च सर्वशः ।
हृदि कृत्वा महाबाहुर्भीमोऽयुध्यत सूतजम् ॥ १४
तस्मान्मे सञ्जय ब्रूहि कर्णभीमौ यथा रणे ।
अयुध्येतां युधांश्रेष्ठौ परस्परवधैषिणौ ॥ १५
सञ्जय उवाच ।
शृणु राजन्यथावृत्तं संग्रामं कर्णभीमयोः ।
परस्परवधप्रेप्स्वोर्वनकुञ्जरयोरिव ॥ १६
राजन्वैकर्तनो भीमं क्रुद्धः क्रुद्धमरिंदमम् ।
पराक्रान्तं पराक्रम्य विव्याध त्रिंशता शरैः ॥ १७
महावेगैः प्रसन्नाग्रैः शातकुम्भपरिष्कृतैः ।
नातरद्भरतश्रेष्ठ भीमं वैकर्तनः शरैः ॥ १८
तस्यास्यतो धनुर्भीमश्चकर्त विशिखैस्त्रिभिः ।
रथनीडाच्च यन्तारं भल्लेनापातयत्क्षितौ ॥ १९
स काङ्क्षन्भीमसेनस्य वधं वैकर्तनो भृशम् ।
शक्तिं कनकवैदूर्यचित्रदण्डां परामृशत् ॥ २०
प्रगृह्य च महाशक्तिं कालरात्रिमिवापराम् ।
समुत्क्षिप्य च राधेयः संधाय च महाबलः ।
चिक्षेप भीमसेनाय जीवितान्तकरीमिव ॥ २१
शक्तिं विसृज्य राधेयः पुरंदर इवाशनिम् ।
ननाद सुमहानादं बलवान्सूतनन्दनः ॥ २२
तं च नादं ततः श्रुत्वा पुत्रास्ते हर्षिताऽभवन् ॥ २३
तां कर्णभुजनिर्मुक्तामर्कवैश्वानरप्रभाम् ।
शक्तिं वियति चिच्छेद भीमः सप्तभिराशुगैः ॥ २४
छित्त्वा शक्तिं ततो भीमो निर्मुक्तोरगसन्निभाम् ।
मार्गमाणामिव प्राणान्सूतपुत्रस्य मारिष ॥ २५
प्राहिणोत्कृतसंरम्भः शरान्बर्हिणवाससः ।
स्वर्णपुङ्खाञ्शिलाधौतान्यमदण्डोपमान्मृधे ॥ २६

प्राणदुरोदरे प्राणद्यूते ॥ ४ ॥

त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

कर्णोऽप्यन्यद्धनुर्गृह्य हेमपृष्ठं दुरासदम् ।
विकृष्य तन्महच्चापं व्यसृजत्सायकांस्तदा ॥ २७
तान्पाण्डुपुत्रश्चिच्छेद नवभिर्नतपर्वभिः ।
वसुषेणेन निर्मुक्तान्नव राजन्महाशरान् ।
छित्त्वा भीमो महाराज नादं सिंह इवानदत् ॥ २८
तौ वृषाविव नर्दन्तौ बलिनौ वासितान्तरे ।
शार्दूलाविव चान्योन्यमामिषार्थेऽभ्यगर्जताम् २९
अन्योन्यं प्रजिहीर्षन्तावन्योन्यस्यान्तरैषिणौ ।
अन्योन्यमभिवीक्षन्तौ गोष्ठेष्विव महर्षभौ ॥ ३०
महागजाविवासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ३१
निर्दहन्तौ महाराज शस्त्रवृष्ट्या परस्परम् ।
अन्योन्यमभिवीक्षन्तौ कोपाद्विवृत्तलोचनौ ॥ ३२
प्रहसन्तौ तथाऽन्योन्यं भर्त्सयन्तौ मुहुर्मुहुः ।
शङ्खशब्दं च कुर्वाणौ युयुधाते परस्परम् ॥ ३३
तस्य भीमः पुनश्चापं मुष्टौ चिच्छेद मारिष ।
शङ्खवर्णांश्च तानश्वान्बाणैर्निन्ये यमक्षयम् ।
सारथिं च तथाप्यस्य रथनीडादपातयत् ॥ ३४
ततो वैकर्तनः कर्णश्चिन्तां प्राप दुरत्ययाम् ।
स च्छाद्यमानः समरे हताश्वो हतसारथिः ।
मोहितः शरजालेन कर्तव्यं नाभ्यपद्यत ॥ ३५
तथा कृच्छ्रगतं दृष्ट्वा कर्णं दुर्योधनो नृपः ।
वेपमान इव क्रोधाद्व्यादिदेशाथ दुर्जयम् ॥ ३६
गच्छ दुर्जय राधेयं पुरा ग्रसति पाण्डवः ।
जहि तूबरकं क्षिप्रं कर्णस्य बलमादधत् ॥ ३७
एवमुक्तस्तथेत्युक्त्वा तव पुत्रं तवात्मजः ।
अभ्यद्रवद्भीमसेनं व्यासक्तं विकिरञ्छरैः ॥ ३८
स भीमं नवभिर्बाणैरश्वानष्टभिरार्दयत् ।
षड्भिः सूतं त्रिभिः केतुं पुनस्तं चापि सप्तभिः ॥ ३९
भीमसेनोऽपि संक्रुद्धः साश्वयन्तारमाशुगैः ।
दुर्जयं भिन्नमर्माणमनयद्यमसादनम् ॥ ४०
बाढं हतं क्षितौ क्षुण्णं वेष्टमानं यथोरगम् ।
रुदन्नार्तस्तव सुतं कर्णश्चक्रे प्रदक्षिणम् ॥ ४१
स तु तं विरथं कृत्वा स्मयन्नत्यन्तवैरिणम् ।
समाचिनोद्बाणगणैः शतघ्नीभिश्च शङ्कुभिः ॥ ४२
तथाप्यतिरथः कर्णो भिद्यमानोऽस्य सायकैः ।
न जहौ समरे भीमं क्रुद्धरूपं परंतपः ॥ ४३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

---

## चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

भीमेन पराजितस्य कर्णस्य पलायनम् ॥ १ ॥

सञ्जय उवाच ।
सर्वथा विरथः कर्णः पुनर्भीमेन निर्जितः ।
रथमन्यं समास्थाय पुनर्विव्याध पाण्डवम् ॥ १
महागजाविवासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ २
अथ कर्णः शरव्रातैर्भीमसेनं समार्पयत् ।
ननाद च महानादं पुनर्विव्याध चोरसि ॥ ३
तं भीमो दशभिर्बाणैः प्रत्यविध्यदजिह्मगैः ।
पुनर्विव्याध सप्तत्या शराणां नतपर्वणाम् ॥ ४
कर्णस्तु नवभिर्भीमं भित्त्वा राजंस्तनान्तरे ।
ध्वजमेकेन विव्याध विशोकं च त्रिभिः शरैः ॥ ५
सायकानां ततः पार्थस्त्रिषष्ट्या प्रत्यविध्यत ।
तोत्त्रैरिव महानागं कशाभिरिव वाजिनम् ॥ ६
सोऽतिविद्धो महाराज पाण्डवेन यशस्विना ।
सृक्किणी लेलिहन्वीरः क्रोधरक्तान्तलोचनः ॥ ७
ततः शरं महाराज सर्वकायावदारणम् ।
प्राहिणोद्भीमसेनाय बलायेन्द्र इवाशनिम् ॥ ८
स निर्भिद्य रणे पार्थं सूतपुत्रधनुश्च्युतः ।
अगच्छद्दारयन्भूमिं चित्रपुङ्खः शिलीमुखः ॥ ९
ततो भीमो महाबाहुः क्रोधसंरक्तलोचनः ।
वज्रकल्पां चतुष्किष्कुं गुर्वीं रुक्माङ्गदां गदाम् ।

ततः शैक्यां चतुष्किष्कुं इति क. ख. ङ. पाठः ॥ १० ॥

प्राहिणोत्सूतपुत्राय षडश्वानविचारयन् ॥ १०
तया जघानाधिरथेः सदश्वान्साधुवाहिनः ।
गदया भारतः क्रुद्धो वज्रेणेन्द्र इवासुरान् ॥ ११
ततो भीमो महाबाहुः क्षुराभ्यां भरतर्षभ ।
ध्वजमाधिरथेश्छित्त्वा सूतमभ्यहनच्छरैः ॥ १२
हताश्वसूतमुत्सृज्य स रथं पतितध्वजम् ।
विष्फारयन्धनुः कर्णस्तस्थौ भारत दुर्मनाः ॥ १३
तत्राद्भुतमपश्याम राधेयस्य पराक्रमम् ।
विरथो रथिनां श्रेष्ठो वारयामास यद्रिपुम् ॥ १४
विरथं तं नरश्रेष्ठं दृष्ट्वाऽऽधिरथिमाहवे ।
दुर्योधनस्ततो राजन्नभ्यभाषत दुर्मुखम् ॥ १५
एष दुर्मुख राधेयो भीमेन विरथीकृतः ।
तं रथेन नरश्रेष्ठ संपादय महारथम् ॥ १६
ततो दुर्योधनवचः श्रुत्वा भारत दुर्मुखः ।
त्वरमाणोऽभ्ययात्कर्णं भीमं चावारयच्छरैः ॥ १७
दुर्मुखं प्रेक्ष्य संग्रामे सूतपुत्रपदानुगम् ।
वायुपुत्रः प्रहृष्टोऽभूत्सृक्किणी परिसंलिहन् ॥ १८
ततः कर्णं महाराज वारयित्वा शिलीमुखैः ।
दुर्मुखाय रथं तूर्णं प्रेषयामास पाण्डवः ॥ १९
तस्मिन्क्षणे महाराज नवभिर्नतपर्वभिः ।
सुमुखैर्दुर्मुखं भीमः शरैर्निन्ये यमक्षयम् ॥ २०
ततस्तमेवाधिरथिः स्यन्दनं दुर्मुखे हते ।
आस्थितः प्रबभौ राजन्दीप्यमान इवांशुमान् ॥ २१
शयानं भिन्नमर्माणं दुर्मुखं शोणितोक्षितम् ।
दृष्ट्वा कर्णोऽश्रुपूर्णाक्षो मुहूर्तं नाभ्यवर्तत ॥ २२
तं गतासुमतिक्रम्य कृत्वा कर्णः प्रदक्षिणम् ।
दीर्घमुष्णं श्वसन्वीरो न किंचित्प्रत्यपद्यत ॥ २३
तस्मिंस्तु विवरे राजन्नाराचान्गार्ध्रवाससः ।
प्राहिणोत्सूतपुत्राय भीमसेनश्चतुर्दश ॥ २४
ते तस्य कवचं भित्त्वा स्वर्णचित्रं महौजसः ।
हेमपुङ्खा महाराज व्यशोभन्त दिशो दश ॥ २५
अपिबन्सूतपुत्रस्य शोणितं रक्तभोजनाः ।
क्रुद्धा इव मनुष्येन्द्र भुजङ्गाः कालचोदिताः ॥ २६
प्रसर्पमाणा मेदिन्यां ते व्यरोचन्त मार्गणाः ।
अर्धप्रविष्टाः संरब्धा बिलानीव महोरगाः ॥ २७
तं प्रत्यविध्यद्राधेयो जाम्बूनदविभूषितैः ।
चतुर्दशभिरत्युग्रैर्नाराचैरविचारयन् ॥ २८
ते भीमसेनस्य भुजं सव्यं निर्भिद्य पत्रिणः ।
प्राविशन्मेदिनीं भीमाः क्रौञ्चं पत्ररथा इव ॥ २९
ते व्यरोचन्त नाराचाः प्रविशन्तो वसुंधराम् ।
गच्छत्यस्तं दिनकरे दीप्यमाना इवांशवः ॥ ३०
स निर्भिन्नो रणे भीमो नाराचैर्मर्मभेदिभिः ।
सुस्राव रुधिरं भूरि पर्वतः सलिलं यथा ॥ ३१
स भीमस्त्रिभिरायस्तः सूतपुत्रं पतत्रिभिः ।
सुपर्णवेगैर्विव्याध सारथिं चास्य सप्तभिः ॥ ३२
स विह्वलो महाराज कर्णो भीमशराहतः ।
प्राद्रवज्जवनैरश्वै रणं हित्वा महाभयात् ॥ ३३
भीमसेनस्तु विष्फार्य चापं हेमपरिष्कृतम् ।
आहवेऽतिरथोऽतिष्ठज्ज्वलन्निव हुताशनः ॥ ३४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

## पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

भीमेन दुर्मर्षणादिदुर्योधनानुजानां पञ्चानां हननम् ॥ १ ॥

धृतराष्ट्र उवाच ।
दैवमेव परं मन्ये धिक्पौरुषमनर्थकम् ।
यत्राधिरथिरायत्तो नातरत्पाण्डवं रणे ॥ १
कर्णः पार्थान्सगोविन्दाञ्जेतुमुत्सहते रणे ।
न च कर्णसमं योधं लोके पश्यामि कञ्चन ।
इति दुर्योधनस्याहमश्रौषं जल्पतो मुहुः ॥ २

सुष्ठु पर्णानां पत्राणां वेगो येषाम् ॥ ३२ ॥

चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

कर्णो हि बलवाञ्छूरो दृढधन्वा जितक्लमः ।
इति मामब्रवीत्सूत मन्दो दुर्योधनः पुरा ॥ ३
वसुषेणसहायं मां नालं देवाऽपि संयुगे ।
किं नु पाण्डुसुता राजन्गतसत्त्वा विचेतसः ॥ ४
तत्र तं निर्जितं दृष्ट्वा भुजङ्गमिव निर्विषम् ।
युद्धात्कर्णमपक्रान्तं किंस्विद्दुर्योधनोऽब्रवीत् ॥ ५
अहो दुर्मुखमेवैकं युद्धानामविशारदम् ।
प्रावेशयद्धुतवहं पतङ्गमिव मोहितः ॥ ६
अश्वत्थामा मद्रराजः कृपः कर्णश्च संगताः ।
न शक्ताः प्रमुखे स्थातुं नूनं भीमस्य सञ्जय ॥ ७
तेऽपि चास्य महाघोरं बलं नागायुतोपमम् ।
जानन्तो व्यवसायं च क्रूरं मारुततेजसः ॥ ८
किमर्थं क्रूरकर्माणं यमकालान्तकोपमम् ।
बलसंरम्भवीर्यज्ञाः कोपयिष्यन्ति संयुगे ॥ ९
कर्णस्त्वेको महाबाहुः स्वबाहुबलदर्पितम् ।
भीमसेनमनादृत्य रणेऽयुध्यत सूतजः ॥ १०
योऽजयत्समरे कर्णं पुरंदर इवासुरम् ।
न स पाण्डुसुतो जेतुं शक्यः केनचिदाहवे ॥ ११
द्रोणं यः संप्रमथ्यैकः प्रविष्टो मम वाहिनीम् ।
भीमो धनंजयान्वेषी कस्तमार्च्छेज्जिजीविषुः ॥ १२
को हि सञ्जय भीमस्य स्थातुमुत्सहतेऽग्रतः ।
उद्यताशनिहस्तस्य महेन्द्रस्येव दानवः ॥ १३
प्रेतराजपुरं प्राप्य निवर्तेतापि मानवः ।
न भीमसेनं संप्राप्य निवर्तेत कदाचन ॥ १४
पतङ्गा इव वह्निं ते प्राविशन्नल्पचेतसः ।
ये भीमसेनं संक्रुद्धमन्वधावन्विमोहिताः ॥ १५
यत्तत्सभायां भीमेन मम पुत्रवधाश्रयम् ।
उक्तं संरम्भिणोग्रेण कुरूणां शृण्वतां तदा ॥ १६
तन्नूनमभिसंचिन्त्य दृष्ट्वा कर्णं च निर्जितम् ।
दुःशासनः सह भ्रात्रा भयाद्भीमादुपारमत् ॥ १७
यश्च सञ्जय दुर्बुद्धिरब्रवीत्समितौ मुहुः ।
कर्णो दुःशासनोऽहं च जेष्यामो युधि पाण्डवान् ॥
स नूनं विरथं दृष्ट्वा कर्णं भीमेन निर्जितम् ।
प्रत्याख्यानाच्च कृष्णस्य भृशं तप्यति पुत्रकः ॥ १९
दृष्ट्वा भ्रातॄन्हतान्सङ्ख्ये भीमसेनेन दंशितान् ।
आत्मापराधात्संमूढो नूनं तप्यति पुत्रकः ॥ २०
को हि जीवितमन्विच्छन्प्रतीपं पाण्डवं व्रजेत् ।
भीमं भीमायुधं क्रुद्धं साक्षात्कालमिव स्थितम् २१
वडवामुखमध्यस्थो मुच्येतापि हि मानवः ।
न भीममुखसंप्राप्तो मुच्येदिति मतिर्मम ॥ २२
न पार्था न च पञ्चाला न च केशवसात्यकी ।
जानते युधि संरब्धा जीवितं परिरक्षितुम् ॥ २३
अहो मम सुतानां हि विपन्नं सूत जीवितम् ॥ २४

सञ्जय उवाच ।

यस्त्वं शोचसि कौरव्य वर्तमाने महाभये ।
त्वमस्य जगतो मूलं विनाशस्य न संशयः ॥ २५
स्वयं वैरं महत्कृत्वा पुत्राणां वचने स्थितः ।
उच्यमानो न गृह्णीषे मर्त्यः पथ्यमिवौषधम् ॥ २६
स्वयं पीत्वा महाराज कालकूटं सुदुर्जरम् ।
तस्येदानीं फलं कृत्स्नमवाप्नुहि नरोत्तम ॥ २७
यत्तु कुत्सयसे योधान्युध्यमानान्महाबलान् ।
तत्र ते वर्तयिष्यामि यथा युद्धमवर्तत ॥ २८
दृष्ट्वा कर्णं तु पुत्रास्ते भीमसेनपराजितम् ।
नामृष्यन्त महेष्वासाः सोदर्याः पञ्च भारत ॥ २९
दुर्मर्षणो दुःसहश्च दुर्मदो दुर्धरो जयः ।
पाण्डवं चित्रसन्नाहास्तं प्रतीपमुपाद्रवन् ॥ ३०
ते समन्तान्महाबाहुं परिवार्य वृकोदरम् ।
दिशः शरैः समावृण्वञ्शलभानामिव व्रजैः ॥ ३१
आगच्छतस्तान्सहसा कुमारान्देवरूपिणः ।
प्रतिजग्राह समरे भीमसेनो हसन्निव ॥ ३२
तव दृष्ट्वा तु तनयान्दुर्मर्षणपुरोगमान् ।
अभ्यवर्तत राधेयो भीमसेनं महाबलम् ॥ ३३
विसृजन्विशिखांस्तीक्ष्णान्स्वर्णपुङ्खाञ्छिलाशितान् ।
तं तु भीमोऽभ्ययात्तूर्णं वार्यमाणः सुतैस्तव ॥ ३४
कुरवस्तु ततः कर्णं परिवार्य समन्ततः ।
अवाकिरन्भीमसेनं शरैः सन्नतपर्वभिः ॥ ३५

---

यमः संयमनव्यापारः कालः कलनव्यापरः अन्तको मारण-व्यापारःतदुपमम्॥९॥ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥१३५॥

तान्बाणैः पञ्चविंशत्या साश्वान्राजन्नरर्षभान् ।
समूतान्भीमधनुषो भीमो निन्ये यमक्षयम् ॥ ३६
प्रापतन्स्यन्दनेभ्यस्ते सार्धं सूतैर्गतासवः ।
चित्रपुष्पधरा भग्ना वातेनेव महाद्रुमाः ॥ ३७
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम् ।
संवार्याधिरथिं बाणैर्यज्जघान तवात्मजान् ॥ ३८
स वार्यमाणो भीमेन शितैर्बाणैः समन्ततः ।
सूतपुत्रो महाराज भीमसेनमवैक्षत ॥ ३९
तं भीमसेनः संरम्भात्क्रोधसंरक्तलोचनः ।
विस्फार्य सुमहच्चापं मुहुः कर्णमवैक्षत ॥ ४०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

## षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

भीमेन चित्रोपचित्रादिदुर्योधनानुजवधः ॥ १ ॥

सञ्जय उवाच ।
तवात्मजांस्तु पतितान्दृष्ट्वा कर्णः प्रतापवान् ।
क्रोधेन महताऽऽविष्टो निर्विण्णोऽभूत्स जीविते ॥ १
आगस्कृतमिवात्मानं मेने चाधिरथिस्तदा ।
यत्प्रत्यक्षं तव सुता भीमेन निहता रणे ॥ २
भीमसेनस्ततः क्रुद्धः कर्णस्य निशिताञ्शरान् ।
निचखान स संभ्रान्तः पूर्ववैरमनुस्मरन् ॥ ३
स भीमं पञ्चभिर्विद्ध्वा राधेयः प्रहसन्निव ।
पुनर्विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ॥ ४
अविचिन्त्याथ तान्बाणान्कर्णेनास्तान्वृकोदरः ।
रणे विव्याध राधेयं शरेणानतपर्वणा ॥ ५
पुनश्च विशिखैस्तीक्ष्णैर्विद्ध्वा मर्मसु पञ्चभिः ।
धनुश्चिच्छेद भल्लेन सूतपुत्रस्य मारिष ॥ ६
अथान्यद्धनुरादाय कर्णो भारत दुर्मनाः ।
इषुभिश्छादयामास भीमसेनं परंतपः ॥ ७
तस्य भीमो हयान्हत्वा विनिहत्य च सारथिम् ।
प्रजहास महाहासं कृतप्रतिकृतं महत् ॥ ८
इषुभिः कार्मुकं चास्य चकर्त पुरुषर्षभः ।
तत्पपात महाराज स्वर्णपृष्ठं महास्वनम् ॥ ९
अवारोहद्रथात्तस्मादथ कर्णो महारथः ।
गदां गृहीत्वा समरे भीमाय प्राहिणोद्रुषा ॥ १०
तामापतन्तीमालक्ष्य भीमसेनो महागदाम् ।
शरैरवारयद्राजन्सर्वसैन्यस्य पश्यतः ॥ ११
ततो बाणसहस्राणि प्रेषयामास पाण्डवः ।
सूतपुत्रवधाकाङ्क्षी त्वरमाणः पराक्रमी ॥ १२
तानिषूनिषुभिः कर्णो वारयित्वा महामृधे ।
कवचं भीमसेनस्य पाटयामास सायकैः ॥ १३
अथैनं पञ्चविंशत्या नाराचानां समार्पयत् ।
पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ॥ १४
ततो भीमो महाबाहुर्नवभिर्नतपर्वभिः ।
प्रेषयामास संक्रुद्धः सूतपुत्रस्य मारिष ॥ १५
ते तस्य कवचं भित्त्वा तथा बाहुं च दक्षिणम् ।
अभ्ययुर्धरणीं तीक्ष्णा वल्मीकमिव पन्नगाः ॥ १६
स च्छाद्यमानो बाणौघैर्भीमसेनधनुश्च्युतैः ।
पुनरेवाभवत्कर्णो भीमसेनात्पराङ्मुखः ॥ १७
तं पराङ्मुखमालोक्य पदातिं सूतनन्दनम् ।
कौन्तेयशरसंछन्नं राजा दुर्योधनोऽब्रवीत् ॥ १८
त्वरध्वं सर्वतो यत्ता राधेयस्य रथं प्रति ।
ततस्तव सुता राजञ्श्रुत्वा भ्रातुर्वचो द्रुतम् ॥ १९
अभ्ययुः पाण्डवं युद्धे विसृजन्तः शिलीमुखान् ।
चित्रोपचित्रश्चित्राक्षश्चारुचित्रः शरासनः ॥ २०
चित्रायुधश्चित्रवर्मा समरे चित्रयोधिनः ।
तानापतत एवाशु भीमसेनो महारथः ॥ २१
एकैकेन शरेणाजौ पातयामास ते सुतान् ।
ते हता न्यपतन्भूमौ वातरुग्णा इव द्रुमाः ॥ २२
दृष्ट्वा विनिहतान्पुत्रांस्तव राजन्महारथान् ।

अवारोहदवातरत् ॥ १० ॥ चित्रोपचित्रः चित्रश्चासावुपचित्रश्चेति चित्रोपचित्रः ॥ २० ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥

अश्रुपूर्णमुखः कर्णः क्षत्तुः सस्मार तद्वचः ॥ २३
रथं चान्यं समास्थाय विधिवत्कल्पितं पुनः ।
अभ्ययात्पाण्डवं युद्धे त्वरमाणः पराक्रमी ॥ २४
तावन्योन्यं शरैर्भित्त्वा स्वर्णपुङ्खैः शिलाशितैः ।
व्यभ्राजेतां यथा मेघौ संस्यूतौ सूर्यरश्मिभिः॥२५
षट्त्रिंशद्भिस्ततो भल्लैर्निशितैस्तिग्मतेजनैः ।
व्यधमत्कवचं क्रुद्धः सूतपुत्रस्य पाण्डवः ॥ २६
सूतपुत्रोऽपि कौन्तेयं शरैः सन्नतपर्वभिः ।
पञ्चाशता महाबाहुर्विव्याध भरतर्षभ ॥ २७
रक्तचन्दनदिग्धाङ्गौ शरैः कृतमहाव्रणौ ।
शोणिताक्तौ व्यराजेतां कालसूर्याविवोदितौ॥२८
तौ शोणितोक्षितैर्गात्रैः शरैश्छिन्नतनुच्छदौ ।
विवृताङ्गौ व्यराजेतां निर्मुक्ताविव पन्नगौ ॥ २९
'क्रोधाग्नितेजसा दिप्तौ संरम्भाद्रक्तलोचनौ ।
व्यभ्राजेतां महाराज विधूमाविव पावकौ॥' ३०
व्याघ्राविव नरव्याघ्रौ दंष्ट्राभिरितरेतरम् ।
शरधारासृजौ वीरौ मेघाविव ववर्षतुः ॥ ३१
वारणाविव चान्योन्यं विषाणाभ्यामरिंदमौ ।
निर्भिन्दन्तौ स्वगात्राणि सायकैश्चारु रेजतुः॥ ३२
नादयन्तौ प्रहर्षन्तौ विक्रीडन्तौ परस्परम् ।
मण्डलानि विकुर्वाणौ रथाभ्यां रथिसत्तमौ॥ ३३
वृषाविवाथ नर्दन्तौ बलिनौ वासितान्तरे ।
सिंहाविव पराक्रान्तौ नरसिंहौ महाबलौ ॥ ३४
परस्परं वीक्षमाणौ क्रोधसंरक्तलोचनौ ।
युयुधाते महावीर्यौ शक्रवैरोचनी यथा ॥ ३५
ततो भीमो महाबाहुर्बाहुभ्यां विक्षिपन्धनुः ।
व्यराजत रणे राजन्सविद्युदिव तोयदः ॥ ३६
सनेमिघोषस्तनितश्चापविद्युच्छराम्बुभिः ।
भीमसेनमहामेघः कर्णपर्वतमावृणोत् ॥ ३७
ततः शरसहस्रेण सम्यगस्तेन भारत ।
पाण्डवो व्यकिरत्कर्णं भीमो भीमपराक्रमः ॥ ३८
तत्रापश्यंस्तव सुता भीमसेनस्य विक्रमम् ।
सुपुङ्खैः कङ्कवासोभिर्यत्कर्णं छादयञ्शरैः ॥ ३९
स नन्दयन्रणे पार्थं केशवं च यशस्विनम् ।
सात्यकिं चक्ररक्षौ च भीमः कर्णमयोधयत्॥ ४०
विक्रमं भुजयोर्वीर्यं धैर्यं च विदितात्मनः ।
पुत्रास्तव महाराज दृष्ट्वा विमनसोऽभवन् ॥ ४१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

## सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

भीमेन कर्णसहकारिणां विकर्णादीनां वधः ॥ १ ॥

सञ्जय उवाच
भीमसेनस्य राधेयः श्रुत्वा ज्यातलनिःस्वनम् ।
नामृष्यत यथा मत्तो गजः प्रतिगजस्वनम् ॥ १
सोपक्रम्य मुहूर्तं तु भीमसेनस्य गोचरात् ।
पुत्रांस्तव ददर्शाथ भीमसेनेन पातितान् ॥ २
तानवेक्ष्य नरश्रेष्ठ विमना दुःखितस्तदा ।
निःश्वसन्दीर्घमुष्णं च कर्णः पाण्डवमभ्ययात् ॥ ३
स ताम्रनयनः क्रोधाच्छ्वसन्निव महोरगः ।
बभौ कर्णः शरानस्यन्रश्मीनिव दिवाकरः ॥ ४
किरणैरिव सूर्यस्य महीध्रो भरतर्षभ ।
कर्णचापच्युतैर्बाणैः प्राच्छाद्यत वृकोदरः ॥ ५
ते कर्णचापप्रभवाः शरा बर्हिणवाससः
विविशुः सर्वतः पार्थं वासायेवाण्डजा द्रुमम्॥ ६
कर्णचापच्युता बाणाः संपतन्तस्ततस्ततः ।
रुक्मपुङ्खा व्यराजन्त हंसाः श्रेणीकृता इव ॥ ७
चापध्वजोपस्करेभ्यश्छत्रादीषामुखाद्युगात् ।
प्रभवन्तो व्यदृश्यन्त राजन्नाधिरथेः शराः ॥ ८
खं पूरयन्महावेगात्खगमान्गृध्रवाससः ।
सुवर्णविकृतांश्चित्रान्मुमोचाधिरथिः शरान् ॥ ९
तमन्तकमिवायस्तमापतन्तं वृकोदरम् ।
त्यक्त्वा प्राणानतिक्रम्य विव्याध निशितैः शरैः॥
तस्य वेगमसह्यं स दृष्ट्वा कर्णस्य पाण्डवः ।

महतश्च शरौघांस्तान्प्यवारयत वीर्यवान् ॥ ११
ततो विधम्याधिरथेः शरजालानि पाण्डवः ।
विव्याध कर्णं विंशत्या पुनरन्यैः शिलाशितैः॥१२
यथैव हि स कर्णेन पार्थः प्रच्छादितः शरैः ।
तथैव स रणे कर्णं छादयामास पाण्डवः ॥ १३
दृष्ट्वा तु भीमसेनस्य विक्रमं युधि भारत ।
अभ्यनन्दंस्त्वदीयाश्च संप्रहृष्टाश्च चारणाः ॥ १४
भूरिश्रवाः कृपो द्रौणिर्मद्रराजो जयद्रथः ।
उत्तमौजा युधामन्युः सात्यकिः केशवार्जुनौ ॥१५
कुरुपाण्डवपक्षस्था दश राजन्महारथाः ।
साधुसाध्विति वेगेन सिंहनादमथानदन् ॥ १६
तस्मिन्समुत्थिते शब्दे तुमुले रोमहर्षणे ।
अभ्यभाषत पुत्रस्ते राजन्दुर्योधनस्त्वरन् ॥ १७
राज्ञः सराजपुत्रांश्च सोदर्यांश्च विशेषतः ।
कर्णं गच्छत भद्रं वः परीप्सन्तो वृकोदरात् ॥ १८
पुरा निघ्नन्ति राधेयं भीमचापच्युताः शराः ।
ते यतध्वं महेष्वासाः सूतपुत्रस्य रक्षणे ॥ १९
सञ्जय उवाच ।
दुर्योधनसमादिष्टाः सोदर्याः सप्त भारत ।
भीमसेनमभिद्रुत्य संरब्धाः पर्यवारयन् ॥ २०
ते समासाद्य कौन्तेयमावृण्वञ्शरवृष्टिभिः ।
पर्वतं वारिधाराभिः प्रावृषीव बलाहकाः ॥ २१
तेऽपीडयन्भीमसेनं क्रुद्धाः सप्त महारथाः ।
प्रजासंहरणे राजन्सोमं सप्तग्रहा इव ॥ २२
ततो वेगेन कौन्तेयः पीडयित्वा शरासनम् ।
मुष्टिना पाण्डवो राजन्दृढेन सुपरिष्कृतम् ॥ २३
अमानुषं कर्म कृत्वा सप्त सन्धाय सायकान् ।
तेभ्यो व्यसृजदायस्तः सूर्यरश्मिनिभान्प्रभुः ॥२४
निरस्यन्निव देहेभ्यस्तनयानाममूंस्तव ।
भीमसेनो महाराज पूर्ववैरमनुस्मरन् ॥ २५
ते क्षिप्ता भीमसेनेन शरा भारत भारतान् ।
विदार्य खं समुत्पेतुः स्वर्णपुङ्खाः शिलाशिताः॥२६
तेषां विदार्य देहांस्ते शरा हेमविभूषिताः ।
'भित्त्वाभित्त्वा क्षितिं जग्मुस्तेषामेवासुभिः सह ।'
व्यराजन्त महाराज सुपर्णा इव खेचराः ॥ २७
शोणितादिग्धवाजाग्राः सप्त हेमपरिष्कृताः ।
पुत्राणां तव राजेन्द्र पीत्वा शोणितमुद्गताः॥ २८
ते शरैर्भिन्नमर्माणो रथेभ्यः प्रापतन्क्षितौ ।
गिरिसानुरुहा भग्ना द्विपेनेव महाद्रुमाः ॥ २९
शत्रुंजयः शत्रुसहश्चित्रश्चित्रायुधो दृढः ।
चित्रसेनो विकर्णश्च सप्तैते विनिपातिताः ॥ ३०
[पुत्राणां तव सर्वेषां निहतानां वृकोदरः ।
शोचत्यतिभृशं दुःखाद्विकर्णं पाण्डवः प्रियम्॥३१
प्रतिज्ञेयं मया वृत्ता निहन्तव्यास्तु संयुगे ।
विकर्ण तेनासि हतः प्रतिज्ञा रक्षिता मया॥ ३२
त्वमागाः समरं वीर क्षात्रं धर्ममनुस्मरन् ।
ततो विनिहतः सङ्ख्ये युद्धधर्मो हि निष्ठुरः॥३३
विशेषतो हि नृपतेस्तथाऽस्माकं हिते रतः ।
न्यायतोन्यायतो वाऽपि हतः शेते महाद्युतिः॥३४
अगाधबुद्धिर्गाङ्गेयः क्षितौ सुरगुरोः समः ।
त्याजितः समरे प्राणांस्तस्माद्युद्धं हि निष्ठुरम् ॥]३५
सञ्जय उवाच ।
तान्निहत्य महाबाहू राधेयस्यैव पश्यतः ।
सिंहनादरवं घोरमसृजत्पाण्डुनन्दनः ॥ ३६
स रवस्तस्य शूरस्य धर्मराजस्य भारत ।
आचख्याविव तद्युद्धं विजयं चात्मनो महत् ॥ ३७
तं श्रुत्वा तु महानादं भीमसेनस्य धन्विनः ।
बभूव परमा प्रीतिर्धर्मराजस्य धीमतः ॥ ३८
ततो हृष्टमना राजन्वादित्राणां महास्वनैः ।
सिंहनादरवं भ्रातुः प्रतिजग्राह पाण्डवः ॥ ३९
हर्षेण महता युक्तः कृतसंज्ञे वृकोदरे ।
अभ्ययात्समरे द्रोणं सर्वशस्त्रभृतां वरः ॥ ४०
एकत्रिंशन्महाराज पुत्रांस्तव निपातितान् ।
हतान्दुर्योधनो दृष्ट्वा क्षत्तुः सस्मार तद्वचः ॥ ४१
तदिदं समनुप्राप्तं क्षत्तुर्नैःश्रेयसं वचः ।
इति संचिन्त्य ते पुत्रो नोत्तरं प्रत्यपद्यत ॥ ४२

सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

घ. ङ. पुस्तकयोरिमे कुण्डलिताः पञ्च श्लोका अधिका दृश्यन्ते ॥ ३१ ॥ नैःश्रेयसं निश्चितं श्रेयःसाधनम् ॥ ४२ ॥

यद्द्यूतकाले दुर्बुद्धिरब्रवीत्तनयस्तव ।
सभामानाय्य पाञ्चालीं कर्णेन सहितोऽल्पधीः ॥ ४३
यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः ।
प्रमुखे पाण्डुपुत्राणां तव चैव विशांपते ।
शृण्वतस्तव राजेन्द्र कौरवाणां च सर्वशः ॥ ४४
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं वृणीष्वेति तस्येदं फलमागतम् ॥ ४५
यच्च षण्डतिलादीनि परुषाणि तवात्मजैः ।
श्राविताास्ते महात्मानः पाण्डवाः कोपयिष्णुभिः ॥
तं भीमसेनः क्रोधाग्निं त्रयोदश समाः स्थितम् ।
उद्गिरंस्तव पुत्राणामन्तं गच्छति पाण्डवः ॥ ४७
विलपंश्च बहु क्षत्ता शमं नालभत त्वयि ।
सपुत्रो भरतश्रेष्ठ तस्य भुङ्क्ष्व फलोदयम् ॥ ४८
त्वया वृद्धेन धीरेण कार्यतत्त्वार्थदर्शिना ।
न कृतं सुहृदां वाक्यं दैवमत्र परायणम् ॥ ४९
तन्मा शुचो नरव्याघ्र तवैवापनयो महान् ।
विनाशहेतुः पुत्राणां भवानेव मतो मम ॥ ५०
हतो विकर्णो राजेन्द्र चित्रसेनश्च वीर्यवान् ।
प्रवराश्चात्मजानां ते सुताश्चान्ये महारथाः ॥ ५१
यानन्यान्ददृशे भीमश्चक्षुर्विषयमागतान् ।
पुत्रांस्तव महाराज त्वरया ताञ्जघान ह ॥ ५२
त्वत्कृते ह्यहमद्राक्षं दह्यमानां वरूथिनीम् ।
सहस्रशः शरैर्मुक्तैः पाण्डवेन वृषेण च ॥ ५३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

## अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

भीमकर्णयोर्युद्धम् ॥ १ ॥

धृतराष्ट्र उवाच ।
महानपनयः सूत ममैवात्र विशेषतः ।
स इदानीमनुप्राप्तो मन्ये सञ्जय शोचतः ॥ १
यद्गतं तद्गतमिति ममासीन्मनसि स्थितम् ।
इदानीमत्र किं कार्यं प्रकरिष्यामि सञ्जय ॥ २
यथा ह्येष क्षयो वृत्तो ममापनयसंभवः ।
वीराणां तन्ममाचक्ष्व स्थिरीभूतोऽस्मि सञ्जय ॥ ३
सञ्जय उवाच ।
कर्णभीमौ महाराज पराक्रान्तौ महाबलौ ।
बाणवर्षाण्यसृजतां वृष्टिमन्ताविवाम्बुदौ ॥ ४
भीमनामाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः ।
विविशुः कर्णमासाद्य च्छिन्दन्त इव जीवितम् ॥ ५
तथैव कर्णनिर्मुक्ताः शरा बर्हिणवाससः ।
छादयांचक्रिरे वीरं शतशोऽथ सहस्रशः ॥
तयोः शरैर्महाराज संपतद्भिः समन्ततः ।
बभूव तत्र सैन्यानां संक्षोभः सागरोत्तरः ॥ ७
भीमचापच्युतैर्बाणैस्तव सैन्यमरिंदम ।
अवध्यत चमूमध्ये घोरैराशीविषोपमैः ॥ ८
वारणैः पतितै राजन्वाजिभिश्च नरैः सह ।
अदृश्यत मही कीर्णा वातभग्नैरिव द्रुमैः ॥ ९
ते वध्यमानाः समरे भीमचापच्युतैः शरैः ।
प्राद्रवंस्तावका योधाः किमेतदिति चाब्रुवन् ॥ १०
ततो व्युदस्तं तत्सैन्यं सिन्धुसौवीरकौरवम् ।
प्रोत्सारितं महावेगैः कर्णपाण्डवयोः शरैः ॥ ११
ते शूरा हतभूयिष्ठा हताश्वरथवारणाः ।
उत्सृज्य भीमकर्णौ च सर्वतो व्यद्रवन्दिशः ॥ १२
नूनं पार्थार्थमेवास्मान्मोहयन्ति दिवौकसः ।
यत्कर्णभीमप्रभवैर्वध्यते नो बलं शरैः ॥ १३
एवं ब्रुवाणा योधास्ते तावका भयपीडिताः ।
शरपातं समुत्सृज्य स्थिता युद्धदिदृक्षवः ॥ १४
ततः प्रावर्तत नदी घोररूपा रणाजिरे ।
शूराणां हर्षजननी भीरूणां भयवर्धिनी ॥ १५

सागरोत्तरः महत्तरः ॥ ७ ॥ शरैर्व्युदस्तमाक्षिप्तम् । प्रोत्सारितं दूरमपसारितम् ॥ ११ ॥

अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

वारणाश्वमनुष्याणां रुधिरौघसमुद्भवा ।
संवृता गतसत्त्वैश्च मनुष्यगजवाजिभिः ॥ १६
सानुकर्षपताकैश्च द्विपाश्वरथभूषणैः ।
स्यन्दनैरपविद्धैश्च भग्नचक्राक्षकूबरैः ॥ १७
जातरूपपरिष्कारैर्धनुर्भिः सुमहास्वनैः ।
सुवर्णपुङ्खैरिषुभिर्नाराचैश्च सहस्रशः ॥ १८
कर्णपाण्डवनिर्मुक्तैर्निर्मुक्तैरिव पन्नगैः ।
प्रासतोमरसंघातैः खड्गैश्च सपरश्वथैः ॥ १९
सुवर्णविकृतैश्चापि गदामुसलपट्टसैः ।
वज्रैश्च विविधाकारैः शक्तिभिः परिघैरपि ॥ २०
शतघ्नीभिश्च चित्राभिर्बभौ भारतमेदिनी ।
कनकाङ्गदहारैश्च कुण्डलैर्मुकुटैस्तथा ॥ २१
वलयैरपविद्धैश्च तत्रैवाङ्गुलिवेष्टकैः ।
चूडामणिभिरुष्णीषैः स्वर्णसूत्रैश्च मारिष ॥ २२
तनुत्रैः सतलत्रैश्च हारैर्निष्कैश्च भारत ।
वस्त्रैश्छत्रैश्च विध्वस्तैश्चामरव्यजनैरपि ॥ २३
गजाश्वमनुजैर्भिन्नैः शोणिताक्तैश्च पत्रिभिः ।
तैस्तैश्च विविधैर्भिन्नैस्तत्रतत्र वसुन्धरा ॥ २४
पतितैरपविद्धैश्च विबभौ द्यौरिव ग्रहैः ।
अचिन्त्यमद्भुतं चैव तयोः कर्मातिमानुषम् ॥ २५
दृष्ट्वा चारणसिद्धानां विस्मयः समजायत ।
अग्नेर्वायुसहायस्य गतिः कक्ष इवाहवे ॥ २६
आसीद्भीमसहायस्य रौद्रमाधिरथेर्गतम् ।
निपातितध्वजरथं हतवाजिनरद्विपम् ॥ २७
गजाभ्यां संप्रयुक्ताभ्यामासीन्नलवनं यथा ।
तथारूपं महत्सैन्यमासीत्तव नराधिप ॥ २८
विमर्दः कर्णभीमाभ्यामासीच्च परमो रणे ॥ २९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

## एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

भीमकर्णयुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
ततः कर्णो महाराज भीमं विद्ध्वा त्रिभिः शरैः ।
'पुनश्च षड्भिस्तीक्ष्णाग्रैरविध्यत्कङ्कपत्रिभिः ।'
मुमोच शरवर्षाणि विचित्राणि बहूनि च ॥ १
वध्यमानो महाबाहुः सूतपुत्रेण पाण्डवः ।
न विव्यथे भीमसेनो भिद्यमान इवाचलः ॥ २
स कर्णं कर्णिना कर्णे पीतेन निशितेन च ।
विव्याध सुभृशं सङ्ख्ये तैलधौतेन मारिष ॥ ३
स कुण्डलं महच्चारु कर्णस्यापातयद्भुवि ।
तपनीयं महाराज दीप्तं ज्योतिरिवाम्बरात् ॥ ४
अथापरेण भल्लेन सूतपुत्रं स्तनान्तरे ।
आजघान भृशं क्रुद्धो हसन्निव वृकोदरः ॥ ५
पुनरस्य त्वरन्भीमो नाराचान्दश भारत ।
रणे प्रैषीन्महाबाहुर्निर्मुक्ताशीविषोपमान् ॥ ६
ते ललाटं विनिर्भिद्य सूतपुत्रस्य भारत ।
विविशुश्चोदितास्तेन वल्मीकमिव पन्नगाः ॥ ७
ललाटस्थैस्ततो बाणैः सूतपुत्रो व्यरोचत ।
नीलोत्पलमयीं मालां धारयन्वै यथा पुरा ॥ ८
सोऽतिविद्धो भृशं कर्णः पाण्डवेन तरस्विना ।
रथकूबरमालम्ब्य न्यमीलयत लोचने ॥ ९
स मुहूर्तात्पुनः संज्ञां लेभे कर्णः परंतपः ।
रुधिरोक्षितसर्वाङ्गः क्रोधमाहारयत्परम् ॥ १०
ततः क्रुद्धो रणे कर्णः पीडितो दृढधन्वना ।
वेगं चक्रे महावेगो भीमसेनरथं प्रति ॥ ११
तस्मै कर्णः शतं राजन्निषूणां गार्ध्रवाससाम् ।
अमर्षी बलवान्क्रुद्धः प्रेषयामास भारत ॥ १२
ततः प्रासृजदुग्राणि शरवर्षाणि पाण्डवः ।
समरे तमनादृत्य तस्य वीर्यमचिन्तयन् ॥ १३
कर्णस्ततो महाराज पाण्डवं नवभिः शरैः ।
आजघानोरसि क्रुद्धः क्रुद्धरूपं परंतप ॥ १४
तावुभौ नरशार्दूलौ शार्दूलाविव दंष्ट्रिणौ ।
'शरदंष्ट्रौ समासाद्य ततक्षतुररिंदमौ ।'

जीमूताविव चान्योन्यं प्रववर्षतुराहवे ॥ १५
तलशब्दरवैश्चैव त्रासयेतां परस्परम् ।
शरजालैश्च विविधैस्त्रासयामासतुर्मृधे ॥ १६
अन्योन्यं समरे क्रुद्धौ कृतप्रतिकृतैषिणौ ।
ततो भीमो महाबाहुः सूतपुत्रस्य भारत ॥ १७
क्षुरप्रेण धनुश्छित्त्वा ननाद परवीरहा ।
तदपास्य धनुश्छिन्नं सूतपुत्रो महारथः ॥ १८
अन्यत्कार्मुकमादत्त भारघ्नं वेगवत्तरम् ।
तदप्यथ निमेषार्धाच्चिच्छेदास्य वृकोदरः ॥ १९
तृतीयं च चतुर्थं च पञ्चमं षष्ठमेव हि ।
सप्तमं चाष्टमं चैव नवमं दशमं तथा ॥ २०
एकादशं द्वादशं च त्रयोदशमथापि च ।
चतुर्दशं पञ्चदशं षोडशं च वृकोदरः ॥ २१
तथा सप्तदशं वेगादष्टादशमथापि वा ।
बहूनि भीमश्चिच्छेद कर्णस्यैवं धनूंषि हि ।
निमेषार्धात्ततः कर्णो धनुर्हस्तो व्यतिष्ठत ॥ २२
दृष्ट्वा स कुरुसौवीरसिन्धुवीरबलक्षयम् ।
स वर्मध्वजशस्त्रैश्च पतितैः संवृतां महीम् ॥ २३
'रथैर्विमथितैर्भल्लैरश्वैश्चान्यैः प्रवल्गितैः ।
भ्रष्टश्रीकैर्नरवरैः पांसुकुण्ठितमूर्धजैः ॥' २४
हस्त्यश्वरथदेहांश्च गतासून्प्रेक्ष्य सर्वशः ।
सूतपुत्रस्य संरम्भाद्दीप्तं वपुरजायत ॥ २५
स विष्फार्य महच्चापं कार्तस्वरविभूषितम् ।
भीमं प्रैक्षत राधेयो घोरं घोरेण चक्षुषा ॥ २६
ततः क्रुद्धः शरानस्यन्सूतपुत्रो व्यरोचत ।
मध्यंदिनगतोऽर्चिष्माञ्शरदीव दिवाकरः ॥ २७
मरीचिविकचस्येव राजन्भानुमतो वपुः ।
आसीदाधिरथेर्घोरं वपुः शरशताचितम् ॥ २८
कराभ्यामाददानस्य संदधानस्य चाशुगान् ।
कर्षतो मुञ्चतो बाणान्नान्तरं ददृशे रणे ॥ २९
अग्निचक्रोपमं घोरं मण्डलीकृतमायुधम् ।
कर्णस्यासीन्महीपाल सव्यं दक्षिणमस्यतः ॥ ३०
स्वर्णपुङ्खाः सुनिशिताः कर्णचापच्युताः शराः ।
प्राच्छादयन्महाराज दिशः सूर्य इवांशुभिः ॥ ३१
ततः कनकपुङ्खानां शराणां नतपर्वणाम् ।
धनुश्च्युतानां वियति ददृशे बहुधा व्रजः ॥ ३२
बाणासनादाधिरथेः प्रभवन्ति स्म सायकाः ।
श्रेणीकृता व्यरोचन्त राजन्क्रौञ्चा इवाम्बरे ॥ ३३
गार्ध्रपत्राञ्शिलाधौतान्कार्तस्वरविभूषितान् ।
महावेगान्प्रदीप्ताग्रान्मुमोचाधिरथिः शरान् ॥ ३४
ते तु चापबलोद्धूताः शातकुम्भविभूषिताः ।
अजस्रमपतन्बाणा भीमसेनरथं प्रति ॥ ३५
ते व्योम्नि रुक्मविकृता व्यकाशन्त सहस्रशः ।
शलभानामिव व्राताः शराः कर्णसमीरिताः ॥ ३६
चापादाधिरथेर्मुक्ताः प्रपतन्तश्चकाशिरे ।
एको दीर्घ इवात्यर्थमाकाशे संस्थितः शरः ॥ ३७
पर्वतं वारिधाराभिश्छादयन्निव तोयदः ।
कर्णः प्राच्छादयत्क्रुद्धो भीमं सायकवृष्टिभिः ॥ ३८
तत्र भारत भीमस्य बलं वीर्यं पराक्रमम् ।
व्यवसायं च पुत्रास्ते ददृशुः सहसैनिकाः ॥ ३९
तां समुद्रमिवोद्धूतां शरवृष्टिं समुत्थिताम् ।
अचिन्तयित्वा भीमस्तु क्रुद्धः कर्णमुपाद्रवत् ॥ ४०
रुक्मपृष्ठं महच्चापं भीमस्यासीद्विशांपते ।
आकर्षान्मण्डलीभूतं शक्रचापमिवापरम् ।
तस्माच्छराः प्रादुरासन्पूरयन्त इवाम्बरम् ॥ ४१
सुवर्णपुङ्खैर्भीमेन सायकैर्नतपर्वभिः ।
गगने रचिता माला काञ्चनीव व्यरोचत ॥ ४२
ततो व्योम्नि विषक्तानि शरजालानि भागशः ।
आहतानि व्यशीर्यन्त भीमसेनस्य पत्रिभिः ॥ ४३
कर्णस्य शरजालैश्च भीमसेनस्य चोभयोः ।
अग्निस्फुलिङ्गसंस्पर्शैरञ्जोगतिभिराहवे ।
तैस्तैः कनकपुङ्खानां द्यौरासीत्संवृता व्रजैः ॥ ४४
न स्म सूर्यस्तदा भाति न स्म वाति समीरणः ।
शरजालावृते व्योम्नि न प्राज्ञायत किंचन ॥ ४५
स भीमं छादयन्बाणैः सूतपुत्रः पृथग्विधैः ।
उपारोहदनादृत्य तस्य वीर्यं महात्मनः ॥ ४६
तयोर्विसृजतोस्तत्र शरजालानि मारिष ।

उपारोहत्सन्निकर्षमगात् ॥ ४६ ॥

वायुभूतान्यदृश्यन्त संसक्तानीतरेतरम् ॥ ४७
अन्योन्यशरसंस्पर्शात्तयोर्मनुजसिंहयोः ।
आकाशे भरतश्रेष्ठ पावकः समजायत ॥ ४८
तथा कर्णः शितान्बाणान्कर्मारपरिमार्जितान् ।
सुवर्णविकृतान्क्रुद्धः प्राहिणोद्वधकाङ्क्षया ॥ ४९
तानन्तरिक्षे विशिखैस्त्रिधैकैकमशातयत् ।
विशेषयन्सूतपुत्रं भीमस्तिष्ठेति चाब्रवीत् ॥ ५०
पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः ।
अमर्षी बलवान्क्रुद्धो दिधक्षन्निव पावकः ॥ ५१
ततश्चटचटाशब्दो गोधाघातादभूत्तयोः ॥ ५२
तलशब्दश्च सुमहान्सिंहनादश्च भैरवः ।
रथनेमिनिनादश्च ज्याशब्दश्चैव दारुणः ॥ ५३
योधा व्युपारमन्युद्धाद्दिदृक्षन्तः पराक्रमम् ।
कर्णपाण्डवयो राजन्परस्परवधैषिणोः ॥ ५४
देवर्षिसिद्धगन्धर्वाः साधुसाध्वित्यपूजयन् ।
मुमुचुः पुष्पवर्षं च विद्याधरगणास्तथा ॥ ५५
ततो भीमो महाबाहुः संरम्भी दृढविक्रमः ।
अस्त्रैरस्त्राणि संवार्य शरैर्विव्याध सूतजम् ॥ ५६
कर्णोऽपि भीमसेनस्य निवार्येषून्महाबलः ।
प्राहिणोन्नव नाराचानाशीविषसमान्रणे ॥ ५७
तावद्भिरथ तान्भीमो व्योम्नि चिच्छेद पत्रिभिः ।
नाराचान्सूतपुत्रस्य तिष्ठतिष्ठेति चाब्रवीत् ॥ ५८
ततो भीमो महाबाहुः शरं क्रुद्धान्तकोपमम् ।
मुमोचाधिरथेर्वीरो यमदण्डमिवापरम् ॥ ५९
तमापतन्तं चिच्छेद राधेयः प्रहसन्निव ।
त्रिभिः शरैः शरं राजन्पाण्डवस्य प्रतापवान् ॥ ६०
पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः ।
तस्य तान्याददे कर्णः सर्वाण्यस्त्राण्यभीतवत् ।
युध्यमानस्य भीमस्य सूतपुत्रोऽस्त्रमायया ॥ ६१
तस्येषुधी धनुर्ज्यां च बाणैः सन्नतपर्वभिः ।
रश्मीन्योक्त्राणि चाश्वानां क्रुद्धः कर्णोऽच्छिनन्मृधे
तस्याश्वांश्च पुनर्हत्वा सूतं विव्याध पञ्चभिः ।
सोपसृत्य द्रुतं सूतो युधामन्यो रथं ययौ ॥ ६३

विहसन्निव भीमस्य क्रुद्धः कालानलद्युतिः ।
ध्वजं चिच्छेद राधेयः पताकां च व्यपातयत् ॥ ६४
स विधन्वा महाबाहू रथशक्तिं परामृशन् ।
तां व्यवासृजदाविध्य क्रुद्धः कर्णरथं प्रति ॥ ६५
तामाधिरथिरायस्तः शक्तिं काञ्चनभूषणाम् ।
आपतन्तीं महोल्काभां चिच्छेद दशभिः शरैः ६६
साऽपतद्दशधा छिन्ना कर्णस्य निशितैः शरैः ।
अस्यतः सूतपुत्रस्य मित्रार्थे चित्रयोधिनः ॥ ६७
स चर्मादत्त कौन्तेयो जातरूपपरिष्कृतम् ।
खड्गं चान्यतरप्रेप्सुर्जयं मरणमेव वा ॥ ६८
तदस्य तरसा क्रुद्धो व्यधमच्चर्म सुप्रभम् ।
शरैर्बहुभिरत्युग्रैः प्रहसन्निव भारत ॥ ६९
स विचर्मा महाराज विरथः क्रोधमूर्छितः ।
असिं प्रासृजदाविध्य त्वरन्कर्णरथं प्रति ॥ ७०
स धनुः सूतपुत्रस्य सज्यं छित्त्वा महानसिः ।
पपात भुवि राजेन्द्र क्रुद्धः सर्प इवाम्बरात् ॥ ७१
ततः प्रहस्याधिरथिरन्यदादाय कार्मुकम् ।
शत्रुघ्नं समरे क्रुद्धो दृढज्यं वेगवत्तरम् ॥ ७२
व्यायच्छत्स शरान्कर्णः कुन्तीपुत्रजिघांसया ।
सहस्रशो महाराज रुक्मपुङ्खान्सुतेजनान् ॥ ७३
स वध्यमानो बलवान्कर्णचापच्युतैः शरैः ।
वैहायसं प्राक्रमद्वै कर्णस्य रथमाविशत् ॥ ७४
स तस्य चरितं दृष्ट्वा संग्रामे विजयैषिणः ।
ध्वजालयस्थो राधेयो भीमसेनमवञ्चयत् ॥ ७५
तमदृष्ट्वा रथोपस्थे निलीनं व्यथितेन्द्रियम् ।
ध्वजमस्य समारुह्य तस्थौ भीमो महीतले ॥ ७६
तदस्य कुरवः सर्वे चारणाश्चाभ्यपूजयन् ।
यदियेप रथात्कर्णं हर्तुं तार्क्ष्य इवोरगम् ॥ ७७
स च्छिन्नधन्वा विरथः स्वधर्ममनुपालयन् ।
स्वरथं पृष्ठतः कृत्वा युद्धायैव व्यवस्थितः ॥ ७८
तद्विचिन्त्य स राधेयस्तत एनं समभ्ययात् ।
संरम्भात्पाण्डवं सङ्ख्ये युद्धाय समुपस्थितम् ॥ ७९
तौ समेतौ महाराज स्पर्धमानौ महाबलौ ।

---

वायुभूतानि वातोद्धूतान्यतिवेगवन्ति वा ॥ ४७ ॥ वैहायसमाकाशम् ॥ ७४ ॥ लयमङ्गसंकोचम् ॥ ७५ ॥

जीमूताविव घर्मान्ते गर्जमानौ नरर्षभौ ॥ ८०
तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः ।
अमृष्यमाणयोः सङ्ख्ये देवदानवयोरिव ॥ ८१
क्षीणशस्त्रस्तु कौन्तेयः कर्णेन समभिद्रुतः ।
दृष्ट्वाऽर्जुनहतान्नागान्पतितान्पर्वतोपमान् ।
रथमार्गविघातार्थं व्यायुधः प्रविवेश ह ॥ ८२
हस्तिनां व्रजमासाद्य रथदुर्गं प्रविश्य च ।
पाण्डवो जीविताकाङ्क्षी राधेयं नाभ्यवर्तत ॥ ८३
व्यवस्थानमथाकाङ्क्षन्धनञ्जयशरैर्हतम् ।
उद्यम्य कुञ्जरं पार्थस्तस्थौ परपुरंजयः ॥ ८४
महौषधिसमायुक्तं हनूमानिव पर्वतम् ।
तमस्य विशिखैः कर्णो व्यधमत्कुञ्जरं पुनः ॥ ८५
हस्त्यङ्गान्यथ कर्णाय प्राहिणोत्पाण्डुनन्दनः ।
चक्राण्यश्वांस्तथा चान्यद्यद्यत्पश्यति भूतले ॥ ८६
तत्तदादाय चिक्षेप क्रुद्धः कर्णाय पाण्डवः ।
तदस्य सर्वं चिच्छेद क्षिप्तंक्षिप्तं शितैः शरैः ॥ ८७
भीमोऽपि मुष्टिमुद्यम्य वज्रगर्भं सुदारुणम् ।
हन्तुमैच्छत्सूतपुत्रं संस्मरन्नर्जुनं क्षणात् ॥ ८८
शक्तोऽपि नावधीत्कर्णं समर्थः पाण्डुनन्दनः ।
रक्षमाणः प्रतिज्ञां तां या कृता सव्यसाचिना ॥ ८९
तमेवं व्याकुलं भीमं भूयोभूयः शितैः शरैः ।
मूर्च्छयाभिपरीताङ्गमकरोत्सूतनन्दनः ॥ ९०
व्यायुधं नावधीच्चैनं कर्णः कुन्त्या वचः स्मरन् ।
धनुषोग्रेण तं कर्णः सोऽभिद्रुत्य परामृशत् ॥ ९१
धनुषा स्पृष्टमात्रेण क्रुद्धः सर्प इव श्वसन् ।
आच्छिद्य स धनुस्तस्य कर्णं मूर्धन्यताडयत् ॥ ९२
ताडितो भीमसेनेन क्रोधादारक्तलोचनः ।
विहसन्निव राधेयो वाक्यमेतदुवाच ह ॥ ९३
पुनःपुनस्तूबरक मूढ औदरिकेति च ।
अकृतास्त्रक मा योत्सीर्बाल संग्रामकातर ॥ ९४
यत्र भोज्यं बहुविधं भक्ष्यं पेयं च पाण्डव ।
तत्र त्वं दुर्मते योग्यो न युद्धेषु कदाचन ॥ ९५
मूलपुष्पफलाहारो व्रतेषु नियमेषु च ।
उचितस्त्वं वने भीम न त्वं युद्धविशारदः ॥ ९६
क्व युद्धं क्व मुनित्वं च वनं गच्छ वृकोदर ।
न त्वं युद्धोचितस्तात वनवासरतिर्भवान् ॥ ९७
सूदान्भृत्यजनान्दासांस्त्वं गृहे त्वरयन्भृशम् ।
योग्यस्ताडयितुं क्रोधाद्भोजनार्थं वृकोदर ॥ ९८
मुनिर्भूत्वाऽथवा भीम फलान्यादत्स्व दुर्मते ।
वनाय व्रज कौन्तेय न त्वं युद्धविशारदः ॥ ९९
फलमूलाशने शक्तस्त्वं तथाऽतिथिपूजने ।
न त्वां शस्त्रसमुद्योगे योग्यं मन्ये वृकोदर ॥ १००
'सञ्जय उवाच ।
एवं तं विरथं दृष्ट्वा स्मृत्वा कर्णोऽब्रवीद्वचः ॥' १०१
कौमारे यानि वृत्तानि विप्रियाणि विशांपते ।
तानि सर्वाणि चाप्येव रूक्षाण्यश्रावयद्भृशम् १०२
अथैनं तत्र संलीनमस्पृशद्धनुषा पुनः ।
प्रहसंश्च पुनर्वाक्यं भीममाह वृषस्तदा ॥ १०३
योद्धव्यं मारिषान्यत्र न योद्धव्यं च मादृशैः ।
मादृशैर्युध्यमानानामेतच्चान्यच्च विद्यते ॥ १०४
गच्छ वा यत्र तौ कृष्णौ तौ त्वां रक्षिष्यतो रणे ।
गृहं वा गच्छ कौन्तेय किं ते युद्धेन बालक ॥ १०५
सञ्जय उवाच ।
कर्णस्य वचनं श्रुत्वा भीमसेनोऽतिदारुणम् ।
उवाच कर्णं प्रहसन्सर्वेषां शृण्वतां वचः ॥ १०६
जितस्त्वमसकृद्दुष्ट कत्थसे किं वृथात्मना ।
जयाजयौ महेन्द्रस्य लोके दृष्टौ पुरातनैः ॥ १०७
मल्लयुद्धं मया सार्धं कुरु दुष्कुलसंभव ।
महाबलो महाभोगी कीचको निहतो यथा ।
तथा त्वां घातयिष्यामि पश्यत्सु सर्वराजसु ॥ १०८
भीमस्य मतमाज्ञाय कर्णो बुद्धिमतां वरः ।
विरराम रणात्तस्मात्पश्यतां सर्वधन्विनाम् ॥ १०९
एवं तं विरथं कृत्वा कर्णो राजन्व्यकत्थयत् ।
प्रमुखे वृष्णिसिंहस्य पार्थस्य च महात्मनः ॥ ११०

तद्रथादिसाधनम् ॥ ८७ ॥ वज्रगर्भमन्तर्विहिताङ्गुष्ठम् ॥ ८८ ॥ समर्थः समीचीनार्थो धर्मापेक्षीति यावत् ॥ ८९ ॥ तूबरकः पुंश्चिह्नरहितः षण्ड इतियावत् । तूबरोऽश्मश्रुपुरुषे इत्युपक्रम्य पुरुषव्यञ्जनत्यक्ते इति मेदिनी । औदरिको बह्वाशी ॥ ९४ ॥ व्रतेषु नियमेषु आगन्तुकेषु ॥ ९६ ॥ संलीनं संकुचिताङ्गम् ॥ १०३ ॥ व्यकत्थयत् भर्त्सितवान् ॥ ११० ॥ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

तं ब्रुवाणं तु भीमः स काङ्क्षन्भीमपराक्रमः ।
न चाकार्षीन्मृतं स्मृत्वा ह्यर्जुनस्य महाबलम् १११
तस्य कार्मुकमारुज्य बभञ्जाशुपराक्रमी ॥ ११२
ततो दृष्ट्वा महाराज वासुदेवो महाद्युतिः ।
अर्जुनार्जुन पश्येमं भीमं कर्णेन बाधितम् ॥ ११३
सञ्जय उवाच ।
एवमुक्तस्तदा पार्थः केशवेन महात्मना ।
भीमसेनं तथाभूतं क्रोधसंरक्तलोचनः ।
अमर्षवशमापन्नो निर्दहन्निव चक्षुषा ॥' ११४
ततो राजञ्शिलाधौताञ्शराञ्शाखामृगध्वजः ।
प्राहिणोत्सूतपुत्राय केशवेन प्रचोदितः ॥ ११५
ततः पार्थभुजोत्सृष्टाः शराः कनकभूषणाः ।
गाण्डीवप्रभवाः कर्णं हंसाः क्रौञ्चमिवाविशन् ॥
स भुजङ्गैरिवाविष्टैर्गाण्डीवप्रेषितैः शरैः ।
भीमसेनादपासेधत्सूतपुत्रं धनंजयः ॥ ११७
स च्छिन्नधन्वा भीमेन धनंजयशराहतः ।
कर्णो भीमादपायासीद्रथेन महता द्रुतम् ॥ ११८
भीमोऽपि सात्यकेर्वाहं समारुह्य नरर्षभः ।
अन्वयाद्भ्रातरं सङ्ख्ये पाण्डवं सव्यसाचिनम् ॥ ११९
ततः कर्णं समुद्दिश्य त्वरमाणो धनंजयः ।
नाराचं क्रोधताम्राक्षः प्रैषीन्मृत्युमिवान्तकः १२०
स गरुत्मानिवाकाशे प्रार्थयन्भुजगोत्तमम् ।
नाराचोऽभ्यपतत्कर्णं तूर्णं गाण्डीवचोदितः १२१
तमन्तरिक्षे नाराचं द्रौणिश्चिच्छेद पत्रिणा ।
धनंजयभयात्कर्णमुज्जिहीर्षन्महारथः ॥ १२२
ततो द्रौणिं चतुःषष्ट्या विव्याध कुपितोऽर्जुनः ।
शिलीमुखैर्महाराज मागास्तिष्ठेति चाब्रवीत् १२३
स तु मत्तगजाकीर्णमनीकं रथसंकुलम् ।
तूर्णमभ्याविशद्द्रौणिर्धनंजयशरार्दितः ॥ १२४
ततः सुवर्णपृष्ठानां चापानां कूजतां रणे ।
शब्दं गाण्डीवघोषेण कौन्तेयोऽभ्यभवद्बली १२५
धनंजयस्तथाऽऽयान्तं पृष्ठतो द्रौणिमभ्यगात् ।
नातिदीर्घमिवाध्वानं शरैः संत्रासयन्बलम् ॥ १२६
विदार्य देहान्नाराचैर्नरवारणवाजिनाम् ।
कङ्कबर्हिणवासोभिर्बलं व्यधमदर्जुनः ॥ १२७
तद्बलं भरतश्रेष्ठ सवाजिद्विपमानवम् ।
पाकशासनिरायत्तः पार्थः स निजघान ह ॥ १२८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

---

## चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

सात्यकिना अलम्बुसवधः ॥ १ ॥

धृतराष्ट्र उवाच ।
'दातव्यमद्य मन्येऽहं पाण्डवानां स्वकं पुनः ।
न विग्रहो हि बलिना श्रेयसे स्याद्यथातथा ॥ १
पादयोः प्रणतेनापि भुक्त्वाऽप्युच्छिष्टमप्यरेः ।
अतोऽन्यद्वापि कृत्वैव जीव्यं लोके नरेण वै ॥ २
जीवतैव परो लोकः साध्यते चैव सर्वथा ।
अजीवतस्तथैवासीन्न सुखं न परा गतिः ॥ ३
विनाशे सर्वथोत्पन्ने न बालो बुध्यते क्रियाम् ।
मिथ्याभिमानदग्धो हि न बुद्ध्येत कृताकृते ॥' ४
अहन्यहनि मे दीप्तं यशः पतति सञ्जय ।
हता मे बहवो योधा मन्ये कालस्य पर्ययम् ॥ ५
धनञ्जयः सुसंक्रुद्धः प्रविष्टो मामकं बलम् ।
रक्षितं द्रौणिकर्णाभ्यामप्रवेश्यं सुरैरपि ॥ ६
ताभ्यामूर्जितवीर्याभ्यामाप्यायितपराक्रमः ।
सहितः कृष्णभीमाभ्यां शिनीनामृषभेण च ॥ ७
तदाप्रभृति मां शोको दहत्यग्निरिवाशयम् ।
ग्रस्तानिव प्रपश्यामि भूमिपालान्ससैन्धवान् ॥ ८
अप्रियं सुमहत्कृत्वा सिन्धुराजः किरीटिनः ।
'क्रुद्धस्य देवराजस्य शक्रस्येव महाद्युतेः ।'
चक्षुर्विषयमापन्नः कथं जीवितमाप्नुयात् ॥ ९
अनुमानाच्च पश्यामि नास्ति सञ्जय सैन्धवः ।
युद्धं तु तद्यथावृत्तं तन्ममाचक्ष्व तत्त्वतः ॥ १०

यच्च विक्षोभ्य महतीं सेनामालोड्य चासकृत् ।
एकः प्रविष्टः संक्रुद्धो नलिनीमिव कुञ्जरः ॥ ११
तस्य मे वृष्णिवीरस्य ब्रूहि युद्धं यथातथम् ।
धनञ्जयार्थे यत्तस्य कुशलो ह्यसि सञ्जय ॥ १२
सञ्जय उवाच ।
तथा तु वैकर्तनपीडितं तं
भीमं प्रयान्तं पुरुषप्रवीरम् ।
समीक्ष्य राजन्नरवीरमध्ये
शिनिप्रवीरोऽनुययौ रथेन ॥ १३
नदन्यथा वज्रधरस्तपान्ते
ज्वलन्यथा जलदान्ते च सूर्यः ।
निघ्नन्नमित्रान्धनुषा दृढेन
स कम्पयंस्तव पुत्रस्य सेनाम् ॥ १४
तं यान्तमश्वै रजतप्रकाशै-
रायोधने वीरतरं नदन्तम् ।
नाशक्नुवन्वारयितुं त्वदीयाः
सर्वे रथा भारत माधवाग्र्यम् ॥ १५
अमर्षपूर्णस्त्वनिवृत्तयोधी
शरासनी काञ्चनवर्मधारी ।
अलम्बुसः सात्यकिं माधवाग्र्य-
मवारयद्राजवरोऽभिपत्य ॥ १६
तयोरभूद्भारत संप्रहारो
यथाविधो नैव बभूव कश्चित् ।
प्रेक्षन्त एवाहवशोभिनौ तौ
योधास्त्वदीयाश्च परे च सर्वे ॥ १७
आविध्यदेनं दशभिः पृषत्कै-
रलम्बुसो राजवरः प्रसह्य ।
अनागतानेव तु तान्पृषत्कां-
श्चिच्छेद बाणैः शिनिपुङ्गवोऽपि ॥ १८
पुनः स बाणैस्त्रिभिरग्निकल्पै-
राकर्णपूर्णैर्निशितैः सपुङ्खैः ।
विव्याध देहावरणं विदार्य
ते सात्यकेराविविशुः शरीरम् ॥ १९
ततः कायमस्याग्न्यनिलप्रभावै-
र्विदार्य बाणैर्निशितैर्ज्वलद्भिः ।
आजघ्निवांस्तान्रजतप्रकाशा-
नश्वांश्चतुर्भिश्चतुरः प्रसह्य ॥ २०
तथा तु तेनाभिहतस्तरस्वी
नप्ता शिनेश्चक्रधरप्रभावः ।
अलम्बुसस्योत्तमवेगवद्भि-
रश्वांश्चतुर्भिर्निजघान बाणैः ॥ २१
अथास्य सूतस्य शिरो निकृत्य
भल्लेन कालानलसन्निभेन ।
सकुण्डलं पूर्णशशिप्रकाशं
भ्राजिष्णु वक्त्रं निचकर्त देहात् ॥ २२
निहत्य तं पार्थिवपुत्रपौत्रं
सङ्ख्ये यदूनामृषभः प्रमाथी ।
ततोऽन्वयादर्जुनमेव वीरः
सैन्यानि राजंस्तव सन्निवार्य ॥ २३
अन्वागतं वृष्णिवीरं समीक्ष्य
तथारिमध्ये परिवर्तमानम् ।
घ्नन्तं कुरूणामिषुभिर्बलानि
पुनःपुनर्वायुमिवाभ्रपूगान् ॥ २४
ततोऽवहन्सैन्धवाः साधुदान्ता
गोक्षीरकुन्देन्दुहिमप्रकाशाः ।
सुवर्णजालावतताः सदश्वा
यतोयतः कामयते नृसिंहः ॥ २५
अथात्मजास्ते सहिताऽभिपेतु-
रन्ये च योधास्त्वरितास्त्वदीयाः ।
कृत्वा मुखं भारतयोधमुख्यं
दुःशासनं त्वत्सुतमाजमीढ ॥ २६
ते सर्वतः संपरिवार्य सङ्ख्ये
शैनेयमाजघ्नुरनीकसाहाः ।
स चापि तान्प्रवरः सात्वतानां
न्यवारयद्बाणजालेन वीरः ॥ २७
निवार्य तांस्तूर्णममित्रघाती
नप्ता शिनेः पत्रिभिरग्निकल्पैः

प्रेक्षन्तः प्रेक्षकाः । बभूवेत्येतत् बहुवचनतया परिणतमनुपज्यते ॥ १७ ॥ प्रसह्य अनादृत्य ॥ १८ ॥

चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

दुःशासनस्याभिजघान वाहा-
नश्वीयसस्तन्मनसोऽपि बाणैः ॥ २८

ततोऽर्जुनो हर्षमवाप सङ्ख्ये
कृष्णश्च दृष्ट्वा पुरुषप्रवीरम् ॥ २९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

## एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

सात्यकेरर्जुनदर्शनं भूरिश्रवसा समागमश्च ॥ १ ॥

सञ्जय उवाच ।
तमुद्यतं महाबाहुं दुःशासनरथं प्रति ।
त्वरितं त्वरणीयेषु धनञ्जयजयैषिणम् ॥ १
त्रिगर्तानां महेष्वासाः सुवर्णविकृतध्वजाः ।
सेनासमुद्रमाविष्टमनन्तं पर्यवारयन् ॥ २
अथैनं रथवंशेन सर्वतः सन्निवार्य ते ।
अवाकिरञ्छरव्रातैः क्रुद्धाः परमधन्विनः ॥ ३
अजयद्राजपुत्रांस्तान्भ्राजमानान्महारणे ।
एकः पञ्चाशतं शत्रून्सात्यकिः सत्यविक्रमः ॥ ४
संप्राप्य भारतीमध्यं तलघोषसमाकुलम् ।
असिशक्तिगदापूर्णमप्लवं सागरं यथा ॥ ५
'अथैनमनुवृत्तास्तु त्रिगर्ताः सहिताः पुनः ।
तीव्रेण रथवंशेन महता पर्यवारयन् ।
विकर्षन्तोऽतिमात्राणि चापानि भरतर्षभ ॥' ६
तत्राद्भुतमपश्याम शैनेयचरितं रणे ।
प्रतीच्यां दिशि तं दृष्ट्वा प्राच्यां पश्यामि लाघवात्
उदीचीं दक्षिणां प्राचीं प्रतीचीं विदिशस्तथा ।
पुनर्मध्यगतो वीर आहवे युद्धदुर्मदः ॥ ८
एकः पर्यचरन्रङ्गे बहुधा स महाबलः ।
नृत्यन्निवाचरच्छूरो यथा रथशतं तथा ॥ ९
तद्दृष्ट्वा चरितं तस्य सिंहविक्रान्तगामिनः ।
त्रिगर्ताः संन्यवर्तन्त संतप्ताः स्वजनं प्रति ॥ १०
तमन्ये शूरसेनानां शूराः सङ्ख्ये न्यवारयन् ।
नियच्छन्तः शरव्रातैर्मत्तं द्विपमिवाङ्कुशैः ॥ ११
तैर्व्यवाहरदार्यात्मा मुहूर्तादेव सात्यकिः ।
ततः कलिङ्गैर्युयुधे सोऽचिन्त्यबलविक्रमः ॥ १२
तां च सेनामतिक्रम्य कलिङ्गानां दुरत्ययाम् ।
अथ पार्थं महाबाहुर्धनंजयमुपासदत् ॥ १३
तरन्निव जले श्रान्तो यथा स्थलमुपयिवान् ।
तं दृष्ट्वा पुरुषव्याघ्रं युयुधानः समाश्वसत् ॥ १४
तमायान्तमभिप्रेक्ष्य केशवः पार्थमब्रवीत् ।
असावायाति शैनेयस्तव पार्थ पदानुगः ॥ १५
एष शिष्यः सखा चैव तव सत्यपराक्रमः ।
सर्वान्योधांस्तृणीकृत्य विजिग्ये पुरुषर्षभः ॥ १६
एष कौरवयोधानां कृत्वा घोरमुपद्रवम् ।
तव प्राणैः प्रियतमः किरीटिन्नेति सात्यकिः ॥ १७
एष द्रोणं तथा भोजं कृतवर्माणमेव च ।
कदर्थीकृत्य विशिखैः फल्गुनाभ्येति सात्यकिः १८
धर्मराजप्रियान्वेषी हत्वा योधान्वरान्वरान् ।
शूरश्चैव कृतास्त्रश्च फल्गुनाभ्येति सात्यकिः ॥ १९
कृत्वा सुदुष्करं कर्म सैन्यमध्ये महाबलः ।
तव दर्शनमन्विच्छन्पाण्डवाभ्येति सात्यकिः ॥ २०
बहूनेकरथेनाजौ योधयित्वा महारथान् ।
आचार्यप्रमुखान्पार्थ प्रयात्येष स सात्यकिः ॥ २१
स्वबाहुबलमाश्रित्य विदार्य च वरूथिनीम् ।
प्रेषितो धर्मराजेन पार्थैषोऽभ्येति सात्यकिः ॥ २२
प्रियः शिष्यश्च ते पार्थ त्वया तुल्यपराक्रमः ।
विद्राव्य महतीं सेनामेष स्त्वायाति सात्यकिः ॥२३
यस्य नास्ति समो योधः कौरवेषु कथंचन ।
सोऽयमायाति कौन्तेय सात्यकिर्युद्धदुर्मदः ॥२४
कुरुसैन्याद्विमुक्तो वै सिंहो मध्याद्गवामिव ।
निहत्य बहुलाः सेनाः पार्थैषोऽभ्येति सात्यकिः ॥

त्वरणीयेषु कृत्येषु ॥ १ ॥

एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

एष राजसहस्राणां वक्त्रैः पङ्कजसन्निभैः ।
आस्तीर्य वसुधां पार्थ क्षिप्रमायाति सात्यकिः २६
एष दुर्योधनं जित्वा भ्रातृभिः सहितं रणे ।
निहत्य जलसन्धं च क्षिप्रमायाति सात्यकिः ॥२७
रुधिरौघवतीं कृत्वा नदीं शोणितकर्दमाम् ।
तृणवन्न्यस्य कौरव्यानेष ह्यायाति सात्यकिः ॥ २८
सञ्जय उवाच ।
ततः प्रहृष्टः कौन्तेयः केशवं वाक्यमब्रवीत् ।
न मे प्रियं महाबाहो यन्मामभ्येति सात्यकिः॥२९
न हि जानामि वृत्तान्तं धर्मराजस्य केशव ।
सात्वतेन विहीनः स यदि जीवति वा न वा ॥ ३०
एतेन हि महाबाहो रक्षितव्यः स पार्थिवः ।
तमेष कथमुत्सृज्य मम कृष्ण पदानुगः ॥ ३१
राजा द्रोणाय चोत्सृष्टः सैन्धवश्चानिपातितः ।
प्रत्युद्याति च शैनेयमेष भूरिश्रवा रणे ॥ ३२
सोऽयं गुरुतरो भारः सैन्धवार्थे समाहितः ।
ज्ञातव्यश्च हि मे राजा रक्षितव्यश्च सात्यकिः ॥ ३३
जयद्रथश्च हन्तव्यो लम्बते च दिवाकरः ।
श्रान्तश्चैष महाबाहुरल्पप्राणश्च सांप्रतम् ॥ ३४
परिश्रान्ता हयाश्चास्य हययन्ता च माधव ।
न च भूरिश्रवाः श्रान्तः ससहायश्च केशव ॥ ३५
अपीदानीं भवेदस्य क्षेममस्मिन्समागमे ।
कच्चिन्न सागरं तीर्त्वा सात्यकिः सत्यविक्रमः ।
गोष्पदं प्राप्य सीदेत महौजाः शिनिपुङ्गवः ॥ ३६
अपि कौरवमुख्येन कृतास्त्रेण महात्मना ।
समेत्य भूरिश्रवसा स्वस्तिमान्सात्यकिर्भवेत् ॥ ३७
व्यतिक्रममिमं मन्ये धर्मराजस्य केशव ।
आचार्याद्भयमुत्सृज्य यः प्रैषयत सात्यकिम् ॥ ३८
ग्रहणं धर्मराजस्य खगः श्येन इवामिषम् ।
नित्यमाशंसते द्रोणः कच्चित्स्यात्कुशली नृपः॥३९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

## द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

सात्यकिभूरिश्रवसोर्युद्धम् ॥ १ ॥ सात्यकिशिरश्छेदायोद्यमितस्य खड्गभृतो भूरिश्रवोभुजस्यार्जुनेन संछेदः ॥ २ ॥

सञ्जय उवाच ।
तमापतन्तं संप्रेक्ष्य सात्वतं युद्धदुर्मदम् ।
क्रोधाद्भूरिश्रवा राजन्सहसा समुपाद्रवत् ॥ १
तमब्रवीन्महाराज कौरव्यः शिनिपुङ्गवम् ।
अद्य प्राप्तोऽसि दिष्ट्या मे चक्षुर्विषयमित्युत ॥२
चिराभिलषितं काममहं प्राप्स्यामि संयुगे ।
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे रणम् ॥ ३
अद्य त्वां समरे हत्वा नित्यं शूराभिमानिनम् ।
नन्दयिष्यामि दाशार्ह कुरुराजं सुयोधनम् ॥ ४
अद्य मद्बाणनिर्दग्धं पतितं धरणीतले ।
द्रक्ष्यतस्त्वां रणे वीरौ सहितौ केशवार्जुनौ ॥ ५
अद्य धर्मसुतो राजा श्रुत्वा त्वां निहतं मया ।
सव्रीडो भविता सद्यो येनासीह प्रवेशितः ॥ ६
अद्य मे विक्रमं पार्थो विज्ञास्यति धनंजयः ।
त्वयि भूमौ विनिहते शयाने रुधिरोक्षिते ॥ ७
चिराभिलषितो ह्येष त्वया सह समागमः ।
पुरा देवासुरे युद्धे शक्रस्य बलिना यथा ॥ ८
अद्य युद्धं महाघोरं तव दास्यामि सात्वत
ततो ज्ञास्यसि तत्त्वेन मद्वीर्यबलपौरुषम् ॥ ९
अद्य संयमनीं याता मया त्वं निहतो रणे ।
यथा रामानुजेनाजौ रावणिर्लक्ष्मणेन ह ॥ १०
अद्य कृष्णश्च पार्थश्च धर्मराजश्च माधव .
हते त्वयि निरुत्साहा रणं त्यक्ष्यन्त्यसंशयम् ॥११
अद्य तेऽपचितिं कृत्वा शितैर्माधव सायकैः ।
तत्स्त्रियो नन्दयिष्यामि ये त्वया निहता रणे ॥१२
मच्चक्षुर्विषयं प्राप्तो न त्वं माधव मोक्ष्यसे ।
सिंहस्य विषयं प्राप्तो यथा क्षुद्रमृगस्तथा ॥ १३

उतात्यर्थम् ॥ २ ॥

सञ्जय उवाच ।
युयुधानस्तु तं राजन्प्रत्युवाच हसन्निव ।
कौरवेय न संत्रासो विद्यते मम संयुगे ॥ १४
नाहं भीषयितुं शक्यो वाङ्मात्रेण तु केवलम् ।
स मां निहन्यात्संग्रामे यो मां कुर्यान्निरायुधम् १५
समास्तु शाश्वतीर्हन्याद्यो मां हन्याद्धि संयुगे ।
किं वृथोक्तेन बहुना कर्मणा तत्समाचर ॥ १६
शारदस्येव मेघस्य गर्जितं निष्फलं हि ते ।
श्रुत्वा त्वद्गर्जितं वीर हास्यं हि मम जायते ॥१७
चिरकालेप्सितं लोके युद्धमद्यास्तु कौरव ।
त्वरते मे मतिस्तात तव युद्धाभिकाङ्क्षिणी ।
नाहत्वाऽहं निवर्तिष्ये त्वामद्य पुरुषाधम ॥ १८
सञ्जय उवाच ।
अन्योन्यं तौ तथा वाग्भिस्तक्षन्तौ नरपुङ्गवौ ।
जिघांसू परमक्रुद्धावभिजघ्नतुराहवे ॥ १९
समेतौ तौ महेष्वासौ शुष्मिणौ स्पर्धिनौ रणे ।
द्विरदाविव संक्रुद्धौ वासितार्थे मदोत्कटौ ॥ २०
भूरिश्रवाः सात्यकिश्च ववर्षतुररिंदमौ ।
शरवर्षाणि घोराणि मेघाविव परस्परम् ॥ २१
सौमदत्तिस्तु शैनेयं प्रच्छाद्येषुभिराशुगैः ।
जिघांसुर्भरतश्रेष्ठ विव्याध निशितैः शरैः ॥ २२
दशभिः सात्यकिं विद्ध्वा सौमदत्तिरथापरान् ।
मुमोच निशितान्बाणाञ्जिघांसुः शिनिपुङ्गवं ॥२३
तानस्य विशिखांस्तीक्ष्णानन्तरिक्षे विशांपते ।
अप्राप्तानस्त्रमायाभिरग्रसत्सात्यकिः प्रभो ॥ २४
तौ पृथक्शस्त्रवर्षाभ्यामवर्षेतां परस्परम् ।
उत्तमाभिजनौ वीरौ कुरुवृष्णियशस्करौ ॥ २५
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ ।
रथशक्तिभिरन्योन्यं विशिखैश्चाप्यकृन्तताम् ॥२६
निर्भिदन्तौ हि गात्राणि विक्षरन्तौ च शोणितम् ।
व्यष्टम्भयेतामन्योन्यं प्राणद्यूताभिदेविनौ ॥ २७
एवमुत्तमकर्माणौ कुरुवृष्णियशस्करौ ।
परस्परमयुध्येतां वारणाविव यूथपौ ॥ २८
तावदीर्घेण कालेन ब्रह्मलोकपुरस्कृतौ ।
यियासन्तौ परं स्थानमन्योन्यं संजगर्जतुः ॥ २९
सात्यकिः सौमदत्तिश्च शरवृष्ट्या परस्परम् ।
हृष्टवद्धार्तराष्ट्राणां पश्यतामभ्यवर्षताम् ॥ ३०
संप्रैक्षन्त जनास्तौ तु युध्यमानौ युथपती ।
यूथपौ वासिताहेतोः प्रयुद्धाविव कुञ्जरौ ॥ ३१
'भूयोभूयः शरै राजंस्तक्षन्तौ क्रोधमूर्च्छितौ ।
अयुध्येतां महारङ्गे वने केसरिणाविव ॥ ३२
मर्मज्ञाविव संक्रुद्धौ जिघांसन्तौ जगर्जतुः ।
विमर्दन्तावथान्योन्यं बलवज्रधराविव ॥ ३३
अथान्योन्यं पताकाश्च रथोपकरणानि च ।
संचिच्छिदतुरायान्तौ बाणैः सन्नतपर्वभिः ॥ ३४
पुनश्च शरवर्षाभ्यामन्योन्यमभिवर्षताम् ।
उभौ तु जघ्नतुस्तूर्णमितरेतरसारथी ॥' ३५
अन्योन्यस्य हयान्हत्वा धनुषी विनिकृत्य च ।
विरथावसियुद्धाय समेयातां महारणे ॥ ३६
आर्षभे चर्मणी चित्रे प्रगृह्य विपुले शुभे ।
विकोशौ चाप्यसी कृत्वा समरे तौ विचेरतुः ॥ ३७
चरन्तौ विविधान्मार्गान्मण्डलानि च भागशः ।
मुहुराजघ्नतुः क्रुद्धावन्योन्यमरिमर्दनौ ।
सखड्गौ चित्रवर्माणौ सनिष्काङ्गदभूषणौ ॥ ३८
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम् ।
संपातं समुदीर्णं च दर्शयन्तौ यशस्विनौ ॥ ३९
असिभ्यां संप्रजह्राते परस्परमरिंदमौ ।
उभौ छिद्रैषिणौ वीरावुभौ चित्रं ववल्गतुः ॥ ४०
दर्शयन्तावुभौ शिक्षां लाघवं सौष्ठवं तथा ।
रणे रणकृतां श्रेष्ठावन्योन्यं पर्यकर्षताम् ॥ ४१
मुहूर्तमिव राजेन्द्र समाहत्य परस्परम् ।
पश्यतां सर्वसैन्यानां वीरावाश्वसतां पुनः ॥ ४२
असिभ्यां चर्मणी चित्रे शतचन्द्रे नराधिप ।
निकृत्य पुरुषव्याघ्रौ बाहुयुद्धं प्रचक्रतुः ॥ ४३
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
बाहुभिः समसज्जेतामायसैः परिघैरिव ॥ ४४

शाश्वतीः समाः सर्वकालम् । तुरवधारणे । नित्यमेव असौ हन्यात् । जय एव तस्येत्यर्थः ॥ १६ ॥ ब्रह्मलोकपुरस्कृतौ ब्राह्मणसमूह-

तयो राजन्भुजाघातनिग्रहप्रग्रहास्तथा ।
शिक्षाबलसमुद्भूताः सर्वयोधप्रहर्षणाः ॥ ४५
तयोर्नृवरयो राजन्समरे युध्यमानयोः ।
भीमोऽभवन्महाशब्दो वज्रपर्वतयोरिव ॥ ४६
द्विपाविव विषाणाग्रैः शृङ्गैरिव महर्षभौ ।
भुजयोक्त्राबबन्धैश्च शिरोभ्यां चावघातनैः ॥ ४७
पादावकर्षसंधानैस्तोमराङ्कुशलासनैः ।
पादोदरविबन्धैश्च भूमावुद्भ्रमणैस्तथा ॥ ४८
गतप्रत्यागताक्षेपैः पातनोत्थानसंप्लुतैः ।
युयुधाते महात्मानौ कुरुसात्वतपुङ्गवौ ॥ ४९
द्वात्रिंशत्करणानि स्युर्यानि युद्धानि भारत ।
तान्यदर्शयतां तत्र युध्यमानौ महाबलौ ॥ ५०
क्षीणायुधे सात्वते युध्यमाने
ततोऽब्रवीदर्जुनं वासुदेवः ।
पश्यस्वैनं विरथं युध्यमानं
रणे वरं सर्वधनुर्धराणाम् ॥ ५१
'सिन्धुराजवधे सक्तं पार्थं कृष्णोऽब्रवीत्पुनः ।
सीदन्तं सात्यकिं पश्य पार्थैनं परिरक्ष च ॥' ५२
प्रविष्टो भारतीं भित्त्वा तव पाण्डव पृष्ठतः ।
योधितश्च महावीर्यैः सर्वैर्भारत भारतैः ॥ ५३
धार्तराष्ट्राश्च ये मुख्या ये च मुख्या महारथाः ।
निहता वृष्णिवीरेण शतशोऽथ सहस्रशः ॥ ५४
परिश्रान्तं युधां श्रेष्ठं संप्राप्तो भूरिदक्षिणः ।
युद्धाकाङ्क्षी समायान्तं नैतत्सममिवार्जुन ॥ ५५
ततो भूरिश्रवाः क्रुद्धः सात्यकिं युद्धदुर्मदः ।
उद्यम्याभ्याहनद्राजन्मत्तो मत्तमिव द्विपम् ॥ ५६
ततो जलदनिर्घोषः समीपे नृपसत्तम ।
हाहाकारो महानासीत्सैन्यानां भरतर्षभ ।
यदुद्यम्य महाबाहुः सात्यकिं न्यहनद्भुवि ॥ ५७
रथस्थयोर्द्वयोर्युद्धे क्रुद्धयोर्योधमुख्ययोः ।
केशवार्जुनयो राजन्समरे प्रेक्षमाणयोः ॥ ५८
अथ कृष्णो महाबाहुरर्जुनं प्रत्यभाषत ।
पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतम् ॥ ५९
परिश्रान्तं गतं भूमौ कृत्वा कर्म सुदुष्करम् ।
तवान्तेवासिनं वीरं पालयार्जुन सात्यकिम् ॥ ६०
न वशं यज्ञशीलस्य गच्छेदेष वरोऽर्जुन ।
त्वत्कृते पुरुषव्याघ्र तदाऽऽशु क्रियतां विभो ॥ ६१
सञ्जय उवाच ।
स सिंह इव मातङ्गं विकर्षन्भूरिदक्षिणः ।
व्यरोचत कुरुश्रेष्ठः सात्वतप्रवरं युधि ॥ ६२
अथाब्रवीद्धृष्टमना वासुदेवं धनञ्जयः ।
पश्य वृष्णिप्रवीरेण क्रीडन्तं कुरुपुङ्गवम् ।
महाद्विपेनेव वने मत्तेन हरियूथपम् ॥ ६३
'मामेव च महाबाहो परियान्ति महारथाः ।
यथाशक्ति यतन्तो मां योधयन्तो जनार्दन ॥ ६४
ध्रुवं च योधयाम्येतांश्छिद्रान्वेषणतत्परान् ।
रक्षामि सात्यकिं चैव सौमदत्तिवशं गतम् ॥ ६५
अप्राप्तोऽयं मया कृष्ण हन्तुं भूरिश्रवा रणे ।
अन्येन तु समासक्तं मम नोत्सहते मनः ॥ ६६
अवश्यं च मया कृष्ण वृष्णिवीरस्य रक्षणम् ।
मदर्थं युध्यमानस्य कार्यं प्राणैरपि प्रभो ॥ ६७
अधर्मो वाऽस्तु धर्मो वा मम माधव माधवः ।
परेण निहतो मा स प्राणान्हासीन्महारथः ॥ ६८
सञ्जय उवाच ।
एवमुक्त्वाऽर्जुनः कृष्णं परानाशु शितैः शरैः
छादयामास संक्रुद्धः परे चापि धनञ्जयम् ॥ ६९
एवं स युध्यते वीरः सात्यकिं च मुहुर्मुहुः ।
प्रेक्षते स नरव्याघ्रो भूरिश्रवसमेव च ॥' ७०
तथा तु कृष्यमाणं तं दृष्ट्वा सात्यकिमाहवे ।
वासुदेवस्तदा वाक्यं भूयोऽप्यर्जुनमब्रवीत् ॥ ७१

---

सक्तौ ॥ २९ ॥ भुजाघातो भुजस्फोटः । निग्रहो हस्तधारणम् । प्रग्रहो गलहस्तकः ॥ ४५ ॥ भुजयोक्त्रावबन्धैर्बाहुपाशवेष्टनैः । अवघातनैस्ताडनैः ॥ ४७ ॥ पादशब्दः प्रत्येकं संबध्यते । पादावकर्षैश्चरणावकर्षणैः । पादसंधानैश्चरणच्छन्दितकैः । तोमरैरतिस्फोटनैः । अङ्कुशैरवलुञ्चनैः । पादोदरविबन्धैः पादाभ्यामुदरक्रोडीकरणैः । उद्भ्रमणैः परिवर्तनैः ॥ ४८ ॥ गतैर्गमनैः । प्रत्यागतैरावर्तनैः । आक्षेपैरास्फालनैः । पातनैर्भूमिप्रापणैः । उत्थानैः उत्पतनैः । संप्लुतैः विष्फारानुबन्धैः ॥ ४९ ॥ सममनुरूपम् ॥ ५५ ॥ अभ्याहनदास्फालितवान् ॥ ५६ ॥ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतम् ।
तव शिष्यं महाबाहो धनुष्यनवमं त्वया ॥ ७२
अनित्यो विक्रमः पार्थ यत्र भूरिश्रवा रणे ।
विशेषयति वार्ष्णेयं सात्यकिं सत्यविक्रमम् ॥ ७३
'बहुभिर्महारथैरेष पराक्रान्तैर्युयुत्सुभिः ।
युद्ध्वा भृशं परिश्रान्तः क्षीणायुधपरिच्छदः ॥' ७४
सञ्जय उवाच ।
एवमुक्तो महाराज वासुदेवेन पाण्डवः ।
मनसा पूजयामास भूरिश्रवसमाहवे ॥ ७५
विकर्षन्सात्वतां श्रेष्ठं क्रीडमान इवाहवे ।
स हर्षयति मां भूयः कुरूणां नन्दिवर्धनः ॥ ७६
प्रवरं वृष्णिवीराणां यन्निहन्त्येष सात्यकिम् ।
महाद्विपमिवारण्ये कर्षन्निव हरिर्भृशम् ॥ ७७
एवं तु मनसा राजन्पार्थः संपूज्य कौरवम् ।
'अयुध्यतारिभिर्वीरस्तं च संप्रेक्षते मुहुः ॥' ७८
अथ कोशाद्विनिष्कृष्य खड्गं भूरिश्रवाः शितम् ।
मूर्धजेषु च जग्राह पदा चोरस्यताडयत् ।
'आक्रम्य चाप्यथोद्यम्य सहासिं सभुजो भुजम् ७९
शुशुभे स भुजस्तस्य तपनीयविभूषणः ।
मध्ये रथसमूहस्य इन्द्रध्वज इवोच्छ्रितः ॥ ८०
हाहाकृतमभूत्सर्वं पाण्डवानां महद्बलम् ।
तावकाश्च मुदा युक्ताः सिंहनादं विचुक्रुशुः ॥ ८१
निर्मीलिताक्षास्त्वभवञ्जनाः संग्रामभीरवः ।
तथा भूरिश्रवोग्रस्ते सात्वते नष्टविक्रमे ॥ ८२
वासुदेवं महाबाहुरर्जुनः प्रत्यभाषत ।
सैन्धवे सक्तदृष्टित्वान्न तं पश्यामि माधवम् ॥ ८३
एष त्वसुकरं कर्म यादवार्थे करोम्यहम् ।
मम शिष्यो ममार्थाय युध्यते मम शत्रुभिः ।
तं कृष्ण मोक्षयिष्यामि दावात्सिंहशिशुं यथा' ८४
सञ्जय उवाच ।
इत्युक्त्वा वचनं कुर्वन्वासुदेवस्य पाण्डवः ।
ततः क्षुरप्रं निशितं गाण्डीवे समयोजयत् ॥ ८५
पार्थबाहुविसृष्टः स महोल्केव नभश्च्युता ।
सखड्गं यज्ञशीलस्य बाहुं दक्षिणमच्छिनत् ॥ ८६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

## त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

अर्जुनच्छिन्नभुजस्य भूरिश्रवसः तदुपालम्भपूर्वकं प्रायोपवेशः ॥ १ ॥ सात्यकिना भूरिश्रवश्शिरश्छेदः ॥ २ ॥

सञ्जय उवाच ।
स बाहुर्न्यपतद्भूमौ सखड्गः सशुभाङ्गदः ।
आदधज्जीवलोकस्य दुःखमद्भुतमुत्तमः ।
'यत्रमुक्तो महेन्द्रस्य ध्वजो वृत्तोत्सवो यथा ॥' १
प्रहरिष्यन्हृतो बाहुरदृश्येन किरीटिना ।
वेगेन न्यपतद्भूमौ पञ्चास्य इव पन्नगः ॥ २
स मोघं कृतमात्मानं दृष्ट्वा पार्थेन कौरवः ।
उत्सृज्य सात्यकिं क्रोधाद्गर्हयामास पाण्डवम् ॥ ३
'स विबाहुर्महाराज एकपक्ष इवाण्डजः ।
एकचक्रो रथो यद्वद्धरणीमास्थितो नृपः ।
उवाच पाण्डवं चैव सर्वक्षत्रस्य पश्यतः ॥ ४
भूरिश्रवा उवाच ।
नृशंसं बत कौन्तेय कर्मेदं कृतवानसि ।
अपश्यतो विषक्तस्य यन्मे त्वं बाहुमच्छिनः ॥ ५
येषु येषु नरः पार्थ वर्तते सुसमाहितः ।
आशु तच्छीलतामेति तदिदं दृश्यते त्वयि ॥ ६
किं नु वक्ष्यसि राजानं धर्मपुत्रं युधिष्ठिरम् ।
किं कुर्वाणो मया सङ्ख्ये हतो भूरिश्रवा इति ॥ ७
इदमिन्द्रेण ते साक्षादुपदिष्टं महात्मना ।
अस्त्रं रुद्रेण वा पार्थ द्रोणेनाथ कृपेण वा ॥ ८
ननु नामास्त्रधर्मज्ञस्त्वं लोकेऽभ्यधिकः परैः ।
सोऽयुध्यमानस्य कथं रणे प्रहृतवानसि ॥ ९

विषक्तस्यान्यासक्तस्य ॥ ५ ॥

येषुयेषु सत्स्वसत्सु वा ॥ ६ ॥

न प्रमत्ताय भीताय विरथाय प्रयाचते ।
व्यसने वर्तमानाय प्रहरन्ति मनीषिणः ॥ १०
इदं तु नीचाचरितमसत्पुरुषसेवितम् ।
कथमाचरितं पार्थ पापकर्म सुदुष्करम् ॥ ११
आर्येण सुकरं त्वाहुरार्यकर्म धनंजय ।
अनार्यकर्म त्वार्येण सुदुष्करतमं भुवि ॥ १२
कथं हि राजवंश्यस्त्वं कौरवेयो विशेषतः ।
क्षत्रधर्मादपक्रान्तः सुवृत्तश्चरितव्रतः ॥ १३
'अल्पस्तवापराधोऽत्र न त्वां तात विगर्हये ।
वार्ष्णेयापशदं प्राप्य क्षुद्रं कृतमिदं त्वया ॥' १४
इदं तु यदतिक्षुद्रं वार्ष्णेयार्थे कृतं त्वया ।
वासुदेवमतं नूनं नैतत्त्वय्युपपद्यते ॥ १५
को हि नाम प्रमत्ताय परेण सह युध्यते ।
ईदृशं व्यसनं दद्याद्यो न कृष्णसखो भवेत् ॥ १६
व्रात्याः संक्लिष्टकर्माणः प्रकृत्यैव च गर्हिताः ।
वृष्ण्यन्धकाः कथं पार्थ प्रमाणं भवता कृताः ॥ १७
सञ्जय उवाच ।
एवमुक्तो रणे पार्थो भूरिश्रवसमब्रवीत् ।
व्यक्तं हि जीर्यमाणोऽपि बुद्धिं जरयते नरः ।
अनर्थकमिदं सर्वं यत्त्वया व्याहृतं प्रभो ॥ १८
जानन्नेव हृषीकेशं गर्हसे मां च पाण्डवम् ।
संग्रामाणां हि धर्मज्ञः सर्वशास्त्रार्थपारगः ॥ १९
न चाधर्ममहं कुर्यां जानंश्चैव हि मुह्यसे ॥ २०
युध्यन्ते क्षत्रियाः शत्रून्स्वैःस्वैः परिवृता नराः ।
भ्रातृभिः पितृभिः पुत्रैस्तथा संबन्धिबान्धवैः ।
वयस्यैरथ मित्रैश्च स्वबाहुबलमाश्रिताः ॥ २१
स कथं सात्यकिं शिष्यं सुखसंबन्धिमेव च ।
अस्मदर्थे च युध्यन्तं त्यक्त्वा प्राणान्सुदुस्त्यजान् ॥
मम बाहुं रणे राजन्दक्षिणं युद्धदुर्मदम् ।
*त्वया निकृष्यमाणं च दृष्टवानसि निष्क्रियम् २३
न च त्वं रक्षितव्यो हि एको रणगतेन हि ।
यो यस्य युध्यतेऽर्थाय स संरक्ष्यो नराधिप ।
तै रक्ष्यमाणैः स नृपो रक्षितव्यो महामृधे ॥ २४
यद्यहं सात्यकिं दृष्ट्वा तूष्णीमासिष्य आहवे ।
ततस्तेन वियोगश्च प्राप्यं नरकमेव च ॥ २५
रक्षितव्यो मया यस्मात्तस्माल्लब्धो मया स च ।
यशश्चैव स्वपक्षेभ्यः फलं मित्रस्य रक्षणात् ॥ २६
यच्च मां गर्हसे राजन्कृष्णेन सह सङ्गतम् ।
कस्तेन सङ्गमं नेच्छेत्तत्र ते बुद्धिविभ्रमः ॥ २७
आबद्धकवचस्येह रथमारुह्य तिष्ठतः
सर्वायुधैरुपेतस्य प्रतियोद्धृप्रतीक्षिणः ॥ २८
अस्मिन्रथगजानीके हयपत्तिसमाकुले ।
सिंहनादोद्धतरवे गम्भीरे सैन्यसागरे ॥ २९
स्वैश्चापि समुपेतस्य विक्रान्तस्य तथा रणे ।
सात्यकेन कथं योग्यः संग्रामस्ते भविष्यति ॥ ३०
बहुभिः सह सङ्गम्य निर्जित्य च महारथान् ।
श्रान्तश्च श्रान्तवाहश्च क्षीणसर्वायुधस्त्वया ।
समेतः सात्यकिः सङ्ख्ये निर्जितश्च महारथः ॥ ३१
ईदृशं सात्यकिं सङ्ख्ये निर्जित्य च महारथम् ।

दक्षिणं बाहुं तत्स्थानीयम् ॥ २३ ॥

* एतदादि ३५ त्तमश्लोकपर्यन्तं विद्यमानानां श्लोकानां स्थाने अधोलिखिताः श्लोकाः झ. पुस्तके सन्ति.

नचात्मा रक्षितव्यो वै राजन्रणगतेन हि ।
यो यस्य युज्यतेऽर्थेषु स वै रक्ष्यो नराधिप ॥ १
तै रक्ष्यमाणैः स नृपो रक्षितव्यो महामृधे ।
यद्यहं सात्यकिं पश्ये वध्यमानं महारणे ॥
ततस्तस्य वियोगेन पापं मेऽनर्थतो भवेत् ।
रक्षितश्च मया यस्मात्तस्मात्क्रुध्यसि किं मयि
यच्च मे गर्हसे राजन्नन्येन सह संगतम् ।
अहं त्वया विनिकृतस्तत्र मे बुद्धिविभ्रमः ॥
कवचं धुन्वतस्तुभ्यं रथं चारोहतः स्वयम् ।
धनुर्ज्यां कर्षतश्चैव युध्यतः सह शत्रुभिः ॥
एवं रथगजाकीर्णे हयपत्तिसमाकुले ।
सिंहनादोद्धतरवे गम्भीरे सैन्यसागरे ॥
स्वैः परैश्च समेतेभ्यः सात्वतेन च संगमे ।
एकस्यैकेन हि कथं संग्रामः संभविष्यति ॥ ७
बहुभिः सह संगम्य निर्जित्य च महारथान् ।
श्रान्तश्च श्रान्तवाहश्च विमनाः शस्त्रपीडितः ॥ ८
ईदृशं सात्यकिं संख्ये निर्जित्य च महारथम् ।
अधिकत्वं विजानीषे स्ववीर्यवशमागतम्
यदिच्छसि शिरश्चास्य असिना हन्तुमाहवे ।
तथा कृच्छ्रगतं चैव सात्यकिं कः क्षमिष्यति ॥ १०
त्वं वै विगर्हयात्मानमात्मानं यो न रक्षसि ।
कथं करिष्यसे वीर यो वा त्वां संश्रयेज्जनः ॥ ११

अधिकत्वं विजानीषे स्ववीर्यवशमागतम् ॥ ३२
इच्छसि त्वं शिरस्तस्य असिना हर्तुमाहवे ।
तथा कृच्छ्रगतं दृष्ट्वा सात्यकिं कः क्षमिष्यति ।
एकस्यैकेन हि कथं संग्रामः संभविष्यति ॥ ३३
त्वं तु गर्हय चात्मानं स्वधर्मं यो न रक्षसि ।
कथं रक्षिष्यसे वीर ये वै त्वां संश्रिता जनाः ॥ ३४
आत्तशस्त्रस्य हि रणे वृष्णिपुत्रं जिघांसतः ।
छिन्नवान्यदहं बाहुं नैतल्लोकविगर्हितम् ॥ ३५
न्यस्तशस्त्रस्य हि पुनर्विकलस्य विवर्मणः ।
अभिमन्योर्वधं तात धार्मिकः को नु पूजयेत् ॥ ३६
सञ्जय उवाच ।
एवमुक्तो महाबाहुर्यूपकेतुर्महायशाः ।
युयुधानं समुत्सृज्य रणे प्रायमुपाविशत् ॥ ३७
शरानास्तीर्य सव्येन पाणिना पुण्यलक्षणः ।
यियासुर्ब्रह्मलोकाय प्राणान्प्राणेष्वथाजुहोत् ॥ ३८
सूर्ये चक्षुः समाधाय प्रसन्नं सलिले मनः ।
ध्यायन्महोपनिषदं योगयुक्तोऽभवन्मुनिः ॥ ३९
ततस्ते सर्वसेनासु जनाः कृष्णधनंजयौ ।
गर्हयामासुरप्येतौ शशंसुर्भूरिदक्षिणम् ॥ ४०
निन्द्यमानौ तथा कृष्णौ नोचतुः किंचिदप्रियम् ।
ततः प्रशस्यमानश्च नाहृष्यद्यूपकेतनः ॥ ४१
तांस्तथावादिनो राजन्पुत्रांस्तव धनञ्जयः ।
अमृष्यमाणो मनसा तेषां तस्य च भाषितम् ॥ ४२
असंक्रुद्धमना वाचः स्मारयन्निव भारत ।
उवाच पाण्डुतनयः साक्षेपमिव फल्गुनः ॥ ४३
मम सर्वेऽपि राजानो जानन्त्येतन्महाव्रतम् ।
न शक्यो मामको हन्तुं यो मे स्याद्बाणगोचरे ॥ ४४
यूपकेतुं समीक्ष्यैतन्न मां गर्हितुमर्हथ ।
न हि धर्ममविज्ञाय युक्तं गर्हयितुं परम् ॥ ४५
न्यस्तशस्त्रस्य बालस्य विरथस्य विवर्मणः ।
'नाभिमन्योर्वधं यूयं गर्हयध्वं कुतस्तदा ॥ ४६
दुर्योधनस्य क्षुद्रस्य अप्रमाणे च तिष्ठतः ।
सोमदत्तेरयं साधुः सर्वसाहाय्यकारिणः ॥ ४७
अस्मदीया मया रक्ष्याः प्राणबाध उपस्थिते ।
ये मे प्रत्यक्षतो वीरा हन्येरन्निति मे मतिः ॥ ४८
सात्यकश्च वशं नीतः कौरवेण महात्मना ।
ततो मयैतच्चरितं प्रतिज्ञारक्षणं प्रति ॥ ४९
सञ्जय उवाच ।
पुनश्च कृपयाऽऽविष्टो बहु तत्तद्विचिन्तयन् ।
उवाच चैनं कौरव्यमर्जुनः शोकपीडितः ॥ ५०
धिगस्तु क्षत्रधर्मं तु यत्र त्वं पुरुषेश्वरः ।
अवस्थामीदृशीं प्राप्तः शरण्यः शरणप्रदः ॥ ५१
नातिभारः कृतान्तस्य विद्यते कुरुनन्दन ।
यत्र त्वं पुरुषव्याघ्रः प्राप्तः पापामिमां दशाम् ॥ ५२
नात्मनः सुकृतस्यास्य फलं वै नृपसत्तम ।
यत्र त्वं कुरुशार्दूल प्राप्तः पापामिमां दशाम् ॥ ५३
रौरवं नरकं भीमं गमिष्यति सुयोधनः ।
यत्कृते नरशार्दूलः प्राप्तः पापामिमां दशाम् ॥ ५४
को हि नाम पुमाँल्लोके मादृशः पुरुषोत्तम ।
प्रहरेत्त्वद्विधे त्वद्य प्रतिज्ञा यदि नो भवेत् ॥' ५५
एवमुक्तः स पार्थेन शिरसा भूमिमस्पृशत् ।
पाणिना चैव सव्येन प्राहिणोदस्य दक्षिणम् ॥ ५६
एतत्पार्थस्य तु वचस्ततः श्रुत्वा महाद्युतिः ।
यूपकेतुर्महाराज तूष्णीमासीदवाङ्मुखः ॥ ५७
अर्जुन उवाच ।
या प्रीतिर्धर्मराजे मे भीमे च बलिनां वरे ।
नकुले सहदेवे च सा मे त्वयि शलाग्रज ॥ ५८
मया त्वं समनुज्ञातः कृष्णेन च महात्मना ।
गच्छ पुण्यकृतां लोकाञ्छिबिरौशीनरो यथा ॥ ५९
वासुदेव उवाच ।
ये लोका मम विमलाः सकृद्विभाता
ब्रह्माद्यैः सुरवृषभैरपीष्यमाणाः ।
तान्क्षिप्रं व्रज सततामिहोत्रयाजि-
न्मत्तुल्यो भव गरुडोत्तमाङ्गयानः ॥ ६०

प्रायं आमरणानशनं प्रारब्धवान् ॥ ३७ ॥ प्राणानसून् प्राणेषु वायुषु अजुहोदाहितवान् ॥ ३८ ॥ प्रसन्नमकल्मषम् ॥ ३९ ॥ स कथं च वधं नीतः इति ङ. पाठः । सः सात्यकिः वधमुद्दिश्येति शेषः ॥ ४९ ॥ नातिहारः कृतान्तस्येति ठ. पाठः । अतिहारः परिहारः ॥ ५२ ॥ दक्षिणं कृत्तमात्मनः पाणिं अस्यार्जुनस्य समीपे प्राहिणोत् प्रहितवान् ॥ ५६ ॥ ये लोका इति श्लोकः झ. घ. ञ. पुस्तकेष्वेवास्ति । सकृद्विभाताः सहप्रकाशाः । गरुडस्योत्तमाङ्गेन पृष्ठेन यानं यस्य ॥ ६० ॥

सञ्जय उवाच ।
'धनंजये ब्रुवत्येवं घृणया च परिप्लुते ।
अवाङ्मुखा बभूवुश्च सैनिकाः सर्व एव ते ॥ ६१
मुहूर्तादिव विश्रम्य सात्यकिः क्रोधमूर्च्छितः ।
अमर्षवशमापन्नः सौमदत्तिनिराकृतः ॥' ६२
उत्थितः स तु शैनेयो विमुक्तः सौमदत्तिना ।
खड्गमादाय चिच्छित्सुः शिरस्तस्य महात्मनः ६३
निहतं पाण्डुपुत्रेण प्रसक्तं भूरिदक्षिणम् ।
इयेष सात्यकिर्हन्तुं शलाग्रजमकल्मषम् ॥ ६४
निकृत्तभुजमासीनं छिन्नहस्तमिव द्विपम् ।
क्रोशतां सर्वसैन्यानां निन्द्यमानः सुदुर्मनाः ॥६५
वार्यमाणः स कृष्णेन पार्थेन च महात्मना ।
भीमेन चक्ररक्षाभ्यामश्वत्थाम्ना कृपेण च ॥ ६६
कर्णेन वृषसेनेन सैन्धवेन तथैव च ।
विक्रोशतां च सैन्यानामवधीत्तं धृतव्रतम् ॥ ६७
प्रायोपविष्टस्य रणे पार्थेन च्छिन्नबाहुनः ।
सात्यकिः कौरवेयस्य खड्गेनापाहरच्छिरः ॥ ६८
नाभ्यनन्दन्त तं सैन्याः सात्यकिं तेन कर्मणा ।
अर्जुनेन हतं पूर्वं यज्जघान कुरूद्वहम् ॥ ६९
सहस्राक्षसमं चैव सिद्धचारणमानवाः ।
भूरिश्रवसमालोक्य युद्धे प्रायगतं हतम् ॥ ७०
अपूजयन्त तं देवा विस्मितास्तेऽस्य कर्मभिः ।
पक्षवादांश्च सुबहून्प्रावदंस्तव सैनिकाः ॥ ७१
न वार्ष्णेयस्यापराधो भवितव्यं हि तत्तथा ।
तस्मान्मन्युर्न वः कार्यः क्रोधो दुःखतरो नृणाम् ७२
हन्तव्यश्चैष वीरेण नात्र कार्या विचारणा ।
विहितो ह्यस्य धात्रैव मृत्युः सात्यकिराहवे ॥ ७३
'मर्तव्यमेव सर्वेण चरमं पूर्वमेव वा ।
मन्यध्वं मृत इत्येष माभूद्वो बुद्धिलाघवम् ॥७४
तस्मिन्हते महाबाहौ यूपकेतौ महात्मनि ।
धिगेनमिति चाक्रन्दन्क्षत्रियाः क्रोधमूर्च्छिताः ॥७५
अन्ये न युक्तमित्येव भवितव्यं तथेति च ।
केचिदासन्विमनसः केचिद्दुःखसमन्विताः ॥'७६

सात्यकिरुवाच ।
न हन्तव्यो न हन्तव्य इति मन्दाः प्रभाषत ।
धर्मवादैरधर्मिष्ठा धर्मकञ्चुकमास्थिताः ॥ ७७
यदा बालः सुभद्रायाः सुतः शस्त्रविनाकृतः ।
युष्माभिर्निहतो युद्धे तदा धर्मः क वो गतः ७८
मया त्वेतत्प्रतिज्ञातं क्षेपे कस्मिंश्चिदेव हि ।
'श्रुत्वा तत्सर्वभावेन गर्हयध्वं न चार्जुनम् ।
शृणुध्वं सर्वमेवेह श्रुत्वा गर्हथ मानवाः ॥' ७९
यो मां निष्पिष्य संग्रामे जीवन्हन्यात्पदा रुषा ।
स मे वध्यो भवेच्छत्रुर्यद्यपि स्यान्मुनिव्रतः ॥८०
चेष्टमानं प्रतीघाते सभुजं मां सचक्षुषः ।
मन्यध्वं मृत इत्येवमेतद्वो बुद्धिलाघवम् ॥ ८१
युक्तो ह्यस्य प्रतीघातः कृतो मे कुरुपुङ्गवाः ॥८२
यत्तु पार्थेन मां दृष्ट्वा प्रतिज्ञामभिरक्षता ।
सखड्गोऽस्य हृतो बाहुरेतेनैवास्मि वञ्चितः ॥ ८३
भवितव्यं हि यद्भावि दैवं चेष्टयते हि तत् ।
सोयं हतो विमर्देऽस्मिन्किमत्राधर्मचेष्टितम् ॥ ८४
अपि चायं पुरा गीतः श्लोको वाल्मीकिना भुवि ।
न हन्तव्याः स्त्रिय इति यद्ब्रवीषि प्लवंगम ॥ ८५
सर्वकालं मनुष्येण व्यवसायवता सदा ।
पीडाकरममित्राणां यत्स्यात्कर्तव्यमेव तत् ।
अनुष्ठितं मया तच्च कस्माद्गर्हथ मूढवत् ॥ ८६
सञ्जय उवाच ।
एवमुक्ते महाराज सर्वे कौरवपुङ्गवाः ।
न स्म किंचिदभाषन्त मनसा समपूजयन् ॥ ८७
मन्त्राभिपूतस्य महाध्वरेषु
यशस्विनो भूरिसहस्रदस्य ।
मुनेरिवारण्यगतस्य तस्य
न तत्र कश्चिद्वधमभ्यनन्दत् ॥ ८८
सुनीलकेशं वरदस्य तस्य
शूरस्य पारावतलोहिताक्षम् ।
अश्वस्य मेध्यस्य शिरो निकृत्तं
न्यस्तं हविर्धानमिवान्तरेण ॥ ८९

प्रसक्तमन्यासक्तम् ॥ ६४ ॥ क्षेपे निन्दायाम् । जीवन्निति द्वितीयार्थे प्रथमा ॥ ७९ ॥ न हन्तव्या इत्यर्धं घ. ङ. झ. ञ. पाठेष्वेवास्ति ॥ ८५ ॥ वरदस्यार्थितार्थप्रदातुः । हविर्धानमन्तरेण हविर्गृहस्य मध्ये ॥८९॥ त्रिचत्वारिंशदधिकशततमोऽध्यायः॥

स तेजसा शस्त्रकृतेन पूतो
महाहवे देहवरं विसृज्य ।
आक्रामदूर्ध्वं वरदो वरार्हो
व्याक्वृत्य धर्मेण परेण रोदसी ॥ ९०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

## चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

सञ्जयेन धृतराष्ट्रंप्रति सात्यकेः भूरिश्रवसा पराभवकारणकथनम् ॥ १ ॥ तथा यादवानां प्रशंसनम् ॥ २ ॥

धृतराष्ट्र उवाच ।
अजितो द्रोणराधेयविकर्णकृतवर्मभिः ।
'यश्चैवोत्सहते जेतुं समस्तं मामकं बलम् ।'
तीर्णः सैन्यार्णवं वीरः प्रतिश्रुत्य युधिष्ठिर ॥ १
स कथं कौरवेयेण समरेष्वनिवारितः ।
निगृह्य भूरिश्रवसा बलाद्भुवि निपातितः ॥ २
सञ्जय उवाच ।
शृणु राजन्निहोत्पत्तिं शैनेयस्य यथा पुरा ।
यथा च भूरिश्रवसो यत्र ते संशयो नृप ॥ ३
'ब्रह्मणस्त्वभवत्पुत्रो मानसोऽत्रिर्महातपाः ।'
अत्रेः पुत्रोऽभवत्सोमः सोमस्य तु बुधः स्मृतः ॥ ४
बुधस्यैलो महाबाहुः पुत्र आसीत्पुरूरवाः ।
पुरूरवस आयुस्तु आयुषो नहुषः सुतः ॥ ५
नहुषस्य ययातिस्तु राजा देवर्षिसंमतः ।
ययातेर्देवयान्यां तु यदुर्ज्येष्ठोऽभवत्सुतः ॥ ६
यदोरभूदन्ववाये आजमीढ इति स्मृतः ।
यादवस्तस्य तु सुतः शूरस्त्रैलोक्यसंमतः ॥ ७
शूरस्य शौरिर्नृवरो वसुदेवो महायशाः ।
धनुष्यनवरः शूरः कार्तवीर्यसमो युधि ।
तद्वीर्यश्चापि तत्रैव कुले शिनिरभून्नृप ॥
एतस्मिन्नेव काले तु देवकस्य महात्मनः ।
ः स्वयंवरे राजन्सर्वक्षत्रसमागमे ॥ ९
तत्र वै देवकीं देवीं वसुदेवार्थमाशु वै ।
निर्जित्य पार्थिवान्सर्वान्रथमारोपयच्छिनिः ॥ १०
तां दृष्ट्वा देवकीं शूरो रथस्थां पुरुषर्षभः ।
नामृष्यत महातेजाः सोमदत्तः शिनेर्नृप ॥ ११
तयोर्युद्धमभूद्राजन्दिनार्धं चित्रमद्भुतम् ।
बाहुयुद्धं सुबलिनोः प्रसक्तं पुरुषर्षभः ॥ १२
शिनिना सोमदत्तस्तु प्रसह्य भुवि पातितः ।
असिमुद्यम्य केशेषु प्रगृह्य च पदा हतः ॥ १३
मध्ये राजसहस्राणां प्रेक्षकाणां समन्ततः ।
कृपया च पुनस्तेन स जीवेति विसर्जितः ॥ १४
तदवस्थः कृतस्तेन सोमदत्तोऽथ मारिष ।
प्रासादयन्महादेवममर्षवशमास्थितः ॥ १५
तस्य तुष्टो महादेवो वराणां वरदः प्रभुः ।
वरेण च्छन्दयामास स तु वव्रे वरं नृपः ॥ १६
पुत्रमिच्छामि भगवन्यो निपात्य शिनेः सुतम् ।
मध्ये राजसहस्राणां पदा हन्याच्च संयुगे ॥ १७
तस्य तद्वचनं श्रुत्वा सोमदत्तस्य पार्थिव ।
एवमस्त्विति तत्रोक्त्वा स देवोऽन्तरधीयत ।
स तेन वरदानेन लब्धवान्भूरिदक्षिणम् ॥ १८
अपातयच्च समरे सौमदत्तिः शिनेः सुतम् ।
पश्यतां सर्वसैन्यानां पदा चैनमताडयत् ॥ १९
एतत्ते कथितं राजन्यन्मां त्वं परिपृच्छसि ।
न हि शक्यो रणे जेतुं सात्वतो मनुजर्षभैः ॥ २०
लब्धलक्ष्याश्च संग्रामे बहुशश्चित्रयोधिनः ।
देवदानवगन्धर्वान्विजेतारो ह्यविस्मिताः ।
स्ववीर्यविजये युक्ता नैते परपरिग्रहाः ॥ २१
न तुल्यं वृष्णिभिरिह दृश्यते किंचन प्रभो ।
भूतं भव्यं भविष्यच्च बलेन भरतर्षभ ॥ २२
न ज्ञातिमवमन्यन्ते वृद्धानां शासने रताः ॥ २३
न देवासुरगन्धर्वा न यक्षोरगराक्षसाः ।

परपग्रहाः रिपराधीनाः ॥ २१ ॥

जेतारो वृष्णिवीराणां किं पुनर्मानवा रणे ॥ २४
ब्रह्मद्रव्ये गुरुद्रव्ये ज्ञातिस्वे चाप्यहिंसकाः ।
एतेषां रक्षितारश्च ये स्युः कस्यांचिदापदि ॥ २५
अर्थवन्तो न चोत्सिक्ता ब्रह्मण्याः सत्यवादिनः ।
समर्थान्नावमन्यन्ते दीनानभ्युद्धरन्ति च ॥ २६
नित्यं देवपरा दान्तास्त्रातारश्चाविकत्थनाः ।
तेन वृष्णिप्रवीराणां चक्रं न प्रतिहन्यते ॥ २७
अपि मेरुं वहेत्कश्चित्तरेद्वा मकरालयम् ।
न तु वृष्णिप्रवीराणां समेत्यान्तं व्रजेन्नृप ॥ २८
एतत्ते सर्वमाख्यातं यत्र ते संशयः प्रभो ।
कुरुराज नरश्रेष्ठ तव व्यपनयो महान् ॥ २९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

कृष्णार्जुनयोः संवादः कर्णसात्यक्योर्युद्धं च ॥ १ ॥

धृतराष्ट्र उवाच
तदवस्थे हते तस्मिन्भूरिश्रवसि कौरवे ।
यथा भूयोऽभवद्युद्धं तन्ममाचक्ष्व सञ्जय ॥ १
सञ्जय उवाच
भूरिश्रवसि संक्रान्ते परलोकाय भारत
वासुदेवं महाबाहुरर्जुनः समचूचुदत् ॥
अर्जुन उवाच ।
चोदयाश्वान्भृशं कृष्ण यतो राजा जयद्रथः
[श्रूयते पुण्डरीकाक्ष त्रिषु धर्मेषु वर्तते ।]
प्रतिज्ञां सफलां चापि कर्तुमर्हसि मेऽनघ ॥ ३
अस्तमेति महाबाहो त्वरमाणो दिवाकरः ॥ ४
एतद्धि पुरुषव्याघ्र महदभ्युद्यतं मया ।
कार्यं संरक्ष्यते चैष कुरुसेनामहारथैः ॥ ५
यथा नाभ्येति सूर्योऽस्तं यथा सत्यं भवेद्वचः ।
चोदयाश्वांस्तथा कृष्ण यथा हन्यां जयद्रथम् ॥ ६
'ततः कृष्णो महाबाहुरश्वान्रजतसंनिभान् ।
हयज्ञश्चोदयामास जयद्रथवधं प्रति ॥ ७
तं प्रयान्तममोघेषुमुत्पतद्भिरिवाशुगैः ।
त्वरमाणा महाराज सेनामुख्याः समाद्रवन् ॥ ८
दुर्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट् ।
अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः ॥ ९
समासाद्य च बीभत्सुः सैन्धवं समुपस्थितम् ।
नेत्राभ्यां क्रोधदीप्ताभ्यां संप्रैक्षन्निर्दहन्निव ॥' १०
यथाग्निरिन्धनेद्धो वै क्रोधेन्धनसमीरितः ।
सैन्धवस्य मुखं त्यक्त्वा कर्णः सात्वतमभ्ययात् ११
*उपायान्तं तु राधेयं दृष्ट्वा पार्थो महारथः
प्रहसन्देवकीपुत्रमिदं वचनमब्रवीत् ॥ १२
एष प्रयात्याधिरथिः सात्यकेः स्यन्दनं प्रति ।
न मृष्यति हतं नूनं भूरिश्रवसमाहवे ॥ १३
यत्र यात्येष तत्र त्वं चोदयाश्वाञ्जनार्दन ।
न सौमदत्तिपदवीं गमयेत्सात्यकिं वृषः ॥ १४
सञ्जय उवाच ।
एवमुक्तो महाबाहुः केशवः सव्यसाचिना ।
प्रत्युवाच महातेजाः कालयुक्तमिदं वचः ॥ १५

चक्रं प्रतापः ॥ २७॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः१४४

हेपुण्डरीकाक्ष स जयद्रथस्त्रिषु धर्मेषु वर्तते इति श्रूयते के पुनस्ते त्रयो धर्माः । अत्रोच्यते । यदि युध्यमानो हन्यते तदा तूर्णं स्वर्गप्राप्तिरेव तस्य धर्मः । अथ पलायमानो हन्यते तदा नरकप्राप्तिरेव तस्य धर्मः । अथ मद्भयात्स्वदेशं गच्छति तदा यशःशरीरनाश एव तस्य धर्मः । यावदसौ युद्धाभिमुखः प्रथमधर्मे तिष्ठति तावदेव हन्तुमुचितः अतः शीघ्रमश्वांश्चोदयेति । कुण्डलितोऽयं श्लोकार्धः झ. पुस्तक एव दृश्यते ॥ ३॥ हयज्ञः हयहृदयज्ञः ॥ ७ ॥ आशुगैः मारुतैः ॥ ८ ॥ वृषः कर्णः ॥ १४ ॥

* इत आरभ्य उत्तराध्यायस्थ-मन्दरश्मिः सहस्रांशुरस्तंगिरिमुपाद्रवत् इति २५ तमश्लोकपर्यन्तं विद्यमानाः श्लोकाः झ. पुस्तके जयद्रथवधादनन्तरं वर्तन्ते ।

अलमेष महाबाहुः कर्णायैकोऽपि पाण्डव ।
किं पुनर्द्रौपदेयाभ्यां सहितः सात्वतर्षभः ॥ १६
न च तावत्क्षमः पार्थ तव कर्णेन संगरः ।
प्रज्वलन्ती महोल्केव तिष्ठत्यस्मिन्हि वासवी ।
तदर्थं पूज्यमानैषा रक्ष्यते परवीरहन् ॥ १७
'न कर्णं प्राकृतं मन्ये तेन योद्धुं न सांप्रतम् ।
यः कर्णो बलवानेष शक्तोऽस्माञ्जेतुमोजसा ॥१८
कर्णस्यैष महान्दोषो यद्दूयेत पदेपदे ।
प्रमादाच्च घृणित्वाच्च तेन शोचति मे मनः ॥'१९
अतः कर्णः प्रयात्वत्र सात्वतस्य यथा तथा ।
अहं ज्ञास्यामि कौन्तेय कालमस्य दुरात्मनः ॥ २०
यत्रैनं विशिखैस्तीक्ष्णैः पातयिष्यसि भूतले ।
तदा गन्तासि पार्थ त्वं तेन योद्धुं दुरात्मना ॥ २१
धृतराष्ट्र उवाच ।
योऽसौ कर्णेन वीरस्य वार्ष्णेयस्य समागमः ।
हते तु भूरिश्रवसि तद्युद्धमभवत्कथम् ॥ २२
सात्यकिश्चापि विरथः कं समारूढवान्रथम् ।
चक्ररक्षौ च पाञ्चाल्यौ तन्ममाचक्ष्व सञ्जय ॥ २३
सञ्जय उवाच ।
हन्त ते कथयिष्यामि यथावृत्तं महारणे ।
पश्यतां सर्वसैन्यानां केशवार्जुनयोरपि ।
शुश्रूषस्व स्थिरो भूत्वा दुराचरितमात्मनः ॥ २४
पूर्वमेव हि कृष्णस्य मनोगतमिदं प्रभो ।
विजेतव्यो यथा वीरः सात्यकिः सौमदत्तिना ॥२५
अतीतानागते राजन्स हि वेत्ति जनार्दनः ।
ततः सूतं समाहूय दारुकं संदिदेश ह ।
रथो मे युज्यतां कल्यमिति राजन्महाबलः ॥ २६
न हि देवा न गन्धर्वा न यक्षोरगराक्षसाः ।
मानवा वाऽपि जेतारः कृष्णयोः सन्ति केचन २७
पितामहपुरोगाश्च देवाः सिद्धाश्च तं विदुः ।
तयोः प्रभावमतुलं शृणु युद्धं तु तत्तथा ॥ २८
सात्यकिं विरथं दृष्ट्वा कर्णं चाभ्युद्यतं रणे ।
दध्मौ शङ्खं महानादमार्षभेणाथ माधवः ॥ २९
दारुकोऽवेत्य संदेशं श्रुत्वा शङ्खस्य च स्वनम् ।
रथमन्वानयत्तस्मै सुपर्णोच्छ्रितकेतनम् ॥ ३०
स केशवस्यानुमते रथं दारुकसंयुतम् ।
आरुरोह शिनेः पौत्रो ज्वलनादित्यसन्निभम् ॥३१
कामगैः शैब्यसुग्रीवमेघपुष्पबलाहकैः ।
हयोदग्रैर्महावेगैर्हेमभाण्डविभूषितैः ॥ ३२
युक्तं समारुह्य च तं विमानप्रतिमं रथम् ।
अभ्यद्रवत राधेयं प्रवपन्सायकान्बहून् ॥ ३३
चक्ररक्षावपि तदा युधामन्यूत्तमौजसौ ।
धनंजयरथं हित्वा राधेयं प्रत्युदीयतुः ॥ ३४
राधेयोऽपि महाराज शरवर्षं समुत्सृजन् ।
अभ्यद्रवत्सुसंक्रुद्धो रणे शैनेयमच्युतम् ॥ ३५
नैव दैवं न गान्धर्वं नासुरं न च राक्षसम् ।
तादृशं भुवि नो युद्धं दिवि वा श्रुतमित्युत ।
उपारमत तत्सैन्यं सरथाश्वनरद्विपम् ॥ ३६
तयोर्दृष्ट्वा महाराज कर्म संमूढचेतसः ।
सर्वे च समपश्यन्त तद्युद्धमतिमानुषम् ॥ ३७
तयोर्नृवरयो राजन्सारथ्यं दारुकस्य च ॥ ३८
गतप्रत्यागतावृत्तैर्मण्डलैः सन्निवर्तनैः ।
सारथेस्तु रथस्थस्य काश्यपेयस्य विस्मिताः ॥३९
नभस्तलगताश्चैव देवगन्धर्वदानवाः ।
अतीवावहिता द्रष्टुं कर्णशैनेययो रणम् ॥ ४०
मित्रार्थे तौ पराक्रान्तौ शुष्मिणौ स्पर्धिनौ रणे ४१
कर्णश्चामरसंकाशो युयुधानश्च सात्यकिः ।
अन्योन्यं तौ महाराज शरवर्षैरवर्षताम् ॥ ४२
प्रममाथ शिनेः पौत्रं कर्णः सायकवृष्टिभिः ।
अमृष्यमाणो निधनं कौरव्यजलसन्धयोः ॥ ४३
कर्णः शोकसमाविष्टो महोरग इव श्वसन् ।
स शैनेयं रणे क्रुद्धः प्रदहन्निव चक्षुषा ।
अभ्यधावत वेगेन पुनःपुनररिंदम ॥ ४४
तं तु सक्रोधमालोक्य सात्यकिः प्रत्ययुध्यत ।
महता शरवर्षेण गजं प्रतिगजो यथा ॥ ४५
तौ समेतौ नरव्याघ्रौ व्याघ्राविव तरस्विनौ ।

---

वासवी शक्तिरिति शेषः ॥ १७ ॥ यथा प्रयाति तथा प्रयात्विति योज्यम् । ज्ञास्यामि ज्ञापयिष्यामि ॥ २० ॥ यत्र काले ॥ २१ ॥ पूर्वं पूर्वेद्युः ॥ २५ ॥ कल्यं प्रातः ॥ २६ ॥ आर्षभेण स्वार्थे तद्धितः । ऋषभस्वरेण ॥ २९ ॥ काश्यपेयस्य दारुकस्य ॥ ३९ ॥

अन्योन्यं संतनक्षाते रणेऽनुपमविक्रमौ ॥ ४६
ततः कर्णं शिनेः पौत्रः सर्वपारसवैः शरैः ।
बिभेद सर्वगात्रेषु पुनःपुनररिंदम ॥ ४७
सारथिं चास्य भल्लेन रथनीडादपातयत् ।
अश्वांश्च चतुरः श्वेतान्निजघान शितैः शरैः ॥ ४८
छित्त्वा ध्वजं रथं चैव शतधा पुरुषर्षभ ।
चकार विरथं कर्णं तव पुत्रस्य पश्यतः ॥ ४९
ततो विमनसो राजंस्तावकास्ते महारथाः ।
वृषसेनः कर्णसुतः शल्यो मद्राधिपस्तथा ।
द्रोणपुत्रश्च शैनेयं सर्वतः पर्यवारयन् ॥ ५०
ततः पर्याकुलं सर्वं न प्राज्ञायत किंचन ॥ ५१
तथा सात्यकिना वीरे विरथे सूतजे कृते ।
हाहाकारस्ततो राजन्सर्वसैन्येष्वभून्महान् ॥ ५२
कर्णोऽपि विरथो राजन्सात्वतेन कृतः शरैः ।
दुर्योधनरथं तूर्णमारुरोह विनिःश्वसन् ॥ ५३
मानयंस्तव पुत्रस्य बाल्यात्प्रभृति सौहृदम् ।
कृतां राज्यप्रदानेन प्रतिज्ञां परिपालयन् ॥ ५४
तथा तु विरथं कर्णं पुत्रांश्च तव पार्थिव ।
दुःशासनमुखान्वीरान्नावधीत्सात्यकिर्वशी ॥ ५५
रक्षन्प्रतिज्ञां भीमेन पार्थेन च पुराकृताम् ।
विरथान्विह्वलांश्चक्रे न तु प्राणैर्व्ययोजयत् ॥ ५६
भीमसेनेन तु वधः पुत्राणां ते प्रतिश्रुतः ।
अनुद्यूते च पार्थेन वधः कर्णस्य संश्रुतः ॥ ५७
वधे त्वकुर्वन्यत्नं ते तस्य कर्णमुखास्तदा ।
नाशक्नुवंस्ततो हन्तुं सात्यकिं प्रवरा रथाः ॥ ५८
द्रौणिश्च कृतवर्मा च तथैवान्ये महारथाः ।
निर्जिता धनुषैकेन शतशः क्षत्रियर्षभाः ।
काङ्क्षता परलोकं च धर्मराजस्य च प्रियम् ॥ ५९
कृष्णयोः सदृशो वीर्ये सात्यकिः शत्रुतापनः ।
जितवान्सर्वसैन्यानि तावकानि हसन्निव ॥ ६०
कृष्णो वाऽपि भवेल्लोके पार्थो वाऽपि धनुर्धरः ।
शैनेयो वा नरव्याघ्र चतुर्थस्तु न विद्यते ॥ ६१

धृतराष्ट्र उवाच ।
अजय्यं वासुदेवस्य रथमास्थाय सात्यकिः ।
विरथं कृतवान्कर्णं वासुदेवसमो युधि ।
दारुकेण समायुक्तः स्वबाहुबलदर्पितः ॥ ६२
कच्चिदन्यं समारूढः सात्यकिः शत्रुतापनः ।
एतदिच्छाम्यहं श्रोतुं कुशलो ह्यसि भाषितुम् ।
असह्यं तमहं मन्ये तन्ममाचक्ष्व सञ्जय ॥ ६३

सञ्जय उवाच ।
शृणु राजन्यथावृत्तं रथमन्यं महामतिः ।
दारुकस्यानुजस्तूर्णं कल्पनाविधिकल्पितम् ॥ ६४
आयसैः काञ्चनैश्चापि पट्टैः सन्नद्धकूबरम् ।
तारासहस्रखचितं सिंहध्वजपताकिनम् ॥ ६५
अश्वैर्वातजवैर्युक्तं हेमभाण्डपरिच्छदैः ।
सैन्धवैरिन्दुसंकाशैः सर्वशब्दातिगैर्दृढैः ॥ ६६
चित्रकाञ्चनसन्नाहैर्वाजिमुख्यैर्विशांपते ।
घण्टाजालाकुलरवं शक्तितोमरविद्युतम् ॥ ६७
युक्तं सांग्रामिकैर्द्रव्यैर्बहुशस्त्रपरिच्छदैः ।
रथं संपादयामास मेघगम्भीरनिःस्वनम् ॥ ६८
तं समारुह्य शैनेयस्तव सैन्यमुपाद्रवत् ।
दारुकोऽपि यथाकामं प्रययौ केशवान्तिकम् ॥ ६९
कर्णस्यापि रथं राजञ्शङ्खगोक्षीरपाण्डुरैः ।
चित्रकाञ्चनसन्नाहैः सदश्वैर्वेगवत्तरैः ॥ ७०
हेमकक्ष्याध्वजोपेतं क्लृप्तयन्त्रपताकिनम् ।
अग्र्यं रथं सुयन्तारं बहुशस्त्रपरिच्छदम् ।
उपाजह्रुस्तमास्थाय कर्णोऽप्यभ्यद्रवद्रिपून् ॥ ७१
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
भूयश्चापि निबोधेमं तवापनयजं क्षयम् ॥ ७२
एकत्रिंशत्तव सुता भीमसेनेन पातिताः ।
दुर्मुखं प्रमुखे कृत्वा सततं चित्रयोधिनम् ॥ ७३
शतशो निहताः शूराः सात्वतेनार्जुनेन च ।
भीष्मं प्रमुखतः कृत्वा भगदत्तं च भारत ।
एवमेष क्षयो वृत्तो राजन्दुर्मन्त्रिते तव ॥ ७४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

अनुद्यूते पुनर्द्यूते ॥ ५७ ॥

पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

## षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

अर्जुनेन कर्णंप्रति तत्कृतभीमगर्हणातितिक्षया तद्गर्हणपूर्वकं तत्सुतवधप्रतिज्ञा ॥ १ ॥ कर्णदुर्योधनसंवादः संकुलयुद्धं च ॥ २ ॥

धृतराष्ट्र उवाच ।
तथा गतेषु शूरेषु तेषां मम च सञ्जय ।
किंस्विद्भीमार्जुनौ चैव सात्यकिश्चाकरोत्तदा ॥ १
सञ्जय उवाच ।
विरथो भीमसेनो वै कर्णवाक्शल्यपीडितः ।
अमर्षवशमापन्नः फल्गुनं वाक्यमब्रवीत् ॥ २
पुनःपुनस्तूबरक मूढ औदरिकेति च ।
अकृतास्त्रक मा योत्सीर्बाल संग्रामकातर ॥ ३
इति मामब्रवीत्कर्णः पश्यतस्ते धनञ्जय ।
एवं वक्ता च मे वध्यस्तेन चोक्तस्तथा ह्यहम् ॥ ४
एतद्व्रतं महाबाहो त्वया सह कृतं मया ।
तथैतन्मम कौन्तेय यथा तव न संशयः ॥ ५
तद्वधाय नरश्रेष्ठ स्मरैतद्वचनं मम ।
यथा भवति तत्सत्यं तथा कुरु धनञ्जय ॥ ६
तच्छ्रुत्वा वचनं तस्य भीमस्यामितविक्रमः ।
ततोऽर्जुनोऽब्रवीत्कर्णं किंचिदभ्येत्य संयुगे ॥ ७
कर्णकर्ण वृथादृष्टे सूतपुत्रात्मसंस्तुत ।
अधर्मबुद्धे शृणु मे यत्त्वां वक्ष्यामि सांप्रतम् ॥ ८
द्वावेव कर्ण शूराणां रणे दृष्टौ जयाजयौ ।
तौ चाप्यनित्यौ राधेय वासवस्यापि युध्यतः ॥ ९
'रणमुत्सृज्य निर्लज्ज गच्छसे च पुनःपुनः ।
माहात्म्यं पश्य भीमस्य कर्म जन्म कुले तथा ।
नोक्तवान्परुषं यत्त्वां पलायनपरायणम् ॥ १०
भूयस्त्वमपि संगम्य सकृदेव यदृच्छया ।
विरथं कृतवान्वीरं पाण्डवं सूतदायद ॥ ११
कुलस्य सदृशं चापि राधेय कृतवानसि ।
नैकान्तसिद्धिः संग्रामे वासवस्यापि विद्यते ॥' १२
मुमूर्षुर्युयुधानेन विरथो विकलेन्द्रियः ।
मद्वध्यस्त्वमिति ज्ञात्वा जिला जीवन्विसर्जितः ॥
यदृच्छया रणे भीमं युध्यमानं महाबलम् ।
कथंचिद्विरथं कृत्वा यत्त्वं रूक्षमभाषथाः ।
अधर्मस्त्वेष सुमहाननार्यचरितं च तत् ॥ १४
नारिं जित्वाऽतिकत्थन्ते न च जल्पन्ति दुर्वचः ।
न च कंचन निन्दन्ति सन्तः शूरा नरर्षभाः ॥ १५
त्वं तु प्राकृतविज्ञानस्तत्तद्वदसि सूतज ।
बह्वबद्धमकर्ण्यं च चापलादपरीक्षितम् ॥ १६
युध्यमानं पराक्रान्तं शूरमार्यव्रते रतम् ।
यदवोचोऽप्रियं भीमं नैतत्सत्यं वचस्तव ।
पश्यतां सर्वसैन्यानां केशवस्य ममैव च ॥ १७
विरथो भीमसेनेन कृतोऽसि बहुशो रणे ।
न च त्वां परुषं किंचिदुक्तवान्पाण्डुनन्दनः ॥ १८
यस्मात्तु बहु रूक्षं च श्रावितस्ते वृकोदरः ।
परोक्षं यच्च सौभद्रो युष्माभिर्बहुभिर्हतः ।
तस्मादस्यावलेपस्य सद्यः फलमवाप्नुहि ॥ १९
त्वया तस्य धनुश्छिन्नमात्मनाशाय दुर्मते ।
तस्माद्वध्योऽसि मे मूढ सभृत्यसुतबान्धवः ॥ २०
कुरु त्वं सर्वकृत्यानि महत्ते भयमागतम् ।
हन्ताऽसि वृषसेनं ते प्रेक्षमाणस्य संयुगे ॥ २१
ये चान्येऽप्युपयास्यन्ति बुद्धिमोहेन मां नृपाः ।
तांश्च सर्वान्हनिष्यामि सत्येनायुधमालभे ॥ २२
त्वां च मूढाकृतप्रज्ञमतिमानिनमाहवे ।
दृष्ट्वा दुर्योधनो मन्दो भृशं तप्स्यति पातितम् २३
सञ्जय उवाच ।
अर्जुनेन प्रतिज्ञाते वधे कर्णसुतस्य तु ।
महान्सुतुमुलः शब्दो बभूव रथिनां तदा ॥ २४
तस्मिन्नाकुलसंग्रामे वर्तमाने महाभये ।
मन्दरश्मिः सहस्रांशुरस्तंगिरिमुपाद्रवत् ॥ २५
ततो दुर्योधनो राजा राधेयं त्वरितोऽब्रवीत् ।
अर्जुनं प्रेक्ष्य संयातं जयद्रथवधं प्रति ॥ २६
'अमानुषाणि कर्माणि कुर्वन्तौ भरतर्षभ ।
सात्यकिं भीमसेनं च यत्तौ तौ दर्शयन्निव ॥ २७
अयं स वैकर्तन युद्धकालो
विदर्शयस्वात्मबलं महात्मन् ।

यथा न वध्येत रणेऽर्जुनेन
जयद्रथः कर्ण तथा कुरुष्व ॥ २८
अल्पावशेषो दिवसो हि सांप्रतं
निवारयेहाद्य रिपुं शरौघैः ।
दिनक्षयं प्राप्य नरप्रवीर
ध्रुवो हि नः कर्ण जयो भविष्यति ॥ २९
सैन्धवे रक्ष्यमाणे तु सूर्यस्यास्तमनं प्रति ।
मिथ्याप्रतिज्ञः कौन्तेयः प्रवेक्ष्यति हुताशनम् ॥ ३०
अनर्जुनायां च भुवि मुहूर्तमपि मानद ।
जीवितुं नोत्सहेरन्वै भ्रातरोऽस्य सहानुगाः ॥ ३१
पाण्डवेषु विनष्टेषु सशैलवनकाननाम् ।
वसुंधरामिमां कर्ण भोक्ष्यामो हतकण्टकाम् ॥ ३२
दैवेनोपहतः पार्थो विपरीतश्च मानद ।
कार्याकार्यमजानानः प्रतिज्ञां कृतवान्रणे ॥ ३३
नूनमात्मविनाशाय पाण्डवेन किरीटिना ।
मिथ्याप्रतिज्ञैव कृता जयद्रथवधं प्रति ॥ ३४
कथं जीवति दुर्धर्षे त्वयि राधेय फल्गुनः ।
अनस्तंगत आदित्ये हन्यात्सैन्धवकं नृपम् ॥ ३५
रक्षितं मद्रराजेन कृपेण च महात्मना ।
जयद्रथं रणमुखे कथं हन्याद्धनंजयः ॥ ३६
द्रौणिना रक्ष्यमाणं च मया दुःशासनेन च ।
कथं प्राप्स्यति बीभत्सुः सैन्धवं कालचोदितः ॥ ३७
युध्यन्ते बहवः शूरा लम्बते च दिवाकरः ।
शङ्के जयद्रथं पार्थो नैव प्राप्स्यति मानद ॥ ३८
त्वं कर्ण मया सार्धं शूरैश्चान्यैर्महारथैः ।
द्रौणिना त्वं हि सहितो मद्रेशेन कृपेण च ।
युध्यस्व यत्नमास्थाय परं पार्थेन संयुगे ॥ ३९
एवमुक्तस्तु राधेयस्तव पुत्रेण मारिष ।
दुर्योधनमिदं वाक्यं प्रत्युवाच कुरूत्तमम् ॥ ४०
दृढलक्ष्येण वीरेण भीमसेनेन धन्विना ।
भृशं भिन्नतनुः सङ्ख्ये शरजालैरनेकशः ॥ ४१
स्थातव्यमिति तिष्ठामि रणे संप्रति मानद ।
नाङ्गमिङ्गति किंचिन्मे संतप्तस्य महेषुभिः ।
योत्स्यामि तु यथाशक्त्या त्वदर्थं जीवितं मम ॥ ४२
'तत्तथा प्रयतिष्येऽहं परं शक्त्या सुयोधन ।'
यथा पाण्डवमुख्योऽसौ न हनिष्यति सैन्धवम् ४३
न हि मे युध्यमानस्य सायकानस्यतः शितान् ।
सैन्धवं प्राप्स्यते वीरः सव्यसाची धनंजयः ॥ ४४
यत्तु भक्तिमता कार्यं सततं हितकाङ्क्षिणा ।
तत्करिष्यामि कौरव्य जयो दैवे प्रतिष्ठितः ॥ ४५
सैन्धवार्थे परं यत्नं करिष्याम्यद्य संयुगे ।
त्वत्प्रियार्थं महाराज जयो दैवे प्रतिष्ठितः ॥ ४६
अद्य योत्स्येऽर्जुनमहं पौरुषं स्वं व्यपाश्रितः ।
त्वदर्थे पुरुषव्याघ्र जयो दैवे प्रतिष्ठितः ॥ ४७
अद्य युद्धं कुरुश्रेष्ठ मम पार्थस्य चोभयोः ।
पश्यन्तु सर्वसैन्यानि दारुणं रोमहर्षणम् ॥ ४८
सञ्जय उवाच ।
कर्णकौरवयोरेवं रणे संभाषमाणयोः ।
अर्जुनो निशितैर्बाणैर्जघान तव वाहिनीम् ॥ ४९
चिच्छेद निशितैर्बाणैः शूराणामनिवर्तिनाम् ॥ ५०
भुजान्परिघसंकाशान्हस्तिहस्तोपमान्रणे ।
शिरांसि च महाबाहुश्चिच्छेद निशितैः शरैः ॥ ५१
हस्तिहस्तान्द्विपस्कन्धान्रथाक्षांश्च समन्ततः ।
शोणिताक्तान्हयारोहान्गृहीतप्रासतोमरान् ॥ ५२
क्षुरैश्चिच्छेद बीभत्सुर्द्विधैकैकं त्रिधैव च ।
हयान्वारणमुख्यांश्च पदातींश्च समन्ततः ।
ध्वजांश्छत्राणि चापानि चामराणि शिरांसि च ॥
कक्षमग्निरिवोद्भूतः प्रादहत्तव वाहिनीम् ।
अचिरेण महीं पार्थश्चकार रुधिरोत्तराम् ॥ ५४
हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली ।
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः ॥ ५५
बीभत्सुर्भीमसेनेन सात्वतेन च रक्षितः ।
प्रबभौ भरतश्रेष्ठ ज्वलन्निव हुताशनः ॥ ५६
तं तथावस्थितं दृष्ट्वा त्वदीया वीरसंमताः ।
नामृष्यन्त महेष्वासाः पाण्डवं पुरुषर्षभाः ॥ ५७
दुर्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट् ।

उपहतो मोहितः । विपरीतोऽन्यथाभूतप्रकृतिः ॥ ३३ ॥

दृढलक्ष्येण दृढप्रहारेण ॥ ४१ ॥ प्रतिष्ठितः अधीनः ॥ ४५ ॥

अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः ॥ ५८
सन्नद्धाः सैन्धवस्यार्थे समावृण्वन्किरीटिनम् ।
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनिःस्वनैः ॥ ५९
संग्रामकोविदं पार्थं सर्वे युद्धविशारदाः ।
अभीताः पर्यवर्तन्त व्यादितास्यमिवान्तकम् ॥ ६०
सैन्धवं पृष्ठतः कृत्वा जिघांसन्तोऽच्युतार्जुनौ ।
सूर्यास्तमनमिच्छन्तो लोहितायति भास्करे ॥ ६१
ते भुजैर्भोगिभोगाभैर्धनूंष्यानम्य सायकान् ।
मुमुचुः सूर्यरश्म्याभाञ्छतशः फल्गुनं प्रति ॥ ६२
ततस्तानस्यमानांश्च किरीटी युद्धदुर्मदः ।
द्विधा त्रिधाऽष्टधैकैकं छित्त्वा विव्याध तान्रथान् ॥
सिंहलाङ्गूलकेतुस्तु दर्शयन्वीर्यमात्मनः ।
शारद्वतीसुतो राजन्नर्जुनं प्रत्यवारयन् ॥ ६४
स विद्ध्वा दशभिः पार्थं वासुदेवं च सप्तभिः ।
अतिष्ठद्रथमार्गेषु सैन्धवं प्रतिपालयन् ॥ ६५
अथैनं कौरवश्रेष्ठाः सर्व एव महारथाः ।
महता रथवंशेन सर्वतः प्रत्यवारयन् ॥ ६६
विष्फारयन्तश्चापानि विसृजन्तश्च सायकान् ।
सैन्धवं पर्यरक्षन्त शासनात्तनयस्य ते ॥ ६७
ततः पार्थस्य शूरस्य बाह्वोर्बलमदृश्यत ।
इषूणामक्षयत्वं च धनुषो गाण्डिवस्य च ॥ ६८
अस्त्रैरस्त्राणि संवार्य द्रौणेः शारद्वतस्य च ।
एकैकं दशभिर्बाणैः सर्वानेव समार्पयत् ॥ ६९
तं द्रौणिः पञ्चविंशत्या वृषसेनश्च सप्तभिः ।
दुर्योधनश्च विंशत्या कर्णशल्यौ त्रिभिस्त्रिभिः ॥ ७०
त एनमभिगर्जन्तो विध्यन्तश्च पुनःपुनः ।
विधुन्वन्तश्च चापानि सर्वतः प्रत्यवारयन् ॥ ७१
श्लिष्टं च सर्वतश्चक्रू रथमण्डलमाशु ते ।
सूर्यास्तमनमिच्छन्तस्त्वरमाणा महारथाः ॥ ७२
त एनमभिनर्दन्तो विधुन्वाना धनूंषि च ।
सिषिचुर्मार्गणैस्तीक्ष्णैर्गिरिं मेघा इवाम्बुभिः ॥ ७३
ते महास्त्राणि दिव्यानि तत्र राजन्व्यदर्शयन् ।
धनंजयस्य गात्रे तु शूराः परिघबाहवः ॥ ७४
'निवार्य ताञ्शरव्रातैर्दिव्यान्यस्त्राणि दर्शयन् ।'
हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली ।
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः ॥ ७५
तं कर्णः संयुगे राजन्प्रत्यवारयदाशुगैः ।
मिषतो भीमसेनस्य सात्वतस्य च भारत ॥ ७६
तं पार्थो दशभिर्बाणैः प्रत्यविध्यद्रणाजिरे ।
सूतपुत्रं महाबाहुः सर्वसैन्यस्य पश्यतः ॥ ७७
सात्वतश्च त्रिभिर्बाणैः कर्णं विव्याध मारिष ।
भीमसेनस्त्रिभिश्चैव पुनः पार्थश्च सप्तभिः ॥ ७८
तान्कर्णः प्रतिविव्याध षष्ट्याषष्ट्या महारथः ।
तद्युद्धमभवद्राजन्कर्णस्य बहुभिः सह ॥ ७९
तत्राद्भुतमपश्याम सूतपुत्रस्य मारिष ।
यदेकः समरे क्रुद्धस्त्रीन्रथान्पर्यवारयत् ॥ ८०
फल्गुनस्तु महाबाहुः कर्णं वैकर्तनं रणे ।
सायकानां शतेनैव सर्वमर्मस्वताडयत् ॥ ८१
रुधिरोक्षितसर्वाङ्गः सूतपुत्रः प्रतापवान् ।
शरैः पञ्चाशता वीरः फल्गुनं प्रत्यविध्यत ॥ ८२
तस्य तल्लाघवं दृष्ट्वा नामृष्यत रणेऽर्जुनः ।
तस्य पार्थो धनुश्छित्त्वा विव्याधैनं स्तनान्तरे ।
सायकैर्नवभिर्वीरस्त्वरमाणो धनञ्जयः ॥ ८३
अथान्यद्धनुरादाय सूतपुत्रः प्रतापवान् ।
सायकैरष्टसाहस्रैश्छादयामास पाण्डवम् ॥ ८४
तां बाणवृष्टिमतुलां कर्णचापसमुत्थिताम् ।
व्यधमत्सायकैः पार्थः शलभानिव मारुतः ॥ ८५
छादयामास च तदा सायकैरर्जुनो रणे ।
पश्यतां सर्वयोधानां दर्शयन्पाणिलाघवम् ॥ ८६
वधार्थं चास्य समरे सायकं सूर्यवर्चसम् ।
चिक्षेप त्वरया युक्तस्त्वराकाले धनञ्जयः ॥ ८७
तमापतन्तं वेगेन द्रौणिश्चिच्छेद सायकम् ।
अर्धचन्द्रेण तीक्ष्णेन स च्छिन्नः प्रापतद्भुवि ॥ ८८
कर्णोऽपि द्विषतां हन्ता छादयामास फल्गुनम् ।
सायकैर्बहुसाहस्रैः कृतप्रतिकृतेप्सया ॥ ८९
तौ वृषाविव नर्दन्तौ नरसिंहौ महारथौ ।
सायकैस्तु प्रतिच्छन्नं चक्रतुः खमजिह्मगैः ॥ ९०
अदृश्यौ च शरौघैस्तौ निघ्नन्तावितरेतरम् ।
कर्ण पार्थोऽस्मि तिष्ठ त्वं कर्णोऽहं तिष्ठ फल्गुन ९१

इत्येवं तर्जयन्तौ तौ वाक्शल्यैस्तु परस्परम् ।
विध्येतां समरे वीरौ चित्रं लघु च सुष्ठु च ॥ ९२
प्रेक्षणीयौ चाभवतां सर्वयोधसमागमे ।
प्रशस्यमानौ समरे सिद्धचारणपन्नगैः ॥ ९३
अयुध्येतां महाराज परस्परवधैषिणौ ।
ततो दुर्योधनो राजंस्तावकानभ्यभाषत ॥ ९४
यत्नाद्रक्षत राधेयं नाहत्वा समरेऽर्जुनम् ।
निवर्तिष्यति राधेयो न वाऽजित्वाऽद्य फल्गुनं ९५
एतस्मिन्नन्तरे राजन्दृष्ट्वा कर्णस्य विक्रमम् ।
आकर्णमुक्तैरिषुभिः कर्णस्य चतुरो हयान्
अनयत्प्रेतलोकाय चतुर्भिः श्वेतवाहनः ॥ ९६
सारथिं चास्य भल्लेन रथनीडादपातयत् ।
छादयामास स शरैस्तत्र पुत्रस्य पश्यतः ॥ ९७
संछाद्यमानः समरे हताश्वो हतसारथिः ।
मोहितः शरजालेन कर्तव्यं नाभ्यपद्यत ॥ ९८
तं तथा विरथं दृष्ट्वा रथमारोप्य तं तदा ।
अश्वत्थामा महाराज भूयोऽर्जुनमयोधयत् ॥ ९९
मद्रराजश्च कौन्तेयमविध्यत्त्रिंशता शरैः ।
'आवव्रेऽर्जुनमार्गं च शरजालेन भारत ॥' १००
शारद्वतस्तु विंशत्या वासुदेवं समार्पयत् ।
धनंजयं द्वादशभिराजघान शिलीमुखैः ॥ १०१
चतुर्भिः सिन्धुराजश्च वृषसेनश्च सप्तभिः ।
पृथक्पृथङ्महाराज विव्यधुः कृष्णपाण्डवौ ॥ १०२
तथैव तान्प्रत्यविध्यत्कुन्तीपुत्रो धनंजयः ।
द्रोणपुत्रं चतुःषष्ट्या मद्रराजं शतेन च ॥ १०३
सैन्धवं दशभिर्बाणैर्वृषसेनं त्रिभिः शरैः ।
शारद्वतं च विंशत्या विद्ध्वा पार्थो ननाद ह ॥ १०४
ते प्रतिज्ञाप्रतीघातमिच्छन्तः सव्यसाचिनः ।
सहितास्तावकास्तूर्णमभिपेतुर्धनंजयम् ॥ १०५
अथार्जुनः सर्वतो वारुणास्त्रं
प्रादुश्चक्रे त्रासयन्धार्तराष्ट्रान् ।
तं प्रत्युदीयुः कुरवः पाण्डुपुत्रं
रथैर्महार्हैः शरवर्षं सृजन्तः ॥ १०६
ततस्तु तस्मिंस्तुमुले समुत्थिते
सुदारुणे भारतमोहनीये ।
नो मुह्यत प्राप्य स राजपुत्रः
किरीटमाली व्यसृजच्छरौघान् ॥ १०७
वधप्रेप्सुः सव्यसाची कुरूणां
सरन्क्लेशान्द्वादशवर्षवृत्तान् ।
गाण्डीवमुक्तैरिषुभिर्महात्मा
सर्वा दिशो व्यावृणोदप्रमेयः ॥ १०८
प्रदीप्तोल्कमभवच्चान्तरिक्षं
मृतेषु देहेष्वपतन्वयांसि ।
यत्पिङ्गलज्येन किरीटमाली
क्रुद्धो रिपूनाजगवेन हन्ति ॥ १०९
ततः किरीटी महता महायशाः
शरासनेनास्य शराननीकजित् ।
हयप्रवेकोत्तमनागधूर्णिता-
न्कुरुप्रवीरानिषुभिर्न्यपातयत् ॥ ११०
गदाश्च गुर्वीः परिघानयस्मया-
नसींश्च शक्तीश्च रणे नराधिपाः ।
महान्ति शस्त्राणि च भीमदर्शनाः
प्रगृह्य पार्थं सहसाऽभिदुद्रुवुः ॥ १११
ततो युगान्ताभ्रसमस्वनं मह-
न्महेन्द्रचापप्रतिमं च गाण्डिवम् ।
चकर्ष दोर्भ्यां विहसन्भृशं ययौ
दहंस्त्वदीयान्यमराष्ट्रवर्धनः ॥ ११२
स तानुदीर्णान्सरथान्सवारणा-
न्पदातिसङ्घांश्च महाधनुर्धरः ।
विपन्नसर्वायुधजीवितान्रणे
चकार वीरो यमराष्ट्रवर्धनान् ॥ ११३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

सर्वतोदारमस्त्रं इति क. ख. ट. पाठः । सर्वतःसारमस्त्रं इति ङ. पाठः ॥ १०६ ॥ प्राप्य युद्धमिति शेषः ॥ १०७ ॥ आस्य सम न्ततः क्षिप्त्वा ॥ ११० ॥ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

## सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

अल्पशेषे दिवसे तिरोहिते च जयद्रथे कृष्णेनान्धकारसर्जनेन सूर्यविम्बपिधानम् ॥ १ ॥ अदृश्यमाने भानौ जयद्रथे च निःशङ्कमात्मानमाविष्कुर्वति अर्जुनेन कृष्णचोदनया तच्छिरश्छेदः ॥ २ ॥ कृष्णेनार्जुनंप्रति जयद्रथशिरः भूतले न निपातनीयमित्युक्ते तेन तंप्रति तत्कारणकथनप्रार्थना ॥ ३ ॥

सञ्जय उवाच ।

श्रुत्वा निनादं धनुषश्च तस्य
विस्पष्टमुत्क्रुष्टमिवान्तकस्य ।
शक्राशनिस्फोटसमं सुघोरं
विकृष्यमाणस्य धनंजयेन ॥ १

त्रासोद्विग्नं तथोद्भ्रान्तं त्वदीयं तद्बलं नृप ।
युगान्तवातसंक्षुब्धं चलद्वीचितरङ्गितम् ।
प्रलीनमीनमकरं सागराम्भ इवाभवत् ॥ २
'मध्यंदिनगतं सूर्यमापतन्तमिवाम्बरे ।
न शेकुः सर्वभूतानि पाण्डवं प्रतिवीक्षितुम् ॥' ३
स रणे व्यचरत्पार्थः प्रेक्ष्यमाणो धनंजयः ।
युगपद्दिक्षु सर्वासु सर्वाण्यस्त्राणि दर्शयन् ॥ ४
आददानं महाराज संदधानं च पाण्डवम् ।
उत्कर्षन्तं सृजन्तं च न स्म पश्याम लाघवात् ॥ ५
[ततः क्रुद्धो महाबाहुरैन्द्रमस्त्रं दुरासदम् ।
प्रादुश्चक्रे महाराज त्रासयन्सर्वभारतान् ॥ ६
ततः शराः प्रादुरासन्दिव्यास्त्रप्रतिमन्त्रिताः ।
प्रदीप्ताश्च शिखिमुखाः शतशोऽथ सहस्रशः ॥ ७
आकर्णपूर्णनिर्मुक्तैरग्न्यर्कांशुनिभैः शरैः ।
नभोऽभवत्तदुष्प्रेक्ष्यमुल्काभिरिव संवृतम् ॥ ८
ततः शस्त्रान्धकारं तत्कौरवैः समुदीरितम् ।
अशक्यं मनसाप्यन्यैः पाण्डवः संभ्रमन्निव ॥ ९
नाशयामास विक्रम्य शरैर्दिव्यास्त्रमन्त्रितैः ।
नैशं तमोंशुभिः क्षिप्रं दिनादाविव भास्करः ॥ १०
ततस्तु तावकं सैन्यं दीप्तैः शरगभस्तिभिः ।
आक्षिपत्पल्वलाम्बूनि निदाघार्क इव प्रभुः ॥ ११
ततो दिव्यास्त्रविदुषा प्रहिताः सायकांशवः ।
समाप्लवन्द्विषत्सैन्यं लोकं भानोरिवांशवः ॥ १२
अथापरे समुत्सृष्टा विशिखास्तिग्मतेजसः ।
हृदयान्याशु वीराणां विविशुः प्रियबन्धुवत् ॥ १३
य एनमीयुः समरे त्वद्योधाः शूरमानिनः ।
शलभा इव ते दीप्तमग्निं प्राप्य ययुः क्षयम् ॥ १४
एवं स मृद्नञ्शत्रूणां जीवितानि यशांसि च ।
पार्थश्चचार संग्रामे मृत्युर्विग्रहवानिव ॥ १५
स किरीटानि वस्त्राणि साङ्गदान्विपुलान्भुजान् ।
सकुण्डलयुगान्कर्णान्केषांचिदहरच्छरैः ॥ १६
सतोमरान्गजस्थानां सप्रासान्हयसादिनाम् ।
सचर्मणः पदातीनां रथिनां च सधन्वनः ।
सप्रतोदान्नियन्तॄणां बाहूंश्चिच्छेद पाण्डवः ॥ १७
प्रदीप्तोग्रशरार्चिष्मान्बभौ तत्र धनंजयः ।
सविस्फुलिङ्गाग्रशिखो ज्वलन्निव हुताशनः ॥ १८
तं देवराजप्रतिमं सर्वशस्त्रभृतां वरम् ।
युगपद्दिक्षु सर्वासु रथस्थं पुरुषर्षभम् ॥ १९
निक्षिपन्तं महास्त्राणि प्रेक्षणीयं धनञ्जयम् ।
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनादिनम् ॥ २०
निरीक्षितुं न शेकुस्ते यत्नवन्तोऽपि पार्थिवाः ।
मध्यंदिनगतं सूर्यं प्रतपन्तमिवाम्बरे ॥ २१
दीप्तोग्रसंभृतशरः किरीटी विरराज ह ।
वर्षास्विवोदीर्णजलः सेन्द्रधन्वाम्बुदो महान् ॥ २२
महास्त्रसंप्लवे तस्मिञ्जिष्णुना संप्रवर्तिते ।
सुदुस्तरे महाघोरे ममज्जुर्योधपुङ्गवाः ॥ २३
उत्कृत्तवदनैर्देहैः शरीरैः कृत्तबाहुभिः ।
भुजैश्च पाणिनिर्मुक्तैः पाणिभिर्व्यङ्गुलीकृतैः ॥ २४
कृत्ताग्रहस्तैः करिभिः कृत्तदन्तैर्मदोत्कटैः ।
हयैश्च विधुरग्रीवै रथैश्च शकलीकृतैः ॥ २५
निकृत्तान्त्रैः कृत्तपादैस्तथान्यैः कृत्तसन्धिभिः ।
निश्चेष्टैर्विस्फुरद्भिश्च शतशोऽथ सहस्रशः ॥ २६
मृत्योराघातललितं तत्पार्थायोधनं महत् ।
अपश्याम महीपाल भीरूणां भयवर्धनम् ॥ २७

कुण्डलितः पाठो झ. पुस्तक एवास्ति ॥ ६ ॥

आक्रीडमिव रुद्रस्य पुराभ्यर्दयतः पशून् ।
गजानां क्षुरनिर्मुक्तैः करैः सभुजगेव भूः ॥ २८
क्वचिद्बभौ स्रग्विणीव वक्त्रपद्मैः समाचिता ।
विचित्रोष्णीषमुकुटैः केयूराङ्गदकुण्डलैः ॥ २९
स्वर्णचित्रतनुत्रैश्च भाण्डैश्च गजवाजिनाम् ।
किरीटशतसंकीर्णा तत्र तत्र समाचिता ।
विरराज भृशं चित्रा मही नववधूरिव ॥ ३०
मज्जामेदःकर्दमिनीं शोणितौघतरङ्गिणीम् ।
मर्मास्थिभिरगाधां च केशशैवलशाद्वलाम् ॥ ३१
शिरोबाहूपलतटां रुग्णक्रोडास्थिसंकटाम् ।
चित्रध्वजपताकाढ्यां छत्रचापोर्मिमालिनीम् ३२
विगतासुमहाकायां गजदेहाभिसंकुलाम् ।
रथोडुपशताकीर्णां हयसंघातरोधसम् ॥ ३३
रथचक्रयुगेषाक्षकूबरैरतिदुर्गमाम् ।
प्रासासिशक्तिपरशुविशिखाहिदुरासदाम् ॥ ३४
बलकङ्कमहानक्रां गोमायुमकरोत्कटाम् ।
गृध्रोदग्रमहाग्राहां शिवाविरुतभैरवाम् ॥ ३५
नृत्यत्प्रेतपिशाचाद्यैर्भूताकीर्णां सहस्रशः ।
गतासुयोधनिश्चेष्टशरीरशतवाहिनीम् ॥ ३६
महाप्रतिभयां रौद्रां घोरां वैतरणीमिव ।
नदीं प्रवर्तयामास भीरूणां भयवर्धिनीम् ॥ ३७
तं दृष्ट्वा तस्य विक्रान्तमन्तकस्येव रूपिणः ।
अभूतपूर्वं कुरुषु भयमागाद्रणाजिरे ॥ ३८
तत आदाय वीराणामस्त्रैरस्त्राणि पाण्डवः ।
आत्मानं रौद्रमाचष्ट रौद्रकर्मण्यधिष्ठितः ॥ ३९
ततो रथवरान्राजन्नत्यतिक्रामदर्जुनः ॥] ४०
मध्यंदिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
न शेकुः सर्वभूतानि पाण्डवं प्रतिवीक्षितुम् ॥ ४१
प्रसृतांस्तस्य गाण्डीवाच्छरव्रातान्महात्मनः ।
संग्रामे संप्रपश्यामो हंसपङ्क्तिरिवाम्बरे ॥ ४२
विनिवार्य स वीराणामस्त्रैरस्त्राणि सर्वतः ।
दर्शयन्रौद्रमात्मानमुग्रे कर्मणि धिष्ठितः ॥ ४३
स तान्रथवरान्राजन्नत्याक्रामत्तदाऽर्जुनः ।
मोहयन्निव नाराचैर्जयद्रथवधेप्सया ॥ ४४
विसृजन्दिक्षु सर्वासु शरानच्युतसारथिः ।
सरथो व्यचरत्तूर्णं प्रेक्षणीयो धनञ्जयः ॥ ४५
भ्रमन्त इव शूरस्य शरव्राता महात्मनः ।
अदृश्यन्तान्तरिक्षस्थाः शतशोऽथ सहस्रशः ॥ ४६
आददानं महेष्वासं संदधानं च सायकम् ।
विसृजन्तं च कौन्तेयं नानुपश्याम वै तदा ॥ ४७
तथा सर्वा दिशो राजन्सर्वांश्च रथिनो रणे ।
आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् ।
विव्याध च चतुःषष्ट्या शराणां नतपर्वणाम् ॥ ४८
[सैन्धवाभिमुखं यान्तं योधाः संप्रेक्ष्य पाण्डवम् ।
न्यवर्तन्त रणाद्वीरा निराशास्तस्य जीविते ॥ ४९
यो योऽभ्यधावदाक्रन्दे तावकः पाण्डवं रणे ।
तस्यतस्यान्तगा बाणाः शरीरे न्यपतन्प्रभो ॥ ५०
कबन्धसंकुलं चक्रे तव सैन्यं महारथः ।
अर्जुनो जयतां श्रेष्ठः शरैरग्न्यंशुसन्निभैः ॥ ५१
एवं तत्तव राजेन्द्र चतुरङ्गबलं तदा ।
व्याकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् ॥ ५२
द्रौणिं पञ्चाशताऽविध्यद्वृषसेनं त्रिभिः शरैः ।
कृपायमाणः कौन्तेयः कृपं नवभिरार्दयत् ॥ ५३
शल्यं षोडशभिर्बाणैः कर्णं द्वात्रिंशता शरैः ।
सैन्धवं तु चतुःषष्ट्या विद्ध्वा सिंह इवानदत् ॥] ५४
सैन्धवस्तु तथा विद्धः शरैर्गाण्डीवधन्वना ।
न चक्षमे सुसंक्रुद्धस्तोत्रार्दित इव द्विपः ॥ ५५
स वराहध्वजस्तूर्णं गार्ध्रपत्रानजिह्मगान् ।
क्रुद्धाशीविषसंकाशान्कर्मारपरिमार्जितान् ॥ ५६
आकर्णपूर्णांश्चिक्षेप फल्गुनस्य रथं प्रति ।
त्रिभिस्तु विद्ध्वा गोविन्दं नाराचैः षड्भिरर्जुनम् ५७
अष्टभिर्वाजिनोऽविध्यद्ध्वजं चैकेन पत्रिणा ।
'भूयश्चैवार्जुनं सङ्ख्ये शरवर्षैरवाकिरत् ॥' ५८
स विक्षिप्यार्जुनस्तूर्णं सैन्धवप्रहिताञ्शरान् ।
युगपत्तस्य चिच्छेद शराभ्यां सैन्धवस्य ह ।
सारथेश्च शिरः कायाद्ध्वजं च समलंकृतम् ॥ ५९
स च्छिन्नयष्टिः सुमहान्धनञ्जयशराहतः ।

---

कुण्डलितः पाठः झ. पुस्तक एव विद्यते ॥ ४९ ॥

वराहः सिन्धुराजस्य पपातेन्दुसमप्रभः ॥ ६०
आदित्यं प्रेक्षमाणस्तु बीभत्सुः सृक्किणी लिहन् ।
अपश्यन्नान्तरं तस्य रक्षिभिः संवृतस्य वै ॥ ६१
अभवत्क्रोधरक्ताक्षो व्यात्तानन इवान्तकः ।
अथाब्रवीद्वासुदेवः कुन्तीपुत्रं धनञ्जयम् ॥ ६२
नैव शक्यस्त्वया हन्तुं निर्व्याजं भरतर्षभ ।
स्रक्ष्याम्यहमुपायं तमादित्यस्यापवारणे ।
ततोऽस्तं गतमादित्यं मंस्यते सिन्धुराडिह ॥ ६३
ततोऽस्य विस्मयः पार्थ हर्षश्चैव भविष्यति ।
आत्मजीवितलाभाच्च प्रतिज्ञायाश्च नाशनात् ६४
अस्तंगतमिवादित्यं दृष्ट्वा मोहेन बालिशः ।
न हि शक्ष्यत्यथाऽऽत्मानं रक्षितुं हर्षसंभवात् ॥ ६५
एतस्मिन्नेव काले तु प्रहर्तव्यं धनञ्जय ।
जयद्रथस्य क्षुद्रस्य सवितुर्दर्शनार्थिनः ॥ ६६
सञ्जय उवाच ।
एवमुक्त्वा ततः पार्थं क्षिप्रमेवाहरत्प्रभाम् ।
जनार्दनेन सृष्टं वै तम आदित्यनाशनम् ॥ ६७
पार्थस्य बलमज्ञानात्तमो दृष्ट्वा सुदुःखितम् ।
अभवंस्तावका योधा हर्षसंकुलचेतसः ॥ ६८
ते प्रहृष्टा रणे राजन्नपश्यन्सैनिका रविम् ।
उन्नाम्य वक्त्राणि तदा स च राजा जयद्रथः ॥ ६९
वीक्षमाणे ततस्तस्मिन्सिन्धुराजे दिवाकरम् ।
उन्नमय्य शिरोग्रीवां वीक्षते सूर्यमण्डलम् ।
तस्य शीघ्रं पृषत्केन कायाच्छीर्षमपाहर ॥ ७०
केशवेनैवमुक्तः सन्नमर्षाद्रक्तलोचनः ।
उद्बबर्ह शरं तीक्ष्णममरैरपि दुःसहम् ॥ ७१
एकं तूणीशयं घोरमिन्द्राशनिसमप्रभम् ।
वर्मभेदिनमत्यर्थं गन्धमाल्यार्चितं सदा ।
विससर्ज ततस्तूर्णं सैन्धवस्य रथं प्रति ॥ ७२
स तु गाण्डीवनिर्मुक्तः शरः श्येन इवाशुगः ।
शकुन्तमिव वृक्षाग्रात्सैन्धवस्याहरच्छिरः ॥ ७३
प्रपतिष्यति शीर्षे तु कृष्णोऽर्जुनमथाब्रवीत् ।
पार्थ पार्थ शिरो ह्येतद्यथा नेयान्महीतलम् ।
तथा कुरु कुरुश्रेष्ठ वक्ष्ये तस्यापि कारणम् ॥ ७४
श्रुत्वा तु वचनं तस्य त्वरमाणोऽस्त्रमायया ।
तथाऽहरच्छिरस्तस्य शरैरूर्ध्वं धनञ्जयः ।
दुर्हृदामपहर्षाय सुहृदां हर्षणाय च ॥ ७५
तिर्यगूर्ध्वमधश्चैव पुनरूर्ध्वमथापि च ।
दीर्घकालमवाकैव संप्रक्रीडन्निवार्जुनः ॥ ७६
तत्सैन्यं सर्वतोपश्यन्महदाश्चर्यमद्भुतम् ।
प्रापयत्स शिरो यस्माद्योधयन्नेव पार्थिवान् ॥ ७७
शरैः कन्दुकवत्कृत्वा तस्यालोकाय पाण्डवः ।
समन्तपञ्चकाद्बाह्ये शिरस्तदहरच्छरैः ॥ ७८

जयद्रथस्यार्जुनबाणनालं
　मुखारविन्दं रुधिराम्बुसिक्तम् ।
दृष्टं नरैश्चोपरिवर्तमानं
　विद्याधरोत्सृष्टमिवैकपद्मम् ॥ ७९
स देवशत्रूनिव देवराजः
　किरीटमाली व्यधमत्सपत्नान् ।
यथा तमांस्यभ्युदितस्तमोघ्नः
　पूर्णां प्रतिज्ञां स समाप्य वीरः ॥ ८०
अथाब्रवीत्केशवं पाण्डवेयः
　कियन्तमध्वानमिदं हरामि ।

उक्त्वा सृष्टं तमः कर्तृ प्रभामहरदित्यन्वयः ॥ ६७ ॥ बलं सैन्यं कर्तृ ॥ ६८ ॥ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

* अथाब्रवीदित्यादीनां वीक्षते सूर्यमण्डलं इत्यन्तानां श्लोकानां स्थाने अधोलिखिताः श्लोकाः ङ. पुस्तके वर्तन्ते ।

अनस्तमित आदित्ये एतान्निर्जित्य सैन्धवः ।
न शक्यो हन्तुमित्येवं मन्यमानो जनार्दनः ॥ १
सस्मार चक्रं दैत्यारिर्हरिश्चक्रं सुदर्शनम् ।
तदादिदेश भगवान्स्मृतमात्रमुपस्थितम् ॥ २
अस्तं गतमिवादित्यं तमसा च्छादयेति च ।
तत्तथोक्तं भगवता तमो भूत्वा विशांपते ॥ ३
अन्धं तम इवाज्ञानामादित्यस्याहरत्प्रभाम् ।
उन्नमय्य शिरोग्रीवामपश्यत्सैन्धवो रविम् ॥ ४
अथार्जुनं हृषीकेशः शोकपूर्णमथाब्रवीत् ।
पश्य कौन्तेय सिन्धूनामधिपं पापकारिणम् ॥ ५
एष तिष्ठति मध्ये वै स्यन्दनस्य धनञ्जय ।

किमर्थमेतन्न निपात्यमुर्व्यां
क्व च प्रयातव्यमिदं च शंस ।
शक्नोम्यहं यत्र भवान्ब्रवीति
तं भूमिदेशं च शिरो विनेतुम् ॥ ८१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

---

## अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

कृष्णेनार्जुनं प्रति सैन्धवमूर्ध्नो धरण्यामनिपातनीयत्वे कारणाभिधानम् ॥ १ ॥ कृष्णाज्ञयाऽर्जुनेन स्यमन्तपञ्चके सन्ध्यामुपासमानस्य वृद्धक्षत्रस्योत्सङ्गे जयद्रथशिरसो निपातनम् ॥ २ ॥ उत्तिष्ठमानस्य तस्योत्सङ्गाच्छिरसि धरण्यां पतिते वृद्धक्षत्रमूर्ध्नो विदारणम् ॥ ३ ॥

सञ्जय उवाच ।
एतस्मिन्नेव काले तु त्वरमाणे दिवाकरे ।
अब्रवीत्पाण्डवं तत्र त्वरमाणो जनार्दनः ॥ १
पार्थ पार्थ शिरो ह्येनद्यत्कृते न पतेद्भुवि
श्रूयतां तद्यथावृत्तं कारणं सैन्धवं प्रति ॥
वृद्धक्षत्रः सैन्धवस्य पिता जगति विश्रुतः

* १४७ तमाध्याये आदित्यं प्रेक्षमाणस्तु इत्यादि ६१ तमश्लोकमारभ्य १४८ तमाध्याये श्रूयतां तद्यथावृत्तं कारणं सैन्धवं प्रतीति २ तीयश्लोकपर्यन्तं विद्यमानानां २३ विंशतिश्लोकानां स्थाने ग. घ. ङ. झ. पुस्तकेषु अधोलिखिताः ४५ श्लोकाः दृश्यन्ते ।

एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे ।
अब्रवीत्पाण्डवं राजंस्त्वरमाणो जनार्दनः ॥ १
एष मध्ये कृतः षड्भिः पार्थ वीरैर्महारथैः ।
जीवितेप्सुर्महाबाहो भीतस्तिष्ठति सैन्धवः ॥ २
एताननिर्जित्य रणे षड्रथान्पुरुषर्षभ ।
न शक्यः सैन्धवो हन्तुं यतो निर्व्याजमर्जुन ॥ ३
योगमत्र विधास्यामि सूर्यस्यावरणं प्रति ।
अस्तं गत इति व्यक्तं द्रक्ष्यत्येकः स सिन्धुराट् ४
हर्षेण जीविताकाङ्क्षी विनाशार्थं तव प्रभो ।
न गोप्स्यति दुराचारः स आत्मानं कथंचन ॥ ५
तत्र च्छिद्रे प्रहर्तव्यं त्वयास्य कुरुसत्तम ।
व्यपेक्षा नैव कर्तव्या गतोऽस्तमिति भास्करः ॥६
एवमस्त्विति बीभत्सुः केशवं प्रत्यभाषत ।
ततोऽसृजत्तमः कृष्णः सूर्यस्यावरणं प्रति ॥ ७
योगी योगेन संयुक्तो योगिनामीश्वरो हरिः ॥ ८
सृष्टे तमसि कृष्णेन गतोऽस्तमिति भास्करः ।
त्वदीया जहृषुर्योधाः पार्थनाशान्नराधिप ॥ ९
ते प्रहृष्टा रणे राजन्नापश्यन्सैनिका रविम् ।
उन्नाम्य वक्त्राणि तदा स च राजा जयद्रथः ॥ १०
वीक्षमाणे ततस्तस्मिन्सिन्धुराजे दिवाकरम् ।
पुनरेवाब्रवीत्कृष्णो धनंजयमिदं वचः ॥ ११
पश्य सिन्धुपतिं वीरं प्रेक्षमाणं दिवाकरम् ।
भयं हि विप्रमुच्यैतत्त्वत्तो भरतसत्तम ॥ १२
अयं कालो महाबाहो वधायास्य दुरात्मनः ।
छिन्धि मूर्धानमस्याशु कुरु साफल्यमात्मनः ॥ १३
इत्येवं केशवेनोक्तः पाण्डुपुत्रः प्रतापवान् ।
न्यवधीत्तावकं सैन्यं शरैरर्काग्निसन्निभैः ॥ १४
कृपं विव्याध विंशत्या कर्णं पञ्चाशता शरैः ।
शल्यं दुर्योधनं चैव षड्भिः षड्भिरताडयत् ॥ १५
वृषसेनं तथाष्टाभिः षष्ट्या सैन्धवमेव च ।
तथैव च महाबाहुस्त्वदीयान्पाण्डुनन्दनः ।
गाढं विद्ध्वा शरै राजञ्जयद्रथमुपाद्रवत् ॥ १६
तं समीपस्थितं दृष्ट्वा लेलिहानमिवानलम् ।
जयद्रथस्य गोप्तारः संशयं परमं गताः ॥ १७
ततः सर्वे महाराज तव योधा जयैषिणः ।
सिषिचुः शरधाराभिः पाकशासनिमाहवे ॥ १८
संछाद्यमानः कौन्तेयः शरजालैरनेकशः ॥
अक्रुध्यत्स महाबाहुरजितः कुरुनन्दनः ॥ १९
ततः शरमयं जालं तुमुलं पाकशासनिः ।
व्यसृजत्पुरुषव्याघ्रस्तव सैन्यजिघांसया ॥ २०
ते हन्यमाना वीरेण योधा राजन्रणे तव ।
प्रजहुः सैन्धवं भीता द्वौ समं नाप्यधावताम् ॥ २१
तत्राद्भुतमपश्याम कुन्तीपुत्रस्य विक्रमम् ।
तादृङ् भावी भूतो वा यच्चकार महायशाः ॥ २२
द्विपान्द्विपगतांश्चैव हयान्हयगतानपि ।
तथा स रथिनश्चैव न्यहन्रुद्रः पशूनिव ॥ २३
न तत्र समरे कश्चिन्मया दृष्टो नराधिप ।
गजो वाजी नरो वापि यो न पार्थशराहतः ॥ २४
रजसा तमसा चैव योधाः संछन्नचक्षुषः ।
कश्मलं प्राविशन्घोरं नान्वजानन्परस्परम् ॥ २५

स च घोरेण तपसा सैन्धवं प्राप्तवान्सुतम् ॥ ३
जयद्रथममित्रघ्नं वागुवाचाशरीरिणी ।
नृपमन्तर्हिता वाणी मेघदुन्दुभिनिःस्वना ॥ ४
तवात्मजो मनुष्येन्द्र कुलशीलदमादिभिः ।
गुणैर्भविष्यति विभो सदृशो वंशयोर्द्वयोः ।
क्षत्रियप्रवरो लोके नित्यं शूराभिसत्कृतः ॥ ५
शिरश्छेत्स्यति संक्रुद्धः शत्रुश्चालक्षितो भुवि ॥ ६
एतच्छ्रुत्वा सिन्धुराजो ध्यात्वा चिरमरिंदमः ।
ज्ञातीन्सर्वानुवाचेदं पुत्रस्नेहाभिचोदितः ॥ ७
संग्रामे युध्यमानस्य वहतो महतीं धुरम् ।
धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः ॥ ८
तस्यापि शतधा मूर्धा फलिष्यति न संशयः ।
'यदि चेदस्ति मे लाभस्तपसो वा दमस्य वा ॥' ९
एवमुक्त्वा ततो राज्ये स्थापयित्वा जयद्रथम् ।
वृद्धक्षत्रो वनं यातस्तपश्चोग्रं समास्थितः ॥ १०
सोऽयं तप्यति तेजस्वी तपो घोरं दुरासदम् ।
स्यमन्तपञ्चकादस्माद्बहिर्वानरकेतन ॥ ११
तस्माज्जयद्रथस्य त्वं शिरश्छित्त्वा महामृधे ।
दिव्येनास्त्रेण रिपुहन्घोरेणाद्भुतकर्मणा ॥ १२
सकुण्डलं सिन्धुपतेः प्रभञ्जनसुतानुज ।
उत्सङ्गे पातयस्वास्य वृद्धक्षत्रस्य भारत ॥ १३
अथ त्वमस्य मूर्धानं पातयिष्यसि भूतले ।
तवापि शतधा मूर्धा फलिष्यति न संशयः ॥ १४
यथा चेदं न जानीयात्स राजा तपसि स्थितः ।
तथा कुरु कुरुश्रेष्ठ दिव्यमस्त्रमुपाश्रितः ॥ १५
न ह्यसाध्यमकार्यं वा विद्यते तव किंचन ।
समस्तेष्वपि लोकेषु त्रिषु वासवनन्दन ॥ १६
'यथैतत्सैन्धवशिरः शरेरेव धनञ्जय ।
वृद्धक्षत्रे पतत्येव तथा नीतिर्विधीयताम् ॥' १७
सञ्जय उवाच ।
ततः सुमहदाश्चर्यं तत्रापश्याम भारत ।
स्यमन्तपञ्चकाद्बाह्यं शिरो यन्न्यहरत्ततः ॥ १८
एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः ।
सन्ध्यामुपास्ते तेजस्वी संबन्धी तव मारिष ॥ १९
उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलम् ।
सिन्धुराजस्य मूर्धानमुत्सङ्गे समपातयन् ॥ २०

---

ते शरैर्भिन्नमर्माणः सैनिकाः पार्थचोदितैः ।
बभ्रमुश्चस्खलुः पेतुः सेदुर्मम्लुश्च भारत ॥ २६
तस्मिन्महाभीषणके प्रजानामिव संक्षये ।
रणे महति दुष्पारे वर्तमाने सुदारुणे ॥ २७
शोणितस्य प्रसेकेन शीघ्रत्वादनिलस्य च ।
अशाम्यत्तद्रजो भौममसृक्सिक्ते धरातले ॥ २८
आनाभि निरमज्जंश्च रथचक्राणि शोणिते ।
मत्ता वेगवता राजंस्तावकानां रणाङ्गणे ॥ २९
हस्तिनश्च हतारोहा दारिताङ्गाः सहस्रशः ।
स्वान्यनीकानि मृद्नन्त आर्तनादाः प्रदुद्रुवुः ॥ ३०
हयाश्च पतितारोहाः पत्तयश्च नराधिप ।
प्रदुद्रुवुर्भयाद्राजन्धनञ्जयशराहताः ॥ ३१
मुक्तकेशा विकवचाः क्षरन्तः क्षतजं क्षतैः ।
प्रापलायन्त संत्रस्तास्त्यक्त्वा रणशिरो जनाः ३२
ऊरुग्राहगृहीताश्च केचित्तत्राभवन्भुवि ।
हतानां चापरे मध्ये द्विरदानां निलिल्यिरे ॥ ३३
एवं तव बलं राजन्द्रावयित्वा धनञ्जयः ।
न्यवधीत्सायकैर्घोरैः सिन्धुराजस्य रक्षिणः॥ ३४
द्रौणिं कृपं कर्णशल्यौ वृषसेनं सुयोधनम् ।
छादयामास तीव्रेण शरजालेन पाण्डवः ॥ ३५
न गृह्णन्नक्षिपन्राजन्मुञ्चन्नापि च संदधत् ।
अदृश्यतार्जुनः सङ्ख्ये शीघ्रास्त्रत्वात्कथंचन ॥ ३६
धनुर्मण्डलमेवास्य दृश्यते स्मास्यतः सदा ।
सायकाश्च व्यदृश्यन्त निश्चरन्तः समन्ततः॥ ३७
कर्णस्य तु धनुश्छित्त्वा वृषसेनस्य चैव ह ।
शल्यस्य सूतं भल्लेन रथनीडादपातयत् ॥ ३८
गाढविद्धावुभौ कृत्वा शरैः स्वस्रीयमातुलौ ।
अर्जुनो जयतां श्रेष्ठो द्रौणिशारद्वतौ रणे ॥ ३९
एवं तान्व्याकुलीकृत्य त्वदीयानां महारथान् ।
उज्जहार शरं घोरं पाण्डवोऽनलसन्निभम् ॥ ४०
इन्द्राशनिसमप्रख्यं दिव्यमस्त्राभिमन्त्रितम् ।
सर्वभारसहं शश्वद्गन्धमाल्यार्चितं महत् ॥ ४१
वज्रेणास्त्रेण संयोज्य विधिवत्कुरुनन्दनः ।
समादधन्महाबाहुर्गाण्डीवे क्षिप्रमर्जुनः ॥ ४२
तस्मिन्सन्धीयमाने तु शरे ज्वलनतेजसि ।
अन्तरिक्षे महानादो भूतानामभवन्नृप ॥ ४३
अब्रवीच्च पुनस्तत्र त्वरमाणो जनार्दनः ।
धनञ्जय शिरश्छिन्धि सैन्धवस्य दुरात्मनः ॥ ४४
अस्तं महीधरश्रेष्ठं यियासति दिवाकरः ।
शृणुष्वैतच्च वाक्यं मे जयद्रथवधं प्रति ॥ ४५

तस्योत्सङ्गे निपतितं शिरस्तच्चारुकुण्डलम् ।
वृद्धक्षत्रस्य नृपतेरलक्षितमरिंदम ॥ २१
कृतजप्यस्य तस्याथ वृद्धक्षत्रस्य भारत ।
प्रोत्तिष्ठतस्तत्सहसा शिरोऽगच्छद्धरातलम् ॥ २२
ततस्तस्य नरेन्द्रस्य पुत्रमूर्धनि भूतले ।
गते तस्यापि शतधा मूर्धाऽगच्छदरिंदम ॥ २३
ततः सर्वाणि सैन्यानि विस्मयं जग्मुरुत्तमम् ।
वासुदेवश्च बीभत्सुं प्रशशंस महारथम् ॥ २४
'ततो दृष्ट्वा विनिहतं सिन्धुराजं जयद्रथम् ।
कर्मणा तेन पार्थस्य विस्मिताः सर्वदेवताः ॥ २५
सर्वदा समरे यस्य गोप्ता नित्यं जनार्दनः ।
कथं तस्य जयो न स्यादिति भूतानि मेनिरे ॥ २६
एतदर्थं शिरस्तस्य व्यापयामास पाण्डवः ।
स्यमन्तपञ्चकाद्बाह्यं शरैरेव यथाक्रमम् ॥ २७
कृत्वा तच्च महत्कर्म निहत्य च जयद्रथम् ।
अस्त्रं पाशुपतं पार्थः संहर्तुमुपचक्रमे ॥ २८
संहरत्यपि कौन्तेये तदस्त्रं तत्र भारत ।
ववौ शीतः सुगन्धश्च पवनो ह्लादयन्निव ॥ २९
संहारं च प्रमोक्षं च दृष्ट्वा तत्र दिवौकसः ।
विस्मयं परमं जग्मुः प्रशशंसुश्च पाण्डवम् ॥ ३०
एवमस्त्रेण तान्वीरो योधयित्वा धनञ्जयः ।
जयद्रथशिरः पश्चाद्व्यापयामास पाण्डवः ॥ ३१
तच्छिरश्च्यावमानं तु ददृशुस्तावका युधि ।
शल्यकर्णकृपा राजन्मोहिताः सव्यसाचिना ॥ ३२
शिरसि च्याविते तस्य शरैराशीविषोपमैः ।
पश्चात्कायोऽपतद्भूमिं शोचयन्सर्वपार्थिवान् ॥ ३३
दृष्ट्वा तु निहतं सङ्ख्ये सिन्धुराजं महारथम् ।
पुत्राणां तव नेत्रेभ्यो दुःखादास्रं प्रवर्तत ॥' ३४
ततो विनिहते राजन्सिन्धुराजे किरीटिना ।
तमस्तद्वासुदेवेन संहृतं भरतर्षभ ॥ ३५
पश्चाज्ज्ञातं महीपाल तव पुत्रैः सहानुगैः ।
वासुदेवप्रयुक्तेयं मायेति नृपसत्तम ॥ ३६
एवं स निहतो राजन्पार्थेनामिततेजसा ।
अक्षौहिणीरष्ट हत्वा जामाता तव सैन्धवः ॥ ३७
हतं जयद्रथं दृष्ट्वा तव पुत्रा नराधिप ।
दुःखादश्रूणि मुमुचुर्निराशाश्चाभवञ्जये ॥ ३८
ततो जयद्रथे राजन्हते पार्थेन केशवः ।
दध्मौ शङ्खं महाबाहुरर्जुनश्च परंतपः ॥ ३९
भीमश्च वृष्णिसिंहश्च युधामन्युश्च भारत ।
उत्तमौजाश्च विक्रान्तः शङ्खान्दध्मुः पृथक्पृथक् ॥
श्रुत्वा महान्तं तं शब्दं धर्मराजो युधिष्ठिरः ।
सैन्धवं निहतं मेने फल्गुनेन महात्मना ॥ ४१
ततो वादित्रघोषेण स्वान्योधान्पर्यहर्षयत् ।
अभ्यवर्तत संग्रामे भारद्वाजं युयुत्सया ॥ ४२
ततः प्रववृते राजन्नस्तं गच्छति भास्करे ।
द्रोणस्य सोमकैः सार्धं संग्रामो रोमहर्षणः ॥ ४३
ते तु सर्वे प्रयत्नेन भारद्वाजं जिघांसवः ।
सैन्धवे निहते राजन्नयुध्यन्त महारथाः ॥ ४४
पाण्डवास्तु जयं लब्ध्वा सैन्धवं विनिहत्य च ।
अयोधयंस्तु ते द्रोणं जयोऽन्मत्तास्ततस्ततः ॥४५
अर्जुनोऽपि ततो योधांस्तावकान्रथसत्तमान् ।
अयोधयन्महाबाहुर्हत्वा सैन्धवकं नृपम् ॥ ४६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

## एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

अर्जुनेन निजशराहतिमोहितं कृपंप्रति शोचनम् ॥ १ ॥ सार्जुनेन कृष्णेन युधिष्ठिरमेत्य जयद्रथवधकथनम् ॥ २ ॥ भीमादीनां युधिष्ठिरसमीपसमागमनम् ॥ ३ ॥

धृतराष्ट्र उवाच ।
तस्मिन्विनिहते वीरे सैन्धवे सव्यसाचिना ।
मामका यदकुर्वन्त तन्ममाचक्ष्व सञ्जय ॥ १
'पश्यतां सर्वसैन्यानां मामकानां महारणे ।
अहन्यत कथं युद्धे सैन्धवः सव्यसाचिना ॥ २
कथं द्रौणिकृपैर्गुप्तः कर्णेन च महारणे ।

फल्गुनाग्निमुखं घोरं प्रविष्टः साधु सैन्धवः ॥ ३
तस्मिन्हते महेष्वासे मन्दात्मा स सुयोधनः।
भ्रातृभिः सहितः सूत किमकार्षीदनन्तरम् ॥' ४
सञ्जय उवाच।
सैन्धवं निहतं दृष्ट्वा रणे पार्थेन भारत।
अमर्षवशमापन्नः कृपः शारद्वतस्ततः ॥ ५
महता शरवर्षेण पाण्डवं समवाकिरत्।
द्रौणिश्चाभ्यद्रवद्राजन्रथमास्थाय फल्गुनम् ॥ ६
तावेतौ रथिनां श्रेष्ठौ रथाभ्यां रथसत्तमौ।
उभावुभयतस्तीक्ष्णैर्विशिखैरभ्यवर्षताम् ॥ ७
स तथा शरवर्षाभ्यां सुमहद्भ्यां महाभुजः।
पीड्यमानः परामार्तिमगमद्रथिनां वरः ॥ ८
सोऽजिघांसुर्गुरुं सङ्ख्ये गुरोस्तनयमेव च।
चकाराचार्यकं तत्र कुन्तीपुत्रो धनञ्जयः ॥ ९
अस्त्रैरस्त्राणि संवार्य द्रौणेः शारद्वतस्य च।
मन्दवेगानिषूंस्ताभ्यामजिघांसुरवासृजत् ॥ १०
ते नातिभृशं त्रस्तौ विशिखैर्भृशपीडितौ।
बहुत्वात्तु परामार्तिं शराणां तावगच्छताम् ॥ ११
अथ शारद्वतो राजन्कौन्तेयशरपीडितः।
अवासीदद्रथोपस्थे मूर्च्छामभिजगाम ह ॥ १२
विह्वलं तमभिज्ञाय भर्तारं शरपीडितम्।
हतोऽयमिति च ज्ञात्वा सारथिस्तमपावहत् ॥१३
तस्मिन्भग्ने महाराज कृपे शारद्वते युधि।
अश्वत्थामाप्यपायासीत्पाण्डवेयाद्रथान्तरम् ॥१४
दृष्ट्वा शारद्वतं पार्थो मूर्च्छितं शरपीडितम्।
धिग्धिङ्मामिति चैवोक्त्वा कृपणं पर्यदेवयत्।
अश्रुपूर्णमुखो दीनो वचनं चेदमब्रवीत् ॥ १५
पश्यन्निदं महाप्राज्ञः क्षत्ता राजानमुक्तवान्।
कुलान्तकरणे पापे जातमात्रे सुयोधने ॥ १६
नीयतां परलोकाय साध्वयं कुलपांसनः।
अस्माद्धि कुरुमुख्यानां महदुत्पत्स्यते भयम् ॥१७
तदिदं समनुप्राप्तं वचनं सत्यवादिनः।
तत्कृते ह्यद्य पश्यामि शरतल्पगतं गुरुम् ॥ १८
धिगस्तु क्षात्रमाचारं धिगस्तु बलपौरुषम्।
को हि ब्राह्मणमाचार्यमभिद्रुह्येत मादृशः ॥ १९
ऋषिपुत्रो ममाचार्यो द्रोणस्य परमः सखा।
एष शेते रथोपस्थे कृपो मद्बाणपीडितः ॥ २०
अकामयानेन मया विशिखैरर्दितो भृशम्।
अवसीदन्रथोपस्थे प्राणान्पीडयतीव मे ॥ २१
पुत्रशोकाभितप्तेन शरैरभ्यर्दितेन च।
अभ्यस्तो बहुभिर्बाणैर्दशधर्मगतेन वै ॥ २२
'शरार्दितः स हि मया प्रेक्षमाणो महाद्युतिः।'
शोचयत्येष नियतं भूयः पुत्रवधाद्धि माम्।
कृपणं स्वरथे सन्नं पश्य कृष्ण यथागतम् ॥ २३
उपाकृत्य तु वै विद्यामाचार्येभ्यो नरर्षभाः।
प्रयच्छन्तीह ये कामान्देवत्वमुपयान्ति ते ॥ २४
ये च विद्यामुपादाय गुरुभ्यः पुरुषाधमाः।
घ्नन्ति तानेव दुर्वृत्तास्ते वै निरयगामिनः ॥ २५
तदिदं नरकायाद्य कृतं कर्म मया ध्रुवम्।
आचार्यं शरवर्षेण रथे सादयता कृपम् ॥ २६
यत्तत्पूर्वमुपाकुर्वन्नस्त्रं मामब्रवीत्कृपः।
न कथंचन कौरव्य प्रहर्तव्यं गुराविति ॥ २७
तदिदं वचनं साधोराचार्यस्य महात्मनः।
नानुष्ठितं तमेवाजौ विशिखैरभिवर्षता ॥ २८
नमस्तस्मै सुपूज्याय गौतमायापलायिने।
धिगस्तु मम वार्ष्णेय यदस्मै प्रहराम्यहम् ॥ २९
सञ्जय उवाच।
तथा विलपमाने तु सव्यसाचिनि तं प्रति।
*ततो राजन्हृषीकेशः संग्राममशिरसि स्थितम्।
तीर्णप्रतिज्ञं बीभत्सुं परिष्वज्यैनमब्रवीत् ॥ ३०

अजिघांसुर्हन्तुमनिच्छन्। आचार्यकं गुरोः संमानम् ॥ ९॥ अवासीददवसन्नः ॥ १२ ॥ इदं कुलक्षयगुरुद्रोहादिकम् ॥१६॥ शरतल्पगतं शरपञ्जरगतम् ॥ १८ ॥ अभ्यस्तोऽसकृन्निहतः। दशधर्मगतेन दुरवस्थागतेन ॥ २२ ॥ शोचयति शोकं कारयति। एष द्रोणः। भूयोऽधिकं पुत्रवधात् ॥ २३ ॥ उपाकृत्य अधीत्य ॥ २४ ॥ उपाकुर्वन् आध्यापयन् ॥ २७ ॥

* ततो राजन्हृषीकेश इत्यादि महाप्रभावा बहवस्त्वया तुल्याधिकापि वा इत्यन्ताः सार्धचत्वारः श्लोकाः झ. पुस्तके १४६ तमाध्यायस्य २५ तमश्लोकादुपरि विद्यन्ते।

दिष्ट्या संपादिता जिष्णो प्रतिज्ञा महती त्वया ।
दिष्ट्या विनिहतः पापो वृद्धक्षत्रः सहात्मजः॥३१
धार्तराष्ट्रबलं प्राप्य देवसेनापि भारत ।
सीदेत समरे जिष्णो नात्र कार्या विचारणा॥ ३२
न तं पश्यामि लोकेषु चिन्तयन्पुरुषं क्वचित् ।
त्वदृते पुरुषव्याघ्र य एतद्योधयेद्बलम् ॥ ३३
महाप्रभावा बहवस्त्वया तुल्याधिकापि वा ।
समेताः पृथिवीपाला धार्तराष्ट्रस्य कारणात्॥ ३४
ते त्वां प्राप्य रणे क्रुद्धा नाभ्यवर्तन्त दंशिताः।
तव वीर्यं बलं चैव रुद्रशक्रान्तकोपमम् ॥ ३५
नेदृशं शक्नुयात्कश्चिद्रणे कर्तुं पराक्रमम् ।
यादृशं कृतवानद्य त्वमेकः शत्रुतापनः ॥ ३६
एवमेव हते कर्णे सानुबन्धे दुरात्मनि ।
वर्धयिष्यामि भूयस्त्वां विजितारिं हतद्विषम्॥३७
तमर्जुनः प्रत्युवाच प्रसादात्तव माधव ।
प्रतिज्ञेयं मया तीर्णा विबुधैरपि दुस्तरा ॥ ३८
अनाश्चर्यो जयस्तेषां येषां नाथोऽसि केशव ।
त्वत्प्रसादान्महीं कृत्स्नां संप्राप्स्यति युधिष्ठिरः ३९
तवैष भारो वार्ष्णेय तवैव विजयः प्रभो ।
वर्धनीयास्तव वयं प्रेष्याश्च मधुसूदन ॥ ४०
एवमुक्तस्ततः कृष्णः शनकैर्वाहयन्हयान् ।
दर्शयामास पार्थाय क्रूरमायोधनं महत् ॥ ४१
श्रीकृष्ण उवाच ।
प्रार्थयन्तो जयं युद्धे प्रथितं च महद्यशः ।
पृथिव्यां शेरते शूराः पार्थिवास्त्वच्छरैर्हताः॥४२
विकीर्णशस्त्राभरणा विपन्नाश्वरथद्विपाः ।
संछिन्नभिन्नमर्माणो वैक्लव्यं परमं गताः ॥ ४३
ससत्वा गतसत्वाश्च प्रभया परया युताः ।
सजीवा इव लक्ष्यन्ते गतसत्वा नराधिपाः॥ ४४
तेषां शरैः स्वर्णपुङ्खैः शस्त्रैश्च विविधैः शितैः ।
वाहनैरायुधैश्चैव संपूर्णां पश्य मेदिनीम् ॥ ४५
वर्मभिश्चर्मभिर्हारैः शिरोभिश्च सकुण्डलैः ।
उष्णीषैर्मकुटैः स्रग्भिश्चूडामणिभिरम्बरैः ॥ ४६
कण्ठसूत्रैरङ्गदैश्च निष्कैरपि च सप्रभैः ।
अन्यैश्चाभरणैश्चित्रैर्भाति भारत मेदिनी ॥ ४७
[अनुकर्षैरुपासङ्गैः पताकाभिर्ध्वजैस्तथा ।
उपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ॥ ४८
चक्रैः प्रमथितैश्चित्रैरक्षैश्च बहुधा रणे ।
युगैर्योक्त्रैः कलापैश्च धनुर्भिः सायकैस्तथा ॥ ४९
परिस्तोमैः कुथाभिश्च परिघैरङ्कुशैस्तथा ।
शक्तिभिर्भिण्डिपालैश्च तूणैः शूलैः परश्वधैः॥५०
प्रासैश्च तोमरैश्चैव कुन्तैर्यष्टिभिरेव च ।
शतघ्नीभिर्भुशुण्डीभिः खड्गैः परशुभिस्तथा॥ ५१
मुसलैर्मुद्गरैश्चैव गदाभिः कुणपैस्तथा ।
सुवर्णविकृताभिश्च कशाभिर्भरतर्षभ ॥ ५२
घण्टाभिश्च गजेन्द्राणां भाण्डैश्च विविधैरपि ।
स्रग्भिश्च नानाभरणैर्वस्त्रैश्चैव महाधनैः ।
अपविद्धैर्बभौ भूमिर्ग्रहैर्द्यौरिव शारदी ॥ ५३
पृथिव्यां पृथिवीहेतोः पृथिवीपतयो हताः ।
पृथिवीमुपगुह्याङ्गैः सुप्ताः कान्तामिव प्रियाम्॥५४
इमांश्च गिरिकूटाभान्नागानैरावतोपमान् ।
क्षरतः शोणितं भूरि शस्त्रच्छेददरीमुखैः ।
दरीमुखैरिव गिरीन्गैरिकाम्बुपरिस्रवान् ॥ ५५
तांश्च बाणहतान्वीर पश्य निष्टनतः क्षितौ ।
हयांश्च पतितान्पश्य स्वर्णभाण्डविभूषितान्॥ ५६
गन्धर्वनगराकारान्रथांश्च निहतेश्वरान् ।
छिन्नध्वजपताकाक्षान्विचक्रान्हतसारथीन्॥ ५७
निकृत्तकूबरयुगान्भग्नेषान्बन्धुरान्प्रभो ।
पश्य पार्थ हयान्भूमौ विमानोपमदर्शनान्॥ ५८
पत्तींश्च निहतान्वीर शतशोऽथ सहस्रशः ।
धनुर्भृतश्चर्मभृतः शयानान्रुधिरोक्षितान् ॥ ५९
महीमालिङ्ग्य सर्वाङ्गैः पांसुध्वस्तशिरोरुहान् ।
पश्य योधान्महाबाहो त्वच्छरैर्भिन्नविग्रहान्॥ ६०
निपातितद्विपरथवाजिसंकुल-
मसृग्वसापिशितसमृद्धकर्दमम् ।
निशाचरश्ववृकपिशाचमोदनं
महीतलं नरवर पश्य दुर्दृशम् ॥ ६१

कुण्डलिताः श्लोकाः झ. पुस्तक एव दृश्यन्ते ॥ ४८

एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

इदं महत्त्वय्युपपद्यते प्रभो
रणाजिरे कर्म यशोऽभिवर्धनम् ।
शतक्रतौ चापि च देवसत्तमे
महाहवे जघ्नुपि दैत्यदानवान् ॥] ६२
सञ्जय उवाच ।
एवं संदर्शयन्कृष्णो रणभूमिं किरीटिने ।
स्वैः समेतः समुदितैः पाञ्चजन्यं व्यनादयत् ॥ ६३
'सात्यकिः पार्थमभ्यायाद्भीमसेनश्च पाण्डवः ।
युधामन्यूत्तमौजौ च पाञ्चालस्यात्मजावुभौ ॥ ६४
ते निवार्य शरैर्द्रौणिं कर्णं च सह भूमिपैः ।
आगच्छन्रथिनश्चैव यत्र राजा युधिष्ठिरः ॥' ६५
स दर्शयन्नेव किरीटिनेऽरिहा
जनार्दनस्तामरिभूमिमञ्जसा ।
अजातशत्रुं समुपेत्य पाण्डवं
निवेदयामास हतं जयद्रथम् ॥ ६६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

## पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

युधिष्ठिरेण स्वाभिवादकानां कृष्णभीमार्जुनसात्यकीनामालिङ्गनादिना सत्कारः ॥ १ ॥ कृष्णयुधिष्ठिरयोः संलापः ॥ २ ॥

सञ्जय उवाच ।
ततो राजानमभ्येत्य धर्मपुत्रं युधिष्ठिरम् ।
ववन्दे संप्रहृष्टात्मा हते पार्थेन सैन्धवे ॥ १
दिष्ट्या वर्धसि राजेन्द्र हतशत्रुर्नरोत्तम ।
दिष्ट्या निस्तीर्णवांश्चैव प्रतिज्ञामनुजस्तव ॥ २
स त्वेवमुक्तः कृष्णेन हृष्टः परपुरंजयः ।
ततो युधिष्ठिरो राजा रथादाप्लुत्य भारत ।
पर्यष्वजत्तदा कृष्णावानन्दाश्रुपरिप्लुतः ॥ ३
प्रमृज्य वदनं शुभ्रं पुण्डरीकसमप्रभम् ।
अब्रवीद्वासुदेवं च पाण्डवं च धनञ्जयम् ॥ ४
प्रियमेतदुपश्रुत्य त्वत्तः पुष्करलोचन ।
नान्तं गच्छामि हर्षस्य तितीर्षुरुदधेरिव ॥ ५
अत्यद्भुतमिदं कृष्ण कृतं पार्थेन धीमता ।
दिष्ट्या पश्यामि संग्रामे तीर्णभारौ महारथौ ॥ ६
दिष्ट्या च निहतः पापः सैन्धवः पुरुषाधमः ।
'दिष्ट्या शत्रुगणाश्चैव निमग्नाः शोकसागरे ॥' ७
कृष्ण दिष्ट्या मम प्रीतिर्महती प्रतिपादिता ।
त्वया गुप्तेन गोविन्द घ्नता पापं जयद्रथम् ॥ ८
किंतु नात्यद्भुतं तेषां येषां नस्त्वं समाश्रयः ।
न तेषां दुष्कृतं किंचित्त्रिषु लोकेषु विद्यते ।
सर्वलोकगुरुर्येषां त्वं नाथो मधुसूदन ॥ ९
त्वत्प्रसादाद्धि गोविन्द वयं जेष्यामहे रिपून् ।
'यथा पुरा प्रसादात्ते दानवान्पाकशासनः ॥ १०
पृथिव्या विजयो वापि त्रैलोक्यविजयोऽपि वा ।
ध्रुवो हि तेषां वार्ष्णेय येषां तुष्टोऽसि मानद ॥ ११
न तेषां विद्यते पापं संग्रामे वा पराजयः ।
त्रिदशेश्वर नाथस्त्वं येषां तुष्टोऽसि माधव ॥ १२
त्वत्प्रसादाद्धृषीकेश शक्रः सुरगणेश्वरः ।
त्रैलोक्यविजयं श्रीमान्प्राप्तवान्रणमूर्धनि ॥ १३
तव चैव प्रसादेन त्रिदशास्त्रिदशेश्वराः ।
अमरत्वं गताः कृष्ण लोकांश्चाश्नुवतेऽक्षयान् ॥' १४
स्थितः सर्वात्मना नित्यं प्रियेषु च हितेषु च ।
त्वां चैवास्माभिराश्रित्य कृतः शस्त्रसमुद्यमः ।
सुरैरिवासुरवधे शक्रे शक्रानुजाहवे ॥ १५
असंभाव्यमिदं कर्म देवैरपि जनार्दन ।
त्वद्बुद्धिबलवीर्येण कृतवानेष फल्गुनः ॥ १६
बाल्यात्प्रभृति ते कृष्ण कर्माणि श्रुतवानहम् ।
अमानुषाणि दिव्यानि महान्ति च बहूनि च ।
तदैवाज्ञासिषं शत्रून्हतान्प्राप्तां च मेदिनीम् ॥ १७
त्वत्प्रसादसमुत्थेन विक्रमेणारिसूदन ।

गुप्तेन अर्जुनेनेति शेषः ॥ ८ ॥

शक्रानुजेति कृष्णं प्रति संबोधनम् ॥ १५ ॥

सुरेशत्वं गतः शक्रो हत्वा दैत्यान्सहस्रशः ॥ १८
त्वत्प्रसादाद्धृषीकेश जगत्स्थावरजङ्गमम् ।
स्ववर्त्मनि स्थितं वीर जपहोमेषु वर्तते ॥ १९
एकार्णवमिदं पूर्वं सर्वमासीत्तमोमयम् ।
त्वत्प्रसादान्माहाबाहो जगत्प्राप्तं नरोत्तम ॥ २०
स्रष्टारं सर्वलोकानां परमात्मानमव्ययम् ।
ये पश्यन्ति हृषीकेश न ते मुह्यन्ति कर्हिचित् ॥ २१
पुराणं परमं देवं देवदेवं सनातनम् ।
ये प्रपन्नाः सुरगुरुं न ते मुह्यन्ति कर्हिचित् ॥ २२
अनादिनिधनं देवं लोककर्तारमव्ययम् ।
ये भक्तास्त्वां हृषीकेश दुर्गाण्यतितरन्ति ते ॥ २३
परं पुराणं पुरुषं पराणां परमं च यत् ।
प्रपद्यतस्तत्परमं परा भूतिर्विधीयते ॥ २४
गायन्ति चतुरो वेदा यश्च वेदेषु गीयते ।
तं प्रपद्य महात्मानं भूतिमश्नाम्यनुत्तमाम् ॥ २५
परमेश परेशेश तिर्यगीश नरेश्वर ।
सर्वेश्वरेश्वरेशेश नमस्ते पुरुषोत्तम ॥ २६
त्वमीशेशेश्वरेशान प्रभो वर्धस्व माधव ।
प्रभवाप्यय सर्वस्य सर्वात्मन्पृथुलोचन ॥ २७
धनञ्जयसखा यश्च धनञ्जयहितश्च यः ।
धनञ्जयस्य गोप्ता तं प्रपद्य सुखमेधते ॥ २८
[मार्कण्डेयः पुराणर्षिश्चरितज्ञस्तवानघ ।
माहात्म्यमनुभावं च पुरा कीर्तितवान्मुनिः ॥ २९
सितो देवलश्चैव नारदश्च महातपाः ।
पितामहश्च मे व्यासस्त्वामाहुर्विधिमुत्तमम् ॥ ३०
त्वं तेजस्त्वं परं ब्रह्म त्वं सत्यं त्वं महत्तपः ।
त्वं श्रेयस्त्वं यशश्चाग्र्यं कारणं जगतस्तथा ॥ ३१
त्वया सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम् ।
प्रलये समनुप्राप्ते त्वां वै निविशते पुनः ॥ ३२
अनादिनिधनं देवं विश्वस्येशं जगत्पते ।
धातारमजमव्यक्तमाहुर्वेदविदो जनाः ॥ ३३
भूतात्मानं महात्मानमनन्तं विश्वतोमुखम् ।
अपि देवा न जानन्ति गुह्यमाद्यं जगत्पतिम् ।
नारायणं परं देवं परमात्मानमीश्वरम् ॥ ३४
ज्ञानयोनिं हरिं विष्णुं मुमुक्षूणां परायणम् ।
परं पुराणं पुरुषं पुराणानां परं च यत् ॥ ३५
एवमादिगुणानां ते कर्मणां दिवि चेह च ।
अतीतभूतभव्यानां सङ्ख्याताऽत्र न विद्यते ॥ ३६
सर्वतो रक्षणीयाः स शक्रेणेव दिवौकसः ।
यैस्त्वं सर्वगुणोपेतः सुहृन्न उपपादितः ॥ ३७
इत्येवं धर्मराजेन हरिरुक्तो महायशाः ।
अनुरूपमिदं वाक्यं प्रत्युवाच जनार्दनः ॥ ३८
भवता तपसोग्रेण धर्मेण परमेण च ।
साधुत्वादार्जवाच्चैव हतः पापो जयद्रथः ॥ ३९
अयं च पुरुषव्याघ्र त्वदनुध्यानसंवृतः ।
हत्वा योधसहस्राणि न्यहञ्जिष्णुर्जयद्रथम् ॥ ४०
कृतित्वे बाहुवीर्ये च तथैवासंभ्रमेऽपि च ।
शीघ्रतामोघबुद्धित्वे नास्ति पार्थसमः क्वचित् ॥ ४१
तदयं भरतश्रेष्ठ भ्राता तेऽद्य यदर्जुनः ।
सैन्यक्षयं रणे कृत्वा सिन्धुराजशिरोऽहरत् ॥ ४२
ततो धर्मसुतो जिष्णुं परिष्वज्य विशांपते ।
प्रमृज्य वदनं तस्य पर्याश्वासयत प्रभुः ॥ ४३
अतीव सुमहत्कर्म कृतवानसि फल्गुन ।
असह्यं चाविषह्यं च देवैरपि सवासवैः ॥ ४४
दिष्ट्या निस्तीर्णभारोऽसि हतारिश्चासि शत्रुहन् ।
दिष्ट्या सत्या प्रतिज्ञेयं कृता हत्वा जयद्रथम् ॥ ४५
एवमुक्त्वा गुडाकेशं धर्मराजो महायशाः ।
पस्पर्श पुण्यगन्धेन पृष्ठे हस्तेन पार्थिवः ॥] ४६
सञ्जय उवाच ।
एवमुक्तौ महात्मानावुभौ केशवपाण्डवौ ।
तावब्रूतां तदा कृष्णौ राजानं पृथिवीपतिम् ॥ ४७
तव कोपाग्निना दग्धः पापो राजञ्जयद्रथः ।
उत्तीर्णं चापि सुमहद्धार्तराष्ट्रबलं रणे ॥ ४८

चतुरश्चत्वारः ॥ २५ ॥ त्वमिति । हेईशेश रुद्राद्याराध्य । ईश्वरा राजानस्तेषामपीशानो धर्मः । तदेतत्क्षत्रस्य क्षत्रं यद्धर्म इति श्रुतेस्तस्यापि प्रभो । धर्मस्य प्रभुरच्युत इति स्मृतेः ॥ २७ ॥ सखा वयस्यः । हितः प्रियकृत् । गोप्ता दुःखनिवारकः ॥ २८ ॥ कुण्डलितः पाठः झ. पुस्तक एव दृश्यते ॥ २९ ॥ उत्तीर्णं लङ्घितम् ॥ ४८ ॥

युधिष्ठिर उवाच ।
हन्यन्ते निहताश्चैव विनङ्क्ष्यन्ति च केशव ।
तव क्रोधहता ह्येते कौरवाः शत्रुसूदन ॥ ४९
त्वां हि चक्षुर्हणं वीर कोपयित्वा सुयोधनः ।
समित्रबन्धुः समरे प्राणांस्त्यक्ष्यति दुर्मतिः ॥ ५०
तव क्रोधहतः पूर्वं देवैरपि सुदुर्जयः ।
शरतल्पगतः शेते भीष्मः कुरुपितामहः ॥ ५१
दुर्लभो विजयस्तेषां संग्रामे रिपुघातिनाम् ।
याता मृत्युवशं ते वै येषां क्रुद्धोऽसि माधव ॥ ५२
राज्यं प्राणाः श्रियः पुत्राः सौख्यानि विविधानि च
अचिरात्तस्य नश्यन्ति येषां क्रुद्धोऽसि मानद ॥ ५३
भगवानुवाच ।
विनष्टान्कौरवान्मन्ये सपुत्रपशुबान्धवान् ।
राजधर्मपरे नित्यं त्वयि क्रुद्धे परंतप ॥ ५४
सञ्जय उवाच ।
ततो भीमो महाबाहुः सात्यकिश्च महारथः ।
अभिवाद्य गुरुं ज्येष्ठं मार्गणैः क्षतविक्षतौ ।
क्षिताबास्तां महेष्वासौ पाञ्चाल्यपरिवारितौ ॥ ५५
तौ दृष्ट्वा मुदितो वीरौ प्राञ्जली चाग्रतः स्थितौ ।
अभ्यनन्दत कौन्तेयस्तावुभौ भीमसात्यकी ॥ ५६
दिष्ट्या पश्यामि वां शूरौ विमुक्तौ सैन्यसागरात् ।
द्रोणग्राहदुराधर्षाद्धार्दिक्यमकरालयात् ॥ ५७
दिष्ट्या विनिर्जिताः सङ्ख्ये पृथिव्यां सर्वपार्थिवाः ।
युवां विजयिनौ चापि दिष्ट्या पश्यामि संयुगे ॥ ५८
दिष्ट्या द्रोणो जितः सङ्ख्ये हार्दिक्यश्च महाबलः ।
दिष्ट्या विकर्णिभिः कर्णो रणे नीतः पराभवम् ॥ ५९
विमुखश्च कृतः शल्यो युवाभ्यां पुरुषर्षभौ ।
दिष्ट्या युवां कुशलिनौ संग्रामात्पुनरागतौ ।
पश्यामि रथिनां श्रेष्ठावुभौ युद्धविशारदौ ॥ ६०
मम वाक्यकरौ वीरौ मम गौरवयन्त्रितौ ।
सैन्यार्णवं समुत्तीर्णौ दिष्ट्या पश्यामि वामहम् ६१
समरश्लाघिनौ वीरौ समरेष्वपराजितौ ।
मम वाक्यसमौ चैव दिष्ट्या पश्यामि वामहम् ६२
इत्युक्त्वा पाण्डवो राजन्युयुधानवृकोदरौ ।
सस्वजे पुरुषव्याघ्रौ हर्षाद्बाष्पं मुमोच ह ॥ ६३
ततः प्रमुदितं सर्वं बलमासीद्विशांपते ।
पाण्डवानां रणे हृष्टं युद्धाय तु मनो दधे ॥ ६४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

---

## एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

सैन्धववधदुःखितेन दुर्योधनेन द्रोणमेत्य आत्मोपालम्भपूर्वकं परिशोचनम् ॥ १ ॥

सञ्जय उवाच ।
सैन्धवे निहते राजन्पुत्रस्तव सुयोधनः ।
[अश्रुपूर्णमुखो दीनो निरुत्साहो द्विषज्जये ॥ १
दुर्मना निःश्वसन्दुष्टो भग्नदंष्ट्र इवोरगः ।
आगस्कृत्सर्वलोकस्य पुत्रस्तेऽर्तिं परामगात् ॥ २
दृष्ट्वा तत्कदनं घोरं स्वबलस्य कृतं महत् ।
जिष्णुना भीमसेनेन सात्वतेन च संयुगे ॥ ३
स विवर्णः कृशो दीनो बाष्पविप्लुतलोचनः ।]
अमन्यतार्जुनसमो न योद्धा भुवि विद्यते ॥ ४
न द्रोणो न च राधेयो नाश्वत्थामा कृपो न च ।
पार्थस्य संमुखे स्थातुं पर्याप्ता इति मारिष ॥ ५
निर्जित्य हि रणे पार्थः सर्वान्मम महारथान् ।
अवधीत्सैन्धवं सङ्ख्ये न च कश्चिदवारयत् ॥ ६
सर्वथा हतमेवेदं कौरवाणां महद्बलम् ।
न ह्यस्य विद्यते त्राता साक्षादपि पुरंदरः ॥ ७
यमुपाश्रित्य संग्रामे कृतः शस्त्रसमुद्यमः ।

---

चक्षुर्हणं क्रोधदृष्टिमात्रेण हन्तारम् ॥ ५० ॥ पञ्चाशदधिकशततमोऽध्यायः ॥ ५० ॥

आर्तिमिति च्छेदः ॥ २ ॥

स कर्णो निर्जितः सङ्ख्ये हतश्चैव जयद्रथः ॥ ८
'परुषाणि सभामध्ये प्रोक्तवान्यो हि पाण्डवान् ।
स कर्णो निर्जितः सङ्ख्ये सैन्धवश्च निपातितः ॥ ९
यस्य वीर्यं समाश्रित्य शर्म याचन्तमच्युतम् ।
तृणवत्तमहं मन्ये स कर्णो निर्जितो युधि ॥ १०
एवं क्लान्तमना राजन्नुपायाद्द्रोणमीक्षितुम् ।
आगस्कृत्सर्वलोकस्य पुत्रस्ते भरतर्षभ ॥ ११
ततस्तत्सर्वमाचख्यौ कुरूणां वैशसं महत् ।
परान्विजयतश्चापि धार्तराष्ट्रान्निमज्जतः ॥ १२
दुर्योधन उवाच ।
पश्य मूर्धाभिषिक्तानामाचार्य कदनं महत् ।
कृत्वा प्रमुखतः शूरं भीष्मं मम पितामहम् ॥ १३
तं निहत्य प्रलुब्धोऽयं शिखण्डी पूर्णमानसः ।
पाञ्चाल्यैः सहितः सर्वैः सेनाग्रमभिवर्तते ॥ १४
अपरश्चापि दुर्धर्षः शिष्यस्ते सव्यसाचिना ।
अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ॥ १५
अस्मद्विजयकामानां सुहृदामुपकारिणाम् ।
गन्ताऽस्मि कथमानृण्यं गतानां यमसादनम् ॥ १६
ये मदर्थं परीप्सन्ते वसुधां वसुधाधिपाः ।
ते हित्वा वसुधैश्वर्यं वसुधामधिशेरते ॥ १७
सोऽहं कापुरुषः कृत्वा मित्राणां क्षयमीदृशम् ।
अश्वमेधसहस्रेण पावितुं न समुत्सहे ॥ १८
मम लुब्धस्य पापस्य तथा धर्मापचायिनः ।
व्यायामेन जिगीषन्तः प्राप्ता वैवस्वतक्षयम् ॥ १९
कथं पतितवृत्तस्य पृथिवी सुहृदां द्रुहः ।
विवरं नाशकद्दातुं मम पार्थिवसंसदि ॥ २०
योऽहं रुधिरसिक्ताङ्गं राज्ञां मध्ये पितामहम् ।
शयानं नाशकं त्रातुं भीष्ममायोधने हतम् ॥ २१
तं मामनार्यपुरुषं मित्रद्रुहमधार्मिकम् ।
किं वक्ष्यति हि दुर्धर्षः समेत्य परलोकजित् ॥ २२
जलसन्धं महेष्वासं पश्य सात्यकिना हतम् ।
मदर्थमुद्यतं शूरं प्राणांस्त्यक्त्वा महारथम् ॥ २३
काम्भोजं निहतं दृष्ट्वा तथालम्बुसमेव च ।
अन्यान्बहूंश्च सुहृदो जीवितार्थोऽद्य को मम ॥ २४
व्यायच्छन्तो हताः शूरा मदर्थे ये पराङ्मुखाः ।
यतमानाः परं शक्त्या विजेतुमहितान्मम ॥ २५
तेषां गत्वाऽहमानृण्यमद्य शक्त्या परंतप ।
तर्पयिष्यामि तानेव जलेन यमुनामनु ॥ २६
सत्यं ते प्रतिजानामि सर्वशस्त्रभृतां वर ।
इष्टापूर्तेन च शपे वीर्येण च सुतैरपि ॥ २७
निहत्य तान्रणे सर्वान्पाञ्चालान्पाण्डवैः सह ।
शान्तिं लब्धाऽस्मि तेषां वा रणे गन्ता सलोकताम्
सोऽहं तत्र गमिष्यामि यत्र ते पुरुषर्षभाः ।
हता मदर्थे संग्रामे युध्यमानाः किरीटिना ॥ २९
न हीदानीं सहाया मे परीप्सन्त्यनुपस्कृताः ।
श्रेयो हि पाण्डून्मन्यन्ते न तथास्मान्महाभुज ॥ ३०
स्वयं हि मृत्युर्विहितः सत्यसन्धेन संयुगे ।
भवानुपेक्षां कुरुते शिष्यत्वादर्जुनस्य हि ॥ ३१
अतो विनिहताः सर्वे येऽस्मज्जयचिकीर्षवः ।
कर्णमेव तु पश्यामि संप्रत्यस्मज्जयैषिणम् ॥ ३२
यो हि मित्रमविज्ञाय याथातथ्येन मन्दधीः ।
मित्रार्थे योजयत्येनं तस्य सोऽर्थोऽवसीदति ॥ ३३
तादृग्रूपं कृतमिदं मम कार्यं सुहृत्तमैः ।
मोहाल्लुब्धस्य पापस्य जिह्मस्य धनमीहतः ॥ ३४
यौ मे युद्धस्य कृत्यस्य जिह्माचारैः समीयतुः ।
हतो जयद्रथश्चैव सौमदत्तिश्च वीर्यवान् ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ३५
सोऽहमद्य गमिष्यामि यत्र ते पुरुषर्षभाः ।
हता मदर्थे संग्रामे युध्यमानाः किरीटिना ॥ ३६
न हि मे जीवितेनार्थस्तानृते पुरुषर्षभान् ।
आचार्यः पाण्डुपुत्राणामनुजानातु नो भवान् ३७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

---

प्रलुब्धः प्रकृष्टो लुब्धकस्तद्वद्वञ्चकत्वात् ॥ १४ ॥ धर्मापचायिनः धर्मक्षेपकस्य ॥ १९ ॥ आचार्यः पाण्डुपुत्राणामित्युपालम्भः ॥ ३७ ॥ एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

## द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

द्रोणेन सोपालम्भं दुर्योधनाश्वासनपूर्वकं रणाय निर्याणम् ॥ १ ॥

धृतराष्ट्र उवाच ।
सिन्धुराजे हते तात समरे सव्यसाचिना ।
तथैव भूरिश्रवसि किमासीद्वो मनस्तदा ॥ १
दुर्योधनेन च द्रोणस्तथोक्तः कुरुसंसदि ।
किमुक्तवान्परं तस्मात्तन्ममाचक्ष्व सञ्जय ॥ २
सञ्जय उवाच ।
निष्टानको महानासीत्सैन्यानां तव भारत ।
सैन्धवं निहतं दृष्ट्वा भूरिश्रवसमेव च ॥ ३
मन्त्रितं तव पुत्रस्य ते सर्वमवमेनिरे ।
येन मन्त्रेण निहताः शतशः क्षत्रियर्षभाः ॥ ४
द्रोणस्तु तद्वचः श्रुत्वा पुत्रस्य तव दुर्मनाः ।
मुहूर्तमिव च ध्यात्वा भृशमार्तोऽभ्यभाषत ॥ ५
द्रोण उवाच ।
दुर्योधन किमेवं मां वाक्शरैरुपकृन्तसि ।
अजय्यं सततं सङ्ख्ये ब्रुवाणं सव्यसाचिनम् ॥ ६
एतेनैवार्जुनं ज्ञातुमलं कौरव संयुगे ।
यच्छिखण्ड्यवधीद्भीष्मं पाल्यमानः किरीटिना ॥ ७
अवध्यं निहतं दृष्ट्वा संयुगे देवदानवैः ।
तदैवाज्ञासिषमहं नेयमस्तीति भारती ॥ ८
यं पुंसां त्रिषु लोकेषु सर्वशूरममंस्म हि ।
तस्मिन्निपतिते भीष्मे कं शेषं पर्युपास्महे ॥ ९
यान्स्म तान्ग्लहते तात शकुनिः कुरुसंसदि ।
अक्षान्न तेऽक्षा निशिता बाणास्ते शत्रुतापनाः ।
'अक्षांस्तु मन्यसे बाणांछोभमानाञ्छिताञ्शरान्'
त एते घ्नन्ति नस्तात विशिखाः पार्थचोदिताः ।
तांस्तदाऽऽख्यायमानस्त्वं विदुरेण न बुद्धवान् ११
यास्ता विलपतश्चापि विदुरस्य महात्मनः ।
धीरस्य वाचो नाश्रौषीः क्षेमाय वदतः शिवाः १२
तदिदं वर्तते घोरमागतं वैशसं महत् ।
तस्यावमानाद्वाक्यस्य दुःशासनकृतेन च ॥ १३
योऽवमन्य वचः पथ्यं सुहृदामाप्तकारिणाम् ।
स्वमतं कुरुते मूढः स शोच्यो नचिरादिव ॥ १४
यच्च नः प्रेक्षमाणानां कृष्णामानाय्य तत्सभाम् ।
अनर्हन्तीं कुले जातां सर्वधर्मानुचारिणीम् ॥ १५
तस्याधर्मस्य गान्धारे फलं प्राप्तमिदं महत् ।
नोचेत्पापं परे लोके त्वमृच्छेथास्ततोऽधिकम् ॥ १६
यच्च तान्पाण्डवान्द्यूते विषमेण विजित्य ह ।
प्राव्राजयस्तदाऽरण्ये रौरवाजिनवाससः ॥ १७
पुत्राणामिव चैतेषां धर्ममाचरतां सदा ।
द्रुह्येत्को नु नरो लोके मदन्यो ब्राह्मणब्रुवः ॥ १८
पाण्डवानामयं कोपस्त्वया शकुनिना सह ।
आहृतो धृतराष्ट्रस्य संमते कुरु संसदि ॥ १९
दुःशासनेन संयुक्तः कर्णेन परिवर्धितः ।
क्षत्तुर्वाक्यमनादृत्य त्वयाऽभ्यस्तः पुनः पुनः ॥ २०
'स हि नः क्रोधवृक्षश्च कृतमूलो महात्मनाम् ।
तस्य पुष्पफले राजन्नुपभुङ्क्ष्व महाबल ॥' २१
यत्ताः सर्वे पराभूताः पर्यवारयतार्जुनम् ।
सिन्धुराजानमाश्रित्य स वो मध्ये कथं हतः ॥ २२
कथं त्वयि च कर्णे च कृपे शल्ये च जीवति ।
अश्वत्थाम्नि च कौरव्य निधनं सैन्धवोऽगमत् ॥ २३
युध्यन्तः सर्वराजानस्तेजस्विन उपासते ।
सिन्धुराजं परित्रातुं स वो मध्ये कथं हतः ॥ २४

निष्टानकः सव्यथः शब्दः ॥ ३ ॥ इयं सेना नास्तीत्यस्य नष्टेत्यर्थः ॥ ८ ॥ ग्लहते पातयति ॥ १० ॥ नोचेदिति । परेलोकेऽधिकः पापिनां क्लेश इहत्वल्पेनैव भोगेन निस्तार इति भावः ॥ नेह चेत्परलोके यत्पापमिच्छेत्ततोऽधिकम् इति क. पाठः । न भवेत्परलोके यत्तत्समिच्छेत्ततोऽधिकम् । इति ख. पाठः । नोचेत्पापं परं लोके त्वं मन्येथास्ततोऽधिकम् इति ङ. पाठः ।नेह वै परलोकाय पापमिच्छेत पार्थिवः इति ट.ड. पाठः ॥ १६ ॥ अभ्यस्त आवर्तितः ॥ २० ॥ यत्तु सर्वाद्दूरं लब्ध्वा पर्यवारयदर्जुनम् । सिन्धुराजः समाश्रित्य स वो मध्ये कथं हतः इति क. ख. पाठः । यत्ताः सर्वे पुरा भूत्वा अर्जुनं पर्यवारयन् । सिन्धुराजः समाश्रित्य स वो मध्ये कथ हतः इति ट. पाठः । यत्तन्सर्वे परं भूत्वा पर्यवारयतार्जुनम् । सिन्धुराजानमाश्रित्य स वो मध्ये कथं हतः इति ड. पाठः । यत्तत्सर्वे पराभूय पर्यवारयतार्जुनिम् । सिन्धुराजानमाश्रित्य स वो

मय्येव हि विशेषेण तथा दुर्योधन त्वयि ।
आशंसत परित्राणमर्जुनात्स महीपतिः ॥ २५
ततस्तस्मिन्परित्राणमलब्धवति फल्गुनात् ।
न किंचिदनुपश्यामि जीवितस्थानमात्मनः ॥ २६
मज्जन्तमिव चात्मानं धृष्टद्युम्नस्य संयुगे ।
पश्याम्यहत्वा पाञ्चालान्सह तेन शिखण्डिना २७
तन्मां किमभितप्यन्तं वाक्शरैरेव कृन्तसि ।
अशक्तः सिन्धुराजस्य भूत्वा त्राणाय भारत ॥ २८
सौवर्णं सत्यसन्धस्य ध्वजमक्लिष्टकर्मणः ।
अपश्यन्युधि भीष्मस्य कथमाशंससे जयम् ॥ २९
मध्ये महारथानां च यत्राहन्यत सैन्धवः ।
हतो भूरिश्रवाश्चैव किं शेषं तत्र मन्यसे ॥ ३०
कृप एव च दुर्धर्षो यदि जीवति पार्थिव ।
यो नागात्सिन्धुराजस्य वर्त्म तं पूजयाम्यहम् ॥ ३१
यत्रापश्यं हतं भीष्मं पश्यतस्तेऽनुजस्य वै ।
दुःशासनस्य कौरव्य कुर्वाणं कर्म दुष्करम् ॥ ३२
अवध्यकल्पं संग्रामे देवैरपि सवासवैः ।
न ते वसुंधराऽस्तीति तदाहं चिन्तये नृप ॥ ३३
इमानि पाण्डवानां च सृञ्जयानां च भारत ।
अनीकान्याद्रवन्ते मां सहितान्यद्य भारत ॥ ३४
नाहत्वा सर्वपाञ्चलान्कवचस्य विमोक्षणम् ।
कर्ताऽस्मि समरे कर्म धार्तराष्ट्र हितं तव ॥ ३५
राजन्ब्रूयाः सुतं मे त्वमश्वत्थामानमाहवे ।
न सोमकाः प्रमोक्तव्या जीवितं परिरक्षता ॥ ३६
यच्च पित्राऽनुशिष्टोऽसि तद्वचः परिपालय ।
आनृशंस्ये दमे सत्ये चार्जवे च स्थिरो भव ॥ ३७
धर्मार्थकामकुशलो धर्मार्थावप्यपीडयन् ।
धर्मप्रधानकार्याणि कुर्याश्चेति पुनःपुनः ॥ ३८
चक्षुर्मनोभ्यां संतोष्या विप्राः पूज्याश्च शक्तितः ।
न चैषां विप्रियं कार्यं ते हि वह्निशिखोपमाः ॥ ३९
एष त्वहमनीकानि प्रविशाम्यरिमर्दन ।
रणाय महते राजंस्त्वया वाक्शरपीडितः ॥ ४०
त्वं च दुर्योधन बलं यदि शक्तोऽसि पालय ।
रात्रावपि च योद्धव्याः संरब्धाः कुरुसृञ्जयाः ॥ ४१
एवमुक्त्वा ततः प्रायाद्द्रोणः पाण्डवसृञ्जयान् ।
मुष्णन्क्षत्रियतेजांसि नक्षत्राणामिवांशुमान् ॥ ४२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

---

## त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

दुर्योधनेन कर्णंप्रति जयद्रथवधे द्रोणस्य पार्थपक्षपाताद्दौदासीन्यस्य हेतुत्वेऽभिहिते कर्णेन तन्निराकरणपूर्वकं दैवस्यैव तत्र हेतुत्वकथनम् ॥ १ ॥ रात्रियुद्धारम्भः ॥ २ ॥

सञ्जय उवाच ।
ततो दुर्योधनो राजा द्रोणेनैवं प्रचोदितः ।
अमर्षवशमापन्नो युद्धायैव मनो दधे ।
अब्रवीच्च तदा कर्णं पुत्रो दुर्योधनस्तव ॥ १
पश्य कृष्णसहायेन पाण्डवेन किरीटिना ।
आचार्यविहितं व्यूहं भित्त्वा देवैः सुदुर्भिदम् ॥ २
तव व्यायच्छमानस्य द्रोणस्य च महात्मनः ।
मिषतां योधमुख्यानां सैन्धवो विनिपातितः ॥ ३
पश्य राधेय पृथ्वीशाः पृथिव्यां प्रवरा युधि ।
पार्थेनैकेन निहताः सिंहेनेवेतरे मृगाः ॥ ४
मम व्यायच्छमानस्य समरे शत्रुमर्दन ।
अल्पावशेषं सैन्यं मे कृतं शक्रात्मजेन ह ॥ ५
कथं वै युध्यमानस्य द्रोणस्य युधि फल्गुनः ।
भिन्द्यात्सुदुर्भिदं व्यूहं यतमानोऽपि संयुगे ॥ ६
प्रतिज्ञाया गतः पारं हत्वा सैन्धवमर्जुनः ॥ ७
पश्य राधेय पृथ्वीशान्पृथिव्यां पातितान्बहून् ।
पार्थेन निहतान्सङ्ख्ये महेन्द्रोपमविक्रमान् ॥ ८
अनिच्छतः कथं वीर द्रोणस्य युधि पाण्डवः ।

मध्ये कथं हतः इति ङ. पाठः ॥ २२ ॥ पश्याम्यहं वै पाञ्चालान्सह तेन शिखण्डिना इति क. ट. ङ. पाठः । धृष्टद्युम्नस्य किल्बिषे इति झ. पाठः ॥ २७ ॥ द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

भिन्द्यान्मुदुर्भिदं व्यूहं यतमानस्य शुष्मिणः ॥ ९
दयितः फल्गुनो नित्यमाचार्यस्य महात्मनः ।
ततोऽस्य दत्तवान्द्वारमयुद्धेनैव शत्रुहन् ॥ १०
अभयं सिन्धुराजाय दत्त्वा द्रोणः परंतपः ।
प्रादात्किरीटिने द्वारं पश्यन्निर्गुणतां मयि ॥ ११
यद्यदास्यदनुज्ञां वै पूर्वमेव गृहान्प्रति ।
प्रस्थातुं सिन्धुराजस्य न भवेज्जीवितक्षयः ॥ १२
जयद्रथो जीवितार्थी गच्छमानो गृहान्प्रति ।
मयाऽनार्येण संरुद्धो द्रोणात्प्राप्याभयं रणे ॥ १३
'रक्षामि सैन्धवं युद्धे नैनं प्राप्स्यति फल्गुनः ।
मम सैन्यविनाशाय रुद्धो विप्रेण सैन्धवः ॥ १४
तस्य मे मन्दभाग्यस्य यतमानस्य संयुगे ।
हतानि सर्वसैन्यानि हतो राजा जयद्रथः ॥ १५
पश्य योधवरान्कर्ण शतशोऽथ सहस्रशः ।
पार्थनामाङ्कितैर्बाणैः सर्वे नीता यमक्षयम् ॥ १६
कथमेकरथेनाजौ बहूनां नः प्रपश्यताम् ।
विपन्नः सैन्धवो राजा योधाश्चैव सहस्रशः ॥'१७
अद्य मे भ्रातरः क्षीणाश्चित्रसेनादयो रणे ।
भीमसेनं समासाद्य पश्यतां नो दुरात्मनाम् ॥ १८
कर्ण उवाच ।
आचार्यं मा विगर्हस्व शक्त्याऽसौ युध्यते द्विजः ।
यथाबलं यथोत्साहं त्यक्त्वा जीवितमात्मनः १९
यद्येनं समतिक्रम्य प्रविष्टः श्वेतवाहनः ।
नात्र सूक्ष्मोऽपि दोषः स्यादाचार्यस्य कथंचन ॥ २०
कृती दक्षो युवा शूरः कृतास्त्रो लघुविक्रमः ।
दिव्यास्त्रयुक्तमास्थाय रथं वानरलक्षणम् ॥ २१
कृष्णेन च गृहीताश्वमभेद्यकवचावृतः ।
गाण्डीवमजरं दिव्यं धनुरादाय वीर्यवान् ॥ २२
प्रवर्षन्निशितान्बाणान्बाहुद्रविणदर्पितः ।
यदर्जुनोऽभ्ययाद्द्रोणमुपपन्नं हि तस्य तत् ॥ २३
आचार्यः स्थविरो राजञ्शीघ्रयाने तथाऽक्षमः ।
बाहुव्यायामचेष्टायामशक्तस्तु नराधिप ॥ २४
तेनैवमभ्यतिक्रान्तः श्वेताश्वः कृष्णसारथिः ।
तस्य दोषं न पश्यामि द्रोणस्यानेन हेतुना ॥ २५
अजय्यान्पाण्डवान्मन्ये द्रोणेनास्त्रविदा मृधे ।
तथा ह्येनमतिक्रम्य प्रविष्टः श्वेतवाहनः ॥ २६
सततं चेष्टमानानां निकृत्या विक्रमेण च ।
दैवादिष्टोऽन्यथाभावो न मन्ये विद्यते क्वचित् २७
यतो नो युध्यमानानां परं शक्त्या सुयोधन ।
सैन्धवो निहतो युद्धे दैवमत्र परं स्मृतम् ॥ २८
परं यत्नं कुर्वतां च त्वया सार्धं रणाजिरे ।
हत्वाऽस्माकं पौरुषं वै दैवं पश्चात्करोति नः ॥ २९
दैवोपसृष्टपुरुषो यत्कर्म कुरुते क्वचित् ।
कृतं कृतं हि तत्तस्य दैवेन विनिपात्यते ॥ ३०
यत्कर्तव्यं मनुष्येण व्यवसायवता सदा ।
तत्कार्यमविशङ्केन सिद्धिर्दैवे प्रतिष्ठिता ॥ ३१
निकृत्या वञ्चिताः पार्था विषयोगैश्च भारत ।
दग्धा जतुगृहे चापि द्यूतेन च पराजिताः ॥ ३२
राजनीतिं समाश्रित्य प्रहिताश्चैव काननम् ।
यत्नेन च कृतं तत्तद्दैवेन विनिपातितम् ॥ ३३
युध्यस्व यत्नमास्थाय दैवं कृत्वा निरर्थकम् ।
यततस्तव तेषां च दैवं मार्गेण यास्यति ॥ ३४
न तेषां मतिपूर्वं हि सुकृतं दृश्यते क्वचित् ।
दुष्कृतं तव वा वीर बुद्ध्या हीनं कुरूद्वह ॥ ३५
दैवं प्रमाणं सर्वस्य सुकृतस्येतरस्य वा ।
अनन्यकर्म दैवं हि जागर्ति स्वपतामपि ।
'तेन युक्तो हि पुरुषः कार्याकार्ये नियुज्यते ॥'३६
बहूनि तव सैन्यानि योधाश्च बहवस्तव ।
न तथा पाण्डुपुत्राणामेवं युद्धमवर्तत ॥ ३७
तैरल्पैर्बहवो यूयं क्षयं नीताः प्रहारिणः ।
शङ्के दैवस्य तत्कर्म पौरुषं येन नाशितम् ॥ ३८

यद्यदास्यत् दद्याच्चेदित्यर्थः । सिन्धुराजस्य नाभविष्यज्जनक्षय इति झ. पाठः ॥ १२ ॥ अन्यथाभावः पराजयो दैवादिष्टः । नतु द्रोणापराधज इति भावः ॥ दैवदृष्ट्याऽन्यथाभावो न मन्यु- र्विद्यते क्वचित् इति क. पाठः । दैवदिष्टान्यथाभावो न मन्यु- र्विद्यते क्वचित् इति ख. पाठः ॥ २७ ॥ दैवोपसृष्टो दुर्दैवग्रस्तः ॥ ३० ॥ तेषां जयहेतुः सुकृतं तव वा पराजयहेतुः दुष्कृतं नास्तीत्याह । न तेषामिति ॥ ३५ ॥ त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५ ॥

सञ्जय उवाच ।
एवं संभाषमाणानां बहु तत्तज्जनाधिप ।
पाण्डवानामनीकानि समदृश्यन्त संयुगे ॥ ३९
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम् ।
तावकानां परैः सार्धं राजन्दुर्मन्त्रिते तव ॥ ४०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

समाप्तं च जयद्रथवधपर्व

# ( अथ घटोत्कचवधपर्व ॥ ६ ॥ )

## चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

युधिष्ठिरेण दुर्योधनपराजयः ॥ १ ॥

सञ्जय उवाच ।
तदुदीर्णं रथाश्वौघं बलं तव जनाधिप ।
पाण्डुसेनामतिक्रम्य योधयामास सर्वतः ॥ १
पाञ्चालाः कुरवश्चैव योधयन्तः परस्परम्
यमराष्ट्राय महते परलोकाय दीक्षिताः ॥ २
शूराः शूरैः समागम्य शरतोमरशक्तिभिः ।
विव्यधुः समरेऽन्योन्यं निन्युश्चैव यमक्षयम् ॥ ३
रथिनां रथिभिः सार्धं रुधिरस्रावदारुणम् ।
प्रावर्तत महद्युद्धं निघ्नतामितरेतरम् ॥ ४
वारणाश्च महाराज समासाद्य परस्परम् ।
विषाणैर्दारयामासुः सुसंक्रुद्धा मदोत्कटाः ॥ ५
हयारोहान्हयारोहाः प्रासशक्तिपरश्वथैः ।
बिभिदुस्तुमुले युद्धे प्रार्थयन्तो महद्यशः ॥ ६
पत्तयश्च महाबाहो शतशः शस्त्रपाणयः ।
अन्योन्यमार्दयन्राजन्नित्यं यत्ताः पराक्रमे ॥ ७
गोत्राणां नामधेयानां कुलानां चैव मारिष ।
श्रवणाद्धि विजानीमः पाञ्चालान्कुरुभिः सह ॥ ८
तेऽन्योन्यं समरे योधाः शरशक्तिपरश्वथैः ।
प्रेषयन्परलोकाय विचरन्तो ह्यभीतवत् ॥ ९
शरैर्दश दिशो राजंस्तेषां मुक्तैः सहस्रशः ।
न भ्राजन्ते यथा पूर्वं भास्करस्य च नाशनात् ॥ १०
तथा प्रयुध्यमानेषु पाण्डवेयेषु भारत ।
दुर्योधनो महाराज व्यवागाहत तद्बलम् ॥ ११
सैन्धवस्य वधेनैव भृशं दुःखसमन्वितः ।
मर्तव्यमिति संचिन्त्य प्राविशच्च द्विषद्बलम् ॥ १२
नादयन्रथघोषेण कम्पयन्निव मेदिनीम् ।
अभ्यवर्तत पुत्रस्ते पाण्डवानामनीकिनीम् ॥ १३
स सन्निपातस्तुमुलस्तस्य तेषां च भारत ।
अभवत्सर्वसैन्यानामभावकरणो महान् ॥ १४
'धृतराष्ट्र उवाच ।
तथा हतेषु सैन्येषु तथा कृच्छ्रगतः स्वयम् ।
कच्चिद्दुर्योधनः सूत नाकार्षीत्पृष्ठतो रणम् ॥ १५
एकस्य च बहूनां च संनिपातो महानभूत् ।
विशेषतो हि नृपतेर्विषमं प्रतिभाति मे ॥ १६
सोऽत्यन्तसुखसंवृद्धो रक्ष्यो लोकस्य चेश्वरः ।
एको बहून्समासाद्य कच्चिन्नासीत्पराङ्मुखः ॥ १७
द्रोणः कर्णः कृपश्चैव कृतवर्मा च सात्वतः ।
नावारयन्कथं युद्धे राजानं राज्यकाङ्क्षिणः ॥ १८
सर्वोपायैर्हि युद्धेषु रक्षितव्यो महीपतिः ।
एषा नीतिः परा युद्धे दृष्टा तत्र मनीषिभिः ॥ १९
प्रविष्टे वै मम सुते परेषां वै महद्बलम् ।
मामका रथिनां श्रेष्ठाः किमकुर्वत सञ्जय ॥ २०
सञ्जय उवाच ।
राजन्सङ्ग्राममाश्चर्यं पुत्रस्य तव भारत ।

गोत्रं पित्रादि नाम शैनेय सात्यके इत्यादि । कुलं पाण्ड्य- पाञ्चाल्येत्यादि ॥ ८ ॥

एकस्य च बहूनां च शृणु मे ब्रुवतो ध्रुवम् ॥ २१
द्रोणेन वार्यमाणोऽस्मौ कर्णेन च कृपेण च ।
प्राविशत्पाण्डवीं सेनां मकरः सागरं यथा ॥ २२
किरन्निषुसहस्राणि तत्रतत्र तथातथा ।
पाञ्चालान्पाण्डवांश्चैव विव्याध निशितैः शरैः २३
यथोदयगतः सूर्यो रश्मिभिर्नाशयेत्तमः ।
तथा पुत्रस्तव बलं नाशयत्तन्महाबलः ॥' २४
यथा मध्यंदिने सूर्यं प्रतपन्तं गभस्तिभिः ।
तथा तव सुतं मध्ये प्रतपन्तं शरार्चिभिः ।
न शेकुर्भारतं युद्धे पाण्डवाः समुदीक्षितुम् ॥ २५
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ।
पर्यधावन्त पाञ्चाला वध्यमाना महात्मना ॥ २६
रुक्मपुङ्खैः प्रसन्नाग्रैस्तव पुत्रेण धन्विना ।
अर्द्यमानाः शरैस्तूर्णं न्यपतन्पाण्डुसैनिकाः ॥ २७
'व्यद्रवंश्च भयाद्योधा दृष्ट्वा तं परमाहवे ।
व्यात्ताननमिव प्राप्तमन्तकं प्राणहारिणम् ॥' २८
न तादृशं रणे कर्म कृतवन्तस्तु तावकाः ।
यादृशं कृतवान्राजा पुत्रस्तव विशांपते ॥ २९
पुत्रेण तव सा सेना पाण्डवी मथिता रणे ।
नलिनी द्विरदेनेव समन्तात्फुल्लपङ्कजा ॥ ३०
क्षीणतोयानिलार्काभ्यां हतत्विडिव पद्मिनी ।
बभूव पाण्डवी सेना तव पुत्रस्य तेजसा ॥ ३१
पाण्डुसेनां हतां दृष्ट्वा तव पुत्रेण भारत ।
भीमसेनपुरोगास्तु पाञ्चालाः समुपाद्रवन् ॥ ३२
स भीमसेनं दशभिर्माद्रीपुत्रौ त्रिभिस्त्रिभिः ।
विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनम् ॥ ३३
धृष्टद्युम्नं च सप्तत्या धर्मपुत्रं च सप्तभिः ।
केकयांश्चैव चेदींश्च बहुभिर्निशितैः शरैः ॥ ३४
सात्वतं पञ्चभिर्विद्ध्वा द्रौपदेयांस्त्रिभिस्त्रिभिः ।
घटोत्कचं च समरे विद्ध्वा सिंह इवानदत् ॥ ३५
शतशश्चापरान्योधान्सद्विपांश्च महारणे ।
शरैरवचकर्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः ॥ ३६
सा तेन पाण्डवी सेना वध्यमाना शिलीमुखैः ।
तव पुत्रेण संग्रामे विदुद्राव नराधिप ॥ ३७
तं तपन्तमिवादित्यं कुरुराजं महाहवे ।
नाशक्नुवन्वीक्षितुं राजन्पाण्डुपुत्रस्य सैनिकाः ॥ ३८
ततो युधिष्ठिरो राजा कुपितो राजसत्तम ।
अभ्यधावत्कुरुपतिं तव पुत्रं जिघांसया ॥ ३९
तावुभौ युधि कौरव्यौ समीयतुररिंदमौ ।
स्वार्थहेतोः पराक्रान्तौ दुर्योधनयुधिष्ठिरौ ॥ ४०
ततो दुर्योधनः क्रुद्धः शरैः सन्नतपर्वभिः ।
विव्याध दशभिस्तूर्णं ध्वजं चिच्छेद चेषुणा ॥ ४१
इन्द्रसेनं त्रिभिश्चैव ललाटे जघ्निवान्नृप ।
सारथिं दयितं राज्ञः पाण्डवस्य महात्मनः ॥ ४२
धनुश्च पुनरन्येन चकर्तास्य महारथः ।
चतुर्भिश्चतुरश्चैव बाणैर्विव्याध वाजिनः ॥ ४३
ततो युधिष्ठिरः क्रुद्धो निमेषादिव कार्मुकम् ।
अन्यदादाय वेगेन कौरवं प्रत्यवारयत् ॥ ४४
तस्य तान्निघ्नतः शत्रून्रुक्मपृष्ठं महद्धनुः ।
भल्लाभ्यां पाण्डवो ज्येष्ठस्त्रिधा चिच्छेद मारिष ४५
विव्याध चैनं दशभिः सम्यगस्तैः शितैः शरैः ।
मर्म भित्त्वा तु ते सर्वे संलग्नाः क्षितिमाविशन् ॥४६
ततः परिवृता योधाः परिवव्रुर्युधिष्ठिरम् ।
वृत्रेण सह युध्यन्तं यद्वद्देवाः शतक्रतुम् ॥ ४७
ततो युधिष्ठिरो राजा तव पुत्रस्य मारिष ।
शरं च सूर्यरश्म्याभमत्युग्रमनिवारणम् ।
हा हतोऽसीति राजानमुक्त्वाऽमुञ्चद्युधिष्ठिरः ४८
स तेनाकर्णमुक्तेन विद्धो बाणेन कौरवः ।
निषसाद रथोपस्थे भृशं संमूढचेतनः ॥ ४९
ततः पाञ्चाल्यसेनानां भृशमासीद्रवो महान् ।
हतो राजेति राजेन्द्र मुदितानां समन्ततः ॥ ५०
बाणशब्दरवश्चोग्रः शुश्रुवे तत्र मारिष ।
अथ द्रोणो द्रुतं तत्र प्रत्यदृश्यत संयुगे ॥ ५१
हृष्टो दुर्योधनश्चापि दृढमादाय कार्मुकम् ।
तिष्ठतिष्ठेति राजानं ब्रुवन्पाण्डवमभ्ययात् ॥ ५२
प्रत्युद्ययुस्तं त्वरिताः पाञ्चाला जयगृद्धिनः ।

सम्यगस्तैः दृढं प्रक्षिप्तैः ॥ ४६ ॥

बाणशब्दरवो बाणशब्दसहितो रवः प्राणिशब्दः ॥ ५१ ॥

तान्द्रोणः प्रतिजग्राह परीप्सन्कुरुसत्तमम् ।
चण्डवातः समुद्भूतो मेघानम्बुमुचो यथा ॥ ५३
ततो राजन्महानासीत्संग्रामो भूरिवर्धनः ।
तावकानां परेषां च समेतानां युयुत्सया ॥ ५४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

## पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

द्रोणयुद्धवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
यत्तदा प्राविशत्पाण्डूनाचार्यः कुपितो बली ।
उक्त्वा दुर्योधनं मन्दं मम शास्त्रातिगं सुतम् ॥ १
प्रविश्य विचरन्तं च रथे शूरमवस्थितम् ।
कथं द्रोणं महेष्वासं पाण्डवाः पर्यवारयन् ॥ २
केऽरक्षन्दक्षिणं चक्रमाचार्यस्य महाहवे ।
के चोत्तरमरक्षन्त निघ्नतः शात्रवान्बहून् ॥ ३
के चास्य पृष्ठतोऽन्वासन्वीरा वीरस्य योधिनः ।
के पुरस्तादवर्तन्त रथिनस्तस्य शत्रवः ॥ ४
मन्ये तानस्पृशच्छीतमतिवेलमनार्तवम् ।
मन्ये ते समवेपन्त गावो वै शिशिरे यथा ॥ ५
यत्प्राविशन्महेष्वासः पाञ्चालानपराजितः ।
नृत्यन्स रथमार्गेषु सर्वशस्त्रभृतां वरः ॥ ६
निर्दहन्सर्वसैन्यानि पाञ्चालानां रथर्षभः
धूमकेतुरिव क्रुद्धः कथं मृत्युमुपेयिवान् ॥ ७
सञ्जय उवाच ।
सायाह्ने सैन्धवं हत्वा राज्ञा पार्थः समेत्य च ।
सात्यकिश्च महेष्वासो द्रोणमेवाभ्यधावताम् ॥ ८
तथा युधिष्ठिरस्तूर्णं भीमसेनश्च पाण्डवः ।
पृथक्चमूभ्यां संयत्तौ द्रोणमेवाभ्यधावताम् ॥ ९
तथैव नकुलो धीमान्सहदेवश्च दुर्जयः ।
धृष्टद्युम्नः शतानीको विराटश्च सकेकयः ।
मात्स्याः साल्वाः ससेनाश्च द्रोणमेव ययुर्युधि ॥ १०
द्रुपदश्च तथा राजा पाञ्चालैरभिरक्षितः ।
धृष्टद्युम्नपिता राजन्द्रोणमेवाभ्यवर्तत ॥ ११
द्रौपदेया महेष्वासा राक्षसश्च घटोत्कचः ।
ससैन्यास्ते न्यवर्तन्त द्रोणमेव महाद्युतिम् ॥ १२
प्रभद्रकाश्च पाञ्चालाः षट्सहस्राः प्रहारिणः ।
द्रोणमेवाभ्यवर्तन्त पुरस्कृत्य शिखण्डिनम् ॥ १३
तथेतरे नरव्याघ्राः पाण्डवानां महारथाः ।
सहिताः संन्यवर्तन्त द्रोणमेव द्विजर्षभम् ॥ १४
तेषु शूरेषु युद्धाय गतेषु भरतर्षभ ।
बभूव रजनी घोरा भीरूणां भयवर्धिनी ॥ १५
योधानामशिवा रौद्रा राजन्नन्तकगामिनी ।
कुञ्जराश्वमनुष्याणां प्राणान्तकरणी तदा ॥ १६
तस्यां रजन्यां घोरायां नदन्त्यः सर्वतः शिवाः ।
न्यवेदयन्भयं घोरं सज्वालकवलैर्मुखैः ॥ १७
उलूकाश्चाप्यदृश्यन्त शंसन्तो विपुलं भयम्
विशेषतः कौरवाणां ध्वजिन्यामतिदारुणाः ॥ १८
ततः सैन्येषु राजेन्द्र शब्दः समभवन्महान् ।
भेरीशब्देन महता मृदङ्गानां स्वनेन च ॥ १९
गजानां बृंहितैश्चापि तुरङ्गाणां च हेषितैः ।
खुरशब्दनिपातैश्च तुमुलः सर्वतोऽभवत् ॥ २०
ततः समभवद्युद्धं सन्ध्यायामतिदारुणम् ।
द्रोणस्य च महाराज सृञ्जयानां च सर्वशः ॥ २१
तमसा चावृते लोके न प्राज्ञायत किंचन ।
सैन्येन रजसा चैव समन्तादुत्थितेन ह ॥ २२
नरस्याश्वस्य नागस्य समसज्जत शोणितम् ।
नापश्याम रजो भौमं कश्मलेनाभिसंवृताः ॥ २३
रात्रौ वंशवनस्येव दह्यमानस्य पर्वते ।

भूरिवर्धनो बहुच्छेदनः ॥ ५४ ॥ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

शास्त्रातिगं शास्त्रमाज्ञा ॥ १ ॥ धूमकेतुरग्निः ॥ ७ ॥ संन्यवर्तन्त संमुखं नितरामवर्तन्त ॥ १४ ॥ पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

घोरश्चटचटाशब्दः शस्त्राणां पततामभूत् ॥ २४
मृदङ्गानकनिर्ह्रादैर्झर्झरैः पटहैस्तथा ।
फेत्कारैर्हेषितैः शब्दैः सर्वमेवाकुलं बभौ ॥ २५
नैव स्वे न परे राजन्प्राज्ञायन्त तमोवृते ।
उन्मत्तमिव तत्सर्वं बभूव रजनीमुखे ॥ २६
भौमं रजोऽथ राजेन्द्र शोणितेन प्रणाशितम् ।
शातकौम्भैश्च कवचैर्भूषणैश्च तमोऽनशत् ॥ २७
ततः सा भारती सेना मणिहेमविभूषिता ।
द्यौरिवासीत्सनक्षत्रा रजन्यां भरतर्षभ ॥ २८
गोमायुबलसंघुष्टा शक्तिध्वजसमाकुला ।
दारुणाभिरुता घोरा क्ष्वेडितोत्क्रुष्टनादिता ॥ २९
तत्राभवन्महाशब्दस्तुमुलो रोमहर्षणः ।
समावृण्वन्दिशः सर्वा महेन्द्राशनिनिःस्वनः ॥ ३०
सा निशीथे महाराज सेनाऽदृश्यत भारती ।
अङ्गदैः कुण्डलैर्निष्कैः शस्त्रैश्चैवावभासिता ॥ ३१
तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः ।
निशायां प्रत्यदृश्यन्त मेघा इव सविद्युतः ॥ ३२
ऋष्टिशक्तिगदाबाणमुसलप्रासपट्टिशाः ।
संपतन्तो व्यदृश्यन्त भ्राजमाना इवाग्नयः ॥ ३३
दुर्योधनपुरोवातां रथनागबलाहकाम् ।
वादित्रघोषस्तनितां चापविद्युद्ध्वजैर्वृताम् ॥ ३४
द्रोणपाण्डवपर्जन्यां खड्गशक्तिगदाशनिम् ।
शरधारास्त्रपवनां शस्त्रपातोष्मसंकुलाम् ॥ ३५
घोरां विस्मापनीमुग्रां जीवितच्छिदमप्लवाम् ।
तां प्राविशन्नतिभयां नदीं युद्धचिकीर्षवः ॥ ३६
तस्मिन्रात्रिमुखे घोरे महाशब्दनिनादिते ।
भीरूणां त्रासजनने शूराणां हर्षवर्धने ॥ ३७
रात्रियुद्धे महाघोरे वर्तमाने सुदारुणे ।
द्रोणमभ्यद्रवन्क्रुद्धाः सहिताः पाण्डुसृञ्जयाः ॥ ३८
ये ये प्रमुखतो राजन्नावर्तन्त महारथाः ।
तान्सर्वान्विमुखांश्चक्रे कांश्चिन्निन्ये यमक्षयम् ३९
तानि नागसहस्राणि रथानामयुतानि च ।
पदातिहयसङ्घानां प्रयुतान्यर्बुदानि च ।
द्रोणेनैकेन नाराचैर्निर्भिन्नानि निशामुखे ॥ ४०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

## षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

भीमेन दुर्मददुष्कर्णादिवधः ॥ १ ॥

धृतराष्ट्र उवाच ।
तस्मिन्प्रविष्टे दुर्धर्षे सृञ्जयानमितौजसि ।
अमृष्यमाणे संरब्धे का वोऽभूद्वै मतिस्तदा ॥ १
दुर्योधनं तथा पुत्रमुक्त्वा शास्त्रातिगं मम ।
यत्प्राविशदमेयात्मा किं पार्थः प्रत्यपद्यत ॥ २
निहते सैन्धवे वीरे भूरिश्रवसि चैव ह ।
यदाऽभ्यगान्महातेजाः पाञ्चालानपराजितः ॥ ३
किममन्यत दुर्धर्षे प्रविष्टे शत्रुतापने ।
दुर्योधनस्तु किं कृत्यं प्राप्तकालममन्यत ॥ ४
के च तं वरदं वीरमन्वयुर्द्विजसत्तमम् ।
के चास्य पृष्ठतोऽगच्छन्वीराः शूरस्य युध्यतः ।
के पुरस्तादवर्तन्त निघ्नन्तः शात्रवान्रणे ॥ ५
मन्येऽहं पाण्डवान्सर्वान्भारद्वाजशरार्दितान् ।
शिशिरे कम्पमाना वै कृशा गाव इव प्रभो ॥ ६
प्रविश्य स महेष्वासः पाञ्चालानरिमर्दनः ।
कथं नु पुरुषव्याघ्रः पञ्चत्वमुपजग्मिवान् ॥ ७

सर्वेषु योधेषु च संगतेषु
रात्रौ समेतेषु महारथेषु ।
संलोड्यमानेषु पृथग्बलेषु
के वस्तदानीं मतिमन्त आसन् ॥ ८

हतांश्चैव विषक्तांश्च पराभूतांश्च शंससि ।
रथिनो विरथांश्चैव कृतान्युद्धेषु मामकान् ॥ ९
तेषां संलोड्यमानानां पाण्डवैर्हतचेतसाम् ।
अन्धे तमसि मग्नानामभवत्का मतिस्तदा ॥ १०
प्रहृष्टांश्चाप्युदग्रांश्च संतुष्टांश्चैव पाण्डवान् ।

गावः गाः ॥ ६ ॥

शंससीहाप्रहृष्टांश्च विभ्रष्टांश्चैव मामकान् ॥ ११
कथमेषां तदा तत्र पार्थानामपलायिनाम् ।
प्रकाशमभवद्रात्रौ कथं कुरुषु सञ्जय ॥ १२

सञ्जय उवाच ।

रात्रियुद्धे तदा राजन्वर्तमाने सुदारुणे ।
द्रोणमभ्यद्रवन्सर्वे पाण्डवाः सह सोमकैः ॥ १३
ततो द्रोणः केकयांश्च धृष्टद्युम्नस्य चात्मजान् ।
संप्रैषयत्प्रेतलोकं सर्वानिषुभिराशुगैः ॥ १४
तस्य प्रमुखतो राजन्येऽवर्तन्त महारथाः ।
तान्सर्वान्प्रेषयामास पितृलोकं स भारत ॥ १५
प्रमथ्नन्तं तदा वीरान्भारद्वाजं महारथम् ।
अभ्यवर्तत संक्रुद्धः शिबी राजा प्रतापवान् ॥ १६
तमापतन्तं संप्रेक्ष्य पाण्डवानां महारथम् ।
विव्याध दशभिर्द्रोणः सर्वपारशवैः शितैः ॥ १७
तं शिबिः प्रतिविव्याध त्रिंशता निशितैः शरैः ।
सारथिं चास्य भल्लेन स्मयमानो न्यपातयत् ॥ १८
तस्य द्रोणो हयान्हत्वा सारथिं च महात्मनः ।
अथाऽस्य सशिरस्त्राणं शिरः कायादपाहरत् ॥१९
ततोऽस्य सारथिं क्षिप्रमन्यं दुर्योधनोऽदिशत् ।
स तेन संगृहीताश्वः पुनरभ्यद्रवद्रिपून् ॥ २०
कलिङ्गानामनीकेन कालिङ्गस्य सुतो रणे ।
पूर्वं पितृवधात्क्रुद्धो भीमसेनमुपाद्रवत् ॥ २१
स भीमं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ।
विशोकं त्रिभिराजघ्ने ध्वजमेकेन पत्रिणा ॥ २२
कलिङ्गानां तु तं शूरं क्रुद्धं क्रुद्धो वृकोदरः ।
रथाद्रथमभिद्रुत्य मुष्टिनाऽभिजघान ह ॥ २३
तस्य मुष्टिहतस्याजौ पाण्डवेन बलीयसा ।
सर्वाण्यस्थीनि सहसा प्रापतन्वै पृथक्पृथक् ॥ २४
'तस्मिन्हते तदा तेन सिंहनादो महानभूत् ।
पाञ्चालानां महाराज साधुसाध्विति पाण्डवम् ॥'
तं कर्णो भ्रातरश्चास्य नामृष्यन्त परंतप ।
ते भीमसेनं नाराचैर्जघ्नुराशीविषोपमैः ॥ २६
ततः शत्रुरथं त्यक्त्वा भीमो ध्रुवरथं गतः ।
ध्रुवं चास्यन्तमनिशं मुष्टिना समपोथयत् ॥ २७
'यथा काचमणिर्न्यस्तो मुष्टिनैकेन लीलया ।
स हतः सर्वथा चूर्णो रक्तमेवोदपद्यत ॥ २८
तथा चूर्णमभूत्तत्र कर्णभ्राता ध्रुवस्तथा ।'
स तदा पाण्डुपुत्रेण बलिनाऽभिहतोऽपतत् ॥२९
तं निहत्य महाराज भीमसेनो महाबलः ।
जयरातरथं प्राप्य मुहुः सिंह इवानदत् ॥ ३०
जयरातं तु चरणे गृह्य भीमो महाबलः ।
सूतं चास्य महाबाहुर्गृह्य राजंस्तथैव च ॥ ३१
पादयोर्गृह्य तौ वीरौ भीमः कर्णस्य पश्यतः ।
भूमावाविध्य जघ्ने स तौ च प्राणैर्व्ययुज्यताम् ॥३२
कर्णस्तु पाण्डवे शक्तिं काञ्चनीं समवासृजत् ।
ततस्तामेव जग्राह प्रहसन्पाण्डुनन्दनः ॥ ३३
कर्णायैव च दुर्धर्षश्चिक्षेपाजौ वृकोदरः ।
तामापतन्तीं चिच्छेद शकुनिस्तैलपायिना ॥३४
एतत्कृत्वा महत्कर्म रणेऽद्भुतपराक्रमः ।
पुनः स्वरथमास्थाय दुद्राव तव वाहिनीम् ॥३५
तमायान्तं जिघांसन्तं भीमं क्रुद्धमिवान्तकम् ।
न्यवारयन्महाबाहुं तव पुत्रा विशांपते ।
महता शरवर्षेण च्छादयन्तो महारथाः ॥ ३६
दुर्मदस्य ततो भीमः प्रहसन्निव संयुगे ।
सारथिं च हयांश्चैव शरैर्निन्ये यमक्षयम् ॥ ३७
दुर्मदस्तु ततो यानं दुष्कर्णस्यावचक्रमे ।
तावेकरथमारूढौ भ्रातरौ परतापनौ ॥ ३८
संग्रामशिरसो मध्ये भीमं द्वावप्यधावताम् ।
यथाम्बुपतिमित्रौ हि तारकं दैत्यसत्तमम् ॥ ३९
ततस्तु दुर्मदश्चैव दुष्कर्णश्च तवात्मजौ ।
रथमेकं समारुह्य भीमं बाणैरविध्यताम् ॥ ४०
ततः कर्णस्य मिषतो द्रौणेर्दुर्योधनस्य च ।
कृपस्य सोमदत्तस्य बाह्लीकस्य च पाण्डवः ॥ ४१
दुर्मदस्य च वीरस्य दुष्कर्णस्य च तं रथम् ।
पादप्रहारेण धरां प्रावेशयदरिंदमः ॥ ४२
ततः सुतौ ते बलिनौ शूरौ दुष्कर्णदुर्मदौ ।
मुष्टिनाऽऽहत्य संक्रुद्धो ममर्द चरणेन ह ॥ ४३

ततो हाहाकृते सैन्ये दृष्ट्वा भीमं नृपाऽब्रुवन् ।
रुद्रोऽयं भीमरूपेण धार्तराष्ट्रेषु युध्यति ॥ ४४
एवमुक्त्वा पलायन्ते सर्वे भारत पार्थिवाः ।
विसंज्ञा वाहयन्वाहान्न च द्वौ सह धावतः ॥ ४५
ततो बले भृशलुलिते निशामुखे
सुपूजितो नृपवृषभैर्वृकोदरः ।
महाबलः कमलविबुद्धलोचनो
युधिष्ठिरं नृपतिमपूजयद्बली ॥ ४६
ततो यमौ द्रुपदविराटकेकया
युधिष्ठिरश्चापि परां मुदं ययुः ।
वृकोदरं भृशमनुपूजयंश्च ते
यथान्धके प्रतिनिहते हरं सुराः ॥ ४७
ततः सुतास्ते वरुणात्मजोपमा
रुषान्विताः सह गुरुणा महात्मना ।
वृकोदरं सरथपदातिकुञ्जरा
युयुत्सवो भृशमभिपर्यवारयन् ॥ ४८
'ततो यमौ द्रुपदसुताः ससैनिका
युधिष्ठिरद्रुपदविराटसात्वताः ।
घटोत्कचो जयविजयौ द्रुमो वृकः
ससृञ्जयास्तव तनयानवारयन् ॥' ४९
ततोऽभवत्तिमिरघनैरिवावृते
महाभये भयदमतीव दारुणम् ।
निशामुखे वृकबलगृध्रमोदनं
महात्मनां नृपवर युद्धमद्भुतम् ॥ ५०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

## सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

सात्यकिना सोमदत्तपराजयः ॥ १ ॥ अश्वत्थामघटोत्कचयुद्धमश्वत्थामपराक्रमश्च ॥ २ ॥

सञ्जय उवाच ।
प्रायोपविष्टे तु हते पुत्रे सात्यकिना तदा ।
सोमदत्तो भृशं क्रुद्धः सात्यकिं वाक्यमब्रवीत् ॥ १
क्षत्रधर्मः परो दृष्टो यस्तु देवैर्महात्मभिः ।
तं त्वं सात्वत संत्यज्य दस्युधर्मे कथं रतः ॥ २
पराङ्मुखाय दीनाय न्यस्तशस्त्राय याचते ।
क्षत्रधर्मरतः प्राज्ञः कथं नु प्रहरेद्रणे ॥ ३
द्वावेव किल वृष्णीनां तत्र ख्यातौ महारथौ ।
प्रद्युम्नश्च महाबाहुस्त्वं चैव युधि सात्वत ॥ ४
कथं प्रायोपविष्टाय पार्थेन च्छिन्नबाहवे ।
नृशंसं बत दीनं च तादृशं कृतवानसि ॥ ५
कर्मणस्तस्य दुर्वृत्त फलं प्राप्नुहि संयुगे ।
अद्य छेत्स्यामि ते मूढ शिरो विक्रम्य पत्रिणा ॥ ६
शपे सात्वत पुत्राभ्यामिष्टेन सुकृतेन च ।
अनतीतामिमां रात्रिं यदि त्वां वीरमानिनम् ॥ ७
अरक्ष्यमाणं पार्थेन जिष्णुना ससुतानुजम् ।
न हन्यां नरके घोरे पतेयं वृष्णिपांसन ॥ ८
एवमुक्त्वा सुसंक्रुद्धः सोमदत्तो महाबलः ।
दध्मौ शङ्खं च तारेण सिंहनादं ननाद च ॥ ९
ततः कमलपत्राक्षः सिंहदंष्ट्रो दुरासदः ।
सात्यकिर्भृशसंक्रुद्धः सोमदत्तमथाब्रवीत् ॥ १०
कौरवेय न मे त्रासः कथंचिदपि विद्यते ।
त्वया सार्धमथान्यैश्च युध्यतो हृदि कश्चन ॥ ११
यदि सर्वेण सैन्येन गुप्तो मां योधयिष्यसि ।
तथापि न व्यथा काचित्त्वयि स्यान्मम कौरव ॥ १२
युद्धसारेण वाक्येन असतां संमतेन च ।
नाहं भीषयितुं शक्यः क्षत्रवृत्ते स्थितस्त्वया ॥ १३
यदि तेऽस्ति युयुत्साऽद्य मया सह नराधिप ।
निर्दयो निशितैर्बाणैः प्रहर प्रहरामि ते ॥ १४
हतो भूरिश्रवा वीरस्तव पुत्रो महारथः ।
शलश्चैव महाराज भ्रातृव्यसनकर्शितः ॥ १५
त्वां चाप्यद्य वधिष्यामि सहपुत्रं सबान्धवम् ।

कमलविबुद्धलोचनो विलसत्पद्मनेत्रः ॥ ४६ ॥ गुरुणा द्रोणेन ॥ ४८ ॥ तिमिराण्येव घनास्तैः ॥ ५० ॥
षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥
तारेणोच्चस्वरेण ॥ ९ ॥

तिष्ठेदानीं रणे यत्तः कौरवोऽसि महारथः ॥ १६
यस्मिन्दानं दमः शौचमहिंसा ह्रीर्धृतिः क्षमा ।
अनपायानि सर्वाणि नित्यं राज्ञि युधिष्ठिरे ॥ १७
मृदङ्गकेतोस्तस्य त्वं तेजसा निहतः पुरा ।
सकर्णसौवलः सङ्ख्ये विनाशमुपयास्यसि ॥ १८
शपेऽहं कृष्णचरणैरिष्टापूर्तेन चैव ह ।
यदि त्वां ससुतं पापं न हन्यां युधि रोषितः ॥ १९
अपयास्यसि चेत्त्यक्त्वा रणं मुक्तो भविष्यसि॥२०
एवमाभाष्य चान्योन्यं क्रोधसंरक्तलोचनौ ।
प्रवृत्तौ शरसंपातं कर्तुं पुरुषसत्तमौ ॥ २१
ततो रथसहस्रेण नागानामयुतेन च ।
दुर्योधनः सोमदत्तं परिवार्य व्यवस्थितः ॥ २२
शकुनिश्च सुसंक्रुद्धः सर्वशस्त्रभृतां वरः ।
पुत्रपौत्रैः परिवृतो भ्रातृभिश्चेन्द्रविक्रमैः ।
स्यालस्तव महाबाहुर्वज्रसंहननो युवा ॥ २३
साग्रं शतसहस्रं तु हयानां तस्य धीमतः ।
सोमदत्तं महेष्वासं समन्तात्पर्यरक्षत ॥ २४
रक्ष्यमाणश्च बलिभिश्छादयामास सात्यकिम् ।
तं छाद्यमानं विशिखैर्दृष्ट्वा सन्नतपर्वभिः ॥ २५
धृष्टद्युम्नोऽभ्ययात्क्रुद्धः प्रगृह्य महतीं चमूम् ।
'अभ्यरक्षन्महाबाहुः सात्वतं सत्यविक्रमम् ॥'२६
चण्डवाताभिसृष्टानामुदधीनामिव स्वनः ।
आसीद्राजन्बलौघानामन्योन्यमभिनिघ्नताम्॥२७
विव्याध सोमदत्तस्तु सात्वतं नवभिः शरैः ।
सात्यकिर्नवभिश्चैनमवधीत्कुरुपुङ्गवम् ॥ २८
सोऽतिविद्धो बलवता समरे दृढधन्विना ।
रथोपस्थं समासाद्य मुमोह गतचेतनः ॥ २९
तं विमूढं समालक्ष्य सारथिस्त्वरयाऽन्वितः ।
अपोवाह रणाद्वीरं सोमदत्तं महारथम् ॥ ३०
तं विसंज्ञं समालक्ष्य युयुधानशरार्दितम् ।
अभ्यद्रवत्ततो द्रोणो यदुवीरजिघांसया ॥ ३१
तमायान्तमभिप्रेक्ष्य युधिष्ठिरपुरोगमाः ।
परिवव्रुर्महात्मानं परीप्सन्तो यदूत्तमम् ॥ ३२
ततः प्रववृते युद्धं द्रोणस्य सह पाण्डवैः ।
बलेरिव सुरैः पूर्वं त्रैलोक्यजयकाङ्क्षया ॥ ३३
ततः सायकजालेन पाण्डवानीकमावृणोत् ।
भारद्वाजो महातेजा विव्याध च युधिष्ठिरम्॥३४
सात्यकिं दशभिर्बाणैर्विंशत्या पार्षतं शरैः ।
भीमसेनं च नवभिर्नकुलं पञ्चभिस्तथा ॥ ३५
सहदेवं तथाऽष्टाभिः शतेन च शिखण्डिनम् ।
द्रौपदेयान्महाबाहुः पञ्चभिः पञ्चभिः शरैः॥ ३६
विराटं मत्स्यमष्टाभिर्द्रुपदं दशभिः शरैः ।
युधामन्युं त्रिभिः षड्भिरुत्तमौजसमाहवे ।
अन्यांश्च सैनिकान्विद्ध्वा युधिष्ठिरमुपाद्रवत्॥ ३७
ते वध्यमाना द्रोणेन पाण्डुपुत्रस्य सैनिकाः ।
प्राद्रवन्वै भयाद्राजन्सार्तनादा दिशो दश॥ ३८
काल्यमानं तु तत्सैन्यं दृष्ट्वा द्रोणेन फल्गुनः ।
किंचिदागतसंरम्भो गुरुं पार्थोऽभ्ययाद्द्रुतम्॥३९
दृष्ट्वा द्रोणं तु बीभत्सुमभिधावन्तमाहवे ।
संन्यवर्तत तत्सैन्यं पुनर्यौधिष्ठिरं बलम् ॥ ४०
ततो युद्धमभूद्भूयो भारद्वाजस्य पाण्डवैः ॥ ४१
द्रोणस्तव सुतै राजन्सर्वतः परिवारितः ।
व्यधमत्पाण्डुसैन्यानि तूलराशिमिवानलः ॥ ४२
तं ज्वलन्तमिवादित्यं दीप्तानलसमद्युतिम् ।
राजन्ननिशमत्यन्तं दृष्ट्वा द्रोणं शरार्चिषम् ॥ ४३
मण्डलीकृतधन्वानं तपन्तमिव भास्करम् ।
दहन्तमहितान्सैन्ये नैनं कश्चिदवारयत् ॥ ४४
योयो हि प्रमुखे तस्य तस्थौ द्रोणस्य पूरुषः ।
तस्यतस्य शिरश्छित्त्वा ययुर्द्रोणशराः क्षितिम्॥४५
एवं सा पाण्डवी सेना वध्यमाना महात्मना ।
प्रदुद्राव पुनर्भीता पश्यतः सव्यसाचिनः ॥ ४६
संप्रभग्नं बलं दृष्ट्वा द्रोणेन निशि भारत ।
गोविन्दमब्रवीज्जिष्णुर्गच्छ द्रोणरथं प्रति ॥ ४७
ततो रजतगोक्षीरकुन्देन्दुसदृशप्रभान् ।
चोदयामास दाशार्हो हयान्द्रोणरथं प्रति ॥ ४८
भीमसेनोऽपि तं दृष्ट्वा यान्तं द्रोणाय फल्गुनम् ।

कृष्णचरणैः कृष्णयोश्चरणैः ॥ १९ ॥ द्रोणमभिधावन्तं बीभत्सुं दृष्ट्वा यौधिष्ठिरं बलं तत्सैन्यं द्रोणसैन्यंप्रति पुनः संन्यवर्ततेति संबन्धः ॥ ४० ॥

स्वसारथिमुवाचेदं द्रोणानीकाय मां वह ॥ ४९
सोऽपि तस्य वचः श्रुत्वा विशोकोऽवाहयद्धयान् ।
पृष्ठतः सत्यसन्धस्य जिष्णोर्भरतसत्तम ॥ ५०
तौ दृष्ट्वा भ्रातरौ यत्तौ द्रोणानीकमभिद्रुतौ ।
पाञ्चालाः सृञ्जया मात्स्याश्चेदिकारूशकोसलाः ।
अन्वगच्छन्महाराज केकयाश्च महारथाः ॥ ५१
ततो राजन्नभूद्घोरः संग्रामो रोमहर्षणः ॥ ५२
बीभत्सुर्दक्षिणं पार्श्वमुत्तरं च वृकोदरः ।
महद्भ्यां रथवृन्दाभ्यां बलं जगृहतुस्तव ॥ ५३
तौ दृष्ट्वा पुरुषव्याघ्रौ भीमसेनधनञ्जयौ ।
धृष्टद्युम्नोऽभ्ययाद्राजन्सात्यकिश्च महाबलः ॥ ५४
चण्डवाताभिपन्नानामुदधीनामिव स्वनः ।
आसीद्राजन्बलौघानां तदाऽन्योन्यमभिघ्नतां ॥ ५५
सोमदत्तिवधात्क्रुद्धो दृष्ट्वा सात्यकिमाहवे ।
द्रौणिरभ्यद्रवद्राजन्वधाय कृतनिश्चयः ॥ ५६
तमापतन्तं संप्रेक्ष्य शैनेयस्य रथं प्रति ।
भैमसेनिः सुसंक्रुद्धः प्रत्यमित्रमवारयत् ॥ ५७
कार्ष्णायसं महाघोरमृक्षचर्मपरिच्छदम् ।
महान्तं रथमास्थाय त्रिंशन्नल्वान्तरान्तरम् ॥ ५८
विक्षिप्तयन्त्रसन्नाहं महामेघौघनिःस्वनम् ।
युक्तं गजनिभैर्वाहैर्न हयैर्नापि वारणैः ॥ ५९
विक्षिप्तपक्षचरणविवृताक्षेण कूजता ।
ध्वजेनोच्छ्रितदण्डेन गृध्रराजेन राजितम् ॥ ६०
लोहितार्द्रपताकं तु आन्त्रमालाविभूषितम् ।
अष्टचक्रसमायुक्तमास्थाय विपुलं रथम् ॥ ६१
शूलमुद्गरधारिण्या शैलपादपहस्तया ।
रक्षसां घोररूपाणामक्षौहिण्या समावृतः ॥ ६२
तमुद्यतमहाचापं निशाम्य व्यथिता नृपाः ।
युगान्तकालसमये दण्डहस्तमिवान्तकम् ॥ ६३
ततस्तं गिरिशृङ्गाभं भीमरूपं भयावहम् ।
दंष्ट्राकरालोग्रमुखं शङ्कुकर्णं महाहनुम् ॥ ६४
ऊर्ध्वकेशं विरूपाक्षं दीप्तास्यं निम्नितोदरम् ।
महाश्वभ्रगलद्वारं किरीटच्छन्नमूर्धजम् ॥ ६५
त्रासनं सर्वभूतानां व्यात्ताननमिवान्तकम् ।
वीक्ष्य दीप्तमिवायान्तं रिपुविक्षोभकारिणम् ॥ ६६
तमुद्यतमहाचापं राक्षसेन्द्रं घटोत्कचम् ।
भयार्दिता प्रचुक्षोभ पुत्रस्य तव वाहिनी ।
वायुना क्षोभितावर्ता गङ्गेवोर्ध्वतरङ्गिणी ॥ ६७
घटोत्कचप्रयुक्तेन सिंहनादेन भीषिताः ।
प्रसुस्रुवुर्गजा मूत्रं विव्यथुश्च नरा भृशम् ॥ ६८
ततोऽश्मवृष्टिरत्यर्थमासीत्तत्र समन्ततः ।
सन्ध्याकालाधिकबलैः प्रयुक्ता राक्षसैः क्षितौ ॥ ६९
आयसानि च चक्राणि भुशुण्ड्यः प्रासतोमराः ।
पतन्त्यविरताः शूलाः शतघ्न्यः पट्टिसास्तथा ॥ ७०
तदुग्रमतिरौद्रं च दृष्ट्वा युद्धं नराधिपाः ।
तनयास्तव कर्णश्च व्यथिताः प्राद्रवन्दिशः ॥ ७१
तत्रैकोऽस्त्रबलश्लाघी द्रौणिर्मानी न विव्यथे ।
व्यधमच्च शरैर्मायां घटोत्कचविनिर्मिताम् ॥ ७२
विहतायां तु मायायाममर्षी स घटोत्कचः ।
विससर्ज शरान्घोरांस्तेऽश्वत्थामानमाविशन् ।
भुजङ्गा इव वेगेन वल्मीकं क्रोधमूर्च्छिताः ॥ ७३
ते शरा रुधिराक्ताङ्गा भित्त्वा शारद्वतीसुतम् ।
विविशुर्धरणीं शीघ्रा रुक्मपुङ्खाः शिलाशिताः ॥ ७४
अश्वत्थामा तु संक्रुद्धो लघुहस्तः प्रतापवान् ।
घटोत्कचमभिक्रुद्धं बिभेद दशभिः शरैः ॥ ७५
घटोत्कचोऽतिविद्धस्तु द्रोणपुत्रेण मर्मसु ।
चक्रं शतसहस्रारमगृह्णाद्व्यथितो भृशम् ॥ ७६
क्षुरान्तं बालसूर्याभं मणिवज्रविभूषितम् ।
अश्वत्थाम्नि स चिक्षेप भैमसेनिर्जिघांसया ॥ ७७
वेगेन महता गच्छद्विक्षिप्तं द्रौणिना शरैः ।
अभाग्यस्येव संकल्पस्तन्मोघमपतद्भुवि ॥ ७८
घटोत्कचस्ततस्तूर्णं दृष्ट्वा चक्रं निपातितम् ।
द्रौणिं प्राच्छादयद्बाणैः स्वर्भानुरिव भास्करम् ७९
घटोत्कचसुतः श्रीमान्भिन्नाञ्जनचयोपमः ।
रुरोध द्रौणिमायान्तं प्रभञ्जनमिवाद्रिराट् ॥ ८०
पौत्रेण भीमसेनस्य शरैरञ्जनपर्वणा ।

---

कार्ष्णायसं तीक्ष्णलोहमयम् ॥ ५८ ॥

न हयैर्नापि वारणैर्गजैः किंतु पिशाचैः ॥ ५९ ॥

बभौ मेघेन धाराभिर्गिरिर्मेरुरिवावृतः ॥ ८१
अश्वत्थामा त्वसंभ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः ।
ध्वजमेकेन बाणेन चिच्छेदाञ्जनपर्वणः ॥ ८२
द्वाभ्यां तु रथयन्तारौ त्रिभिश्चास्य त्रिवेणुकम् ।
धनुरेकेन चिच्छेद चतुर्भिश्चतुरो हयान् ॥ ८३
विरथस्योद्यतं हस्ताद्धेमबिन्दुभिराचितम् ।
विशिखेन सुतीक्ष्णेन खड्गमस्य द्विधाऽकरोत् ॥८४
गदा हेमाङ्गदा राजंस्तूर्णं हैडिम्बिसूनुना ।
भ्राम्योत्क्षिप्ताशरैःसापि द्रौणिनाभ्याहताऽपतत्॥
ततोऽन्तरिक्षमुत्प्लुत्य कालमेघ इवोन्नदन् ।
ववर्षाञ्जनपर्वा स द्रुमवर्षं नभस्तलात् ॥ ८६
ततो मायाधरं द्रौणिर्घटोत्कचसुतं दिवि ।
मार्गणैरभिविव्याध घनं सूर्य इवांशुभिः ॥ ८७
सोऽवतीर्य पुरस्तस्थौ रथे हेमविभूषिते
महीगत इवात्युग्रः श्रीमानञ्जनपर्वतः ॥ ८८
तमयस्मयवर्माणं द्रौणिर्भीमात्मजात्मजम् ।
जघानाञ्जनपर्वाणं महेश्वर इवान्धकम् ॥ ८९
अथ दृष्ट्वा हतं पुत्रमश्वत्थाम्ना महाबलम् ।
द्रौणेः सकाशमभ्येत्य रोषात्प्रस्फुरिताधरः ॥ ९०
प्राह वाक्यमसंभ्रान्तो वीरं शारद्वतीसुतम् ।
दहन्तं पाण्डवानीकं वनमग्निमिवोच्छ्रितम् ॥ ९१
घटोत्कच उवाच ।
तिष्ठतिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि ।
त्वामद्य निहनिष्यामि क्रौञ्चमग्निसुतो यथा ॥ ९२
अश्वत्थामोवाच ।
गच्छ वत्स सहान्यैस्त्वं युध्यस्वामरविक्रम ।
न हि पुत्रेण हैडिम्ब पिता न्याय्यः प्रबाधितुम् ९३
कामं खलु न रोषो मे हैडिम्बे विद्यते त्वयि ।
किं तु रोषान्वितो जन्तुर्हन्यादात्मानमप्युत ॥९४
सञ्जय उवाच ।
श्रुत्वैतत्क्रोधताम्राक्षः पुत्रशोकसमन्वितः ।
अश्वत्थामानमायस्तो भैमसेनिरभाषत ॥ ९५
किमहं कातरो द्रौणे पृथग्जन इवाहवे ।
यन्मां भीषयसे वाग्भिरसदेतद्वचस्तव ॥ ९६
भीमात्खलु समुत्पन्नः कुरूणां विपुले कुले ।
पाण्डवानामहं पुत्रः समरेष्वनिवर्तिनाम् ॥ ९७
रक्षसामधिराजोऽहं दशग्रीवसमो बले ।
तिष्ठतिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि ॥ ९८
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ॥ ९९
इत्युक्त्वा क्रोधताम्राक्षो राक्षसः सुमहाबलः ।
द्रौणिमभ्यद्रवत्क्रुद्धो गजेन्द्रमिव केसरी ॥ १००
रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः ।
रथिनामृषभं द्रौणिं धाराभिरिव तोयदः ॥ १०१
शरवृष्टिं शरैर्द्रौणिरप्राप्तां तां व्यशातयत् ।
ततोन्तरिक्षे बाणानां संग्रामोऽन्य इवाभवत् १०२
अथास्त्रसंमर्दकृतैर्विस्फुलिङ्गैस्तदा बभौ
विभावरीमुखे व्योम खद्योतैरिव चित्रितम् ॥१०३
निशाम्य निहतां मायां द्रौणिना रणमानिना ।
घटोत्कचस्ततो मायां ससर्जान्तर्हितः पुनः॥ १०४
सोऽभवद्गिरिरत्युच्चः शिखरैस्तरुसंकटैः ।
शूलप्रासासिमुसलजलप्रस्रवणो महान् ॥ १०५
तमञ्जनगिरिप्रख्यं द्रौणिर्दृष्ट्वा महीधरम्
प्रपतद्भिश्च बहुभिः शस्त्रसङ्घैर्न विव्यथे ॥ १०६
ततो हसन्निव द्रौणिर्वज्रमस्त्रमुदैरयत् ।
स तेनास्त्रेण शैलेन्द्रः क्षिप्तः क्षिप्रं व्यनश्यत॥१०७
ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि ।
अश्मवृष्टिभिरत्युग्रो द्रौणिमाच्छादयद्रणे ॥ १०८
अथ संधाय वायव्यमस्त्रमस्त्रविदां वरः ।
व्यधमद्द्रोणतनयो नीलमेघं समुत्थितम् ॥ १०९
स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्वशः ।
शतं रथसहस्राणां जघान द्विपदां वरः ॥ ११०
स दृष्ट्वा पुनरायान्तं रथेनायतकार्मुकम् ।
घटोत्कचमसंभ्रान्तं राक्षसैर्बहुभिर्वृतम् ॥ १११
सिंहशार्दूलसदृशैर्मत्तद्विरदविक्रमैः ।
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैरपि ॥ ११२
विकृतास्यशिरोग्रीवैर्हैडिम्बानुचरैः सह ।

गच्छ वत्सेति पुत्रेणेति च भीमसेनसंबन्धात् । प्रबाधितुं मनःखेदमुत्पादयितुम् ॥ ९३ ॥ आत्मानमपि हन्यात्किमु पुत्रमतो जीवनार्थी त्वं निवर्तस्वेति भावः ॥ ९४ ॥ आयस्तः कोपितः ॥ ९५ ॥

पौलस्त्यैर्यातुधानैश्च तामसैश्चेन्द्रविक्रमैः ॥ ११३
नानाशस्त्रधरैर्वीरैर्नानाकवचभूषणैः ।
महाबलैर्भीमरवैः संरम्भोद्वृत्तलोचनैः ॥ ११४
उपस्थितैस्ततो युद्धे राक्षसैर्युद्धदुर्मदैः ।
विषण्णमभिसंप्रेक्ष्य पुत्रं ते द्रौणिरब्रवीत् ॥ ११५
तिष्ठ दुर्योधनाद्य त्वं न कार्यः संभ्रमस्त्वया ।
सहैभिर्भ्रातृभिर्वीरैः पार्थिवैश्चेन्द्रविक्रमैः ॥ ११६
निहनिष्याम्यमित्रांस्ते न तवास्ति पराजयः ।
सत्यं ते प्रतिजानामि पर्याश्वासय वाहिनीम् ११७
दुर्योधन उवाच ।
न त्वेतदद्भुतं मन्ये यत्ते महदिदं मनः ।
अस्मासु च परा भक्तिस्तव गौतमिनन्दन ॥ ११८
सञ्जय उवाच ।
अश्वत्थामानमुक्त्वैवं ततः सौबलमब्रवीत् ।
वृतं रथसहस्रेण हयानां रणशोभिनाम् ॥ ११९
षष्ट्या रथसहस्रैश्च प्रयाहि त्वं धनंजयम् ।
कर्णश्च वृषसेनश्च कृपो नीलस्तथैव च ॥ १२०
उदीच्याः कृतवर्मा च पुरुमित्रः सुतापनः ।
दुःशासनो निकुम्भश्च कुण्डभेदी पराक्रमः ॥ १२१
पूरंजयो दृढरथः पताकी हेमकम्पनः ।
शल्यारुणीन्द्रसेनाश्च सञ्जयो विजयो जयः ॥१२२
कमलाक्षः परक्राथी जयवर्मा सुदर्शनः ।
एते त्वामनुयास्यन्ति पत्तीनामयुतानि षट् ॥१२३
जहि भीमं यमौ चोभौ धर्मराजं च मातुल ।
असुरानिव देवेन्द्रो जयाशा मे त्वयि स्थिता ॥१२४
दारितान्द्रौणिना बाणैर्भृशं विक्षतविग्रहान्
जहि मातुल कौन्तेयानसुरानिव पावकिः ॥ १२५
सञ्जय उवाच ।
एवमुक्तो ययौ शीघ्रं पुत्रेण तव सौबलः ।
पिप्रीषुस्ते सुतान्राजन्दिधक्षुश्चैव पाण्डवान् ॥१२६
अथ प्रववृते युद्धं द्रौणिराक्षसयोर्मृधे ।
विभावर्यां सुतुमुलं शक्रप्रह्रादयोरिव ॥ १२७
ततो घटोत्कचो बाणैर्दशभिर्गौतमीसुतम् ।
जघानोरसि संक्रुद्धो विषाग्निप्रतिमैर्दृढैः ॥ १२८
स तैरभ्याहतो गाढं शरैर्भीमसुतेरितैः ।
चचाल रथमध्यस्थो वातोद्धूत इव द्रुमः ॥ १२९
भूयश्चाञ्जलिकेनाथ मार्गणेन महाप्रभम् ।
द्रौणिहस्तस्थितं चापं चिच्छेदाशु घटोत्कचः ॥१३०
ततोऽन्यद्द्रौणिरादाय धनुर्भारसहं महत् ।
ववर्ष विशिखांस्तीक्ष्णान्वारिधारा इवाम्बुदः ॥
ततः शारद्वतीपुत्रः प्रेषयामास भारत ।
सुवर्णपुङ्खाञ्छत्रुघ्नान्खचरान्खचरं प्रति ॥ १३२
तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम् ।
सिंहैरिव बभौ मत्तं गजानामाकुलं कुलम् ॥ १३३
विधम्य राक्षसान्बाणैः साश्वसूतरथद्विपान् ।
ददाह भगवान्वह्निर्भूतानीव युगक्षये ॥ १३४
स दग्ध्वाऽक्षौहिणीं बाणैर्नैर्ऋतीं रुरुचे नृप ।
पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः ॥ १३५
युगान्ते सर्वभूतानि दग्ध्वेव वसुरुल्बणः ।
रराज जयतां श्रेष्ठो द्रोणपुत्रस्तवाहितान् ॥ १३६
ततो घटोत्कचः क्रुद्धो रक्षसां भीमकर्मणाम् ।
द्रौणिं हतेति महतीं चोदयामास तां चमूम् ॥ १३७
घटोत्कचस्य तामाज्ञां प्रतिगृह्याथ राक्षसाः ।
दंष्ट्रोज्ज्वला महावक्त्रा घोररूपा भयानकाः ॥१३८
व्यात्तानना घोरजिह्वाः क्रोधताम्रेक्षणा भृशम् ।
सिंहनादेन महता नादयन्तो वसुंधराम् ॥ १३९
हन्तुमभ्यद्रवन्द्रौणिं नानाप्रहरणायुधाः ।
शक्तीः शतघ्नीः परिघानशनीः शूलपट्टिशान् ॥१४०
खड्गान्गदाभिण्डिपालान्मुसलानि परश्वधान् ।
प्रासानसींस्तोमरांश्च कणपान्कम्पनाङ्क्षितान् ॥
स्थूलान्भुशुण्ड्यश्मगदास्थूणान्कार्ष्णायसांस्तथा ।
मुद्गरांश्च महाघोरान्समरे शत्रुदारणान् ॥ १४२
द्रौणिमूर्धन्यसंत्रस्ता राक्षसा भीमविक्रमाः ।
चिक्षिपुः क्रोधताम्राक्षाः शतशोऽथ सहस्रशः ॥१४३
तच्छस्त्रवर्षं सुमहद्द्रोणपुत्रस्य मूर्धनि ।
पतमानं समीक्ष्याऽथ योधास्ते व्यथिताऽभवन् ॥

सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

शारद्वती कृपी । खचरान्बाणान् । खचरं राक्षसम् ॥ १३२ ॥
वसुरुल्बणः अग्निः प्रलयकालिकः ॥ १३६ ॥

द्रोणपुत्रस्तु विक्रान्तस्तद्रूपं घोरमुच्छ्रितम् ।
शरैर्विध्वंसयामास वज्रकल्पैः शिलाशितैः ॥१४५
ततोऽन्यैर्विशिखैस्तूर्णं स्वर्णपुङ्खैर्महामनाः ।
निजघ्ने राक्षसान्द्रौणिर्दिव्यास्त्रप्रतिमन्त्रितैः॥१४६
तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम् ।
सिंहैरिव बभौ मत्तं गजानामाकुलं कुलम् ॥ १४७
ते राक्षसाः सुसंक्रुद्धा द्रोणपुत्रेण ताडिताः ।
क्रुद्धाः स्म प्राद्रवन्द्रौणिं जिघांसन्तो महाबलाः ॥
तत्राद्भुतमिमं द्रौणिर्दर्शयामास विक्रमम् ।
अशक्यं कर्तुमन्येन सर्वभूतेषु भारत ॥ १४९
यदेको राक्षसीं सेनां क्षणाद्द्रौणिर्महास्त्रवित् ।
ददाह ज्वलितैर्बाणै राक्षसेन्द्रस्य पश्यतः ॥१५०
स हत्वा राक्षसानीकं रराज द्रौणिराहवे ।
युगान्ते सर्वभूतानि संवर्तक इवानलः ॥ १५१
तं दहन्तमनीकानि शरैराशीविषोपमैः ।
तेषु राजसहस्रेषु पाण्डवेयेषु भारत ॥ १५२
नैनं निरीक्षितुं कश्चिदशक्नोद्द्रौणिमाहवे ।
ऋते घटोत्कचाद्वीराद्राक्षसेन्द्रान्महाबलात्॥१५३
स पुनर्भरतश्रेष्ठ क्रोधादुद्भ्रान्तलोचनः ।
तलं तलेन संहत्य संदश्य दशनच्छदम् ॥ १५४
स्वं सूतमब्रवीत्क्रुद्धो द्रोणपुत्राय मां वह ।
स ययौ घोररूपेण सुपताकेन भास्वता ॥ १५५
द्वैरथं द्रोणपुत्रेण पुनरप्यरिसूदनः ।
स विनद्य महानादं सिंहवद्भीमविक्रमः ॥ १५६
चिक्षेपाविध्य संग्रामे द्रोणपुत्राय राक्षसः ।
अष्टघण्टां महाघोरामशनिं देवनिर्मिताम्॥ १५७
तामवप्लुत्य जग्राह द्रौणिर्न्यस्य रथे धनुः ।
चिक्षेप चैनां तस्यैव स्यन्दनात्सोऽवपुप्लुवे ॥१५८
साश्वसूतध्वजं यानं भस्म कृत्वा महाप्रभा ।
विवेश वसुधां भित्त्वा साऽशनिर्भृशदारुणा॥१५९
द्रौणेस्तत्कर्म दृष्ट्वा तु सर्वभूतान्यपूजयन् ।
यदवप्लुत्य जग्राह घोरां शंकरनिर्मिताम् ॥ १६०
धृष्टद्युम्नरथं गत्वा भैमसेनिस्ततो नृप ।
धनुर्घोरं समादाय महदिन्द्रायुधोपमम् ।
मुमोच निशितान्बाणान्पुनर्द्रौणेर्महोरसि ॥ १६१
धृष्टद्युम्नस्त्वसंभ्रान्तो मुमोचाशीविषोपमान् ।
सुवर्णपुङ्खान्विशिखान्द्रोणपुत्रस्य वक्षसि ॥ १६२
ततो मुमोच नाराचान्द्रौणिस्तांश्च सहस्रशः ।
तावप्यग्निशिखप्रख्यैर्जघ्नतुस्तस्य मार्गणान् ॥१६३
अतितीव्रं महद्युद्धं तयोः पुरुषसिंहयोः ।
योधानां प्रीतिजननं द्रौणेश्च भरतर्षभ ॥ १६४
ततो रथसहस्रेण द्विरदानां शतैस्त्रिभिः ।
षड्भिर्वाजिसहस्रैश्च भीमस्तं देशमागमत् ॥ १६५
ततो भीमात्मजं रक्षो धृष्टद्युम्नं च सानुगम् ।
अयोधयत धर्मात्मा द्रौणिरक्लिष्टविक्रमः ॥ १६६
तत्राद्भुततमं द्रौणिर्दर्शयामास विक्रमम् ।
अशक्यं कर्तुमन्येन सर्वभूतेषु भारत ॥ १६७
निमेषान्तरमात्रेण साश्वसूतरथद्विपाम् ।
अक्षौहिणीं राक्षसानां शितैर्बाणैरशातयत् ॥ १६८
मिषतो भीमसेनस्य हैडिम्बेः पार्षतस्य च ।
यमयोर्धर्मपुत्रस्य विजयस्याच्युतस्य च ॥ १६९
प्रगाढमञ्जोगतिभिर्नाराचैरभिताडिताः ।
निपेतुर्द्विरदा भूमौ सशृङ्गा इव पर्वताः ॥ १७०
निकृत्तैर्हस्तिहस्तैश्च विचलद्भिरितस्ततः ।
रराज वसुधा कीर्णा विसर्पद्भिरिवोरगैः ॥ १७१
क्षिप्तैः काञ्चनदण्डैश्च नृपच्छत्रैः क्षितिर्बभौ ।
द्यौरिवोदितचन्द्रार्का ग्रहाकीर्णा युगक्षये ॥ १७२
प्रवृद्धध्वजमण्डूकां भेरीविस्तीर्णकच्छपाम्
छत्रहंसावलीजुष्टां फेनचामरमालिनीम् ॥ १७३
कङ्कगृध्रमहाग्राहां नैकायुधझषाकुलाम् ।
विस्तीर्णगजपाषाणां हताश्वमकराकुलाम् ॥ १७४
रथक्षिप्तमहावप्रां पताकारुचिरद्रुमाम् ।
शरमीनां महारौद्रां प्रासशक्त्यृष्टिडुण्डुभाम् ॥१७५
मज्जामांसमहापङ्कां कबन्धावर्जितोडुपाम् ।
केशशैवलकल्माषां भीरूणां कश्मलावहाम् ॥१७६
नागेन्द्रहययोधानां शरीरव्ययसंभवाम् ।
शोणितौघमहाघोरां द्रौणिः प्रावर्तयन्नदीम् ॥१७७
योधार्तरवनिर्घोषां क्षतजोर्मिसमाकुलाम् ।

प्रयान्तीं सुमहाघोरां यमराष्ट्रमहोदधिम् ॥ १७८
निहत्य राक्षसान्बाणैर्द्रौणिर्हैडिम्बिमार्दयन् ।
पुनरप्यतिसंक्रुद्धः सवृकोदरपार्षतान् ॥ १७९
स नाराचगणैः पार्थान्द्रौणिर्विद्ध्वा महाबलः ।
जघान सुरथं नाम द्रुपदस्य सुतं विभुः ॥ १८०
पुनः शत्रुंजयं नाम द्रुपदस्यात्मजं रणे ।
बलानीकं जयानीकं जयाश्वं चाभिजघ्निवान् १८१
श्रुताह्वयं च राजानं द्रौणिर्निन्ये यमक्षयम् ।
त्रिभिश्चान्यैः शरैस्तीक्ष्णैः सुपुङ्खैर्हेममालिनम् १८२
जघान स पृषध्रं च चन्द्रसेनं च मारिष ।
कुन्तिभोजसुतांश्चासौ दशभिर्दश जघ्निवान् १८३
अश्वत्थामा सुसंक्रुद्धः संधायोग्रमजिह्मगम् ।
मुमोचाकर्णपूर्णेन धनुषा शरमुत्तमम् ।
यमदण्डोपमं घोरमुद्दिश्याशु घटोत्कचम् ॥ १८४
स भित्त्वा हृदयं तस्य राक्षसस्य महाशरः ।
विवेश वसुधां शीघ्रं सपुङ्खः पृथिवीपते ॥ १८५
तं हतं पतितं ज्ञात्वा धृष्टद्युम्नो महारथः ।
द्रौणेः सकाशाद्राजेन्द्र व्यपनिन्ये रथोत्तमम् १८६
ततः पराङ्मुखनृपं सैन्यं यौधिष्ठिरं नृप ।
पराजित्य रणे वीरो द्रोणपुत्रो ननाद ह ।
पूजितः सर्वभूतेषु तव पुत्रैश्च भारत ॥ १८७
अथ शरशतभिन्नकृत्तदेहै-
र्हतपतितैः क्षणदाचरैः समन्तात् ।
निधनमुपगतैर्मही कृताऽभू-
द्गिरिशिखरैरिव दुर्गमाऽतिरौद्रा ॥ १८८
तं सिद्धगन्धर्वपिशाचसङ्घा
नागाः सुपर्णाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च द्रौणि-
मपूजयन्नप्सरसः सुराश्च ॥ १८९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

## अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

भीमेन बाह्लीकवधः ॥ १ ॥ तथा दुर्योधनानुजदशकस्य शकुनिभ्रातृपञ्चकस्य च वधः ॥ २ ॥

सञ्जय उवाच ।
द्रुपदस्यात्मजान्दृष्ट्वा कुन्तिभोजसुतांस्तथा ।
द्रोणपुत्रेण निहतान्राक्षसांश्च सहस्रशः ॥ १
युधिष्ठिरो भीमसेनो धृष्टद्युम्नश्च पार्षतः ।
युयुधानश्च संयत्ता युद्धायैव मनो दधुः ॥ २
सोमदत्तः पुनः क्रुद्धो दृष्ट्वा सात्यकिमाहवे ।
महता शरवर्षेण च्छादयामास भारत ॥ ३
ततः समभवद्युद्धमतीव भयवर्धनम् ।
त्वदीयानां परेषां च घोरं विजयकाङ्क्षिणाम् ॥ ४
तं दृष्ट्वा समुपायान्तं रुक्मपुङ्खैः शिलाशितैः ।
दशभिः सात्वतस्यार्थे भीमो विव्याध सायकैः ॥ ५
सोमदत्तोऽपि तं वीरं शतेन प्रत्यविध्यत ।
सात्वतस्त्वभिसंक्रुद्धः पुत्राधिभिरभिप्लुतम् ॥ ६
वृद्धं वृद्धगुणैर्युक्तं ययातिमिव नाहुषम् ।
विव्याध दशभिस्तीक्ष्णैः शरैर्वज्रनिपातनैः ।
शक्त्या चैनं विनिर्भिद्य पुनर्विव्याध सप्तभिः ॥ ७
ततस्तु सात्यकेरर्थे भीमसेनो नवं दृढम् ।
मुमोच परिघं घोरं सोमदत्तस्य मूर्धनि ॥ ८
सात्वतोऽप्यग्निसंकाशं मुमोच शरमुत्तमम् ।
सोमदत्तोरसि क्रुद्धः सुपत्रं निशितं युधि ॥ ९
युगपत्पेततुर्वीर घोरौ परिघमार्गणौ ।
शरीरे सोमदत्तस्य स पपात महारथः ॥ १०
व्यामोहिते तु तनये बाह्लीकस्तमुपाद्रवत् ।
विसृजञ्छरवर्षाणि कालवर्षीव तोयदः ॥ ११
भीमोऽथ सात्वतस्यार्थे बाह्लीकं नवभिः शरैः ।
प्रातिपेयं महात्मानं विव्याध रणमूर्धनि ॥ १२
प्रातिपेयस्तु संक्रुद्धः शक्तिं भीमस्य वक्षसि ।
निचखान महाबाहुः पुरंदर इवाशनिम् ॥ १३
स तथाऽभिहतो भीमश्चकम्पे च मुमोह च ।

प्रातिपेयं प्रतीपपुत्रम् ॥ १२ ॥

प्राप्य चेतश्च बलवान्गदामस्मै ससर्ज ह ॥ १४
सा पाण्डवेन प्रहिता बाह्लीकस्य शिरोऽहरत् ।
स पपात हतः पृथ्व्यां वज्राहत इवाद्रिराट् ॥१५
तस्मिन्विनिहते वीरे बाह्लीके पुरुषर्षभ
पुत्रास्तेऽभ्यर्दयन्भीमं दश दाशरथेः समाः ॥ १६
नागदत्तो दृढरथो महाबाहुरयोभुजः ।
दृढः सुहस्तो विरजाः प्रमाथ्युग्रोऽनुयाय्यपि॥१७
तान्दृष्ट्वा चुक्रुधे भीमो जगृहे भारसाधनान् ।
एकमेकं समुद्दिश्य पातयामास मर्मसु ॥ १८
ते विद्धा व्यसवः पेतुः स्यन्दनेभ्यो हतौजसः ।
चण्डवातप्रभग्नास्तु पर्वताग्रान्महीरुहाः ॥ १९
नाराचैर्दशभिर्भीमस्तान्निहत्य तवात्मजान् ।
कर्णस्य दयितं पुत्रं वृषसेनमवाकिरत् ॥ २०
ततो वृकरथो नाम भ्राता कर्णस्य विश्रुतः ।
जघान भीमं नाराचैस्तमप्यभ्यद्रवद्बली ॥ २१
ततः सप्तरथान्वीरः श्यालानां तव भारत ।
निहत्य भीमो नाराचैः शतचन्द्रमपोथयत् ॥२२
अमर्षयन्तो निहतं शतचन्द्रं महारथम् ।
शकुनेर्भ्रातरो वीरा गवाक्षः शरभो विभुः ॥ २३
सुभगो भानुदत्तश्च शूराः पञ्च महारथाः ।
अभिद्रुत्य शरैस्तीक्ष्णैर्भीमसेनमताडयन् ॥ २४
स ताड्यमानो नाराचैर्वृष्टिवेगैरिवाचलः
जघान पञ्चभिर्बाणैः पञ्चैवातिरथान्बली ॥ २५
तान्दृष्ट्वा निहतान्वीरान्विचेलुर्नृपसत्तमाः ॥ २६
ततो युधिष्ठिरः क्रुद्धस्तवानीकमशातयत् ।
मिषतः कुम्भयोनेस्तु पुत्राणां तव चानघ ॥ २७
अम्बष्ठान्मालवाञ्छूरांस्त्रिगर्तान्सशिबीनपि ।
प्राहिणोन्मृत्युलोकाय क्रुद्धो युद्धे युधिष्ठिरः ॥२८
अभीषाहाञ्छूरसेनान्बाह्लीकान्सवसातिकान् ।
निहत्य पृथिवीं राजा चक्रे शोणितकर्दमाम् ॥२९
यौधेयान्मालवान्राजन्मद्रकाणां गणान्युधि ।
प्राहिणोन्मृत्युलोकाय शूरान्बाणैर्युधिष्ठिरः ॥ ३०
हताहरत गृह्णीत विध्यत व्यवकृन्तत ।
इत्यासीत्तुमुलः शब्दो युधिष्ठिररथं प्रति ॥ ३१
सैन्यानि द्रावयन्तं तं द्रोणो दृष्ट्वा युधिष्ठिरम् ।
चोदितस्तव पुत्रेण सायकैरभ्यवाकिरत् ॥ ३२
द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण पार्थिवम् ।
विव्याध सोऽपि तद्दिव्यमस्त्रमस्त्रेण जघ्निवान् ॥३३
तस्मिन्विनिहते चास्त्रे भारद्वाजो युधिष्ठिरे ।
वारुणं याम्यमाग्नेयं त्वाष्ट्रं सावित्रमेव च ।
चिक्षेप परमक्रुद्धो जिघांसुः पाण्डुनन्दनम् ॥३४
क्षिप्तानि क्षिप्यमाणानि तानि चास्त्राणि धर्मजः ।
जघानास्त्रैर्महाबाहुः कुम्भयोनेरवित्रसन् ॥ ३५
सत्यां चिकीर्षमाणस्तु प्रतिज्ञां कुम्भसंभवः ॥३६
प्रादुश्चक्रेऽस्त्रमैन्द्रं वै प्राजापत्यं च भारत ।
जिघांसुर्धर्मतनयं तव पुत्रहिते रतः ॥ ३७

पतिः कुरूणां गजसिंहगामी
विशालवक्षाः पृथुलोहिताक्षः ।
प्रादुश्चकारास्त्रमहीनतेजा
माहेन्द्रमस्त्रं स जघान तेन ॥ ३८

विहन्यमानेष्वस्त्रेषु द्रोणः क्रोधसमन्वितः ।
युधिष्ठिरवधं प्रेप्सुर्ब्राह्ममस्त्रमुदैरयत् ॥ ३९
ततो नाज्ञासिषं किंचिद्घोरेण तमसाऽऽवृते ।
सर्वभूतानि च परं त्रासं जग्मुर्महीपते ॥ ४०
ब्रह्मास्त्रमुद्यतं दृष्ट्वा कुन्तीपुत्रो युधिष्ठिरः ।
ब्रह्मास्त्रेणैव राजेन्द्र तदस्त्रं प्रत्यवारयत् ॥ ४१
ततः सैनिकमुख्यास्ते प्रशशंसुर्नरर्षभौ
द्रोणपार्थौ महेष्वासौ सर्वयुद्धविशारदौ ॥ ४२
ततः प्रमुच्य कौन्तेयं द्रोणो द्रुपदवाहिनीम् ।
व्यधमत्क्रोधताम्राक्षो वायव्यास्त्रेण भारत ॥४३
ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्भयात् ।
पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ॥४४
ततः किरीटी भीमश्च सहसा सन्न्यवर्तताम् ।
महद्भ्यां रथवंशाभ्यां परिगृह्य बलं तदा ॥ ४५
बीभत्सुर्दक्षिणं पार्श्वमुत्तरं च वृकोदरः ।
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् ॥४६

पतिः कुरूणां युधिष्ठिरः। माहेन्द्रमन्यत्स जघानेति झ. पाठः

॥ ३८ ॥ अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

केकयाः सृञ्जयाश्चैव पाञ्चालाश्च महौजसः ।
अन्वगच्छन्महाराज मात्स्याश्च सह सात्वतैः ॥ ४७
ततः सा भार्गवी सेना वध्यमाना किरीटिना ।
तमसा निद्रया चैव पुनरेव व्यदीर्यत ॥ ४८
द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च ।
नाशक्नुवन्त महाराज योधा वारयितुं तदा ॥ ४९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

## एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

कर्णेन पाण्डवहननं प्रतिजानानमात्मानमधिक्षिपतः कृपस्य जिह्वाच्छेदप्रतिज्ञानम् ॥ १ ॥

सञ्जय उवाच ।
उदीर्यमाणं तद्दृष्ट्वा पाण्डवानां महद्बलम् ।
अविषह्यं च मन्वानः कर्णं दुर्योधनोऽब्रवीत् ॥ १
अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल ।
त्रायस्व समरे कर्ण सर्वान्योधान्महारथान् ॥ २
पाञ्चालैर्मत्स्यकैकेयैः पाण्डवैश्च महारथैः ।
वृतान्समन्तात्संक्रुद्धैर्निःश्वसद्भिरिवोरगैः ॥ ३
एते नदन्ति संहृष्टाः पाण्डवा जितकाशिनः ।
शक्रोपमाश्च बहवः पाञ्चालानां रथव्रजाः ॥ ४
कर्ण उवाच ।
परित्रातुमिह प्राप्तो यदि पार्थं पुरंदरः ।
तमप्याशु पराजित्य ततो हन्तास्मि पाण्डवम् ॥ ५
सत्यं ते प्रतिजानामि समाश्वसिहि भारत ।
हन्तास्मि पाण्डुतनयान्पाञ्चालांश्च समागतान् ॥ ६
जयं ते प्रतिदास्यामि वासवस्येव पावकिः ।
प्रियं तव मया कार्यमिति जीवामि पार्थिव ॥ ७
सर्वेषामेव पार्थानां फल्गुनो बलवत्तरः ।
तस्यामोघां विमोक्ष्यामि शक्तिं शक्रविनिर्मिताम् ॥ ८
तस्मिन्हते महेष्वासे भ्रातरस्तस्य मानद ।
तव वश्या भविष्यन्ति वनं यास्यन्ति वा पुनः ॥ ९
मयि जीवति कौरव्य विषादं मा कृथाः क्वचित् ।
अहं जेष्यामि समरे सहितान्सर्वपाण्डवान् ॥ १०
पाञ्चालान्केकयांश्चैव वृष्णींश्चापि समागतान् ।
बाणौघैः शकलीकृत्य तव दास्यामि मेदिनीम् ११
सञ्जय उवाच ।
एवं ब्रुवाणं कर्णं तु कृपः शारद्वतोऽब्रवीत् ।
स्मयन्निव महाबाहुः सूतपुत्रमिदं वचः ॥ १२
शोभनं शोभनं कर्ण सनाथः कुरुपुङ्गवः ।
त्वया नाथेन राधेय वचसा यदि सिध्यति ॥ १३
बहुशः कत्थसे कर्ण कौरवस्य समीपतः ।
न तु ते विक्रमः कश्चिद्दृश्यते फलमेव वा ॥ १४
समागमः पाण्डुसुतैर्दृष्टस्ते बहुशो युधि ।
सर्वत्र निर्जितश्चासि पाण्डवैः सूतनन्दन ॥ १५
ह्रियमाणे तदा कर्ण गन्धर्वैर्धृतराष्ट्रजे ।
तदाऽयुध्यन्त सैन्यानि त्वमेकोऽग्रेऽपलायिथाः ॥
विराटनगरे चापि समेताः सर्वकौरवाः ।
पार्थेन निर्जिता युद्धे त्वं च कर्ण सहानुजः ॥ १७
एकस्याप्यसमर्थस्त्वं फल्गुनस्य रणाजिरे ।
कथमुत्सहसे जेतुं सकृष्णान्सर्वपाण्डवान् ॥ १८
अब्रुवन्कर्ण युध्यस्व कत्थसे बहु सूतज
अनुक्त्वा विक्रमेद्यस्तु तद्वै सत्पुरुषव्रतम् ॥ १९
गर्जित्वा सूतपुत्र त्वं शारदाभ्र इवाजलः ।
निष्फलो दृश्यसे कर्ण तच्च राजा न बुध्यते ॥ २०
तावद्गर्जस्व राधेय यावत्पार्थं न पश्यसि ।
आरात्पार्थं हि ते दृष्ट्वा दुर्लभं गर्जितं पुनः ॥ २१
त्वमनासाद्य तान्बाणान्फल्गुनस्य विगर्जसि ।
पार्थसायकविद्धस्य दुर्लभं गर्जितं तव ॥ २२
बाहुभिः क्षत्रियाः शूरा वाग्भिः शूरा द्विजातयः ।
धनुषा फल्गुनः शूरः कर्णः शूरो मनोरथैः ।
तोषितो येन रुद्रोऽपि कः पार्थं प्रतिघातयेत् ॥ २३
एवं संरुषितस्तेन तदा शारद्वतेन ह ।
कर्णः प्रहरतां श्रेष्ठः कृपं वाक्यमथाब्रवीत् ॥ २४
शूरा गर्जन्ति सततं प्रावृषीव बलाहकाः ।
फलं चाशु प्रयच्छन्ति बीजमुप्तमनूषरे ॥ २५

दोषमत्र न पश्यामि शूराणां रणमूर्धनि ।
तत्तद्विकत्थमानानां भारं चोद्वहतां मृधे ॥ २६
यं भारं पुरुषो वोढुं मनसा हि व्यवस्यति ।
दैवमस्य ध्रुवं तत्र साहाय्यायोपपद्यते ॥ २७
व्यवसायद्वितीयोऽहं मनसा भारमुद्वहन् ।
हत्वा पाण्डुसुतानाजौ सकृष्णान्सहसात्वतान् ।
गर्जामि यद्यहं विप्र तव किं तत्र नश्यति ॥ २८
वृथा शूरा न गर्जन्ति सजला इव तोयदाः ।
सामर्थ्यमात्मनो ज्ञात्वा ततो गर्जन्ति पण्डिताः ॥
सोऽहमद्य रणे यत्तौ सहितौ कृष्णपाण्डवौ ।
उत्सहामि रणे जेतुं ततो गर्जामि गौतम ॥ ३०
पश्य त्वं गर्जितस्यास्य फलं मे विप्र सानुगान् ।
हत्वा पाण्डुसुतानाजौ सहकृष्णान्ससात्वतान् ।
दुर्योधनाय दास्यामि पृथिवीं हतकण्टकाम् ॥ ३१
कृप उवाच ।
मनोरथप्रलापा मे न ग्राह्यास्तव सूतज ॥ ३२
सदा क्षिपसि वै कृष्णौ धर्मराजं च पाण्डवम् ।
ध्रुवस्तत्र जयः कर्ण यत्र युद्धविशारदौ ॥ ३३
देवगन्धर्वयक्षाणां मनुष्योरगरक्षसाम् ।
दंशितानामपि रणे अजेयौ कृष्णपाण्डवौ ॥ ३४
ब्रह्मण्यः सत्यवाग्दान्तो गुरुदैवतपूजकः ।
नित्यं धर्मरतश्चैव कृतास्त्रश्च विशेषतः ॥ ३५
धृतिमांश्च कृतज्ञश्च धर्मपुत्रो युधिष्ठिरः ।
भ्रातरश्चास्य बलिनः सर्वास्त्रेषु कृतश्रमाः ॥ ३६
गुरुवृत्तिरताः प्राज्ञा धर्मनित्या यशस्विनः ।
संबन्धिनश्चेन्द्रवीर्याः स्वनुरक्ताः प्रहारिणः ॥ ३७
धृष्टद्युम्नः शिखण्डी च दौर्मुखिर्जनमेजयः ।
चन्द्रसेनो रुद्रसेनः कीर्तिधर्मा ध्रुवो धरः ॥ ३८
वसुचन्द्रो दामचन्द्रः सिंहचन्द्रः सुतेजनः ।
द्रुपदस्य तथा पुत्रा द्रुपदश्च महास्त्रवित् ॥ ३९
येषामर्थाय संयत्तो मत्स्यराजः सहानुजः ।
शतानीकः सूर्यदत्तः श्रुतानीकः श्रुतध्वजः ॥ ४०
बलानीको जयानीको जयाश्वो रथवाहनः ।
चन्द्रोदयः समरथो विराटभ्रातरः शुभाः ॥ ४१
यमौ च द्रौपदेयाश्च राक्षसश्च घटोत्कचः ।
येषामर्थाय युध्यन्ते न तेषां विद्यते क्षयः ॥ ४२
एते चान्ये च बहवो गणाः पाण्डुसुतस्य वै ॥ ४३
कामं खलु जगत्सर्वं सदेवासुरमानुषम् ।
सयक्षराक्षसगणं सभूतभुजगाद्विपम् ।
निःशेषमस्त्रवीर्येण कुर्वाते भीमफल्गुनौ ॥ ४४
युधिष्ठिरश्च पृथिवीं निर्दहेद्घोरचक्षुषा ॥ ४५
अप्रमेयबलः शौरिर्येषामर्थे च दंशितः ।
कथं तान्संयुगे कर्ण जेतुमुत्सहसे परान् ॥ ४६
महानपनयस्त्वेष नित्यं हि तव सूतज ।
यस्त्वमुत्सहसे योद्धुं समरे शौरिणा सह ॥ ४७
सञ्जय उवाच ।
एवमुक्तस्तु राधेयः प्रहसन्भरतर्षभ ।
अब्रवीच्च तदा कर्णो गुरुं शारद्वतं कृपम् ॥ ४८
सत्यमुक्तं त्वया ब्रह्मन्पाण्डवान्प्रति यद्वचः ।
एते चान्ये च बहवो गुणाः पाण्डुसुतेषु वै ॥ ४९
अजय्याश्च रणे पार्था देवैरपि सवासवैः
सदैत्ययक्षगन्धर्वैः पिशाचोरगराक्षसैः ॥ ५०
तथापि पार्थाञ्जेष्यामि शक्त्या वासवदत्तया ।
मम ह्यमोघा दत्तेयं शक्तिः शक्रेण वै द्विज ।
एतया निहनिष्यामि सव्यसाचिनमाहवे ॥ ५१
हते तु पाण्डवे कृष्णे भ्रातरश्चास्य सोदराः ।
अनर्जुना न शक्ष्यन्ति महीं भोक्तुं कथंचन ॥ ५२
तेषु नष्टेषु सर्वेषु पृथिवीयं ससागरा ।
अयत्नात्कौरवेन्द्रस्य वशे स्थास्यति गौतम ॥ ५३
सुनीतैरिह सर्वार्थाः सिध्यन्ते नात्र संशयः ।
एतमर्थमहं ज्ञात्वा ततो गर्जामि गौतम ॥ ५४
त्वं तु विप्रश्च वृद्धश्च अशक्तश्चापि संयुगे ।
कृतस्नेहश्च पार्थेषु मोहान्मामवमन्यसे ॥ ५५
यद्येवं वक्ष्यसे भूयो ममाप्रियमिह द्विज ।
ततस्ते खड्गमुद्यम्य जिह्वां छेत्स्यामि दुर्मते ॥ ५६
यच्चापि पाण्डवान्विप्र स्तोतुमिच्छसि संयुगे ।
भीषयन्सर्वसैन्यानि कौरवेयांश्च दुर्मते ॥ ५७
अत्रापि शृणु मे वाक्यं यथावद्ब्रुवतो द्विज ।
दुर्योधनश्च द्रोणश्च शकुनिर्दुर्मुखो जयः ॥ ५८
दुःशासनो वृषसेनो मद्रराजस्त्वमेव च ।

सोमदत्तश्च भूरिश्च तथा द्रौणिर्विविंशतिः ॥ ५९
तिष्ठेयुर्दंशिता यत्र सर्वे युद्धविशारदाः ।
जयेदेतान्नरः को नु शक्रतुल्यबलोऽप्यरिः ॥ ६०
शूराश्च हि कृतास्त्राश्च बलिनः स्वर्गलिप्सवः ।
धर्मज्ञा युद्धकुशला हन्युर्युद्धे सुरानपि ॥ ६१
एते स्थास्यन्ति संग्रामे पाण्डवानां वधार्थिनः ।
जयमाकाङ्क्षमाणा हि कौरवेयस्य दंशिताः ॥ ६२
दैवायत्तमहं मन्ये जयं सुबलिनामपि ।
यत्र भीष्मो महाबाहुः शेते शरशताचितः ॥ ६३
विकर्णश्चित्रसेनश्च बाह्लीकोऽथ जयद्रथः ।
भूरिश्रवा जयश्चैव जलसन्धः सुदक्षिणः ॥ ६४
शलश्च रथिनां श्रेष्ठो भगदत्तश्च वीर्यवान् ।
एते चान्ये च राजानो देवैरपि सुदुर्जयाः ॥ ६५
निहताः समरे शूराः पाण्डवैर्बलवत्तराः ।
किमन्यद्दैवसंयोगान्मन्यसे पुरुषाधम ॥ ६६
यांश्च तांस्तौषि सततं दुर्योधनरिपून्द्विज ।
तेषामपि हताः शूराः शतशोऽथ सहस्रशः ॥ ६७
क्षीयन्ते सर्वसैन्यानि कुरूणां पाण्डवैः सह ।
प्रभावं नात्र पश्यामि पाण्डवानां कथंचन ॥ ६८
यस्तान्बलवतो नित्यं मन्यसे त्वं द्विजाधम ।
यतिष्येऽहं यथाशक्ति योद्धुं तैः सह संयुगे ।
दुर्योधनहितार्थाय जयो दैवे प्रतिष्ठितः ॥ ६९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

## षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

कृपगर्हणातितिक्षया कर्णवधायाभ्युत्तिष्ठतोऽश्वत्थाम्नः कृपदुर्योधनाभ्यां निवारणम् ॥१॥ अर्जुनेन कर्णपराजयो दुर्योधनेन रणाय द्रौणिचोदना च ॥ २ ॥

सञ्जय उवाच ।
तथा परुषितं दृष्ट्वा सूतपुत्रेण मातुलम् ।
खड्गमुद्यम्य वेगेन द्रौणिरभ्यपतद्द्रुतम् ॥ १
ततः परमसंक्रुद्धः सिंहो मत्तमिव द्विपम् ।
प्रेक्षतः कुरुराजस्य द्रौणिः कर्णं समभ्ययात् ॥ २
अश्वत्थामोवाच ।
यदर्जुनगुणांस्तथ्यान्कीर्तयानं नराधम ।
शूरं द्वेषात्सुदुर्बुद्धे त्वं भर्त्सयसि मातुलम् ॥ ३
विकत्थमानः शौर्येण सर्वलोकधनुर्धरम् ।
दर्पोत्सेधगृहीतोऽद्य न कंचिद्गणयन्मृधे ॥ ४
क्व ते वीर्यं क्व चास्त्राणि यं त्वां निर्जित्य संयुगे ।
गाण्डीवधन्वा हतवान्प्रेक्षतस्ते जयद्रथम् ॥ ५
येन साक्षान्महादेवो योधितः समरे पुरा ।
तमिच्छसि वृथा जेतुं सूताधम मनोरथैः ॥ ६
यं हि कृष्णेन सहितं सर्वशस्त्रभृतां वरम् ।
जेतुं न शक्ताः सहिताः सेन्द्रा अपि सुरासुराः ॥ ७
लोकैकवीरमजितमर्जुनं सूत संयुगे ।
किं पुनस्त्वं सुदुर्बुद्धे सहैभिर्वसुधाधिपैः ॥ ८
कर्ण पश्य सुदुर्बुद्धे तिष्ठेदानीं नराधम ।
एष तेऽद्य शिरः कायादुद्धरामि सुदुर्मते ॥ ९
सञ्जय उवाच ।
तमुद्यतं तु वेगेन राजा दुर्योधनः स्वयम् ।
न्यवारयन्महातेजाः कृपश्च द्विपदां वरः ॥ १०
कर्ण उवाच ।
शूरोऽयं समरश्लाघी दुर्मतिश्च द्विजाधमः ।
आसादयतु मद्वीर्यं मुञ्चेमं कुरुसत्तम ॥ ११
अश्वत्थामोवाच ।
तवैतत्क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते ।
दर्पमुत्सिक्तमेतत्ते फल्गुनो नाशयिष्यति ॥ १२
दुर्योधन उवाच ।
अश्वत्थामन्प्रसीदस्व क्षन्तुमर्हसि मानद ।
कोपः खलु न कर्तव्यः सूतपुत्रे कथंचन ॥ १३
त्वयि कर्णे कृपे द्रोणे मद्रराजेऽथ सौबले ।
महत्कार्यं समासक्तं प्रसीद द्विजसत्तम ॥ १४

एते ह्यभिमुखाः सर्वे राधेयेन युयुत्सवः ।
आयान्ति पाण्डवा ब्रह्मन्नाह्वयन्तः समन्ततः ॥ १५

सञ्जय उवाच ।

प्रसाद्यमानस्तु ततो राज्ञा द्रौणिर्महामनाः ।
प्रससाद महाराज क्रोधवेगसमन्वितः ॥ १६
ततः कृपोऽप्युवाचेदमाचार्यः सुमहामनाः ।
सौम्यस्वभावाद्राजेन्द्र क्षिप्रमागतमार्दवः ॥ १७

कृप उवाच ।

तवैतत्क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते ।
दर्पमुत्सिक्तमेतत्ते फल्गुनो नाशयिष्यति ॥ १८

सञ्जय उवाच ।

ततस्ते पाण्डवा राजन्पाञ्चालाश्च यशस्विनः ।
आजग्मुः सहिताः कर्णं तर्जयन्तः समन्ततः ॥ १९
कर्णोऽपि रथिनां श्रेष्ठश्चापमुद्यम्य वीर्यवान् ।
कौरवाग्र्यैः परिवृतः शक्रो देवगणैरिव ।
पर्यतिष्ठत तेजस्वी स्वबाहुबलमाश्रितः ॥ २०
ततः प्रववृते युद्धं कर्णस्य सह पाण्डवैः ।
भीषणं सुमहाराज सिंहनादविराजितम् ॥ २१
ततस्ते पाण्डवा राजन्पाञ्चालाश्च यशस्विनः ।
दृष्ट्वा कर्णं महाबाहुमुच्चैः शब्दमथानदन् ॥ २२
अयं कर्णः कुतः कर्णस्तिष्ठ कर्ण महारणे ।
युध्यस्व सहितोऽस्माभिर्दुरात्मन्पुरुषाधम ॥ २३
अन्ये तु दृष्ट्वा राधेयं क्रोधरक्तेक्षणाऽब्रुवन् ।
हन्यतामयमुत्सिक्तः सूतपुत्रोऽल्पचेतनः ।
सर्वैः पार्थिवशार्दूलैर्नानेनार्थोऽस्ति जीवता ॥ २४
अत्यन्तवैरी पार्थानां सततं पापपूरुषः ।
एष मूलमनर्थानां दुर्योधनमते स्थितः ॥ २५
घ्नतैनमिति जल्पन्तः क्षत्रियाः समुपाद्रवन् ।
महता शरवर्षेण च्छादयन्तो महारथाः ।
वधार्थं सूतपुत्रस्य पाण्डवेयेन चोदिताः ॥ २६
तांस्तु सर्वांस्तथा दृष्ट्वा धावमानान्महारथान् ।
न विव्यथे सूतपुत्रो न च त्रासमगच्छत ॥ २७
दृष्ट्वा सागरकल्पं तमुद्धूतं सैन्यसागरम् ।
पिप्रीषुस्तव पुत्राणां संग्रामेष्वपराजितः ॥ २८
सायकौघेन बलवान्क्षिप्रकारी महाबलः ।
वारयामास तत्सैन्यं समन्ताद्भरतर्षभ ॥ २९
ततस्तु शरवर्षेण पार्थिवास्तमवारयन् ।
धनूंषि ते विधुन्वानाः शतशोऽथ सहस्रशः ।
अयोधयन्त राधेयं शक्रं दैत्यगणा इव ॥ ३०
शरवर्षं तु तत्कर्णः पार्थिवैः समुदीरितम् ।
शरवर्षेण महता समन्ताद्व्यकिरत्प्रभो ॥ ३१
तद्युद्धमभवत्तेषां कृतप्रतिकृतैषिणाम् ।
यथा देवासुरे युद्धे शक्रस्य सह दानवैः ॥ ३२
तत्राद्भुतमपश्याम सूतपुत्रस्य लाघवम् ।
यदेनं सर्वतो यत्ता नाप्नुवन्ति परे युधि ॥ ३३
निवार्य च शरौघांस्तान्पार्थिवानां महारथः ।
युगेष्वीषासु च्छत्रेषु ध्वजेषु च हयेषु च ।
आत्मनामाङ्कितान्घोरान्राधेयः प्राहिणोच्छरान् ॥
ततस्ते व्याकुलीभूता राजानः कर्णपीडिताः ।
बभ्रमुस्तत्र तत्रैव गावः शीतार्दिता इव ॥ ३५
हयानां वध्यमानानां गजानां रथिनां तथा ।
तत्रतत्राभ्यवेक्षाम सङ्घान्कर्णेन ताडितान् ॥ ३६
शिरोभिः पतितै राजन्बाहुभिश्च समन्ततः ।
आस्तीर्णा वसुधा सर्वा शूराणामनिवर्तिनाम् ॥ ३७
हतैश्च हन्यमानैश्च निष्टनद्भिश्च सर्वशः ।
बभूवायोधनं रौद्रं वैवस्वतपुरोपमम् ॥ ३८
ततो दुर्योधनो राजा दृष्ट्वा कर्णस्य विक्रमम् ।
अश्वत्थामानमासाद्य वाक्यमेतदुवाच ह ॥ ३९
युध्यतेऽसौ रणे कर्णो दंशितः सर्वपार्थिवैः ॥ ४०
पश्यैतां द्रवतीं सेनां कर्णसायकपीडिताम् ।
कार्तिकेयेन विध्वस्तामासुरीं पृतनामिव ॥ ४१
दृष्ट्वैतां निर्जितां सेनां रणे कर्णेन धीमता ।
अभियात्येष बीभत्सुः सूतपुत्रजिघांसया ॥ ४२
तद्यथा प्रेक्षमाणानां सूतपुत्रं महारथम् ।
न हन्यात्पाण्डवः सङ्ख्ये तथा नीतिर्विधीयताम् ॥ ४३
ततो द्रौणिः कृपः शल्यो हार्दिक्यश्च महारथः ।
प्रत्युद्ययुस्तदा पार्थं सूतपुत्रपरीप्सया ।
आयान्तं वीक्ष्य कौन्तेयं शक्रं दैत्यचमूमिव ॥ ४४

बीभत्सुरपि राजेन्द्र पाञ्चालैरभिसंवृतः ।
प्रत्युद्ययौ तदा कर्णं यथा वृत्रं शतक्रतुः ॥ ४५

धृतराष्ट्र उवाच ।

संरब्धं फल्गुनं दृष्ट्वा कालान्तकयमोपमम् ।
कर्णो वैकर्तनः सूत प्रत्यपद्यत्किमुत्तरम् ॥ ४६
यो ह्यस्पर्धत पार्थेन नित्यमेव महारथः ।
आशंसते च बीभत्सुं युद्धे जेतुं सुदारुणम् ॥ ४७
स तु तं सहसा प्राप्तं नित्यमत्यन्तवैरिणम् ।
कर्णो वैकर्तनः सूत किमुत्तरमपद्यत ॥ ४८

सञ्जय उवाच ।

आयान्तं पाण्डवं दृष्ट्वा गजं प्रतिगजो यथा ।
असंभ्रान्तो रणे कर्णः प्रत्युदीयाद्धनंजयम् ॥ ४९
तमापतन्तं वेगेन वैकर्तनमजिह्मगैः ।
छादयामास पार्थोऽथ कर्णस्तु विजयं शरैः ॥ ५०
स कर्णं शरजालेन च्छादयामास पाण्डवः ।
ततः कर्णः सुसंरब्धः शरैस्त्रिभिरविध्यत ॥ ५१
तस्य तल्लाघवं पार्थो नामृष्यत महाबलः ॥ ५२
तस्मै बाणाञ्शिलाधौतान्प्रसन्नाग्रानजिह्मगान् ।
प्राहिणोत्सूतपुत्राय त्रिंशतं शत्रुतापनः ॥ ५३
विव्याध चैनं संरब्धो बाणेनैकेन वीर्यवान् ।
सव्ये भुजाग्रे बलवान्नाराचेन हसन्निव ॥ ५४
तस्य विद्धस्य बाणेन कराच्चापं पपात ह ॥ ५५
पुनरादाय तच्चापं निमेषार्धान्महाबलः ।
छादयामास बाणौघैः फल्गुनं कृतहस्तवत् ॥ ५६
शरवृष्टिं तु तां मुक्तां सूतपुत्रेण भारत ।
व्यधमच्छरवर्षेण स्मयन्निव धनंजयः ॥ ५७
तौ परस्परमासाद्य शरवर्षेण पार्थिव ।
छादयेतां महेष्वासौ कृतप्रतिकृतैषिणौ ॥ ५८
तदद्भुतं महद्युद्धं कर्णपाण्डवयोर्मृधे ।
क्रुद्धयोर्वासिताहेतोर्वन्ययोर्गजयोरिव ॥ ५९
ततः पार्थो महेष्वासो दृष्ट्वा कर्णस्य विक्रमम् ।
मुष्टिदेशे धनुस्तस्य चिच्छेद त्वरयाऽन्वितः ॥ ६०
अश्वांश्च चतुरो भल्लैरनयद्यमसादनम् ।
सारथेश्च शिरः कायादहरच्छत्रुतापनः ॥ ६१
अथैनं छिन्नधन्वानं हताश्वं हतसारथिम् ।
विव्याध सायकैः पार्थश्चतुर्भिः पाण्डुनन्दनः ॥ ६२
हताश्वात्तु रथात्तूर्णमवप्लुत्य नरर्षभः ।
आरुरोह रथं तूर्णं कृपस्य शरपीडितः ॥ ६३
स नुन्नोऽर्जुनबाणौघैराचितः शल्यको यथा ।
जीवितार्थमभिप्रेप्सुः कृपस्य रथमारुहत् ॥ ६४
राधेयं निर्जितं दृष्ट्वा तावका भरतर्षभ ।
धनंजयशरैर्नुन्नाः प्राद्रवन्त दिशो दश ॥ ६५
द्रवतस्तान्समालोक्य राजा दुर्योधनो नृप ।
निवर्तयामास तदा वाक्यमेतदुवाच ह ॥ ६६
अलं द्रुतेन वः शूरास्तिष्ठध्वं क्षत्रियर्षभाः ।
एष पार्थवधायाहं स्वयं गच्छामि संयुगे ।
अहं पार्थान्हनिष्यामि सपाञ्चालान्ससोमकान् ॥
अद्य मे युध्यमानस्य सह गाण्डीवधन्वना ।
द्रक्ष्यन्ति विक्रमं पार्थाः कालस्येव युगक्षये ॥ ६८
अद्य मद्बाणजालानि विमुक्तानि सहस्रशः ।
द्रक्ष्यन्ति समरे योधाः शलभानामिवायतीः ॥ ६९
अद्य बाणमयं वर्षं सृजतो मम धन्विनः ।
जीमूतस्येव घर्मान्ते द्रक्ष्यन्ति युधि सैनिकाः ॥ ७०
जेष्याम्यद्य रणे पार्थं सायकैर्नतपर्वभिः ।
तिष्ठध्वं समरे शूरा भयं त्यजत फल्गुनात् ॥ ७१
न हि मद्वीर्यमासाद्य फल्गुनः प्रसहिष्यति ।
यथा वेलां समासाद्य सागरो मकरालयः ॥ ७२
इत्युक्त्वा प्रययौ राजा सैन्येन महता वृतः ।
फल्गुनं प्रतिदुर्धर्षः क्रोधात्संरक्तलोचनः ॥ ७३
तं प्रयान्तं महाबाहुं दृष्ट्वा शारद्वतस्तदा ।
अश्वत्थामानमासाद्य वाक्यमेतदुवाच ह ॥ ७४
एष राजा महाबाहुरमर्षी क्रोधमूर्च्छितः ।
पतङ्गवृत्तिमास्थाय फल्गुनं योद्धुमिच्छति ॥ ७५
यावन्नः पश्यमानानां प्राणान्पार्थेन संगतः ।
न जह्यात्पुरुषव्याघ्रस्तावद्वारय कौरवम् ॥ ७६
यावत्फल्गुनबाणानां गोचरं नाद्य गच्छति ।
कौरवः पार्थिवो वीरस्तावद्वारय संयुगे ॥ ७७
यावत्पार्थशरैर्घोरैर्निर्मुक्तोरगसन्निभैः ।

न भस्मीक्रियते राजा तावद्युद्धान्निवार्यताम्॥७८
अयुक्तमिव पश्यामि तिष्ठत्स्वस्मासु मानद ।
स्वयं युद्धाय यद्राजा पार्थं यात्यसहायवान्॥७९
दुर्लभं जीवितं मन्ये कौरव्यस्य किरीटिना ।
युध्यमानस्य पार्थेन शार्दूलेनेव हस्तिनः ॥ ८०
मातुलेनैवमुक्तस्तु द्रौणिः शस्त्रभृतां वरः ।
दुर्योधनमिदं वाक्यं त्वरितः समभाषत ॥ ८१
मयि जीवति गान्धारे न युद्धं गन्तुमर्हसि ।
मामनादृत्य कौरव्य तव नित्यं हितैषिणम् ॥८२
न हि ते संभ्रमः कार्यः पार्थस्य विजयं प्रति ।
अहमावारयिष्यामि पार्थं तिष्ठ सुयोधन ॥ ८३
दुर्योधन उवाच ।
आचार्यः पाण्डुपुत्रान्वै पुत्रवत्परिरक्षति ।
त्वमप्युपेक्षां कुरुषे तेषु नित्यं द्विजोत्तम ॥ ८४
मम वा मन्दभाग्यत्वान्मन्दस्ते विक्रमो युधि ।
धर्मराजप्रियार्थं वा द्रौपद्या वा न विद्म तत् ॥ ८५
धिगस्तु मम लुब्धस्य यत्कृते सर्वबान्धवाः ।
सुखार्हाः परमं दुःखं प्राप्नुवन्त्यपराजिताः॥ ८६
को हि शस्त्रविदां मुख्यो महेश्वरसमो युधि ।
शत्रुं न क्षपयेच्छक्तो यो न स्याद्गौतमीसुतः॥८७
अश्वत्थामन्प्रसीदस्व नाशयैतान्ममाहितान् ।
तवास्त्रगोचरे शक्ताः स्थातुं देवा न दानवाः ॥८८
पाञ्चालान्सोमकांश्चैव जहि द्रौणे सहानुगान् ।
वयं शेषान्हनिष्यामस्त्वयैव परिरक्षिताः ॥ ८९
एते हि सोमका विप्र पाञ्चालाश्च यशस्विनः ।
मम सैन्येषु संक्रुद्धा विचरन्ति दवाग्निवत् ॥ ९०
तान्वारय महाबाहो केकयांश्च नरोत्तम ।
पुरा कुर्वन्ति निःशेषं रक्ष्यमाणाः किरीटिना ॥ ९१
अश्वत्थामंस्त्वरायुक्तो याहि शीघ्रमरिंदम ।
आदौ वा यदि वा पश्चात्तवेदं कर्म मारिष ॥ ९२
त्वमुत्पन्नो महाबाहो पाञ्चालानां वधं प्रति ।
करिष्यसि जगत्सर्वमपाञ्चालं किलोद्यतः ॥ ९३
एवं सिद्धाऽब्रुवन्वाचो भविष्यति च तत्तथा ।
तस्मात्त्वं पुरुषव्याघ्र पाञ्चालाञ्जहि सानुगान् ९४
न तेऽस्त्रगोचरे शक्ताः स्थातुं देवाः सवासवाः ।
किमु पार्थाः सपाञ्चालाः सत्यमेतद्ब्रवीमि ते ॥ ९५
न त्वां समर्थाः संग्रामे पाण्डवाः सह सोमकैः ।
बलाद्योधयितुं वीर सत्यमेतद्ब्रवीमि ते ॥ ९६
गच्छगच्छ महाबाहो न नः कालात्ययो भवेत् ।
इयं हि द्रवते सेना पार्थसायकपीडिता ॥ ९७
शक्तो ह्यसि महाबाहो दिव्येन स्वेन तेजसा
निग्रहे पाण्डुपुत्राणां पाञ्चालानां च मानद ॥ ९८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

## एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

द्रौणिधृष्टद्युम्नयोर्युद्धम् । द्रौणिपराक्रमः ॥ १ ॥

सञ्जय उवाच
दुर्योधनेनैवमुक्तो द्रौणिराहवदुर्मदः ।
चकारारिवधे यत्नमिन्द्रो दैत्यवधे यथा ।
प्रत्युवाच महाबाहुस्तव पुत्रमिदं वचः ॥ १
सत्यमेतन्महाबाहो यथा वदसि कौरव ।
प्रिया हि पाण्डवा नित्यं मम चापि पितुश्च मे ॥ २
तथैवावां प्रियौ तेषां न तु युद्धे कुरूद्वह ।
शक्तितस्तात युध्यामस्त्यक्त्वा प्राणानभीतवत् ॥३
अहं कर्णश्च शल्यश्च कृपो हार्दिक्य एव च ।
निमेषात्पाण्डवीं सेनां क्षपयेम नृपोत्तम ॥
ते चापि कौरवीं सेनां निमेषार्धात्कुरूद्वह .
क्षपयेयुर्महाबाहो न स्याम यदि संयुगे ॥ ५
युध्याम पाण्डवाञ्छक्त्या ते चाप्यस्मान्यथाबलम्।
तेजस्तेजः समासाद्य प्रशमं यातु भारत ॥ ६
अशक्या तरसा जेतुं पाण्डवानामनीकिनी ।
जीवत्सु पाण्डुपुत्रेषु तद्धि सत्यं ब्रवीमि ते ॥ ७
आत्मार्थं युध्यमानास्ते समर्थाः पाण्डुनन्दनाः ।
किमर्थं तव सैन्यानि न हनिष्यन्ति भारत ॥८

त्वं तु लुब्धतमो राजन्निकृतिज्ञश्च कौरव ।
सर्वाभिशङ्की मानी च ततोऽस्मानभिशङ्कसे ॥ ९
मन्ये त्वं कुत्सितो राजन्पापात्मा पापपूरुषः ।
अन्यानपि स नः क्षुद्र शङ्कसे पापभावितः ॥ १०
अहं तु यत्नमास्थाय त्वदर्थे त्यक्तजीवितः ।
एष गच्छामि संग्रामं त्वत्कृते कुरुनन्दन ।
योत्स्येऽहं शत्रुभिः सार्धं जेष्यामि च वरान्वरान् ॥
पाञ्चालैः सह योत्स्यामि सोमकैः केकयैस्तथा ।
पाण्डवेयैश्च संग्रामे त्वत्प्रियार्थमरिंदम ॥ १२
अद्य मद्बाणनिर्दग्धाः पाञ्चालाः सोमकास्तथा ।
सिंहेनेवार्दिता गावो विद्रविष्यन्ति सर्वशः ॥ १३
अद्य धर्मसुतो राजा दृष्ट्वा मम पराक्रमम् ।
अश्वत्थाममयं लोकं मंस्यते सह सोमकैः ॥ १४
आगमिष्यति निर्वेदं धर्मपुत्रो युधिष्ठिरः ।
दृष्ट्वा विनिहतान्सङ्ख्ये पाञ्चालान्सोमकैः सह ॥ १५
ये मां युद्धेऽभियोत्स्यन्ति तान्हनिष्यामि भारत ।
न हि ते वीर मोक्ष्यन्ते मद्बाह्वन्तरमागताः ॥ १६
एवमुक्त्वा महाबाहुः पुत्रं दुर्योधनं तव ।
अभ्यवर्तत युद्धाय त्रासयन्सर्वधन्विनः ।
चिकीर्षुस्तव पुत्राणां प्रियं प्राणभृतां वरः ॥ १७
ततोऽब्रवीत्सकैकेयान्पाञ्चालान्गौतमीसुतः ॥ १८
प्रहरध्वमितः सर्वे मम गात्रे महारथाः ।
स्थिरीभूताश्च युध्यध्वं दर्शयन्तोऽस्त्रलाघवम् ॥ १९
एवमुक्तास्तु ते सर्वे शस्त्रवृष्टीरपातयन् ।
द्रौणिं प्रति महाराज जलं जलधरा इव ॥ २०
तान्निहत्य शरान्द्रौणिर्दश वीरानपोथयत् ।
प्रमुखे पाण्डुपुत्राणां धृष्टद्युम्नस्य च प्रभो ॥ २१
ते हन्यमानाः समरे पाञ्चालाः सोमकास्तथा ।
परित्यज्य रणे द्रौणिं व्यद्रवन्त दिशो दश ॥ २२
तान्दृष्ट्वा द्रवतः शूरान्पाञ्चालान्सहसोमकान् ।
धृष्टद्युम्नो महाराज द्रौणिमभ्यद्रवद्रणे ॥ २३
ततः काञ्चनचित्राणां सजलाम्बुदनादिनाम् ।
वृतः शतेन शूराणां रथानामनिवर्तिनाम् ॥ २४
पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महारथः ।
द्रौणिमित्यब्रवीद्वाक्यं दृष्ट्वा योधान्निपातितान् २५
आचार्यपुत्र भद्रं ते किमन्यैर्निहतैस्तव ।
समागच्छ मया सार्धं यदि शूरोऽसि संयुगे ।
अहं त्वां निहनिष्यामि तिष्ठेदानीं ममाग्रतः ॥ २६
ततस्तमाचार्यसुतं धृष्टद्युम्नः प्रतापवान् ।
मर्मभिद्भिः शरैस्तीक्ष्णैर्जघान भरतर्षभ ॥ २७
ते तु पङ्क्तीकृता द्रौणिं शरा विविशुराशुगाः ।
रुक्मपुङ्खाः प्रसन्नाग्राः सर्वकायावदारणाः ।
मध्वर्थिन इवोद्दामा भ्रमराः पुष्पितं द्रुमम् ॥ २८
सोऽतिविद्धो भृशं क्रुद्धः पदाक्रान्त इवोरगः ।
मानी द्रौणिरसंभ्रान्तो बाणपाणिरभाषत ॥ २९
धृष्टद्युम्न स्थिरो भूत्वा मुहूर्तं प्रतिपालय ।
यावत्त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम् ॥ ३०
द्रौणिरेवमथाभाष्य पार्षतं परवीरहा ।
छादयामास बाणौघैः समन्ताल्लघुहस्तवत् ॥ ३१
स बाध्यमानः समरे द्रौणिना युद्धदुर्मदः ।
द्रौणिं पाञ्चालतनयो वाग्भिरातर्जयत्तदा ॥ ३२
न जानीषे प्रतिज्ञां मे विप्रोत्पत्तिं तथैव च ।
द्रोणं हत्वा किल मया हन्तव्यस्त्वं सुदुर्मते ॥ ३३
ततस्त्वाऽहं न हन्म्यद्य द्रोणे जीवति संयुगे ॥ ३४
इमां तु रजनीं प्राप्तामप्रभातां सुदुर्मते ।
निहत्य पितरं तेऽद्य ततस्त्वामपि संयुगे ।
नेष्यामि प्रेतलोकाय ह्येतन्मे मनसि स्थितम् ॥ ३५
यस्ते पार्थेषु विद्वेषो या भक्तिः कौरवेषु च ।
तां दर्शय स्थिरो भूत्वा न मे जीवन्विमोक्ष्यसे ॥ ३६
यो हि ब्राह्मण्यमुत्सृज्य क्षत्रधर्मरतो द्विजः ।
स वध्यः सर्वलोकस्य यथा त्वं पुरुषाधमः ॥ ३७
इत्युक्तः परुषं वाक्यं पार्षतेन द्विजोत्तमः ।
क्रोधमाहारयत्तीव्रं तिष्ठतिष्ठेति चाब्रवीत् ॥ ३८
निर्दहन्निव चक्षुर्भ्यां पार्षतं सोऽभ्यवैक्षत ।
छादयामास च शरैर्निःश्वसन्पन्नगो यथा ॥ ३९
स च्छाद्यमानः समरे द्रौणिना राजसत्तम ।
सर्वपाञ्चालसेनाभिः संवृतो रथसत्तमः ॥ ४०
नाकम्पत महाबाहुः स्ववीर्यं समुपाश्रितः ।

निकृतिर्वञ्चनम् ॥ ९ ॥

सायकांश्चैव विविधानश्वत्थाम्नि मुमोच ह ॥ ४१
तौ पुनः संन्यवर्तेतां प्राणद्यूतपणे रणे ।
निपीडयन्तौ बाणौघैः परस्परममर्षिणौ ।
उत्सृजन्तौ महेष्वासौ शरवृष्टीः समन्ततः ॥ ४२
द्रौणिपार्षतयोर्युद्धं घोररूपं भयानकम् ।
दृष्ट्वा संपूजयामासुः सिद्धचारणवादिकाः ॥ ४३
शरौघैः पूरयन्तौ तावाकाशं च दिशस्तथा ।
अलक्ष्यौ समयुध्येतां महत्कृत्वा शरैस्तमः ॥ ४४
नृत्यमानाविव रणे मण्डलीकृतकार्मुकौ ।
परस्परवधे यत्तौ सर्वभूतभयंकरौ ॥ ४५
अयुध्येतां महाबाहू चित्रं लघु च सुष्ठु च ।
संपूज्यमानौ समरे योधमुख्यैः सहस्रशः ॥ ४६
तौ प्रवृद्धौ रणे दृष्ट्वा वने वन्यौ गजाविव ।
उभयोः सेनयोर्हर्षस्तुमुलः समपद्यत ॥ ४७
सिंहनादरवाश्चासन्दध्मुः शङ्खांश्च सैनिकाः ।
वादित्राण्यभ्यवाद्यन्त शतशोऽथ सहस्रशः ॥ ४८
तस्मिंस्तु तुमुले युद्धे भीरूणां भयवर्धने ।
मुहूर्तमपि तद्युद्धं समरूपं तदाऽभवत् ॥ ४९
ततो द्रौणिर्महाराज पार्षतस्य महात्मनः ।
ध्वजं धनुस्तथा छत्रमुभौ च पार्ष्णिसारथी ।
सूतमश्वांश्च चतुरो निहत्याभ्यद्रवद्रणे ॥ ५०
पाञ्चालांश्चैव तान्सर्वान्बाणैः सन्नतपर्वभिः ।
व्यद्रावयदमेयात्मा शतशोऽथ सहस्रशः ॥ ५१
ततस्तु विव्यथे सेना पाण्डवी भरतर्षभ ।
दृष्ट्वा द्रौणेर्महत्कर्म वासवस्येव संयुगे ॥ ५२
शतेन च शतं हत्वा पाञ्चालानां महारथः ।
त्रिभिश्च निशितैर्बाणैर्हत्वा त्रीन्वै महारथान् ॥ ५३
द्रौणिर्द्रुपदपुत्रस्य फल्गुनस्य च पश्यतः ।
नाशयामास पाञ्चालान्भूयिष्ठं ये व्यवस्थिताः ५४
ते वध्यमानाः पाञ्चालाः समरे सह सृञ्जयैः ।
अगच्छन्द्रौणिमुत्सृज्य विप्रकीर्णरथध्वजाः ॥ ५५
स जित्वा समरे शत्रून्द्रोणपुत्रो महारथः
ननाद सुमहानादं तपान्ते जलदो यथा ॥ ५६
स निहत्य बहूञ्छूरानश्वत्थामा व्यरोचत ।
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः ॥ ५७
संपूज्यमानो युधि कौरवेयै-
निर्जित्य सङ्ख्येऽरिगणान्सहस्रशः ।
व्यरोचत द्रोणसुतः प्रतापवा-
न्यथा सुरेन्द्रोऽरिगणान्निहत्य वै ॥ ५८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

---

## द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

संकुलयुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
ततो युधिष्ठिरश्चैव भीमसेनश्च पाण्डवः ।
द्रोणपुत्रं महाराज समन्तात्पर्यवारयन् ॥ १
ततो दुर्योधनो राजा भारद्वाजेन संवृतः ।
अभ्ययात्पाण्डवान्सङ्ख्ये ततो युद्धमवर्तत ।
घोररूपं महाराज भीरूणां भयवर्धनम् ॥ २
अम्बष्ठान्मालवान्वङ्गाञ्छिबींस्त्रैगर्तकानपि ।
प्राहिणोन्मृत्युलोकाय गणान्क्रुद्धो वृकोदरः ॥ ३
अभीषाहाञ्छूरसेनान्क्षत्रियान्युद्धदुर्मदान्
निकृत्त्य पृथिवीं चक्रे भीमः शोणितकर्दमाम् ॥ ४
यौधेयानद्रिजान्राजन्मद्रकान्मालवानपि ।
प्राहिणोन्मृत्युलोकाय किरीटी निशितैः शरैः ॥ ५
प्रगाढमञ्जोगतिभिर्नाराचैरभिताडिताः ।
निपेतुर्द्विरदा भूमौ द्विशृङ्गा इव पर्वताः ॥ ६
निकृत्तैर्हस्तिहस्तैश्च चेष्टमानैरितस्ततः ।
रराज वसुधाऽऽकीर्णा विसर्पद्भिरिवोरगैः ॥ ७

वादिकाः वन्दिनः ॥ ४३ ॥

क्षिप्तैः कनकचित्रैश्च नृपच्छत्रैः क्षितिर्बभौ ।
द्यौरिवादित्यचन्द्राद्यैर्ग्रहैः कीर्णा युगक्षये ॥ ८
हत प्रहरताभीता विध्यत व्यवकृन्तत ।
इत्यासीत्तुमुलः शब्दः शोणाश्वस्य रथं प्रति ॥ ९
द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण संयुगे ।
व्यधमत्तान्महावायुर्मेघानिव दुरत्ययः ॥ १०
ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्भयात् ।
पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ॥ ११
ततः किरीटी भीमश्च सहसा संन्यवर्तताम् ।
महता रथवंशेन परिगृह्य बलं महत् ॥ १२
बीभत्सुर्दक्षिणं पार्श्वमुत्तरं तु वृकोदरः ।
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् ॥ १३
तौ तथा सृञ्जयाश्चैव पाञ्चालाश्च महौजसः ।
अन्वगच्छन्महाराज मात्स्यैश्च सह सोमकैः ॥ १४
तथैव तव पुत्रस्य रथोदाराः प्रहारिणः ।
महत्या सेनया राजञ्जग्मुर्द्रोणरथं प्रति ॥ १५
ततः सा भारती सेना हन्यमाना किरीटिना ।
तमसा निद्रया चैव पुनरेव व्यदीर्यत ॥ १६
द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च ।
नाशक्यन्त महाराज योधा वारयितुं तदा ॥ १७
सा पाण्डुपुत्रस्य शरैर्दार्यमाणा महाचमूः ।
तमसा संवृते लोके व्यद्रवत्सर्वतोमुखी ॥ १८
उत्सृज्य शतशो वाहांस्तत्र केचिन्नराधिपाः ।
प्राद्रवन्त महाराज भयाविष्टाः समन्ततः ॥ १९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

## त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

सात्यकिना सोमदत्तवधः ॥ १ ॥ द्रोणयुधिष्ठिरयुद्धम् ॥ २ ॥

सञ्जय उवाच ।
सोमदत्तं तु संप्रेक्ष्य विधुन्वानं महद्धनुः ।
सात्यकिः प्राह यन्तारं सोमदत्ताय मां वह ॥ १
न ह्यहत्वा रणे शत्रुं सोमदत्तं महाबलम् ।
निवर्तिष्ये रणात्सूत सत्यमेतद्वचो मम ॥ २
ततः संप्रैषयद्यन्ता सैन्धवांस्तान्मनोजवान् ।
तुरङ्गमाञ्छङ्खवर्णान्सर्वशब्दातिगान्रणे ॥ ३
तेऽवहन्युयुधानं तु मनोमारुतरंहसः ।
यथेन्द्रं हरयो राजन्पुरा दैत्यवधोद्यतम् ॥ ४
तमापतन्तं संप्रेक्ष्य सात्वतं रभसं रणे ।
सोमदत्तो महाबाहुरसंभ्रान्तो न्यवर्तत ॥ ५
विमुञ्चञ्छरवर्षाणि पर्जन्य इव वृष्टिमान् ।
छादयामास शैनेयं जलदो भास्करं यथा ॥ ६
असंभ्रान्तश्च समरे सात्यकिः कुरुपुङ्गवम् ।
छादयामास बाणौघैः समन्ताद्भरतर्षभ ॥ ७
सोमदत्तस्तु तं षष्ट्या विव्याधोरसि माधवम् ।
सात्यकिश्चापि तं राजन्नविध्यत्सायकैः शितैः ॥ ८
तावन्योन्यं शरैः कृत्तौ व्यराजेतां नरर्षभौ ।
सुपुष्पौ पुष्पसमये पुष्पिताविव किंशुकौ ॥ ९
रुधिरोक्षितसर्वाङ्गौ कुरुवृष्णियशस्करौ ।
परस्परमवेक्षेतां दहन्ताविव लोचनैः ॥ १०
रथमण्डलमार्गेषु चरन्तावरिमर्दनौ ।
घोररूपौ हितावास्तां वृष्टिमन्ताविवाम्बुदौ ॥ ११
शरसंभिन्नगात्रौ तु सर्वतः शकलीकृतौ ।
श्वाविधाविव राजेन्द्र दृश्येतां शरविक्षतौ ॥ १२
सुवर्णपुङ्खैरिषुभिराचितौ तौ व्यराजताम् ।
खद्योतैरावृतौ राजन्प्रावृषीव वनस्पती ॥ १३
संप्रदीपितसर्वाङ्गौ सायकैस्तैर्महारथौ ।
अदृश्येतां रणे क्रुद्धावुल्काभिरिव कुञ्जरौ ॥ १४
ततो युधि महाराज सोमदत्तो महारथः ।
अर्धचन्द्रेण चिच्छेद माधवस्य महद्धनुः ॥ १५
अथैनं पञ्चविंशत्या सायकानां समार्पयत् ।
त्वरमाणस्त्वराकाले पुनश्च दशभिः शरैः ॥ १६
अथान्यद्धनुरादाय सात्यकिर्वेगवत्तरम् ।
पञ्चभिः सायकैस्तूर्णं सोमदत्तमविध्यत ॥ १७
ततोऽपरेण भल्लेन ध्वजं चिच्छेद काञ्चनम् ।

बाह्लीकस्य रणे राजन्सात्यकिः प्रहसन्निव ॥ १८
सोमदत्तस्त्वसंभ्रान्तो दृष्ट्वा केतुं निपातितम् ।
शैनेयं पञ्चविंशत्या सायकानां समाचिनोत् ॥ १९
सात्वतोऽपि रणे क्रुद्धः सोमदत्तस्य धन्विनः ।
धनुश्चिच्छेद भल्लेन क्षुरप्रेण शितेन ह ॥ २०
अथैनं रुक्मपुङ्खानां शतेन नतपर्वणाम् ।
आचिनोद्बहुधा राजन्भग्नदंष्ट्रमिव द्विपम् ॥ २१
अथान्यद्धनुरादाय सोमदत्तो महारथः ।
सात्यकिं छादयामास शरवृष्ट्या महाबलः ॥ २२
सोमदत्तं तु संक्रुद्धो रणे विव्याध सात्यकिः ।
सात्यकिं शरजालेन सोमदत्तोऽप्यपीडयत् ॥ २३
दशभिः सात्वतस्यार्थे भीमोऽहन्बाह्लिकात्मजम् ।
सोमदत्तोप्यसंभ्रान्तो भीममार्च्छच्छितैः शरैः ॥ २४
ततस्तु सात्वतस्यार्थे भीमसेनो नवं दृढम् ।
मुमोच परिघं घोरं सोमदत्तस्य वक्षसि ॥ २५
तमापतन्तं वेगेन परिघं घोरदर्शनम् ।
द्विधा चिच्छेद समरे प्रहसन्निव कौरवः ॥ २६
स पपात द्विधा च्छिन्न आयसः परिघो महान् ।
महीधरस्येव महच्छिखरं वज्रदारितम् ॥ २७
ततस्तु सात्यकी राजन्सोमदत्तस्य संयुगे ।
धनुश्चिच्छेद भल्लेन हस्तावापं च पञ्चभिः ॥ २८
ततश्चतुर्भिश्च शरैस्तूर्णं तांस्तुरगोत्तमान् ।
समीपं प्रेषयामास प्रेतराजस्य भारत ॥ २९
सारथेश्च शिरः कायाद्भल्लेन नतपर्वणा ।
जहार नरशार्दूलः प्रहसञ्छिनिपुङ्गवः ॥ ३०
ततः शरं महाघोरं ज्वलन्तमिव पावकम् ।
मुमोच सात्वतो राजन्स्वर्णपुङ्खं शिलाशितम् ॥ ३१
स विमुक्तो बलवता शैनेयेन शरोत्तमः ।
घोरस्तस्योरसि विभो निपपाताशु भारत ॥ ३२
सोऽतिविद्धो महाराज सात्वतेन महारथः ।
सोमदत्तो महाबाहुर्निपपात ममार च ॥ ३३
तं दृष्ट्वा निहतं तत्र सोमदत्तं महारथाः ।
महता शरवर्षेण युयुधानमुपाद्रवन् ॥ ३४
छाद्यमानं शरैर्दृष्ट्वा युयुधानं युधिष्ठिरः ।
पाण्डवाश्च महाराज सह सर्वैः प्रभद्रकैः ।
महत्या सेनया सार्धं द्रोणानीकमुपाद्रवन् ॥ ३५
ततो युधिष्ठिरः क्रुद्धस्तावकानां महाबलम् ।
शरैर्विद्रावयामास भारद्वाजस्य पश्यतः ॥ ३६
सैन्यानि द्रावयन्तं तु द्रोणो दृष्ट्वा युधिष्ठिरम् ।
अभिदुद्राव वेगेन क्रोधसंरक्तलोचनः ॥ ३७
ततः सुनिशितैर्बाणैः पार्थं विव्याध सप्तभिः ।
युधिष्ठिरोऽपि संक्रुद्धः प्रतिविव्याध पञ्चभिः ॥ ३८
सोऽतिविद्धो महाबाहुः सृक्किणी परिसंलिहन् ।
युधिष्ठिरस्य चिच्छेद ध्वजं कार्मुकमेव च ॥ ३९
स च्छिन्नधन्वा त्वरितस्त्वराकाले नृपोत्तमः ।
अन्यदादत्त वेगेन कार्मुकं समरे दृढम् ॥ ४०
ततः शरसहस्रेण द्रोणं विव्याध पार्थिवः ।
साश्वसूतध्वजरथं तदद्भुतमिवाभवत् ॥ ४१
ततो मुहूर्तं व्यथितः शरपातप्रपीडितः ।
निषसाद रथोपस्थे द्रोणो भरतसत्तम ॥ ४२
प्रतिलभ्य ततः संज्ञां मुहूर्ताद्द्विजसत्तमः ।
क्रोधेन महताऽऽविष्टो वायव्यास्त्रमवासृजत् ॥ ४३
असंभ्रान्तस्ततः पार्थो वायव्येनैव वीर्यवान् ।
तदस्त्रमस्त्रेण रणे स्तम्भयामास भारत ॥ ४४
चिच्छेद च धनुर्दीर्घं ब्राह्मणस्य च पाण्डवः ।
ततोऽन्यद्धनुरादत्त द्रोणः क्षत्रियमर्दनः ।
तदप्यस्य शितैर्भल्लैश्चिच्छेद कुरुपुङ्गवः ॥ ४५
ततोऽब्रवीद्वासुदेवः कुन्तीपुत्रं युधिष्ठिरम् ॥ ४६
युधिष्ठिर महाबाहो यत्त्वां वक्ष्यामि तच्छृणु ।
उपारमस्व युद्धे त्वं द्रोणाद्भरतसत्तम ॥ ४७
यतते हि सदा द्रोणो ग्रहणे तव संयुगे ।
नानुरूपमहं मन्ये युद्धमस्य त्वया सह ॥ ४८
योऽस्य सृष्टो विनाशाय स एवैनं हनिष्यति ।
परिवर्ज्य गुरुं याहि यत्र राजा सुयोधनः ॥ ४९
राजा राज्ञा हि योद्धव्यो नाराज्ञा युद्धमिष्यते ।
तत्र त्वं गच्छ कौन्तेय हस्त्यश्वरथसंवृतः ॥ ५०

बाह्लीकस्य सोमदत्तस्य ॥ १८ ॥

त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

यावन्मात्रेण च मया सहायेन धनञ्जयः ।
भीमश्च रथशार्दूलो युध्यते कौरवैः सह ॥ ५१
वासुदेववचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
मुहूर्तं चिन्तयित्वा तु ततो दारुणमाहवम् ॥ ५२
प्रायाद्द्रुतममित्रघ्नो यत्र भीमो व्यवस्थितः ।
विनिघ्नंस्तावकान्योधान्व्यादितास्य इवान्तकः ५३
रथघोषेण महता नादयन्वसुधातलम् ।
पर्जन्य इव घर्मान्ते नादयन्वै दिशो दश ।
भीमस्य निघ्नतः शत्रून्पार्ष्णिं जग्राह पाण्डवः ॥ ५४
द्रोणोऽपि पाण्डुपाञ्चालान्व्यधमद्रजनीमुखे ।
'नादयंस्तलघोषेण तत्र सैन्यानि मारिष ॥' ५५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

## चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

सेनाद्वये दीपोद्योजनम् ॥ १ ॥

सञ्जय उवाच ।
वर्तमाने यथा युद्धे घोररूपे भयावहे ।
तमसा संवृते लोके रजसा च महीपते ॥ १
नापश्यन्त रणे योधाः परस्परमवस्थिताः ।
अनुमानेन संज्ञाभिर्युद्धं तद्ववृधे महत् ॥ २
नरनागाश्वमथनं परमं रोमहर्षणम् ।
द्रोणकर्णकृपा वीरा भीमपार्षतसात्यकाः ।
अन्योन्यं क्षोभयामासुः सैन्यानि नृपसत्तम ॥ ३
वध्यमानानि सैन्यानि समन्तात्तैर्महारथैः ।
तमसा संवृते चैव समन्ताद्विप्रदुद्रुवुः ॥ ४
ते सर्वतो विद्रवन्तो योधा विध्वस्तचेतनाः ।
अहन्यन्त महाराज धावमानाश्च संयुगे ॥ ५
महारथसहस्राणि जघ्नुरन्योन्यमाहवे ।
अन्धे तमसि मूढानि पुत्रस्य तव मन्त्रिते ॥ ६
ततः सर्वाणि सैन्यानि सेनागोपाश्च भारत ।
व्यमुह्यन्त रणे तत्र तमसा संवृते सति ॥ ७
धृतराष्ट्र उवाच ।
तेषां संलोड्यमानानां पाण्डवैर्विहतौजसाम् ।
अन्धे तमसि मग्नानामासीत्किं वो मनस्तदा ॥ ८
कथं प्रकाशस्तेषां वा मम सैन्यस्य वा पुनः ।
बभूव लोके तमसा तथा सञ्जय संवृते ॥ ९

सञ्जय उवाच ।
ततः सर्वाणि सैन्यानि हतशिष्टानि यानि वै ।
सेनागोप्तॄनथादिश्य पुनर्व्यूहमकल्पयत् ॥ १०
द्रोणः पुरस्ताज्जघने तु शल्य-
स्तथा द्रौणिः कृतवर्मा सौबलश्च ।
स्वयं तु सर्वाणि बलानि राज-
न्राजाऽभ्ययाद्गोपयन्वै निशायाम् ॥ ११
उवाच सर्वांश्च पदातिसङ्घा-
न्दुर्योधनः पार्थिवसान्त्वपूर्वम् ।
उत्सृज्य सर्वे परमायुधानि
गृह्णीत हस्तैर्ज्वलितान्प्रदीपान् ॥ १२
ते चोदिताः पार्थिवसत्तमेन
ततः प्रहृष्टा जगृहुः प्रदीपान् ॥ १३
देवर्षिगन्धर्वसुरर्षिसङ्घा
विद्याधराश्चाप्सरसां गणाश्च
नागाः सयक्षोरगकिन्नराश्च
हृष्टा दिविस्था जगृहुः प्रदीपान् ॥ १४
दिग्दैवतेभ्यश्च समापतन्तो-
ऽदृश्यन्त दीपाः ससुगन्धितैलाः ।
विशेषतो नारदपर्वताभ्यां
संबोध्यमानाः कुरुपाण्डवार्थम् ॥ १५

अन्धे आन्ध्यहेतौ ॥ ६ ॥ वो युष्मत्संबन्धिनां मनः किं किंविधम् । कातरं धृष्टं वेत्यर्थः ॥ ८ ॥ तत इति । द्रोण इत्यपकृष्यते । तेषां सैन्यानां व्यूहमित्याहृत्य योज्यम् ॥ १० ॥ देवर्षीति । भुवि पदातिभिर्दीपेषु गृहीतेषु दिविस्था देवा अपि दीपान् जगृहुर्युद्धोत्सवप्रेक्षकाः ॥ १४ ॥ चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

सा भूय एव ध्वजिनी विभक्ता
यरोचताग्निप्रभया निशायाम् ।
महाधनैराभरणैश्च दिव्यैः
शस्त्रैश्च दीप्तैरपि संपतद्भिः ॥ १६

रथेरथे पञ्च विदीपकास्तु
प्रदीपकास्तत्र गजे त्रयश्च
प्रत्यश्वमेकश्च महाप्रदीपः
कृतास्तु तैः पाण्डवैः कौरवेयैः ॥ १७

क्षणेन सर्वे विहिताः प्रदीपा
व्यादीपयन्तो ध्वजिनीं तवाशु ॥ १८

सर्वास्तु सेना व्यतिसेव्यमानाः
पदातिभिः पावकतैलहस्तैः ।
प्रकाश्यमाना ददृशुर्निशायां
यथान्तरिक्षे जलदास्तडिद्भिः ॥ १९

प्रकाशितायां तु ततो ध्वजिन्यां
द्रोणोऽग्निकल्पः प्रतपन्सपत्नान् ।
रराज राजेन्द्र सुवर्णवर्मा
मध्यं गतः सूर्य इवांशुमाली ॥ २०

जाम्बूनदेष्वाभरणेषु चैव
निष्केषु शुद्धेषु शरासनेषु ।
पीतेषु शस्त्रेषु च पावकस्य
प्रतिप्रभास्तत्र तदा बभूवुः ॥ २१

रथे ऽाश्च शंक्याः परिघाश्च शुभ्रा
रथेषु शक्त्यश्च विवर्तमानाः ।
प्रतिप्रभारश्मिभिराजमीढ
पुनःपुनः संजनयन्ति दीपान् ॥ २२

छत्राणि वालव्यजनानि खड्गा
दीप्ता महोल्काश्च तथैव राजन् ।
व्याघूर्णमानाश्च सुवर्णमाला
व्यायच्छतां तत्र तदा विरेजुः ॥ २३

शस्त्रप्रभाभिश्च विराजमानं
दीपप्रभाभिश्च तदा बलं तत् ।
प्रकाशितं चाभरणप्रभाभि-
र्भृशं प्रकाशं नृपते बभूव ॥ २४

पीतानि शस्त्राण्यसृगुक्षितानि
वीरावधूतानि तनुच्छदानि ।
दीप्तां प्रभां प्राजनयन्त तत्र
तपात्यये विद्युदिवान्तरिक्षे ॥ २५

प्रकम्पितानामभिघातवेगै-
रभिघ्नतां चापततां जवेन ।
वक्राण्यकाशन्त तदा नराणां
वाय्वीरितानीव महाम्बुजानि ॥ २६

महावने दारुमये प्रदीप्ते
यथा प्रभा भास्करस्यापि नश्येत् ।
तथा तदाऽऽसीद्ध्वजिनी प्रदीप्ता
महाभया भारत भीमरूपा ॥ २७

तत्संप्रदीप्तं बलमस्मदीयं
निशाम्य पार्थास्त्वरितास्तथैव ।
सर्वेषु सैन्येषु पदातिसङ्घा-
नचोदयंस्तेऽपि चक्रुः प्रदीपान् ॥ २८

गजेगजे सप्त कृताः प्रदीपा
रथेरथे चैव दश प्रदीपाः ।
द्वावश्वपृष्ठे परिपार्श्वतोऽन्ये
ध्वजेषु चान्ये जघनेषु चान्ये ॥ २९

सेनासु सर्वासु च पार्श्वतोऽन्ये
पश्चात्पुरस्ताच्च समन्ततश्च ।
मध्ये तथाऽन्ये ज्वलिताग्निहस्ता
व्यदीपयन्पाण्डुसुतस्य सेनाम् ॥ ३०

मध्ये तथाऽन्ये ज्वलिताग्निहस्ताः
सेनाद्वयेऽपि स्म नरा विचेरुः ॥ ३१

पदा
विमिश्रिता हस्तिरथाश्ववृन्दैः ।
व्यदीपयंस्ते ध्वजिनीं प्रदीप्ता-
स्तथा बलं पाण्डवेयाभिगुप्तम् ॥ ३२

तेन प्रदीप्तेन तथा प्रदीप्तं
बलं तवासीद्बलवद्बलेन ।
भाः कुर्वता भानुमता ग्रहेण
दिवाकरेणाग्निरिवाभिगुप्तः ॥ ३३

तयोः प्रभाः पृथिवीमन्तरिक्षं
सर्वा व्यतिक्रम्य दिशश्च वृद्धाः ।
तेन प्रकाशेन भृशं प्रकाशं
बभूव तेषां तव चैव सैन्यम् ॥ ३४
तेन प्रकाशेन दिवं गतेन
संबोधिता देवगणाश्च राजन् ।
गन्धर्वयक्षासुरसिद्धसङ्घाः
समागमन्नप्सरसश्च सर्वाः ॥ ३५
तद्देवगन्धर्वसमाकुलं च
यक्षासुरेन्द्राप्सरसां गणैश्च ।
हतैश्च शूरैर्दिवमारुहद्भि-
रायोधनं दिव्यकल्पं बभूव ॥ ३६
रथाश्वनागाकुलदीपदीप्तं
संरब्धयोधं हतविद्रुताश्वम् ।
महद्बलं व्यूढरथाश्वनागं
सुरासुरव्यूहसमं बभूव ॥ ३७
तच्छक्तिसङ्घाकुलचण्डवातं
महारथाभ्रं गजवाजिघोषम् ।
शस्त्रौघवर्षं रुधिराम्बुधारं
निशि प्रवृत्तं रथदुर्दिनं तत् ॥ ३८
तस्मिन्महाग्निप्रतिमो महात्मा
संतापयन्पाण्डवान्विप्रमुख्यः ।
गभस्तिभिर्मध्यगतो यथाऽर्को
वर्षात्यये तद्वदभून्नरेन्द्र ॥ ३९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

---

## पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

संकुलयुद्धम् ॥ १ ॥

---

सञ्जय उवाच ।
प्रकाशिते तदा लोके रजसा तमसावृते ।
समाजग्मुरथो वीराः परस्परवधैषिणः ॥ १
ते समेत्य रणे राजञ्शस्त्रप्रासासिधारिणः ।
परस्परमुदैक्षन्त परस्परकृतागसः ॥ २
प्रदीपानां सहस्रैश्च दीप्यमानैः समन्ततः ।
रत्नाचितैः स्वर्णदण्डैर्गन्धतैलावसिञ्चितैः ॥ ३
देवगन्धर्वदीपाद्यैः प्रभाभिरधिकोज्ज्वलैः ।
विरराज तदा भूमिर्ग्रहैर्द्यौरिव भारत ॥ ४
उल्काशतैः प्रज्वलितै रणभूमिर्व्यराजत ।
दह्यमानेव लोकानामभावे च वसुंधरा ॥ ५
व्यदीप्यन्त दिशः सर्वाः प्रदीपैस्तैः समन्ततः ।
वर्षाप्रदोषे खद्योतैर्वृता वृक्षा इवाबभुः ॥ ६
असज्जन्त ततो वीरा वीरेष्वेव पृथक्पृथक् ।
नागा नागैः समाजग्मुस्तुरगा हयसादिभिः ।
रथा रथवरैरेव समाजग्मुर्मुदा युताः ॥ ७
तस्मिन्रात्रिमुखे घोरे तव पुत्रस्य शासनात् ।
चतुरङ्गस्य सैन्यस्य संपातश्च महानभूत् ॥ ८
ततोऽर्जुनो महाराज कौरवाणामनीकिनीम् ।
व्यधमत्त्वरया युक्तः क्षपयन्सर्वपार्थिवान् ॥ ९
धृतराष्ट्र उवाच ।
तस्मिन्प्रविष्टे संरब्धे मम पुत्रस्य वाहिनीम् ।
अमृष्यमाणे दुर्धर्षे कथमासीन्मनो हि वः ॥ १०
किमकुर्वत सैन्यानि प्रविष्टे परपीडने ।
दुर्योधनश्च किं कृत्यं प्राप्तकालममन्यत ॥ ११
के चैनं समरे वीरं प्रत्युद्ययुररिंदमाः ।
द्रोणं च के व्यरक्षन्त प्रविष्टे श्वेतवाहने ॥ १२
केऽरक्षन्दक्षिणं चक्रं के च द्रोणस्य सव्यतः ।
के पृष्ठतश्चाप्यभवन्वीरा वीरान्विनिघ्नतः ।
के पुरस्तादगच्छन्त निघ्नन्तः शात्रवान्रणे ॥ १३
यत्प्राविशन्महेष्वासः पाञ्चालानपराजितः ।
नृत्यन्निव नरव्याघ्रो रथमार्गेषु वीर्यवान् ॥ १४
यो ददाह शरैर्द्रोणः पाञ्चालानां रथव्रजान् ।
धूमकेतुरिव क्रुद्धः कथं मृत्युमुपेयिवान् ॥ १५

---

लोकानामभावे प्रलये इव ॥ ५ ॥ तुरगास्तुरगसादिनः॥७॥ पञ्चषष्ट्यधिकशततमोध्यायः ॥ १६५ ॥

अव्यग्रानेव हि परान्कथयस्यपराजितान् ।
हृष्टानुदीर्णान्संग्रामे न तथा सूत मामकान् ॥१६
हतांश्चैव विदीर्णांश्च विप्रकीर्णांश्च शंससि ।
रथिनो विरथांश्चैव कृतान्युद्धेषु मामकान् ॥ १७
सञ्जय उवाच ।
द्रोणस्य मतमाज्ञाय योद्धुकामस्य तां निशाम् ।
दुर्योधनो महाराज वश्यान्भ्रातॄनुवाच ह ॥ १८
कर्णं च वृषसेनं च मद्रराजं च कौरव ।
दुर्धर्षं दीर्घबाहुं च ये च तेषां पदानुगाः ॥ १९
द्रोणं यत्ताः पराक्रान्ताः सर्वे रक्षन्तु पृष्ठतः ।
हार्दिक्यो दक्षिणं चक्रं शल्यश्चैवोत्तरं तथा ॥ २०
त्रिगर्तानां च ये शूरा हतशिष्टा महारथाः ।
तांश्चैव पुरतः सर्वान्पुत्रस्ते समचोदयत् ॥ २१
दुर्योधन उवाच ।
आचार्यो हि सुसंयत्तो भृशं यत्ताश्च पाण्डवाः ।
तं रक्षत सुसंयत्ता निघ्नन्तं शात्रवान्रणे ॥ २२
द्रोणो हि बलवान्युद्धे क्षिप्रहस्तः प्रतापवान् ।
निर्जयेत्त्रिदशान्युद्धे किमु पार्थान्ससोमकान् ॥२३
ते यूयं सहिताः सर्वे भृशं यत्ता महारथाः ।
द्रोणं रक्षत पाञ्चालाद्धृष्टद्युम्नान्महारथात् ॥ २४
पाण्डवीयेषु सैन्येषु न तं पश्याम कंचन ।
यो योधयेद्रणे द्रोणं धृष्टद्युम्नादृते पुमान् ॥ २५
तस्मात्सर्वात्मना मन्ये भारद्वाजस्य रक्षणम् ।
सुगुप्तः पाण्डवान्हन्यात्सृञ्जयांश्च ससोमकान् २६
सृञ्जयेष्वथ सर्वेषु निहतेषु चमूमुखे ।
धृष्टद्युम्नं रणे द्रौणिर्हनिष्यति न संशयः ॥ २७
तथाऽर्जुनं च राधेयो हनिष्यति महारथः ।
भीमसेनमहं चापि युद्धे जेष्यामि दीक्षितः ।
शेषांश्च पाण्डवान्योधाः प्रसभं हीनतेजसः ॥२८
सोयं मम जयो व्यक्तो दीर्घकालं भविष्यति ।
तस्माद्रक्षत संग्रामे द्रोणमेव महारथम् ॥ २९
इत्युक्त्वा भरतश्रेष्ठ पुत्रो दुर्योधनस्तव ।
व्यादिदेश तथा सैन्यं तस्मिंस्तमसि दारुणे ॥३०
ततः प्रववृते युद्धं रात्रौ भरतसत्तम ।
उभयोः सेनयोर्घोरं परस्परजिगीषया ॥ ३१
अर्जुनः कौरवं सैन्यमर्जुनं चापि कौरवाः ।
नानाशस्त्रसमावापैरन्योन्यं समपीडयन् ॥ ३२
द्रौणिः पाञ्चालराजं च भारद्वाजश्च सृञ्जयान् ।
छादयांचक्रिरे सङ्ख्ये शरैः सन्नतपर्वभिः ॥ ३३
पाण्डुपाञ्चालसैन्यानां कौरवाणां च भारत ।
आसीन्निष्टानको घोरो निघ्नतामितरेतरम् ॥ ३४
नैवास्माभिस्तथा पूर्वैर्दृष्टपूर्वं तथाविधम् ।
युद्धं यादृशमेवासीत्तां रात्रिं सुभयावहम् ॥ ३५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

## षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

कृतवर्मणा युधिष्ठिरपराजयः ॥ १ ॥

सञ्जय उवाच ।
वर्तमाने तदा रौद्रे रात्रियुद्धे विशांपते ।
सर्वभूतक्षयकरे धर्मपुत्रो युधिष्ठिरः ॥ १
अब्रवीत्पाण्डवांश्चैव पाञ्चालांश्चैव सोमकान् ।
अभिद्रवत संयात द्रोणमेव जिघांसया ॥ २
राज्ञस्ते वचनाद्राजन्पाञ्चालाः सृञ्जयास्तथा ।
द्रोणमेवाभ्यवर्तन्त नदन्तो भैरवान्रवान् ॥ ३
तान्वयं प्रतिगर्जन्तः प्रत्युद्याताः स्म हर्षिताः ।
यथाशक्ति यथोत्साहं यथासत्त्वं च संयुगे ॥ ४
कृतवर्मा तु हार्दिक्यो युधिष्ठिरमुपाद्रवत् ।
द्रोणं प्रति समायान्तं मत्तो मत्तमिव द्विपम् ॥५
शैनेयं शरवर्षाणि विकिरन्तं समन्ततः ।
अभ्ययात्कौरवो राजन्भूरिः संग्राममूर्धनि ॥ ६
सहदेवमथायान्तं द्रोणप्रेप्सुं महारथम् ।
कर्णो वैकर्तनो राजन्वारयामास पाण्डवम् ॥ ७
भीमसेनमथायान्तं व्यादितास्यमिवान्तकम् ।

स्वयं दुर्योधनो राजा प्रतीपं मृत्युमाव्रजन् ॥ ८
नकुलं च युधां श्रेष्ठं सर्वयुद्धविशारदम् ।
शकुनिः सौवलो राजन्वारयामास सत्वरः ॥ ९
शिखण्डिनमथायान्तं रथेन रथिनां वरम् ।
कृपः शारद्वतो राजन्वारयामास संयुगे ॥ १०
प्रतिविन्ध्यमथायान्तं मयूरसदृशैर्हयैः ।
दुःशासनो महाराज यत्तो यत्तमवारयत् ॥ ११
भैमसेनिमथायान्तं मायाशतविशारदम् ।
अश्वत्थामा महाराज राक्षसं प्रत्यषेधयत् ॥ १२
द्रुपदं वृषसेनस्तु ससैन्यं सपदानुगम् ।
वारयामास समरे द्रोणप्रेप्सुं महारथम् ॥ १३
विराटं द्रुतमायान्तं द्रोणस्य निधनं प्रति ।
मद्रराजः सुसंक्रुद्धो वारयामास भारत ॥ १४
शतानीकमथायान्तं नाकुलिं रभसं रणे ।
चित्रसेनो रुरोधाशु शरैर्द्रोणपरीप्सया ॥ १५
अर्जुनं च युधांश्रेष्ठं प्राद्रवन्तं महारथम् ।
अलायुधो महाराज राक्षसेन्द्रो न्यवारयत् ॥ १६
तथा द्रोणं महेष्वासं निघ्नन्तं शात्रवान्रणे ।
धृष्टद्युम्नोऽथ पाञ्चाल्यो हृष्टरूपमवारयत् ॥ १७
तथाऽन्यान्पाण्डुपुत्राणां समायातान्महारथान् ।
तावका रथिनो राजन्वारयामासुरोजसा ॥ १८
गजारोहा गजैस्तूर्णं सन्निपत्य महामृधे ।
योधयन्तः स्म दृश्यन्ते शतशोऽथ सहस्रशः ॥ १९
निशीथे तुरगा राजन्द्रावयन्तः परस्परम् ।
समदृश्यन्त वेगेन पक्षवन्तो यथाऽद्रयः ॥ २०
सादिनः सादिभिः सार्धं प्रासशक्त्यृष्टिपाणयः ।
समागच्छन्महाराज विनदन्तः पृथक्पृथक् ॥ २१
नरास्तु बहवस्तत्र समाजग्मुः परस्परम् ।
गदाभिर्मुसलैश्चैव नानाशस्त्रैश्च संयुगे ॥ २२
कृतवर्मा तु हार्दिक्यो धर्मपुत्रं युधिष्ठिरम् ।
वारयामास संक्रुद्धो वेलेवोद्धृत्तमर्णवम् ॥ २३
युधिष्ठिरस्तु हार्दिक्यं विद्ध्वा पञ्चभिराशुगैः ।
पुनर्विव्याध विंशत्या तिष्ठतिष्ठेति चाब्रवीत् ॥ २४
कृतवर्मा तु संक्रुद्धो धर्मपुत्रस्य मारिष ।
धनुश्चिच्छेद भल्लेन तं च विव्याध सप्तभिः ॥ २५
अथान्यद्धनुरादाय धर्मपुत्रो महारथः ।
हार्दिक्यं दशभिर्बाणैर्बाह्वोरुरसि चार्पयन् ॥ २६
माधवस्तु रणे विद्धो धर्मपुत्रेण मारिष ।
प्राकम्पत च रोषेण सप्तभिश्चार्दयच्छरैः ॥ २७
तस्य पार्थो धनुश्छित्त्वा हस्तावापं निकृत्य च ।
प्राहिणोन्निशितान्बाणान्पञ्च राजञ्छिलाशितान् ॥
ते तस्य कवचं भित्त्वा हेमचित्रं महाधनम् ।
प्राविशन्धरणीं भित्त्वा वल्मीकमिव पन्नगाः ॥२९
अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्मुकम् ।
विव्याध पाण्डवं षष्ट्या सूतं च नवभिः शरैः ॥ ३०
तस्य शक्तिममेयात्मा पाण्डवो भुजगोपमाम् ।
चिक्षेप भरतश्रेष्ठ रथे न्यस्य महद्धनुः ॥ ३१
सा हेमचित्रा महती पाण्डवेयेन प्रेरिता ।
निर्भिद्य दक्षिणं बाहुं प्राविशद्धरणीतलम् ॥ ३२
एतस्मिन्नेव काले तु गृह्य पार्थः पुनर्धनुः ।
हार्दिक्यं छादयामास शरैः सन्नतपर्वभिः ॥ ३३
ततस्तु समरे शूरो वृष्णीनां प्रवरो रथी ।
व्यश्वसूतरथं चक्रे निमेषार्धाद्युधिष्ठिरम् ॥ ३४
ततस्तु पाण्डवो ज्येष्ठः खड्गं चर्म समाददे ।
तदस्य निशितैर्बाणैर्व्यधमन्माधवो रणे ॥ ३५
तोमरं तु ततो गृह्य स्वर्णदण्डं दुरासदम् ।
प्रैषयत्समरे तूर्णं हार्दिक्यस्य युधिष्ठिरः ॥ ३६
तमापतन्तं सहसा धर्मराजभुजच्युतम् ।
द्विधा चिच्छेद हार्दिक्यः कृतहस्तः स्मयन्निव ॥ ३७
ततः शरशतेनाजौ धर्मपुत्रमवाकिरत् ।
कवचं चास्य संक्रुद्धः शरैस्तीक्ष्णैरदारयत् ॥ ३८
हार्दिक्यशरसंछन्नं कवचं तन्महाधनम् ।
व्यशीर्यत रणे राजंस्ताराजालमिवाम्बरात् ॥ ३९
स च्छिन्नधन्वा विरथः शीर्णवर्मा शरार्दितः ।
अपायासीद्रणात्तूर्णं धर्मपुत्रो युधिष्ठिरः ॥ ४०

भैमसेनिं घटोत्कचम् ॥ १२ ॥ माधवः कृतवर्मा ॥ २७ ॥

षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

कृतवर्मा तु निर्जित्य धर्मात्मानं युधिष्ठिरम् । पुनर्द्रोणस्य जुगुपे चक्रमेव महात्मनः ॥ ४१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

## सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

सात्यकिना भूरिनाम्नो राज्ञो वधः ॥ १ ॥ द्रौणिना घटोत्कचपराजयः ॥ २ ॥ भीमेन दुर्योधनपराभवः ॥ ३ ॥

सञ्जय उवाच ।
भूरिस्तु समरे राजञ्शैनेयं रथिनां वरम् ।
आपतन्तमपासेधत्प्रयाणादिव कुञ्जरम् ॥ १
अथैनं सात्यकिः क्रुद्धः पञ्चभिर्निशितैः शरैः ।
विव्याध हृदये तस्य प्रास्रवत्तस्य शोणितम् ॥ २
तथैव कौरवो युद्धे शैनेयं युद्धदुर्मदम् ।
दशभिर्निशितैस्तीक्ष्णैरविध्यत भुजान्तरे ॥ ३
तावन्योन्यं महाराज ततक्षाते शरैर्भृशम् ।
क्रोधसंरक्तनयनौ क्रोधाद्विष्फार्य कार्मुके ॥ ४
तयोरासीन्महाराज शस्त्रवृष्टिः सुदारुणा ।
क्रुद्धयोः सायकमुचोर्यमान्तकनिकाशयोः ॥ ५
तावन्योन्यं शरै राजन्संछाद्य समवस्थितौ ।
मुहूर्तं चैव तद्युद्धं समरूपमिवाभवत् ॥ ६
ततः क्रुद्धो महाराज शैनेयः प्रहसन्निव ।
धनुश्चिच्छेद समरे कौरव्यस्य महात्मनः ॥ ७
अथैनं छिन्नधन्वानं नवभिर्निशितैः शरैः ।
विव्याध हृदये तूर्णं तिष्ठतिष्ठेति चाब्रवीत् ॥ ८
सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ।
धनुरन्यत्समादाय सात्वतं प्रत्यविध्यत ॥ ९
स विद्ध्वा सात्वतं बाणैस्त्रिभिरेव विशांपते ।
धनुश्चिच्छेद भल्लेन सुतीक्ष्णेन हसन्निव ॥ १०
छिन्नधन्वा महाराज सात्यकिः क्रोधमूर्च्छितः ।
प्रजहार महावेगां शक्तिं तस्य महोरसि ॥ ११
स तु शक्त्या विभिन्नाङ्गो निपपात रथोत्तमात् ।
लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ १२
तं तु दृष्ट्वा हतं शूरमश्वत्थामा महारथः ।
अभ्यधावत वेगेन शैनेयं प्रति संयुगे ॥ १३
तिष्ठतिष्ठेति चाभाष्य शैनेयं स नराधिप ।
अभ्यवर्षच्छरौघेण मेरुं वृष्ट्या यथाम्बुदः ॥ १४
तमापतन्तं संरब्धं शैनेयस्य रथं प्रति ।
घटोत्कचोऽब्रवीद्राजन्नादं मुक्त्वा महारथः ॥ १५
तिष्ठतिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि ।
एष त्वां निहनिष्यामि महिषं मृगराडिव ॥ १६
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ।
इत्युक्त्वा क्रोधताम्राक्षो राक्षसः परवीरहा ।
द्रौणिमभ्यद्रवत्क्रुद्धो गजेन्द्रमिव केसरी ॥ १७
रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः ।
रथिनामृषभं द्रौणिं धाराभिरिव तोयदः ॥ १८
शरवृष्टिं तु तां प्राप्तां शरैराशीविषोपमैः ।
शातयामास समरे तरसा द्रौणिरुत्स्मयन् ॥ १९
ततः शरशतैस्तीक्ष्णैर्मर्मभेदिभिराशुगैः ।
समाचिनोद्राक्षसेन्द्रं घटोत्कचमरिंदमम् ॥ २०
स शरैराचितस्तेन राक्षसो रणमूर्धनि ।
व्यकाशत महाराज श्वाविच्छललतो यथा ॥ २१
ततः क्रोधसमाविष्टो भैमसेनिः प्रतापवान् ।
शरैरवचकर्तोग्रैर्द्रौणिं वज्राशनिप्रभैः ॥ २२
क्षुरप्रैरर्धचन्द्रैश्च नाराचैः सशिलीमुखैः ।
वराहकर्णैर्नालीकैर्विकर्णैश्चाभ्यवीवृषत् ॥ २३
तां शस्त्रवृष्टिमतुलां वज्राशनिसमस्वनाम् ।
पतन्तीमुपरि क्रुद्धो द्रौणिरव्यथितेन्द्रियः ॥ २४
सुदुःसहां शरैर्घोरैर्दिव्यास्त्रप्रतिमन्त्रितैः ।
व्यधमत्सुमहातेजा महाभ्राणीव मारुतः ॥ २५

प्रयाणाद्यानस्थानात् । प्रवणादिति पाठे प्रवणं प्रकृष्टं वनं जलम् ॥ १ ॥ तस्य सात्यकेः । तस्य तस्माद्धृदयात् ॥ २ ॥ लोहिताङ्गः कुजः । यदृच्छया दैवेनेत्यभूतोपमा ॥ १२ ॥

महिषमसुरम् । महिषं षण्मुखो यथा इति घ. ङ. झ. पाठः ॥ १६ ॥ श्वाविच्छल्यकः । शललतः शललीभिः ॥ २१ ॥

आयसानि च चक्राणि भुशुण्ड्यः शक्तितोमराः।
पतन्त्यविरलाः शूलाः शतघ्न्यः पट्टसास्तथा ॥ ४२
तदुग्रमतिरौद्रं च दृष्ट्वा युद्धं नराधिप।
पुत्राश्च तव योधाश्च व्यथिता विप्रदुद्रुवुः ॥ ४३
तत्रैकोऽस्त्रबलश्लाघी कर्णो मानी न विव्यथे।
व्यधमच्च शरैर्मायां तां घटोत्कचनिर्मिताम् ॥ ४४
मायायां तु प्रहीणायाममर्षाच्च घटोत्कचः।
विससर्ज शरान्घोरान्सूतपुत्रं त आविशन् ॥ ४५
ततस्ते रुधिराभ्यक्ता भित्त्वा कर्णं महाहवे।
विविशुर्धरणीं बाणाः संक्रुद्धा इव पन्नगाः ॥ ४६
सूतपुत्रस्तु संक्रुद्धो लघुहस्तः प्रतापवान्।
घटोत्कचमतिक्रम्य बिभेद दशभिः शरैः ॥ ४७
घटोत्कचो विनिर्भिन्नः सूतपुत्रेण मर्मसु।
चक्रं दिव्यं सहस्रारमगृह्णाद्व्यथितो भृशम् ॥ ४८
क्षुरान्तं बालसूर्याभं मणिरत्नविभूषितम्।
चिक्षेपाधिरथेः क्रुद्धो भैमसेनिर्जिघांसया ॥ ४९
प्रविद्धमतिवेगेन विक्षिप्तं कर्णसायकैः।
अभाग्यस्येव संकल्पस्तन्मोघमपतद्भुवि ॥ ५०
घटोत्कचस्तु संक्रुद्धो दृष्ट्वा चक्रं निपातितम्।
कर्णं प्राच्छादयद्बाणैः स्वर्भानुरिव भास्करम् ॥ ५१
सूतपुत्रस्त्वसंभ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः।
घटोत्कचरथं तूर्णं छादयामास पत्रिभिः ॥ ५२
घटोत्कचेन क्रुद्धेन गदा हेमाङ्गदा तदा।
क्षिप्ता भ्राम्य शरैः साऽपि कर्णेनाभ्याहताऽपतत् ॥
ततोऽन्तरिक्षमुत्पत्य कालमेघ इवोन्नदन्।
प्रववर्ष महाकायो द्रुमवर्षं नभस्तलात् ॥ ५४
ततो मायाविनं कर्णो भीमसेनसुतं दिवि।
मार्गणैरभिविव्याध घनं सूर्य इवांशुभिः ॥ ५५
तस्य सर्वान्हयान्हत्वा संछिद्य शतधा रथम्।
अभ्यवर्षच्छरैः कर्णः पर्जन्य इव वृष्टिमान् ॥ ५६
न चास्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम्।
सोऽदृश्यत मुहूर्तेन श्वाविच्छललितो यथा ॥ ५७
न हयान्न रथं तस्य न ध्वजं न घटोत्कचम्।
दृष्टवन्तः स्म समरे शरौघैरभिसंवृतम् ॥ ५८
स तु कर्णस्य तद्दिव्यमस्त्रमस्त्रेण शातयन्।
मायायुद्धेन मायावी सूतपुत्रमयोधयत् ॥ ५९
सोऽयोधयत्तदा कर्णं मायया लाघवेन च।
अलक्ष्यमाणानि दिवि शरजालानि चापतन् ॥ ६०
भैमसेनिर्महामायो मायया कुरुसत्तम।
विचचार महाकायो मोहयन्निव भारत ॥ ६१
स तु कृत्वा विरूपाणि वदनान्यशुभानि च।
अग्रसत्सूतपुत्रस्य दिव्यान्यस्त्राणि मायया ॥ ६२
पुनश्चापि महाकायः संछिन्नः शतधा रणे।
गतसत्वो निरुत्साहः पतितः खाद्व्यदृश्यत ॥ ६३
तं हतं मन्यमानाः स्म प्राणदन्कुरुपुङ्गवाः।
अथ देहैर्नवैरन्यैर्दिक्षु सर्वास्वदृश्यत ॥ ६४
पुनश्चापि महाकायः शतशीर्षः शतोदरः।
व्यदृश्यत महाबाहुर्मैनाक इव पर्वतः ॥ ६५
अङ्गुष्ठमात्रो भूत्वा च पुनरेव स राक्षसः।
सागरोर्मिरिवोद्भूतस्तिर्यगूर्ध्वमवर्तत ॥ ६६
वसुधां दारयित्वा च पुनरप्सु न्यमज्जत।
अदृश्यत तदा तत्र पुनरुन्मज्जितोऽन्यतः ॥ ६७
सोऽवतीर्य पुनस्तस्थौ रथे हेमपरिष्कृते।
क्षितिं खं च दिशश्चैव माययाऽभ्येत्य दंशितः ॥ ६८
गत्वा कर्णरथाभ्याशं व्यचरत्कुण्डलाननः।
प्राह वाक्यमसंभ्रान्तः सूतपुत्रं विशांपते ॥ ६९
तिष्ठेदानीं क्व मे जीवन्सूतपुत्र गमिष्यसि।
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ॥ ७०
इत्युक्त्वा रोषताम्राक्षं रक्षः क्रूरपराक्रमम्।
उत्पपातान्तरिक्षं च जहास च सुविस्तरम्।
कर्णमभ्यहनच्चैव गजेन्द्रमिव केसरी ॥ ७१
रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः।
रथिनामृषभं कर्णं धाराभिरिव तोयदः ॥ ७२
शरवृष्टिं च तां कर्णो दूरात्प्राप्तामशातयत् ॥ ७३
दृष्ट्वा च विहतां मायां कर्णेन भरतर्षभ।
घटोत्कचस्ततो मायां ससर्जान्तर्हितः पुनः ॥ ७४
सोऽभवद्गिरिरत्युच्चः शिखरैस्तरुसंकटैः।
शूलप्रासासिमुसलजलप्रस्रवणो महान् ॥ ७५
तमञ्जनचयप्रख्यं कर्णो दृष्ट्वा महीधरम्।
प्रपातैरायुधान्युग्राण्युद्वहन्तं न चुक्षुभे ॥ ७६

सयन्निव ततः कर्णो दिव्यमस्त्रमुदैरयत् ।
ततः सोऽस्त्रेण शैलेन्द्रो विक्षिप्तो वै व्यनश्यत॥७७
ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि ।
अश्मवृष्टिभिरत्युग्रः सूतपुत्रमवाकिरत् ॥ ७८
अथ संधाय वायव्यमस्त्रमस्त्रविदां वरः ।
व्यधमत्कालमेघं तं कर्णो वैकर्तनो वृषः ॥ ७९
स मार्गणगणैः कर्णो दिशः प्रच्छाद्य सर्वशः ।
जघानास्त्रं महाराज घटोत्कचसमीरितम् ॥ ८०
ततः प्रहस्य समरे भैमसेनिर्महाबलः ।
प्रादुश्चक्रे महामायां कर्णं प्रति महारथम् ॥ ८१
स दृष्ट्वा पुनरायान्तं रथेन रथिनां वरम् ।
घटोत्कचमसंभ्रान्तं राक्षसैर्बहुभिर्वृतम् ॥ ८२
सिंहशार्दूलसदृशैर्मत्तमातङ्गविक्रमैः ।
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैस्तथा ।
नानाशस्त्रधरैर्घोरैर्नानाकवचभूषणैः ॥ ८३
वृतं घटोत्कचं क्रूरैर्मरुद्भिरिव वासवम् ।
दृष्ट्वा कर्णो महेष्वासो योधयामास राक्षसम्॥८४
घटोत्कचस्ततः कर्णं विद्ध्वा पञ्चभिराशुगैः ।
ननाद भैरवं नादं भीषयन्सर्वपार्थिवान् ॥ ८५
भूयश्चाञ्जलिकेनाथ स मार्गणगणं महत् ।
कर्णहस्तस्थितं चापं चिच्छेदाशु घटोत्कचः ॥८६
अथान्यद्धनुरादाय दृढं भारसहं महत् ।
विचकर्ष बलात्कर्ण इन्द्रायुधमिवोच्छ्रितम् ॥८७
ततः कर्णो महाराज प्रेषयामास सायकान् ।
सुवर्णपुङ्खाञ्छत्रुघ्नान्खेचरान्राक्षसान्प्रति ॥ ८८
तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम् ।
सिंहेनेवार्दितं वन्यं गजानामाकुलं कुलम् ॥८९
विधम्य राक्षसान्बाणैः साश्वसूतगजान्विभुः ।
ददाह भगवान्वह्निर्भूतानीव युगक्षये ॥ ९०
स हत्वा राक्षसीं सेनां शुशुभे सूतनन्दनः ।
पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः ॥ ९१
तेषु राजसहस्रेषु पाण्डवेयेषु मारिष ।
नैनं निरीक्षितुमपि कश्चिच्छक्नोति पार्थिव ॥९२
ऋते घटोत्कचाद्राजन्राक्षसेन्द्रान्महाबलात् ।
भीमवीर्यबलोपेतात्क्रुद्धाद्वैवस्वतादिव ॥ ९३
तस्य क्रुद्धस्य नेत्राभ्यां पावकः समजायत ।
महोल्काभ्यां यथा राजन्सार्चिषः स्नेहबिन्दवः॥९४
तलं तलेन संहत्य संदश्य दशनच्छदम् ।
रथमास्थाय च पुनर्मायया निर्मितं तदा ॥ ९५
युक्तं गजनिभैर्वाहैः पिशाचवदनैः खरैः ।
स सूतमब्रवीत्क्रुद्धः सूतपुत्राय मां वह ॥ ९६
स ययौ घोररूपेण रथेन रथिनां वरः ।
द्वैरथं सूतपुत्रेण पुनरेव विशांपते ॥ ९७
स चिक्षेप पुनः क्रुद्धः सूतपुत्राय राक्षसः ।
अष्टचक्रां महाघोरामशनिं रुद्रनिर्मिताम् ॥ ९८
द्वियोजनसमुत्सेधां योजनायामविस्तराम् ।
आयसीं निचितां शूलैः कदम्बमिव केसरैः॥९९
तामवप्लुत्य जग्राह कर्णो न्यस्य महद्धनुः ।
चिक्षेप चैनां तस्यैव स्यन्दनात्सोऽवपुप्लुवे ॥१००
साश्वसूतध्वजं यानं भस्म कृत्वा महाप्रभा ।
विवेश वसुधां भित्त्वा सुरास्तत्र विसिस्मियुः॥१०१
कर्णं तु सर्वभूतानि पूजयामासुरञ्जसा ।
यदवप्लुत्य जग्राह देवसृष्टां महाशनिम् ॥ १०२
एवं कृत्वा रणे कर्ण आरुरोह रथं पुनः ।
ततो मुमोच नाराचान्सूतपुत्रः परंतपः ॥ १०३
अशक्यं कर्तुमन्येन सर्वभूतेषु मानद ।
यदकार्षीत्तदा कर्णः संग्रामे भीमदर्शने ॥ १०४
स हन्यमानो नाराचैर्धाराभिरिव पर्वतः ।
गन्धर्वनगराकारः पुनरन्तरधीयत ॥ १०५
एवं स वै महाकायो मायया लाघवेन च ।
अस्त्राणि तानि दिव्यानि जघान रिपुसूदनः॥१०६
निहन्यमानेष्वस्त्रेषु मायया तेन रक्षसा ।
असंभ्रान्तस्तदा कर्णस्तद्रक्षः प्रत्ययुध्यत ॥ १०७
ततः क्रुद्धो महाराज भैमसेनिर्महाबलः ।

उल्काभ्यां सर्जरसमिश्रोल्मुकाभ्याम् । ततो हि दीप्तस्य सर्जरसस्य कणाः सस्नेहत्वात्सार्चिष एव पतन्तीति प्रसिद्धम् ॥९४॥

षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

चकार बहुधाऽऽत्मानं भीषयाणो महारथान् १०८
ततो दिग्भ्यः समापेतुः सिंहव्याघ्रतरक्षवः ।
अग्निजिह्वाश्च भुजगा विहगाश्चाप्ययोमुखाः॥१०९
स कीर्यमाणो विशिखैः कर्णचापच्युतैः शरैः ।
नागराडिव दुष्प्रेक्ष्यस्तत्रैवान्तरधीयत ॥ ११०
राक्षसाश्च पिशाचाश्च यातुधानास्तथैव च ।
शालावृकाश्च बहवो वृकाश्च विकृताननाः॥ १११
ते कर्णं क्षपयिष्यन्तः सर्वतः समुपाद्रवन्
अथैनं वाग्भिरुग्राभिस्त्रासयांचक्रिरे तदा॥ ११२
उद्यतैर्बहुभिर्घोरैरायुधैः शोणितोक्षितैः ।
तेषामनेकैरेकैकं कर्णो विव्याध सायकैः॥ ११३
प्रतिहत्य तु तां मायां दिव्येनास्त्रेण राक्षसीम् ।
आजघान हयानस्य शरैः सन्नतपर्वभिः ॥ ११४
ते भग्ना विक्षताङ्गाश्च भिन्नपृष्ठाश्च सायकैः ।
वसुधामन्वपद्यन्त पश्यतस्तस्य रक्षसः ॥ ११५
स भग्नमायो हैडिम्बिः कर्णं वैकर्तनं तदा ।
एष ते विदधे मृत्युमित्युक्त्वान्तरधीयत॥ ११६

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

## सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

बकादिबन्धुवधाद्भीमे चिरवैरिणा अलायुधराक्षसेन सुयोधनादायोधनाभ्यनुज्ञामुपलभ्य घटोत्कचं प्रत्यभिगमनम् ॥१॥

सञ्जय उवाच ।
तस्मिंस्तथा वर्तमाने कर्णराक्षसयोर्मृधे ।
अलायुधो राक्षसेन्द्रो वीर्यवानभ्यवर्तत ॥ १
महत्या सेनया युक्तो दुर्योधनमुपागमत् ।
राक्षसानां विरूपाणां सहस्रैः परिवारितः ।
नानारूपधरैर्वीरैः पूर्ववैरमनुस्मरन् ॥ २
तस्य ज्ञातिर्हि विक्रान्तो ब्राह्मणादो बको हतः
किर्मीरश्च महातेजा हिडिम्बश्च सखा तदा ॥ ३
स दीर्घकालाध्युषितं पूर्ववैरमनुस्मरन् ।
विज्ञायैतन्निशायुद्धं जिघांसुर्भीममाहवे ॥ ४
स मत्त इव मातङ्गः संक्रुद्ध इव चोरगः ।
दुर्योधनमिदं वाक्यमब्रवीद्युद्धलालसः ॥
विदितं ते महाराज यथा भीमेन राक्षसाः ।
हिडिम्बबककिर्मीरा निहता मम बान्धवाः ॥६
परामर्शश्च कन्याया हिडिम्बायाः कृतः पुरा ।
किमन्यद्राक्षसानन्यानस्मांश्च परिभूय ह ॥ ७
तमहं सगणं राजन्सवाजिरथकुञ्जरम् ।
हैडिम्बिं च सहामात्यं हन्तुमभ्यागतः स्वयम्॥८
अद्य कुन्तीसुतान्सर्वान्वासुदेवपुरोगमान् ।
हत्वा संभक्षयिष्यामि सर्वैरनुचरैः सह ॥ ९
निवारय बलं सर्वं वयं योत्स्याम पाण्डवान्॥ १०
तस्यैतद्वचनं श्रुत्वा हृष्टो दुर्योधनस्तदा ।
प्रतिपूज्याब्रवीद्वाक्यं भ्रातृभिः परिवारितः॥ ११
त्वां पुरस्कृत्य सगणं वयं योत्स्यामहे परान् ।
न हि वैरान्तमनसः स्थास्यन्ति मम सैनिकाः॥ १२
एवमस्त्विति राजानमुक्त्वा राक्षसपुङ्गवः ।
अभ्ययात्त्वरितो भैमिं सहितः पुरुषादकैः॥ १३
दीप्यमानेन वपुषा रथेनादित्यवर्चसा ।
तादृशेनैव राजेन्द्र यादृशेन घटोत्कचः ॥ १४
तस्याप्यतुलनिर्घोषो बहुतोरणचित्रितः ।
ऋक्षचर्मावनद्धाङ्गो नल्वमात्रो महारथः ॥ १५
तस्यापि तुरगाः शीघ्रा हस्तिकायाः खरस्वनाः ।
शतं युक्ता महाकाया मांसशोणितभोजनाः॥ १६
तस्यापि रथनिर्घोषो महामेघरवोपमः ।
तस्यापि सुमहच्चापं दृढज्यं कनकोज्ज्वलम्॥ १७
तस्याप्यक्षसमा बाणा रुक्मपुङ्खाः शिलाशिताः ।
सोऽपि वीरो महाबाहुर्यथैव स घटोत्कचः ॥१८
तस्यापि गोमायुबलाभिगुप्तो
बभूव केतुर्ज्वलनार्कतुल्यः ।
स चापि रूपेण घटोत्कचस्य
श्रीमत्तमो व्यन्तकसन्निकाशः ॥ १९

दीप्ताङ्गदो दीप्तकिरीटमाली
बद्धस्रगुष्णीषनिबद्धखङ्गः।
गदी भुशुण्डी मुसली हली च
शरासनी वारणतुल्यवर्ष्मा ॥ २०
रथेन तेनानलवर्चसा तदा
विद्रावयन्पाण्डववाहिनीं ताम्।
रराज सङ्ख्ये परिवर्तमानो
विद्युन्माली मेघ इवान्तरिक्षे ॥ २१
ते चापि सर्वप्रवरा नरेन्द्रा
महाबला वर्मिणश्चर्मिणश्च।
हर्षान्विता युयुधुस्तस्य राजन्
समन्ततः पाण्डवयोधवीराः ॥ २२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७॥

## अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८॥

भीमालायुधयोर्युद्धम् ॥ १ ॥

सञ्जय उवाच।
तमागतमभिप्रेक्ष्य भीमकर्माणमाहवे।
हर्षमाहारयांचक्रुः कुरवः सर्व एव ते ॥ १
तथैव तव पुत्रास्ते दुर्योधनपुरोगमाः।
अप्लवाः प्लवमासाद्य तर्तुकामा इवार्णवम् ॥ २
पुनर्जातमिवात्मानं मन्वानाः पुरुषर्षभाः।
अलायुधं राक्षसेन्द्रं स्वागतेनाभ्यपूजयन् ॥ ३
तस्मिंस्त्वमानुषे युद्धे वर्तमाने महाभये।
कर्णराक्षसयोर्नक्तं दारुणप्रतिदर्शने ॥ ४
'न द्रौणिर्न कृपद्रोणौ न शल्यो न च माधवः।
एक एव तु तेनासीद्योद्धा कर्णो रणे वृषा ॥' ५
उपप्रैक्षन्त पाञ्चालाः स्मयमानाः सराजकाः।
व्यभ्रमंस्तावकाश्चापि घूर्णमानास्ततस्ततः ॥ ६
चुक्रुशुर्नेदमस्तीति द्रोणद्रौणिकृपादयः।
तत्कर्म दृष्ट्वा संभ्रान्ता हैडिम्बस्य रणाजिरे ॥ ७
सर्वमाविग्नमभवद्धाहाभूतमचेतनम्।
तव सैन्यं महाराज निराशं कर्णजीविते ॥ ८
दुर्योधनस्तु संप्रेक्ष्य कर्णमार्तिं परां गतम्।
अलायुधं राक्षसेन्द्रं समाहूयेदमब्रवीत् ॥ ९
एष वैकर्तनः कर्णो हैडिम्बेन समागतः।
कुरुते कर्म सुमहद्यदस्यौपयिकं मृधे ॥ १०
पश्यैतान्पार्थिवाञ्शूरान्निहतान्भैमसेनिना।
नानाशस्त्रैरभिहतान्पादपानिव दन्तिना ॥ ११
तवैष भागः समरे ज्ञातिमध्ये मया कृतः।
तवैवानुमते वीर तं विक्रम्य निबर्हय ॥ १२
पुरा वैकर्तनं कर्णमेष पापो घटोत्कचः।
मायाबलं समाश्रित्य कर्षयत्यरिकर्शन ॥ १३
एवमुक्तः स राज्ञा तु राक्षसो भीमविक्रमः।
तथेत्युक्त्वा महाबाहुर्घटोत्कचमुपाद्रवत् ॥ १४
ततः कर्णं समुत्सृज्य भैमसेनिरपि प्रभो।
प्रत्यमित्रमुपायान्तमर्दयामास मार्गणैः ॥ १५
तयोः समभवद्युद्धं क्रुद्धयो राक्षसेन्द्रयोः।
मत्तयोर्वासिताहेतोर्द्विपयोरिव कानने ॥ १६
रक्षसा विप्रमुक्तस्तु कर्णोऽपि रथिनां वरः।
अभ्यद्रवद्भीमसेनं रथेनादित्यवर्चसा ॥ १७
तमायान्तमनादृत्य दृष्ट्वा ग्रस्तं घटोत्कचम्।
अलायुधेन समरे सिंहेनेव गवां पतिम् ॥ १८
रथेनादित्यवपुषा भीमः प्रहरतां वरः।
किरञ्छरौघान्प्रययावलायुधरथं प्रति ॥ १९
तमायान्तमभिप्रेक्ष्य स तदाऽलायुधः प्रभो।
घटोत्कचं समुत्सृज्य भीमसेनं समाह्वयत् ॥ २०
तं भीमः सहसाऽभ्येत्य राक्षसान्तकरः प्रभो।
सगणं राक्षसेन्द्रं तं शरवर्षैरवाकिरत् ॥ २१
तथैवालायुधो राजञ्शिलाधौतैरजिह्मगैः।
अभ्यवर्षत कौन्तेयं पुनःपुनररिंदम ॥ २२
तथा ते राक्षसाः सर्वे भीमसेनमुपाद्रवन्।
नानाप्रहरणा भीमास्त्वत्सुतानां जयैषिणः ॥ २३

माधवः कृतवर्मा ॥ ५ ॥ इदमस्मत्सैन्यम् ॥ ७ ॥

अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

स ताड्यमानो बहुभिर्भीमसेनो महाबलः ।
पञ्चभिः पञ्चभिः सर्वांस्तानविध्यच्छितैः शरैः २४
ते वध्यमाना भीमेन राक्षसाः क्रूरबुद्धयः ।
विनेदुस्तुमुलान्नादान्दुद्रुवुस्ते दिशो दश ॥ २५
तांस्त्रास्यमानान्भीमेन दृष्ट्वा रक्षो महाबलम् ।
अभिदुद्राव वेगेन शरैश्चैनमवाकिरत् ॥ २६
तं भीमसेनः समरे तीक्ष्णाग्रैरक्षिणोच्छरैः ॥ २७
अलायुधस्तु तानस्तान्भीमेन विशिखान्रणे ।
चिच्छेद कांश्चित्समरे त्वरया कांश्चिदग्रहीत् ॥ २८
स तं दृष्ट्वा राक्षसेन्द्रं भीमो भीमपराक्रमः ।
गदां चिक्षेप वेगेन वज्रपातोपमां तदा ॥ २९
तामापतन्तीं वेगेन गदां ज्वालाकुलां ततः ।
गदया ताडयामास सा गदा भीममाव्रजत् ॥ ३०
स राक्षसेन्द्रं कौन्तेयः शरवर्षैरवाकिरत् ।
तानप्यस्याकरोन्मोघान्राक्षसो निशितैः शरैः ३१
ते चापि राक्षसाः सर्वे रजन्यां भीमरूपिणः ।
शासनाद्राक्षसेन्द्रस्य निजघ्नू रथकुञ्जरान् ॥ ३२
पाञ्चालाः सृञ्जयाश्चैव वाजिनः परमद्विपाः ।
न शान्तिं लेभिरे तत्र राक्षसैर्भृशपीडिताः ॥ ३३
तं तु दृष्ट्वा महाघोरं वर्तमानं महाहवम् ।
अब्रवीत्पुण्डरीकाक्षो धनञ्जयमिदं वचः ॥ ३४
पश्य भीमं महाबाहुं राक्षसेन्द्रवशं गतम् ।
पदमस्यानुगच्छ त्वं मा विचारय पाण्डव ॥ ३५
धृष्टद्युम्नः शिखण्डी च युधामन्यूत्तमौजसौ ।
सहितौ द्रौपदेयाश्च कर्णं यान्तु महारथाः ॥ ३६
नकुलः सहदेवश्च युयुधानश्च वीर्यवान् ।
इतरान्राक्षसान्घ्नन्तु शासनात्तव पाण्डव ॥ ३७
त्वमपीमां महाबाहो चमूं द्रोणपुरस्कृताम् ।
मारयस्व नरव्याघ्र महद्धि भयमागतम् ॥ ३८
एवमुक्ते तु कृष्णेन यथोद्दिष्टा महारथाः ।
जग्मुर्वैकर्तनं कर्णं राक्षसांश्चैव तान्रणे ॥ ३९
अथ पूर्णायतोत्सृष्टैः शरैराशीविषोपमैः ।
धनुश्चिच्छेद भीमस्य राक्षसेन्द्रः प्रतापवान् ॥४०
हयांश्चास्य शितैर्बाणैः सारथिं च महाबलः ।
जघान मिषतः सङ्ख्ये भीमसेनस्य राक्षसः ॥ ४१
सोऽवतीर्य रथोपस्थाद्धताश्वो हतसारथिः ।
तस्मै गुर्वीं गदां घोरां विनदन्नुत्ससर्ज ह ॥ ४२
ततस्तां भीमनिर्घोषामापतन्तीं महागदाम् ।
गदया राक्षसो घोरो निजघान ननाद च ॥४३
तद्दृष्ट्वा राक्षसेन्द्रस्य घोरं कर्म भयावहम् ।
भीमसेनः प्रहृष्टात्मा गदामाशु परामृशत् ॥ ४४
तयोः समभवद्युद्धं तुमुलं नरराक्षसोः ।
गदानिपातसंह्रादैर्भुवं कम्पयतोर्भृशम् ॥ ४५
गदाविमुक्तौ तौ भूयः समासाद्येतरेतरम् ।
मुष्टिभिर्वज्रसंह्रादैरन्योन्यमभिजघ्नतुः ॥ ४६
रथचक्रयुगैरक्षैरधिष्ठानैरुपस्करैः ।
यथासन्नमुपादाय निजघ्नतुरमर्षणौ ॥ ४७
तौ विक्षरन्तौ रुधिरं समासाद्येतरेतरम् ।
मत्ताविव महानागौ चकृषाते पुनःपुनः ॥ ४८
तावपश्यद्धृषीकेशः पाण्डवानां हिते रतः ।
स भीमसेनरक्षार्थं हैडिम्बिं पर्यचोदयत् ॥ ४९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

## ऊनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

घटोत्कचेनाऽलायुधवधः ॥ १ ॥

सञ्जय उवाच
संदृश्य समरे भीमं रक्षसा ग्रस्तमन्तिकात् ।
वासुदेवोऽब्रवीद्राजन्घटोत्कचमिदं वचः ॥ १
पश्य भीमं महाबाहो रक्षसा ग्रस्तमाहवे ।
पश्यतां सर्वसैन्यानां तव चैव महाद्युते ॥ २
स कर्णं त्वं समुत्सृज्य राक्षसेन्द्रमलायुधम् ।
जहि क्षिप्रं महाबाहो पश्चात्कर्णं वधिष्यसि ॥ ३
स वार्ष्णेयवचः श्रुत्वा कर्णमुत्सृज्य वीर्यवान् ।

युयुधे राक्षसेन्द्रेण बकभ्रात्रा घटोत्कचः ॥ ४
तयोः सुतुमुलं युद्धं बभूव निशि रक्षसोः ।
अलायुधस्य चैवोग्रं हैडिम्बेश्चापि भारत ॥ ५
अलायुधस्य योधांश्च राक्षसान्भीमदर्शनान् ।
वेगेनापततः शूरान्प्रगृहीतशरासनान् ॥ ६
आत्तायुधः सुसंक्रुद्धो युयुधानो महारथः ।
नकुलः सहदेवश्च चिच्छिदुर्निशितैः शरैः ॥ ७
सर्वांश्च समरे राजन्किरीटी क्षत्रियर्षभान् ।
परिचिक्षेप बीभत्सुः सर्वतः प्रकिरञ्छरान् ॥ ८
कर्णश्च समरे राजन्व्यद्रावयत पार्थिवान् ।
धृष्टद्युम्नशिखण्ड्यादीन्पाञ्चालानां महारथान् ॥ ९
तान्वध्यमानान्दृष्ट्वाऽथ भीमो भीमपराक्रमः ।
अभ्ययात्त्वरितः कर्णं विशिखान्प्रकिरन्रणे ॥ १०
ततस्तेऽप्याययुर्हत्वा राक्षसान्यत्र सूतजः ।
नकुलः सहदेवश्च सात्यकिश्च महारथः ।
ते कर्णं योधयामासुः पाञ्चाला द्रोणमेव तु ॥ ११
अलायुधस्तु संक्रुद्धो घटोत्कचमरिंदमम् ।
परिघेणातिकायेन ताडयामास मूर्धनि ॥ १२
स तु तेन प्रहारेण भैमसेनिर्महाबलः ।
ईषन्मूर्छितमात्मानमस्तम्भयत वीर्यवान् ॥ १३
ततो दीप्ताग्निसंकाशां शतघण्टामलंकृताम् ।
चिक्षेप तस्मै समरे गदां काञ्चनभूषिताम् ॥ १४
सा हयांश्च रथं चास्य सारथिं च महास्वना ।
चूर्णयामास वेगेन विसृष्टा भीमकर्मणा ॥ १५
स भग्नहयचक्राक्षाद्विशीर्णध्वजकूबरात् ।
उत्पपात रथात्तूर्णं मायामास्थाय राक्षसीम् ॥ १६
स समास्थाय मायां तु ववर्ष रुधिरं बहु ।
विद्युद्विभ्राजितं चासीत्तुमुलाभ्राकुलं नभः ॥ १७
ततो वज्रनिपाताश्च साशनिस्तनयित्नवः ।
महांश्चटचटाशब्दस्तत्रासीच्च महाहवे ॥ १८
तां प्रेक्ष्य महतीं मायां राक्षसो राक्षसस्य च ।
ऊर्ध्वमुत्पत्य हैडिम्बिस्तां मायां माययाऽवधीत् ॥
सोऽभिवीक्ष्य हतां मायां मायावी माययैव हि ।
अश्मवर्षं सुतुमुलं विससर्ज घटोत्कचे ॥ २०
अश्मवर्षं स तं घोरं शरवर्षेण वीर्यवान् ।
दिशो विध्वंसयामास तदद्भुतमिवाभवत् ॥ २१
ततो नानाप्रहरणैरन्योन्यमभिवर्षताम् ।
आयसैः परिघैः शूलैर्गदामुसलमुद्गरैः ॥ २२
पिनाकैः करवालैश्च तोमरप्रासकम्पनैः ।
नाराचैर्निशितैर्भल्लैः शरैश्चक्रैः परश्वधैः ॥ २३
अयोगुडैर्भिण्डिपालैर्गोशीर्षोलूखलैरपि ।
उत्पाटितैर्महाशाखैर्विविधैर्जगतीरुहैः ॥ २४
शमीपील्लुकदम्बैश्च चम्पकैश्चैव भारत ।
इङ्गुदैर्बदरीभिश्च कोविदारैश्च पुष्पितैः ॥ २५
पलाशैश्चारिमेदैश्च प्लक्षन्यग्रोधपिप्पलैः ।
महद्भिः समरे तस्मिन्नन्योन्यमभिजघ्नतुः ॥ २६
विपुलैः पर्वताग्रैश्च नानाधातुभिराचितैः ।
तेषां शब्दो महानासीद्वज्राणां भिद्यतामिव ॥ २७
युद्धं समभवद्घोरं भैम्यलायुधयोर्नृप ।
हरीन्द्रयोर्यथा राजन्वालिसुग्रीवयोः पुरा ॥ २८
तौ युद्ध्वा विविधैर्घोरैरायुधैर्विशिखैस्तथा ।
उन्मृज्य च शितौ खड्गावन्योन्यमभिपेततुः ॥ २९
तावन्योन्यमभिद्रुत्य केशेषु सुमहाबलौ ।
भुजाभ्यां पर्यगृह्णीतां महाकायौ महाबलौ ॥ ३०
तौ खिन्नगात्रौ प्रस्वेदं सुस्रुवाते जनाधिप ।
रुधिरं च महाकायावतिवृष्टाविवाम्बुदौ ॥ ३१
अथाभिपत्य वेगेन समुद्भ्राम्य च राक्षसम् ।
बलेनाक्षिप्य हैडिम्बिश्चकर्तास्य शिरो महत् ॥ ३२
सोऽपहृत्य शिरस्तस्य कुण्डलाभ्यां विभूषितम् ।
तदा सुतुमुलं नादं ननाद सुमहाबलः ॥ ३३
हतं दृष्ट्वा महाकायं बकज्ञातिमरिंदमम् ।
पाञ्चालाः पाण्डवाश्चैव सिंहनादान्विनेदिरे ॥ ३४
ततो भेरीसहस्राणि शङ्खानामयुतानि च ।
अवादयन्पाण्डवेया राक्षसे निहते युधि ॥ ३५
अतीव सा निशा तेषां बभूव विजयावहा ।
विद्योतमाना विबभौ समन्ताद्दीपमालिनी ॥ ३६

हरीन्द्रयोः सिंहमुख्ययोः ॥ २८ ॥

एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

अलायुधस्य तु शिरो भैमसेनिर्महाबलः ।
दुर्योधनस्य प्रमुखे चिक्षेप गतचेतसः ॥ ३७
अथ दुर्योधनो राजा दृष्ट्वा हतमलायुधम् ।
बभूव परमोद्विग्नः सह सैन्येन भारत ॥ ३८
तेन ह्यस्य प्रतिज्ञातं भीमसेनमहं युधि ।
हन्तेति स्वयमागम्य स्मरता वैरमुत्तमम् ॥ ३९
ध्रुवं स तेन हन्तव्य इत्यमन्यत पार्थिवः ।
जीवितं चिरकालं हि भ्रातॄणां चाप्यमन्यत ॥ ४०
स तं दृष्ट्वा विनिहतं भीमसेनात्मजेन वै ।
प्रतिज्ञां भीमसेनस्य पूर्णामेवाभ्यमन्यत ॥ ४१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९

## अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

कर्णेन घटोत्कचवधः ॥ १ ॥

सञ्जय उवाच ।
निहत्यालायुधं रक्षः प्रहृष्टात्मा घटोत्कचः ।
ननाद विविधान्नादान्वाहिन्याः प्रमुखे तव ॥ १
तस्य तं तुमुलं शब्दं श्रुत्वा हृदयकम्पनम् ।
तावकानां महाराज भयमासीत्सुदारुणम् ॥ २
अलायुधविषक्तं तु भैमसेनिं महाबलम् ।
दृष्ट्वा कर्णो महाबाहुः पाञ्चालान्समुपाद्रवत् ॥ ३
दशभिर्दशभिर्बाणैर्धृष्टद्युम्नशिखण्डिनौ ।
दृढैः पूर्णायतोत्सृष्टैर्बिभेद नतपर्वभिः ॥
ततः परमनाराचैर्युधामन्यूत्तमौजसौ ।
सात्यकिं च रथोदारं कम्पयामास मार्गणैः ॥ ५
तेषामप्यस्यतां सङ्ख्ये सर्वेषां सव्यदक्षिणम् ।
मण्डलान्येव चापानि व्यदृश्यन्त जनाधिप ॥ ६
तेषां ज्यातलनिर्घोषो रथनेमिस्वनश्च ह ।
मेघानामिव घर्मान्ते बभूव तुमुलो निशि ॥ ७
ज्यानेमिघोषस्तनयित्नुमान्वै
धनुस्तटिन्मण्डलकेतुशृङ्गः ।
शरौघवर्षाकुलवृष्टिमांश्च
संग्राममेघः स बभूव राजन् ॥ ८
तदद्भुतं शैल इवाप्रकम्पो
वर्षं महाशैलसमानसारः ।
विध्वंसयामास रणे नरेन्द्र
वैकर्तनः शत्रुगणावमर्दी ॥ ९
ततोऽतुलैर्वज्रनिपातकल्पैः
शितैः शरैः काञ्चनचित्रपुङ्खैः ।
शत्रून्व्यपोहत्समरे महात्मा
वैकर्तनः पुत्रहिते रतस्ते ॥ १०
संछिन्नभिन्नध्वजिनश्च केचि-
त्केचिच्छरैरर्दितभिन्नदेहाः ।
केचिद्विसूता विहयाश्च केचि-
द्वैकर्तनेनाशु कृता बभूवुः ॥ ११
अविन्दमानास्त्वथ शर्म सङ्ख्ये
यौधिष्ठिरं ते बलमभ्यपद्यन् ।
तान्प्रेक्ष्य भग्नान्विमुखीकृतांश्च
घटोत्कचो रोषमतीव चक्रे ॥ १२
आस्थाय तं काञ्चनरत्नचित्रं
रथोत्तमं सिंहवत्संननाद ।
वैकर्तनं कर्णमुपेत्य चापि
विव्याध वज्रप्रतिमैः पृषत्कैः ॥ १३
तौ कर्णिनाराचशिलीमुखैश्च
नालीकदण्डासनवत्सदन्तैः ।
वराहकर्णैः सविपाठशृङ्गैः
क्षुरप्रवर्षैश्च विनेदतुः खम् ॥ १४
तद्बाणधारावृतमन्तरिक्षं
तिर्यग्गताभिः समरे रराज ।
सुवर्णपुङ्खज्वलितप्रभाभि-
र्विचित्रपुष्पाभिरिव स्रजाभिः ॥ १५

केतुशृङ्गः ध्वजशिखरः ॥ ८ ॥ तिर्यग्गताभिरिषुपङ्क्तिभि-रिति शेषः ॥ १५ ॥

समाहितावप्रतिमप्रभावा-
वन्योन्यमाजघ्नतुरुत्तमास्त्रैः ।
तयोर्हि वीरोत्तमयोर्न कश्चि-
द्ददर्श तस्मिन्समरे विशेषम् ॥ १६
अतीव तच्चित्रमतुल्यरूपं
बभूव युद्धं रविभीमसून्वोः ।
समाकुलं शस्त्रनिपातघोरं
दिवीव राहंशुमतोः प्रमत्तम् ॥ १७

सञ्जय उवाच ।
घटोत्कचं यदा कर्णो न विशेषयते नृप ।
ततः प्रादुश्चकारोग्रमस्त्रमस्त्रविदां वरः ॥ १८
तेनास्त्रेणावधीत्तस्य रथं सहयसारथिम् ।
विरथश्चापि हैडिम्बिः क्षिप्रमन्तरधीयत ॥ १९

धृतराष्ट्र उवाच ।
तस्मिन्नन्तर्हिते तूर्णं कूटयोधिनि राक्षसे ।
मामकैः प्रतिपन्नं यत्तन्ममाचक्ष्व सञ्जय ॥ २०

सञ्जय उवाच ।
अन्तर्हितं राक्षसेन्द्रं विदित्वा
संप्राक्रोशन्कुरवः सर्व एव ।
कथं नायं राक्षसः कूटयोधी
हन्यात्कर्णं समरेऽदृश्यमानः ॥ २१
ततः कर्णो लघुचित्रास्त्रयोधी
सर्वा दिशः प्रावृणोद्बाणजालैः ।
न वै किंचित्प्रापतत्तत्र भूतं
तमोभूते सायकैरन्तरिक्षे ॥ २२
नैवाददानो न च संदधानो
न चेषुधीस्पृशमानः कराग्रैः ।
अदृश्यद्वै लाघवात्सूतपुत्रः
सर्वं बाणैश्छादयानोऽन्तरिक्षम् ॥ २३
ततो मायां दारुणामन्तरिक्षे
घोरां भीमां विहितां राक्षसेन ।
अपश्याम लोहिताभ्रप्रकाशां
देदीप्यन्तीमग्निशिखामिवोग्राम् ॥ २४

ततस्तस्यां विद्युतः प्रादुरास-
न्नुल्काश्चापि ज्वलिताः कौरवेन्द्र ।
घोषश्चास्याः प्रादुरासीत्सुघोरः
सहस्रशो नदतां दुन्दुभीनाम् ॥ २५
ततः शराः प्रापतन्रुक्मपुङ्खाः
शक्त्यृष्टिप्रासमुसलान्यायुधानि ।
परश्वधास्तैलधौताश्च खड्गाः
प्रदीप्ताग्रास्तोमराः पट्टिसाश्च ॥ २६
मयूखिनः परिघा लोहबद्धा
गदाश्चित्राः शितधाराश्च शूलाः ।
गुर्व्यो गदा हेमपट्टावनद्धाः
शतघ्न्यश्च प्रादुरासन्समन्तात् ॥ २७
महाशिलाश्चापतंस्तत्रतत्र
सहस्रशः साशनयश्च वज्राः ।
चक्राणि चानेकशतक्षुराणि
प्रादुर्बभूवुर्ज्वलनप्रभाणि ॥ २८
तां शक्तिपाषाणपरश्वधानां
प्रासासिवज्राशनिमुद्गराणाम् ।
वृष्टिं विशालां ज्वलितां पतन्तीं
कर्णः शरौघैर्न शशाक हन्तुम् ॥ २९
शराहतानां पततां हयानां
वज्राहतानां च तथा गजानाम् ।
शिलाहतानां च महारथानां
महान्निनादः पततां बभूव ॥ ३०
सुभीमनानाविधशस्त्रपातै-
र्घटोत्कचेनाभिहतं समन्तात् ।
दौर्योधनं वै बलमार्तरूप-
मावर्तमानं ददृशे भ्रमत्तत् ॥ ३१
हाहाकृतं संपरिवर्तमानं
संलीयमानं च विषण्णरूपम् ।
ते त्वार्यभावात्पुरुषप्रवीराः
पराङ्मुखा नो बभूवुस्तदानीम् ॥ ३२
तां राक्षसीं भीमरूपां सुघोरां
वृष्टिं महाशस्त्रमयीं पतन्तीम् ।

प्रतिपन्नं कर्तव्यत्वेन ज्ञातमनुष्ठितं च ॥ २० ॥

अदृश्यत् अदृश्यत ॥ २३ ॥

दृष्ट्वा बलौघांश्च निपात्यमाना-
न्महद्भयं तत्र पुत्रान्विवेश ॥ ३३
शिवाश्च वैश्वानरदीप्तजिह्वाः
सुभीमनादाः शतशो नदन्तीः ।
रक्षोगणान्नर्दतश्चापि वीक्ष्य
नरेन्द्र योधा व्यथिता बभूवुः ॥ ३४
ते दीप्तजिह्वानलतीक्ष्णदंष्ट्रा
विभीषणाः शैलनिकाशकायाः ।
नभोगताः शक्तिविषक्तहस्ता
मेघा व्यमुञ्चन्निव वृष्टिमुग्राम् ॥ ३५
तैराहतास्ते शरशक्तिशूलै-
र्गदाभिरुग्रैः परिघैश्च दीप्तैः ।
वज्रैः पिनाकैरशनिप्रहारैः
शतघ्निचक्रैर्मथिताश्च पेतुः ॥ ३६
शूला भुशुण्ड्योऽश्मगुडाः शतघ्न्यः
स्थूलाश्च कार्ष्णायसपट्टनद्धाः ।
तेऽत्राकिरंस्तव पुत्रस्य सैन्यं
ततो रौद्रं कश्मलं प्रादुरासीत् ॥ ३७
विकीर्णान्त्रा विहतैरुत्तमाङ्गैः
संभग्नाङ्गाः शिश्यिरे तत्र शूराः ।
छिन्ना हयाः कुञ्जराश्चापि भग्ना
न मुच्यन्ते याचमानाः सुभीताः ॥ ३८
एवं महच्छस्त्रवर्षं सृजन्त-
स्ते यातुधाना भुवि घोररूपाः ।
मायाः सृष्टास्तत्र घटोत्कचेन
नामुञ्चन्वै याचमानं न भीतम् ॥ ३९
तस्मिन्घोरे कुरुवीरावमर्दे
कालोत्सृष्टे क्षत्रियाणामभावे ।
ते वै भग्नाः सहसा व्यद्रवन्त
प्राक्रोशन्तः कौरवाः सर्व एव ॥ ४०
पलायध्वं कुरवो नैतदस्ति
सेन्द्रा देवा घ्नन्ति नः पाण्डवार्थे ।
तथा तेषां मज्जतां भारतानां
तस्मिन्द्वीपः सूतपुत्रो बभूव ॥ ४१
तस्मिन्संक्रन्दे तुमुले वर्तमाने
सैन्ये भग्ने लीयमाने कुरूणाम् ।
अनीकानां प्रविभागे प्रकाशे
न ज्ञायन्ते कुरवो नेतरे च ॥ ४२
निर्मर्यादे विद्रवे घोररूपे
सर्वा दिशः प्रेक्षमाणाः स्म शून्याः ।
तां शस्त्रवृष्टिमुरसा गाहमानं
कर्णं सैकं तत्र राजन्नपश्यन् ॥ ४३
ततो बाणैरावृणोदन्तरिक्षं
दिव्यां मायां योधयन्राक्षसस्य ।
ह्रीमान्कुर्वन्दुष्करं चार्यकर्म
नैवामुह्यत्संयुगे सूतपुत्रः ॥ ४४
ततो भीताः समुदैक्षन्त कर्णं
राजन्सर्वे सैन्धवा बाह्लिकाश्च ।
असंमोहं पूजयन्तोऽस्य सङ्ख्ये
संपश्यन्तो विजयं राक्षसस्य ॥ ४५
तेनोत्सृष्टा चक्रयुक्ता शतघ्नी
समं सर्वांश्चतुरोऽश्वाञ्जघान ।
ते जानुभिर्जगतीमन्वपद्य-
न्गतासवो निर्दशनाक्षिजिह्वाः ॥ ४६
ततो हताश्वादवरुह्य याना-
दन्तर्मनाः कुरुषु प्राद्रवत्सु ।
दिव्ये चास्त्रे मायया वध्यमाने
नैवामुह्यच्चिन्तयन्प्राप्तकालम् ॥ ४७
ततोऽब्रुवन्कुरवः सर्व एव
कर्णं दृष्ट्वा घोररूपां च मायाम् ।
शक्त्या रक्षो जहि कर्णाद्य तूर्णं
नश्यन्त्येते कुरवो धार्तराष्ट्राः ॥ ४८
करिष्यतः किंच नो भीमपार्थौ
तपन्तमेनं जहि पापं निशीथे ।
यो नः संग्रामाद्धोररूपाद्विमुच्ये-
त्स नः पार्थान्सबलान्योधयेत ॥ ४९
तस्मादेनं राक्षसं घोररूपं
शक्त्या जहि त्वं दत्तया वासवेन ।

उरसा हार्दबलेन ॥ ४३ ॥

अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

मा कौरवाः सर्व एवेन्द्रकल्पा
रात्रियुद्धे कर्णं नेशुः सयोधाः ॥ ५०
स वध्यमानो रक्षसा वै निशीथे
दृष्ट्वा राजंस्त्रास्यमानं बलं च।
महच्छ्रुत्वा निनदं कौरवाणां
मतिं दध्रे शक्तिमोक्षाय कर्णः ॥ ५१
स वै क्रुद्धः सिंह इवात्यमर्षी
नामर्षयन्प्रतिघातं रणेऽसौ।
शक्तिं श्रेष्ठां वैजयन्तीमसह्यां
समाददे तस्य वधं चिकीर्षन् ॥ ५२
याऽसौ राजन्निहिता वर्षपूगा-
न्वधायाजौ सत्कृता फल्गुनस्य।
यां वै प्रादात्सूतपुत्राय शक्रः
शक्तिं श्रेष्ठां कुण्डलाभ्यां निमाय ॥ ५३
तां वै शक्तिं लेलिहानां प्रदीप्तां
पाशैर्युक्तामन्तकस्येव जिह्वाम्।
मृत्योः स्वसारं ज्वलितामिवोल्कां
वैकर्तनः प्राहिणोद्राक्षसाय ॥ ५४
तामुत्तमां परकायावहर्त्रीं
दृष्ट्वा शक्तिं बाहुसंस्थां ज्वलन्तीम्।
भीतं रक्षो विप्रदुद्राव राजन्
कृत्वाऽऽत्मानं विन्ध्यतुल्यप्रमाणम् ॥ ५५
दृष्ट्वा शक्तिं कर्णबाह्वन्तरस्थां
नेदुर्भूतान्यन्तरिक्षे नरेन्द्र।
ववुर्वातास्तुमुलाश्चापि राज-
न्सनिर्घाता चाशनिर्गां जगाम ॥ ५६
सा तां मायां भस्म कृत्वा ज्वलन्ती
भित्त्वा गाढं हृदयं राक्षसस्य।
ऊर्ध्वं ययौ दीप्यमाना निशायां
नक्षत्राणामन्तराण्याविवेश ॥ ५७
स निर्भिन्नो विविधैरस्त्रपूगै-
र्दिव्यैर्नागैर्मानुषै राक्षसैश्च।
नदन्नादान्विविधान्भैरवांश्च
प्राणानिष्टांस्त्याजितः शक्रशक्त्या ॥ ५८
इदं चान्यच्चित्रमाश्चर्यरूपं
चकारासौ कर्म शत्रुक्षयाय।
तस्मिन्काले शक्तिनिर्भिन्नमर्मा
बभौ राजञ्शैलमेघप्रकाशः ॥ ५९
ततोऽन्तरिक्षादपतद्गतासुः
स राक्षसेन्द्रो भुवि भिन्नदेहः।
अवाक्शिराः स्तब्धगात्रो विजिह्वो
घटोत्कचो महदास्थाय रूपम् ॥ ६०
स तद्रूपं भैरवं भीमकर्मा
भीमं कृत्वा भैमसेनिः पपात।
हतोऽप्येवं तव सैन्यैकदेश-
मपोथयत्स्वेन देहेन राजन् ॥ ६१
पतद्रक्षः स्वेन कायेन तूर्ण-
मतिप्रमाणेन विवर्धता च।
प्रियं कुर्वन्पाण्डवानां गतासु-
रक्षौहिणीं तव तूर्णं जघान ॥ ६२
ततो मिश्राः प्राणदन्सिंहनादै-
र्भेर्यः शङ्खा मुरजाश्चानकाश्च।
दग्धां मायां निहतं राक्षसं च
दृष्ट्वा हृष्टाः प्राणदन्कौरवेयाः ॥ ६३
ततः कर्णः कुरुभिः पूज्यमानो
यथा शक्रो वृत्रवधे मरुद्भिः।
अन्वारूढस्तव पुत्रस्य यानं
हृष्टश्चापि प्राविशत्तत्स्वसैन्यम् ॥ ६४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

---

## एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

घटोत्कचनिधनात्सर्वेषु शोचत्सु हर्षादात्मानं परिष्वजमानं कृष्णं प्रत्यर्जुनेन हर्षहेतुप्रश्नः ॥ १ ॥ कृष्णेन तदभिधानपूर्वकं कर्णप्रभावप्रशंसनम् ॥ २ ॥

'धृतराष्ट्र उवाच।
तस्मिन्हते महामाये महातेजसि राक्षसे।
अमर्षिताः पाण्डवेयाः किमकुर्वन्महारणे ॥ १
मर्दिताश्च भृशं युद्धे किमकुर्वन्त सञ्जय ॥ २

ये च तेऽभ्यद्रवन्द्रोणं व्यूढानीकं प्रहारिणः ।
सृञ्जयाः सह पाञ्चालैस्तेऽकुर्वन्किं महारणे ॥ ३
सौमदत्तिवधाद्द्रोणमायत्तं सैन्धवस्य च ।
अमर्षाज्जीवितं त्यक्त्वा गाहमानं वरूथिनीम् ॥ ४
जृम्भमाणमिव व्याघ्रं व्यात्ताननमिवान्तकम् ।
कथं प्रत्युद्ययुर्द्रोणमजय्यं कुरुसृञ्जयाः ॥ ५
आचार्यं ये च रक्षन्ति दुर्योधनपुरोगमाः ।
द्रौणिकर्णकृपास्तात ते ह्यकुर्वन्किमाहवे
भारद्वाजं जिघांसन्तौ सव्यसाचिवृकोदरौ ।
आर्च्छतां मामकान्युद्धे कथं सञ्जय शंस मे ॥ ७
सिन्धुराजवधेनेमे घटोत्कचवधेन ते ।
अमर्षिताश्च संक्रुद्धा रणं चक्रुः कथं युधि ॥' ८
सञ्जय उवाच ।
हैडिम्बिं निहतं दृष्ट्वा विशीर्णमिव पर्वतम् ।
बभूवुः पाण्डवाः सर्वे शोकबाष्पाकुलेक्षणाः ॥ ९
वासुदेवस्तु हर्षेण महताऽभिपरिप्लुतः ।
ननाद सिंहवन्नादं व्यथयन्निव भारत ॥ १०
हतं घटोत्कचं ज्ञात्वा वासुदेवः प्रतापवान् ।
विनद्य च महानादं पर्यष्वजत फल्गुनम् ॥ ११
स विनद्य महानादमभीशून्संनियम्य च ।
ननर्त हर्षसंवीतो वातोद्धूत इव द्रुमः ॥ १२
ततः परिष्वज्य पुनः पार्थमास्फोट्य चासकृत् ।
रथोपस्थगतो धीमान्प्राणदत्पुनरच्युतः ॥ १३
प्रहृष्टमनसं ज्ञात्वा वासुदेवं महाबलः ।
अर्जुनोऽथाब्रवीद्राजन्नातिहृष्टमना इव ॥ १४
अतिहर्षोऽयमस्थाने तवाद्य मधुसूदन ।
शोकस्थाने तु संप्राप्ते हैडिम्बस्य वधेन तु ॥ १५
विमुखानीह सैन्यानि हतं दृष्ट्वा घटोत्कचम् ।
वयं च भृशमुद्विग्ना हैडिम्बेस्तु निपातनात् ॥ १६
नैतत्कारणमल्पं हि भविष्यति जनार्दन
तदद्य शंस मे पृष्टः सत्यं सत्यवतां वर ॥ १७
यद्येतन्न रहस्यं ते वक्तुमर्हस्यरिंदम ।
धैर्यस्य विकृतिं ब्रूहि त्वमद्य मधुसूदन ॥ १८
समुद्रस्येव संशोषं मेरोरिव विसर्पणम् ।
तथैतदद्य मन्येऽहं तव कर्म जनार्दन ॥ १९
वासुदेव उवाच ।
अतिहर्षमिमं प्राप्तं शृणु मे त्वं धनंजय ।
अतीव मनसः सद्यः प्रसादकरमुत्तमम् ॥ २०
शक्तिं घटोत्कचेनेमां व्यंसयित्वा महाद्युते ।
कर्णं निहतमेवाजौ विद्धि सद्यो धनञ्जय ॥ २१
शक्तिहस्तं पुनः कर्णं को लोकेऽस्ति पुमानिह ।
य एनमभितस्तिष्ठेत्कार्तिकेयमिवाहवे ॥ २२
दिष्ट्याऽपनीतकवचो दिष्ट्याऽपहृतकुण्डलः ।
दिष्ट्या सा व्यंसिता शक्तिरमोघाऽस्य घटोत्कचे ॥
यदि हि स्यात्सकवचस्तथैव स्यात्सकुण्डलः ।
सामरानपि लोकांस्त्रीनेकः कर्णो जयेद्रणे ॥ २४
वासवो वा कुबेरो वा वरुणो वा जलेश्वरः ।
यमो वा नोत्सहेत्कर्णं रणे प्रतिसमासितुम् ॥ २५
गाण्डीवमुद्यम्य भवांश्चक्रं चाहं सुदर्शनम् ।
न शक्तौ स्वो रणे जेतुं तथायुक्तं नरर्षभम् ॥ २६
त्वद्धितार्थं तु शक्रेण मायापहृतकुण्डलः ।
विहीनकवचश्चायं कृतः परपुरंजयः ॥ २७
उत्कृत्य कवचं यस्मात्कुण्डले विमले च ते ।
प्रादाच्छक्राय वै कर्णस्तस्माद्वैकर्तनः स्मृतः ॥ २८
आशीविष इव क्रुद्धः स्तम्भितो मन्त्रतेजसा ।
तथाऽद्य भाति कर्णो मे शान्तज्वाल इवानलः २९
यदाप्रभृति कर्णाय शक्तिर्दत्ता महात्मना ।
वासवेन महाबाहो क्षिप्ता याऽसौ घटोत्कचे ॥ ३०
कुण्डलाभ्यां निमायाथ दिव्येन कवचेन च ।
तां प्राप्यामन्यत वृषा सततं त्वां हतं रणे ॥ ३१
एवं गतोऽपि शक्योऽयं हतुं नान्येन केनचित्
ऋते त्वां पुरुषव्याघ्र शपे सत्येन चानघ ॥ ३२
ब्रह्मण्यः सत्यवादी च तपस्वी नियतव्रतः ।
रिपुष्वपि दयावांश्च तस्मात्कर्णो वृषा स्मृतः ॥ ३३
युद्धशौण्डो महाबाहुर्नित्योद्यतशरासनः ।
केसरीव वने नर्दन्मत्तमातङ्गयूथपान् ।

धैर्यस्य वैकृतं इति झ. पाठे अस्मत्पक्षक्षयेण तव हर्षोऽस्मद्धैर्यविनाशक इत्यर्थः ॥ १८ ॥ कुण्डलाभ्यां निमाय विनिमयं कृत्वा ॥ ३१ ॥ वृषा धर्मप्रधानः ॥ ३३ ॥

विमर्दन्रथशार्दूलान्राजते रणमूर्धनि ॥ ३४
मध्यंगत इवादित्यो यो न शक्यो निरीक्षितुम् ।
त्वदीयैः पुरुषव्याघ्र योधमुख्यैर्महात्मभिः ॥ ३५
शरजालसहस्रांशुः शरदीव दिवाकरः ॥ ३६
तपान्ते जलदो यद्वच्छरधाराः क्षरन्मुहुः ।
दिव्यास्त्रजलदः कर्णः पर्जन्य इव वृष्टिमान् ॥ ३७
त्रिदशैरपि चास्मद्भिः शरवर्षं समन्ततः ।
अशक्यस्तदयं जेतुं स्रवद्भिर्मांसशोणितम् ॥ ३८
कवचेन विहीनश्च कुण्डलाभ्यां च पाण्डव ।
सोऽद्य मानुषतां प्राप्तो विमुक्तः शक्रदत्तया ॥ ३९
एको हि योगोऽस्य भवेद्वधाय
च्छिद्रे ह्येनं स्वप्रमत्तः प्रमत्तम् ।
कृच्छ्रं प्राप्तं रथचक्रे विमग्ने
हन्याः पूर्वं त्वं तु संज्ञां विचार्य ॥ ४०
न ह्युद्यतास्त्रं युधि हन्यादजय्य-
मप्येकवीरो बलभित्सवज्रः ॥ ४१
जरासन्धश्चेदिराजो महात्मा
महाबाहुश्चैकलव्यो निषादः ।
एकैकशो निहताः सर्व एते
योगैस्तैस्तैस्त्वद्धितार्थं मयैव ॥ ४२
अथापरे निहता राक्षसेन्द्रा
हिडिम्बकिर्मीरबकप्रधानाः ।
अलायुधः परचक्रावमर्दी
घटोत्कचश्चोग्रकर्मा तरस्वी ॥ ४३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

## द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

श्रीकृष्णेनार्जुनंप्रति जरासन्धादिपराक्रमकथनपूर्वकं तेषां दुर्जयतया पूर्वमेव स्वेनोपायैर्हननकथनम् ॥ १ ॥

अर्जुन उवाच ।
कथमस्मद्धितार्थं ते कैश्च योगैर्जनार्दन ।
जरासन्धप्रभृतयो घातिताः पृथिवीश्वराः ॥ १
वासुदेव उवाच ।
जरासन्धश्चेदिराजो नैषादिश्च महाबलः ।
यदि स्युर्न हताः पूर्वमिदानीं स्युर्भयंकराः ॥ २
दुर्योधनस्तानवश्यं वृणुयाद्रथसत्तमान् ।
तेऽस्मासु नित्यविद्विष्टाः संश्रयेयुश्च कौरवान् ॥ ३
ते हि वीरा महेष्वासाः कृतास्त्रा दृढयोधिनः ।
धार्तराष्ट्रचमूं कृत्स्नां रक्षेयुरमरा इव ॥ ४
सूतपुत्रो जरासन्धश्चेदिराजो निषादजः ।
सुयोधनं समाश्रित्य तपेरन्पृथिवीमिमाम् ॥ ५
योगैरभिहता यैस्ते तन्मे शृणु धनञ्जय ।
अजय्या हि विना योगैर्मृधे ते दैवतैरपि ॥ ६
एकैको हि पृथक् तेषां समस्तां रिपुवाहिनीम् ।
योधयेत्समरे पार्थ लोकपालाभिरक्षिताम् ॥ ७
जरासन्धो हि रुषितो रौहिणेयप्रधर्षितः ।
अस्मद्वधार्थं चिक्षेप गदां वै सर्वघातिनीम् ॥ ८
सीमन्तमिव कुर्वाणा नभसः पावकप्रभा ।
अदृश्यतापतन्ती सा शक्रमुक्ता यथाऽशनिः ॥ ९
तामापतन्तीं दृष्ट्वैव गदां रोहिणिनन्दनः ।
प्रतिघातार्थमस्त्रं वै स्थूणाकर्णमवासृजत् ॥ १०
अस्त्रवेगप्रतिहता सा गदा प्रापतद्भुवि ।
दारयन्ती धरां देवीं कम्पयन्तीव पर्वतान् ॥ ११
तत्र सा राक्षसी घोरा जरानाम्नी सुविक्रमा ।
संदधे सा हि संजातं जरासन्धमरिंदमम् ॥ १२
द्वाभ्यां जातो हि मातृभ्यामर्धदेहः पृथक्पृथक् ।
जरया संधितो यस्माज्जरासन्धस्ततोऽभवत् ॥ १३
सा तु भूमिं गता पार्थ हता ससुतबान्धवा ।
गदया तेन चास्त्रेण स्थूणाकर्णेन राक्षसी ॥ १४
विनाभूतः स गदया जरासन्धो महामृधे ।
निहतो भीमसेनेन पश्यतस्ते धनञ्जय ॥ १५

पर्जन्यइव वृष्टिमान् । नेता नेतृभिरस्मद्भिः शरवर्षाणि वर्षताम् । सोऽद्य मानुषतामित्यादि क. ट. ड. पाठः ॥ ३७ ॥

एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥
योगैरुपायैः ॥ १ ॥ रौक्मिणेयप्रधर्षितः इति क. ड. पाठः ॥ ८ ॥

यदि हि स्याद्गदापाणिर्जरासन्धः प्रतापवान् ।
सेन्द्रा देवा न तं हन्तुं रणे शक्ता नरोत्तम ॥१६
त्वद्धितार्थं च नैषादिरङ्गुष्ठेन वियोजितः ।
द्रोणेनाचार्यकं कृत्वा छद्मना सत्यविक्रमः ॥ १७
स तु बद्धाङ्गुलित्राणो नैषादिर्दृढविक्रमः ।
अतिमानी वनचरो बभौ राम इवापरः ॥ १८
एकलव्यं हि साङ्गुष्ठमशक्ता देवदानवाः ।
सराक्षसोरगाः पार्थ विजेतुं युधि कर्हिचित् ॥१९
किमु मानुषमात्रेण शक्यः स्यात्प्रतिवीक्षितुम् ।
दृढमुष्टिः कृती नित्यमस्यमानो दिवानिशम् ॥२०
त्वद्धितार्थं तु स मया हतः संग्राममूर्धनि ॥२१
चेदिराजश्च विक्रान्तः प्रत्यक्षं निहतस्तव ।
स चाप्यशक्यः संग्रामे जेतुं सर्वसुरासुरैः ॥ २२
वधार्थं तस्य जातोऽहमन्येषां च सुरद्विषाम् ।
त्वत्सहायो नरव्याघ्र लोकानां हितकाम्यया २३
हिडिम्बबककिर्मीरा भीमसेनेन पातिताः ।
रावणेन समप्राणा ब्रह्मयज्ञविनाशनाः ॥ २४
हतस्तथैव मायावी हैडिम्बेनाप्यलायुधः ।
हैडिम्बश्चाप्युपायेन शक्त्या कर्णेन घातितः ॥२५
यदि ह्येनं नाहनिष्यत्कर्णः शक्त्या महामृधे ।
मया वध्योऽभविष्यत्स भैमसेनिर्घटोत्कचः
मया न निहतः पूर्वमेष युष्मत्प्रियेप्सया ॥ २६
एष हि ब्राह्मणद्वेषी यज्ञद्वेषी च राक्षसः ।
धर्मस्य लोप्ता पापात्मा तस्मादेष निपातितः ।
व्यंसिता चाप्युपायेन शक्रदत्ता मयाऽनघ ॥२७
ये हि धर्मस्य लोप्तारो वध्यास्ते मम पाण्डव ।
धर्मसंस्थापनार्थं हि प्रतिज्ञैषा ममाव्यया ॥ २८
ब्रह्म सत्यं दमः शौचं धर्मो ह्रीः श्रीर्धृतिः क्षमा ।
यत्र तत्र रमे नित्यमहं सत्येन ते शपे ॥ २९
न विषादस्त्वया कार्यः कर्णं वैकर्तनं प्रति ।
उपदेक्ष्याम्युपायं ते येन तं प्रसहिष्यसि ॥ ३०
सुयोधनं चापि रणे हनिष्यति वृकोदरः ।
तस्यापि च वधोपायं वक्ष्यामि तव पाण्डव ॥३१
वर्धते तुमुलस्त्वेष शब्दः परचमूं प्रति ।
विद्रवन्ति च सैन्यानि त्वदीयानि दिशो दश ॥३२
लब्धलक्ष्या हि कौरव्या विधमन्ति चमूं तव ।
दहत्येष च वः सैन्यं द्रोणः प्रहरतां वरः ॥ ३३

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

## त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

धृतराष्ट्रेण संजयंप्रति कर्णेन अर्जुने शक्तेरमोक्षणकारणप्रश्ने संजयेन सात्यकिंप्रति कृष्णोक्ततदुत्तरकथनम् ॥ १

धृतराष्ट्र उवाच ।
एकवीरवधे मोघा शक्तिः सूतात्मजे यदा ।
कस्मात्सर्वान्समुत्सृज्य स तां पार्थे न मुक्तवान् ॥१
तस्मिन्हते हता हि स्युः सर्वे पाण्डवसृञ्जयाः ।
एकवीरवधे कस्माद्युद्धे न जयमादधे ॥ २
आहूतो न निवर्तेयमिति तस्य महाव्रतम् ।
स्वयं मार्गयितव्यः स सूतपुत्रेण फल्गुनः ॥ ३
ततो द्वैरथमानीय फल्गुनं शक्रदत्तया ।
जघान न वृषा कस्मात्तन्ममाचक्ष्व सञ्जय ॥ ४
नूनं बुद्धिविहीनश्चाप्यसहायश्च मे सुतः ।
शत्रुभिर्व्यंसितः पापः कथं नु स जयेदरीन् ॥५
या ह्यस्य परमा शक्तिर्जयस्य च परायणम् ।
सा शक्तिर्वासुदेवेन व्यंसिता च घटोत्कचे ॥ ६
कुणेर्यथा हस्तगतं ह्रियेद्बिल्वं बलीयसा ।
तथा शक्तिरमोघा सा मोघीभूता घटोत्कचे ॥७
यथा वराहस्य शुनश्च युध्यतो-
स्तयोरभावे श्वपचस्य लाभः ।

॥ ८ ॥ व्यंसिता व्यर्थीकृता शक्तिरिति शेषः ॥ २७ ॥ द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

ह्रियेत् ह्रियेत ॥ ७ ॥

मन्ये विद्वन्वासुदेवस्य तद्व-
द्युद्धे लाभः कर्णहैडिम्बयोर्वै ॥ ८
घटोत्कचो यदि हन्याद्धि कर्णं
परो लाभः स भवेत्पाण्डवानाम् ।
वैकर्तनो वा यदि तं निहन्या-
त्तथापि कृत्यं शक्तिनाशात्कृतं स्यात् ॥ ९
इति प्राज्ञः प्रज्ञयैतद्विचिन्त्य
घटोत्कचं सूतपुत्रेण युद्धे ।
अघातयद्वासुदेवो नृसिंहः
प्रियं कुर्वन्पाण्डवानां हितं च ॥ १०

सञ्जय उवाच ।

एतच्चिकीर्षितं ज्ञात्वा कर्णे मधुनिहा नृप ।
नियोजयामास तदा द्वैरथे राक्षसेश्वरम् ॥ ११
घटोत्कचं महावीर्यं महाबुद्धिर्जनार्दनः ।
अमोघाया विघातार्थं राजन्दुर्मन्त्रिते तव ॥ १२
तदैव कृतकार्या हि वयं स्याम कुरूद्वह ।
न रक्षेद्यदि कृष्णस्तं पार्थं कर्णान्महारथात् ॥ १३
साश्वध्वजरथः सङ्ख्ये धृतराष्ट्र पतेद्भुवि ।
विना जनार्दनं पार्थो योगानामीश्वरं प्रभुम् ॥ १४
तैस्तैरुपायैर्बहुभी रक्ष्यमाणः स पार्थिव ।
जयत्यभिमुखः शत्रून्पार्थः कृष्णेन पालितः ॥ १५
सविशेषं त्वमेयात्मा कृष्णो रक्षेन्न फल्गुनम् ।
हन्यात्क्षिप्रं हि कौन्तेयं शक्तिर्वृक्षमिवाशनिः ॥ १६

धृतराष्ट्र उवाच ।

विरोधी च कुमन्त्री च प्राज्ञमानी ममात्मजः ।
यस्यैष समतिक्रान्तो वधोपायो जयं प्रति ॥ १७
स वा कर्णो महाबुद्धिः सर्वशस्त्रभृतां वरः ।
न मुक्तवान्कथं सूत याममोघां धनञ्जये ॥ १८
तवापि समतिक्रान्तमेतद्गावल्गणे कथम् ।
एतमर्थं महाबुद्धे यत्त्वया नावबोधितः ॥ १९

सञ्जय उवाच ।

दुर्योधनस्य शकुनेर्मम दुःशासनस्य च ।
रात्रौ रात्रौ भवत्येषा नित्यमेव विकत्थना ॥ २०
श्वः सर्वसैन्यानुत्सृज्य जहि कर्णं धनञ्जयम् ।
प्रेष्यवत्पाण्डुपाञ्चालानुपभोक्ष्यामहे ततः ॥ २१
अथवा निहते पार्थे पाण्डवान्यतमं ततः ।
स्थापयेद्यदि वार्ष्णेयस्तस्मात्कृष्णो हि हन्यताम् २२
कृष्णो हि मूलं पाण्डूनां पार्थः स्कन्ध इवोद्गतः ।
शाखा इवेतरे पार्थाः पाञ्चालाः पत्रसंज्ञिताः ॥ २३
कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः ।
कृष्णः परायणं चैषां ज्योतिषामिव चन्द्रमाः ॥ २४
तस्मात्पर्णानि शाखाश्च स्कन्धं चोत्सृज्य सूतज ।
कृष्णं हि विद्धि पाण्डूनां मूलं सर्वत्र सर्वदा ॥ २५
हन्याद्यदि हि दाशार्हं कर्णो यादवनन्दनम् ।
कृत्स्ना वसुमती राजन्वशे तस्य न संशयः ॥ २६
यदि हि स निहतः शयीत भूमौ
यदुकुलपाण्डवनन्दनो महात्मा ।
ननु तव वसुधा नरेन्द्र सर्वा
सगिरिसमुद्रवना वशं व्रजेत ॥ २७
सा तु बुद्धिः कृताऽप्येवं जाग्रति त्रिदशेश्वरे ।
अप्रमेये हृषीकेशे युद्धकाले व्यमुह्यत ॥ २८
अर्जुनं चापि राधेयात्सदा रक्षति केशवः ।
न ह्येनमैच्छत्प्रमुखे सौतेः स्थापयितुं रणे ॥ २९
अन्यांश्चास्मै रथोदारानुपास्थापयदच्युतः ।
अमोघां तां कथं शक्तिं मोघां कुर्यामिति प्रभो ॥ ३०
यश्चैवं रक्षते पार्थं कर्णात्कृष्णो महामनाः ।
आत्मानं स कथं राजन्न रक्षेत्पुरुषोत्तमः ॥ ३१
परिचिन्त्य तु पश्यामि चक्रायुधमरिंदमम् ।
न सोऽस्ति त्रिषु लोकेषु यो जयेत जनार्दनम् ॥ ३२

सञ्जय उवाच ।

ततः कृष्णं महाबाहुं सात्यकिः सत्यविक्रमः ।
पप्रच्छ रथशार्दूलः कर्णं प्रति महारथः ॥ ३३
अयं च प्रत्ययः कर्णे शक्तिश्चामितविक्रमा ।
किमर्थं सूतपुत्रेण न मुक्ता फल्गुने तु सा ॥ ३४

वासुदेव उवाच ।

दुःशासनश्च कर्णश्च शकुनिश्च ससैन्धवः ।

एतत्प्रकृतशक्त्यार्जुनहननम् ॥ ११ ॥ सविशेषात्त्वमोघायाः कृष्णोऽरक्षत पाण्डवम् इति झ॰ पाठः । एष कृत्स्नः जयंप्रति अर्जुनस्येत्यर्थः ॥ १७ ॥

सततं मन्त्रयन्ति स्म दुर्योधनपुरोगमाः ॥ ३५
कर्णकर्ण महेष्वास रणेऽमितपराक्रम ।
नान्यस्य शक्तिरेषा ते मोक्तव्या जयतां वर ॥ ३६
ऋते महारथात्कर्ण कुन्तीपुत्राद्धनञ्जयात् ।
स हि तेषामतियशा देवानामिव वासवः ॥ ३७
तस्मिन्विनिहते पार्थे पाण्डवाः सृञ्जयैः सह ।
भविष्यन्ति गतात्मानः सुरा इव निरग्नयः ॥ ३८
तथेति च प्रतिज्ञातं कर्णेन शिनिपुङ्गव ।
हृदि नित्यं च कर्णस्य वधो गाण्डीवधन्वनः ॥ ३९
अहमेव तु राधेयं मोहयामि युधांवर ।
ततो नावासृजच्छक्तिं पाण्डवे श्वेतवाहने ॥ ४०
फल्गुनस्य हि सा मृत्युरिति चिन्तयतोऽनिशम् ।
न निद्रा न च मे हर्षो मनसोऽस्ति युधांवर ॥ ४१
घटोत्कचे व्यंसितां तु दृष्ट्वा तां शिनिपुङ्गव ।
मृत्योरास्यान्तरान्मुक्तं पश्याम्यद्य धनञ्जयम् ॥ ४२
न पिता न च मे माता न यूयं भ्रातरस्तथा ।
न च प्राणास्तथा रक्ष्या यथा बीभत्सुराहवे ॥ ४३
त्रैलोक्यराज्याद्यत्किंचिद्भवेदन्यत्सुदुर्लभम् ।
नेच्छेयं सात्वताहं तद्विना पार्थं धनञ्जयम् ॥ ४४
अतः प्रहर्षः सुमहान्युयुधानाद्य मेऽभवत् ।
मृतं प्रत्यागतमिव दृष्ट्वा पार्थं धनञ्जयम् ॥ ४५
अतश्च प्रहितो युद्धे मया कर्णाय राक्षसः ।
न ह्यन्यः समरे रात्रौ शक्तः कर्णं प्रबाधितुम् ॥ ४६
सञ्जय उवाच
इति सात्यकये प्राह तदा देवकिनन्दनः ।
धनञ्जयहिते युक्तस्तत्प्रिये सततं रतः ॥ ४७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

## चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

कर्णशक्तेर्घटोत्कचवधेन वैफल्याद्धृतराष्ट्रेण शोचनम् ॥ १ ॥ युधिष्ठिरेण कृष्णे घटोत्कचकृतोपकारनिवेदनपूर्वकं शोचनम् ॥ २ ॥ व्यासेन क्रोधात्कर्णजिघांसया गच्छन्तं युधिष्ठिरमेत्य समाश्वासनेन तं निवर्त्य पुनरन्तर्धानम् ॥ ३ ॥

धृतराष्ट्र उवाच ।
कर्णदुर्योधनादीनां शकुनेः सौबलस्य च ।
अपनीतं महत्तात तव चैव विशेषतः ॥ १
यदि जानीथ तां शक्तिमेकघ्नीं सततं रणे ।
अनिवार्यामसह्यां च देवैरपि सवासवैः ॥ २
सा किमर्थं तु कर्णेन प्रवृत्ते समरे पुरा ।
न देवकीसुते मुक्ता फल्गुने वाऽपि सञ्जय ॥ ३
सञ्जय उवाच ।
संग्रामाद्विनिवृत्तानां सर्वेषां नो विशांपते ।
रात्रौ कुरुकुलश्रेष्ठ मन्त्रोऽयं समजायत ॥ ४
प्रभातमात्रे श्वोभूते केशवायार्जुनाय वा ।
शक्तिरेषा हि मोक्तव्या कर्णकर्णेति नित्यशः ॥ ५
ततः प्रभातसमये राजन्कर्णस्य दैवतैः ।
अन्येषां चैव योधानां सा बुद्धिर्नाश्यते पुनः ॥ ६
दैवमेव परं मन्ये यत्कर्णो हस्तसंस्थया ।
न जघान रणे पार्थं कृष्णं वा देवकीसुतम् ॥ ७
तस्य हस्तस्थिता शक्तिः कालरात्रिरिवोद्यता ।
दैवोपहतबुद्धित्वान्न तां कर्णो विमुक्तवान् ॥ ८
कृष्णे वा देवकीपुत्रे मोहितो देवमायया ।
पार्थे वा शक्रकल्पे वै वधार्थं वासवीं प्रभो ॥ ९
धृतराष्ट्र उवाच ।
दैवेनोपहता यूयं स्वबुद्ध्या केशवस्य च ।
गता हि वासवी हत्वा तृणभूतं घटोत्कचम् ॥ १०
कर्णश्च मम पुत्राश्च सर्वे चान्ये च पार्थिवाः ।
तेन वै दुष्प्रणीतेन गता वैवस्वतक्षयम् ॥ ११
भूय एव तु मे शंस यथा युद्धमवर्तत ।

निरग्नयोऽग्निंविना मुखहीना इवेत्यर्थः ॥ ३८ ॥ हिते आमुष्मिके श्रेयसि । प्रिये ऐहिके कल्याणे ॥ ४७ ॥ त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

महत् जयालम्बनममोघशक्तिरूपमिति शेषः । अपनीतं नाशितम् । महदपनीतं अन्याय इति वा ॥ १ ॥ दुष्प्रणीतेन दुर्नयेन ॥ ११ ॥

कुरूणां पाण्डवानां च हैडिम्बौ निहते तदा ॥१२
ये च तेऽभ्यद्रवन्द्रोणं व्यूढानीकाः प्रहारिणः ।
सृञ्जयाः सह पाञ्चालैस्तेऽप्यकुर्वन्कथं रणम् ॥ १३
सौमदत्तेर्वधाद्द्रोणमायान्तं सैन्धवस्य च ।
अमर्षाज्जीवितं त्यक्त्वा गाहमानं वरूथिनीम् ॥१४
जृम्भमाणमिव व्याघ्रं व्यात्ताननमिवान्तकम् ।
कथं प्रत्युद्ययुर्द्रोणमस्यन्तं पाण्डुसृञ्जयाः ॥ १५
आचार्यं ये च तेऽरक्षन्दुर्योधनपुरोगमाः ।
द्रौणिकर्णकृपास्तात ते वाऽकुर्वन्किमाहवे ॥ १६
भारद्वाजं जिघांसन्तौ सव्यसाचिवृकोदरौ ।
समार्च्छन्मामका युद्धे कथं सञ्जय शंस मे ॥ १७
सिन्धुराजवधेनेमे घटोत्कचवधेन ते ।
अमर्षिताः सुसंक्रुद्धा रणं चक्रुः कथं निशि ॥ १८
सञ्जय उवाच ।
हते घटोत्कचे राजन्कर्णेन निशि राक्षसे ।
प्रणदत्सु च हृष्टेषु तावकेषु युयुत्सुषु ॥ १९
आपतत्सु च वेगेन वध्यमाने बलेऽपि च ।
विगाढायां रजन्यां च राजा दैन्यं परं गतः ॥ २०
अब्रवीच्च महाबाहुर्भीमसेनमिदं वचः ।
आवारय महाबाहो धार्तराष्ट्रस्य वाहिनीम् ॥ २१
हैडिम्बेश्चैव घातेन मोहो मामाविशन्महान् ।
एवं भीमं समादिश्य स्वरथे समुपाविशत् ॥ २२
अश्रुपूर्णमुखो राजा निःश्वसंश्च पुनःपुनः ।
कश्मलं प्राविशद्घोरं दृष्ट्वा कर्णस्य विक्रमम् ॥ २३
तं तथा व्यथितं दृष्ट्वा कृष्णो वचनमब्रवीत् ॥२४
मा व्यथां कुरु कौन्तेय नैतत्त्वय्युपपद्यते ।
वैक्लव्यं भरतश्रेष्ठ यथा प्राकृतपूरुषे ॥ २५
उत्तिष्ठ राजन्युध्यस्व वह गुर्वीं धुरं विभो ।
त्वयि वैक्लव्यमापन्ने संशयो विजये भवेत् ॥ २६
श्रुत्वा कृष्णस्य वचनं धर्मराजो युधिष्ठिरः ।
विमृज्य नेत्रे पाणिभ्यां कृष्णं वचनमब्रवीत् ॥ २७
विदिता मे महाबाहो धर्माणां परमा गतिः ।
ब्रह्महत्याफलं तस्य यः कृतं नावबुध्यते ॥ २८
अस्माकं हि वनस्थानां हैडिम्बेन महात्मना ।
बालेनापि सता तेन कृतं साह्यं जनार्दन ॥ २९
अस्त्रहेतोर्गतं ज्ञात्वा पाण्डवं श्वेतवाहनम् ।
असौ कृष्ण महेष्वासः काम्यके मामुपस्थितः ॥३०
उषितश्च सहास्माभिर्यावन्नासीद्धनञ्जयः ।
गन्धमादनयात्रायां दुर्गेभ्यश्च स्म तारिताः ।
पाञ्चाली च परिश्रान्ता पृष्ठेनोढा महात्मना ॥३१
आरम्भांश्चैव युद्धानां यदेष कृतवान्प्रभो ।
मदर्थे दुष्करं कर्म कृतं तेन महाहवे ॥ ३२
स्वभावाद्या च मे प्रीतिः सहदेवे जनार्दन ।
सैव मे द्विगुणा प्रीती राक्षसेन्द्रे घटोत्कचे ॥३३
भक्तश्च मे महाबाहुः प्रियोऽस्याहं प्रियश्च मे ।
तेन विन्दामि वार्ष्णेय कश्मलं शोकतापितः ॥ ३४
पश्य सैन्यानि वार्ष्णेय द्राव्यमाणानि कौरवैः ।
द्रोणकर्णौ तु संयत्तौ पश्य युद्धे महारथौ ॥ ३५
निशीथे पाण्डवं सैन्यमाभ्यां माधव मर्दितम् ।
गजाभ्यामिव मत्ताभ्यां यथा नलवनं महत् ॥ ३६
अनादृत्य बलं बाह्वोर्भीमसेनस्य माधव ।
चित्रास्त्रतां च पार्थस्य विक्रमन्ते च कौरवाः ॥३७
एष द्रोणश्च कर्णश्च राजा चैव सुयोधनः ।
निहत्य राक्षसं युद्धे हृष्टा नर्दन्ति संयुगे ॥ ३८
कथं वाऽस्मासु जीवत्सु त्वयि चैव जनार्दन ।
हैडिम्बिः प्राप्तवान्मृत्युं सूतपुत्रेण संगतः ॥ ३९
कदर्थीकृत्य नः सर्वान्पश्यतः सव्यसाचिनः ।
निहतो राक्षसः कृष्ण भैमसेनिर्महाबलः ॥ ४०
यदाऽभिमन्युर्निहतो धार्तराष्ट्रैर्दुरात्मभिः ।
नासीत्तत्र रणे कृष्ण सव्यसाची महारथः ॥ ४१
निरुद्धाश्च वयं सर्वे सैन्धवेन दुरात्मना ।
निमित्तमभवद्द्रोणः सपुत्रस्तत्र कर्मणि ॥ ४२
उपदिष्टो वधोपायः कर्णस्य गुरुणा स्वयम् ।
व्यायच्छतश्च खड्गेन द्विधा खड्गं चकार ह ॥४३
व्यसने वर्तमानस्य कृतवर्मा नृशंसवत् ।
अश्वाञ्जघान सहसा तथोभौ पार्ष्णिसारथी ।
तथेतरे महेष्वासाः सौभद्रं युध्यपातयन् ॥ ४४
अल्पे च कारणे कृष्ण हतो गाण्डीवधन्वना ।

अभिन्नश्चैवेति ञ. पाठः ॥ ३२ ॥

चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

सैन्धवो यादवश्रेष्ठ तच्च नातिप्रियं मम ॥ ४५
यदि शत्रुवधो न्याय्यो भवेत्कर्तुं हि पाण्डवैः ।
कर्णद्रोणौ रणे पूर्वं हन्तव्याविति मे मतिः ॥४६
एतौ हि मूलं दुःखानामस्माकं पुरुषर्षभ ।
एतौ रणे समासाद्य समाश्वस्तः सुयोधनः ॥४७
यत्र वध्यो भवेद्द्रोणः सूतपुत्रश्च सानुगः ।
तत्रावधीन्महाबाहुः सैन्धवं दूरवासिनम् ॥ ४८
अवश्यं तु मया कार्यः सूतपुत्रस्य निग्रहः ।
ततो यास्याम्यहं वीर स्वयं कर्णजिघांसया ॥४९
भीमसेनो महाबाहुर्द्रोणानीकेन संगतः ॥ ५०
एवमुक्त्वा ययौ तूर्णं त्वरमाणो युधिष्ठिरः ।
स विष्फार्य महच्चापं शङ्खं प्रध्माप्य भैरवम् ॥ ५१
ततो रथसहस्रेण गजानां च शतैस्त्रिभिः ।
वाजिभिः पञ्चसाहस्रैः पाञ्चालैः सप्रभद्रकैः ।
वृतः शिखण्डी त्वरितो राजानं पृष्ठतोऽन्वयात् ५२
ततो भेरीः समाजघ्नुः पणवानकगोमुखान् ।
शङ्खशब्दरवांश्चैव पाणिशब्दांश्च दंशिताः ।
पाञ्चालाः पाण्डवाश्चैव युधिष्ठिरपुरोगमाः ॥ ५३
ततोऽब्रवीन्महाबाहुर्वासुदेवो धनञ्जयम् ॥ ५४
एष प्रयाति त्वरितः क्रोधाविष्टो युधिष्ठिरः ।
जिघांसुः सूतपुत्रस्य तस्योपेक्षा न युज्यते ॥ ५५
एवमुक्त्वा हृषीकेशः शीघ्रमश्वानचोदयत् ।
दूरं प्रयान्तं राजानमन्वगच्छज्जनार्दनः ॥ ५६
तं दृष्ट्वा सहसा यान्तं सूतपुत्रजिघांसया ।
शोकोपहतसंकल्पं दह्यमानमिवाग्निना ।
अभिगम्याब्रवीद्व्यासो धर्मपुत्रं युधिष्ठिरम् ॥ ५७
व्यास उवाच ।
कर्णमासाद्य संग्रामे दिष्ट्या जीवति फल्गुनः ॥५८
सव्यसाचिवधाकाङ्क्षी शक्तिं रक्षितवान्हि सः ।
न चागाद्द्वैरथं जिष्णुर्दिष्ट्या तेन महारणे ॥ ५९
सृजेतां स्पर्धिनावेतौ दिव्यान्यस्त्राणि सर्वशः ।
वध्यमानेषु चास्त्रेषु पीडितः सूतनन्दनः ॥ ६०
वासवीं समरे शक्तिं ध्रुवं मुञ्चेद्युधिष्ठिर ।
ततो भवेत्ते व्यसनं घोरं भरतसत्तम ॥ ६१
दिष्ट्या रक्षो हतं युद्धे सूतपुत्रेण मानद ।
वासवीं कारणं कृत्वा कालेनोपहतो ह्यसौ ॥ ६२
तवैव कारणाद्रक्षो निहतं तात संयुगे ।
मा क्रुधो भरतश्रेष्ठ मा च शोके मनः कृथाः ॥ ६३
प्राणिनामिह सर्वेषामेषा निष्ठा युधिष्ठिर ।
भ्रातृभिः सहितः सर्वैः पार्थिवैश्च महात्मभिः ॥६४
कौरवान्समरे राजन्प्रतियुध्यस्व भारत ।
पञ्चमे दिवसे तात पृथिवी ते भविष्यति ॥ ६५
नित्यं च पुरुषव्याघ्र धर्ममेवानुचिन्तय ।
आनृशंस्यं तपो दानं क्षमां सत्यं च पाण्डव ॥ ६३
सेवेथाः परमप्रीतो यतो धर्मस्ततो जयः
इत्युक्त्वा पाण्डवं व्यासस्तत्रैवान्तरधीयत ॥ ६७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

समाप्तं च घटोत्कचवधपर्व ।

# (अथ द्रोणवधपर्व ॥ ७ ॥)

## पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

निद्रोपद्रुतानां सैन्यानामर्जुनाज्ञया स्वापेन श्रान्तिमपनीय चन्द्रोदयानन्तरं युद्धारम्भः ॥ १ ॥

सञ्जय उवाच ।
व्यासेनैवमथोक्तस्तु धर्मराजो युधिष्ठिरः ।
स्वयं कर्णवधाद्वीरो निवृत्तो भरतर्षभ ॥
घटोत्कचे तु निहते सूतपुत्रेण तां निशाम् ।
दुःखामर्षवशं प्राप्तो धर्मराजो युधिष्ठिरः ॥
दृष्ट्वा भीमेन महतीं वार्यमाणां चमूं तव ।
धृष्टद्युम्नमुवाचेदं कुम्भयोनिं निवारय ॥ ३
त्वं हि द्रोणविनाशाय समुत्पन्नो हुताशनात् ।
सशरः कवची खड्गी धन्वी च परतापनः ।
अभिद्रव रणे हृष्टो मा च ते भीः कथंचन ॥ ४

जनमेजयः शिखण्डी च दौर्मुखिश्च यशोधरः ।
अभिद्रवन्तु संहृष्टाः कुम्भयोनिं समन्ततः ॥ ५
नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः ।
द्रुपदश्च विराटश्च पुत्रभ्रातृसमन्वितौ ॥ ६
सात्यकिः केकयाश्चैव पाण्डवश्च धनंजयः ।
अभिद्रवन्तु वेगेन कुम्भयोनिवधेप्सया । ७
तथैव रथिनः सर्वे हस्त्यश्वं यच्च किंचन ।
पदाताश्च रणे द्रोणं पातयन्तु महारथम् ॥ ८
तथाऽऽज्ञप्तास्तु ते सर्वे पाण्डवेन महात्मना ।
अभ्यद्रवन्त वेगेन कुम्भयोनिवधेप्सया ॥ ९
आगच्छतस्तान्सहसा सर्वोद्योगेन पाण्डवान् ।
प्रतिजग्राह समरे द्रोणः शस्त्रभृतां वरः ॥ १०
ततो दुर्योधनो राजा सर्वोद्योगेन पाण्डवान् ।
अभ्यद्रवत्सुसंक्रुद्ध इच्छन्द्रोणस्य जीवितम् ॥ ११
ततः प्रववृते युद्धं श्रान्तवाहनसैनिकम् ।
पाण्डवानां कुरूणां च गर्जतामितरेतरम् ॥ १२
निद्रान्धास्ते महाराज परिश्रान्ताश्च संयुगे ।
नाभ्यपद्यन्त समरे कांचिच्चेष्टां महारथाः ॥ १३
त्रियामा रजनी चैषा घोररूपा भयानका ।
सहस्रयामप्रतिमा बभूव प्राणहारिणी ॥ १४
वध्यतां च तथा तेषां क्षतानां च विशेषतः ।
घोरा रात्रिः समाजज्ञे निद्रान्धानां विशेषतः ॥ १५
सर्वे ह्यासन्निरुत्साहाः क्षत्रिया दीनचेतसः ।
तव चैव परेषां च गतास्त्रा विगतेषवः ॥ १६
ते तदा पारयन्तश्च भ्रमन्तश्च विशेषतः ।
स्वधर्ममनुपश्यन्तो न जहुः स्वामनीकिनीम् १७
अस्त्राण्यन्ये समुत्सृज्य निद्रान्धाः शेरते जनाः ।
रथेष्वन्ये गजेष्वन्ये हयेष्वन्ये च भारत ॥ १८
निद्रान्धा नो बुबुधिरे कांचिच्चेष्टां नराधिप ।
तानन्ये समरे योधाः प्रेषयन्ति यमक्षयम् ॥ १९
स्वप्नायमानांस्त्वपरे परानतिविचेतसः ।
आत्मानं समरे जघ्नुः स्वानेव च परानपि ॥ २०
नानावाचो विमुञ्चन्तो निद्रान्धास्ते महारणे ॥ २१
अस्माकं च महाराज परेभ्यो बहवो जनाः
योद्धव्यमिति तिष्ठन्तो निद्रासंरक्तलोचनाः ॥ २२
संसर्पन्तो रणे केचिन्निद्रान्धास्ते तथापरान् ।
जघ्नुः शूरा रणे शूरांस्तस्मिंस्तमसि दारुणे ॥ २३
हन्यमानमथात्मानं परैश्च बहवो जनाः ।
नाभ्यजानन्त समरे निद्रया मोहिता भृशम् ॥ २४
तेषामेतादृशीं चेष्टां विज्ञाय पुरुषर्षभः ।
उवाच वाक्यं बीभत्सुरुच्चैः सन्नादयन्दिशः ॥ २५
श्रान्ता भवन्तो निद्रान्धाः सर्व एव सवाहनाः ।
तमसा च वृते सैन्ये रजसा बहुलेन च ॥ २६
ते यूयं यदि मन्यध्वमुपारमत सैनिकाः ।
निमीलयत चात्रैव रणभूमौ मुहूर्तकम् ॥ २७
ततो विनिद्रा विश्रान्ताश्चन्द्रमस्युदिते पुनः ।
संसाधयिष्यथान्योन्यं स्वर्गाय कुरुपाण्डवाः ॥ २८
तद्वचः सर्वधर्मज्ञा धार्मिकस्य विशांपते ।
अरोचयन्त सैन्यानि तथा चान्योन्यमब्रुवन् ॥ २९
चुक्रुशुः कर्णकर्णेति तथा दुर्योधनेति च ।
उपारमत पाण्डूनां विरता हि वरूथिनी ॥ ३०
तथा विक्रोशमानस्य फल्गुनस्य ततस्ततः ।
उपारमत पाण्डूनां सेना तव च भारत ॥ ३१
तामस्य वाचं देवाश्च ऋषयश्च महात्मनः ।
सर्वसैन्यानि चाक्षुद्रां प्रहृष्टाः प्रत्यपूजयन् ॥ ३२
तत्संपूज्य वचोऽक्रूरं सर्वसैन्यानि भारत ।
मुहूर्तमस्वपन्राजञ्श्रान्तानि भरतर्षभ ॥ ३३
सा तु संप्राप्य विश्रामं ध्वजिनी तव भारत ।
सुखमाप्तवती वीरमर्जुनं प्रत्यपूजयत् ॥ ३४
त्वयि वेदास्तथास्त्राणि त्वयि बुद्धिपराक्रमौ ।
धर्मस्त्वयि महाबाहो दया भूतेषु चानघ ॥ ३५
यच्चाश्वस्तास्तवेच्छामः शर्म पार्थ तदस्तु ते ।
मनसश्च प्रियानर्थान्वीर क्षिप्रमवाप्नुहि ॥ ३६
इति ते तं नरव्याघ्रं प्रशंसन्तो महारथाः ।
निद्रया समवाक्षिप्तास्तूष्णीमासन्विशांपते ॥ ३७
'वीरा वारणकुम्भेषु सुषुपुर्युद्धकर्शिताः ।
रात्रौ रतिपरिश्रान्ताः कामिनीनां कुचेष्विव ॥' ३८
अश्वपृष्ठेषु चाप्यन्ये रथनीडेषु चापरे ।

संग्राममिति झ. पाठः ॥ २८ ॥

पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

गजस्कन्धगताश्चान्ये शेरते चापरे क्षितौ ॥ ३९
सायुधाः सगदाश्चैव सखड्गाः सपरश्वधाः ।
सप्रासकवचाश्चान्ये नराः सुप्ताः पृथक्पृथक् ॥ ४०
गजास्ते पन्नगाभोगैर्हस्तैर्भूरेणुगुण्ठितैः ।
निद्रान्धा वसुधां चक्रुर्घ्राणनिःश्वासशीतलाम् ४१
सुप्ताः शुशुभिरे तत्र निःश्वसन्तो महीतले ।
विकीर्णा गिरयो यद्वन्निःश्वसद्भिर्महोरगैः ॥ ४२
समां च विषमां चक्रुः खुराग्रैर्विक्षतां महीम् ।
हयाः काञ्चनयोक्त्रास्ते केसरालम्बिभिर्युगैः ।
सुषुपुस्तत्र राजेन्द्र युक्ता वाहेषु सर्वशः ॥ ४३
एवं हयाश्च नागाश्च योधाश्च भरतर्षभ ।
युद्धाद्विरम्य सुषुपुः श्रमेण महताऽन्विताः ॥ ४४
तत्तथा निद्रया भग्नं तद्भूमौ निःस्वनं बलम् ।
कुशलैः शिल्पिभिर्न्यस्तं पटे चित्रमिवाद्भुतम् ॥ ४५
ते क्षत्रियाः कुण्डलिनो युवानः
परस्परं सायकविक्षताङ्गाः ।
कुम्भेषु लीनाः सुषुपुर्गजानां
कुचेषु लग्ना इव कामिनीनाम् ॥ ४६
ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥ ४७
दशशताक्षककुब्दरिनिःसृतः
किरणकेसरभासुरपिञ्जरः ।
तिमिरवारणयूथविदारणः
समुदियादुदयाचलकेसरी ॥ ४८
हरवृषोत्तमगात्रसमद्युतिः
स्मरशरासनपूर्णसमप्रभः ।
नववधूस्मितचारुमनोहरः
प्रविसृतः कुमुदाकरबान्धवः ॥ ४९
ततो मुहूर्ताद्भगवान्पुरस्ताच्छशलक्षणः ।
अरुणं दर्शयामास ग्रसञ्ज्योतिःप्रभां प्रभुः ॥ ५०
अरुणस्य तु तस्यानु जातरूपसमप्रभम् ।
रश्मिजालं महच्चन्द्रो मन्दं मन्दमवासृजत् ॥ ५१
उत्सारयन्तः प्रभया तमस्ते चन्द्ररश्मयः ।
पर्यगच्छञ्छनैः सर्वा दिशः खं च क्षितिं तथा ॥ ५२
ततो मुहूर्ताद्भुवनं ज्योतिर्भूतमिवाभवत् ।
अप्रख्यमप्रकाशं च जगामाशु तमस्तथा ॥ ५३
प्रतिप्रकाशिते लोके दिवाभूते निशाकरे ।
विचेरुर्न विचेरुश्च राजन्नक्तंचरास्ततः ॥ ५४
बोध्यमानं तु तत्सैन्यं राजंश्चन्द्रस्य रश्मिभिः ।
बुबुधे शतपत्राणां वनं सूर्यांशुभिर्यथा ॥ ५५
यथा चन्द्रोदयोद्धूतः क्षुभितः सागरोऽभवत् ।
तथा चन्द्रोदयोद्धूतः क्षुभितश्च बलार्णवः ॥ ५६
ततः प्रववृते युद्धं पुनरेव विशांपते ।
लोके लोकविनाशाय परं लोकमभीप्सताम् ॥ ५७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि चतुर्दशरात्रियुद्धे पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

## षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

दुर्योधनोपालम्भकोपितेन द्रोणेन पार्थदुर्योधनप्रशंसाधिक्षेपपूर्वकं रणाय निःसरणम् ॥ १ ॥

सञ्जय उवाच ।
ततो दुर्योधनो द्रोणमभिगम्याब्रवीदिदम् ।
अमर्षवशमापन्नो जनयन्हर्षतेजसी ॥ १
दुर्योधन उवाच ।
न मर्षणीयाः संग्रामे विश्रमन्तः श्रमान्विताः ।
सपत्ना ग्लानमनसो लब्धलक्षा विशेषतः ॥ २
यत्तु मर्षितमस्माभिर्भवतः प्रियकाम्यया ।
त एते परिविश्रान्ताः पाण्डवा बलवत्तराः ॥ ३
सर्वथा परिहीनाः स्म तेजसा च बलेन च ।
भवता पाल्यमानास्ते विवर्धन्ते पुनःपुनः ॥ ४
दिव्यान्यस्त्राणि सर्वाणि ब्राह्मादीनि च यानि ह ।
तानि सर्वाणि तिष्ठन्ति भवत्येव विशेषतः ॥ ५
न पाण्डवेया न वयं नान्ये लोके धनुर्धराः ।
युध्यमानस्य ते तुल्याः सत्यमेतद्ब्रवीमि ते ॥ ६
ससुरासुरगन्धर्वानिमाँल्लोकान्द्विजोत्तम ।
सर्वास्त्रविद्भवान्हन्याद्दिव्यैरस्त्रैर्न संशयः ॥ ७

स भवान्मर्षयत्येनांस्तव तुल्यानवेत्य च ।
शिष्यत्वं वा पुरस्कृत्य मम वा मन्दभाग्यताम् ॥ ८
सञ्जय उवाच ।
एवमुद्धर्षितो द्रोणः कोपितश्च सुतेन ते ।
समन्युरब्रवीद्राजन्दुर्योधनमिदं वचः ॥
स्थविरः सन्परं शक्त्या घटे दुर्योधनाहवे ।
अतः परं मया कार्यं क्षुद्रं विजयगृद्धिना ।
अनस्त्रविदयं सर्वो हन्तव्योऽस्त्रविदा जनः ॥१०
यद्भवान्मन्यते चापि शुभं वा यदि वाऽशुभम् ।
तद्वै कर्ताऽस्मि कौरव्य वचनात्तव नान्यथा ॥ ११
निहत्य सर्वपाञ्चालान्युद्धे कृत्वा पराक्रमम् ।
विमोक्ष्ये कवचं राजन्सत्येनायुधमालभे ॥ १२
मन्यसे यच्च कौन्तेयमर्जुनं श्रान्तमाहवे ।
तस्य वीर्यं महाबाहो शृणु सत्येन कौरव ॥ १३
तं न देवा न गन्धर्वा न यक्षा न च राक्षसाः ।
उत्सहन्ते रणे जेतुं कुपितं सव्यसाचिनम् ॥ १४
खाण्डवे येन भगवान्प्रत्युद्यातः सुरेश्वरः ।
सायकैर्वारितश्चापि वर्षमाणो महात्मना ॥ १५
यक्षा नागास्तथा दैत्या ये चान्ये बलगर्विताः ।
निहताः पुरुषेन्द्रेण तच्चापि विदितं तव ॥ १६
गन्धर्वा घोषयात्रायां चित्रसेनादयो जिताः ।
यूयं तैर्ह्रियमाणाश्च मोक्षिता दृढधन्वना ॥ १७
निवातकवचाश्चापि देवानां शत्रवस्तथा ।
सुरैरवध्याः संग्रामे तेन वीरेण निर्जिताः ॥ १८
दानवानां सहस्राणि हिरण्यपुरवासिनाम् ।
विजिग्ये पुरुषव्याघ्रः स शक्यो मानुषैः कथम् १९
प्रत्यक्षं चैव ते सर्वं यथा बलमिदं तव ।
क्षपितं पाण्डुपुत्रेण चेष्टतां नो विशांपते ॥ २०
सञ्जय उवाच ।
तं तदाऽभिप्रशंसन्तमर्जुनं कुपितस्तदा ।
द्रोणं तव सुतो राजन्पुनरेवेदमब्रवीत् ॥ २१
अहं दुःशासनः कर्णः शकुनिर्मातुलश्च मे ।
हनिष्यामोऽर्जुनं सङ्ख्ये द्विधा कृत्वाऽद्य भारतीम् ।
'तिष्ठ स त्वं महाबाहो नित्यं शिष्यः प्रियस्तव ।।'२२
तस्य तद्वचनं श्रुत्वा भारद्वाजो हसन्निव ।
अन्ववर्तत राजानं स्वस्ति तेऽस्त्विति चाब्रवीत् २३
को हि गाण्डीवधन्वानं ज्वलन्तमिव तेजसा ।
अक्षयं क्षपयेत्कश्चित्क्षत्रियः क्षत्रियर्षभम् ॥ २४
तं न वित्तपतिर्नेन्द्रो न यमो न जलेश्वरः ।
नासुरोरगरक्षांसि क्षपयेयुः सहायुधम् ॥ २५
मूढास्त्वेतानि भाषन्ते यानीमान्यात्थ भारत ।
युद्धे ह्यर्जुनमासाद्य स्वस्तिमान्को व्रजेद्गृहान् ॥ २६
त्वं तु सर्वाभिशङ्कित्वान्निष्ठुरः पापनिश्चयः ।
श्रेयसस्त्वद्धिते युक्तांस्तत्तद्वक्तुमिहेच्छसि ॥ २७
गच्छ त्वमपि कौन्तेयमात्मार्थे जहि माचिरम् ।
त्वमप्याशंससे योद्धुं कुलजः क्षत्रियो ह्यसि ॥ २८
इमान्किं क्षत्रियान्सर्वान्घातयिष्यस्यनागसः ।
त्वमस्य मूलं वैरस्य तस्मादासादयार्जुनम् ॥ २९
एष ते मातुलः प्राज्ञः क्षत्रधर्ममनुव्रतः ।
दुर्द्यूतदेवी गान्धारे प्रयात्वर्जुनमाहवे ॥ ३०
एषोऽक्षकुशलो जिह्मो द्यूतकृत्कितवः शठः ।
देविता निकृतिप्रज्ञो युधि जेष्यति पाण्डवान् ॥३१
त्वया कथितमत्यर्थं कर्णेन सह हृष्टवत् ।
असकृच्छून्यवन्मोहाद्धृतराष्ट्रस्य शृण्वतः ॥ ३२
अहं च तात कर्णश्च भ्राता दुःशासनश्च मे ।
पाण्डुपुत्रान्हनिष्यामः सहिताः समरे त्रयः ॥ ३३
इति ते कत्थमानस्य श्रुतं संसदिसंसदि ।
अनुतिष्ठ प्रतिज्ञां तां सत्यवाग्भव तैः सह ॥ ३४
एष ते पाण्डवः शत्रुरविशङ्कोऽग्रतः स्थितः ।
क्षत्रधर्ममवेक्षस्व श्लाघ्यस्तव वधो जयात् ॥ ३५
दत्तं भुक्तमधीतं च प्राप्तमैश्वर्यमीप्सितम् ।
कृतकृत्योऽनृणश्चासि मा भैर्युध्यस्व पाण्डवम् ॥३६
इत्युक्त्वा समरे द्रोणो न्यवर्तत यतः परे ।
द्वैधीकृत्य ततः सेनां युद्धं समभवत्तदा ॥ ३७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि चतुर्दशरात्रियुद्धे षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

---

## सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

द्रोणेन द्रुपदविराटादीनां वधः ॥ १ ॥ भीमेन निष्ठुरभाषणेन धृष्टद्युम्नमुद्योज्य द्रोणानीकाभिगमनम् ॥ २ ॥ चतुर्दशरात्रियुद्धसमाप्तिः ॥ ३ ॥

सञ्जय उवाच ।
त्रिभागमात्रशेषायां रात्र्यां युद्धमवर्तत ।
कुरूणां पाण्डवानां च संहृष्टानां विशांपते ॥ १
अथ चन्द्रप्रभां मुष्णन्नादित्यस्य पुरःसरः ।
अरुणोऽभ्युदयांचक्रे ताम्रीकुर्वन्निवाम्बरम् ॥ २
'प्रकाशमकरोद्व्योम जगत्संरञ्जयन्निव ।'
प्राच्यां दिशि सहस्रांशोररुणेनारुणीकृतम् ।
तापनीयं यथा चक्रं भ्राजते रविमण्डलम् ॥ ३
ततो रथाश्वांश्च मनुष्ययाना-
न्युत्सृज्य सर्वे कुरुपाण्डुयोधाः ।
दिवाकरस्याभिमुखं जपन्तः
सन्ध्यागताः प्राञ्जलयो बभूवुः ॥ ४
ततो द्वैधीकृते सैन्ये द्रोणः सोमकपाण्डवान् ।
अभ्यद्रवत्सपाञ्चालान्दुर्योधनपुरोगमः ॥ ५
द्वैधीकृतान्कुरून्दृष्ट्वा माधवोऽर्जुनमब्रवीत् ।
सपत्नान्सव्यतः कुर्याः सव्यसाचिन्निमान्कुरून् ॥ ६
स माधवमनुज्ञाय कुरुष्वेति धनंजयः ।
द्रोणकर्णौ महेष्वासौ सव्यतः पर्यवर्तत ॥ ७
अभिप्रायं तु कृष्णस्य ज्ञात्वा परपुरंजयः ।
आजिशीर्षगतं पार्थं भीमसेनोऽभ्युवाच ह ॥ ८
भीमसेन उवाच ।
अर्जुनार्जुन बीभत्सो शृणुष्वैतद्वचो मम ।
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ॥ ९
अस्मिंश्चेदागते काले श्रेयो न प्रतिपत्स्यसे ।
असंभावितरूपस्त्वं सुनृशंसं करिष्यसि ॥ १०
सत्यश्रीधर्मयशसां वीर्येणानृण्यमाप्नुहि ।
भिन्ध्यनीकं युधांश्रेष्ठ प्रतिज्ञां सफलां कुरु ॥ ११
सञ्जय उवाच ।
स सव्यसाची भीमेन चोदितः केशवेन च ।
कर्णद्रोणावतिक्रम्य समन्तात्पर्यवारयत् ॥ १२
तमाजिशीर्षमायान्तं दहन्तं क्षत्रियर्षभान् ।
पराक्रान्तं पराक्रम्य ततः क्षत्रियपुङ्गवाः ।
नाशक्नुवन्वारयितुं वर्धमानमिवानलम् ॥ १३
अथ दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
अभ्यवर्षञ्छरव्रातैः कुन्तीपुत्रं धनञ्जयम् ॥ १४
तेषामस्त्राणि सर्वेषामुत्तमास्त्रविदां वरः ।
कदर्थीकृत्य राजेन्द्र शरवर्षैरवाकिरत् ॥ १५
अस्त्रैरस्त्राणि संवार्य लघुहस्तो धनञ्जयः ।
सर्वानविध्यन्निशितैर्दशभिर्दशभिः शरैः ॥ १६
उद्धूता रजसो वृष्टिः शरवृष्टिस्तथैव च ।
तमश्च घोरं शब्दश्च तदा समभवन्महान् ॥ १७
न द्यौर्न भूमिर्न दिशः प्राज्ञायन्त तथागते ।
सैन्येन रजसा मूढं सर्वमन्धमिवाभवत् ॥ १८
नैव ते न वयं राजन्प्राज्ञासिष्म परस्परम् ।
'शब्दमात्रेण जानीमो वयं ते च परस्परम् ।'
उद्देशेन हि तेन स्म समयुध्यन्त पार्थिवाः ॥ १९
विरथा रथिनो राजन्समासाद्य परस्परम् ।
केशेषु समसज्जन्त कवचेषु भुजेषु च ॥ २०
हताश्वा हतसूताश्च निश्चेष्टा रथिनो हताः ।
जीवन्त इव तत्र स्म व्यदृश्यन्त भयार्दिताः ॥ २१
हतान्गजान्समाश्लिष्य पर्वतानिव वाजिनः ।
गतसत्त्वा व्यदृश्यन्त तथैव सह सादिभिः ॥ २२
ततस्त्वभ्यवसृत्यैव संग्रामादुत्तरां दिशम् ।
आतिष्ठदाहवे द्रोणो विधूमोऽग्निरिव ज्वलन् ॥ २३
तमाजिशीर्षादेकान्तमपक्रान्तं निशम्य तु ।
समकम्पन्त सैन्यानि पाण्डवानां विशांपते ॥ २४
भ्राजमानं श्रिया युक्तं ज्वलन्तमिव तेजसा ।
द्रोणं दृष्ट्वा परे त्रेसुश्चेरुर्मम्लुश्च भारत ॥ २५

त्रिभागमात्रशेषायां मुहूर्तत्रयावशिष्टायाम् । तत्र सूर्योदयोत्तरं त्रयोदश्यां द्रोणस्य नाशः । त्रयोदश्यां शुक्लायां युद्धारम्भस्य–हेमन्ते प्रथममासे शुक्लपक्षे त्रयोदशीम् । प्रवृत्तं भारतं युद्धमिति भारतसावित्र्यामुक्तस्य चोपपत्तिः सिध्यति ॥ १ ॥

आह्वयन्तं परानीकं प्रभिन्नमिव वारणम् ।
नैनमाशंसिरे जेतुं दानवा वासवं यथा ॥ २६
केचिदासन्निरुत्साहाः केचित्क्रुद्धा मनस्विनः ।
विस्मिताश्चाभवन्केचित्केचिद्धृष्टाऽभवन्युधि ॥२७
हस्तैर्हस्ताग्रमपरे प्रत्यपिंषन्नराधिपाः ।
अपरे दशनैरोष्ठानदशन्क्रोधमूर्च्छिताः ॥ २८
व्याक्षिपन्नायुधान्यन्ये ममृदुश्चापरे भुजान् ।
अन्ये चान्वपतन्द्रोणं त्यक्तात्मानो महौजसः २९
पाञ्चालास्तु विशेषेण द्रोणसायकपीडिताः ।
समसज्जन्त राजेन्द्र समरे भृशवेदनाः ॥ ३०
ततो विराटद्रुपदौ द्रोणं प्रति ययू रणे ।
तथा चरन्तं संग्रामे भृशं समरदुर्जयम् ॥ ३१
द्रुपदस्य ततः पौत्रास्त्रय एव विशांपते ।
चेदयश्च महेष्वासा द्रोणमेवाभ्ययुर्युधि ॥ ३२
तेषां द्रुपदपौत्राणां त्रयाणां निशितैः शरैः ।
त्रिभिर्द्रोणोऽहरत्प्राणांस्ते हता न्यपतन्भुवि ॥ ३३
ततो द्रोणोऽजयद्युद्धे चेदिकैकेयसृञ्जयान् ।
मात्स्यांश्चैवाजयत्कृत्स्नान्भारद्वाजो महारथान् ३४
ततस्तु द्रुपदः क्रोधाच्छरवर्षमवासृजत् ।
द्रोणं प्रति महाराज विराटश्चैव संयुगे ॥ ३५
तं निहत्येषुवर्षं तु द्रोणः क्षत्रियमर्दनः ।
तौ शरैश्छादयामास विराटद्रुपदावुभौ ॥ ३६
द्रोणेन च्छाद्यमानौ तु क्रुद्धौ संग्राममूर्धनि ।
द्रोणं शरैर्विव्यधतुः परमं क्रोधमास्थितौ ॥ ३७
ततो द्रोणो महाराज क्रोधामर्षसमन्वितः ।
भल्लाभ्यां भृशतीक्ष्णाभ्यां चिच्छेद धनुषी तयोः ॥
ततो विराटः कुपितः समरे तोमरान्दश ।
दश चिक्षेप च शरान्द्रोणस्य वधकाङ्क्षया ॥ ३९
शक्तिं च द्रुपदो घोरामायसीं स्वर्णभूषिताम् ।
चिक्षेप भुजगेन्द्राभां क्रुद्धो द्रोणरथं प्रति ॥ ४०
ततो भल्लैः सुनिशितैश्छित्त्वा तांस्तोमारान्दश ।
शक्तिं कनकवैदूर्यां द्रोणश्चिच्छेद सायकैः ॥ ४१
ततो द्रोणः सुपीताभ्यां भल्लाभ्यामरिमर्दनः ।
द्रुपदं च विराटं च प्रेषयामास मृत्यवे ॥ ४२
हते विराटे द्रुपदे केकयेषु तथैव च ।
तथैव चेदिमात्स्येषु पाञ्चालेषु तथैव च ॥ ४३
हतेषु त्रिषु वीरेषु द्रुपदस्य च नप्तृषु ।
द्रोणस्य कर्म तद्दृष्ट्वा कोपदुःखसमन्वितः ।
शशाप रथिनां मध्ये धृष्टद्युम्नो महामनाः ॥ ४४
इष्टापूर्तात्तथा क्षात्राद्ब्राह्मण्याच्च स नश्यतु ।
द्रोणो यस्याद्य मुच्येत यं वा द्रोणः पराभवेत् ॥ ४५
इति तेषां प्रतिश्रुत्य मध्ये सर्वधनुष्मताम् ।
आयाद्द्रोणं सहानीकः पाञ्चाल्यः परवीरहा ॥ ४६
पाञ्चालास्त्वेकतो द्रोणमभ्यघ्नन्पाण्डवैः सह ।
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
सोदर्याश्च यथा मुख्यास्तेऽरक्षन्द्रोणमाहवे ॥ ४७
रक्ष्यमाणं तथा द्रोणं सर्वैस्तैस्तु महारथैः ।
यतमानास्तु पाञ्चाला न शेकुः प्रतिवीक्षितुम् ४८
तत्राक्रुध्यद्भीमसेनो धृष्टद्युम्नस्य मारिष ।
स एनं वाग्भिरुग्राभिस्ततक्ष पुरुषर्षभः ॥ ४९

भीमसेन उवाच ।

द्रुपदस्य कुले जातः सर्वास्त्रेष्वस्त्रवित्तमः ।
कः क्षत्रियो मन्यमानः प्रेक्षेतारिमवस्थितम् ॥ ५०
पितृपुत्रवधं प्राप्य पुंस्त्वं को वा प्रहर्षयेत् ।
विशेषतस्तु शपथं शपित्वा राजसंसदि ॥ ५१
एष वैश्वानर इव समिद्धः स्वेन तेजसा ।
शरचापेन्धनो द्रोणः क्षत्रं दहति तेजसा ॥ ५२
पुरा करोति निःशेषां पाण्डवानामनीकिनीम् ।
स्थिताः पश्यत मे कर्म द्रोणमेव व्रजाम्यहम् ॥ ५३
इत्युक्त्वा प्राविशत्क्रुद्धो द्रोणानीकं वृकोदरः ।
शरैः पूर्णायतोत्सृष्टैर्द्रावयंस्तव वाहिनीम् ॥ ५४
धृष्टद्युम्नोऽपि पाञ्चाल्यः प्रविश्य महतीं चमूम् ।
आससाद रणे द्रोणं तदासीत्तुमुलं महत् ॥ ५५

शशाप शपथं कृतवान् ॥ ४४ ॥ इष्टं यागहोमादि । आपूर्तं क्षेत्रारामादि । क्षात्रं द्रुपदकुलोत्पन्नत्वात् । ब्राह्मण्यं याजोपयाजयोर्ब्राह्मणयोस्तपसा ब्राह्मणरूपादग्नेश्च जातत्वात् । एतत्सर्वं तस्य नश्यतु । यस्य शत्रुर्द्रोणो मुच्येत मरणं न प्राप्नुयात् । यं वा मां वा द्रोणो यदि पराभवेदिति ॥ ४५ ॥ सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

नैव नस्तादृशं युद्धं दृष्टपूर्वं न च श्रुतम् ।
यथा सूर्योदये राजन्समुत्पिञ्जोऽभवन्महान् ॥ ५६
संसक्तान्येव चादृश्यन्रथवृन्दानि मारिष ।
हतानि च विकीर्णानि शरीराणि शरीरिणाम् ॥५७
केचिदन्यत्र गच्छन्तः पथि चान्यैरुपद्रुताः ।
विमुखाः पृष्ठतश्चान्ये ताड्यन्ते पार्श्वतः परे ॥ ५८
तथा संसक्तयुद्धं तदभवद्भृशदारुणम् ।
अथ सन्ध्यागतः सूर्यः क्षणेन समपद्यत ॥ ५९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि चतुर्दशरात्रियुद्धे सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

## अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

पञ्चदशदिवसयुद्धारम्भः ॥ १ ॥ संकुलयुद्धम् । नकुलेन दुर्योधनपराजयः ॥ २ ॥

सञ्जय उवाच ।
ते तथैव महाराज दंशिता रणमूर्धनि ।
सन्ध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ॥ १
उदिते तु सहस्रांशौ तप्तकाञ्चनसप्रभे ।
प्रकाशितेषु लोकेषु पुनर्युद्धमवर्तत ॥ २
द्वन्द्वानि तत्र यान्यासन्संसक्तानि पुरोदयात् ।
तान्येवाभ्युदिते सूर्ये समसज्जन्त भारत ॥ ३
रथैर्हया हयैर्नागाः पादातैश्चापि कुञ्जराः ।
हयैर्हयाः समाजग्मुः पादाताश्च पदातिभिः ॥ ४
रथा रथैरिभैर्नागास्तथैव भरतर्षभ ।
संसक्ताश्च वियुक्ताश्च योधाः संन्यपतन्रणे ॥ ५
ते रात्रौ कृतकर्माणः श्रान्ताः सूर्यस्य तेजसा ।
क्षुत्पिपासापरीताङ्गा विसंज्ञा बहवोऽभवन् ॥ ६
शङ्खभेरीमृदङ्गानां कुञ्जराणां च गर्जताम् ।
विष्फारितविकृष्टानां कार्मुकाणां च कूजताम् ॥ ७
शब्दः समभवद्राजन्दिविस्पृग्भरतर्षभ ।
द्रवतां च पदातीनां शस्त्राणां पतताम् अपि ॥ ८
हयानां ह्रेषतां चापि रथानां च निवर्तताम् ।
क्रोशतां गर्जतां चैव तदासीत्तुमुलं महत् ॥ ९
विवृद्धस्तुमुलः शब्दो द्यामगच्छन्महांस्तदा ।
नानायुधनिकृत्तानां चेष्टतामातुरः स्वनः ॥ १०
भूमावश्रूयत महांस्तदाऽऽसीत्कृपणं महत् ।
पततां पात्यमानानां पत्त्यश्वरथदन्तिनाम् ॥ ११
तेषु सर्वेष्वनीकेषु व्यतिषक्तेष्वनेकशः ।
स्वे स्वाञ्जघ्नुः परे स्वांश्च स्वान्परेषां परे परान् ॥ १२
वीरबाहुविसृष्टाश्च योधेषु च गजेषु च ।
राशयः प्रत्यदृश्यन्त वाससां नेजनेष्विव ॥ १३
उद्यतप्रतिपिष्टानां खड्गानां वीरबाहुभिः ।
स ~~एव शब्दस्तद्रूपो~~ वाससां निज्यतामिव ॥ १४
अर्धासिभिस्तथा खड्गैस्तोमरैः सपरश्वधैः ।
निकृष्टयुद्धं संसक्तं महदासीत्सुदारुणम् ॥ १५
गजाश्वकायप्रभवां नरदेहप्रवाहिनीम् ।
शस्त्रमत्स्यसुसंपूर्णां मांसशोणितकर्दमाम् ॥ १६
आर्तनादस्वनवतीं पताकाशस्त्रफेनिलाम् ।
नदीं प्रावर्तयन्वीराः परलोकौघगामिनीम् ॥ १७
शरशक्त्यर्दिता क्लान्ता रात्रिमूढाल्पचेतसः ।
विष्टभ्य सर्वगात्राणि व्यतिष्ठन्गजवाजिनः ॥ १८
संशुष्कवदना वीराः शिरोभिश्चारुकुण्डलैः ।
युद्धोपकरणैश्चान्यैस्तत्रतत्र चकाशिरे ॥ १९
क्रव्यादसङ्घैराकीर्णं मृतैरर्धमृतैरपि ।
नासीद्रथपथस्तत्र सर्वमायोधनं प्रति ॥ २०
मज्जत्सु चक्रेषु रथान्सत्त्वमास्थाय वाजिनः ।

---

स्वे कौरवाः स्वान् स्वभृत्यान्परे पाण्डवाः स्वान् स्वभृत्यान् । स्वे इत्यनुवर्तते । परेषां पाण्डवानां स्वान् स्वे कौरवाः परेषां पाण्डवानां परान् कौरवान् परे पाण्डवा जघ्नुरित्यन्वयः । परेषामित्युभयत्र संबध्यते । स्वपरविभागो वक्तुः सञ्जयस्यानुरोधात् ॥ १२ ॥ निज्यन्ते प्रक्षाल्यन्ते वासांसि येषु ते प्रदेशा नेजनानि तेषु यथा वाससां राशयो भवन्त्येवमुद्यतानां प्रतिकूलं पिष्टानां च खड्गानां राशयः प्रत्यदृश्यन्त । निज्यतां क्षालनैः उद्यम्योद्यम्य शिलायां स्फाल्यमानानाम् । श्लोकद्वयम् ॥ १३ ॥ १४ ॥ अर्धासिभिरेकधारैः ॥ १५ ॥

कथंचिदवहन्श्रान्ता वेपमानाः शरार्दिताः ।
कुलसत्त्वबलोपेता वाजिनो वारणोपमाः ॥ २१
विह्वलं तूर्णमुद्भ्रान्तं सभयं भारतातुरम् ।
बलमासीत्तदा सर्वमृते द्रोणार्जुनावुभौ ॥ २२
तावेवास्तां निलयनं तावार्तायनमेव च ।
तावेवान्ये समासाद्य जग्मुर्वैवस्वतक्षयम् ॥ २३
आविग्नमभवत्सर्वं कौरवाणां महद्बलम् ।
पाञ्चालानां च संसक्तं न प्राज्ञायत किंचन ॥२४
अन्तकाक्रीडसदृशे भीरूणां भयवर्धनम् ।
पृथिव्यां राजवंश्यानामुत्थिते महति क्षये ॥२५
न तत्र कर्णं द्रोणं वा नार्जुनं न युधिष्ठिरम् ।
न भीमसेनं न यमौ न पाञ्चाल्यं न सात्यकिम् २६
न च दुःशासनं द्रौणिं न दुर्योधनसौबलौ ।
न कृपं मद्रराजं च कृतवर्माणमेव च ॥ २७
न चान्यान्नैव चात्मानं न क्षितिं न दिशस्तथा ।
पश्याम राजन्संसक्तान्सैन्येन रजसा वृतान् ॥२८
संभ्रान्ते तुमुले घोरे रजोमेघे समुत्थिते ।
त्रियामामिव संप्राप्ताममन्यन्त निशाचराः ॥२९
न ज्ञायन्ते कौरवेया न पाञ्चाला न पाण्डवाः ।
न दिशो द्यौर्न चोर्वी च न समं विषमं तथा ॥ ३०
हस्तसंस्पर्शमापन्नान्परानप्यथवा स्वकान् ।
न्यपातयंस्तदा युद्धे नराः स्म विजयैषिणः ॥ ३१
उद्धूतत्वात्तु रजसः प्रसेकाच्छोणितस्य च ।
प्राशाम्यत रजो भौमं शीघ्रत्वादनिलस्य च ॥ ३२
तत्र नागा हया योधा रथिनोऽथ पदातयः ।
पारिजातवनानीव व्यरोचन्रुधिरोक्षिताः ॥ ३३
ततो दुर्योधनः कर्णो द्रोणो दुःशासनस्तथा ।
पाण्डवैः समसज्जन्त चतुर्भिश्चतुरो रथाः ॥ ३४
दुर्योधनः सह भ्रात्रा यमाभ्यां समसज्जत ।
वृकोदरेण राधेयो भारद्वाजेन चार्जुनः ॥ ३५
तद्घोरं महदाश्चर्यं युद्धं दैवासुरोपमम् ।
रथर्षभाणामुग्राणां सन्निपातममानुषम् ॥ ३६
रथमार्गैर्विचित्रैस्तैर्विचित्ररथसंकुलम् ।
अपश्यन्रथिनो युद्धं विचित्रं चित्रयोधिनाम् ॥ ३७
यतमानाः पराक्रान्ताः परस्परजिगीषवः ।
जीमूता इव घर्मान्ते शरवर्षैरवाकिरन् ॥ ३८
ते रथान्सूर्यसंकाशानास्थिताः पुरुषर्षभाः
अशोभन्त यथा मेघाः शारदाश्चलविद्युतः ॥ ३९
योधास्ते तु महाराज क्रोधामर्षसमन्विताः ।
स्पर्धिनश्च महेष्वासाः कृतयत्ना धनुर्धराः ।
अभ्यगच्छंस्तथाऽन्योन्यं मत्ता गजवृषा इव ॥ ४०
न नूनं देहभेदोऽस्ति काले राजन्ननागते ।
यत्र सर्वे न युगपद्व्यशीर्यन्त महारथाः ॥ ४१
बाहुभिश्चरणैश्छिन्नैः शिरोभिश्च सकुण्डलैः ।
कार्मुकैर्विशिखैः प्रासैः खड्गैः परशुपट्टसैः ॥ ४२
नालीकैः क्षुद्रनाराचैर्नखरैः शक्तितोमरैः ।
अन्यैश्च विविधाकारैर्धौतैः प्रहरणोत्तमैः ॥ ४३
विचित्रैर्विविधाकारैः शरीरावरणैरपि ।
विचित्रैश्च रथैर्भग्नैर्हतैश्च गजवाजिभिः ॥ ४४
शून्यैश्चैव नगाकारैर्हतयोधध्वजै रथैः ।
अमनुष्यैर्हयैस्त्रस्तैः कृष्यमाणैस्ततस्ततः ॥ ४५
वातायमानैरसकृद्धतवीरैरलंकृतैः ।
व्यजनैः कङ्कटैश्चैव ध्वजैश्च विनिपातितैः ॥ ४६
छत्रैराभरणैर्वस्त्रैर्माल्यैश्च सुसुगन्धिभिः ।
हारैः किरीटैर्मुकुटैरुष्णीषैः किङ्किणीगणैः ॥ ४७
उरस्थैर्मणिभिर्निष्कैश्चूडामणिभिरेव च ।
आसीदायोधनं तत्र नभस्तारागणैरिव ॥ ४८
ततो दुर्योधनस्यासीन्नकुलेन समागमः ।
अमर्षितेन क्रुद्धस्य क्रुद्धेनामर्षितस्य च ॥ ४९
अपसव्यं चकाराथ माद्रीपुत्रस्तवात्मजम् ।
किरञ्छरशतैर्हृष्टस्तत्र नादो महानभूत् ॥ ५०
अपसव्यं कृतं सङ्ख्ये भ्रातृव्येनात्यमर्षिणा ।
नामृष्यत तमप्याजौ प्रतिचक्रे परंतपः ।
पुत्रस्तव महाराज राजा दुर्योधनो द्रुतम् ॥ ५१

निलयनमाश्रयः । आर्तायनं आर्तानां भयवारणं स्वीयानाम् । शत्रूणां तु तावेव मृत्युकरावित्यर्थः ॥२३॥ चतुरश्चत्वारः ॥३४॥ भ्रात्रा दुःशासनेन ॥ ३५ ॥ अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

ततः प्रतिचिकीर्षन्तमपसव्यं तु ते सुतम् ।
न्यवारयत तेजस्वी नकुलश्चित्रमार्गवित् ॥ ५२
स सर्वतो निवार्यैनं शरजालेन पीडयन् ।
विमुखं नकुलश्चक्रे तत्सैन्याः समपूजयन् ॥ ५३
तिष्ठतिष्ठेति नकुलो बभाषे तनयं तव ।
संस्मृत्य सर्वदुःखानि तव दुर्मन्त्रितं च तत् ॥ ५४

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि पञ्चदशदिवसयुद्धे अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

## एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

द्रोणार्जुनादीनां संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
ततो दुःशासनः क्रुद्धः सहदेवमुपाद्रवत् ।
रथवेगेन तीव्रेण कम्पयन्निव मेदिनीम् ॥ १
तस्यापतत एवाशु भल्लेनामित्रकर्शनः ।
माद्रीपुत्रः शिरो यन्तुः सशिरस्त्राणमच्छिनत् ॥ २
नैनं दुःशासनः सूतं नापि कश्चन सैनिकः ।
कृत्तोत्तमाङ्गमाशुत्वात्सहदेवेन बुद्धवान् ॥ ३
यदा त्वसंगृहीतत्वात्प्रयान्त्यश्वा यथासुखम् ।
ततो दुःशासनः सूतं बुबुधे गतचेतसम् ॥ ४
स हयान्सन्निगृह्याजौ स्वयं हयविशारदः ।
युयुधे रथिनां श्रेष्ठो लघु चित्रं च सुष्ठु च ॥ ५
तदस्यापूजयन्कर्म स्वे परे चापि संयुगे ।
हतसूतरथेनाजौ व्यचरद्यदभीतवत् ॥ ६
सहदेवस्तु तानश्वांस्तीक्ष्णैर्बाणैरवाकिरत् ।
पीड्यमानाः शरैश्चाशु प्राद्रवंस्ते ततस्ततः ॥ ७
स रश्मिषु विषक्तत्वादुत्ससर्ज शरासनम् ।
धनुषा कर्म कुर्वंस्तु रश्मींश्च पुनरुत्सृजत् ॥ ८
छिद्रेष्वेतेषु तं बाणैर्माद्रीपुत्रोऽभ्यवाकिरत् ।
परीप्संस्त्वत्सुतं कर्णस्तदन्तरमवापतत् ॥ ९
वृकोदरस्ततः कर्णं त्रिभिर्भल्लैः समाहितः ।
आकर्णपूर्णैरभ्यघ्नद्बाह्वोरुरसि चानदत् ॥ १०
स निवृत्तस्ततः कर्णः संघट्टित इवोरगः ।
भीममावारयामास विकिरन्निशिताञ्छरान् ।
ततोऽभूत्तुमुलं युद्धं भीमराधेययोस्तदा ॥ ११
तौ वृषाविव नर्दन्तौ विवृत्तनयनावुभौ ।
वेगेन महताऽन्योन्यं संरब्धावभिपेततुः ॥ १२
अभिसंश्लिष्टयोस्तत्र तयोराहवशौण्डयोः ।
विच्छिन्नशरपातत्वाद्गदायुद्धमवर्तत ॥ १३
गदया भीमसेनस्तु कर्णस्य रथकूबरम् ।
बिभेद शतधा राजंस्तदद्भुतमिवाभवत् ॥ १४
ततो भीमस्य राधेयो गदामाविध्य वीर्यवान् ।
अवासृजद्रथे तां तु बिभेद गदया गदाम् ॥ १५
ततो भीमः पुनर्गुर्वीं चिक्षेपाधिरथेर्गदाम् ।
तां गदां बहुभिः कर्णः सुपुङ्खैः सुप्रवेजितैः ॥ १६
प्रत्यविध्यत्पुनश्चान्यैः सा भीमं पुनराव्रजत् ।
व्यालीव मन्त्राभिहता कर्णबाणैरभिद्रुता ॥ १७
तस्याः प्रतिनिपातेन भीमस्य विपुलो ध्वजः ।
पपात सारथिश्चास्य मुमोह च गदाहतः ॥ १८
स कर्णे सायकानष्टौ व्यसृजत्क्रोधमूर्च्छितः ।
तैस्तस्य निशितैस्तीक्ष्णैर्भीमसेनो महाबलः ॥ १९
चिच्छेद परवीरघ्नः प्रहसन्निव भारत ।
ध्वजं शरासनं चैव शरावापं च भारत ॥ २०
कर्णोऽप्यन्यद्धनुर्गृह्य हेमपृष्ठं दुरासदम् ।
ततः पुनस्तु राधेयो हयानस्य रथेषुभिः ।
ऋक्षवर्णाञ्जघानाशु तथोभौ पार्ष्णिसारथी ॥ २१
स विपन्नरथो भीमो नकुलस्याप्लुतो रथम् ।
हरिर्यथा गिरेः शृङ्गं समाक्रमदरिंदमः ॥ २२
तथा द्रोणार्जुनौ चित्रमयुध्येतां महारथौ ।
आचार्यशिष्यौ राजेन्द्र कृतप्रतिकृतौ युधि ॥ २३
लघुसंधानयोगाभ्यां रथयोश्च रणेन च ।
मोहयन्तौ मनुष्याणां चक्षूंषि च मनांसि च ॥ २४
उपारमन्त ते सर्वे योधाऽस्माकं परे तथा ।
अदृष्टपूर्वं पश्यन्तस्तद्युद्धं गुरुशिष्ययोः ॥ २५
विचित्रान्पृतनामध्ये रथमार्गानुदीर्य तौ ।

अन्योन्यमपसव्यं च कर्तुं वीरौ तदेषतुः २६
पराक्रमं तयोर्योधा ददृशुस्ते सुविस्मिताः ॥ २७
तयोः समभवद्युद्धं द्रोणपाण्डवयोर्महत् ।
आमिषार्थे महाराज गगने श्येनयोरिव ॥ २८
यद्यच्चकार द्रोणस्तु कुन्तीपुत्रजिगीषया ।
तत्तत्प्रतिजघानाशु प्रहसंस्तस्य पाण्डवः ॥ २९
यदा द्रोणो न शक्नोति पाण्डवं स विशेषितुम् ।
ततः प्रादुश्चकारास्त्रमस्त्रमार्गविशारदः ॥ ३०
ऐन्द्रं पाशुपतं त्वाष्ट्रं वायव्यमथ वारुणम् ।
मुक्तंमुक्तं द्रोणचापात्तज्जघान धनंजयः ॥ ३१
अस्त्राण्यस्त्रैर्यदा तस्य विधिवद्धन्ति पाण्डवः ।
ततोऽस्त्रैः परमैर्दिव्यैर्द्रोणः पार्थमवाकिरत् ॥ ३२
यद्यदस्त्रं स पार्थाय प्रयुङ्क्ते विजिगीषया ।
तस्यतस्य विघाताय तत्तद्धि कुरुतेऽर्जुनः ॥ ३३
स वध्यमानेष्वस्त्रेषु दिव्येष्वपि यथाविधि
अर्जुनेनार्जुनं द्रोणो मनसैवाभ्यपूजयत् ॥ ३४
मेने चात्मानमधिकं पृथिव्यामधि भारत ।
तेन शिष्येण सर्वेभ्यः शस्त्रविद्भ्यः परंतपः ॥ ३५
वार्यमाणस्तु पार्थेन तथा मध्ये महात्मनाम् ।
यतमानोऽर्जुनं प्रीत्या प्रीयते स्मार्जुनेन सः ॥ ३६
ततोऽन्तरिक्षे देवाश्च गन्धर्वाश्च सहस्रशः ।
ऋषयः सिद्धसङ्घाश्च व्यतिष्ठन्त दिदृक्षया ॥ ३७
तदप्सरोभिराकीर्णं यक्षगन्धर्वसंकुलम् ।
श्रीमदाकाशमभवद्भूयो मेघाकुलं यथा ॥ ३८
तत्रस्मान्तर्हिता वाचो व्यचरन्त पुनःपुनः ।
द्रोणपार्थस्तवोपेता व्यश्रूयन्त नराधिप ॥ ३९
विसृज्यमानेष्वस्त्रेषु ज्वालयत्सु दिशो दश ।
अब्रुवंस्तत्र सिद्धाश्च ऋषयश्च समागताः ॥ ४०
नैवेदं मानुषं युद्धं नासुरं न च राक्षसम् ।
न दैवं न च गान्धर्वं ब्राह्मं ध्रुवमिदं परम् ॥४१
विचित्रमिदमाश्चर्यं न नो दृष्टं न च श्रुतम् ।
अति पाण्डवमाचार्यो द्रोणं चाप्यति पाण्डवः ४२
नानयोरन्तरं शक्यं द्रष्टुमन्येन केनचित् ॥ ४३
यदि रुद्रो द्विधाकृत्य युध्येतात्मानमात्मना ।
तत्र शक्योपमा कर्तुमन्यत्र तु न विद्यते ॥ ४४
ज्ञानमेकस्थमाचार्ये ज्ञानं योगश्च पाण्डवे ।
शौर्यमेकस्थमाचार्ये बलं शौर्यं च पाण्डवे ॥ ४५
नेमौ शक्यौ महेष्वासौ युद्धे क्षपयितुं परैः ।
इच्छमानौ पुनरिमौ हन्येतां सामरं जगत् ॥४६
इत्यब्रुवन्महाराज दृष्ट्वा तौ पुरुषर्षभौ ।
अन्तर्हितानि भूतानि प्रकाशानि च सर्वशः ॥४७
'यदा द्रोणं महाराज विशेषयति पाण्डवः ।
ततो द्रोणो ब्राह्ममस्त्रं प्रादुश्चक्रे महामतिः ॥४८
'तदस्त्रं संहितं राजन्घोररूपं महाहवे ।'
संतापयद्रणे पार्थं भूतान्यन्तर्हितानि च ॥ ४९
ततश्चचाल पृथिवी सपर्वतवनद्रुमा
'सरितश्च प्रतिस्रोतः प्रवहुर्वै क्षणान्तरम् ।'
ववौ च विषमो वायुः सागराश्चापि चुक्षुभुः ॥५०
ततस्त्रासो महानासीत्कुरुपाण्डवसेनयोः ।
सर्वेषां चैव भूतानामुद्यतेऽस्त्रे महात्मना ॥ ५१
ततः पार्थोऽप्यसंभ्रान्तस्तदस्त्रं प्रतिजघ्निवान् ।
ब्रह्मास्त्रेणैव राजेन्द्र ततः सर्वमशीशमत् ॥ ५२
यदा न गम्यते पारं तयोरन्यतरस्य वा ।
ततः संकुलयुद्धेन तद्युद्धं व्याकुलीकृतम् ॥ ५३
नाज्ञायत ततः किंचित्पुनरेव विशांपते ।
प्रवृत्ते तुमुले युद्धे द्रोणपाण्डवयोर्नृप ॥ ५४
'द्रोणो मुक्त्वा रणे पार्थं पाञ्चालानन्वधावत ।
अर्जुनोपि रणे द्रोणं त्यक्त्वा प्राद्रवयत्कुरून् ॥ ५५
शरौघैरथ ताभ्यां तु छायाभूतं महामृधे ।
तुमलं प्रबभौ राजन्सर्वस्य जगतो भयम् ॥' ५६
शरजालैः समाकीर्णे मेघजालैरिवाम्बरे ।
नापतच्च ततः कश्चिदन्तरिक्षचरस्तदा ॥ ५७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि पञ्चदशदिवसयुद्धे एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

ज्ञानमेकस्थमिति आचार्यो ज्ञानस्य शौर्यस्य चावधिरित्यर्थः । अर्जुनस्तु योगेन बलेन चाधिकः । कृष्णसारथिगाण्डीवदिव्यरथध्वजवुद्ध्यादिभिर्यौवनेन च युक्तत्वात् । तथाच योगबलाभ्यामाचार्यसाम्यं प्राप्त इत्यर्थः ॥ ४५ ॥ नापतत् बाणैरन्तरिक्षस्य पूरितत्वादिति भावः ॥ ५७ ॥ एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

## नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

सात्यकिदुर्योधनादीनां संकुलयुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
तस्मिंस्तथा वर्तमाने गजाश्वनरसंक्षये ।
दुःशासनो महाराज धृष्टद्युम्नमयोधयत् ॥ १
स तु रुक्मरथासक्तो दुःशासनशरार्दितः ।
अमर्षात्तव पुत्रस्य शरैर्वाहानवाकिरत् ॥ २
क्षणेन स रथस्तस्य सध्वजः सहसारथिः ।
नादृश्यत महाराज पार्षतस्य शरैश्चितः ॥ ३
दुःशासनस्तु राजेन्द्र पाञ्चाल्यस्य महात्मनः ।
नाशकत्प्रमुखे स्थातुं शरजालप्रपीडितः ॥ ४
स तु दुःशासनं बाणैर्विमुखीकृत्य पार्षतः ।
किरञ्छरसहस्राणि द्रोणमेवाभ्ययाद्रणे ॥ ५
अभ्यपद्यत हार्दिक्यः कृतवर्मा त्वनन्तरम् ।
सोदर्याणां त्रयश्चैव त एनं पर्यवारयन् ॥ ६
तं यमौ पृष्ठतोऽन्वैतां रक्षन्तौ पुरुषर्षभौ ।
द्रोणायाभिमुखं यान्तं दीप्यमानमिवानलम् ॥ ७
संप्रहारमकुर्वंस्ते सर्वे च सुमहारथाः ।
अमर्षिताः सत्त्ववन्तः कृत्वा मरणमग्रतः ॥ ८
शुद्धात्मानः शुद्धवृत्ता राजन्स्वर्गपुरस्कृताः ।
आर्यं युद्धमकुर्वन्त परस्परजिगीषवः ॥
शुक्लाभिजनकर्माणो मतिमन्तो जनाधिप ।
धर्मयुद्धमयुध्यन्त प्रेप्सन्तो गतिमुत्तमाम् ॥ १०
न तत्रासीदधर्मिष्ठमशस्तं युद्धमेव च ।
नात्र कर्णी न नालीको न लिप्तो न च बस्तिकः ॥ ११
न सूची कपिशो नैव न गवास्थिर्गजास्थिजः ।
न चूली बलिशस्तत्र न यमी नापि पाचकः ।
इषुरासीन्न संश्लिष्टो न पूतिर्न च जिह्मगः ॥ १२
ऋजून्येव विशुद्धानि सर्वे शस्त्राण्यधारयन् ।
सुयुद्धेन पराँल्लोकानीप्सन्तः कीर्तिमेव च ॥ १३
तदासीत्तुमुलं युद्धं सर्वदोषविवर्जितम् ।
चतुर्णां तव योधानां तैस्त्रिभिः पाण्डवैः सह ॥ १४
धृष्टद्युम्नस्तु तान्दृष्ट्वा तव राजन्रथर्षभान् ।
यमाभ्यां वारितान्वीराञ्छीघ्रास्त्रो द्रोणमभ्ययात्
निवारितास्तु ते वीरास्तयोः पुरुषसिंहयोः ।
समसज्जन्त चत्वारो वाताः पर्वतयोरिव ॥ १६
द्वाभ्यां द्वाभ्यां यमौ सार्धं रथाभ्यां रथपुङ्गवौ ।
समासक्तौ ततो द्रोणं धृष्टद्युम्नोऽभ्यवर्तत ॥ १७
दृष्ट्वा द्रोणाय पाञ्चाल्यं व्रजन्तं युद्धदुर्मदम् ।
यमाभ्यां तांश्च संसक्तांस्तदन्तरमुपाद्रवत् ॥ १८
दुर्योधनो महाराज किरञ्छोणितभोजनान् ।
तं सात्यकिः शीघ्रतरं पुनरेवाभ्यवर्तत ॥ १९
तौ परस्परमासाद्य समीपे कुरुमाधवौ ।
हसमानौ नृशार्दूलावभीतौ समसज्जताम् ॥ २०
बाल्यवृत्तानि सर्वाणि प्रीयमाणौ विचिन्त्य तौ ।
अन्योन्यं प्रेक्षमाणौ च स्मयमानौ पुनःपुनः ॥ २१
अथ दुर्योधनो राजा सात्यकिं समभाषत ।
प्रियं सखायं सततं गर्हयन्वृत्तमात्मनः ॥ २२
धिक् क्रोधं धिक्सखे लोभं धिङ्मोहं धिगमर्षितम् ।
धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम् ॥ २३
यत्र मामभिसंधत्से त्वां चाहं शिनिपुङ्गव ।
त्वं हि प्राणैः प्रियतरो ममाहं च सदा तव ॥ २४
स्मरामि तानि सर्वाणि बाल्यवृत्तानि यानि नौ ।
तानि सर्वाणि जीर्णानि सांप्रतं नो रणाजिरे ।
किमन्यत्क्रोधलोभाभ्यां युद्धमेवाद्य सात्वत ॥ २५
तं तथावादिनं तत्र सात्यकिः प्रत्यभाषत ।
प्रहसन्विशिखांस्तीक्ष्णानुद्यम्य परमास्त्रवित् ॥ २६
नेयं सभा राजपुत्र नाचार्यस्य निवेशनम् ।

---

त्रयो धृष्टद्युम्नोऽन्यौ द्वौ च ॥ ६ ॥ शुक्लः शुद्धोऽभिजनो वंशो येषां ते स्वयं शोधितकर्माणश्च ॥ १० ॥ अशस्तमप्रशस्यम् । प्रशस्यत्वमाह नात्रेति । कर्णी विलोमकण्टकद्वययुक्तः । स हि उद्ध्रियमाणोऽन्त्राण्युद्धरति । नालीकः अल्पत्वाद्देहमग्नः सन् दुरुद्धरः । न लिप्तो विषेणेति शेषः । बस्तिकः शल्यदण्डसंधौ शिथिलस्तस्योद्धरणे शल्यं बस्तिमध्ये मज्जति दण्डमात्रं निःसरति । (अन्ये बस्तक इति पठित्वा शृङ्गघटित इति व्याचख्युः) ॥ ११ ॥ हिंसमानाविति क. ख. पाठः ॥ २० ॥

यत्र क्रीडितमस्माभिस्तदा राजन्समागतैः ॥ २७
दुर्योधन उवाच ।
क्व सा क्रीडा गताऽस्माकं बाल्ये वै शिनिपुङ्गव ।
क्व च युद्धमिदं भूयः कालो हि दुरतिक्रमः ॥ २८
किंनु नो विद्यते कृत्यं धनेन धनलिप्सया ।
यत्र युध्यामहे सर्वे धनलोभात्समागताः ॥ २९
सञ्जय उवाच ।
तं तथावादिनं तत्र राजानं माधवोऽब्रवीत् ।
एवं वृत्तं सदा क्षात्रं युध्यन्तीह गुरूनपि ॥ ३०
यदि तेऽहं प्रियो राजञ्जहि मां मा चिरं कृथाः ।
त्वत्कृते सुकृताँल्लोकान्गच्छेयं भरतर्षभ ॥ ३१
या ते शक्तिर्बलं यच्च तत्क्षिप्रं मयि दर्शय ।
नेच्छामि तदहं द्रष्टुं मित्राणां व्यसनं महत् ॥ ३२
इत्येवं व्यक्तमाभाष्य प्रतिभाष्य च सात्यकिः ।
अभ्ययात्तूर्णमव्यग्रो दयां नाकुरुतात्मनि ॥ ३३
तमायान्तं महाबाहुं प्रत्यगृह्णात्तवात्मजः ।
शरैश्चावाकिरद्राजञ्शैनेयं तनयस्तव ॥ ३४
ततः प्रववृते युद्धं कुरुमाधवसिंहयोः ।
अन्योन्यं क्रुद्धयोर्घोरं यथा द्विरदसिंहयोः ॥ ३५
ततः पूर्णायतोत्सृष्टैः सात्वतं युद्धदुर्मदम् ।
दुर्योधनः प्रत्यविध्यत्कुपितो दशभिः शरैः ॥ ३६
तं सात्यकिः प्रत्यविध्यत्तथैवावाकिरच्छरैः ।
पञ्चाशता पुनश्चाजौ त्रिंशता दशभिश्च ह ॥ ३७
सात्यकिं तु रणे राजन्प्रहसंस्तनयस्तव ।
आकर्णपूर्णैर्निशितैर्विव्याध त्रिंशता शरैः ॥ ३८
ततोऽस्य सशरं चापं क्षुरप्रेण द्विधाऽच्छिनत् ॥ ३९
सोऽन्यत्कार्मुकमादाय लघुहस्तस्ततो दृढम् ।
सात्यकिर्व्यसृजच्चापि शरश्रेणीं सुतस्य ते ॥ ४०
तामापतन्तीं सहसा शरश्रेणीं जिघांसया ।
चिच्छेद बहुधा राजा तत उच्चुक्रुशुर्जनाः ॥ ४१
सात्यकिं च त्रिसप्तत्या पीडयामास वेगितः ।
स्वर्णपुङ्खैः शिलाधौतैराकर्णापूर्णनिःसृतैः ॥ ४२
तस्य संदधतश्चेषुं संहितेषुं च कार्मुकम् ।
आच्छिनत्सात्यकिस्तूर्णं शरैश्चैवाप्यवीविधत् ॥ ४३
स गाढविद्धो व्यथितः प्रत्यपायाद्रथान्तरे ।
दुर्योधनो महाराज दाशार्हशरपीडितः ॥ ४४
समाश्वस्य तु पुत्रस्ते सात्यकिं पुनरभ्ययात् ।
विसृजन्निषुजालानि युयुधानरथं प्रति ॥ ४५
तथैव सात्यकिर्बाणान्दुर्योधनरथं प्रति ।
सततं विसृजन्राजंस्तत्संकुलमवर्तत ॥ ४६
तत्रेषुभिः क्षिप्यमाणैः पतद्भिश्च शरीरिषु ।
अग्नेरिव महाकक्षैः शब्दः समभवन्महान् ॥ ४७
तयोः शरसहस्रैश्च संछन्नं वसुधातलम् ।
अगम्यरूपं च शरैराकाशं समपद्यत ॥ ४८
तत्राप्यधिकमालक्ष्य माधवं रथसत्तमम् ।
क्षिप्रमभ्यपतत्कर्णः परीप्संस्तनयं तव ॥ ४९
न तु तं मर्षयामास भीमसेनो महाबलः ।
सोऽभ्ययात्त्वरितः कर्णं विसृजन्सायकान्बहून् ५०
तस्य कर्णः शितान्बाणान्प्रतिहन्य हसन्निव ।
धनुः शरांश्च चिच्छेद सूतं चाभ्यहनच्छरैः ॥ ५१
भीमसेनस्तु संक्रुद्धो गदामादाय पाण्डवः ।
ध्वजं धनुश्च सूतं च संममर्दाहवे रिपोः ॥ ५२
रथचक्रं च कर्णस्य बभञ्ज स महाबलः ।
भग्नचक्रे रथेऽतिष्ठदकम्पः शैलराडिव ॥ ५३
एकचक्रं रथं तस्य तमूहुः सुचिरं हयाः ।
एकचक्रमिवार्कस्य रथं सप्त हया यथा ॥ ५४
अमृष्यमाणः कर्णस्तु भीमसेनमयुध्यत ।
विविधैरिषुजालैश्च नानाशस्त्रैश्च संयुगे ॥ ५५
भीमसेनस्तु संक्रुद्धः सूतपुत्रमयोधयत् ।
तस्मिंस्तथा वर्तमाने क्रुद्धो धर्मसुतोऽब्रवीत् ।
पाञ्चालानां नरव्याघ्रान्मात्स्यांश्च पुरुषर्षभान् ५६
ये नः प्राणाः शिरो ये च ये नो योधा महारथाः ।
त एते धार्तराष्ट्रेषु विषक्ताः पुरुषर्षभाः ॥ ५७
किं तिष्ठत यथा मूढाः सर्वे विगतचेतसः ।
तत्र गच्छत यत्रैते युध्यन्ते मामका रथाः ॥ ५८
क्षत्रधर्मं पुरस्कृत्य सर्व एव गतज्वराः ।

अभ्ययात्तूर्णमव्यग्रो निरपेक्षो विशांपते क. ख. पाठः ॥ ३३ ॥

नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

जयन्तो वध्यमानाश्च गतिमिष्टां गमिष्यथ ॥५९
जित्वा वा बहुभिर्यज्ञैर्यजध्वं भूरिदक्षिणैः ।
हता वा देवसाद्भूत्वा लोकान्प्राप्स्यथ पुष्कलान् ६०
ते राज्ञा चोदिता वीरा योत्स्यमाना महारथाः ।
चतुर्धा वाहिनीं कृत्वा त्वरिता द्रोणमभ्ययुः ॥६१
पाञ्चालास्त्वेकतो द्रोणमभ्यघ्नन्निशितैः शरैः ।
भीमसेनपुरोगाश्चाप्येकतः पर्यवारयन् ॥ ६२
आसंस्तु पाण्डुपुत्राणां त्रयो जिह्मा महारथाः ।
यमौ च भीमसेनश्च प्राक्रोशंस्ते धनञ्जयम् ॥ ६३
अभिद्रवार्जुन क्षिप्रं कुरून्द्रोणादपानुद ।
तत एनं हनिष्यन्ति पाञ्चाला हतरक्षिणम् ॥६४
कौरवेयांस्ततः पार्थः सहसा समुपाद्रवत् ।
पाञ्चालानेव तु द्रोणो धृष्टद्युम्नपुरोगमान् ।
ममर्दुस्तरसा वीराः पञ्चमेऽहनि भारत ॥ ६५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि पञ्चदशदिवसयुद्धे नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

## एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

कृष्णेन युधिष्ठिरंप्रति द्रोणजये तस्य शस्त्रन्यासस्य तत्रचाश्वत्थामवधश्रवणस्य हेतुत्वकथनम् ॥ १ ॥ भीमेनाश्वत्थामनाम्नि गजे निहते युधिष्ठिरेण कृष्णचोदनया द्रोणंप्रति तद्विवक्षया अश्वत्थामा हत इति कथनम् ॥ २ ॥

सञ्जय उवाच ।
पाञ्चालानां ततो द्रोणोऽप्यकरोत्कदनं महत् ।
यथा क्रुद्धो रणे शक्रो दानवानां क्षयं पुरा ॥ १
द्रोणास्त्रेण महाराज वध्यमानाः परे युधि ।
नात्रसन्त रणे द्रोणात्सत्ववन्तो महारथाः ॥ २
युध्यमाना महाराज पाञ्चालाः सृञ्जयास्तथा ।
द्रोणमेवाभ्ययुर्युद्धे योधयन्तो महारथाः ॥ ३
तेषां तु च्छाद्यमानानां पाञ्चालानां समन्ततः ।
अभवद्भैरवो नादो वध्यतां शरवृष्टिभिः ॥ ४
वध्यमानेषु संग्रामे पाञ्चालेषु महात्मना ।
उदीर्यमाणे द्रोणास्त्रे पाण्डवान्भयमाविशत् ॥ ५
दृष्ट्वाऽश्वनरयोधानां विपुलं च क्षयं युधि ।
पाण्डवेया महाराज नाशशंसुर्जयं तदा ॥ ६
कच्चिद्द्रोणो न नः सर्वान्क्षपयेत्परमास्त्रवित् ।
समिद्धः शिशिरापाये दहन्कक्षमिवानलः ॥ ७
न चैनं संयुगे कश्चित्समर्थः प्रतिवीक्षितुम् ।
न चैनमर्जुनो जातु प्रतियुध्येत धर्मवित् ॥ ८
त्रस्तान्कुन्तीसुतान्दृष्ट्वा द्रोणसायकपीडितान् ।
मतिमाञ्श्रेयसे युक्तः केशवोऽर्जुनमब्रवीत् ॥ ९
नैष युद्धेन संग्रामे जेतुं शक्यः कथंचन ।
सधनुर्धन्विनां श्रेष्ठो देवैरपि सवासवैः ॥ १०
न्यस्तशस्त्रस्तु संग्रामे शक्यो हन्तुं भवेन्नृभिः ।
आस्थीयतां जये योगो धर्ममुत्सृज्य पाण्डवाः ।
यथा न संयुगे सर्वान्निहन्याद्रुक्मवाहनः ॥ ११
अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम ।
तं हतं संयुगे कश्चिदस्मै शंसतु मानवः ॥ १२
एतन्नारोचयद्राजन्कुन्तीपुत्रो धनञ्जयः ।
अन्ये त्वरोचयन्सर्वे कृच्छ्रेण तु युधिष्ठिरः ॥ १३
ततो भीमो महाबाहुरनीकेषु महागजम् ।
जघान गदया राजन्नश्वत्थामानमित्युत ।
परप्रमथनं घोरं मालवस्येन्द्रवर्मणः ॥ १४
भीमसेनस्तु सव्रीडमुपेत्य द्रोणमाहवे ।
अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह ॥ १५
अश्वत्थामेति हि गजः ख्यातो नाम्ना हतोऽभवत् ।
कृत्वा मनसि तं भीमो मिथ्या व्याहृतवांस्तदा १६
भीमसेनवचः श्रुत्वा द्रोणस्तत्परमाप्रियम् ।
मनसा सन्नगात्रोऽभूद्यथा सैकतमम्भसि ॥ १७
शङ्कमानः स तन्मिथ्या वीर्यज्ञः स्वसुतस्य वै ।
हतः स इति च श्रुत्वा नैव धैर्यादकम्पत ॥ १८
स लब्ध्वा चेतनां द्रोणः क्षणेनैव समाश्वसत् ।
अनुचिन्त्यात्मनः पुत्रमविषह्यमरातिभिः ॥ १९
स पार्षतमभिद्रुत्य जिघांसुर्मृत्युमात्मनः ।
अवाकिरत्सहस्रेण तीक्ष्णानां कङ्कपत्रिणाम् ॥ २०
तं विंशतिसहस्राणि पाञ्चालानां नरर्षभाः ।

यथा चरन्तं संग्रामे सर्वतोऽवाकिरञ्छरैः ॥ २१
शरैस्तैराचितं द्रोणं नापश्याम महारथम् ।
भास्करं जलदै रुद्धं वर्षास्विव विशांपते ॥ २२
विधूय तान्बाणगणान्पाञ्चालानां महारथः ।
प्रादुश्चक्रे ततो द्रोणो ब्राह्ममस्त्रं परंतपः ॥ २३
वधाय तेषां शूराणां पाञ्चालानाममर्षितः ।
ततो व्यरोचत द्रोणो विनिघ्नन्सर्वसैनिकान् ॥ २४
शिरांस्यपातयच्चापि पाञ्चालानां महामृधे ।
तथैव परिघाकारान्बाहून्कनकभूषणान् ॥ २५
ते वध्यमानाः समरे भारद्वाजेन पार्थिवाः ।
मेदिन्यामन्वकीर्यन्त वातनुन्ना इव द्रुमाः ॥ २६
कुञ्जराणां च पततां हयौघानां च भारत ।
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ २७
हत्वा विंशतिसाहस्रान्पाञ्चालानां रथव्रजान् ।
अतिष्ठदाहवे द्रोणो विधूमोऽग्निरिव ज्वलन् ॥ २८
तथैव च पुनः क्रुद्धो भारद्वाजः प्रतापवान् ।
वसुदानस्य भल्लेन शिरः कायादपाहरत् ॥ २९
पुनः पञ्चशतान्मात्स्यान्षट्सहस्रांश्च सृञ्जयान् ।
हस्तिनामयुतं हत्वा जघानाश्वायुतं पुनः ॥ ३०
क्षत्रियाणामभावाय दृष्ट्वा द्रोणमवस्थितम् ।
ऋषयोऽभ्यागतास्तूर्णं हव्यवाहपुरोगमाः ॥ ३१
विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
वसिष्ठः कश्यपोऽत्रिश्च ब्रह्मलोकं निनीषवः ॥ ३२
सिकताः पृश्नयो गर्गा वालखिल्या मरीचिपाः ।
भृगवोऽङ्गिरसश्चैव सूक्ष्माश्चान्ये महर्षयः ॥ ३३
त एनमब्रुवन्सर्वे द्रोणमाहवशोभिनम् ।
अधर्मतः कृतं युद्धं समयो निधनस्य ते ॥ ३४
न्यस्यायुधं रणे द्रोण समीक्षास्मानवस्थितान् ।
नातः क्रूरतरं कर्म पुनः कर्तुमिहार्हसि ॥ ३५
वेदवेदाङ्गविदुषः सत्यधर्मरतस्य ते ।
ब्राह्मणस्य विशेषेण तवैतन्नोपपद्यते ॥ ३६
त्यजायुधममोघेषो तिष्ठ वर्त्मनि शाश्वते ।
परिपूर्णश्च कालस्ते वस्तुं लोकेऽद्य मानुषे ॥ ३७
ब्रह्मास्त्रेण त्वया दग्धा अनस्त्रज्ञा नरा भुवि ।
यदेतदीदृशं विप्र कृतं कर्म न साधु तत् ॥ ३८
न्यस्यायुधं रणे विप्र द्रोण मा त्वं चिरं कृथाः ।
मा पापिष्ठतरं कर्म करिष्यसि पुनर्द्विज ॥ ३९
इति तेषां वचः श्रुत्वा भीमसेनवचः स्मरन् ।
धृष्टद्युम्नं च संप्रेक्ष्य रणे स विमनाऽभवत् ॥ ४०
संदिह्यमानो व्यथितः कुन्तीपुत्रं युधिष्ठिरम् ।
अहतं वा हतं वेति पप्रच्छ सुतमात्मनः ॥ ४१
स्थिरा बुद्धिर्हि द्रोणस्य न पार्थो वक्ष्यतेऽनृतम् ।
त्रयाणामपि लोकानामैश्वर्यार्थे कथंचन ॥ ४२
तस्मात्तं परिपप्रच्छ नान्यं कंचिद्द्विजर्षभः ।
तस्मिंस्तस्य हि सत्याशा बाल्यात्प्रभृति पाण्डवे ४३
ततो निष्पाण्डवामुर्वीं करिष्यन्तं युधांपतिम् ।
द्रोणं ज्ञात्वा धर्मराजं गोविन्दो व्यथितोऽब्रवीत् ॥
यद्यर्धदिवसं द्रोणो युध्यते मन्युमास्थितः ।
सत्यं ब्रवीमि ते सेना विनाशं समुपैष्यति ॥ ४५
स भवांस्त्रातु नो द्रोणात्सत्याज्ज्यायोऽनृतं वचः ।
अनृतं जीवितस्यार्थे वदन्न स्पृश्यतेऽनृतैः ॥ ४६
तयोः संवदतोरेवं भीमसेनोऽब्रवीदिदम् ॥ ४७
श्रुत्वैवं तु महाराज वधोपायं महात्मनः ।
गाहमानस्य ते सेनां मालवस्येन्द्रवर्मणः ॥ ४८
अश्वत्थामेति विख्यातो गजः शक्रगजोपमः ।
निहतो युधि विक्रम्य ततोऽहं द्रोणमब्रुवम् ॥ ४९
अश्वत्थामा हतो ब्रह्मन्निवर्तस्वाहवादिति ।
नूनं नाश्रद्दधद्वाक्यमेष मे पुरुषर्षभः ॥ ५०
स त्वं गोविन्दवाक्यानि मानयस्व जयैषिणः ।
द्रोणाय निहतं शंस राजञ्शारद्वतीसुतम् ॥ ५१
त्वयोक्ते नैव युध्येत जातु राजन्द्विजर्षभः ।
सत्यवागिति लोकेऽस्मिन्भवान्ख्यातो जनाधिप ॥
तस्य तद्वचनं श्रुत्वा कृष्णवाक्यप्रचोदितः ।
भावित्वाच्च महाराज वक्तुं समुपचक्रमे ॥ ५३
तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।

जयैषिण इत्यस्य गोविन्दवाक्यानीत्यत्रैकदेशे गोविन्देऽन्वयः ॥ ५१ ॥ एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

'अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह ।'
अव्यक्तमब्रवीद्राजन्हतः कुञ्जर इत्युत ॥ ५४
तस्य पूर्वं रथः पृथ्व्याश्चतुरङ्गुलमुच्छ्रितः ।
बभूवैवं च तेनोक्ते तस्य वाहाः स्पृशन्महीम् ॥ ५५
युधिष्ठिरात्तु तद्वाक्यं श्रुत्वा द्रोणो महारथः ।
पुत्रव्यसनसंतप्तो निराशो जीवितेऽभवत् ॥ ५६
आगस्कृतमिवात्मानं पाण्डवानां महात्मनाम् ।
ऋषिवाक्येन मन्वानः श्रुत्वा च निहतं सुतम् ॥ ५७
विचेताः परमोद्विग्नो धृष्टद्युम्नमवेक्ष्य च ।
योद्धुं नाशक्नुवद्राजन्यथापूर्वमरिंदमः ॥ ५८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि पञ्चदशदिवसयुद्धे एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

## द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

अश्वत्थामवधश्रवणनिर्विण्णद्रोणमारणाय धृष्टद्युम्नस्योद्यमः ॥ १ ॥ द्रोणग्रस्तस्य धृष्टद्युम्नस्य सात्यकिना विमोचनम् ॥ २ ॥

सञ्जय उवाच ।
तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम् ।
पाञ्चालराजस्य सुतो धृष्टद्युम्नः समाद्रवत् ॥ १
य इष्ट्वा मनुजेन्द्रेण द्रुपदेन महामखे ।
लब्धो द्रोणविनाशाय समिद्धाद्धव्यवाहनात् ॥ २
स धनुर्जैत्रमादाय घोरं जलदनिःस्वनम् ।
दृढज्यमजरं दिव्यं शरं चाशीविषोपमम् ॥ ३
संदधे कार्मुके तस्मिंस्ततस्तमनलोपमम् ।
द्रोणं जिघांसुः पाञ्चाल्यो महाज्वालमिवानलम् ॥ ४
तस्य रूपं शरस्यासीद्धनुर्ज्यामण्डलान्तरे ।
द्योततो भास्करस्येव घनान्ते परिवेषिणः ॥ ५
पार्षतेन परामृष्टं ज्वलन्तमिव तद्धनुः ।
अन्तकालमनुप्राप्तं मेनिरे वीक्ष्य सैनिकाः ॥ ६
तमिषुं संहितं तेन भारद्वाजः प्रतापवान् ।
दृष्ट्वाऽमन्यत देहस्य कालपर्यायमागतम् ॥ ७
ततः प्रयत्नमातिष्ठदाचार्यस्तस्य वारणे ।
न चास्यास्त्राणि राजेन्द्र प्रादुरासन्महात्मनः ॥ ८
तस्य त्वहानि चत्वारि क्षपा चैकाऽस्यतो गता ।
तस्य चाह्नस्त्रिभागेन क्षयं जग्मुः पतत्रिणः ॥ ९
स शरक्षयमासाद्य पुत्रशोकेन चार्दितः ।
विविधानां च दिव्यानामस्त्राणामप्रसादतः ॥ १०
उत्स्रष्टुकामः शस्त्राणि ऋषिवाक्यप्रचोदितः ।
तेजसा पूर्यमाणश्च युयुधे न यथा पुरा ॥ ११
भूयश्चान्यत्समादाय दिव्यमाङ्गिरसं धनुः ।
शरांश्च ब्रह्मदण्डाभान्धृष्टद्युम्नमयोधयत् ॥ १२
ततस्तं शरवर्षेण महता समवाकिरत् ।
व्यशातयच्च संक्रुद्धो धृष्टद्युम्नममर्षणम् ॥ १३
शरांश्च शतधा तस्य द्रोणश्चिच्छेद सायकैः ।
ध्वजं धनुश्च निशितैः सारथिं चाप्यपातयत् ॥ १४
धृष्टद्युम्नः प्रहस्यान्यत्पुनरादाय कार्मुकम् ।
शितेन चैनं बाणेन प्रत्यविध्यत्स्तनान्तरे ॥ १५
सोऽतिविद्धो महेष्वासोऽसंभ्रान्त इव संयुगे ।
भल्लेन शितधारेण चिच्छेदास्य पुनर्धनुः ॥ १६
यच्चास्य बाणविकृतं धनूंषि च विशांपते ।
सर्वं चिच्छेद दुर्धर्षो गदां खड्गं च वर्जयन् ॥ १७
धृष्टद्युम्नं च विव्याध नवभिर्निशितैः शरैः ।
जीवितान्तकरैः क्रुद्धः शिलाधौतैः परंतपः ॥ १८
धृष्टद्युम्नोऽथ तस्याश्वान्स्वरथाश्वैर्महारथः ।
व्यामिश्रयदमेयात्मा ब्राह्ममस्त्रमुदीरयन् ॥ १९
ते मिश्रा बह्वशोभन्त जवना वातरंहसः ।
पारावतसवर्णाश्च शोणाश्च भरतर्षभ ॥ २०
यथा सविद्युतो मेघा नदन्तो जलदागमे ।
तथा रेजुर्महाराज मिश्रिता रणमूर्धनि ॥ २१
ईषाबन्धं चक्रबन्धं रथबन्धं तथैव च ।
प्राणाशयदमेयात्मा धृष्टद्युम्नस्य स द्विजः ॥ २२
स च्छिन्नधन्वा पाञ्चाल्यो निकृत्तध्वजसारथिः ।
उत्तमामापदं प्राप्य गदां वीरः परामृशत् ॥ २३
तामस्य विशिखैस्तीक्ष्णैः क्षिप्यमाणां महारथः ।
निजघान शरैर्द्रोणः क्रुद्धः सत्यपराक्रमः ॥ २४
तां तु दृष्ट्वा नरव्याघ्रो द्रोणेन निहतां शरैः ।

विमलं खड्गमादत्त शतचन्द्रं च भानुमत् ॥ २५
असंशयं तथाभूतः पाञ्चाल्यः साध्वमन्यत ।
वधमाचार्यमुख्यस्य प्राप्तकालं महात्मनः ॥ २६
ततः स रथनीडस्थं स्वरथस्य रथेषया ।
अगच्छदसिमुद्यम्य शतचन्द्रं च भानुमत् ॥ २७
चिकीर्षुर्दुष्करं कर्म धृष्टद्युम्नो महारथः ।
इयेष वक्षो भेत्तुं स भारद्वाजस्य संयुगे ॥ २८
सोऽतिष्ठद्युगमध्ये वै युगसन्नहनेषु च ।
जघनार्धेषु चाश्वानां तत्सैन्याः समपूजयन् ॥२९
तिष्ठतो युगपालीषु शोणानप्यधितिष्ठतः ।
नापश्यदन्तरं द्रोणस्तदद्भुतमिवाभवत् ॥ ३०
क्षिप्रं श्येनस्य चरतो यथैवामिषगृद्धिनः ।
तद्वदासीदभीसारो द्रोणपार्षतयो रणे ॥ ३१
तस्य पारावतानश्वान्रथशक्त्या पराभिनत् ।
सर्वानेकैकशो द्रोणो रक्तानश्वान्विवर्जयन् ॥ ३२
ते हता न्यपतन्भूमौ धृष्टद्युम्नस्य वाजिनः ।
शोणास्तु पर्यमुच्यन्त रथबन्धाद्विशांपते ॥ ३३
तान्हयान्निहतान्दृष्ट्वा द्विजाग्र्येण स पार्षतः ।
नामृष्यत युधां श्रेष्ठो याज्ञसेनिर्महारथः ॥ ३४
विरथः स गृहीत्वा तु खड्गं खड्गभृतां वरः ।
द्रोणमभ्यपतद्राजन्वैनतेय इवोरगम् ॥ ३५
तस्य रूपं बभौ राजन्भारद्वाजं जिघांसतः ।
यथा रूपं पुरा विष्णोर्हिरण्यकशिपोर्वधे ॥ ३६
स तदा विविधान्मार्गान्प्रवरांश्चैकविंशतिम् ।
दर्शयामास कौरव्य पार्षतो विचरन्रणे ॥ ३७
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतम् ।
परिवृत्तं निवृत्तं च खड्गं चर्म च धारयन् ॥ ३८
संपातं समुदीर्णं च दर्शयामास पार्षतः ।
भारतं कौशिकं चैव सात्वतं चैव शिक्षया ।
दर्शयन्व्यचरद्युद्धे द्रोणस्यान्तचिकीर्षया ॥ ३९
चरतस्तस्य तान्मार्गान्विचित्रान्खड्गचर्मिणः ।
व्यस्मयन्त रणे योधा देवताश्च समागताः ॥ ४०
ततः शरसहस्रेण शतचन्द्रमपातयत् ।
चर्म खड्गं च संबाधे धृष्टद्युम्नस्य स द्विजः ॥ ४१
ये तु वैतस्तिका नाम शरा आसन्नयोधिनः ।
निकृष्टयुद्धे द्रोणस्य नान्येषां सन्ति ते शराः ॥ ४२
ऋते शारद्वतात्पार्थाद्द्रौणेर्वैकर्तनात्तथा ।
प्रद्युम्नयुयुधानाभ्यामभिमन्योश्च भारत ॥ ४३
अथास्येषुं समाधत्त दृढं परमसंमतम् ।
अन्तेवासिनमाचार्यो जिघांसुः पुत्रसंमितम् ॥ ४४
तं शरैर्दशभिस्तीक्ष्णैश्चिच्छेद शिनिपुङ्गवः ।
पश्यतस्तव पुत्रस्य कर्णस्य च महात्मनः ।
ग्रस्तमाचार्यमुख्येन धृष्टद्युम्नममोचयत् ॥ ४५
चरन्तं रथमार्गेषु सात्यकिं सत्यविक्रमम् ।
द्रोणकर्णान्तरगतं कृपस्यापि च भारत ।
अपश्येतां महात्मानौ विष्वक्सेनधनञ्जयौ ॥ ४६
अपूजयेतां वार्ष्णेयं ब्रुवाणौ साधुसाध्विति ।
दिव्यान्यस्त्राणि सर्वेषां युधि निघ्नन्तमच्युतम् ४७
धनंजयस्ततः कृष्णमब्रवीत्पश्य केशव ।
आचार्यरथमुख्यानां मध्ये क्रीडन्मधूद्वहः ॥ ४८
आनन्दयति मां भूयः सात्यकिः परवीरहा ।
माद्रीपुत्रौ च भीमं च राजानं च युधिष्ठिरम् ॥ ४९
यच्छिक्षयाऽनुद्धतः सन्रणे चरति सात्यकिः ।
महारथानुपक्रीडन्वृष्णीनां कीर्तिवर्धनः ॥ ५०
तमेते प्रतिनन्दन्ति सिद्धाः सैन्याश्च विस्मिताः ।
अजय्यं समरे दृष्ट्वा साधुसाध्विति सात्यकिम् ।
योधाश्चोभयतः सर्वे कर्मभिः समपूजयन् ॥ ५१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि पञ्चदशदिवसयुद्धे द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

खड्गं चर्म च धारयन्भ्रान्तादित्रयोदशविधं संचरणं दर्शयामासेति संबन्धः ॥ ३८ ॥ संबाधे रणसंकटे ॥ ४१ ॥ वैतस्तिकाः वितस्तिप्रमाणाः ॥ ४२ ॥ द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

## त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

द्रोणधृष्टद्युम्नयोर्युद्धम् ॥ १ ॥ द्रोणेन सोपालम्भभीमवचःश्रवणेन शस्त्रन्यासपूर्वकं योगेन शरीरत्यागः ॥ २ ॥ शरीरान्निर्गच्छतस्तेजोरूपस्य द्रोणस्य सञ्जयादिभिः पञ्चभिरेवावलोकनम् ॥ ३ ॥ धृष्टद्युम्नेन द्रोणशिरश्छेदः ॥ ४ ॥

सञ्जय उवाच ।
[सात्वतस्य तु तत्कर्म दृष्ट्वा दुर्योधनादयः ।
शैनेयं सर्वतः क्रुद्धा वारयामासुरञ्जसा ॥ १
कृपकर्णौ च समरे पुत्राश्च तव मारिष ।
शैनेयं त्वरयाऽभ्येत्य विनिघ्नन्निशितैः शरैः ॥ २
युधिष्ठिरस्ततो राजा माद्रीपुत्रौ च पाण्डवौ ।
भीमसेनश्च बलवान्सात्यकिं पर्यवारयन् ॥ ३
कर्णश्च शरवर्षेण गौतमश्च महारथः ।
दुर्योधनादयस्ते च शैनेयं पर्यवारयन् ॥ ४
तां वृष्टिं सहसा राजन्नुत्थितां घोररूपिणीम् ।
वारयामास शैनेयो योधयंस्तान्महारथान् ॥ ५
तेषामस्त्राणि दिव्यानि संहितानि महात्मनाम्
वारयामास विधिवद्दिव्यैरस्त्रैर्महामृधे ॥ ६
क्रूरमायोधनं जज्ञे तस्मिन्राजसमागमे ।
रुद्रस्येव हि क्रुद्धस्य निघ्नतस्तान्पशून्पुरा ॥ ७
हस्तानामुत्तमाङ्गानां कार्मुकाणां च भारत ।
छत्राणां चापविद्धानां चामराणां च संचयैः ।
राशयः स्म व्यदृश्यन्त तत्रतत्र रणाजिरे ॥ ८
भग्नचक्रै रथैश्चापि पातितैश्च महाध्वजैः ।
सादिभिश्च हतैः शूरैः संकीर्णा वसुधाऽभवत् ॥ ९
बाणपातनिकृत्तास्तु योधास्ते कुरुसत्तम ।
चेष्टन्तो विविधाश्चेष्टा व्यदृश्यन्त महाहवे ॥ १०
वर्तमाने तथा युद्धे घोरे देवासुरोपमे ।
अब्रवीत्क्षत्रियांस्तत्र धर्मराजो युधिष्ठिरः ॥ ११
अभिद्रवत संयत्ताः कुम्भयोनिं महारथाः ।
एषो हि पार्षतो वीरो भारद्वाजेन संगतः ॥ १२
घटते च यथाशक्ति भारद्वाजस्य नाशने ।
यादृशानि हि रूपाणि दृश्यन्तेऽस्य महारणे ॥ १३
अद्य द्रोणं रणे क्रुद्धो घातयिष्यति पार्षतः ।
ते यूयं सहिता भूत्वा युध्यध्वं कुम्भसंभवम् ॥ १४
युधिष्ठिरसमाज्ञप्ताः सृञ्जयानां महारथाः ।
अभ्यद्रवन्त संयत्ता भारद्वाजजिघांसवः ॥ १५
तान्समापततः सर्वान्भारद्वाजो महारथः ।
अभ्यवर्तत वेगेन मर्तव्यमिति निश्चितः ॥ १६
प्रयाते सत्यसन्धे तु समकम्पत मेदिनी ।
ववुर्वाताः सनिर्घातास्त्रासयाना वरूथिनीम् ॥ १७
पपात महती चोल्का आदित्यान्निश्चरन्त्युत ।
दीपयन्ती उभे सेने शंसन्तीव महद्भयम् ॥ १८
जज्वलुश्चैव शस्त्राणि भारद्वाजस्य मारिष ।
रथाः स्वनन्ति चात्यर्थं हयाश्चाश्रूण्यवासृजन् ॥ १९
हतौजा इव चाप्यासीद्भारद्वाजो महारथः ।
प्रास्फुरन्नयनं चास्य वामबाहुस्तथैव च ॥ २०
विमनाश्चाभवद्युद्धे दृष्ट्वा पार्षतमग्रतः ॥ २१
ऋषीणां ब्रह्मवादानां स्वर्गस्य गमनं प्रति ।
सुयुद्धेन ततः प्राणानुत्स्रष्टुमुपचक्रमे ॥ ] २२
ततश्चतुर्दिशं सैन्यैर्द्रुपदस्याभिसंवृतः ।
निर्दहन्क्षत्रियव्रातान्द्रोणः पर्यचरद्रणे ॥ २३
हत्वा विंशतिसाहस्रान्क्षत्रियानरिमर्दनः ।
दशायुतानि करिणामवधीद्विशिखैः शितैः ॥ २४
सोऽतिष्ठदाहवे यत्तो विधूमोऽग्निरिव ज्वलन् ।
क्षत्रियाणामभावाय ब्राह्ममस्त्रं समास्थितः ॥ २५
पाञ्चाल्यं विरथं भीमो हतसर्वायुधं बली ।
सुविषण्णं महात्मानं त्वरमाणः समभ्ययात् ॥ २६
ततः स्वरथमारोप्य पाञ्चाल्यमरिमर्दनः ।
अब्रवीदभिसंप्रेक्ष्य द्रोणमस्यन्तमन्तिकात् ॥ २७
न त्वदन्य इहाचार्यं योद्धुमुत्सहते पुमान् ।
त्वरस्व प्राग्वधायैव त्वयि भारः समाहितः ॥ २८
स तथोक्तो महाबाहुः सर्वभारसहं धनुः ।

एषो हीति संधिरार्षः ॥१२॥ ब्रह्मवादानां वेदतुल्यानां वचनानाम् । द्वितीयार्थे षष्ठी । श्रुत्वेति शेषः ॥ २२ ॥

* कुण्डलिताः २२ श्लोकाः ङपुस्तकएव दृश्यन्ते ।

अभिपत्यादधे क्षिप्रमायुधप्रवरं दृढम् ॥ २९
संरब्धश्च शरानस्यन्द्रोणं दुर्वारणं रणे ।
विवारयिषुराचार्यं शरवर्षैरवाकिरत् ॥ ३०
तौ न्यवारयतां श्रेष्ठौ संरब्धौ रणशोभिनौ ।
उदीरयेतां ब्राह्माणि दिव्यान्यस्त्राण्यनेकशः ॥ ३१
स महास्त्रैर्महाराज द्रोणमाच्छादयद्रणे ।
निहत्य सर्वाण्यस्त्राणि भारद्वाजस्य पार्षतः ॥ ३२
स वसातीञ्शिबींश्चैव बाह्लीकान्कौरवानपि ।
रक्षिष्यमाणान्संग्रामे द्रोणं व्यधमदच्युतः ॥ ३३
धृष्टद्युम्नस्तथा राजन्गभस्तिभिरिवांशुमान् ।
बभौ प्रच्छादयन्नाशाः शरजालैः समन्ततः ॥ ३४
तस्य द्रोणो धनुश्छित्त्वा विद्ध्वा चैनं शिलीमुखैः ।
मर्माण्यभ्यहनद्भूयः स व्यथां परमामगात् ॥ ३५
ततो भीमो दृढक्रोधो द्रोणस्याश्लिष्य तं रथम् ।
शनकैरिव राजेन्द्र द्रोणं वचनमब्रवीत् ॥ ३६
यदि नाम न युध्येरञ्शिक्षिता ब्रह्मबन्धवः ।
स्वकर्मभिरसंतुष्टा न स्म क्षत्रं क्षयं व्रजेत् ॥ ३७
अहिंसां सर्वभूतेषु धर्मं ज्यायस्तरं विदुः ।
तस्य च ब्राह्मणो मूलं भवांश्च ब्रह्मवित्तमः ॥ ३८
श्वपाकवन्म्लेच्छगणान्हत्वा चान्यान्पृथग्विधान् ।
'भरन्ति हि सुतान्दारांस्तद्वदज्ञानमोहिताः ॥' ३९
अज्ञानान्मूढवद्ब्रह्मन्पुत्रदारधनेप्सया ।
एकस्यार्थे बहून्हत्वा पुत्रस्याधर्मविद्यया
स्वकर्मस्थान्विकर्मस्थो न व्यपत्रपसे कथम् ॥ ४०
'आचारहीन निर्लज्ज ब्रह्मबन्धो वरायुध ।
इदानीं तिष्ठ दुर्बुद्धे न मे जीवन्विमोक्ष्यसे ॥' ४१
यस्यार्थे शस्त्रमादाय यमपेक्ष्य च जीवसि ।
स चाद्य पतितः शेते पृष्टेनावेदितस्तव ॥ ४२
'स वै च निहतः शेते तव पुत्रः सुमन्दधीः ।'
धर्मराजस्य तद्वाक्यं नाभिशङ्कितुमर्हसि ॥ ४३
एवमुक्तस्ततो द्रोणो भीमेनोत्सृज्य तद्धनुः ।
'संन्यासाय शरीरस्य योक्ष्यमाणः स वै द्विजः ।'
सर्वाण्यस्त्राणि धर्मात्मा हातुकामोऽभ्यभाषत ४४

'कर्णं दुर्योधनं राजंस्त्वरमाणः पराक्रमम् ।'
कर्णकर्ण महेष्वास कृप दुर्योधनेति च ॥ ४५
संग्रामे क्रियतां यत्नो ब्रवीम्येष पुनःपुनः ।
पाण्डवेभ्यः शिवं वोऽस्तु शस्त्रमभ्युत्सृजाम्यहम् ।
इति तत्र महाराज प्राक्रोशद्द्रौणिमेव च ॥ ४६
उत्सृज्य च रणे शस्त्रं रथोपस्थे निविश्य च ।
अभयं सर्वभूतानां प्रददौ योगमीयिवान् ॥ ४७
तस्य तच्छिद्रमाज्ञाय धृष्टद्युम्नः प्रतापवान् ।
सशरं तद्धनुर्घोरं संन्यस्याथ रथे ततः ।
खड्गी रथादवप्लुत्य सहसा द्रोणमभ्ययात् ॥ ४८
'प्रद्रुते त्वथ द्रोणाय धृष्टद्युम्ने महारथे ।'
हाहाकृतानि भूतानि मानुषाणीतराणि च ॥ ४९
द्रोणं तथागतं दृष्ट्वा धृष्टद्युम्नवशं गतम् ।
हाहाकारं भृशं चक्रुरहो धिगिति चाब्रुवन् ॥ ५०
द्रोणोऽपि शस्त्राण्युत्सृज्य परमं साङ्ख्यमास्थितः ।
तथोक्त्वा योगमास्थाय ज्योतिर्भूतो महातपाः ५१
पुराणं पुरुषं विष्णुं जगाम मनसा परम् ।
मुखं किंचित्समुन्नाम्य विष्टभ्योरस्तथाग्रतः ॥ ५२
निमीलिताक्षः सत्वस्थो निक्षिप्य हृदि धारणाम् ।
ओमित्येकाक्षरं ब्रह्म ज्योतिर्भूतो महातपाः ॥ ५३
स्मरित्वा देवदेवेशमक्षरं परमं प्रभुम् ।
दिवमाक्रामदाचार्यः साक्षात्सद्भिर्दुराक्रमाम् ५४
'मूर्धानं तस्य निर्भिद्य ज्योती राजन्महात्मनः ।
जगाम परमं स्थानं देहं न्यस्य रथोत्तमे ॥' ५५
द्वौ सूर्याविति नो बुद्धिरासीत्तस्मिंस्तथागते ।
एकरूपमिवाभासीज्ज्योतिर्भिः पूरितं नभः ॥ ५६
समपद्यत चोल्काभं द्रोणस्य निधने तदा ।
निमेषमात्रेण च तज्ज्योतिरन्तरधीयत ॥ ५७
आसीत्किलकिलाशब्दः प्रहृष्टानां दिवौकसाम् ।
ब्रह्मलोकगते द्रोणे धृष्टद्युम्ने च मोहिते ॥ ५८
वयमेव तदाऽद्राक्ष्म पञ्च मानुषयोनयः ।
योगयुक्तं महात्मानं गच्छन्तं परमां गतिम् ॥ ५९
अहं धनंजयः पार्थः कृपः शारद्वतो द्विजः ।
वासुदेवश्च वार्ष्णेयो धर्मपुत्रश्च पाण्डवः ॥ ६०
अन्ये तु सर्वे नापश्यन्भारद्वाजस्य धीमतः ।

पृष्टेन त्वया पृष्टेन युधिष्ठिरेण आवेदितः हत इति निवेदितः ॥४२॥

महिमानं महाराज योगयुक्तस्य गच्छतः ।
ब्रह्मलोकं महद्दिव्यं देवगुह्यं हि तत्परम् ॥ ६१
गतिं परमिकां प्राप्तमजानन्तो नृयोनयः ।
नापश्यन्गच्छमानं हि तं सार्धमृषिपुङ्गवैः ।
आचार्यं योगमास्थाय ब्रह्मलोकमरिंदमम् ॥ ६२
वितुन्नाङ्गं शरव्रातैर्न्यस्तायुधमसृक्क्षरम् ।
विक्रुष्य पार्षतः खड्गं क्रोधामर्षवशं गतः ।
दृश्यमानः सर्वभूतैः केशपक्षे परामृशत् ॥ ६३
तस्य मूर्धानमालम्ब्य गतसत्त्वस्य देहिनः ।
किंचिदब्रुवतः कायाद्विचकर्तासिना शिरः ॥ ६४
हर्षेण महता युक्तो भारद्वाजे निपातिते ।
सिंहनादरवं चक्रे भ्रामयन्खड्गमाहवे ॥ ६५
आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः ।
त्वत्कृते व्यचरत्सङ्ख्ये स तु षोडशवर्षवत् ॥ ६६
उक्तवांश्च महाबाहुः कुन्तीपुत्रो धनञ्जयः
जीवन्तमानयाचार्यं मा वधीर्द्रुपदात्मज ॥ ६७
न हन्तव्यो न हन्तव्य इति ते सैनिकाश्च ह ।
उत्क्रोशन्नर्जुनश्चैव सानुक्रोशस्तमाव्रजत् ॥ ६८
क्रोशमानेऽर्जुने चैव पार्थिवेषु च सर्वशः ।
धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नरर्षभम् ॥ ६९
शोणितेन परिक्लिन्नो रथाद्भूमिमथापतत् ।
लोहिताङ्ग इवादित्यो दुर्धर्षः समपद्यत ॥ ७०
एवं तं निहतं सङ्ख्ये ददृशे सैनिको जनः ।
धृष्टद्युम्नस्तु तद्राजन्भारद्वाजशिरोऽहरत् ॥ ७१
तावकानां महेष्वासः प्रमुखे तत्समाक्षिपत् ।
ते तु दृष्ट्वा शिरो राजन्भारद्वाजस्य तावकाः ॥ ७२
पलायनकृतोत्साहा दुद्रुवः सर्वतोदिशम् ।
द्रोणस्तु दिवमास्थाय नक्षत्रपथमाविशत् ॥ ७३
अहमेव तदाऽद्राक्षं द्रोणस्य निधनं नृप ।
ऋषेः प्रसादात्कृष्णस्य सत्यवत्याः सुतस्य च ॥ ७४
विधूमामिह संयान्तीमुल्कां प्रज्वलितामिव
अपश्याम दिवं स्तब्ध्वा गच्छन्तं तं महाद्युतिम् ७५
हते द्रोणे निरुत्साहाः कुरुपाण्डवसृञ्जयाः ।
अभ्यद्रवन्महावेगास्ततः सैन्यं व्यदीर्यत ॥ ७६
निहता हतभूयिष्ठाः संग्रामे निशितैः शरैः ।
तावका निहते द्रोणे गतासव इवाभवन् ॥ ७७
पराजयमथावाप्य परत्र च महद्भयम् ।
उभयेनैव ते हीना व्यनिन्दन्मतिमात्मनः ॥ ७८
अन्विच्छन्तः शरीरं तु भारद्वाजस्य पार्थिवाः
नान्वगच्छन्महाराज कबन्धायुतसंकुले ॥ ७९
'पतिते त्वथ संरब्धे सेनायां तत्र भारत ।
उदतिष्ठन्कबन्धानां सहस्राण्येकविंशतिः ॥ ८०
शोणितेन परिक्लिन्ना रणभूमिश्च भारत ।
लोहितार्द्र इवादित्यो दुर्दर्शश्चाभवत्तदा ॥' ८१
पाण्डवास्तु जयं लब्ध्वा परत्र च महद्यशः ।
बाणशङ्खरवांश्चक्रुः सिंहनादांश्च पुष्कलान् ॥ ८२
भीमसेनस्ततो राजन्धृष्टद्युम्नश्च पार्षतः ।
वरूथिन्यामनृत्येतां परिष्वज्य परस्परम् ॥ ८३
अब्रवीच्च तदा भीमः पार्षतं शत्रुतापनम् ।
भूयोऽहं त्वां परिष्वज्य परिवक्ष्यामि पार्षत ।
सूतपुत्रे हते पापे धार्तराष्ट्रे च संयुगे ॥ ८४
एतावदुक्त्वा भीमस्तु हर्षेण महता युतः ।
बाहुशब्देन पृथिवीं कम्पयामास पाण्डवः ॥ ८५
तस्य शब्देन वित्रस्ताः प्राद्रवंस्तावका युधि ।
क्षत्रधर्मं समुत्सृज्य पलायनपरायणाः ॥ ८६
पाण्डवास्तु जयं लब्ध्वा हृष्टा ह्यासन्विशांपते ।
अरिक्षयं च संग्रामे तेन ते सुखमाप्नुवन् ॥ ८७

॥ इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि पञ्चदशदिवसयुद्धे त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

॥ समाप्तं च द्रोणवधपर्व ॥

परत्र च महद्भयमिति पलायनस्य परलोकविरुद्धत्वात् । उभयेन लोकद्वयेन हीना रहिताः ॥ ७८ ॥

त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

# ( अथ नारायणास्त्रमोक्षपर्व ॥ ८ ॥ )

## चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

दुर्योधनचोदनया कृपेण द्रोणवधं श्रावितस्याश्वत्थाम्नः कोपोदयः ॥ १ ॥

सञ्जय उवाच ।
ततो द्रोणे हते राजन्कुरवः शस्त्रपीडिताः ।
हतप्रवीरा विध्वस्ता भृशं शोकपरायणाः ॥ १
उदीर्णांश्च परान्दृष्ट्वा हर्षमाणान्पुनःपुनः ।
अश्रुपूर्णेक्षणास्त्रस्ता दीनास्त्वासन्विशांपते ॥ २
विचेतसो हतोत्साहाः कश्मलाभिहतौजसः ।
आर्तस्वरेण महता पुत्रं ते पर्यवारयन् ॥ ३
विषण्णवदना दीना वीक्षमाणा दिशो दश ।
अश्रुकण्ठा यथा दैत्या हिरण्याक्षे पुरा हते ॥ ४
स तैः परिवृतो राजा त्रस्तैः क्षुद्रमृगैरिव ।
अशक्नुवन्नवस्थातुमपायात्तनयस्तव ॥ ५
क्षुत्पिपासापरिम्लानास्ते योधास्तव भारत ।
आदित्येनेव संतप्ता भृशं विमनसोऽभवन् ॥ ६
भास्करस्येव पतनं समुद्रस्येव शोषणम् ।
विपर्यासं यथा मेरोर्वासवस्येव निर्जयम् ॥ ७
अप्रेक्षणीयं तद्दृष्ट्वा भारद्वाजस्य पातनम् ।
त्रस्तरूपतरा राजन्कौरवाः प्राद्रवन्भयात् ॥ ८
गान्धारराजः शकुनिस्त्रस्तस्त्रस्ततरैः सह ।
हतं रुक्मरथं श्रुत्वा प्राद्रवत्सहितो रथैः ॥ ९
वरूथिनीं वेगवतीं विद्रुतां सपताकिनीम् ।
परिगृह्य महासेनां सूतपुत्रोऽपयाद्भयात् ॥ १०
रथनागाश्वकलिलां पुरस्कृत्य तु वाहिनीम् ।
मद्राणामीश्वरः शल्यो वीक्षमाणोऽपयाद्भयात् ११
हतप्रवीरैर्भूयिष्ठैर्ध्वजैर्बहुपताकिभिः ।
वृतः शारद्वतोऽगच्छत्कष्टंकष्टमिति ब्रुवन् ॥ १२
भोजानीकेन शिष्टेन कलिङ्गारट्टबाह्लिकैः ।
कृतवर्मा वृतो राजन्प्रायात्सुजवनैर्हयैः ॥ १३
पदातिगणसंयुक्तस्त्रस्तो राजन्भयार्दितः ।
उलूकः प्राद्रवत्तत्र दृष्ट्वा द्रोणं निपातितम् ॥ १४
दर्शनीयो युवा चैव शौर्येण कृतलक्षणः ।
दुःशासनो भृशोद्विग्नः प्राद्रवद्गजसंवृतः ॥ १५
रथानामयुतं गृह्य त्रिसाहस्रं च दन्तिनाम् ।
वृषसेनो ययौ तूर्णं दृष्ट्वा द्रोणं निपातितम् ॥ १६
गजाश्वरथसंयुक्तो वृतश्चैव पदातिभिः ।
दुर्योधनो महाराज प्रायात्तत्र महारथः ॥ १७
संशप्तकगणान्गृह्य हतशेषान्किरीटिना ।
सुशर्मा प्राद्रवद्राजन्दृष्ट्वा द्रोणं निपातितम् ॥ १८
गजान्रथान्समारुह्य व्युदस्य च हयाञ्जनाः ।
प्राद्रवन्सर्वतः सङ्ख्ये दृष्ट्वा रुक्मरथं हतम् ॥ १९
त्वरयन्तः पितॄनन्ये भ्रातॄनन्येऽथ मातुलान् ।
पुत्रानन्ये वयस्यांश्च प्राद्रवन्कुरवस्तदा ॥ २०
चोदयन्तश्च सैन्यानि स्वस्रीयांश्च तथाऽपरे ।
संबन्धिनस्तथाऽन्ये च प्राद्रवन्त दिशो दश ॥२१
प्रकीर्णकेशा विध्वस्ता न द्वावेकत्र धावतः ।
नेदमस्तीति मन्वाना हतोत्साहा हतौजसः ॥ २२
उत्सृज्य कवचानन्ये प्राद्रवंस्तावका विभो ।
अन्योन्यं ते समाक्रोशन्सैनिका भरतर्षभ ॥ २३
तिष्ठतिष्ठेति न च ते स्वयं तत्रावतस्थिरे ।
धुर्यानुन्मुच्य च रथाद्धतसूतात्स्वलंकृतान् ।
अधिरुह्य हयान्योधाः क्षिप्रं पद्भिरचोदयन् ॥ २४
द्रवमाणे तथा सैन्ये त्रस्तरूपे हतौजसि ।
प्रतिस्रोत इव ग्राहो द्रोणपुत्रः परानियात् ॥ २५
तस्यासीत्सुमहद्युद्धं शिखण्डिप्रमुखैर्गणैः ।
प्रभद्रकैश्च पाञ्चालैश्चेदिभिश्च सकेकयैः ॥ २६
हत्वा बहुविधाः सेनाः पाण्डूनां युद्धदुर्मदः ।
कथंचित्संकटान्मुक्तो मत्तद्विरदविक्रमः ॥ २७
द्रवमाणं बलं दृष्ट्वा पलायनकृतक्षणम् ।
दुर्योधनं समासाद्य द्रोणपुत्रोऽब्रवीदिदम् ॥ २८
किमियं द्रवते सेना त्रस्तरूपेव भारत ।
द्रवमाणां च राजेन्द्र नावस्थापयसे रणे ॥ २९

त्वं चापि न यथा पूर्वं प्रकृतिस्थो नराधिप ।
कर्णप्रभृतयश्चेमे नावतिष्ठन्ति पार्थिव ॥ ३०
अन्येष्वपि च युद्धेषु नैव सेनाऽद्रवत्तदा ।
कच्चित्क्षेमं महाबाहो तव सैन्यस्य भारत ॥ ३१
कस्मिन्निदं हते राजन्रथसिंहे बलं तव ।
एतामवस्थां संप्राप्तं तन्ममाचक्ष्व कौरव ॥ ३२
तत्तु दुर्योधनः श्रुत्वा द्रोणपुत्रस्य भाषितम् ।
घोरमप्रियमाख्यातुं नाशक्नोत्पार्थिवर्षभः ॥ ३३
भिन्ना नौरिव ते पुत्रो मग्नः शोकमहार्णवे ।
बाष्पेणापिहितो दृष्ट्वा द्रोणपुत्रं रथे स्थितम् ॥ ३४
ततः शारद्वतं राजा सव्रीडमिदमब्रवीत् ।
शंसात्र भद्रं ते सर्वं यथा सैन्यमिदं द्रुतम् ॥ ३५
अथ शारद्वतो राजन्नार्तिमार्च्छन्पुनःपुनः ।
शशंस द्रोणपुत्राय यथा द्रोणो निपातितः ॥ ३६
कृप उवाच ।
वयं द्रोणं पुरस्कृत्य पृथिव्यां प्रवरं रथम् ।
प्रावर्तयाम संग्रामं पाञ्चालैरेव केवलम् ॥ ३७
ततः प्रवृत्ते संग्रामे विमिश्राः कुरुसोमकाः ।
अन्योन्यमभिगर्जन्तः शस्त्रैर्देहानपातयन् ॥ ३८
वर्तमाने तथा युद्धे क्षीयमाणेषु संयुगे ।
धार्तराष्ट्रेषु संक्रुद्धः पिता तेऽस्त्रमुदैरयत् ॥ ३९
ततो द्रोणो ब्राह्ममस्त्रं विकुर्वाणो नरर्षभः ।
व्यहनच्छात्रवान्भल्लैः शतशोऽथ सहस्रशः ॥ ४०
पाण्डवाः केकया मात्स्याः पाञ्चालाश्च विशेषतः ।
सङ्ख्ये द्रोणरथं प्राप्य व्यनशन्कालचोदिताः ॥ ४१
सहस्रं नरसिंहानां द्विसाहस्रं च दन्तिनाम् ।
द्रोणो ब्रह्मास्त्रयोगेन प्रेषयामास मृत्यवे ॥ ४२
आकर्णपलितश्यामो वयसाऽशीतिपञ्चकः ।
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ ४३
क्लिश्यमानेषु सैन्येषु वध्यमानेषु राजसु ।
अमर्षवशमापन्नाः पाञ्चाला विमुखाऽभवन् ॥ ४४
तेषु किंचित्प्रभग्नेषु विमुखेषु सपत्नजित् ।
दिव्यमस्त्रं विकुर्वाणो बभूवार्क इवोदितः ॥ ४५
स मध्यं प्राप्य पाण्डूनां शररश्मिः प्रतापवान् ।
मध्यं गत इवादित्यो दुष्प्रेक्ष्यस्ते पिताऽभवत् ॥ ४६
ते दह्यमाना द्रोणेन सूर्येणेव विराजता ।
दग्धवीर्या निरुत्साहा बभूवुर्गतचेतसः ॥ ४७
तान्दृष्ट्वा पीडितान्बाणैर्द्रोणेन मधुसूदनः ।
जयैषी पाण्डुपुत्राणामिदं वचनमब्रवीत् ॥ ४८
नैष जातु नरैः शक्यो जेतुं शस्त्रभृतां वरः ।
अपि वृत्रहणा सङ्ख्ये रथयूथपयूथपः ॥ ४९
ते यूयं धर्ममुत्सृज्य जयं रक्षत पाण्डवाः ।
यथा वः संयुगे सर्वान्न हन्याद्रुक्मवाहनः ॥ ५०
अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम ।
हतं तं संयुगे कश्चिदाख्यात्वस्मै मृषा नरः ॥ ५१
एतन्नारोचयद्वाक्यं कुन्तीपुत्रो धनञ्जयः ।
अरोचयंस्तु सर्वेऽन्ये कृच्छ्रेण तु युधिष्ठिरः ॥ ५२
भीमसेनस्तु सव्रीडमब्रवीत्पितरं तव ।
अश्वत्थामा हत इति तं नाबुध्यत ते पिता ॥ ५३
स शङ्कमानस्तन्मिथ्या धर्मराजमपृच्छत ।
हतं वाऽप्यहतं वाऽऽजौ त्वां पिता पुत्रवत्सलः ॥ ५४
तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।
अश्वत्थामानमायोधे हतं दृष्ट्वा महागजम् ॥ ५५
भीमेन गिरिवर्ष्माणं मालवस्येन्द्रवर्मणः ।
उपसृत्य तदा द्रोणमुच्चैरिदमुवाच ह ॥ ५६
यस्यार्थे शस्त्रमादत्से यमवेक्ष्य च जीवसि ।
पुत्रस्ते दयितो नित्यं सोऽश्वत्थामा निपातितः ॥ ५७
शेते विनिहतो भूमौ वने सिंहशिशुर्यथा ॥ ५८
जानन्नप्यनृतस्याथ दोषान्स द्विजसत्तमम् ।
अव्यक्तमब्रवीद्राजा हतः कुञ्जर इत्युत ॥ ५९
स त्वां निहतमाक्रन्दे श्रुत्वा संतापतापितः ।
नियम्य दिव्यान्यस्त्राणि नायुध्यत यथा पुरा ॥ ६०
तं दृष्ट्वा परमोद्विग्नं शोकातुरमचेतसम् ।
पाञ्चालराजस्य सुतः क्रूरकर्मा समाद्रवत् ॥ ६१
तं दृष्ट्वा विहितं मृत्युं लोकतत्त्वविचक्षणः ।
दिव्यान्यस्त्राण्यथोत्सृज्य रणे प्रायमुपाविशत् ६२
ततोऽस्य केशान्सव्येन गृहीत्वा पाणिना तदा ।
पार्षतः क्रोशमानानां वीराणामच्छिनच्छिरः ॥ ६३
न हन्तव्यो न हन्तव्य इति ते सर्वतोऽब्रुवन् ।

तथैव चार्जुनो बाहादवरुह्यैनमाद्रवत् ॥ ६४
उद्यम्य त्वरितो बाहुं ब्रुवाणश्च पुनःपुनः ।
जीवन्तमानयाचार्यं मावधीरिति धर्मवित् ॥ ६५
तथा निवार्यमाणेन कौरवैरर्जुनेन च ।
हत एव नृशंसेन पिता तव नरर्षभ ॥ ६६
सैनिकाश्च ततः सर्वे प्राद्रवन्त भयार्दिताः ।
वयं चापि निरुत्साहा हते पितरि तेऽनघ ॥ ६७
सञ्जय उवाच ।
तच्छ्रुत्वा द्रोणपुत्रस्तु निधनं पितुराहवे ।
क्रोधमाहारयत्तीव्रं दण्डाहत इवोरगः ॥ ६८
ततः क्रुद्धो रणे द्रौणिर्भृशं जज्वाल मारिष ।
यथेन्धनं महत्प्राप्य प्राज्वलद्धव्यवाहनः ॥ ६९
तलं तलेन निष्पिष्य दन्तैर्दन्तानुपास्पृशत् ।
निःश्वसन्नुरगो यद्वल्लोहिताक्षोऽभवत्तदा ॥ ७०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि पञ्चदशदिवसयुद्धे चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

## पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

धृतराष्ट्रेण सञ्जयंप्रति द्रोणवधश्राविणाश्वत्थाम्ना किमुक्तमिति प्रश्नः ॥ १ ॥

धृतराष्ट्र उवाच ।
अधर्मेण हतं श्रुत्वा धृष्टद्युम्नेन सञ्जय ।
ब्राह्मणं पितरं वृद्धमश्वत्थामा किमब्रवीत् ॥ १
मानवं वारुणाग्नेयं ब्राह्ममस्त्रं च वीर्यवान् ।
ऐन्द्रं नारायणं चैव यस्मिन्नित्यं प्रतिष्ठितम् ॥ २
तमधर्मेण धर्मिष्ठं धृष्टद्युम्नेन संयुगे ।
श्रुत्वा निहतमाचार्यं सोऽश्वत्थामा किमब्रवीत् ॥ ३
येन रामादवाप्येह धनुर्वेदं महात्मना ।
प्रोक्तान्यस्त्राणि दिव्यानि पुत्राय गुणकाङ्क्षिणा ॥ ४
एकमेव हि लोकेऽस्मिन्नात्मतो गुणवत्तरम् ।
इच्छन्ति पुरुषाः पुत्रं लोके नान्यं कथंचन ॥ ५
आचार्याणां भवन्त्येव रहस्यानि महात्मनाम् ।
तानि पुत्राय वा दद्युः शिष्यायानुगताय वा ॥ ६
स शिष्यः प्राप्य तत्सर्वं सविशेषं च सञ्जय ।
शूरः शारद्वतीपुत्रः सङ्ख्ये द्रोणादनन्तरः ॥ ७
रामस्य तु समः शस्त्रे पुरंदरसमो युधि ।
कार्तवीर्यसमो वीर्ये बृहस्पतिसमो मतौ ॥ ८
महीधरसमः स्थैर्ये तेजसाऽग्निसमो युवा ।
समुद्र इव गाम्भीर्ये क्रोधे चाशीविषोपमः ॥ ९
स रथी प्रथमो लोके दृढधन्वा जितक्लमः ।
शीघ्रोऽनिल इवाक्रन्दे चरन्क्रुद्ध इवान्तकः ॥ १०
अस्यता येन संग्रामे धरण्यभिनिपीडिता ।
'मेघस्तनितनिर्घोषं कम्पते भयविह्वला ।'
यो न व्यथति संग्रामे वीरः सत्यपराक्रमः ॥ ११
वेदस्नातो व्रतस्नातो धनुर्वेदे च पारगः ।
महोदधिरिवाक्षोभ्यो रामो दाशरथिर्यथा ॥ १२
तमधर्मेण धर्मिष्ठं धृष्टद्युम्नेन संयुगे ।
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ॥ १३
धृष्टद्युम्नस्य यो मृत्युः सृष्टस्तेन महात्मना ।
यथा द्रोणस्य पाञ्चाल्यो यज्ञसेनसुतोऽभवत् ॥ १४
तं नृशंसेन पापेन क्रूरेणादीर्घदर्शिना ।
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ॥ १५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि पञ्चदशदिवसयुद्धे पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

## षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

अश्वत्थाम्ना सक्रोधं युधिष्ठिराद्युपालम्भः ॥ १ ॥ तथा द्रोणस्य नारायणास्त्रलाभप्रकारादिकथनपूर्वकं तेन पाण्डवादिवध प्रतिज्ञानम् ॥ २ ॥

सञ्जय उवाच ।
छद्मना निहतं श्रुत्वा पितरं पापकर्मणा ।
बाष्पेणापूर्यत द्रौणी रोषेण च नरर्षभ ॥ १
तस्य क्रुद्धस्य राजेन्द्र वपुर्दीप्तमदृश्यत ।

· पुत्राय गुरुकाङ्क्षिणे इति· क. झ. पाठः ॥ ४ ॥

पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

अन्तकस्येव भूतानि जिहीर्षोः कालपर्यये ॥ २
अश्रुपूर्णे ततो नेत्रे व्यपमृज्य पुनः पुनः ।
उवाच कोपान्निःश्वस्य दुर्योधनमिदं वचः ॥ ३
पिता मम यथा क्षुद्रैर्न्यस्तशस्त्रो निपातितः ।
धर्मध्वजवता पापं कृतं तद्विदितं मम ।
अनार्यं सुनृशंसं च धर्मपुत्रस्य मे श्रुतम् ॥ ४
युद्धेष्वपि प्रवृत्तानां ध्रुवं जयपराजयौ ।
द्वयमेतद्भवेद्राजन्वधस्तत्र प्रशस्यते ॥ ५
न्यायवृत्तो वधो यस्तु संग्रामे युध्यतो भवेत् ।
न स दुःखाय भवति तथा दृष्टो हि स द्विजैः ॥ ६
गतः स वीरलोकाय पिता मम न संशयः ।
न शोच्यः पुरुषव्याघ्र यस्तदा निधनं गतः ॥ ७
यत्तु धर्मप्रवृत्तः सन्केशग्रहणमाप्तवान्
पश्यतां सर्वसैन्यानां तन्मे मर्माणि कृन्तति ॥ ८
मयि जीवति यत्तातः केशग्रहमवाप्तवान् ।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम् ॥ ९
कामात्क्रोधादविज्ञानाद्धर्षाद्बाल्येन वा पुनः ।
विधर्मकाणि कुर्वन्ति तथा परिभवन्ति च ॥ १०
तदिदं पार्षतेनेह महदाधर्मिकं कृतम् ।
अवज्ञाय च मां नूनं नृशंसेन दुरात्मना ॥ ११
तस्यानुबन्धं द्रष्टाऽसौ धृष्टद्युम्नः सुदारुणम् ।
अकार्यं परमं कृत्वा मिथ्यावादी च पाण्डवः ॥ १२
यो ह्यसौ छद्मनाऽऽचार्यं शस्त्रं संन्यासयत्तदा ।
तस्याद्य धर्मराजस्य भूमिः पास्यति शोणितम् ॥ १३
शपे सत्येन कौरव्य इष्टापूर्तेन चैव ह ।
अहत्वा सर्वपाञ्चालाञ्जीवेयं न कथंचन ॥ १४
सर्वोपायैर्यतिष्यामि पाञ्चालानामहं वधे ।
धृष्टद्युम्नं च समरे हन्ताऽहं पापकारिणम् ॥ १५
कर्मणा येन तेनेह मृदुना दारुणेन च ।
पाञ्चालानां वधं कृत्वा शान्तिं लब्धास्मि कौरव ॥
यदर्थं पुरुषव्याघ्र पुत्रानिच्छन्ति मानवाः ।
प्रेत्य चेह च संप्राप्तात्त्रायन्ते महतो भयात् ॥ १७
पित्रा तु मम साऽवस्था प्राप्ता निर्बन्धुना यथा ।
मयि शैलप्रतीकाशे पुत्रे शिष्ये च जीवति ॥ १८
धिङ्ममास्त्राणि दिव्यानि धिग्बाहू धिक्पराक्रमम्
यं स्म द्रोणः सुतं प्राप्य केशग्रहमवाप्तवान् ॥ १९
स तथाहं करिष्यामि यथा भरतसत्तम ।
परलोकगतस्यापि भविष्याम्यनृणः पितुः ॥ २०
आर्येण हि न वक्तव्या कदाचित्स्तुतिरात्मनः ।
पितुर्वधममृष्यंस्तु वक्ष्याम्यद्येह पौरुषम् ॥ २१
अद्य पश्यन्तु मे वीर्यं पाण्डवाः सजनार्दनाः ।
मृद्नतः सर्वसैन्यानि युगान्तमिव कुर्वतः ॥ २२
न हि देवा न गन्धर्वा नासुरा न च राक्षसाः ।
अद्य शक्ता रणे जेतुं रथस्थं मां नरर्षभाः ॥ २३
मदन्यो नास्ति लोकेऽस्मिन्नर्जुनाद्वाऽस्त्रवित्कचित् ।
अहं हि ज्वलतां मध्ये मयूखानामिवांशुमान् ।
प्रयोक्ता देवसृष्टानामस्त्राणां पृतनागतः ॥ २४
भृशमिष्वसनादद्य मत्प्रयुक्ता महाहवे ।
दर्शयन्तः शरा वीर्यं प्रमथिष्यन्ति पाण्डवान् ॥ २५
अद्य सर्वा दिशो राजन्धाराभिरिव संकुलाः ।
आवृताः पत्रिभिस्तीक्ष्णैर्द्रष्टारो मामकैरिह ॥ २६
विकिरञ्छरजालानि सर्वतो भैरवस्वनान् ।
शत्रून्निपातयिष्यामि महावात इव द्रुमान् ॥ २७
न हि जानाति बीभत्सुस्तदस्त्रं न जनार्दनः ।
न भीमसेनो न यमौ न च राजा युधिष्ठिरः ॥ २८
न पार्षतो दुरात्माऽसौ न शिखण्डी न सात्यकिः ।
यदिदं मयि कौरव्य सकल्पं सनिवर्तनम् ॥ २९
नारायणाय मे पित्रा प्रणम्य विधिपूर्वकम् ।
उपहारः पुरा दत्तो ब्रह्मरूप उपस्थितः ॥ ३०
तं स्वयं प्रतिगृह्याथ भगवान्स वरं ददौ ।
वव्रे पिता मे परममस्त्रं नारायणं ततः ॥ ३१
अथैनमब्रवीद्राजन्भगवान्देवसत्तमः ।
भविता त्वत्समो नान्यः कश्चिद्युधि नरःक्वचित् ३२
न त्विदं सहसा ब्रह्मन्प्रयोक्तव्यं कथंचन ।

धर्मध्वजवता दाम्भिकेन । तत् अनृतवचनरूपं पापम् । अनार्यं नीचयोग्यं कर्म ॥ ४ ॥ बाल्येन चापलेन । विधर्मकाणि धर्मविरुद्धानि ॥ १० ॥ अनुबन्धं फलम् । पाण्डवश्च अनुबन्धं द्रष्टेत्यनुषज्यते ॥ १२ ॥ मयूखानां मयूखवताम् ॥ २४ ॥ कल्पः प्रयोगः । निवर्तनमुपसंहारः ॥ २९ ॥ ब्रह्मरूपो वेदरूपः । वैदिकैर्मन्त्रैः स्तुतवानित्यर्थः ॥ ३० ॥

न ह्येतदस्त्रमन्यत्र वधाच्छत्रोर्निवर्तते ॥ ३३
न चैतच्छक्यते जेतुं को न वध्येत वै प्रभो ।
अवध्यमपि हन्याद्धि तस्मान्नैतत्प्रयोजयेत् ॥ ३४
अथ सङ्ख्ये रथस्यैव शस्त्राणां च विसर्जनम् ।
प्रयाचनं च शत्रूणां गमनं शरणस्य च ॥ ३५
एते प्रशमने योगा महास्त्रस्य परंतप ।
सर्वथा पीडितो हिंस्यादवध्यान्पीडयन्रणे ॥ ३६
तज्जग्राह पिता मह्यमब्रवीच्चैव स प्रभुः ।
त्वं वधिष्यसि सर्वाणि शस्त्रवर्षाण्यनेकशः ।
अनेनास्त्रेण संग्रामे तेजसा च ज्वलिष्यसि ॥ ३७
एवमुक्त्वा स भगवान्दिवमाचक्रमे प्रभुः ।
एतन्नारायणादस्त्रं तत्प्राप्तं पितृबन्धुना ॥ ३८
तेनाहं पाण्डवांश्चैव पाञ्चालान्मात्स्यकेकयान् ।
विद्रावयिष्यामि रणे शचीपतिरिवासुरान् ॥ ३९
यथायथाऽहमिच्छेयं तथा भूत्वा शरा मम ।
निपतेयुः सपत्नेषु विक्रमत्स्वपि भारत ॥ ४०
यथेष्टमश्मवर्षेण प्रवर्षिष्ये रणे स्थितः ।
अयोमुखैश्च विहगैर्द्रावयिष्ये महारथान् ॥ ४१
परश्वथांश्च निशितानुत्स्रक्ष्येऽहमसंशयम् ॥ ४२
सोऽहं नारायणास्त्रेण महता शत्रुतापनः ।
शत्रून्विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ॥ ४३
मित्रब्रह्मगुरुद्रोही जाल्मकः सुविगर्हितः ।
पाञ्चालापशदश्चाद्य न मे जीवन्विमोक्ष्यते ॥ ४४
तच्छ्रुत्वा द्रोणपुत्रस्य पर्यवर्तत वाहिनी ।
ततः सर्वे महाशङ्खान्दध्मुः पुरुषसत्तमाः ।
भेरीश्चाभ्यहनन्हृष्टा डिण्डिमांश्च सहस्रशः ॥ ४५
तथा ननाद वसुधा खुरनेमिप्रपीडिता ।
स शब्दस्तुमुलः खं द्यां पृथिवीं च व्यनादयत् ४६
तं शब्दं पाण्डवाः श्रुत्वा पर्जन्यनिनदोपमम् ।
समेत्य रथिनां श्रेष्ठाः सहिताश्चाप्यमन्त्रयन् ॥ ४७
तथोक्त्वा द्रोणपुत्रस्तु वार्युपस्पृश्य भारत ।
प्रादुश्चकार तद्दिव्यमस्त्रं नारायणं तदा ॥ ४८

॥ इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि पञ्चदशदिवसयुद्धे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

## सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

कुरुसेनारवश्रवणभीतेन युधिष्ठिरेण पलायितसेनाप्रतिनिवर्तकप्रश्ने अर्जुनेन तत्कथनपूर्वकं द्रोणवधोपेक्षणादात्मोपालम्भः ॥ १ ॥

सञ्जय उवाच
प्रादुर्भूते ततस्तस्मिन्नस्त्रे नारायणे प्रभो ।
प्रावात्सपृषतो वायुरनभ्रे स्तनयित्नुमान् ॥ १
चचाल पृथिवी चापि चुक्षुभे च महोदधिः ।
प्रतिस्रोतः प्रवृत्ताश्च गन्तुं तत्र समुद्रगाः ॥ २
शिखराणि व्यशीर्यन्त गिरीणां तत्र भारत ।
अपसव्यं मृगाश्चैव पाण्डुसेनां प्रचक्रिरे ॥ ३
तमसा चावकीर्यन्त सूर्यश्च कलुषोऽभवत् ।
संपतन्ति च भूतानि क्रव्यादानि प्रहृष्टवत् ॥ ४
देवदानवगन्धर्वास्त्रस्तास्त्वासन्विशांपते ।
कथंकथाऽभवत्तीव्रा दृष्ट्वा तद्व्याकुलं महत् ॥ ५
व्यथिताः सर्वराजानस्त्रस्ताश्चासन्विशांपते ।
तद्दृष्ट्वा घोररूपं वै द्रौणेरस्त्रं भयावहम् ॥ ६
धृतराष्ट्र उवाच ।
निवर्तितेषु सैन्येषु द्रोणपुत्रेण संयुगे ।
भृशं शोकाभितप्तेन पितुर्वधममृष्यता ॥ ७

---

शक्यते ज्ञातुं केन वध्येदिति प्रभो इति झ. पाठः । तत्र केन प्रत्यस्त्रेण वध्येत् वध्येत इति ज्ञातुमित्यर्थः ॥ ३४ ॥ रथस्यैव विसर्जनम् । शस्त्राणामपि विसर्जनं च । प्रयाचनं मावधीरिति याचनं । शरणस्य गमनं त्वमेव शरणं न इति कीर्तनं च ॥ ३५ ॥ पीडितः पीडितं शस्त्रान्तरेण बाधितम् । पुंस्त्वमार्षम् ॥ ३६ ॥ पितृबन्धुना मया ॥ ३८ ॥ जाल्मको मूर्खः ॥ ४४ ॥ षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

सपृषतः सजलबिन्दुः । अनभ्रे अप्रावृषिकाले ॥ १ ॥ कथंकथा कथं कर्तव्यं कथं कर्तव्यमित्येवंशब्दः ॥ ५ ॥

कुरूनापततो दृष्ट्वा धृष्टद्युम्नस्य रक्षणे ।
को मन्त्रः पाण्डवेष्वासीत्तन्ममाचक्ष्व सञ्जय ॥८
सञ्जय उवाच
प्रागेव विद्रुतान्दृष्ट्वा धार्तराष्ट्रान्युधिष्ठिरः ।
पुनश्च तुमुलं शब्दं श्रुत्वाऽर्जुनमथाब्रवीत् ॥
उवाच ।
आचार्ये निहते द्रोणे धृष्टद्युम्नेन संयुगे ।
निहते वज्रहस्तेन यथा वृत्रे महासुरे ॥ १०
नाशंसन्तो जयं युद्धे दीनात्मानो धनञ्जय ।
आत्मत्राणे मतिं कृत्वा प्राद्रवन्कुरवो रणात् ॥ ११
केचिद्भ्रान्तै रथैस्तूर्णं निहतैः पार्ष्णियन्तृभिः ।
विपताकध्वजच्छत्रैः पार्थिवाः शीर्णकूबरैः ॥ १२
भग्ननीडैराकुलाश्वैः प्रारुह्यान्यान्विचेतसः ।
भीताः पादैर्हयान्केचित्त्वरयन्तः स्वयं रथान् ॥ १३
भग्नाक्षयुगचक्रैश्च व्याकृष्यन्त समन्ततः ।
रथान्विशीर्णानुत्सृज्य पद्भिः केचिच्च विद्रुताः १४
हयपृष्ठगताश्चान्ये कृष्यन्तेऽर्धच्युतासनाः ।
गजस्कन्धेषु संस्यूता नाराचैश्चलितासनाः ॥ १५
शरार्तैर्विद्रुतैर्नागैर्हृताः केचिद्दिशो दश ।
विशस्त्रकवचाश्चान्ये वाहनेभ्यः क्षितिं गताः ॥ १६
संछिन्ना नेमिभिश्चैव मृदिताश्च हयद्विपैः ।
क्रोशन्तस्तात पुत्रेति पलायन्ते परे भयात् ॥ १७
नाभिजानन्ति चान्योन्यं कश्मलाभिहतौजसः ।
पुत्रान्पितॄन्सखीन्भ्रातॄन्समारोप्य दृढक्षतान् ॥ १८
जलेन क्लेदयन्त्यन्ये विमुच्य कवचान्यपि ।
'पलायनपराश्चान्ये योधाः शतसहस्रशः ॥' १९
अवस्थां तादृशीं प्राप्य हते द्रोणे द्रुतं बलम् ।
पुनरावर्तितं केन यदि जानासि शंस मे ॥ २०
हयानां ह्रेषतां शब्दः कुञ्जराणां च बृंहताम् ।
रथनेमिस्वनैश्चात्र विमिश्रः श्रूयते महान् ॥ २१
एते शब्दा भृशं तीव्राः प्रवृत्ताः कुरुसागरे ।
मुहुर्मुहुरुदीर्यन्ते कम्पयन्त्यपि मामकान् ॥ २२
य एष तुमुलः शब्दः श्रूयते रोमहर्षणः ।
सेन्द्रानप्येष लोकांस्त्रीन्ग्रसेदिति मतिर्मम ॥ २३
मन्ये वज्रधरस्यैष निनादो भैरवस्वनः ।
द्रोणे हते कौरवार्थं व्यक्तमभ्येति वासवः ॥ २४
प्रहृष्टरोमकूपाः स्मः संविग्नरथकुञ्जराः ।
धनञ्जय गुरुं श्रुत्वा तत्र नादं सुभीषणम् ॥ २५
क एष कौरवान्दीर्णानवस्थाप्य महारथः ।
निवर्तयति युद्धार्थं मृधे देवेश्वरो यथा ॥ २६
अर्जुन उवाच
उद्यम्यात्मानमुग्राय कर्मणे वीर्यमास्थिताः
धमन्ति कौरवाः शङ्खान्यस्य वीर्यं समाश्रिताः २७
यत्र ते संशयो राजन्यस्तशस्त्रे गुरौ हते ।
धार्तराष्ट्रानवस्थाप्य क एष नदतीति हि ॥ २८
ह्रीमन्तं तं महाबाहुं मत्तद्विरदगामिनम् ।
'इन्द्रविष्णुसमं वीर्ये कोपेऽन्तकमिव स्थितम् ॥२९
बृहस्पतिसमं बुद्ध्या नीतिमन्तं महारथम् ।'
आख्यास्याम्युग्रकर्माणं कुरूणामभयंकरम् ॥ ३०
यस्मिञ्जाते ददौ द्रोणो गवां दशशतं धनम् ।
ब्राह्मणेभ्यो महार्हेभ्यः सोऽश्वत्थामैष गर्जति ॥ ३१
जातमात्रेण वीरेण येनोच्चैःश्रवसा यथा ।
ह्रेषता कम्पिता भूमिर्लोकाश्च सकलास्त्रयः ॥ ३२
तच्छ्रुत्वान्तर्हितं भूतं नाम तस्याकरोत्तदा ।
अश्वत्थामेति सोऽद्यैष शूरो नदति पाण्डव ॥ ३३
यो ह्यनाथ इवाक्रम्य पार्षतेन हतस्तथा ।
कर्मणा सुनृशंसेन तस्य नाथो व्यवस्थितः ॥ ३४
गुरुं मे यत्र पाञ्चाल्यः केशपक्षे परामृशत् ।
तन्न जातु क्षमेद्द्रौणिर्जानन्पौरुषमात्मनः ॥
'स हि तेनैव नः सर्वान्क्षपयेदिति मे मतिः ॥' ३५
उपचीर्णो गुरुर्मिथ्या भवता राज्यकारणात् ।
धर्मज्ञेन सता नाम सोऽधर्मः सुमहान्कृतः ॥ ३६
चिरं स्थास्यति चाकीर्तिस्त्रैलोक्ये सचराचरे ।
रामे वालिवधाद्यद्वदेवं द्रोणे निपातिते ॥ ३७

---

रक्षणे मन्त्रः क आसीदिति संबन्धः ॥ ८ ॥ व्याघ्रास्यमुग्रकर्माणमिति झ. पाठः ॥ ३० ॥ यस्मिन्निति दशशतमित्यनेन सर्वगोधनं ददाविति ज्ञेयम् । अन्यथा एकधेन्वर्थं द्रुपदं प्रति द्रोणगमनस्यासंभवः । यद्वा भाविनीं संपदमभिलक्ष्यैतद्दानं द्रष्टव्यम् । पुत्रोत्पत्तिकाले तस्य निर्धनत्वोक्तेः ॥ ३१ ॥

सर्वधर्मोपपन्नोऽयं स मे शिष्यश्च पाण्डवः ।
नायं वक्ष्यति मिथ्येति प्रत्ययं कृतवांस्त्वयि ॥ ३८
स सत्यकञ्चुकं नाम प्रविष्टेन ततोऽनृतम् ।
आचार्य उक्तो भवता हतः कुञ्जर इत्युत ॥ ३९
ततः शस्त्रं समुत्सृज्य निर्ममो गतचेतनः ।
आसीत्सुविह्वलो राजन्यथा दृष्टस्त्वया विभुः॥४०
स तु शोकसमाविष्टो विमुखः पुत्रवत्सलः ।
शाश्वतं धर्ममुत्सृज्य गुरुः शिष्येण घातितः ॥४१
न्यस्तशस्त्रमधर्मेण घातयित्वा गुरुं भवान् ।
रक्षत्विदानीं सामात्यो यदि शक्तोसि पार्षतम् ४२
ग्रस्तमाचार्यपुत्रेण क्रुद्धेन हतबन्धुना ।
सर्वे वयं परित्रातुं न शक्ष्यामोऽद्य पार्षतम् ॥ ४३
सौहार्दं सर्वभूतेषु यः करोत्यतिमानुषः ।
सोऽद्य केशग्रहं श्रुत्वा पितुर्धक्ष्यति नो रणे॥ ४४
विक्रोशमाने हि मयि भृशमाचार्यगृद्धिनि ।
अपाकीर्य स्वयं धर्मं शिष्येण निहतो गुरुः॥ ४५
यदा गतं वयो भूयः शिष्टमल्पतरं च नः ।
तस्येदानीं विरोधोऽयमधर्मोऽयं कृतो महान् ॥४६
पितेव नित्यं सौहार्दात्पितेव हि च धर्मतः ।
सोऽल्पकालस्य राज्यस्य कारणाद्घातितो गुरुः४७
धृतराष्ट्रेण भीष्माय द्रोणाय च विशांपते ।
विसृष्टा पृथिवी सर्वा सह पुत्रैश्च तत्परैः ॥ ४८
संप्राप्य तादृशीं वृत्तिं सत्कृतः सततं परैः ।
अब्रवीत्सततं पुत्रान्मामेवाभ्यधिकं गुरुः ॥ ४९
अवेक्षमाणस्त्वां मां च न्यस्तास्त्रश्चाहवे हतः ।
न त्वेनं युध्यमानं वै हन्यादपि शतक्रतुः ॥ ५०
तस्याचार्यस्य वृद्धस्य द्रोहो नित्योपकारिणः ।
कृतो ह्यनार्यैरस्माभी राज्यार्थे लुब्धबुद्धिभिः ॥५१
अहो बत महत्पापं कृतं कर्म सुदारुणम् ।
यद्राज्यसुखलोभेन द्रोणोऽयं साधुघातितः ॥ ५२
पुत्रान्भ्रातॄन्पितॄन्दाराञ्जीवितं चैव वासविः ।
त्यजेत्सर्वं मम प्रेम्णा जानात्येवं हि मे गुरुः ॥ ५३
स मया राज्यकामेन हन्यमानो ह्युपेक्षितः ।
तस्मादर्वाक्शिरा राजन्प्राप्तोऽस्मि नरकं प्रभो ॥५४
ब्राह्मणं वृद्धमाचार्यं न्यस्तशस्त्रं महामुनिम् ।
घातयित्वाऽद्य राज्यार्थे मृतं श्रेयो न जीवितम् ५५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि पञ्चदशदिवसयुद्धे सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

## अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

साधिक्षेपमश्वत्थामतो युधिष्ठिरं भीषयन्तं पार्थंप्रति भीमेन सामर्षमात्मबलवर्णनादिपूर्वकं स्वेनाश्वत्थामादिविजयप्रतिज्ञानम् ॥ १ ॥ धृष्टद्युम्नेनाप्यर्जुनं प्रति सक्रोधं क्षात्रधर्मादिकथनपूर्वकं स्वकृतद्रोणवधस्य धार्मिकत्वकथनम् ॥ २ ॥

सञ्जय उवाच ।
अर्जुनस्य वचः श्रुत्वा नोचुस्तत्र महारथाः ।
अप्रियं वा प्रियं वाऽपि महाराज धनंजयम् ॥ १
ततः क्रुद्धो महाबाहुर्भीमसेनोऽभ्यभाषत ।
कुत्सयन्निव कौन्तेयमर्जुनं भरतर्षभ ॥ २
मुनिर्यथाऽरण्यगतो भाषते धर्मसंहितम् ।
न्यस्तदण्डो यथा पार्थ ब्राह्मणः संशितव्रतः ॥ ३
क्षतत्राता क्षताज्जीवन्क्षन्ता स्त्रीष्वपि साधुषु ।
क्षत्रियः क्षितिमाप्नोति क्षिप्रं धर्मं यशः श्रियः ॥ ४
स भवान्क्षत्रियगुणैर्युक्तः सर्वैः कुलोद्वहः ।
अविपश्चिद्यथा वाचं व्याहरन्नाद्य शोभसे ॥ ५
पराक्रमस्ते कौन्तेय शक्रस्येव शचीपतेः ।
न चातिवर्तसे धर्मं वेलामिव महोदधिः ॥ ६
न पूजयेत्त्वां कोन्वद्य यत्रयोदशवार्षिकम् ।
अमर्षं पृष्ठतः कृत्वा धर्ममेवाभिकाङ्क्षसे ॥ ७
दिष्ट्या तात मनस्तेऽद्य स्वधर्ममनुवर्तते ।
आनृशंस्ये च ते दिष्ट्या बुद्धिः सततमच्युत ॥ ८
यत्तु धर्मप्रवृत्तस्य हृतं राज्यमधर्मतः ।
द्रौपदी च परामृष्टा सभामानीय शत्रुभिः ॥ ९
वनं प्रव्राजिताश्चास्म वल्कलाजिनवाससः ।

सत्यकञ्चुकं सत्याभासमनृतम् ॥ ३९ ॥ वासविरर्जुनः ॥ ५३ ॥

सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

अनर्हमाणास्तं भावं त्रयोदश समाः परैः ॥ १०
'बहूनि क्षाम्य शत्रूणां सत्यधर्मरता वयम् ।
तथा तन्मर्षयित्वा तु यथा ते उत्पथे स्थिताः ॥' ११
एतान्यमर्षस्थानानि मर्षितानि त्वयाऽनघ ।
क्षत्रधर्मप्रसक्तेन सर्वमेतदनुष्ठितम् ॥ १२
तमधर्ममपाकृष्टं स्मृत्वाऽद्य सहितस्त्वया ।
सानुबन्धान्हनिष्यामि क्षुद्रान्राज्यहरानहम् ॥ १३
त्वया हि कथितं पूर्वं युद्धायाभ्यागता वयम् ।
घटामहे यथाशक्ति त्वं तु नोऽद्य जुगुप्ससे ॥ १४
स्वधर्मं नेच्छसे ज्ञातुं वृथा वचनमेव ते
भयार्दितानामस्माकं वाचा मर्माणि कृन्तसि ॥ १५
वपन्व्रणे क्षारमिव क्षतानां शत्रुकर्शन ।
विदीर्यते मे हृदयं त्वया वाक्शल्यपीडितम् ॥ १६
अधर्ममेनं विपुलं धार्मिकः सन्न बुध्यसे
यत्त्वमात्मानमस्मांश्च प्रशंस्यान्न प्रशंससि ॥ १७
वासुदेवे स्थिते चापि द्रोणपुत्रं प्रशंससि ।
यः कलां षोडशीं पूर्णां धनञ्जय न तेऽर्हति ॥ १८
स्वयमेवात्मनो दोषान्ब्रुवाणः किं न लज्जसे ॥ १९
'मम नागायुतं पार्थ बलं बाह्वोर्विधीयते ।'
दारयेयं महीं क्रोधाद्विकिरेयं च पर्वतान् ॥ २०
आविध्यैतां गदां गुर्वीं भीमां काञ्चनमालिनीम् ।
गिरिप्रकाशान्क्षितिजान्भञ्जेयमनिलो यथा ॥ २१
द्रावयेयं शरैश्चापि सेन्द्रान्देवान्समागतान् ।
सराक्षसगणान्पार्थ सासुरोरगमानवान् ॥ २२
स त्वमेवंविधं जानन्भ्रातरं मां नरर्षभ ।
द्रोणपुत्राद्भयं कर्तुं नार्हस्यमितविक्रम ॥ २३
अथवा तिष्ठ बीभत्सो सह सर्वैः सहोदरैः ।
अहमेनं गदापाणिर्जेष्याम्येको महाहवे ॥ २४
ततः पाञ्चालराजस्य पुत्रः पार्थमथाब्रवीत् ।
संक्रुद्धमिव नर्दन्तं हिरण्यकशिपुर्हरिम् ॥ २५
धृष्टद्युम्न उवाच ।
बीभत्सो विप्रकर्माणि विहितानि मनीषिभिः ।
याजनाध्यापने दानं तथा यज्ञप्रतिग्रहौ ॥ २६
षष्ठमध्ययनं नाम तेषां कस्मिन्प्रतिष्ठितः ।
हतो द्रोणो मया ह्येवं किं मां पार्थ विगर्हसे ॥ २७
अपक्रान्तः स्वधर्माच्च क्षात्रधर्मं व्यपाश्रितः
अधर्मेण हतस्तस्मादस्त्रेण क्षुद्रकर्मकृत् ॥ २८
तथा मायां प्रयुञ्जानमसह्यं ब्राह्मणब्रुवम् ।
प्रतिमायी निहन्याद्यो न युक्तं पार्थ तत्र किम् ॥ २९
तस्मिंस्तथा मया शस्ते यदि द्रौणायनी रुषा ।
कुरुते भैरवं नादं तत्र किं मम हीयते ॥ ३०
न चाद्भुतमिदं मन्ये यद्द्रौणिश्चात्र गर्जति ।
घातयिष्यति कौरव्यान्परित्रातुमशक्नुवन् ॥ ३१
यच्च मां धार्मिको भूत्वा ब्रवीषि गुरुघातिनम् ।
तदर्थमहमुत्पन्नः पाञ्चाल्यस्य सुतोऽनलात् ॥ ३२
यस्य कार्यमकार्यं वा युध्यतः स्यात्समं रणे ।
तं कथं ब्राह्मणं ब्रूयाः क्षत्रियं वा धनञ्जय ॥ ३३
यो ह्यनस्त्रविदो हन्याद्ब्रह्मास्त्रैः क्रोधमूर्च्छितः
सर्वोपायैर्न स कथं वध्यः पुरुषसत्तम ॥ ३४
विशेषात्पितृहन्ता मे न स वध्यः कथं मया ।
योऽयं पापः सुदुर्मेधा बान्धवान्युधि जघ्निवान् ।
तस्य विप्रब्रुववधे कथं पापं भवेन्मम ॥' ३५
विधर्मिणं धर्मविद्भिः प्रोक्तं तेषां विषोपमम् ।
जानन्धर्मार्थतत्त्वज्ञ किं मामर्जुन गर्हसे ॥ ३६
नृशंसः स मयाऽऽक्रम्य रथ एव निपातितः ।
तन्मामनिन्द्यं बीभत्सो किमर्थं नाभिनन्दसे ॥ ३७
कालानलसमं पार्थ ज्वलनार्कविषोपमम् ।
भीमं द्रोणशिरश्छिन्नं न प्रशंससि मे कथम् ॥ ३८
योऽसौ ममैव नान्यस्य बान्धवान्युधि जघ्निवान् ।
छित्त्वाऽपि तस्य मूर्धानं नैवास्मि विगतज्वरः ॥ ३९
तच्च मे कृन्तते मर्म यन्न तस्य शिरो मया ।
निषादविषये क्षिप्तं जयद्रथशिरो यथा ॥ ४०
अथावधश्च शत्रूणामधर्मः श्रूयतेऽर्जुन ।
क्षत्रियस्य हि धर्मोऽयं हन्याद्धन्येत वा पुनः ॥ ४१
स शत्रुर्निहतः सङ्ख्ये मया धर्मेण पाण्डव ।
यथा त्वया हतः शूरो भगदत्तः पितुः सखा ॥ ४२
पितामहं रणे हत्वा मन्यसे धर्ममात्मनः ।
मया शत्रौ हते कस्मात्पापे धर्मं न मन्यसे ॥ ४३

हिरण्यकशिपुं हरिरिति क. ख. पाठः ॥ २५ ॥

अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

संबन्धावनतं पार्थ न मां त्वं वक्तुमर्हसि ।
स्वगात्रकृतसोपानं निषण्णमिव दन्तिनम् ॥ ४४
क्षमामि ते सर्वमेव वाग्व्यतिक्रममर्जुन ।
द्रौपद्या द्रौपदेयानां कृते नान्येन हेतुना ॥ ४५
कुलक्रमागतं वैरं ममाचार्येण विश्रुतम् ।
तथा जानात्वयं लोको न यूयं पाण्डुनन्दनाः ॥४६
नानृती पाण्डवो ज्येष्ठो नाहं वाऽधार्मिकोऽर्जुन ।
'न क्षत्रिय इति प्राहुर्यो न हन्ति रणाजिरे ॥४७
पितरं वा गुरुं वाऽपि जिघांसुं पुत्रशिष्ययोः ।
जिह्मेन वाऽप्यजिह्मेन हन्यादेवाविचारयन् ॥ ४८
इत्युक्तं ब्रह्मणा पूर्वं क्षत्रियाणां द्विषद्वधे ।
तस्माच्छिष्येण निहतः शत्रुर्मे ब्राह्मणब्रुवः ॥ ४९
यः क्षत्रियसुतो हन्यात्पितरं वा गुरुं च वा ।
अनिष्टं क्षत्रियो हन्यात्स वै क्षत्रिय उच्यते ।'
शिष्यद्रोही हतः पापो युध्यस्व विजयस्तव ॥ ५०

॥ इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

## एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

सात्यकिनिष्ठुरभाषणरुष्टेन धृष्टद्युम्नेन सममर्मोद्घाटनं तद्गर्हणम् ॥ १ ॥ धृष्टद्युम्नजिघांसया गदामुद्यम्यापततः सात्यकेः कृष्णचोदितेन भीमेन निवारणम् ॥ २ ॥ सर्वेषां पुनर्युद्धोद्यमः ॥ ३ ॥

धृतराष्ट्र उवाच ।
साङ्गा वेदा यथान्यायं येनाधीता महात्मना ।
यस्मिन्साक्षाद्धनुर्वेदो ह्रीनिषेवे प्रतिष्ठितः ॥ १
यस्य प्रसादात्कुर्वन्ति कर्माणि पुरुषर्षभाः ।
अमानुषाणि संग्रामे देवैरसुकराणि च ॥ २
तस्मिन्नाक्रुश्यति द्रोणे समक्षं पापकर्मणा ।
नीचं कर्म कृतं तेन क्षुद्रेण गुरुघातिना ॥ ३
नामर्षं तत्र कुर्वन्ति धिक्क्षात्रं धिगमर्षिताम् ॥ ४
पार्थाः सर्वे च राजानः पृथिव्यां ये धनुर्धराः ।
श्रुत्वा किमाहुः पाञ्चाल्यं तन्ममाचक्ष्व सञ्जय ॥ ५
सञ्जय उवाच ।
श्रुत्वा द्रुपदपुत्रस्य ता वाचः क्रूरकर्मणः ।
तूष्णीं बभूवू राजानः सर्व एव विशांपते ॥ ६
अर्जुनस्तु कटाक्षेण जिह्मं विप्रेक्ष्य पार्षतम् ।
सबाष्पमतिनिःश्वस्य धिग्धिगित्येव चाब्रवीत् ॥ ७
युधिष्ठिरश्च भीमश्च यमौ कृष्णस्तथाऽपरे ।
आसन्सुव्रीडिता राजन्सात्यकिस्त्वब्रवीदिदम् ॥ ८
नेहास्ति पुरुषः कश्चिद्य इमं पापपूरुषम् ।
भाषमाणमकल्याणं शीघ्रं हन्यान्नराधमम् ॥ ९
एते त्वां पाण्डवाः सर्वे कुत्सयन्ति विवित्सया ।
कर्मणा तेन पापेन श्वपाकं ब्राह्मणा इव ॥ १०
एतत्कृत्वा महत्पापं निन्दितः सर्वसाधुभिः ।
न लज्जसे कथं वक्तुं समितिं प्राप्य शोभनाम् ॥ ११
कथं च शतधा जिह्वा न ते मूर्धा च दीर्यते ।
गुरुमाक्रोशतः क्षुद्र न चाधर्मेण पात्यसे ॥ १२
वाच्यस्त्वमसि पार्थैश्च सर्वैश्चान्धकवृष्णिभिः ।
यत्कर्म कलुषं कृत्वा श्लाघसे जनसंसदि ॥ १३
अकार्यं तादृशं कृत्वा पुनरेव गुरुं क्षिपन् ।
वध्यस्त्वं न त्वयार्थोऽस्ति मुहूर्तमपि जीवता ॥ १४
कस्त्वेतद्व्यवसेत्पापं त्वदन्यः पुरुषाधम ।
निगृह्य केशेषु वधं गुरोर्धर्मात्मनः सतः ॥ १५
सप्तावरे तथा पूर्वे बान्धवास्ते निमज्जिताः
यशसा च परित्यक्तास्त्वां प्राप्य कुलपांसनम् ॥ १६
उक्तवांश्चापि यत्पार्थं भीष्मं प्रति नरर्षभ ।
तथान्तो विहितस्तेन स्वयमेव महात्मना ॥ १७
तस्यापि तव सोदर्यो निहन्ता पापकृत्तमः ।
नान्यः पाञ्चालपुत्रेभ्यो विद्यते भुवि पापकृत् ॥ १८
स चापि सृष्टः पित्रा ते भीष्मस्यान्तकरः किल ।
शिखण्डी रक्षितस्तेन स च मृत्युर्महात्मनः ॥ १९
पाञ्चालाश्चलिता धर्मात्क्षुद्रा मित्रगुरुद्रुहः ।
त्वां प्राप्य सहसोदर्यं धिक्कृतं सर्वसाधुभिः ॥ २०
पुनश्चेदीदृशीं वाचं मत्समीपे वदिष्यसि ।

शिरस्ते पोथयिष्यामि गदया वज्रकल्पया ॥ २१
त्वां च ब्रह्महणं दृष्ट्वा जनः सूर्यमवेक्षते ।
ब्रह्महत्या हि ते पापं प्रायश्चित्तार्थमात्मनः ॥२२
पाञ्चालक सुदुर्वृत्त ममैव गुरुमग्रतः ।
गुरोर्गुरुं च भूयोऽपि क्षिपन्नैव हि लज्जसे ॥ २३
तिष्ठतिष्ठ सहस्वैकं गदापातमिमं मम ।
तव चापि सहिष्येऽहं गदापाताननेकशः ॥ २४
सात्वतेनैवमाक्षिप्तः पार्षतः परुषाक्षरम् ।
संरब्धं सात्यकिं प्राह संक्रुद्धः प्रहसन्निव ॥ २५
धृष्टद्युम्न उवाच ।
श्रूयतेश्रूयते चेति क्षम्यते चेति माधव ।
सदाऽनार्योऽशुभः साधुं पुरुषं क्षेप्तुमिच्छति ॥२६
क्षमा प्रशस्यते लोके न तु पापोऽर्हति क्षमाम् ।
क्षमावन्तं हि पापात्मा जितोऽयमिति मन्यते॥२७
स त्वं क्षुद्रसमाचारो नीचात्मा पापनिश्चयः ।
आकेशाग्रान्नखाग्राच्च वक्तव्यो वक्तुमिच्छसि ॥२८
'वरं हि ते मृतिः पाप न च ते चित्तमीदृशम् ।
श्रोतुं वक्तव्यतामूलं नीचाचाराश्च मानवाः ।
परान्क्षिपन्ति दोषेण स्वेषु दोषेष्वदृष्टयः ॥' २९
यः स भूरिश्रवाश्छिन्नभुजः प्रायगतस्त्वया ।
वार्यमाणेन हि हतस्ततः पापतरं नु किम् ॥ ३०
प्रेषमाणो मया द्रोणो दिव्येनास्त्रेण संयुगे ।
विसृष्टशस्त्रो निहतः किं तत्र क्रूर दुष्कृतम् ॥३१
अयुध्यमानं यस्त्वाजौ तथा प्रायगतं मुनिम् ।
छिन्नबाहुं परैर्हन्यात्सात्यके स कथं वदेत् ॥ ३२
निहत्य त्वां पदा भूमौ स विकर्षति वीर्यवान् ।
किं तदा न निहंस्येनं भूत्वा पुरुषसत्तमः ॥ ३३
त्वया पुनरनार्येण पूर्वं पार्थेन निर्जितः '
यदा तदा हतः शूरः सौमदत्तिः प्रतापवान् ॥ ३४
यत्रयत्र तु पाण्डूनां द्रोणो द्रावयते चमूम् ।
किरञ्छरसहस्राणि तत्रतत्र प्रयाम्यहम् ॥ ३५
स त्वमेवंविधं कृत्वा कर्म चण्डालवत्स्वयम् ।
वक्तुमर्हसि वक्तव्यः कस्मात्त्वं परुषाण्यथ ॥ ३६
कर्ता त्वं कर्मणो ह्यस्य नाहं वृष्णिकुलाधम ।
पापानां च त्वमावासः कर्मणां मा पुनर्वद ॥ ३७
जोषमास्व न मां भूयो वक्तुमर्हस्यतः परम् ।
अधरोत्तरमेतद्धि यन्मां त्वं वक्तुमर्हसि ॥ ३८
अथ वक्ष्यसि मां मौर्ख्याद्भूयः परुषमीदृशम् ।
गमयिष्यामि बाणैस्त्वां युधि वैवस्वतक्षयम् ॥३९
न चैव मूर्ख धर्मेण केवलेनैव शक्यते ।
तेषामपि ह्यधर्मेण चेष्टितं शृणु यादृशम् ॥ ४०
वञ्चितः पाण्डवः पूर्वमधर्मेण युधिष्ठिरः ।
द्रौपदी च परिक्लिष्टा तथाऽधर्मेण सात्यके ॥४१
प्रव्राजिता वनं सर्वे पाण्डवाः सह कृष्णया ।
सर्वस्वमपकृष्टं च तथाऽधर्मेण बालिश ॥ ४२
अधर्मेणापकृष्टश्च मद्रराजः परैरितः ।
अधर्मेण तथा बालः सौभद्रो विनिपातितः ॥ ४३
इतोऽप्यधर्मेण हतो भीष्मः परपुरंजयः ।
भूरिश्रवा ह्यधर्मेण त्वया धर्मविदा हतः ॥ ४४
एवं परैराचरितं पाण्डवेयैश्च संयुगे ।
रक्षमाणैर्जयं वीरैर्धर्मज्ञैरपि सात्वत ॥ ४५
दुर्ज्ञेयः स परो धर्मस्तथाऽधर्मश्च दुर्विदः ।
युध्यस्व कौरवैः सार्धं मा गाः पितृनिवेशनम् ॥४६
सञ्जय उवाच ।
एवमादीनि वाक्यानि क्रूराणि परुषाणि च ।
श्रावितः सात्यकिः श्रीमानाकम्पित इवाभवत्४७
तच्छ्रुत्वा क्रोधताम्राक्षः सात्यकिस्त्वाददे गदाम् ।
विनिःश्वस्य यथा सर्पः प्रणिधाय रथे धनुः ॥ ४८
ततोऽभिपत्य पाञ्चाल्यं संरम्भेणेदमब्रवीत् ।
न त्वां वक्ष्यामि परुषं हनिष्ये त्वां वधक्षमम् ॥४९
तमापतन्तं सहसा महाबलममर्षणम् ।
पाञ्चाल्यायाभिसंक्रुद्धमन्तकायान्तकोपमम् ॥५०
चोदितो वासुदेवेन भीमसेनो महाबलः ।
अवप्लुत्य रथात्तूर्णं बाहुभ्यां समवारयत् ॥ ५१
द्रवमाणं तथा क्रुद्धं सात्यकिं पाण्डवो बली ।
प्रस्पन्दमानमादाय जगाम बलिनं बलात् ॥५२
स्थित्वा विष्टभ्य चरणौ भीमेन शिनिपुङ्गवः ।
निगृहीतः पदे षष्ठे बलेन बलिनां वरः ॥ ५३
अवरुह्य रथात्तूर्णं ध्रियमाणं बलीयसा ।
उवाच श्लक्ष्णया वाचा सहदेवो विशांपते ॥५४

अस्माकं पुरुषव्याघ्र मित्रमन्यन्न विद्यते ।
परमन्धकवृष्णिभ्यः पाञ्चालेभ्यश्च मारिष ॥ ५५
तथैवान्धकवृष्णीनां तथैव च विशेषतः।
कृष्णस्य च तथाऽसक्तो मित्रमन्यन्न विद्यते॥५६
पाञ्चालानां च वार्ष्णेय समुद्रान्तां विचिन्वताम् ।
नान्यदस्ति परं मित्रं यथा पाण्डववृष्णयः ॥५७
स भवानीदृशं मित्रं मन्यते च यथा भवान् ।
भवन्तश्च यथाऽस्माकं भवतां च तथा वयम्॥५८
स एवं सर्वधर्मज्ञ मित्रधर्ममनुस्मरन् ।
नियच्छ मन्युं पाञ्चाल्यात्प्रशाम्य शिनिपुङ्गव॥५९
पार्षतस्य क्षम त्वं वै क्षमतां पार्षतश्च ते ।
वयं क्षमयितारश्च किमन्यत्र शमाद्भवेत् ॥ ६०
प्रशाम्यमाने शैनेये सहदेवेन मारिष ।
पाञ्चालराजस्य सुतः प्रहसन्निदमब्रवीत् ॥ ६१
मुञ्चमुञ्च शिनेः पौत्रं भीम युद्धमदान्वितम् ।
आसादयतु मामेष धराधरमिवानिलः ॥ ६२
यावदस्य शितैर्बाणैः संरम्भं विनयाम्यहम् ।
युद्धश्रद्धां च कौन्तेय जीवितं चास्य संयुगे॥६३
किं नु शक्यं मया कर्तुं यत्कार्यमिदमुच्यताम् ।
सुमहत्पाण्डुपुत्राणामायान्त्येते हि कौरवाः॥६४
अथवा फल्गुनः सर्वान्वारयिष्यति संयुगे ।
अहमप्यस्य मूर्धानं पातयिष्यामि सायकैः॥ ६५
मन्यते च्छिन्नबाहुं मां भूरिश्रवसमाहवे ।
उत्सृजैनमहं चैनमेष वा मां हनिष्यति ॥ ६६
शृण्वन्पाञ्चालवाक्यानि सात्यकिः सर्पवच्छ्वसन्।
भीमबाह्वन्तरे सक्तो विस्फुरत्यनिशं बली ॥ ६७
तौ वृषाविव नर्दन्तौ बलिनौ बाहुशालिनौ ।
त्वरया वासुदेवश्च धर्मराजश्च मारिष ।
यत्नेन महता वीरौ वारयामासतुस्ततः ॥ ६८
निवार्य परमेष्वासौ कोपसंरक्तलोचनौ ।
युयुत्सूनपरान्सङ्ख्ये प्रतीयुः क्षत्रियर्षभाः ॥ ६९

॥ इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि पञ्चदशदिवसयुद्धे एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

## द्विशततमोऽध्यायः ॥ २०० ॥

द्रोणमारणरुष्टेनाश्वत्थाम्ना वैरिसेनायां नारायणास्त्रप्रयोगः ॥ १ ॥ अस्त्रतेजसा पीड्यमानानां कृष्णवचनात् यानावरोहण-शस्त्रन्यासादिना आत्मरक्षणम् ॥२॥ भीमे एकस्मिन्नेव शस्त्रधारणेन प्रतियुध्यमाने सति तन्मस्तकेऽस्त्रस्य प्रज्वलनम् ॥ ३ ॥

सञ्जय उवाच ।
ततः स कदनं चक्रे रिपूणां द्रोणनन्दनः ।
युगान्ते सर्वभूतानां कालसृष्ट इवान्तकः ॥ १
ध्वजद्रुमं शस्त्रशृङ्गं हतनागमहाशिलम् ।
अश्वकिंपुरुषाकीर्णं शरासनलतावृतम् ॥ २
क्रव्यादपक्षिसंघुष्टं भूतयक्षगणाकुलम् ।
निहत्य शात्रवान्भल्लैः सोऽचिनोद्देहपर्वतम् ॥ ३
ततो वेगेन महता विनद्य स नरर्षभः ।
प्रतिज्ञां श्रावयामास पुनरेव तवात्मजम् ॥ ४
यदत्र च्छद्मनाऽऽचार्यं धर्मकञ्चुकमास्थितः ।
मुञ्च शस्त्रमिति प्राह कुन्तीपुत्रो युधिष्ठिरः ॥ ५
तस्मात्संपश्यतस्तस्य द्रावयिष्यामि वाहिनीम् ।
विद्राव्य सर्वान्हन्ताऽस्मि जाल्मं पाञ्चाल्यमेव तु ६
सर्वानेतान्हनिष्यामि यदि योत्स्यन्ति मां रणे ।
सत्यं ते प्रतिजानामि परिवर्तय वाहिनीम् ॥ ७
तच्छ्रुत्वा तव पुत्रस्तु वाहिनीं पर्यवर्तयत् ।
सिंहनादेन महता व्यपोह्य सुमहद्भयम् ॥ ८
ततः समागमो राजन्कुरुपाण्डवसेनयोः ।
पुनरेवाभवत्तीव्रः पूर्णसागरयोरिव ॥ ९
संरब्धा हि स्थिरीभूता द्रोणपुत्रेण कौरवाः ।
उदग्राः पाण्डुपाञ्चाला द्रोणस्य निधनेन च॥ १०
तेषां परमहृष्टानां जयमात्मनि पश्यताम् ।
संरब्धानां महावेगः प्रादुरासीद्विशांपते ॥ ११
यथा शिलोच्चये शैलः सागरैः सागरो यथा ।
प्रतिहन्येत राजेन्द्र तथाऽसन्कुरुपाण्डवाः॥ १२
'चुक्षुभे पृथिवी सर्वा दिशश्च प्रतिसस्वनुः ।

संभ्रान्तान्यपि भूतानि जलजान्यपि मारिष ।
ते च सर्वे तदा योधाः संप्रहृष्टा युयुत्सवः ॥' १३
ततः शङ्खसहस्राणि भेरीणामयुतानि च ।
अवादयन्त संहृष्टाः कुरुपाण्डवसैनिकाः ॥ १४
यथा निर्मथ्यमानस्य सागरस्य तु निःस्वनः ।
अभवत्तव सैन्यस्य सुमहानद्भुतोपमः ॥ १५
'वर्तमाने तथा शब्दे रौद्रे तस्मिन्भयानके ।
संपतत्सु रथौघेषु तव तेषां च भारत ॥' १६
प्रादुश्चक्रे ततो द्रौणिरस्त्रं नारायणं तदा ।
अभिसंधाय पाण्डूनां पाञ्चालानां च वाहिनीं १७
प्रादुरासंस्ततो बाणा दीप्ताग्राः खे सहस्रशः ।
पाण्डवान्क्षपयिष्यन्तो दीप्तास्याः पन्नगा इव ॥१८
ते दिशः खं च सैन्यं च समावृण्वन्महाहवे ।
मुहूर्ताद्भास्करस्येव लोके राजन्गभस्तयः ॥ १९
तथाऽपरे द्योतमाना ज्योतींषीवामलाम्बरे ।
प्रादुरासन्महाराज कार्ष्णायसमया गुडाः ॥ २०
चतुश्चक्रा द्विचक्राश्च शतघ्न्यो बहुला गदाः ।
चक्राणि च क्षुरान्तानि मण्डलानीव भास्वतः ॥२१
शस्त्राकृतिभिराकीर्णमतीव पुरुषर्षभ ।
दृष्ट्वान्तरिक्षमाविग्नाः पाण्डुपाञ्चालसृञ्जयाः ॥२२
यथायथा ह्ययुध्यन्त पाण्डवानां महारथाः ।
तथातथा तदस्त्रं वै व्यवर्धत जनाधिप ॥ २३
वध्यमानास्तदाऽस्त्रेण तेन नारायणेन वै ।
दह्यमानाऽनलेनेव सर्वतोऽभ्यर्दिता रणे ॥ २४
यथा हि शिशिरापाये दहेत्कक्षं हुताशनः ।
तथा तदस्त्रं पाण्डूनां ददाह ध्वजिनीं प्रभो ॥ २५
आपूर्यमाणेनास्त्रेण सैन्ये क्षीयति च प्रभो ।
जगाम परमं त्रासं धर्मपुत्रो युधिष्ठिरः ॥ २६
द्रवमाणं तु तत्सैन्यं दृष्ट्वा विगतचेतनम् ।
मध्यस्थतां च पार्थस्य धर्मपुत्रोऽब्रवीदिदम् ॥२७
धृष्टद्युम्न पलायस्व सह पाञ्चालसेनया
सात्यके त्वं च गच्छस्व वृष्ण्यन्धकवृतो महान् २८
वासुदेवोऽपि धर्मात्मा करिष्यत्यात्मनः क्षमम् ।
श्रेयो ह्युपदिशत्येष लोकस्य किमुतात्मनः ॥ २९
संग्रामस्तु न कर्तव्यः सर्वसैन्यान्ब्रवीमि वः ।
अहं हि सह सोदर्यैः प्रवेक्ष्ये हव्यवाहनम् ॥३०
भीष्मद्रोणार्णवं तीर्त्वा संग्रामे भीरुदुस्तरे ।
विमज्जिष्यामि सलिले सगणो द्रौणिगोष्पदे ॥३१
कामः संपद्यतामस्य बीभत्सोराशु मां प्रति ।
कल्याणवृत्तिराचार्यो मया युधि निपातितः ॥३२
येन बालः स सौभद्रो युद्धानामविशारदः ।
समर्थैर्बहुभिः क्रूरैर्घातितो नाभिपालितः ॥ ३३
येन विब्रुवती प्रश्नं तथा कृष्णा सभां गता ।
उपेक्षिता सपुत्रेण दासीभावं नियच्छती ॥ ३४
'रक्षणे च महान्यत्नः सैन्धवस्य कृतो युधि ।
अर्जुनस्य विघातार्थं प्रतिज्ञा येन रक्षिता ॥ ३५
व्यूहद्वारि वयं चैव धृता येन जिगीषवः ।
वारितं च महत्सैन्यं प्रविशत्तद्यथाबलम् ॥' ३६
जिघांसुर्धार्तराष्ट्रश्च श्रान्तेष्वन्येषु फल्गुनम् ।
कवचेन तथा गुप्तो रक्षार्थं सैन्धवस्य च ॥ ३७
येन ब्रह्मास्त्रविदुषा पाञ्चालाः सत्यजिन्मुखाः ।
कुर्वाणा मज्जये यत्नं समूला विनिपातिताः ॥३८
'ग्रहणे च परो यत्नः कृतस्तेन यथा मम ।
विदितं सर्वमेवैतद्भवतां सर्वयोधिनाम् ॥' ३९
येन प्रव्राज्यमानाश्च राज्याद्वयमधर्मतः ।
निवार्यमाणेनास्माभिरनुगन्तुं तदेषिताः ॥ ४०
'वनवासान्निवृत्तानां समये च तथा कृते ।
स्नेहश्च दर्शितो नित्यं प्रत्यक्षं वो महारथाः ॥'४१
योऽसावत्यन्तमस्मासु कुर्वाणः सौहृदं परम् ।
हतस्तदर्थे मरणं गमिष्यामि सबान्धवः ॥ ४२
सञ्जय उवाच ।
एवं ब्रुवति कौन्तेये दाशार्हस्त्वरितस्ततः ।
निवार्य सैन्यं बाहुभ्यामिदं वचनमब्रवीत् ॥४३
शीघ्रं न्यस्यत शस्त्राणि वाहेभ्यश्चावरोहत
एष योगोऽत्र विहितः प्रतिघाते महात्मनः ॥४४
द्विपाश्वस्यन्दनेभ्यश्च क्षितिं सर्वेऽवरोहत ।

गुडाः गोलाः हला इति क. ख. पाठः ॥ २० ॥ अस्माभिरस्मदीयैर्विदुरादिभिर्निवार्यमाणेन निषिध्यमानेनापि तद्वनमनुगन्तुं प्रवेष्टुमेषिता अनुमता नतु प्रतिषिद्धा इत्यर्थः ॥ ४० ॥
द्विशततमोऽध्यायः ॥ २०० ॥

एवमेतन्न वो हन्यादस्त्रं भूमौ निरायुधान् ॥ ४५
यथायथा हि युध्यन्ते योधा ह्यस्त्रमिदं प्रति ।
तथातथा भवन्त्येते कौरवा बलवत्तराः ॥ ४६
निक्षेप्स्यन्ति च शस्त्राणि वाहनेभ्योऽवरुह्य ये ।
येऽञ्जलिं कुर्वते वीर नमन्ति च विवाहनाः ।
तान्नैतदस्त्रं संग्रामे निहनिष्यति मानवान् ॥ ४७
ये त्वेतत्प्रतियोत्स्यन्ति मनसाऽपीह केचन ।
निहनिष्यति तान्सर्वान्रसातलगतानपि ॥ ४८
ते वचस्तस्य तच्छ्रुत्वा वासुदेवस्य भारत ।
ईषुः सर्वे समुत्स्रष्टुं मनोभिः करणेन च ॥ ४९
तत उत्स्रष्टुकामांस्तानस्त्राण्यालक्ष्य पाण्डवः ।
भीमसेनोऽब्रवीद्राजन्निदं संहर्षयन्वचः ॥ ५०
न कथंचन शस्त्राणि मोक्तव्यानीह केनचित् ।
अहमावारयिष्यामि द्रोणपुत्रास्त्रमाशुगैः ॥ ५१
गदयाऽप्यनया गुर्व्या हेमविग्रहया रणे ।
कालवत्प्रहरिष्यामि द्रौणेरस्त्रं विशातयन् ॥ ५२
न हि मे विक्रमे तुल्यः कश्चिदस्ति पुमानिह ।
यथैव सवितुस्तुल्यं ज्योतिरन्यन्न विद्यते ॥ ५३
पश्यतेमौ हि मे बाहू नागराजकरोपमौ ।
समर्थौ पर्वतस्यापि शैशिरस्य निपातने ॥ ५४
नागायुतसमप्राणो ह्यहमेको नरेष्विह ।
शक्रो यथाऽप्रतिद्वन्द्वो दिवि देवेषु विश्रुतः ॥ ५५
अद्य पश्यत मे वीर्यं बाह्वोः पीनांसयोर्युधि ।
ज्वलमानस्य दीप्तस्य द्रौणेरस्त्रस्य वारणे ॥ ५६
यदि नारायणास्त्रस्य प्रतियोद्धा न विद्यते ।
अद्यैतत्प्रतियोत्स्यामि पश्यत्सु कुरुपाण्डुषु ॥ ५७
अर्जुनार्जुन बीभत्सो न न्यस्यं गाण्डिवं त्वया ।
शशाङ्कस्येव ते पङ्को नैर्मल्यं पातयिष्यति ॥ ५८
अर्जुन उवाच ।
भीम नारायणास्त्रे मे गोषु च ब्राह्मणेषु च ।
एतेषु गाण्डिवं न्यस्यमेतद्धि व्रतमुत्तमम् ॥ ५९
एवमुक्तस्ततो भीमो द्रोणपुत्रमरिंदमम् ।
अभ्ययान्मेघघोषेण रथेनादित्यवर्चसा ॥ ६०
'कम्पयन्मेदिनीं सर्वां त्रासयंश्च चमूं तव ।
शङ्खशब्दं महत्कृत्वा भुजशब्दं च पाण्डवः ॥ ६१
तस्य शङ्खस्वनं श्रुत्वा बाहुशब्दं च तावकाः ।
समन्तात्कोष्ठकीकृत्य शरव्रातैरवाकिरन् ॥' ६२
स एनमिषुजालेन लघुत्वाच्छीघ्रविक्रमः ।
निमेषमात्रेणासाद्य कुन्तीपुत्रोऽभ्यवाकिरत् ॥ ६३
ततो द्रौणिः प्रहस्यैनं द्रवन्तमभिभाष्य च ।
अवाकिरत्प्रदीप्ताग्रैः शरैस्तैरभिमन्त्रितैः ॥ ६४
पन्नगैरिव दीप्तास्यैर्वमद्भिर्ज्वलनं रणे ।
अवकीर्णोऽभवत्पार्थः स्फुलिङ्गैरिव काञ्चनैः ॥ ६५
तस्य रूपमभूद्राजन्भीमसेनस्य संयुगे ।
खद्योतैरावृतस्येव पर्वतस्य दिनक्षये ॥ ६६
तदस्त्रं द्रोणपुत्रस्य तस्मिन्प्रतिसमस्यति ।
अवर्धत महाराज यथाऽग्निरनिलोद्धतः ॥ ६७
विवर्धमानमालक्ष्य तदस्त्रं भीमविक्रमम् ।
पाण्डुसैन्यमृते भीमं सुमहद्भयमाविशत् ॥ ६८
ततः शस्त्राणि ते सर्वे समुत्सृज्य महीतले ।
अवारोहन्रथेभ्यश्च हस्त्यश्वेभ्यश्च सर्वशः ॥ ६९
तेषु निक्षिप्तशस्त्रेषु वाहनेभ्यश्च्युतेषु च ।
तदस्त्रवीर्यं विपुलं भीममूर्धन्यथापतत् ॥ ७०
हाहाकृतानि भूतानि पाण्डवाश्च विशेषतः ।
भीमसेनमपश्यन्त तेजसा संवृतं तथा ॥ ७१

॥ इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि पञ्चदशदिवसयुद्धे द्विशततमोऽध्यायः ॥ २०० ॥

## एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

नारायणास्त्रेणावेष्टिते भीमे कृष्णार्जुनाभ्यां हस्ततः शस्त्रापकर्षणपूर्वकं रथादवरोपिते सत्यस्त्रस्य प्रशमनम् ॥ १ ॥ ततः संकुलयुद्धम् ॥ २ ॥

सञ्जय उवाच ।
भीमसेनं समाकीर्णं दृष्ट्वाऽस्त्रेण धनञ्जयः ।
तेजसः प्रतिघातार्थं वारुणेन समावृणोत् ॥ १
नालक्ष्यत तत्कश्चिद्वारुणास्त्रेण संवृतम्

अर्जुनस्य लघुत्वाच्च संवृतत्वाच्च तेजसः ॥ २
साश्वसूतरथो भीमो द्रोणपुत्रास्त्रसंवृतः ।
अग्नावग्निरिव न्यस्तो ज्वालामाली सुदुर्दृशः ॥ ३
यथा रात्रिक्षये राजञ्ज्योतींष्यस्तगिरिं प्रति ।
समापेतुस्तथा बाणा भीमसेनरथं प्रति ॥ ४
स हि भीमो रथश्चास्य हयाः सूतश्च मारिष ।
संवृता द्रोणपुत्रेण पावकान्तर्गताऽभवन् ॥ ५
यथा जग्ध्वा जगत्कृत्स्नं समये सचराचरम् ।
गच्छेद्वह्निर्विभोरास्यं तथाऽस्त्रं भीममावृणोत् ॥ ६
सूर्यमग्निः प्रविष्टः स्याद्यथा चाग्निं दिवाकरः ।
तथा प्रविष्टं तत्तेजो न प्राज्ञायत पाण्डवः ॥ ७
'तदस्त्रं भीमहुंकारादपयाति पुनःपुनः ।
पुनःपुनस्तमायाति हुंकारात्तं विमुञ्चति ।
ततो देवाः सगन्धर्वा भीमं दृष्ट्वा सुविस्मिताः ॥' ८
विकीर्णमस्त्रं तद्दृष्ट्वा तथा भीमरथं प्रति ।
उदीर्यमाणं द्रौणिं च निष्प्रतिद्वन्द्वमाहवे ॥ ९
सर्वसैन्यं च पाण्डूनां न्यस्तशस्त्रमचेतनम्
युधिष्ठिरपुरोगांश्च विमुखांस्तान्महारथान् ॥ १०
अर्जुनो वासुदेवश्च त्वरमाणौ महाद्युती
अवप्लुत्य रथाद्वीरौ भीममाद्रवतां ततः ॥ ११
ततस्तद्द्रोणपुत्रस्य तेजोऽस्त्रबलसंभवम् ।
विगाह्य तौ सुबलिनौ मायया ऽविशतां तथा ॥ १२
न्यस्तशस्त्रौ ततस्तौ तु नादहत्सोऽस्त्रजोऽनलः ।
वारुणास्त्रप्रयोगाच्च वीर्यवत्त्वाच्च कृष्णयोः ॥ १३
ततश्चकृषतुर्भीमं सर्वशस्त्रायुधानि च
नारायणास्त्रशान्त्यर्थं नरनारायणौ बलात् ॥ १४
आकृष्यमाणः कौन्तेयो नदत्येव महारवम्
वर्धते चैव तद्घोरं द्रौणेरस्त्रं सुदुर्जयम् ॥ १५
तमब्रवीद्वासुदेवः किमिदं पाण्डुनन्दन ।
वार्यमाणोऽपि कौन्तेय यद्युद्धान्न निवर्तसे ॥ १६
यदि युद्धेन जेयाः स्युरिमे कौरवनन्दनाः ।
वयमप्यत्र युध्येम तथा चेमे नरर्षभाः ॥ १७
रथेभ्यस्त्ववतीर्णाः स्म सर्व एव हि तावकाः ।
तस्मात्त्वमपि कौन्तेय रथात्तूर्णमपाक्रम ॥ १८
एवमुक्त्वा तु तं कृष्णो रथाद्भूमिमवर्तयत् ।
निःश्वसन्तं यथा नागं क्रोधसंरक्तलोचनम् ॥ १९
यदाऽपकृष्टः स रथान्न्यासितश्चायुधं भुवि ।
ततो नारायणास्त्रं तत्प्रशान्तं शत्रुतापनम् ॥ २०
सञ्जय उवाच ।
तस्मिन्प्रशान्ते विधिना तेन तेजसि दुःसहे ।
बभूवुर्विमलाः सर्वा दिशः प्रदिश एव च ॥ २१
प्रववुश्च शिवा वाताः प्रशान्ता मृगपक्षिणः ।
वाहनानि च हृष्टानि प्रशान्तेऽस्त्रे सुदुर्जये ॥ २२
व्यपोढे च ततो घोरे तस्मिंस्तेजसि भारत ।
बभौ भीमो निशापाये धीमान्सूर्य इवोदितः ॥ २३
हतशेषं बलं तत्तु पाण्डवानामतिष्ठत ।
अस्त्रव्युपरमाद्धृष्टं तव पुत्रजिघांसया ॥ २४
व्यवस्थिते बले तस्मिन्नस्त्रे प्रतिहते तथा ।
दुर्योधनो महाराज द्रोणपुत्रमथाब्रवीत् ॥ २५
अश्वत्थामन्पुनः शीघ्रमस्त्रमेतत्प्रयोजय ।
अवस्थिता हि पाञ्चालाः पुनरेते जयैषिणः ॥ २६
अश्वत्थामा तथोक्तस्तु तव पुत्रेण मारिष ।
सुदीनमभिनिःश्वस्य राजानमिदमब्रवीत् ॥ २७
नैतदावर्तते राजन्नस्त्रं द्विर्नोपपद्यते ।
आवृत्तं हि निवर्तेत प्रयोक्तारं न संशयः ॥ २८
एष चास्त्रप्रतीघातं वासुदेवः प्रयुक्तवान् ।
'अस्य तु ह्येष वै दाता मानुषेषु न विद्यते ॥ २९
परावरज्ञो लोकानां न तदस्ति न वेत्ति यत् ।
तदेतदस्त्रं प्रशमं यातं कृष्णस्य मन्त्रितैः ॥' ३०
द्विविधो विहितः सङ्ख्ये वधः शत्रोर्जनाधिप
पराजयो वा मृत्युर्वा श्रेयान्मृत्युर्न निर्जयः ॥ ३१
विजिताश्चारयो ह्येते शस्त्रोत्सर्गान्मृतोपमाः ॥ ३२
दुर्योधन उवाच ।
आचार्यपुत्र यद्येतद्द्विरस्त्रं न प्रयुज्यते ।
अन्यैर्गुरुघ्ना वध्यन्तामस्त्रैरस्त्रविदां वर ॥ ३३
त्वयि शस्त्राणि दिव्यानि त्र्यम्बके चामितौजसि ।
'घ्नतैतान्सुमहावीर्य शात्रवान्युद्धकोविदः ।'
इच्छतो न हि ते मुच्येत्संक्रुद्धो हि पुरंदरः ॥ ३४

धृतराष्ट्र उवाच ।
तस्मिन्नस्त्रे प्रतिहते द्रोणे चोपधिना हते ।
तथा दुर्योधनेनोक्तो द्रौणिः किमकरोत्पुनः ॥३५
दृष्ट्वा पार्थांश्च संग्रामे युद्धाय समुपस्थितान् ।
नारायणास्त्रनिर्मुक्तांश्चरतः पृतनामुखे ॥ ३६
सञ्जय उवाच ।
जानन्पितुः स निधनं सिंहलाङ्गूलकेतनः ।
सक्रोधो भयमुत्सृज्य सोऽभिदुद्राव पार्षतम् ॥३७
अभिद्रुत्य च विंशत्या क्षुद्रकाणां नरर्षभ ।
पञ्चभिश्चातिवेगेन विव्याध पुरुषर्षभः ॥ ३८
धृष्टद्युम्नस्ततो राजञ्ज्वलन्तमिव पावकम् ।
द्रोणपुत्रं त्रिषष्ठ्या तु राजन्विव्याध पत्रिणाम् ॥३९
सारथिं चास्य विंशत्या स्वर्णपुङ्खैः शिलाशितैः ।
हयांश्च चतुरोऽविध्यच्चतुर्भिर्निशितैः शरैः ॥ ४०
विद्ध्वा विद्ध्वाऽनदद्द्रौणिं कम्पयन्निव मेदिनीम् ।
आददे सर्वलोकस्य प्राणानिव महारणे ॥ ४१
पार्षतस्तु बली राजन्कृतास्त्रः कृतनिश्चयः ।
द्रौणिमेवाभिदुद्राव मृत्युं कृत्वा निवर्तनम् ॥ ४२
ततो बाणमयं वर्षं द्रोणपुत्रस्य मूर्धनि ।
अवासृजदमेयात्मा पाञ्चाल्यो रथिनांवरः ॥ ४३
तं द्रौणिः समरे क्रुद्धं छादयामास पत्रिभिः ।
विव्याध चैनं दशभिः पितुर्वधमनुस्मरन् ॥ ४४
द्वाभ्यां च सुविसृष्टाभ्यां क्षुराभ्यां ध्वजकार्मुके ।
छित्त्वा पाञ्चालराजस्य द्रौणिरन्यैः समार्दयत् ॥४५
व्यश्वसूतरथं चैनं द्रौणिश्चक्रे महाहवे ।
तस्य चानुचरान्सर्वान्क्रुद्धः प्राद्रावयच्छरैः ॥ ४६
ततः प्रदुद्रुवे सैन्यं पाञ्चालानां विशांपते ।
संभ्रान्तरूपमार्तं च न परस्परमैक्षत ॥ ४७
दृष्ट्वा तु विमुखान्योधान्धृष्टद्युम्नं च पीडितम् ।
शैनेयोऽचोदयत्तूर्णं रथं द्रौणिरथं प्रति ॥ ४८
अष्टभिर्निशितैर्बाणैरश्वत्थामानमार्दयत् ।
विंशत्या पुनराहत्य नानारूपैरमर्षणः ।
विव्याध च तथा सूतं चतुर्भिश्चतुरो हयान् ॥ ४९
[धनु*र्ध्वजं च संयत्तश्चिच्छेद कृतहस्तवत् ।
स साश्वं व्यधमच्चापि रथं हेमपरिष्कृतम् ।
हृदि विव्याध समरे त्रिंशता सायकैर्भृशम् ॥ ५०
एवं स पीडितो राजन्नश्वत्थामा महाबलः
शरजालैः परिवृतः कर्तव्यं नान्वपद्यत ॥ ५१
एवं गते गुरोः पुत्रे तव पुत्रो महारथः ।
कृपकर्णादिभिः सार्धं शरैः सात्वतमावृणोत् ॥ ५२
दुर्योधनस्तु विंशत्या कृपः शारद्वतस्त्रिभिः ।
कृतवर्माऽथ दशभिः कर्णः पञ्चाशता शरैः ॥ ५३
दुःशासनः शतेनैव वृषसेनश्च सप्तभिः ।
सात्यकिं विव्यधुस्तूर्णं समन्तान्निशितैः शरैः ॥५४
ततः स सात्यकी राजन्सर्वानेव महारथान् ।
विरथान्विमुखांश्चैव क्षणेनैवाकरोन्नृप ॥ ५५
अश्वत्थामा तु संप्राप्य चेतनां भरतर्षभ ।
चिन्तयामास दुःखार्तो निःश्वसंश्च पुनःपुनः ॥५६
अथो रथान्तरं द्रौणिः समारुह्य परंतपः
सात्यकिं वारयामास किरञ्शरशतान्बहून् ॥ ५७
तमापतन्तं संप्रेक्ष्य भारद्वाजसुतं रणे ।
विरथं विमुखं चैव पुनश्चक्रे महारथः ॥ ५८
ततस्ते पाण्डवा राजन्दृष्ट्वा सात्यकिविक्रमम् ।
शङ्खशब्दान्भृशं चक्रुः सिंहनादांश्च नेदिरे ॥ ५९
एवं तं विरथं कृत्वा सात्यकिः सत्यविक्रमः ।
जघान वृषसेनस्य त्रिसाहस्रान्महारथान् ॥ ६०
अयुतं दन्तिनां सार्धं कृपस्य निजघान सः ।
पञ्चायुतानि चाश्वानां शकुनेर्निजघान ह ॥ ६१
ततो द्रौणिर्महाराज रथमारुह्य वीर्यवान् ।
सात्यकिं प्रति संक्रुद्धः प्रययौ तद्वधेप्सया ॥ ६२
पुनस्तमागतं दृष्ट्वा शैनेयो निशितैः शरैः
अदारयत्क्रूरतरैः पुनःपुनररिंदम ॥] ६३
सोऽतिविद्धो महेष्वासो नानालिङ्गैरमर्षणः ।
युयुधानेन वै द्रौणिः प्रहसन्वाक्यमब्रवीत् ॥ ६४
शैनेयाभ्युपपत्तिं ते जानाम्याचार्यघातिनि ।
न चैनं त्रास्यसि मया ग्रस्तमात्मानमेव च ॥६५
शपेत्मनाऽहं शैनेय सत्येन तपसा तथा ।
अहत्वा सर्वपाञ्चालान्यदि शान्तिमहं लभे ॥ ६६

* एतदादि १४ श्लोकाः झ. पुस्तक एव दृश्यन्ते ।

यद्बलं पाण्डवेयानां वृष्णीनामपि यद्बलम् ।
क्रियतां सर्वमेवेह निहनिष्यामि सोमकान् ॥ ६७
एवमुक्त्वाऽर्करश्म्याभं सुतीक्ष्णं तं शरोत्तमम् ।
व्यसृजत्सात्वते द्रौणिर्वज्रं वृत्रे यथा हरिः ॥ ६८
स तं निर्भिद्य तेनास्तः सायकः सशरावरम् ।
विवेश वसुधां भित्त्वा श्वसन्बिलमिवोरगः ॥ ६९
स भिन्नकवचः शूरस्तोत्रार्दित इव द्विपः ।
विमुच्य सशरं चापं भूरिव्रणपरिस्रवः ॥ ७०
सीदन्रुधिरसिक्तश्च रथोपस्थ उपाविशत् ।
सूतेनापहृतस्तूर्णं द्रोणपुत्राद्रथान्तरम् ॥ ७१
अथान्येन सुपुङ्खेन शरेणानतपर्वणा ।
आजघान भ्रुवोर्मध्ये धृष्टद्युम्नं परंतपः ॥ ७२
स पूर्वमतिविद्धश्च भृशं पश्चाच्च पीडितः ।
ससादाथ च पाञ्चाल्यो व्यपाश्रयत च ध्वजम् ७३
तं नागमिव सिंहेन दृष्ट्वा राजञ्शरार्दितम् ।
जवेनाभ्यद्रवञ्छूराः पञ्च पाण्डवतो रथाः ॥७४
किरीटी भीमसेनश्च वृद्धक्षत्रश्च पौरवः ।
युवराजश्च चेदीनां मालवश्च सुदर्शनः ॥ ७५
एते हाहाकृताः सर्वे प्रगृहीतशरासनाः ।
वीरं द्रौणायनिं वीराः सर्वतः पर्यवारयन् ॥ ७६
ते विंशतिपदे यत्ता गुरुपुत्रममर्षणम् ।
पञ्चभिः पञ्चभिर्बाणैरभ्यघ्नन्सर्वतः समम् ॥ ७७
आशीविषाभैर्विंशत्या पञ्चभिस्तु शितैः शरैः ।
चिच्छेद युगपद्द्रौणिः पञ्चविंशतिसायकान् ॥ ७८
सप्तभिस्तु शितैर्बाणैः पौरवं द्रौणिरार्दयत् ।
मालवं त्रिभिरेकेन पार्थं षड्भिर्वृकोदरम् ॥ ७९
ततस्ते विव्यधुः सर्वे द्रौणिं राजन्महारथाः ।
युगपच्च पृथक्चैव रुक्मपुङ्खैः शिलाशितैः ॥ ८०
युवराजश्च विंशत्या द्रौणिं विव्याध पत्रिभिः ।
पार्थश्च पुनरष्टाभिस्तथा सर्वे त्रिभिस्त्रिभिः ॥ ८१
ततोऽर्जुनं षड्भिरथाजघान
द्रौणायनिर्दशभिर्वासुदेवम् ।
भीमं दशार्धैर्युवराजं चतुर्भि-
र्द्वाभ्यां द्वाभ्यां मालवं पौरवं च ॥ ८२
सूतं विद्ध्वा भीमसेनस्य षड्भि-
र्द्वाभ्यां विद्ध्वा कार्मुकं च ध्वजं च ।
पुनः पार्थं शरवर्षेण विद्ध्वा
द्रौणिर्घोरं सिंहनादं ननाद ॥ ८३
तस्यास्यतस्तान्निशितान्पीतधारा-
न्द्रौणेः शरान्पृष्ठतश्चाग्रतश्च ।
धरा वियद्द्यौः प्रदिशो दिशश्च
च्छन्ना बाणैरभवन्घोररूपैः ॥ ८४
आसन्नस्य स्वरथं तीव्रतेजाः
सुदर्शनस्येन्द्रकेतुप्रकाशौ ।
भुजौ शिरश्चेन्द्रसमानवीर्य-
स्त्रिभिः शरैर्युगपत्संचकर्त ॥ ८५
स पौरवं रथशक्त्या निहत्य
च्छित्त्वा रथं तिलशश्चास्य बाणैः ।
छित्त्वा च बाहू वरचन्दनाक्तौ
भल्लेन कायाच्छिर उच्चकर्त ॥ ८६
युवानमिन्दीवरदामवर्णं
चेदिप्रभुं युवराजं प्रसह्य ।
बाणैस्त्वरावाञ्ज्वलिताग्निकल्पै-
र्विद्ध्वा प्रादान्मृत्यवे साश्वसूतम् ॥ ८७
[मालवं* पौरवं चैव युवराजं च चेदिपम् ।
दृष्ट्वा समक्षं निहतं द्रोणपुत्रेण पाण्डवः ।
भीमसेनो महाबाहुः क्रोधमाहारयत्परम् ॥ ८८
ततः शरशतैस्तीक्ष्णैः संक्रुद्धाशीविषोपमैः ।
छादयामास समरे द्रोणपुत्रं परंतपः ॥ ८९
ततो द्रौणिर्महातेजाः शरवर्षं निहत्य तम् ।
विव्याध निशितैर्बाणैर्भीमसेनममर्षणः ॥ ९०
ततो भीमो महाबाहुर्द्रौणेर्युधि महाबलः ।
क्षुरप्रेण धनुश्छित्त्वा द्रौणिं विव्याध पत्रिणा ॥ ९१
तदपास्य धनुश्छिन्नं द्रोणपुत्रो महामनाः ।
अन्यत्कार्मुकमादाय भीमं विव्याध पत्रिभिः ॥ ९२
तौ द्रौणिभीमौ समरे पराक्रान्तौ महाबलौ ।
अवर्षतां शरवर्षं वृष्टिमन्ताविवाम्बुदौ ॥ ९३
भीमनामाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः ।

* एतदादि ४२ श्लोकाः झ. पाठ एव सन्ति ।

द्रौणिं संछादयामासुर्घनौघा इव भास्करम् ॥ ९४
तथैव द्रौणिनिर्मुक्तैर्भीमः सन्नतपर्वभिः।
अवाकीर्यत स क्षिप्रं शरैः शतसहस्रशः ॥ ९५
स च्छाद्यमानः समरे द्रौणिना रणशालिना।
न विव्यथे महाराज तदद्भुतमिवाभवत् ॥ ९६
ततो भीमो महाबाहुः कार्तस्वरविभूषितान्।
नाराचान्दश संप्रैषीद्यमदण्डनिभाञ्छितान् ॥९७
ते जत्रुदेशमासाद्य द्रोणपुत्रस्य मारिष।
निर्भिद्य विविशुस्तूर्णं वल्मीकमिव पन्नगाः॥ ९८
सोऽतिविद्धो भृशं द्रौणिः पाण्डवेन महात्मना।
ध्वजयष्टिं समासाद्य न्यमीलयत लोचने ॥ ९९
स मुहूर्तात्पुनः संज्ञां लब्ध्वा द्रौणिर्नराधिप।
क्रोधं परममातस्थौ समरे रुधिरोक्षितः ॥ १००
दृढं सोऽभिहतस्तेन पाण्डवेन महात्मना।
वेगं चक्रे महाबाहुर्भीमसेनरथं प्रति ॥ १०१
तत आकर्णपूर्णानां शराणां तिग्मतेजसाम्
शतमाशीविषाभानां प्रेषयामास भारत ॥ १०२
भीमोऽपि समरश्लाघी तस्य वीर्यमचिन्तयत्।
तूर्णं प्रासृजदुग्राणि शरवर्षाणि पाण्डवः ॥ १०३
ततो द्रौणिर्महाराज च्छित्त्वाऽस्य विशिखैर्धनुः।
आजघानोरसि क्रुद्धः पाण्डवं निशितैः शरैः १०४
ततोऽन्यद्धनुरादाय भीमसेनो ह्यमर्षणः।
विव्याध निशितैर्बाणैर्द्रौणिं पञ्चभिराहवे ॥ १०५
जीमूताविव घर्मान्ते तौ शरौघप्रवर्षिणौ।
अन्योन्यक्रोधताम्राक्षौ छादयामासतुर्युधि॥१०६
तलशब्दैस्ततो घोरैस्त्रासयन्तौ परस्परम्।
अयुध्येतां सुसंरब्धौ कृतप्रतिकृतैषिणौ ॥ १०७
ततो विष्फार्य सुमहच्चापं रुक्मविभूषितम्।
भीमं प्रैक्षत स द्रौणिः शरानस्यन्तमन्तिकात्।
शरद्यहर्मध्यगतो दीप्तार्चिरिव भास्करः ॥ १०८
आददानस्य विशिखान्संदधानस्य चाशुगान्।
विकर्षतो मुञ्चतश्च नान्तरं ददृशुर्जनाः ॥ १०९
अलातचक्रप्रतिमं तस्य मण्डलमायुधम्।
द्रौणेरासीन्महाराज बाणान्विसृजतस्तदा ॥११०
धनुश्च्युताः शरास्तस्य शतशोऽथ सहस्रशः।
आकाशे प्रत्यदृश्यन्त शलभानामिवायतीः १११
ते तु द्रौणिविनिर्मुक्ताः शरा हेमविभूषिताः।
अजस्रमन्वकीर्यन्त घोरा भीमरथं प्रति ॥ ११२
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम्।
बलं वीर्यं प्रभावं च व्यवसायं च भारत॥११३
तां स मेघादिवोद्भूतां बाणवृष्टिं समन्ततः।
जलवृष्टिं महाघोरां तपान्त इव चिन्तयन्॥११४
द्रोणपुत्रवधप्रेप्सुर्भीमो भीमपराक्रमः।
अमुञ्चच्छरवर्षाणि प्रावृषीव बलाहकः॥ ११५
तद्रुक्मपृष्ठं भीमस्य धनुर्घोरं महारणे।
विकृष्यमाणं विबभौ शक्रचापमिवापरम् ॥११६
तस्माच्छराः प्रादुरासञ्छतशोऽथ सहस्रशः
संछादयन्तः समरे द्रौणिमाहवशोभिनम्॥११७
तयोर्विसृजतोरेवं शरजालानि मारिष।
वायुरप्यन्तरा राजन्नाशक्नोत्प्रतिसर्पितुम्॥ ११८
तथा द्रौणिर्महाराज शरान्हेमविभूषितान्।
तैलधौतान्प्रसन्नाग्रान्प्राहिणोद्वधकाङ्क्षया ॥ ११९
तानन्तरिक्षे विशिखैस्त्रिधैकैकमशातयत्।
विशेषयन्द्रोणसुतं तिष्ठतिष्ठेति चाब्रवीत् ॥१२०
पुनश्च शरवर्षाणि घोराण्युग्राणि पाण्डवः।
व्यसृजद्बलवान्क्रुद्धो द्रोणपुत्रवधेप्सया ॥ १२१
ततोऽस्त्रमायया तूर्णं शरवृष्टिं निवार्य ताम्।
धनुश्चिच्छेद भीमस्य द्रोणपुत्रो महास्त्रवित्।
शरैश्चैनं सुबहुभिः क्रुद्धः सङ्ख्ये पराभिनत्॥१२२
स छिन्नधन्वा बलवान्रथशक्तिं सुदारुणाम्॥
वेगेनाविध्य चिक्षेप द्रोणपुत्ररथं प्रति ॥ १२३
तामापतन्तीं सहसा महोल्काभां शितैः शरैः।
चिच्छेद समरे द्रौणिर्दर्शयन्पाणिलाघवम्॥१२४
एतस्मिन्नन्तरे भीमो दृढमादाय कार्मुकम्।
द्रौणिं विव्याध विशिखैः स्मयमानो वृकोदरः॥
ततो द्रौणिर्महाराज भीमसेनस्य सारथिम्।
ललाटे दारयामास शरेणानतपर्वणा ॥ १२६
सोऽतिविद्धो बलवता द्रोणपुत्रेण सारथिः।
व्यामोहमगमद्राजन्रश्मीनुत्सृज्य वाजिनां १२७

ततोऽश्वाः प्राद्रवंस्तूर्णं मोहिते रथसारथौ ।
भीमसेनस्य राजेन्द्र पश्यतां सर्वधन्विनाम्॥]१२८
तं दृष्ट्वा प्रद्रुतैरश्वैरपकृष्टं रणाजिरात् ।
दध्मौ प्रमुदितः शङ्खं बृहन्तमपराजितः ॥ १२९
ततः सर्वे च पाञ्चाला भीमसेनश्च पाण्डवः ।
धृष्टद्युम्नरथं त्यक्त्वा भीताः संप्राद्रवन्दिशः॥१३०
तान्प्रभग्नांस्ततो द्रौणिः पृष्ठतो विकिरञ्शरान् ।
अभ्यवर्तत वेगेन कालयन्पाण्डुवाहिनीम्॥ १३१
ते वध्यमानाः समरे द्रोणपुत्रेण पार्थिवाः ।
द्रोणपुत्रभयाद्राजन्दिशः सर्वाश्च भेजिरे ॥ १३२

॥ इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि पञ्चदशदिवसयुद्धे एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

## द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

नारायणास्त्रे विफलीकृते पुनरश्वत्थाम्नाऽऽग्नेयास्त्रप्रयोगः ॥ १ ॥ तस्यापि पार्थेन व्यर्थीकरणे दूयमानेन द्रौणिना शस्त्रन्यासपूर्वकं रणाङ्गणान्निर्गमनम् ॥ २ ॥ निर्गच्छता च तेन यदृच्छासमागतं व्यासं प्रति निजास्त्रवैफल्यकारणप्रश्नः ॥ ३ ॥ व्यासेन कृष्णार्जुनयोर्नरनारायणात्मकत्वे कथिते प्रतिनिवृत्तेन द्रौणिना सेनावहारः ॥ ४ ॥

सञ्जय उवाच ।
तत्प्रभग्नं बलं दृष्ट्वा कुन्तीपुत्रो धनञ्जयः ।
न्यवारयदमेयात्मा द्रोणपुत्रजयेप्सया ॥ १
ततस्ते सैनिका राजन्सर्वे तत्रावतस्थिरे ।
संस्थाप्यमाना यत्नेन गोविन्देनार्जुनेन च ॥ २
एक एव च बीभत्सुः सोमकावयवैः सह ।
मात्स्यैरन्यैश्च संधाय कौरवान्संन्यवर्तत ॥ ३
ततो द्रुतमतिक्रम्य सिंहलाङ्गूलकेतनम् ।
सव्यसाची महेष्वासमश्वत्थामानमब्रवीत् ॥ ४
या शक्तिर्यच्च विज्ञानं यद्वीर्यं यच्च पौरुषम् ।
धार्तराष्ट्रेषु या प्रीतिर्द्वेषोऽस्मासु च यच्च ते ॥ ५
यच्च भूयोऽस्ति तेजस्ते तत्सर्वं मयि दर्शय ।
स एव द्रोणहन्ता ते दर्पं छेत्स्यति पार्षतः ॥ ६
कालानलसमप्रख्यं द्विषतामन्तकोपमम् ।
समासादय पाञ्चाल्यं मां चापि सहकेशवम् ।
दर्पं नाशयितास्म्यद्य तवोद्वृत्तस्य संयुगे ॥ ७
धृतराष्ट्र उवाच ।
आचार्यपुत्रो मानार्हो बलवांश्चापि सञ्जय ।
प्रीतिर्धनंजये चास्य प्रियश्चापि महात्मनः ॥ ८
न भूतपूर्वं बीभत्सोर्वाक्यं परुषमीदृशम् ॥
अथ कस्मात्स कौन्तेयः सखायं रूक्षमुक्तवान् ॥ ९
सञ्जय उवाच ।
युवराजे हते चैव वृद्धक्षत्रे च पौरवे ।
इष्वस्त्रविधिसंपन्ने मालवे च सुदर्शने ॥ १०
धृष्टद्युम्ने सात्यकौ च भीमे चापि पराजिते ।
युधिष्ठिरस्य तैर्वाक्यैर्मर्मण्यपि च घट्टिते ॥ ११
अन्तर्भेदे च संजाते दुःखं संस्मृत्य च प्रभो ।
अभूतपूर्वो बीभत्सोर्दुःखान्मन्युरजायत ॥ १२
तस्मादनर्हमश्लीलमप्रियं द्रौणिमुक्तवान् ।
मान्यमाचार्यतनयं रूक्षं कापुरुषं यथा ॥ १३
एवमुक्तः श्वसन्क्रोधान्महेष्वासतमो नृप ।
पार्थेन परुषं वाक्यं सर्वमर्मभिदा गिरा ॥ १४
द्रौणिश्चुकोप पार्थाय कृष्णाय च विशेषतः ।
स तु यत्तो रथे स्थित्वा वार्युपस्पृश्य वीर्यवान् ॥१५
सुदुर्धषमस्त्रमाग्नेयमाददे ।
दृश्यादृश्यानरिगणानुद्दिश्याचार्यनन्दनः ॥ १६
सोऽभिमन्त्र्य शरं दीप्तं विधूममिव पावकम् ।
सर्वतः क्रोधमाविश्य चिक्षेप परवीरहा ॥ १७
ततस्तुमुलमाकाशे शरवर्षमजायत ।
पावकार्चिपरीतं तत्पार्थमेवाभिपुप्लुवे ॥ १८
उल्काश्च गगनात्पेतुर्दिशश्च न चकाशिरे ।
तमश्च सहसा रौद्रं चमूमवततार ताम् ॥ १९

राजन्नैव तत्रावतस्थिरे इति ट. पाठः ॥ २ ॥ सोमकावयवैः सोमकानामवयवरूपैर्माण्डलिकैः ॥ ३ ॥ उद्वृत्तस्य उच्छास्त्रवर्तिनः ॥ ७ ॥ युवराजे चेदिपतौ ॥ १० ॥ अन्तर्भेदे हृदयवैक्लव्ये । दुःखं पुत्रवधादिजम् ॥ १२ ॥ अश्लीलं जुगुप्सितम् ।

रक्षांसि च पिशाचाश्च विनेदुरतिसंगताः ।
ववुश्चाशिशिरा वाताः सूर्यो नैव तताप च ॥ २०
वायसाश्चापि चाक्रंदन्दिक्षु सर्वासु भैरवम् ।
रुधिरं चापि वर्षन्तो निनेदुस्तोयदा दिवि ॥ २१
पक्षिणः पशवो गावो विनेदुश्चापि सुव्रताः ।
परमं प्रयतात्मानो न शान्तिमुपलेभिरे ॥ २२
भ्रान्तसर्वमहाभूतमावर्तितदिवाकरम् ।
त्रैलोक्यमभिसंतप्तं ज्वराविष्टमिवाभवत् ॥ २३
अस्त्रतेजोभिसंतप्ता नागा भूमिशयास्तथा ।
निःश्वसन्तः समुत्पेतुस्तेजो घोरं मुमुक्षवः ॥ २४
जलजानि च सत्वानि दह्यमानानि भारत ।
न शान्तिमुपजग्मुर्हि तप्यमानैर्जलाशयैः ॥ २५
दिग्भ्यः प्रदिग्भ्यः खाद्भूमेः सर्वतः शरवृष्टयः ।
उच्चावचा निपेतुर्वै गरुडानिलरंहसः ॥ २६
तैः शरैर्द्रोणपुत्रस्य वज्रवेगैः समाहताः ।
प्रदग्धा रिपवः पेतुरग्निदग्धा इव द्रुमाः ॥ २७
दह्यमाना महानागाः पेतुरुर्व्यां समन्ततः ।
नदन्तो भैरवान्नादाञ्जलदोपमनिस्वनान् ॥ २८
अपरे प्रद्रुता नागा भयत्रस्ता विशांपते ।
त्रेसुर्दिशो यथा पूर्वं वने दावाग्निसंवृताः ॥ २९
द्रुमाणां शिखराणीव दावदग्धानि मारिष ।
अश्ववृन्दान्यदृश्यन्त रथवृन्दानि भारत ।
अपतन्त रथौघाश्च तत्रतत्र सहस्रशः ॥ ३०
तत्सैन्यं भयसंविग्नं ददाह युधि भारत ।
युगान्ते सर्वभूतानि संवर्तक इवानलः ॥ ३१
दृष्ट्वा तु पाण्डवीं सेनां दह्यमानां महाहवे ।
प्रहृष्टास्तावका राजन्सिंहनादान्विनेदिरे ॥ ३२
ततस्तूर्यसहस्राणि नानालिङ्गानि भारत ।
तूर्णमाजघ्निरे हृष्टास्तावका जितकाशिनः ॥ ३३
कृत्स्ना ह्यक्षौहिणी राजन्सव्यसाची च पाण्डवः ।
तमसा संवृते लोके नादृश्यन्त महाहवे ॥ ३४
नैव नस्तादृशं राजन्दृष्टपूर्वं न च श्रुतम् ।
यादृशं द्रोणपुत्रेण सृष्टमस्त्रममर्षिणा ॥ ३५
अर्जुनस्तु महाराज ब्राह्ममस्त्रमुदैरयत् ।
सर्वास्त्रप्रतिघातार्थं विहितं पद्मयोनिना ॥ ३६
ततो मुहूर्तादिव तत्तमो व्युपशशाम ह
प्रववौ चानिलः शीतो दिशश्च विमला बभुः ॥ ३७
तत्राद्भुतमपश्याम कृत्स्नामक्षौहिणीं हताम्
अनभिज्ञेयरूपां च प्रदग्धामस्त्रतेजसा ॥ ३८
ततो वीरौ महेष्वासौ विमुक्तौ केशवार्जुनौ ।
सहितौ प्रत्यदृश्येतां नभसीव तमोनुदौ ।
ततो गाण्डीवधन्वा च केशवश्चाक्षतावुभौ ॥ ३९
सपताकध्वजहयः सानुकर्षवरायुधः ।
प्रबभौ सरथो युक्तस्तावकानां भयंकरः ॥ ४०
ततः किलकिलाशब्दः शङ्खभेरीस्वनैः सह ।
पाण्डवानां प्रहृष्टानां क्षणेन समजायत ॥ ४१
हताविति तयोरासीत्सेनयोरुभयोर्मतिः ।
तरसाऽभ्यागतौ दृष्ट्वा सहितौ केशवार्जुनौ ॥ ४२
तावक्षतौ प्रमुदितौ दध्मतुर्वारिजोत्तमौ ।
दृष्ट्वा प्रमुदितान्पार्थांस्त्वदीया व्यथिताऽभवन् ॥
विमुक्तौ च महात्मानौ दृष्ट्वा द्रौणिः सुदुःखितः ।
तं चिन्तयामास किंत्वेतदिति मारिष ॥ ४४
चिन्तयित्वा तु राजेन्द्र ध्यानशोकपरायणः ।
निःश्वसन्दीर्घमुष्णं च विमनाश्चाभवत्ततः ॥ ४५
सञ्जय उवाच ।
ततो द्रौणिर्धनुस्त्यक्त्वा रथात्प्रस्कन्द्य वेगितः ।
धिग्धिक्सर्वमिदं मिथ्येत्युक्त्वा संप्राद्रवद्रणात् ४६
ततः स्निग्धाम्बुदाभासं वेदावासमकल्मषम् ।
वेदव्यासं सरस्वत्यावासं व्यासं ददर्श ह ॥ ४७
तं द्रौणिरग्रतो दृष्ट्वा स्थितं कुरुकुलोद्वहम् ।

---

अप्रियं परुषम् ॥ १३ ॥ क्रव्यादाश्चापि चाक्रन्दन् इति ट० पाठः ॥ २१ ॥ प्रयतात्मानो योगिनोऽपि समाधिच्युता बभूवुरित्यर्थः ॥ २२ ॥ आवर्तितदिवाकरं विश्वं सर्वं भ्रमतीवेत्यमन्यतेत्यर्थः ॥ २३ ॥ त्रेसुः शब्दं चक्रुः । यथा वने इति संबन्धः ॥ २९ ॥ युगान्ते-प्रलये । संवर्तकः संहारकः ॥ ३१ ॥ तमोनुदौ चन्द्रसूर्यौ ॥ ३९ ॥ तयोर्विषये ॥ ४२ ॥ वेदानां व्यासं शाखाप्रशाखाभेदेन विभाजकम् । सरस्वत्या अङ्गोपवेदस्मृत्यादिरूपाया आवासम् । व्यासमिति पाठे विस्तारम् । आवासं च सरस्वत्याः स वै व्यासं ददर्शह इति क. ग. ट. पाठः ॥ ४७ ॥ कुरवो धृतराष्ट्राद्यास्तेषां कुलोद्वहम् ॥ ४८ ॥

सन्नकण्ठोऽब्रवीद्वाक्यमभिवाद्य सुदीनवत् ॥ ४८
भोभो माया यदृच्छा वा दैवं वा किमिदं भवेत् ।
अस्त्रं त्विदं कथं मिथ्या मम कश्च व्यतिक्रमः ॥४९
अधरोत्तरमेतद्वा लोकानां वा पराभवः ।
यदिमौ जीवतः कृष्णौ कालो हि दुरतिक्रमः ॥ ५०
नासुरा न च गन्धर्वा न पिशाचा न राक्षसाः ।
न सर्पा यक्षपतगा न मनुष्याः कथंचन ॥ ५१
उत्सहन्तेऽन्यथा कर्तुमेतदस्त्रं मयेरितम् ।
तदिदं केवलं हत्वा शान्तमक्षौहिणीं ज्वलत् ॥ ५२
सर्वघाति मया मुक्तमस्त्रं परमदारुणम् ।
केनेमौ मर्त्यधर्माणौ नाधाक्षीत्केशवार्जुनौ ॥५३
एतत्प्रब्रूहि भगवन्मया पृष्टो यथातथम् ।
श्रोतुमिच्छामि तत्त्वेन सर्वमेतन्महामुने ॥ ५४

व्यास उवाच

महान्तमेवमर्थं मां यं त्वं पृच्छसि विस्मयात् ।
तं प्रवक्ष्यामि ते सर्वं समाधाय मनः शृणु ॥ ५५
योऽसौ नारायणो नाम पूर्वेषामपि पूर्वजः ।
'आदिदेवो जगन्नाथो लोककर्ता स्वयं प्रभुः ॥ ५६
आद्यः सर्वस्य लोकस्य अनादिनिधनोऽच्युतः ।
व्याकुर्वते यस्य तत्त्वं श्रुतयो मुनयश्च ह ॥ ५७
अतोऽजय्यः सर्वभूतैर्मनसाऽपि जगत्पतिः ।
तस्मादिमं जेतुकाम अज्ञानतमसा वृतः ॥ ५८
मा शुचः पुरुषव्याघ्र विद्धि तद्वदिहार्जुनम् ।
तस्य शक्तिरसौ पार्थस्तस्माच्छोकमिमं त्यज ॥ ५९
विश्वेश्वरोऽयं लोकादिः परमात्मा ह्यधोक्षजः ।
सहस्रसंहितादंशादेकांशोऽयमजायत ॥ ६०
देवानां हितकामार्थं लोकानां चैव सत्तमः ।'
अजायत च कार्यार्थं पुत्रो धर्मस्य विश्वकृत् ॥ ६१
स तपस्तीव्रमातस्थे शिशिरं गिरिमास्थितः ।
ऊर्ध्वबाहुर्महातेजा ज्वलनादित्यसन्निभः ॥ ६२
षष्टिं वर्षसहस्राणि तावन्त्येव शतानि च ।
अशोषयत्तदाऽऽत्मानं वायुभक्षोऽम्बुजेक्षणः ॥६३
अथापरं तपस्तप्त्वा द्विस्ततोऽन्यत्पुनर्महत् ।
द्यावापृथिव्योर्विवरं तेजसा समपूरयत् ॥ ६४
स तेन तपसा तात ब्रह्मभूतो यदाऽभवत् ।
ततो विश्वेश्वरं योनिं विश्वस्य जगतः पतिम् ।
ददर्श भृशदुर्धर्षं सर्वदेवैरभिष्टुतम् ॥ ६५
अणीयांसमणुभ्यश्च बृहद्भ्यश्च बृहत्तमम् ।
रुद्रमीशानवृषभं हरं शंभुं कपर्दिनम् ॥ ६६
चेकितानं परां योनिं तिष्ठतो गच्छतश्च ह ।
दुर्वारणं सुदुर्धर्षं दुर्निरीक्ष्यं दुरासदम् ।
अतिमन्युं महात्मानं सर्वभूतप्रचेतसम् ॥ ६७

दिव्यं चापमिषुधी चाददानं
हिरण्यवर्माणमनन्तवीर्यम् ।
पिनाकिनं वज्रिणं दीप्तशूलं
परश्वधिं गदिनं चायतासिम् ॥ ६८
बभ्रूजटामण्डलचन्द्रमौलिं
व्याघ्राजिनं परिघिणं दण्डपाणिम् ।
शुभाङ्गदं नागयज्ञोपवीतं
विश्वैर्गणैः शोभितं भूतसङ्घैः ।
एकीभूतं तपसां सन्निधानं
वचोधिकैः सुष्टुतमिष्टवाग्भिः ॥ ६९
जलं दिशं खं क्षितिं चन्द्रसूर्यौ
हुताशवायुप्रतिमं सुरेशम् ।
नालं द्रष्टुं यं जना भिन्नवृत्ता
ब्रह्मद्विषघ्नममृतस्य योनिम् ॥
यं पश्यन्ति ब्राह्मणाः साधुवृत्ताः
क्षीणे पापे मनसा वीतशोकाः ।
तन्निष्ठात्मा तपसा धर्ममीड्यं
तद्भक्त्या वै विश्वरूपं ददर्श ॥ ७१
दृष्ट्वा चैनं वाङ्मनोबुद्धिदेहैः
संहृष्टात्मा मुमुदे वासुदेवः ॥ ७२

---

माया नष्टयोरप्यनष्टत्वेन दर्शनम् । यदृच्छा अस्त्रशक्तेरनियमः ॥ ४९ ॥ अधरोत्तरं विपरीतम् ॥ ५० ॥ शिशिरं गिरिं हिमाचलम् ॥ ६२ ॥ योगी विश्वस्येति क. ख. ग. पाठः । पतिं पालयितारम् ॥ ६५ ॥ ईशानानां ब्रह्मादीनामपि वृषभं श्रेष्ठम् । कपर्दिनं जटाजूटवन्तम् ॥६६॥ चेकितानं चेतयतम् । तिष्ठतः स्थावरस्य । गच्छतो जंगमस्य । दुर्वारणं दुर्निषेधम् । अतिमन्युं तीव्रकोपं दुष्टेषु ॥ ६७ ॥ परश्वधिं परश्वधवन्तम् ॥ ६८ ॥

अक्षमालापरिक्षिप्तं ज्योतिषां परमं निधिम् ।
रुद्रं नारायणो दृष्ट्वा ववन्दे विश्वसंभवम् ॥ ७३
वरदं पृथुचार्वङ्ग्या पार्वत्या सहितं प्रभुम् ।
क्रीडमानं महात्मानं भूतसङ्घगणैर्वृतम् ॥ ७४
अजमीशानमव्यक्तं कारणात्मानमच्युतम् ।
अभिवाद्याथ रुद्राय सद्योऽन्धकनिपातिने ।
पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान् ॥ ७५
श्रीनारायण उवाच ।
त्वत्संभूता भूतकृतो वरेण्य
गोप्तारोऽस्य भुवनस्यादिदेव ।
आविश्येमां धरणीं येऽभ्यरक्षन्
पुरा पुराणीं तव देव सृष्टिम् ॥ ७६
सुरासुरान्नागरक्षःपिशाचा-
न्नरान्सुपर्णानथ गन्धर्वयक्षान् ।
पृथग्विधान्भूतसङ्घांश्च विश्वां-
स्त्वत्संभूतान्विद्म सर्वांस्तथैव ॥ ७७
ऐन्द्रं याम्यं वारुणं वैत्तपाल्यं
पैत्रं त्वाष्ट्रं कर्म सौम्यं च तुभ्यम् ॥ ७८
रूपं ज्योतिः शब्द आकाशवायुः
स्पर्शः स्वाद्यं सलिलं गन्ध उर्वी ।
कालो ब्रह्मा ब्रह्म च ब्राह्मणाश्च
त्वत्संभूताः स्थास्नु चरिष्णु चेदम् ॥ ७९
अद्भ्यः स्तोका यान्ति यथा पृथक्त्वं
ताभिश्चैक्यं संक्षये यान्ति भूयः ।
एवं विद्वान्प्रभवं चाप्ययं च
त्वत्संभूतं तव सायुज्यमेति ॥ ८०
दिव्यामृतौ मानसौ द्वौ सुपर्णा-
ववाक्शाखः पिप्पलः सप्तगोप्ताः ।
वाचश्चार्था देवता लोकपाला
लोकानन्ये ये पुरा धारयित्वा ।
गता हि तेभ्यः परमं तत्परं च
त्वत्संभूतास्ते च तेभ्यः परस्त्वम् ॥ ८१
भूतं भव्यं भविता चाप्रधृष्यं
त्वत्संभूता भुवनानीह विश्वा ।
भक्तं च मां भजमानं भजस्व
प्रीत्या मां वै लोकपितामहेश ॥ ८२
आत्मानं त्वामात्मनो न व्यबोधं
विद्वानेवं गच्छति ब्रह्म शुक्रम् ।
अस्तौषं त्वां तव संमानमिच्छ-
न्विचिन्वन्वै सदृशं देववर्य ।
सुदुर्लभान्देहि वरान्ममष्टा-
नभिष्टुतः प्रविकार्षीश्च मायाम् ॥ ८३
व्यास उवाच ।
तस्मै वरानचिन्त्यात्मा देवदेवः पिनाकधृत् ।
विष्णवे देवमुख्याय प्रायच्छदृषिसंस्तुतः ॥ ८४
श्रीभगवानुवाच ।
मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु ।
अप्रमेयबलात्मा त्वं नारायण भविष्यसि ॥ ८५
न च त्वां प्रसहिष्यन्ति देवासुरमहोरगाः ।
न पिशाचा न गन्धर्वा न यक्षा न च राक्षसाः॥८६
न सुपर्णास्तथा नागा न च विश्वे वियोनिजाः ।
न कश्चित्त्वां च देवोऽपि समरेषु विजेष्यति॥८७
न शस्त्रेण न वज्रेण नाग्निना न च वारिणा ।
न चार्द्रेण न शुष्केण त्रसेन स्थावरेण च ॥ ८८
न हस्तेन न पादेन न काष्ठेन न लोष्टुना ।
कश्चित्तव रुजां कर्ता मत्प्रसादात्कथंचन ।
अपि वै समरं गत्वा भविष्यसि ममाधिकः॥८९
एवमादीन्वराँल्लब्ध्वा प्रसादादथ शूलिनः ।
स एष देवश्चरति मायया मोहयञ्जगत् ॥ ९०
तस्यैव तपसा जातो नरो नाम महामुनिः ।

भूतकृतः प्रजापतयः ॥ ७६ ॥ ऐन्द्रं इन्द्रदैवत्यं कर्म । तुभ्यं त्वदर्थमेव । सर्वेषां देवानां नाम्ना त्वमेव तर्पणीय इत्यर्थः ॥ ७८ ॥ आकाश इति लुप्तविभक्तिकम् । स्वाद्यं रसः । ब्रह्म वेदाः यज्ञाश्च । स्थास्नु स्थावरम् । चरिष्णु जंगमम् ॥ ७९ ॥ अद्भ्यः समुद्रेभ्यः स्तोकाः वर्षबिन्दवः । संक्षये प्रलये एकार्णवे ॥ ८० ॥ अभिष्टुतो यानकार्षीरिह त्वम् इति क. ख. पाठः ॥८३॥ ऋषिणा नारायणेन संस्तुतः ॥ ८४ ॥ वियोनिजाः सिंहव्याघ्रादयः । नागा न विश्वे विश्वयोनयः इति क. ख. पाठः ॥ ८७ ॥ त्रसेन जंगमेन ॥ ८८ ॥ गत्वा प्राप्य ॥ ८९ ॥

तुल्यमेतेन देवेन तं जानीह्यर्जुनं सदा ॥ ९१
तावेतौ पूर्वदेवानां परमोपचितावृषी ।
लोकयात्राविधानार्थं दानवानां वधाय च ।
धर्मसंस्थापनार्थाय संजायेते युगेयुगे ॥ ९२
तथैव कर्मणा कृत्स्नं महतस्तपसोऽपि च ।
तेजो वाग्भिश्च विद्वंस्त्वं जातो रुद्रान्महामते ॥९३
स भवान्देववत्प्राज्ञो ज्ञात्वा भवमयं जगत् ।
अवाकर्षस्त्वमात्मानं नियमैस्तत्प्रियेप्सया ॥ ९४
शुभ्रमत्र हविः कृत्वा महापुरुषविग्रहम् ।
ईजिवांस्त्वं जपैर्होमैरुपहारैश्च मानद ॥ ९५
स तथा पूज्यमानस्ते पूर्वदेवोऽप्यतूतुषत् ।
पुष्कलांश्च वरान्प्रादात्तव विद्वन्हृदि स्थितान् ॥९६
जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः ।
ताभ्यां लिङ्गेऽर्चितो देवस्त्वयाऽर्चायां युगेयुगे ।
देवदेवस्त्वचिन्त्यात्मा अजेयो विष्णुसंभवः ॥९७
सर्वरूपं भवं ज्ञात्वा लिङ्गे योऽर्चयति प्रभुम् ।
आत्मयोगाश्च तस्मिन्वै शास्त्रयोगाश्च शाश्वताः ॥
एवं देवा यजन्तो हि सिद्धाश्च परमर्षयः ।
प्रार्थयन्ते परं लोके स्थाणुमेव च शाश्वतम् ॥ ९९
[स एष* रुद्रभक्तश्च केशवो रुद्रसंभवः ।]
कृष्ण एव हि यष्टव्यो यज्ञैश्चैव सनातनः ॥ १००
सर्वभूतभवं ज्ञात्वा लिङ्गमर्चति यः प्रभोः ।
तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ॥१०१
सञ्जय उवाच ।
तस्य तद्वचनं श्रुत्वा द्रोणपुत्रो महारथः ।
नमश्चकार रुद्राय बहुमेने च केशवम् ॥ १०२
हृष्टरोमा च वश्यात्मा सोऽभिवाद्य महर्षये ।
वरूथिनीमभिप्रेक्ष्य ह्यवहारमकारयत् ॥ १०३
ततः प्रत्यवहारोऽभूत्पाण्डवानां विशांपते ।
कौरवाणां च दीनानां द्रोणे युधि निपातिते १०४
युद्धं कृत्वा दिनान्पञ्च द्रोणो हत्वा वरूथिनीम् ।
ब्रह्मलोकं गतो राजन्ब्राह्मणो वेदपारगः ॥ १०५

॥ इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि पञ्चदशदिवसयुद्धे द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

## त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

इतरालक्षितं पुरतः स्वानुकूलं युध्यमानं शूलपाणिं कंचन पुरुषप्रवरमवलोकयता पार्थेन स क इति यदृच्छासमागतं व्यासं प्रति प्रश्नः ॥ १ ॥ तेन तंप्रति तस्य पशुपतित्वोक्त्या शतरुद्रीयपठनेन सविस्तरं तद्गुणगणवर्णनम् ॥ २ ॥

धृतराष्ट्र उवाच ।
तस्मिन्नतिरथे द्रोणे निहते तत्र सञ्जय ।
मामकाः पाण्डवाश्चैव किमकुर्वन्नतः परम् ॥ १
सञ्जय उवाच ।
तस्मिन्नतिरथे द्रोणे निहते पार्षतेन वै ।
कौरवेषु च भग्नेषु कुन्तीपुत्रो धनञ्जयः ॥ २
दृष्ट्वा सुमहदाश्चर्यमात्मनो विजयावहम् ।
मुनिं स्निग्धाम्बुदाभासं वेदव्यासमकल्मषम् ।
यदृच्छयाऽऽगतं व्यासं पप्रच्छ भरतर्षभ ॥ ३
अर्जुन उवाच ।
संग्रामे न्यहनं शत्रूञ्शरौघैर्विमलैरहम् ।
अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ ४
ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते ।
तस्यां दिशि विदीर्यन्ते शत्रवो मे महामुने ॥ ५
तेन भग्नानरीन्सर्वान्मद्भग्नान्मन्यते जनः ।
तेन भग्नानि सैन्यानि पृष्ठतोऽनुव्रजाम्यहम् ॥ ६

पूर्वदेवानां ब्रह्मविष्णुरुद्राणां मध्ये एतौ विष्णुरूपिणावृषी नरनारायणौ परमोपचितावत्यन्ततपःसंपन्नौ ॥ ९२ ॥ देववत् नारायणवत् । अवाकर्षः अवमतं कृशं कृतवानस्यात्मानं शरीरम् ॥ ९४ ॥ शुभ्रं दीप्तिमत् । शुभमौर्वं नवं कृत्वेति क. ख. ग. पाठः ॥ ९५ ॥ आत्मयोगात्तमीशानं शास्त्रयोगाच्च शाश्वतमिति क. ख. ग. पाठः ॥ ९८ ॥ महर्षये व्यासाय ॥ १०३ ॥ द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

यदृच्छया दैवेन ॥ ३ ॥

* इदमर्धं झ. पुस्तक एव दृश्यते ।

भगवंस्तन्ममाचक्ष्व को वै स पुरुषोत्तमः ।
शूलपाणिर्मया दृष्टस्तेजसा सूर्यसन्निभः ॥ ७
न पद्भ्यां स्पृशते भूमिं न च शूलं विमुञ्चति ।
शूलाच्छूलसहस्राणि निष्पेतुस्तस्य तेजसा ॥ ८
व्यास उवाच ।
प्रजापतीनां प्रथमं तैजसं पुरुषं प्रभुम् ।
भुवनं भूर्भुवं देवं तेजसां प्रवरं प्रभुम् ॥ ९
ईशानं वरदं पार्थ दृष्टवानसि शंकरम् ।
तं गच्छ शरणं देवं वरदं भुवनेश्वरम् ॥ १०
महादेवं महात्मानमीशानं जटिलं विभुम् ।
त्र्यक्षं महाभुजं रुद्रं शिखिनं चीरवाससम् ॥११
महादेवं हरं स्थाणुं वरदं भुवनेश्वरम् ।
जगत्प्रधानमजितं जगत्प्रीतिमधीश्वरम् ॥ १२
जगद्योनिं जगद्बीजं जयिनं जगतो गतिम् ।
विश्वात्मानं विश्वसृजं विश्वमूर्तिं यशस्विनम् ॥१३
विश्वेश्वरं विश्वनरं कर्मणामीश्वरं प्रभुम् ।
शंभुं स्वयंभुं भूतेशं भूतभव्यभवोद्भवम् ॥ १४
योगं योगेश्वरं सर्वं सर्वलोकेश्वरेश्वरम् ।
सर्वश्रेष्ठं जगच्छ्रेष्ठं वरिष्ठं परमेष्ठिनम् ॥ १५
लोकत्रयविधातारमेकं लोकत्रयाश्रयम् ।
शुद्धात्मानं भवं भीमं शशाङ्ककृतशेखरम् ॥ १६
शाश्वतं भूधरं देवं सर्ववागीश्वरेश्वरम् ।
सुदुर्जयं जगन्नाथं जन्ममृत्युजरातिगम् ॥ १७
ज्ञानात्मानं ज्ञानगम्यं ज्ञानश्रेष्ठं सुदुर्विदम् ।
दातारं चैव भक्तानां प्रसादविहितान्वरान् ॥१८
तस्य पारिषदा दिव्या रूपैर्नानाविधैर्विभोः ।
वामना जटिला मुण्डा ह्रस्वग्रीवा महोदराः ॥१९
महाकाया महोत्साहा महाकर्णास्तथाऽपरे ।
आननैर्विकृतैः पादैः पार्थ वेषैश्च वैकृतैः ॥ २०
ईदृशैः स महादेवः पूज्यमानो महेश्वरः ।
स शिवस्तात तेजस्वी प्रसादाद्याति तेऽग्रतः ॥२१
तस्मिन्घोरे सदा पार्थ संग्रामे रोमहर्षणे ।
द्रौणिकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभिः ॥ २२
कस्तां सेनां तदा पार्थ मनसाऽपि प्रधर्षयेत् ।
ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात् ॥ २३
स्थातुमुत्सहते कश्चिन्न तस्मिन्नग्रतः स्थिते ।
न हि भूतं समं तेन त्रिषु लोकेषु विद्यते ॥२४
गन्धेनापि हि संग्रामे तस्य क्रुद्धस्य शत्रवः ।
विसंज्ञा हतभूयिष्ठा वेपन्ति च पतन्ति च ॥२५
तस्मै नमस्तु कुर्वन्तो देवास्तिष्ठन्ति वै दिवि ।
ये चान्ये मानवा लोके ये च स्वर्गजितो नराः ॥२६
ये भक्ता वरदं देवं शिवं रुद्रमुमापतिम् ।
अनन्यभावेन सदा सर्वेशं समुपासते ॥ २७
'संग्रामेषु जयं प्राप्य पालयन्ति महीमिमाम् ।'
इह लोके सुखं प्राप्य ते यान्ति परमां गतिम् ॥२८
नमस्कुरुष्व कौन्तेय तस्मै शान्ताय वै सदा ।
रुद्राय शितिकण्ठाय कनिष्ठाय सुवर्चसे ॥ २९
कपर्दिने करालाय हर्यक्षवरदाय च ।
याम्यायाव्यक्तकेशाय सद्वृत्ते शंकराय च ॥ ३०
काम्याय हरिनेत्राय स्थाणवे पुरुषाय च ॥ ३१
'नमो वृक्षाय सेनान्ये मध्यमाय नमोनमः ।'
हरिकेशाय मुण्डाय कृशायोत्तारणाय च ।
भास्कराय सुतीर्थाय देवदेवाय रंहसे ॥ ३२
बहुरूपाय सर्वाय प्रियाय प्रियवाससे ।
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे ॥ ३३
गिरिशाय प्रशान्ताय पतये चीरवाससे ।
हिरण्यबाहवे राजन्नुग्राय पतये दिशाम् ॥ ३४
पर्जन्यपतये चैव भूतानां पतये नमः ।
वृक्षाणां पतये चैव गवां च पतये नमः ॥ ३५
वृक्षैरावृतकायाय सेनान्ये मध्यमाय च ।
स्रुवहस्ताय देवाय धन्विने भार्गवाय च ॥ ३६
बहुरूपाय विश्वस्य पतये मुञ्जवाससे ।
सहस्रशिरसे चैव सहस्रचरणाय च ।
सहस्रबाहवे चैव सहस्रवदनाय च ॥ ३७

जटिलं शिखिनमिति रूपभेदाभिप्रायेण विशेषणद्वयं योज्यम् ॥ ११ ॥ जगत्प्रीतिं जगदानन्दकरम् ॥ १२ ॥ जगद्योनिं जगद्बीजमिति जगतां मातापितृरूपम् ॥ १३ ॥ विश्वनरं विश्वस्य नेतारम् । भूतस्य भव्यस्य भवस्य वर्तमानस्य चोद्भवम् ॥ १४ ॥ योगेश्वरं योगिनामीशम् । योगानां फलप्रदं वा ॥ १५ ॥ सुदुर्जयमत्यन्तं दुष्प्रापमनधिकारिभिः ॥ १७ ॥

शरणं गच्छ कौन्तेय वरदं भुवनेश्वरम् ।
उमापतिं विरूपाक्षं दक्षयज्ञनिबर्हणम् ॥ ३८
प्रजानां पतिमव्यग्रं भूतानां पतिमव्ययम् ।
कपर्दिनं वृषावर्तं वृषनाभं वृषध्वजम् ॥ ३९
वृषदर्पं वृषपतिं वृषशृङ्गं वृषर्षभम् ।
वृषाङ्कं वृषभोदारं वृषभं वृषभेक्षणम् ॥ ४०
वृषायुधं वृषशरं वृषभूतं वृषेश्वरम् ।
महोदरं महाकायं द्वीपिचर्मनिवासिनम् ॥ ४१
लोकेशं वरदं पुण्यं ब्रह्मण्यं ब्राह्मणप्रियम् ।
त्रिशूलपाणिं वरदं खड्गचर्मधरं प्रभुम् ॥ ४२
पिनाकिनं खड्गधरं लोकानां पतिमीश्वरम् ।
प्रपद्ये शरणं देवं शरण्यं चीरवाससम् ॥ ४३
नमस्तस्मै सुरेशाय गणानां पतये नमः ।
सुवाससे नमस्तुभ्यं सुव्रताय सुधन्विने ॥ ४४
धनुर्धराय देवाय प्रियधन्वाय धन्विने ।
धन्वन्तराय धनुषे धन्वाचार्याय ते नमः ॥ ४५
उग्रायुधाय देवाय नमः सुरवराय च ।
नमोस्तु बहुरूपाय नमोस्तु बहुधन्विने ॥ ४६
नमोस्तु स्थाणवे नित्यं नमस्तस्मै तपस्विने ।
नमोस्तु त्रिपुरघ्नाय भगघ्नाय च वै नमः ॥ ४७
वनस्पतीनां पतये नराणां पतये नमः ।
मातॄणां पतये चैव गणानां पतये नमः ॥ ४८
गवां च पतये नित्यं यज्ञानां पतये नमः ।
अपां च पतये नित्यं देवानां पतये नमः ॥ ४९
पूष्णो दन्तविनाशाय त्र्यक्षाय वरदाय च ।
नीलकण्ठाय पिङ्गाय स्वर्णकेशाय वै नमः ॥ ५०
कर्माणि यानि दिव्यानि महादेवस्य धीमतः ।
तानि ते कीर्तयिष्यामि यथाप्रज्ञं यथाश्रुतम् ॥ ५१
न सुरा नासुरा लोके न गन्धर्वा न राक्षसाः ।
सुखमेधन्ति कुपिते तस्मिन्नपि गुहागताः ॥ ५२
दक्षस्य यजमानस्य विधिवत्संभृतं पुरा ।
विव्याध कुपितो यज्ञं निर्दयस्त्वभवत्तदा ।
धनुषा बाणमुत्सृज्य सघोषं विननाद च ॥ ५३
तेन शर्म कुतः शान्तिं लेभिरे स्म सुरास्तदा ।
विद्रुते सहसा यज्ञे कुपिते च महेश्वरे ॥ ५४
तेन ज्यातलघोषेण सर्वे लोकाः समाकुलाः ।
बभूवुर्वशगाः पार्थ निपेतुश्च सुरासुराः ॥ ५५
आपश्चुक्षुभिरे सर्वाश्चकम्पे च वसुंधरा ।
पर्वताश्च व्यशीर्यन्त दिशो नागाश्च मोहिताः ॥५६
अन्धेन तमसा लोका न प्राकाशन्त संवृताः ।
जघ्निवान्सह सूर्येण सर्वेषां ज्योतिषां प्रभाः ॥५७
चुक्षुभुर्भयभीताश्च शान्तिं चक्रुस्तथैव च ।
ऋषयः सर्वभूतानामात्मनश्च सुखैषिणः ॥ ५८
पूषाणमभ्यद्रवत शंकरः प्रहसन्निव ।
पुरोडाशं भक्षयतो दशनान्वै व्यशातयत् ॥ ५९
ततो निश्चक्रमुर्देवा वेपमाना भयार्दिताः ॥ ६०
पुनश्च संदधे दीप्तान्देवानां निशिताञ्शरान् ।
सधूमान्सस्फुलिङ्गांश्च विद्युत्तोयदसन्निभान् ॥ ६१
तं दृष्ट्वा तु सुराः सर्वे प्रणिपत्य महेश्वरम् ।
रुद्रस्य यज्ञभागं च विशिष्टं ते त्वकल्पयन् ॥ ६२
भयेन त्रिदशा राजञ्छरणं च प्रपेदिरे ।
तेन चैवातिकोपेन स यज्ञः संधितस्तदा ।
भग्नाश्चापि सुरा आसन्भीताश्चाद्यापि तं प्रति ॥६३
असुराणां पुराण्यासंस्त्रीणि वीर्यवतां दिवि ।
आयसं राजतं चैव सौवर्णं परमं महत् ॥ ६४
सौवर्णं कमलाक्षस्य तारकाक्षस्य राजतम् ।
तृतीयं तु पुरं तेषां विद्युन्मालिन आयसम् ।
न शक्तस्तानि मघवान्भेत्तुं सर्वायुधैरपि ॥ ६५
अथ सर्वे सुरा रुद्रं जग्मुः शरणमर्दिताः ।
ते तमूचुर्महात्मानं सर्वे देवाः सवासवाः ॥ ६६
ब्रह्मदत्तवरा ह्येते घोरास्त्रिपुरवासिनः ।
पीडयन्त्यधिकं लोकं यस्मात्ते वरदर्पिताः ॥ ६७

---

कर्माणि चैव घोराणि महादेवस्य धन्विनः इति क. ख. पाठः ॥ ५१ ॥ गुहागताः पातालगता अपीत्यर्थः ॥ ५२ ॥ तमसा संवृता न प्राकाशन्त न प्राज्ञायन्त ॥ ५७ ॥ चक्रुर्ऋषय इति संबन्धः ॥ ५८ ॥ पूषाणं पूषणम् ॥ ५९ ॥

नताः स्म ते इति पाठे नता लीनाः सन्तो निश्चक्रमुर्यज्ञदेशादपक्रान्ताः ॥६०॥ देवानां लीनानामपि वधायेति शेषः ॥ ६१ ॥ अतिकोपेन अतिक्रान्तकोपेन शान्तेनेत्यर्थः । ततःप्रभृति पूर्वं भग्नाः सन्तोऽद्यापि भीताः सन्तीत्यर्थः ॥ ६३ ॥

त्वदृते देवदेवेश नान्यः शक्तः कथंचन ।
हन्तुं दैत्यान्महादेव जहि तांस्त्वं सुरद्विषः ॥ ६८
रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु
निपातयिष्यसे चैतानसुरान्भुवनेश्वर ॥ ६९
स तथोक्तस्तथेत्युक्त्वा देवानां हितकाम्यया ।
गन्धमादनविन्ध्यौ च कृत्वा वंशध्वजौ हरः ॥ ७०
पृथ्वीं ससागरवनां रथं कृत्वा तु शंकरः
अक्षं कृत्वा तु नागेन्द्रं शेषं नाम त्रिलोचनः ॥ ७१
चक्रे कृत्वा तु चन्द्रार्कौ देवदेवः पिनाकधृत् ।
अणी कृत्वैलपत्रं च पुष्पदन्तं च त्र्यम्बकः ॥ ७२
यूपं कृत्वा तु मलयमवनाहं च तक्षकम् ॥ ७३
योक्त्राङ्गानि च सत्वानि कृत्वा शर्वः प्रतापवान् ।
वेदान्कृत्वाऽथ चतुरश्चतुरश्वान्महेश्वरः ॥ ७४
उपवेदान्खलीनांश्च कृत्वा लोकत्रयेश्वरः ।
गायत्रीं प्रग्रहं कृत्वा सावित्रीं च महेश्वरः ॥ ७५
कृत्वोंकारं प्रतोदं च ब्रह्माणं चैव सारथिम् ।
गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा तु वासुकिम् ७६
विष्णुं शरोत्तमं कृत्वा शल्यमग्निं तथैव च ।
वायुं कृत्वाऽथ वाजाभ्यां पुङ्खे वैवस्वतं यमम् ॥ ७७
विद्युत्कृत्वाऽथ निश्राणं मेरुं कृत्वाऽथ वै ध्वजम् ।
आरुह्य स रथं दिव्यं सर्वदेवमयं शिवः ॥ ७८
त्रिपुरस्य वधार्थाय स्थाणुः प्रहरतां वरः ।
असुराणामन्तकरः श्रीमानतुलविक्रमः ॥ ७९
स्तूयमानः सुरैः पार्थ ऋषिभिश्च तपोधनैः ।
स्थानं माहेश्वरं कृत्वा दिव्यमप्रतिमं प्रभुः ।
अतिष्ठत्स्थाणुभूतः स सहस्रं परिवत्सरान् ॥ ८०
यदा त्रीणि समेतानि अन्तरिक्षे पुराणि च ।
त्रिपर्वणा त्रिशल्येन तदा तानि बिभेद सः ॥ ८१
पुराणि न च तं शेकुर्दानवाः प्रतिवीक्षितुम् ।
शरं कालाग्निसंयुक्तं विष्णुसोमसमायुतम् ॥ ८२
पुराणि दग्धवन्तं तं देवी याता प्रवीक्षितुम्
'देव्याः स्वयंवरे वृत्तं शृणुष्वान्यद्धनंजय ॥' ८३
बालमङ्कगतं कृत्वा स्वयं पञ्चशिखं पुनः ।
उमा जिज्ञासमाना वै कोयमित्यब्रवीत्सुरान् ॥ ८४
असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः
बाहुं सवज्रं तं तस्य क्रुद्धस्यास्तम्भयत्प्रभुः ।
[*प्रहस्य भगवांस्तूर्णं सर्वलोकेश्वरो विभुः ॥ ८५
ततः स स्तम्भितभुजः शक्रो देवगणैर्वृतः ।
जगाम ससुरस्तूर्णं ब्रह्माणं प्रभुमव्ययम् ॥ ८६
ते तं प्रणम्य शिरसा प्रोचुः प्राञ्जलयस्तदा ॥ ८७
किमप्यङ्कगतं ब्रह्मन्पार्वत्या भूतमद्भुतम् ।
बालरूपधरं दृष्ट्वा नास्माभिरभिलक्षितः ॥ ८८
तस्मात्त्वां प्रष्टुमिच्छामो निर्जिता येन वै वयम् ।
अयुध्यता हि बालेन लीलया सपुरंदराः ॥ ८९
तेषां तद्वचनं श्रुत्वा ब्रह्मा ब्रह्मविदां वरः ।
ध्यात्वा स शंभुं भगवान्बालं चामिततेजसम् ।
उवाच भगवान्ब्रह्मा शक्रादींश्च सुरोत्तमान् ॥ ९०
चराचरस्य जगतः प्रभुः स भगवान्हरः ।
तस्मात्परतरं नान्यत्किंचिदस्ति महेश्वरात् ॥ ९१
यो दृष्टो ह्युमया सार्धं युष्माभिरमितद्युतिः ।
स पार्वत्याः कृते शर्वः कृतवान्बालरूपताम् ॥ ९२
ते मया सहिता यूयं प्रापद्यध्वं तमेव हि ।]
स एष भगवान्देवः सर्वलोकेश्वरः प्रभुः ॥ ९३
न संबुबुधिरे चैनं देवास्तं भुवनेश्वरम् ।
सप्रजापतयः सर्वे बालार्कसदृशप्रभम् ॥ ९४
अथाभ्येत्य ततो ब्रह्मा दृष्ट्वा स च महेश्वरम् ।
अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तं पितामहः ॥ ९५

वंशध्वजौ अल्पौ ध्वजौ पार्श्वद्वयस्थौ । महाध्वजस्तु मेरुरिति वक्ष्यते ॥ ७० ॥ अणी युगान्तबन्धने द्वौ नागौ ॥ ७२ ॥ यूपं युगम् । अवनाहं त्रिवेणुयुगबन्धनरज्जुम् ॥ ७३ ॥ योक्त्राणि । अङ्गानि चाकर्षादीनि । सत्वानि सरीसृपपर्वतादीनि च ॥ ७४ ॥ उपवेदान् आयुर्वेदधनुर्वेदगान्धर्ववेदपश्चिमाम्नायान् । खलीनान् कडियाळीति प्रसिद्धान् । गायत्रीसावित्र्यौ प्रग्रहं रश्मीन् ॥ ७५ ॥ वाजाभ्यां पक्षाभ्यां पक्षयोरित्यर्थः ॥ ७७ ॥ विद्युत् विद्युतम् । निश्राणं निशितम् ॥ ७८ ॥ स्थानं स्थीयतेऽस्मिन्निति योगाद्व्यूहम् । स्थाणुरचलः ॥ ८० ॥ समेतानि समसूत्रगतानि । त्रिपर्वणा त्रीणि विष्णुवायुवैवस्वताख्यानि शरपक्षपुङ्खरूपाणि पर्वाणि यस्य तेन । त्रिशल्येन गार्हपत्यदक्षिणाग्न्याहवनीयरूपाऽग्नित्रयशल्येन ॥ ८१ ॥

* कुण्डलितः पाठः झ. पुस्तके एव दृश्यते ।

[ब्रह्मोवाच ।
त्वं यज्ञो भुवनस्यास्य त्वं गतिस्त्वं परायणम् ।
त्वं भवस्त्वं महादेवस्त्वं धाम परमं पदम् ॥ ९६
त्वया सर्वमिदं व्याप्तं जगत्स्थावरजङ्गमम् ॥ ९७
भगवन्भूतभव्येश लोकनाथ जगत्पते ।
प्रसादं कुरु शक्रस्य त्वया क्रोधार्दितस्य वै ॥ ९८
व्यास उवाच ।
पद्मयोनिवचः श्रुत्वा ततः प्रीतो महेश्वरः ।
प्रसादाभिमुखो भूत्वा अट्टहासमथाकरोत् ॥] ९९
ततः प्रसादयामासुरुमां रुद्रं च ते सुराः ।
[illegible] ॥ १००
[illegible] ।
देवानां त्रिदशश्रेष्ठो दक्षयज्ञविनाशनः ॥ १०१
स वै रुद्रः स च शिवः सोऽग्निः सर्वश्च सर्ववित् ।
स चेन्द्रश्चैव वायुश्च सोऽश्विनौ च स विद्युतः १०२
स भवः स च पर्जन्यो महादेवः सनातनः ।
स चन्द्रमाः स चेशानः स सूर्यो वरुणश्च सः ॥ १०३
स कालः सोऽन्तको मृत्युः स यमो रात्र्यहानि तु ।
मासार्धमासा ऋतवः संध्ये संवत्सरश्च सः ॥ १०४
धाता च स विधाता च विश्वात्मा विश्वकर्मकृत् ।
सर्वासां देवतानां च धारयत्यवपुर्वपुः ॥ १०५
सर्वदेवैः स्तुतो देवः सैकधा बहुधा च सः ।
शतधा सहस्रधा चैव भूयः शतसहस्रधा ॥ १०६
द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः ।
घोरा चान्या शिवा चान्या ते तनू बहुधा पुनः ॥
घोरा तु यातुधानस्य सोऽग्निर्विष्णुः स भास्करः ।
[illegible]
वेदाः साङ्गोपनिषदः पुराणाध्यात्मनिश्चयाः ।
यदत्र परमं गुह्यं स वै देवो महेश्वरः ॥ १०९
ईदृशश्च महादेवो भूयांश्च भगवानजः ।
न हि सर्वे मया शक्या वक्तुं भगवतो गुणाः ॥ ११०
अपि वर्षसहस्रेण सततं पाण्डुनन्दन ।
सर्वैर्ग्रहैर्गृहीतान्वै सर्वपापसमन्वितान् ॥ १११
स मोचयति सुप्रीतः शरण्यः शरणागतान् ।
आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान् ॥ ११२
स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः ।
सेन्द्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते ॥ ११३
स चैव वेत्ति लोकेषु मनुष्याणां शुभाशुभे ।
ऐश्वर्याच्चैव कामानामीश्वरश्च स उच्यते ॥ ११४
महेश्वरश्च महतां भूतानामीश्वरश्च सः ।
बहुभिर्बहुधा रूपैर्विश्वं व्याप्नोति वै जगत् ॥ ११५
[illegible]
[illegible] ॥ ११६
एष चैव श्मशानेषु देवो वसति नित्यशः ।
यजन्त्येनं जनास्तत्र वीरस्थान इतीश्वरम् ॥ ११७
अस्य दीप्तानि रूपाणि घोराणि च बहूनि च ।
लोके यान्यस्य पूज्यन्ते मनुष्याः प्रवदन्ति च ११८
नामधेयानि लोकेषु बहून्यस्य यथार्थवत् ।
निरुच्यन्ते महत्त्वाच्च विभुत्वात्कर्मणस्तथा ॥ ११९
वेदे चास्य समाम्नातं शतरुद्रियमुत्तमम् ।
नाम्ना चानन्तरुद्रेति ह्युपस्थानं महात्मनः ॥ १२०
स कामानां प्रभुर्देवो ये दिव्या ये च मानुषाः ।
स विभुः स प्रभुर्देवो विश्वं व्याप्नोति वै महत् १२१
ज्येष्ठं भूतं वदन्त्येनं ब्राह्मणा मुनयस्तथा ।
प्रथमो ह्येष देवानां मुखादस्यानलोऽभवत् ॥ १२२
सर्वथा यत्पशून्पाति तैश्च यद्रमते पुनः ।
तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः ॥ १२३
[illegible] लिङ्गमस्य यथास्थितम् ।
महयत्येष लोकांश्च महेश्वर इति स्मृतः ॥ १२४
ऋषयश्चैव देवाश्च गन्धर्वाप्सरसस्तथा ।
लिङ्गमस्यार्चयन्ति स्म तच्चाप्यूर्ध्वं समास्थितम् १२५
पूज्यमाने ततस्तस्मिन्मोदते स महेश्वरः ।

गतिः पालकः । परायणं लयस्थानम् । भव उत्पत्तिकारणम् ॥ ९६ ॥ ईशः शिक्षकः । नाथः नायकः । पतिः पालकः ॥ ९८ ॥ शतरुद्रियं नमस्ते रुद्र मन्यव इति याजुषः प्रपाठकः । उपस्थानं रुद्रोपस्थानमन्त्रभूतम् ॥ १२० ॥ कामानां दिव्यानां मानुषाणां च स प्रभुर्दाता । विभुर्व्यापकः ॥ १२१ ॥ त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

सुखी प्रीतश्च भवति प्रहृष्टश्चैव शंकरः ॥ १२६
यदस्य बहुधा रूपं भूतभव्यभवस्थितम् ।
स्थावरं जङ्गमं चैव बहुरूपस्ततः स्मृतः ॥ १२७
एकाक्षो जाज्वलन्नास्ते सर्वतोक्षिमयोऽपि वा ।
क्रोधाद्यश्चाविशल्लोकांस्तस्मात्सर्व इति स्मृतः१२८
धूम्ररूपं च यत्तस्य धूर्जटिस्तेन चोच्यते ।
विश्वे देवाश्च यत्तस्मिन्विश्वरूपस्ततः स्मृतः ॥१२९
तिस्रो देवीर्यदा चैव भजते भुवनेश्वरः ।
द्यामपः पृथिवीं चैव त्र्यम्बकश्च ततः स्मृतः१३०
समेधयति यन्नित्यं सर्वार्थान्सर्वकर्मसु ।
शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः१३१
सहस्राक्षोऽयुताक्षो वा सर्वतोक्षिमयोऽपि वा ।
यच्च विश्वं महत्पाति महादेवस्ततः स्मृतः ॥१३२
महत्पूर्वं स्थितो यच्च प्राणोत्पत्तिस्थितश्च यत् ।
स्थितलिङ्गश्च यन्नित्यं तस्मात्स्थाणुरिति स्मृतः१३३
[सूर्याचन्द्रमसोर्लोके प्रकाशन्ते रुचश्च याः ।
ताः केशसंज्ञितास्त्र्यक्षे व्योमकेशस्ततः स्मृतः१३४
भूतं भव्यं भविष्यं च सर्वं जगदशेषतः ।
भव एव ततो यस्माद्भूतभव्यभवोद्भवः ॥ १३५
कपिः श्रेष्ठ इति प्रोक्तो धर्मश्च वृष उच्यते ।
स देवदेवो भगवान्कीर्त्यतेऽतो वृषाकपिः॥ १३६
ब्रह्माणमिन्द्रं वरुणं यमं धनदमेव च ।
निगृह्य हरते यस्मात्तस्माद्धर इति स्मृतः ॥ १३७
निमीलिताभ्यां नेत्राभ्यां बलाद्देवो महेश्वरः
ललाटे नेत्रमसृजत्तेन त्र्यक्षः स उच्यते॥] १३८
विषमस्थः शरीरेषु समश्च प्राणिनामिह ।
स वायुर्विषमस्थेषु प्राणोऽपानः शरीरिषु ॥ १३९
पूजयेद्विग्रहं यस्तु लिङ्गं चापि महात्मनः ।
लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते ॥ १४०
ऊरुभ्यामर्धमाग्नेयं सोमोऽर्धं च शिवा तनुः ।
आत्मनोऽर्धं तथा चाग्निः सोमोर्धं पुनरुच्यते१४१
तैजसी महती दीप्ता देवेभ्योऽस्य शिवा तनुः ।
भास्वती मानुषेष्वस्य तनुर्घोराऽग्निरुच्यते॥ १४२
ब्रह्मचर्यं चरत्येष शिवा याऽस्य तनुस्तया ।
याऽस्य घोरतरा मूर्तिः सर्वानत्ति तयेश्वरः॥ १४३
यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् ।
मांसशोणितमज्जादो यत्ततो रुद्र उच्यते॥ १४४
एष देवो महादेवो योऽसौ पार्थ तवाग्रतः ।
संग्रामे शात्रवान्निघ्नंस्त्वया दृष्टः पिनाकधृत् १४५
सिन्धुराजवधार्थाय प्रतिज्ञाते त्वयाऽनघ ।
कृष्णेन दर्शितः स्वप्ने यस्तु शैलेन्द्रमूर्धनि ॥१४६
एष वै भगवान्देवः संग्रामे याति तेऽग्रतः ।
येन दत्तानि तेऽस्त्राणि यैस्त्वया दानवा हताः ॥
धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च संमितम् ।
देवदेवस्य ते पार्थ व्याख्यातं शतरुद्रियम् १४८
सर्वार्थसाधनं पुण्यं सर्वकिल्बिषनाशनम् ।
सर्वपापप्रशमनं सर्वदुःखभयापहम् ॥ १४९
चतुर्विधमिदं स्तोत्रं यः शृणोति नरः सदा ।
विजित्य शत्रून्सर्वान्स रुद्रलोके महीयते ॥१५०
चरितं महात्मनो नित्यं सांग्रामिकमिदं स्मृतम् ।
पठन्वै शतरुद्रीयं शृण्वंश्च सततोत्थितः ॥ १५१
भक्तो विश्वेश्वरं देवं मानुषेषु च यः सदा ।
वरान्कामान्स लभते प्रसन्ने त्र्यम्बके नरः॥१५२
गच्छ युध्यस्व कौन्तेय न तवास्ति पराजयः ।
यस्य मन्त्री च गोप्ता च पार्श्वस्थो हि जनार्दनः१५३
सञ्जय उवाच ।
एवमुक्त्वाऽर्जुनं सङ्ख्ये पराशरसुतस्तदा ।
जगाम भरतश्रेष्ठ यथागतमरिंदम ॥ १५४
वैशंपायन उवाच ।
एतदाख्याय वै सूतो राज्ञः सर्वं तु सञ्जयः ।
प्रयातः शिबिरायैव द्रष्टुं कर्णस्य वैशसम् ॥१५५
युद्धं कृत्वा महद्घोरं पञ्चाहानि महाबलः ।
ब्राह्मणो निहतो राजन्ब्रह्मलोकमवाप्तवान् ॥१५६
स्वधीते यत्फलं वेदे तदस्मिन्नपि पर्वणि ।
क्षत्रियाणामभीरूणां युक्तमत्र महद्यशः ॥ १५७
य इदं पठते पर्व शृणुयाद्वाऽपि नित्यशः ।
स मुच्यते महापापैः कृतैर्घोरैश्च कर्मभिः ॥१५८

यज्ञावाप्तिर्ब्राह्मणस्येह नित्यं
घोरे युद्धे क्षत्रियाणां यशश्च ।
शेषौ वर्णौ काममिष्टं लभेते
पुत्रान्पौत्रान्नित्यमिष्टांस्तथैव ॥ १५९

॥ इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

समाप्तं नारायणास्त्रमोक्षपर्व ॥ ८ ॥ द्रोणपर्व च समाप्तम् ॥ ७ ॥

अस्यानन्तरं कर्णपर्व भविष्यति
तस्यायमाद्यः श्लोकः ।
वैशंपायन उवाच ।
शिबिराद्धास्तिनपुरं प्राप्य भारत सञ्जयः ।
प्रविवेश महाबाहुर्धृतराष्ट्रनिवेशनम् ॥ १

झ. पुस्तकपाठे तु
[वैशंपायन उवाच ।
ततो द्रोणे हते राजन्दुर्योधनमुखा नृपाः ।
भृशमुद्विग्नमनसो द्रोणपुत्रमुपाद्रवन् ॥] १

इदं द्रोणपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८२९ सन १९०७.



# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

**THE SOUTH INDIAN TEXTS,**

With footnotes and Readings.

## KARNAPARVA VIII.



EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam.

*PRINTED AT THE*

*Javaji Dadaji's "Nirnaya-sagar" Press,*

**BOMBAY.**

1907

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम्



## कर्णपर्व ८.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८२९ प्लवंगनामसंवत्सरे ।

# कर्णपर्व.



श्रीः ।

# श्रीमन्महाभारतम् ।



## कर्णपर्व ८ ।

### प्रथमोऽध्यायः ॥ १ ॥

शिबिराद्धास्तिनपुरमुपगतवता सञ्जयेन धृतराष्ट्रंप्रति कर्णादिनिधनकथनम् ॥ १ ॥ तच्छ्रवणेन मूर्च्छामुपगतवतो धृतराष्ट्रस्य सञ्जयादिभिराश्वासनम् ॥ २ ॥

---

श्रीवेदव्यासाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १

वैशंपायन उवाच ।

शिबिराद्धास्तिनपुरं प्राप्य भारत संजयः ।
प्रविवेश महाबाहुर्धृतराष्ट्रनिवेशनम् ॥ १
शोकेनापहतः सूतो विलपन्भृशदुःखितः ।
चिन्तयन्निधनं घोरं सूतपुत्रस्य पाण्डवैः ॥ २
अन्तःपुरं प्रविश्यैव सञ्जयो राजसत्तमम् ।
अश्रुपूर्णो भृशं त्रस्तो राजानमुपजग्मिवान् ॥ ३
उपस्थाय च राजानं विनिश्वस्य च सूतजः ।
नातिहृष्टमना राजन्निदं वचनमब्रवीत् ॥ ४

सञ्जय उवाच ।

सञ्जयोऽहं महाराज नमस्ते भरतर्षभ ।
हतो वैकर्तनः कर्णः कृत्वा कर्म सुदुष्करम् ॥ ५
चेदिकाशिकरूशानां मत्स्यानां सोमकैः सह ।
कृत्वाऽसौ कदनं शेते वातनुन्न इव द्रुमः ॥ ६
गोष्ठमध्येव ऋषभो गोव्रजैः परिवारितः ।
व्यालेन निहतो यद्वत्तथाऽसौ निहतः परैः ॥ ७
निराशान्पाण्डवान्कृत्वा दृढं राजन्ससात्यकान् ।
पाञ्चालानां रथांश्चैव विनिहत्य सहस्रशः ॥ ८
जित्वा शूरान्महेष्वासान्विद्राव्य च दिशोदश ।
हतो वैकर्तनः कर्णः पाण्डवेन किरीटिना ॥ ९
वैरस्य गत आनृण्यं दुर्गमस्य दुरात्मभिः ।
हत्वा कर्णं महाराज विशल्यः पाण्डवोऽभवत् ॥ १०
शोषणं सागराणां वा पतनं वा विवस्वतः ।
विशीर्णत्वं यथा मेरोस्तथा कर्णस्य पातनम् ॥ ११
योधाश्च बहवो राजन्हतास्तत्र जयैषिणः ।
राजानो राजपुत्राश्च शूराः परिघबाहवः ॥ १२
रथौघाश्च नरौघाश्च हता राजन्सहस्रशः ।
वारणा निहतास्तत्र वाजिनश्च महाहवे ॥ १३
क्षत्रियाश्च महाराज सेनयोरुभयोर्हताः ।
परस्परं वै वीक्ष्यात्र परस्परकृतागसः ॥ १४
किंचिच्छेषान्परान्कृत्वा तीर्त्वा पाण्डववाहिनीम् ।
पार्थवेलां समासाद्य हतो वैकर्तनो वृषा ॥ १५
जयाशा धार्तराष्ट्राणां वैरस्य च मुखं नृप ।
तीर्णं तत्पाण्डवै राजन्यत्पुरा नावबुध्यसे ॥ १६
प्रोच्यमानं महाराज बन्धुभिर्हितबुद्धिभिः ।
तदिदं समनुप्राप्तं व्यसनं त्वां महाभयम् ॥ १७
पुत्राणां राज्यकामेन त्वया राजन्हितैषिणा ।
चरितान्यहितान्येव तेषां ते फलमागतम् ॥ १८
हतो दुःशासनो राजन्यथोक्तं पाण्डवेन तु ।
प्रतिज्ञा भीमसेनेन निस्तीर्णा सा चमूमुखे ॥ १९
पीतं च क्षतजं तस्य धार्तराष्ट्रस्य संयुगे ।

पाण्डवेन महाराज कर्म कृत्वा सुदुष्करम् ॥ २०
वैशंपायन उवाच।
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः।
शोकस्यान्तमपश्यन्वै हतं मत्वा सुयोधनम्।

* एतदन्तविंशतिश्लोकानां स्थाने झ॰ पाठे त्रयोऽध्याया वर्तन्ते ।

## प्रथमोऽध्यायः ॥ १ ॥

दुर्योधनादिभिः कर्णस्य सैनापत्येऽभिषेचनपूर्वकं युद्धाय निर्याणम् ॥ १ ॥ जनमेजयेन वैशंपायनंप्रति कर्णमरणश्राविणो धृतराष्ट्रस्य प्रवृत्तिप्रश्नः ॥ २ ॥

श्रीकृष्णाय नमः ॥
[नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥
वैशंपायन उवाच ।
ततो द्रोणे हते राजन्दुर्योधनमुखा नृपाः ।
भृशमुद्विग्नमनसो द्रोणपुत्रमुपागमन् ॥ १
ते द्रोणमनुशोचन्तः कश्मलाभिहतौजसः ।
पर्युपासन्त शोकार्तास्ततः शारद्वतीसुतम् ॥ २
ते मुहूर्तं समाश्वस्य हेतुभिः शास्त्रसंमितैः ।
रात्र्यागमे महीपालाः स्वानि वेश्मानि भेजिरे ॥
ते वेश्मस्वपि कौरव्य पृथ्वीशा नाप्नुवन्सुखम् ।
चिन्तयन्तः क्षयं तीव्रं दुःखशोकसमन्विताः ॥ ४
विशेषतः सूतपुत्रो राजा चैव सुयोधनः ।
दुःशासनश्च शकुनिः सौबलश्च महाबलः ॥ ५
उषितास्ते निशां तां तु दुर्योधननिवेशने ।
चिन्तयन्तः परिक्लेशान्पाण्डवानां महात्मनाम् ॥ ६
यत्तद्द्यूते परिक्लिष्टा कृष्णा चानायिता सभाम् ।
तत्स्मरन्तोऽनुशोचन्तो भृशमुद्विग्नचेतसः ॥ ७
तथा तु संचिन्तयतां तान्क्लेशान्द्यूतकारितान् ।
दुःखेन क्षणदा राजञ्जगामाब्दशतोपमा ॥ ८
ततः प्रभाते विमले स्थिता दिष्टस्य शासने ।
चक्रुरावश्यकं सर्वे विधिदृष्टेन कर्मणा ॥ ९
ते कृत्वाऽवश्यकार्याणि समाश्वस्य च भारत ।
योगमाज्ञापयामासुर्युद्धाय च विनिर्ययुः ॥ १०
कर्णं सेनापतिं कृत्वा कृतकौतुकमङ्गलाः ।
पूजयित्वा द्विजश्रेष्ठान्दधिपात्रघृताक्षतैः ॥ ११
गोभिरश्वैश्च निष्कैश्च वासोभिश्च महाधनैः ।
वन्द्यमाना जयाशीर्भिः सूतमागधबन्दिभिः ॥ १२
तथैव पाण्डवा राजन्कृतपूर्वाह्णिकक्रियाः ।
शिबिरान्निर्ययुस्तूर्णं युद्धाय कृतनिश्चयाः ॥ १३
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ।
कुरूणां पाण्डवानां च परस्परजयैषिणाम् ॥ १४
तयोर्द्वौ दिवसौ युद्धं कुरुपाण्डवसेनयोः ।
कर्णे सेनापतौ राजन्बभूवाद्भुतदर्शनम् ॥ १५
ततः शत्रुक्षयं कृत्वा सुमहान्तं रणे वृषः ।
पश्यतां धार्तराष्ट्राणां फल्गुनेन निपातितः ॥ १६
ततस्तु संजयः सर्वं गत्वा नागपुरं द्रुतम् ।
आचष्ट धृतराष्ट्राय यद्वृत्तं कुरुजाङ्गले ॥ १७
जनमेजय उवाच ।
आपगेयं हतं श्रुत्वा द्रोणं चापि महारथम् ।
आजगाम परामार्तिं वृद्धो राजाऽम्बिकासुतः ॥ १८
स श्रुत्वा निहतं कर्णं दुर्योधनहितैषिणम् ।
कथं द्विजवर प्राणानधारयत दुःखितः ॥ १९
यस्मिञ्जयाशां पुत्राणां सममन्यत पार्थिवः ।
तस्मिन्हते स कौरव्यः कथं प्राणानधारयत् ॥ २०
दुर्मरं तदहं मन्ये नृणां कृच्छ्रेऽपि वर्तताम् ।
यत्र कर्णं हतं श्रुत्वा नात्यजज्जीवितं नृपः ॥ २१
तथा शान्तनवं वृद्धं ब्रह्मन्बाह्लीकमेव च ।
द्रोणं च सोमदत्तं च भूरिश्रवसमेव च ॥ २२
तथैव चान्यान्सुहृदः पुत्रान्पौत्रांश्च पातितान् ।
श्रुत्वा यन्नाजहात्प्राणांस्तन्मन्ये दुष्करं द्विज ॥ २३
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ २४

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धारम्भे प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

धृतराष्ट्रेण भीष्मद्रोणौ प्रत्यनुशोचनपूर्वकं सञ्जयंप्रति दुर्योधनादिप्रवृत्तिप्रश्नः ॥ १ ॥

वैशंपायन उवाच ।
हते कर्णे महाराज निशि गावल्गणिस्तदा ।
दीनो ययौ नागपुरमश्वैर्वातसमैर्जवे ॥
स हास्तिनपुरं गत्वा भृशमुद्विग्नचेतनः ।

विह्वलः पतितो भूमौ नष्टचेता इव द्विपः ॥२१
तस्मिन्निपतिते भूमौ विह्वले राजसत्तमे ।
आर्तनादो महानासीत्स्त्रीणां भरतसत्तम ॥ २२
स शब्दः पृथिवीं कृत्स्नां पूरयामास सर्वशः॥२३

जगाम धृतराष्ट्रस्य क्षयं प्रक्षीणबान्धवम् ॥ २
स तमुद्वीक्ष्य राजानं कश्मलाभिहतौजसम् ।
ववन्दे प्राञ्जलिर्भूत्वा मूर्ध्ना पादौ नृपस्य ह ॥ ३
संपूज्य च यथान्यायं धृतराष्ट्रं महीपतिम् ।
हा कष्टमिति चोक्त्वा स ततो वचनमाददे ॥ ४
संजयोऽहं क्षितिपते कच्चिदास्ते सुखं भवान् ।
स्वदोषैरापदं प्राप्य कच्चिन्नाद्य विमुह्यति ॥
हितान्युक्तानि विदुरद्रोणगाङ्गेयकेशवैः ।
अगृहीतान्यनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥
रामनारदकण्वाद्यैर्हितमुक्तं सभातले ।
न गृहीतमनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ७
सुहृदस्त्वद्धिते युक्तान्भीष्मद्रोणमुखान्परैः ।
निहतान्युधि संस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ८
तमेवंवादिनं राजा सूतपुत्रं कृताञ्जलिम् ।
सुदीर्घमथ निःश्वस्य दुःखार्त इदमब्रवीत् ॥ ९

धृतराष्ट्र उवाच ।
आपगेये हते शूरे दिव्यास्त्रवति सञ्जय ।
द्रोणे च परमेष्वासे भृशं मे व्यथितं मनः ॥ १०
यो रथानां सहस्राणि दंशितानां दशैव तु ।
अहन्यहनि तेजस्वी निजघ्ने वसुसंभवः ॥ ११
तं हतं यज्ञसेनस्य पुत्रेणेह शिखण्डिना ।
पाण्डवेयाभिगुप्तेन श्रुत्वा मे व्यथितं मनः ॥ १२
भार्गवः प्रददौ यस्मै परमास्त्रं महाहवे ।
साक्षाद्रामेण यो बाल्ये धनुर्वेद उपाकृतः ॥ १३
यस्य प्रसादात्कौन्तेया राजपुत्रा महारथाः ।
महारथत्वं संप्राप्तास्तथाऽन्ये वसुधाधिपाः ॥ १४
तं द्रोणं निहतं श्रुत्वा धृष्टद्युम्नेन संयुगे ।
सत्यसन्धं महेष्वासं भृशं मे व्यथितं मनः ॥ १५
ययोर्लोके पुमानस्त्रे न समोऽस्ति चतुर्विधे ।
तौ द्रोणभीष्मौ श्रुत्वा तु हतौ मे व्यथितं मनः ॥१६
त्रैलोक्ये यस्य चास्त्रेषु न पुमान्विद्यते समः ।
तं द्रोणं निहतं श्रुत्वा किमकुर्वत मामकाः ॥ १७
संशप्तकानां च बले पाण्डवेन महात्मना ।
धनंजयेन विक्रम्य गमिते यमसादनम् ॥ १८
नारायणास्त्रे च हते द्रोणपुत्रस्य धीमतः ।
विप्रद्रुतेष्वनीकेषु किमकुर्वत मामकाः ॥ १९
विप्रद्रुतानहं मन्ये निमग्नाञ्शोकसागरे ।
प्लवमानान्हते द्रोणे सन्ननौकानिवार्णवे ॥ २०
दुर्योधनस्य कर्णस्य भोजस्य कृतवर्मणः
मद्रराजस्य शल्यस्य द्रौणेश्चैव कृपस्य च ॥ २१
मत्पुत्रस्य च शेषस्य तथाऽन्येषां च सञ्जय
विप्रद्रुतेष्वनीकेषु मुखवर्णोऽभवत्कथम् ॥ २२
एतत्सर्वं यथावृत्तं तथा गावल्गणे मम ।
आचक्ष्व पाण्डवेयानां मामकानां च विक्रमम् ॥ २३

सञ्जय उवाच ।
तवापराधाद्यद्वृत्तं कौरवेयेषु मारिष ।
तच्छ्रुत्वा मा व्यथां कार्षीर्दिष्टे न व्यथते बुधः ॥ २४
यस्मादभावी भावी वा भवेदर्थो नरं प्रति ।
अप्राप्तौ तस्य वा प्राप्तौ न कश्चिद्व्यथते बुधः ॥ २५

धृतराष्ट्र उवाच ।
न व्यथाऽभ्यधिका काचिद्विद्यते मम सञ्जय ।
दिष्टमेतत्पुरा मन्ये कथयस्व यथेच्छकम् ॥ २६

॥ इति श्रीमन्महाभारते कर्णपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

दु॰पा॰धनेन द्रोणमरणनिर्विण्णानां सैनिकानां कर्णगुणानुवर्णनेन प्रोत्साहनम् ॥ १ ॥ सञ्जयेन धृतराष्ट्रंप्रति कर्णपराक्रमप्रशंसनपूर्वकं तन्निधनकथनम् ॥ २ ॥

सञ्जय उवाच
हते द्रोणे महेष्वासे तव पुत्रा महारथाः ।
बभूवुरस्वस्थमुखा विषण्णा गतचेतसः ॥ १
अवाङ्मुखाः शस्त्रभृतः सर्वे एव विशांपते ।
अवेक्षमाणाः शोकार्ता नाभ्यभाषन्परस्परम् ॥ २
तान्दृष्ट्वा व्यथिताकारान्सैन्यानि तव भारत ।
ऊर्ध्वमेव निरैक्षन्त दुःखत्रस्तान्यनेकशः ॥
शस्त्राण्येषां तु राजेन्द्र शोणिताक्तानि सर्वशः
प्राभ्रश्यन्त कराग्रेभ्यो दृष्ट्वा द्रोणं हतं युधि ॥
तानि बद्धान्यरिष्टानि लम्बमानानि भारत ।
अदृश्यन्त महाराज नक्षत्राणि यथा दिवि ॥
तथा तु स्तिमितं दृष्ट्वा गतसत्वमवस्थितम् ।
बलं तव महाराज राजा दुर्योधनोऽब्रवीत् ॥

विह्वलः चलनासमर्थः काष्ठवत्पतितः ॥ २१ ॥

शोकार्णवे महाघोरे निमग्ना भरतस्त्रियः।
रुरुदुर्दुःखशोकार्ता भृशमुद्विग्नचेतसः ॥ २४
राजानं च समासाद्य गान्धारी भरतर्षभ।
निःसंज्ञा पतिता भूमौ सर्वाण्यन्तःपुराणि च ॥२५
ततस्ताः सञ्जयो राजन्समाश्वासयदातुराः।
मुह्यमानाः सुबहुशो मुञ्चन्तीर्वारि नेत्रजम् ॥२६
समाश्वस्ताः स्त्रियस्तास्तु वेपमाना मुहुर्मुहुः।
कदल्य इव वातेन धूयमानाः समन्ततः ॥ २७
राजानं विदुरश्चापि प्रज्ञाचक्षुषमीश्वरम्।
आश्वासयामास तदा सिञ्चंस्तोयेन कौरवम् ॥२८
स लब्ध्वा शनकैः संज्ञां ताश्च दृष्ट्वा स्त्रियो नृपः।
उन्मत्त इव राजेन्द्र स्थितस्तूर्णीं विशांपते ॥ २९
ततो ध्यात्वा चिरं कालं निःश्वस्य च पुनःपुनः।
स्वान्पुत्रान्गर्हयामास बहुमेने च पाण्डवान् ॥ ३०
गर्हयंश्चात्मनो बुद्धिं शकुनेः सौबलस्य च
ध्यात्वा तु सुचिरं कालं वेपमानो मुहुर्मुहुः ॥ ३१
संस्तभ्य च मनो भूयो राजा धैर्यसमन्वितः
पुनर्गावल्गणिं सूतं पर्यपृच्छत सञ्जयम् ॥ ३२
न त्वया कथितं वाक्यं श्रुतं सञ्जय तन्मया ॥ ३३
कच्चिद्दुर्योधनः सूत न गतो वै यमक्षयम्।
जये निराशः पुत्रो मे सततं जयकामुकः।
ब्रूहि सञ्जय तत्त्वेन पुनरुक्तां कथामिमाम् ॥ ३४
वैशंपायन उवाच।
एवमुक्तोऽब्रवीत्सूतो राजानं जनमेजय।
हतो वैकर्तनो राजन्सहपुत्रैर्महारथः।
भ्रातृभिश्च महेष्वासैः सूतपुत्रैस्तनुत्यजैः ॥ ३५
दुःशासनश्च निहतः पाण्डवेन यशस्विना।
पीतं च रुधिरं कोपाद्भीमसेनेन संयुगे ॥ ३६
'वैशंपायन उवाच।
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः।
दह्यमानोऽब्रवीत्सूतं मुहूर्तं तिष्ठ सञ्जय
व्याकुलं मे मनस्तात मा तावत्किंचिदुच्यताम् ३७
राजापि नाब्रवीत्किंचित्सञ्जयो विदुरस्तथा।
तूर्णींभूतस्तदा सोऽथ बभूव जगतीपतिः ॥' ३८

॥ इति श्रीमन्महाभारते कर्णपर्वणि प्रथमोऽध्यायः ॥ १ ॥

भवतां बाहुवीर्यं हि समाश्रित्य मया युधि।
पाण्डवेयाः समाहूता युद्धं चेदं प्रवर्तितम् ॥ ७
तदिदं निहते द्रोणे विषण्णमिव लक्ष्यते।
युध्यमानाश्च समरे योधा वध्यन्ति सर्वशः ॥ ८
जयो वाऽपि वधो वाऽपि युध्यमानस्य संयुगे।
भवेत्किमत्र चित्रं वै युध्यध्वं सर्वतोमुखाः ॥ ९
पश्यध्वं च महात्मानं कर्णं वैकर्तनं युधि।
प्रचरन्तं महेष्वासं दिव्यैरस्त्रैर्महाबलम् ॥ १०
यस्य वै युधि संत्रासात्कुन्तीपुत्रो धनंजयः।
निवर्तते सदा मन्दः सिंहात्क्षुद्रमृगो यथा ॥ ११
येन नागायुतप्राणो भीमसेनो महाबलः।
मानुषेणैव युद्धेन तामवस्थां प्रवेशितः ॥ १२
येन दिव्यास्त्रविच्छूरो मायावी स घटोत्कचः।
अमोघया रणे शक्त्या निहतो भैरवं नदन् ॥ १३
तस्य दुर्वारवीर्यस्य सत्यसन्धस्य धीमतः।
बाह्वोर्द्रविणमक्षय्यमद्य द्रक्ष्यथ संयुगे ॥ १४
द्रोणपुत्रस्य विक्रान्तं राधेयस्यैव चोभयोः।
पश्यन्तु पाण्डुपुत्रास्ते विष्णुवासवयोरिव ॥ १५
सर्वे एव भवन्तश्च शक्ताः प्रत्येकशोऽपि वा।
पाण्डुपुत्रान्रणे हन्तुं ससैन्यान्किमु संहताः।
वीर्यवन्तः कृतास्त्राश्च द्रक्ष्यथाद्य परस्परम् ॥ १६
सञ्जय उवाच।
एवमुक्त्वा ततः कर्णं चक्रे सेनापतिं तदा।
तव पुत्रो महावीर्यो भ्रातृभिः सहितोऽनघ ॥ १७
सैनापत्यमथावाप्य कर्णो राजन्महारथः।
सिंहनादं विनद्योच्चैः प्रायुध्यत रणोत्कटः ॥ १८
ससृञ्जयानां सर्वेषां पाञ्चालानां च मारिष।
केकयानां विदेहानां चकार कदनं महत् ॥ १९
तस्येषुधाराः शतशः प्रादुरासञ्छरासनात्।
अग्रे पुङ्खेषु संसक्ता यथा भ्रमरपङ्क्तयः ॥ २०
स पीडयित्वा पाञ्चालान्पाण्डवांश्च तरस्विनः।
हत्वा सहस्रशो योधानर्जुनेन निपातितः ॥ २१

॥ इति श्रीमन्महाभारते कर्णपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

अन्तःपुराणि स्त्रियः ॥ २५ ॥ कदल्यइव वेपमाना आसन्निति शेषः ॥ २७ ॥ दृष्ट्वा मनसैवात्मप्रत्ययेन दुःखवतीर्ज्ञात्वा ॥२९॥ इष्टवियोगमात्रेण दशरथादिर्मृतः। अस्यतु जये नैराश्यमधिकं मरणकारणमस्तीति भावः ॥ ३४ ॥ प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

धृतराष्ट्रेण निजसेनायां निहतानां नामनिवेदनं चोदितेन सञ्जयेन तत्कथनम् ॥ १ ॥

'जनमेजय उवाच ।
तच्छ्रुत्वा कर्णहननं पुत्रांश्चैव पलायितान् ।
धृतराष्ट्रो नृपश्चैव द्विजश्रेष्ठ किमब्रवीत् ॥ १
प्राप्तवान्व्यसनं घोरं पुत्रव्यसनजं महत् ।
काले यदुक्तवांस्तस्मिंस्तन्ममाचक्ष्व तत्त्वतः ॥' २
वैशंपायन उवाच ।
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
अब्रवीत्सञ्जयं सूतं शोकसंविग्नमानसः ॥ ३
दुष्प्रणीतेन मे तात पुत्रस्यादीर्घजीविनः ।
हतं वैकर्तनं श्रुत्वा शोको मर्माणि कृन्तति ॥ ४
तस्य मे संशयं छिन्धि दुःखपारं तितीर्षतः ।
कुरूणां सृञ्जयानां च के च जीवन्ति के मृताः ॥ ५
सञ्जय उवाच ।
हतः शान्तनवो राजन्दुराधर्षः प्रतापवान् ।
हत्वा पाण्डवयोधानामर्बुदं दशभिर्दिनैः ॥ ६
तथा द्रोणो महेष्वासः पाञ्चालानां रथव्रजान् ।
निहत्य युधि दुर्धर्षः पश्चाद्रुक्मरथो हतः ॥ ७
हतशेषस्य भीष्मेण द्रोणेन च महात्मना ।
अर्धं निहत्य सैन्यस्य कर्णो वैकर्तनो हतः ॥ ८
विविंशतिर्महाराज राजपुत्रो महाबलः ।
आनर्तयोधाञ्शतशो निहत्य निहतो रणे ॥ ९
तथा पुत्रो विकर्णस्ते क्षत्रव्रतमनुस्मरन् ।
क्षीणबाणो हतः शूरः स्थितो ह्यभिमुखः परैः ॥ १०
घोररूपान्परिक्लेशान्दुर्योधनकृतान्बहून् ।
प्रतिज्ञां स्मरता तेन भीमसेनेन पातितः ॥ ११
विन्दानुविन्दावावन्त्यौ राजपुत्रौ महारथौ ।
कृत्वा त्वसुकरं कर्म गतौ वैवस्वतक्षयम् ॥ १२
सिन्धुराष्ट्रमुखानीह दश राष्ट्राणि यानिह ।
यस्य तिष्ठन्ति वचने यः स्थितस्तव शासने ॥ १३
अक्षौहिणीर्दशैकां च विनिर्जित्य शितैः शरैः ।
सोऽर्जुनेन हतो राजन्महावीर्यो जयद्रथः ॥ १४
तथा दुर्योधनसुतस्तरस्वी युद्धदुर्मदः ।
वर्तमानः पितुः शास्त्रे सौभद्रेण निपातितः ॥ १५
तथा दौःशासनिः शूरो बाहुशाली रणोत्कटः ।
द्रौपदेयेन संगम्य गमितो यमसादनम् ॥ १६
किरातानामधिपतिः सागरानूपवासिनाम् ।
देवराजस्य धर्मात्मा प्रियो बहुमतः सखा ॥ १७
भगदत्तो महीपालः क्षत्रधर्मरतः सदा ।
धनंजयेन विक्रम्य गमितो यमसादनम् ॥ १८
तथा कौरवदायादो न्यस्तशस्त्रो महायशाः ।
हतो भूरिश्रवा राजञ्शूरः सात्यकिना युधि ॥ १९
श्रुतायुरपि चाम्बष्ठः क्षत्रियाणां धुरंधरः ।
चरन्नभीतवत्सङ्ख्ये निहतः सव्यसाचिना ॥ २०
तव पुत्रः सदामर्षी कृतास्त्रो युद्धदुर्मदः ।
दुःशासनो महाराज भीमसेनेन पातितः ॥ २१
यस्य राजन्गजानीकं बहुसाहस्रमद्भुतम् ।
सुदक्षिणः स संग्रामे निहतः सव्यसाचिना ॥ २२
कोसलानामधिपतिर्हत्वा बहुमतान्परान् ।
सौभद्रेणेह विक्रम्य गमितो यमसादनम् ॥ २३
बहुशो योधयित्वा तु भीमसेनं महारथम् ।
चित्रसेनस्तव सुतो भीमसेनेन पातितः ॥ २४
मद्रराजात्मजः शूरः परेषां भयवर्धनः ।
असिचर्मधरः श्रीमान्सौभद्रेण निपातितः ॥ २५
समः कर्णस्य समरे यः स कर्णस्य पश्यतः ।
वृषसेनो महातेजाः शीघ्रास्त्रो दृढविक्रमः ॥ २६
अभिमन्योर्वधं स्मृत्वा प्रतिज्ञामपि चात्मनः ।
धनंजयेन विक्रम्य गमितो यमसादनम् ॥ २७
नित्यं प्रसक्तवैरो यः पाण्डवैः पृथिवीपतिः ।
विश्राव्य वैरं पार्थेन श्रुतायुः स निपातितः ॥ २८
शल्यपुत्रस्तु विक्रान्तः सहदेवेन मारिष ।
हतो रुक्मरथो राजञ्श्यालो मातुलजो युधि ॥ २९
राजा भागीरथो वृद्धो बृहत्क्षत्रश्च केकयः ।
पराक्रमन्तौ विक्रान्तौ निहतौ वीर्यवत्तरौ ॥ ३०
भगदत्तसुतो राजन्कृतप्रज्ञो महाबलः ।

श्येनवच्चरता सङ्ख्ये नकुलेन निपातितः ॥ ३१
पितामहस्तव तथा बाह्लीकः सह बाह्लिकैः ।
निहतो भीमसेनेन महाबलपराक्रमः ॥ ३२
जयत्सेनस्तथा राजञ्जारासंधिर्महाबलः ।
मागधो निहतः सङ्ख्ये सौभद्रेण महात्मना ॥ ३३
पुत्रस्ते दुर्मुखो राजन्दुःसहश्च महारथः ।
गदया भीमसेनेन निहतौ शूरमानिनौ ॥ ३४
दुर्मर्षणो दुर्विषहो दुर्जयश्च महारथः ।
कृत्वा त्वसुकरं कर्म गता वैवस्वतक्षयम् ॥ ३५
उभौ कलिङ्गवृषकौ भ्रातरौ युद्धदुर्मदौ ।
कृत्वा चासुकरं कर्म गतौ वैवस्वतक्षयम् ॥ ३६
सचिवो वृषपर्वा ते शूरः परमवीर्यवान् ।
भीमसेनेन विक्रम्य गमितो यमसादनम् ॥ ३७
तथैव पौरवो राजा नागायुतबलो महान्
समरे पाण्डुपुत्रेण निहतः सव्यसाचिना ॥ ३८
वसातयो महाराज द्विसाहस्राः प्रहारिणः ।
शूरसेनाश्च विक्रान्ताः सर्वे युधि निपातिताः ॥३९
अभीषाहाः कवचिनः प्रहरन्तो रणोत्कटाः ।
शिबयश्च रथोदाराः कालिङ्गसहिता हताः ॥ ४०
गोकुले नित्यसंवृद्धा युद्धे परमकोपनाः ।
गोपालाः कृतवीरास्ते निहताः सव्यसाचिना ॥४१
श्रेणयो बहुसाहस्राः संशप्तकगणाश्च ये ।
ते सर्वे पार्थमासाद्य गता वैवस्वतक्षयम् ॥ ४२
श्यालौ तव महाराज राजानौ वृषकाचलौ ।
त्वदर्थमतिविक्रान्तौ निहतौ सव्यसाचिना ॥ ४३
उग्रकर्मा महेष्वासो नामतः कर्मतस्तथा ।
साल्वराजो महाबाहुर्भीमसेनेन पातितः ॥ ४४
ओघवांश्च महाराज बृहन्तः सहितौ रणे ।
पराक्रमन्तौ मित्रार्थे गतौ वैवस्वतक्षयम् ॥ ४५
तथैव रथिनां श्रेष्ठः क्षेमधूर्तिर्विशांपते ।
निहतो गदया राजन्भीमसेनेन संयुगे ॥ ४६
तथा राजन्महेष्वासो जलसन्धो महाबलः ।
सुमहत्कदनं कृत्वा हतः सात्यकिना रणे ॥ ४७
अलम्बुसो राक्षसेन्द्रः खरबन्धुरयानवान् ।
घटोत्कचेन विक्रम्य गमितो यमसादनम् ॥ ४८
राधेयः सूतपुत्रश्च भ्रातरश्च महारथाः ।
केकयाः सर्वशश्चापि निहताः सव्यसाचिना ॥४९
मालवा मद्रकाश्चैव द्राविडाश्चोग्रकर्मिणः ।
यौधेयाश्च ललित्थाश्च क्षुद्रकाश्चाप्युशीनराः ॥ ५०
मावेल्लकास्तुण्डिकेराः सावित्रीपुत्रकाश्च ये ।
प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च मारिष ॥
पत्तीनां निहताः सङ्घा हयानां प्रयुतानि च ।
रथव्रजाश्च निहता हताश्च वरवारणाः ॥ ५२
सध्वजाः सायुधाः शूराः सवर्माम्बरभूषणाः ।
कालेन महताऽऽयस्ताः कुशलैर्ये च वर्धिताः ॥५३
ते हताः समरे राजन्पार्थेनाक्लिष्टकर्मणा ।
अन्ये तथाऽमितबलाः परस्परवधैषिणः ॥ ५४
एते चान्ये च बहवो राजानः सगणा रणे
हताः सहस्रशो राजन्यन्मां त्वं परिपृच्छसि ॥ ५५
एवमेष क्षयो वृत्तः कर्णार्जुनसमागमे
महेन्द्रेण यथा वृत्रो यथा रामेण रावणः ॥ ५६
यथा कृष्णेन नरको मुरुश्च निहतो रणे
कार्तवीर्यश्च रामेण भार्गवेण यथा हतः ॥ ५७
सज्ञातिबान्धवः शूरः समरे युद्धदुर्मदः ।
रणे कृत्वा महद्युद्धं घोरं त्रैलोक्यमोहनम् ॥ ५८
यथा स्कन्देन महिषो यथा रुद्रेण चान्धकः ।
तथाऽर्जुनेन स हतो द्वैरथे युद्धदुर्मदः ॥ ५९
सामात्यबान्धवो राजन्कर्णः प्रहरतां वरः ।
जयाशा धार्तराष्ट्राणां वैरस्य च मुखं नृपः ॥ ६०
तत्पाण्डवै राजन्यत्पुरा नावबुध्यसे ।
उच्यमानो महाराज बन्धुभिर्हितकाङ्क्षिभिः ॥ ६१
'न कृतं च त्वया पूर्वं दैवेन विधिना बलात् ।'
तदिदं समनुप्राप्तं व्यसनं सुमहात्ययम् ॥ ६२

दुर्मनाश्च महारथः इति क. ख. ङ. पाठः । विकर्णश्च महाबलः इति ङ. पाठः ॥ ३५ ॥ खरबन्धुरयानवान् गर्दभसंयुतरथवान् । अलायुधो राक्षसेन्द्रो वकबन्धुरयानवान् इति क. ख. ङ. पाठः ॥ ४८ ॥ कर्णस्तथा हत इत्यनुकृष्यते ॥ ५९ ॥

द्वितीयोऽध्यायः ॥ २ ॥

पुत्राणां राज्यकामानां त्वया राजन्हितैषिणा । अहितान्येव चीर्णानि तेषां ते फलमागतम् ॥ ६३

॥ इति श्रीमन्महाभारते कर्णपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

सञ्जयेन धृतराष्ट्रंप्रति युद्धे निहतानां परेषां नामकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
आख्याता मामकास्तात निहता युधि पाण्डवैः ।
हतांश्च पाण्डवेयानां मामकैर्ब्रूहि सञ्जय ॥ १
सञ्जय उवाच ।
कृतिनो युधि विक्रान्ता महासत्त्वा महाबलाः ।
सानुबन्धाः सहामात्या गाङ्गेयेन निपातिताः ॥ २
नारायणा बल्लवाश्च रामाश्च शतशो परे ।
अनुरक्ताश्च वीरेण भीष्मेण युधि पातिताः ॥ ३
समः किरीटिना सङ्ख्ये वीर्येण च बलेन च ।
सत्यजित्सत्यसन्धेन द्रोणेन निहतो युधि ॥ ४
पाञ्चालानां महेष्वासाः सर्वे युद्धविशारदाः ।
द्रोणेन सह संगम्य गता वैवस्वतक्षयम् ॥ ५
तथा विराटद्रुपदौ वृद्धौ सहसुतौ नृपौ ।
पराक्रमन्तौ मित्रार्थे द्रोणेन निहतौ रणे ॥ ६
यो बाल एव समरे संमितः सव्यसाचिना ।
केशवेन च दुर्धर्षो बलदेवेन चाभिभूः ॥ ७
परेषां कदनं कृत्वा महद्रणविशारदः ।
परिवार्य मदामात्रैः षड्भिः परमकै रथैः ।
अशक्नुवद्भिर्बीभत्सुमभिमन्युर्निपातितः ॥ ८
कृतं तं विरथं वीरं क्षत्रधर्मे व्यवस्थितम् ।
दौःशासनिर्महाराज सौभद्रं हतवान्रणे ॥ ९
पटच्चरनिहन्ता च महत्या सेनया वृतः ।
अम्बष्ठस्य सुतः श्रीमान्मित्रहेतोः पराक्रमन् ॥ १०
आसाद्य लक्ष्मणं वीरं दुर्योधनसुतं रणे ।
सुमहत्कदनं कृत्वा गतो वैवस्वतक्षयम् ॥ ११
बृहन्तः सुमहेष्वासः कृतास्त्रो युद्धदुर्मदः ।
दुःशासनेन विक्रम्य गमितो यमसादनम् ॥ १२
मणिमान्दण्डधारश्च राजानौ युद्धदुर्मदौ ।
पराक्रमन्तौ मित्रार्थे द्रोणेन युधि पातितौ ॥ १३
अंशुमान्भोजराजस्तु सहसैन्यो महारथः ।
भारद्वाजेन विक्रम्य गमितो यमसादनम् ॥ १४
सामुद्रश्चित्रसेनश्च सह पुत्रेण भारत ।
समुद्रसेनेन बलाद्गमितो यमसादनम् ॥ १५
अनूपवासी नीलश्च व्याघ्रदत्तश्च वीर्यवान् ।
अश्वत्थाम्ना विकर्णेन गमितौ यमसादनम् ॥ १६
चित्रायुधश्चित्रयोधी कृत्वा च कदनं महत् ।
चित्रमार्गेण विक्रम्य विकर्णेन हतो मृधे ॥ १७
वृकोदरसमो युद्धे वृतः केकयजो युधि ।
केकयेन च विक्रम्य भ्राता भ्रात्रा निपातितः ॥ १८
जनमेजयो गदायोधी पार्वतीयः प्रतापवान् ।
दुर्मुखेन महाराज तव पुत्रेण पातितः ॥ १९
रोचमानौ नरव्याघ्रौ रोचमानौ ग्रहाविव ।
द्रोणेन युगपद्राजन्दिवं संप्रापितौ शरैः ॥ २०
नृपाश्च प्रतियुध्यन्तः पराक्रान्ता विशांपते ।
कृत्वा नसुकरं कर्म गता वैवस्वतक्षयम् ॥ २१
पुरुजित्कुन्तिभोजश्च मातुलौ सव्यसाचिनः ।
संग्रामनिर्जिताँल्लोकान्गमितौ द्रोणसायकैः ॥ २२
अभिभूः काशिराजश्च काशिकैर्बहुभिर्वृतः ।
वसुदानस्य पुत्रेण त्याजितो देहमाहवे ॥ २३
अमितौजा युधामन्युरुत्तमौजाश्च वीर्यवान् ।
निहत्य शतशः शूरानस्मदीयैर्निपातिताः ॥ २४
मित्रवर्मा च पाञ्चाल्यः क्षत्रधर्मा च भारत ।
द्रोणेन परमेष्वासौ गमितौ यमसादनम् ॥ २५
शिखण्डितनयो युद्धे क्षत्रदेवो युधांपतिः ।

रोचमानौ एकनामानौ भ्रातरौ ॥ २० ॥

लक्ष्मणेन हतो राजंस्तव पौत्रेण भारत ॥ २६
सुचित्रश्चित्रवर्मा च पितापुत्रौ महारथौ ।
प्रचरन्तौ महावीरौ द्रोणेन निहतौ रणे ॥ २७
वार्धक्षेमिर्महाराज समुद्र इव पर्वणि ।
आयुधक्षयमासाद्य प्रशान्तिं परमां गतः ॥ २८
सेनाबिन्दुसुतः श्रेष्ठः शात्रवान्प्रहरन्युधि ।
बाह्लिकेन महाराज कौरवेन्द्रेण पातितः ॥ २९
धृष्टकेतुर्महाराज चेदीनां प्रवरो रथः ।
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ॥ ३०
तथा सत्यधृतिर्वीरः कृत्वा कदनमाहवे ।
पाण्डवार्थे पराक्रान्तो गमितो यमसादनम् ॥ ३१
पुत्रस्तु शिशुपालस्य सुकेतुः पृथिवीपतिः ।
निहत्य शात्रवान्सङ्ख्ये द्रोणेन निहतो युधि ॥ ३२
तथा सत्यधृतिर्वीरो मदिराश्वश्च वीर्यवान् ।
सूर्यदत्तश्च विक्रान्तो निहतो द्रोणसायकैः ॥ ३३
'मात्स्यादवरजः श्रीमाञ्शतानीको निपातितः ।
श्रेणिमांश्च महाराज युध्यमानः पराक्रमी ।
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ॥ ३४
तथैव युधि विक्रान्तो मागधः परमास्त्रवित् ।
भीष्मेण निहतो राजञ्शेतेऽद्य परवीरहा ॥ ३५
विराटपुत्रः शङ्खस्तु उत्तरश्च महारथः ।
कुर्वन्तौ सुमहत्कर्म गतौ वैवस्वतक्षयम् ॥ ३६
वसुदानश्च कदनं कुर्वाणोऽतीव संयुगे ।
भारद्वाजेन विक्रम्य गमितो यमसादनम् ॥ ३७
एते चान्ये च बहवः पाण्डवानां महारथाः ।
हता द्रोणेन विक्रम्य यन्मां त्वं परिपृच्छसि ॥ ३८

॥ इति श्रीमन्महाभारते कर्णपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

सञ्जयेन धृतराष्ट्रंप्रति हतावशिष्टानां नामकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
मामकस्यास्य सैन्यस्य हृतोत्सेकस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ १
तौ हि वीरौ महेष्वासौ मदर्थे कुरुसत्तमौ ।
भीष्मद्रोणौ हतौ श्रुत्वा कोन्वर्थो जीवितेन मे ॥ २
न च मृष्यामि राधेयं हतमाहवशोभिनम् ।
यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतम् ॥ ३
हतप्रवरसैन्यं मे यथा शंससि सञ्जय ।
अहतानपि मे शंस येऽत्र जीवन्ति केचन ॥ ४
एतेषु हि मृतेष्वद्य ये त्वया परिकीर्तिताः ।
येऽपि जीवन्ति ते सर्वे मृता इति मतिर्मम ॥ ५
सञ्जय उवाच ।
यस्मिन्महास्त्राणि समर्पितानि
चित्राणि शुभ्राणि चतुर्विधानि ।
दिव्यानि राजन्विहितानि चैव
द्रोणेन वीरे द्विजसत्तमेन ॥ ६
महारथः कृतिमान्क्षिप्रहस्तो
दृढायुधो दृढमुष्टिर्दृढेषुः ।
स वीर्यवान्द्रोणपुत्रस्तरस्वी
व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ७
आनर्तवासी हृदिकात्मजोऽसौ
महारथः सात्वतानां वरिष्ठः ।
स्वयं भोजः कृतवर्मा कृतास्त्रो
व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ८
आर्तायनिः समरे दुष्प्रकम्प्यः
सेनाग्रणीः प्रथमस्तावकानाम् ।
यः स्वस्रीयान्पाण्डवेयान्विसृज्य
सत्यां वाचं तां चिकीर्षुस्तरस्वी ॥ ९

ककुदे प्रधानपुरुषसमूहे भीष्मद्रोणकर्णरूपे मृदितेनाशिते सति ॥ १ ॥ मृताः मृतप्रायाः ॥५॥ चतुर्विधानि दृढदूरसूक्ष्मशब्दवेधीनि । विहितानि धनुर्वेदोदितानि ॥ ६ ॥ कृतिमान् अवन्ध्ययत्नः ॥ ७ ॥ आर्तायनिः शल्यः । स्वस्रीयान् भागिनेयान् ॥ ९ ॥

